न ते प्रमुखतः स्थातुं कश्चिदिच्छति वीर्यवान् ॥ १३

शल्य उवाच ।

एवमुक्तस्तु नहुषः प्राहृष्यत तदा किल ।
उवाच वचनं चापि सुरेन्द्रस्तामनिन्दिताम् ॥ १४
अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि ।
दृढं मे रुचितं देवि त्वद्वशोऽस्मि वरानने ॥ १५
न ह्यल्पवीर्यो भवति यो वाहान्कुरुते मुनीन् ।
अहं तपस्वी बलवान्भूतभव्यभवत्प्रभुः ॥ १६
मयि क्रुद्धे जगन्न स्यान्मयि सर्वं प्रतिष्ठितम् ।
देवदानवगन्धर्वाः किंनरोरगराक्षसाः ॥ १७
न मे क्रुद्धस्य पर्याप्ताः सर्वे लोकाः शुचिस्मिते ।
चक्षुषा यं प्रपश्यामि तस्य तेजो हराम्यहम् ॥ १८
तस्मात्ते वचनं देवि करिष्यामि न संशयः ।
सप्तर्षयो मां वक्ष्यन्ति सर्वे ब्रह्मर्षयस्तथा ।
पश्य माहात्म्यमस्माकमृद्धिं च वरवर्णिनि ॥ १९
एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् ।
विमाने योजयित्वा स ऋषीन्नियममास्थितान् ॥ २०
अब्रह्मण्यो बलोपेतो मत्तो वरमदेन च ।
कामवृत्तः स दुष्टात्मा वाहयामास तानृषीन् ॥ २१
नहुषेण विसृष्टा च बृहस्पतिमुवाच सा ।
समयोऽल्पावशेषो मे नहुषेणेह यः कृतः ।
शक्रं मृगय शीघ्रं त्वं भक्तायाः कुरु मे दयाम् ॥ २२
बाढमित्येव भगवान्बृहस्पतिरुवाच ताम् ।
न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः ॥ २३
न ह्येष स्थास्यति चिरं गत एष नराधमः ।
अधर्मज्ञो महर्षीणां वाहनाच्च हतः शुभे ॥ २४
इष्टिं चाहं करिष्यामि विनाशायास्य दुर्मतेः ।
शक्रं चाधिगमिष्यामि मा भैस्त्वं भद्रमस्तु ते ॥ २५

---

चापि) — $^{d}$) T2 इन्द्राणीं, M (except M4) नरेंद्र (for सुरेन्द्र)

15 Before 15, all MSS. ins नहुष उ° (S om उ) — $^{c}$) D3 T2 G2 4 5 रुचिर, G3 कथित.

16 $^{ab}$) G3 4 अ(G4 ना)ल्पवीर्यो भवति यो वाहान्(G4 °न्स) कुरुते मुनीन्

18 $^{a}$) K3 क्रुद्धे मयि विनश्यंति — $^{b}$) K2 4 5 B1 T1 G (except G5) M3-5 सर्वे, M2 सत्र (for सर्वे) — After 18, T2 G1 5 ins

105* अहमिन्द्रोऽस्मि देवाना लोकाना च महेश्वर' ।
मयि हव्य च कव्यं च लोकाश्चैव सनातना. ।
[(L 2) T2 प्रतिष्ठिता (for सना°)]

19 T1 om 19 — $^{d}$) K1 3.5 देव° (for ब्रह्म°) T2 तथा ब्रह्मर्षयोमला — G2 (which om 19$^{c}$–20$^{b}$) ins 107* after 19$^{cd}$ — $^{e}$) K (except K2) D10 माहात्म्य पश्य मे देवि, Dn D3.4 9 पश्य माहात्म्ययोग मे — $^{f}$) D2 10 समृद्धिं (for ऋद्धिं च) — After 19, T2 (om line 2) G1 5 ins

106* हतौजसो मया सर्वे देवगन्धर्वदानवा' ।
यद्यस्य तेज पश्यामि तस्य तेजो हराम्यहम् ।

20 D9 om 20, G3 om 20$^{ab}$ (cf v 1 19) — Before 20, N (except K1, D9 om) T1 G1.4 5 ins शल्य उ° (T1 G1 4 5 om उ) — $^{a}$) D1 M3-5 अथ, M1 2 च (for तु) — $^{b}$) K1 2 तु (for च) — T G1 3 4 M1 (om lines 1 and 4) 2 ins after 20$^{ab}$ G2 (om lines 1–2), after 19$^{cd}$

107* अथ सचिन्त्य नहुषो बलवीर्येण भारत ।
विसृज्य सुप्रतीक च नागमैरावत तथा ।
हसयुक्त विमान च हरियुक्त तथा रथम् ।
स तु दर्पेण महता परिभूय महामुनीन् ।
[(L. 1) T2 G3 4 वीर्येण भरतर्षभ, M2 बलवीर्यसमन्वित.]

— $^{c}$) K1 3 5 T G1 2 3 M तु, B3 5 Dn D2-4.6 G3 4 च (for स) — $^{d}$) T G1 4 5 मुनीन् (for ऋषीन्) K1 5 स ऋषीन्नियमस्थितान्, B5 ऋषीन्नियमसयतान्

21 $^{a}$) K2 D1 9 10 S (except T2) °ण्याबलेपेन. — $^{b}$) K2 B D (except D1 2) T1 G1.5 M2 4 मद(D10 वर)बलेन, M1 3 5 बलमदेन — $^{c}$) T2 G4 कामयुक्त K5 D9 G3-5 M (except M5) सु, D1 च (for स)

22 Before 22, T2 G4 ins शल्य' — $^{a}$) B1 2 D10 सा (for च) — $^{b}$) K2 B Dn D3 D5-8 10 अथाब्रवीत् (for उवाच सा) K4 D9 च, K5 D1 T1 ह (for सा). — $^{c}$) G2-4 °शिष्टश्च (for °शेषो) T G च (for मे) — $^{d}$) K2 B2 4 D2 तु, G3 च (for इह) — $^{e}$) D3 D5 6 त (for त्व) — $^{f}$) K1 भक्ताया

23 $^{d}$) T2 नहुषो K1 4 5 °चेतनात्, T2 °चेतन

24 $^{b}$) T2 M4 (*sup lin* as in text) हृत (for गत) K3 B4 D1 T1 G1 4 5 एव (for एष) B2 4 नृपाधम ; D52 T2 G5 नराधिप , D9 न सशय — $^{c}$) K1 ऋषीणा च (for महर्षीणा) — $^{d}$) B (except B2) Dn D3 D5-8 T2 G3.4 तत (for हत) D10 वाहनाद्धतमंगल

ततः प्रज्वाल्य विधिवज्जुहाव परमं हविः ।
बृहस्पतिर्महातेजा देवराजोपलब्धये ॥ २६
तस्माच्च भगवान्देवः स्वयमेव हुताशनः ।
स्त्रीवेषमद्भुतं कृत्वा सहसान्तरधीयत ॥ २७
स दिशः प्रदिशश्चैव पर्वतांश्च वनानि च ।
पृथिवीं चान्तरिक्षं च विचीयातिमनोगतिः ।
निमेषान्तरमात्रेण बृहस्पतिमुपागमत् ॥ २८
अग्निरुवाच ।
बृहस्पते न पश्यामि देवराजमहं क्वचित् ।
आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहम् ।
न मे तत्र गतिर्ब्रह्मन्किमन्यत्करवाणि ते ॥ २९
शल्य उवाच ।
तमब्रवीद्देवगुरुरपो विश महाद्युते ॥ ३०
अग्निरुवाच ।
नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति ।
शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेऽस्तु महाद्युते ॥ ३१
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ३२

इति श्रीमहाभारते उद्योगपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## १६

बृहस्पतिरुवाच ।
त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तः सर्वभूतानां गूढश्चरसि साक्षिवत् ॥ १
त्वामाहुरेकं कवयस्त्वामाहुस्त्रिविधं पुनः ।

C. 5 424
B. 5. 16. 2
K 5. 16. 2

---

25 K2 D1 T2 om (hapl ) 25[bc] — [e]) M (except M1) तु (for च) K1 अपि गमिष्यामि, K3-5 अप्याययिष्यामि, G4 अह गमि°, M (except M1) अभिगमि°

26 [a]) M1 वह्निं स (for विधिवत्) — [b]) D1 2 सुमहत् (for परम) — [c]) D5 °राज (for °तेजा) — [d]) D1 देवराजप्रशातये — After 26, B5 Dn D2 (marg ) 3-5 T2 (marg ) ins

108* हुत्वाग्निं सोऽब्रवीद्राजञ्छक्रमन्विष्यतामिति ।
[ Dn2 D2-6 8 T2 अन्वेष्य°, Cn as above ]

27 K4 (hapl ) om. from मद्भुत in 27[c] up to °पागमत् in 28[f] — [d]) K2 B D (except D1 9) तत्रैव (for सहसा)

28 K4 om up to °पागमत् in 28[f] (cf v 1 27) — [a]) D10 सर्वा (for चैव) — [b]) B5 Dn1 D3 4 पर्वतानि (for °तांश्च) — [d]) K1 Dn Ds1 D5-7 9 विचिंत्याय, K2 विचीयाय, K4 5 विजगाह, B Ds2 D2-4 8 विचित्याय, D1 विदेशाश्च, D10 समन्विष्य, T G M1 2 4 (sup lin as in text) विचिनोति (for विचीयाति°) D1 महोदधीन्, G2 महामति , M4 (sup lin as in text) मनोतिग (for °मनोगति ) — [e]) K8 D7-9 निमिषातर° — [f]) D3 °गत° (for °गमत्)

29 G3 om. the ref. M1 वह्नि (for अग्नि ) — [b]) K3 B D (except D1 2 9) इह (for अह) — [c]) T G तथा (for सदा) — [d]) G5 °ट्टु नाहमुत्सहे

30 All MSS om. the ref. — [ab]) K1 महातेजा , K2 आगिरस , K3-5 म(K4 बृ)हत्तेजा , D2 T1 G M बृहस्पति° (for देवगुरु.) K (except K2) D1.10 आपो (for अपो) K3 G4 महामते T2 बृहस्पतिरथोवाच त्वमापो विश पावक

31 [a]) Dn1 D8 0 शक्यामि (for शक्ष्या°) — [d]) M1 2 मे (for ते) K (except K2) T G1.2 4 5 महाकवे, B1 3 G3 महामते D2 प्रपन्नोस्मि महामते

32 = Manu 9 321 — [c]) T1 G (except G3) सर्वगत (for °त्रग) — [d]) B3 स्व स्व (for स्वासु)

Colophon K1 2 5 B D (except Dn2) T1 G1 M2 all om sub-parvan name, cite only इन्द्रविजय (D1 इन्द्रजय, T1 G1 M2 इन्द्रविजयोपाख्यान) — *Adhy name* K1.4 D8 पुरोहितयान, D2 शचीवाक्य, G2 इन्द्रान्वेषणे अग्निबृहस्पतिसवाद , M1 2 इन्द्रान्वेषण — *Adhy no* (figures, words or both) K1 Ds1 D5 7 10 S 15, Dn2 16, D2 6 14 — *S'loka no* K5 35, Dn 34

## 16

1 [ab]) =(var ) 1 220 22 K4 D1 T2 G3 4 M2 °भूताना (for °देवानां) — G3 (hapl ) om 1[bc] — [c]) K1 अग्ने (for अन्त ) K1. 3 4 D9 सर्वभूतेषु G4 त्वमतश्चरसि भूतानां (hypermetric!) — [d]) G5 त्वमसि

त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन ॥ २
कृत्वा तुभ्यं नमो विप्राः स्वकर्मविजितां गतिम् ।
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ ३
त्वमेवाग्ने हव्यवाहस्त्वमेव परमं हविः ।
यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरे ॥ ४
सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह
प्राप्ते काले पचसि पुनः समिद्धः ।
सर्वस्यास्य भुवनस्य प्रसूति-
स्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ५
त्वामग्ने जलदानाहुर्विद्युतश्च त्वमेव हि ।
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः ॥ ६
त्वय्यापो निहिताः सर्वास्त्वयि सर्वमिदं जगत् ।
न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु पावक ॥ ७
स्वयोनिं भजते सर्वो विशस्वापोऽविशङ्कितः ।
अहं त्वां वर्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः ॥ ८

शल्य उवाच ।

एवं स्तुतो हव्यवाहो भगवान्कविरुत्तमः ।
बृहस्पतिमथोवाच प्रीतिमान्वाक्यमुत्तमम् ।
दर्शयिष्यामि ते शक्रं सत्यमेतद्ब्रवीमि ते ॥ ९
प्रविश्यापस्ततो वह्निः ससमुद्राः सपल्वलाः ।
आजगाम सरस्तच्च गूढो यत्र शतक्रतुः ॥ १०
अथ तत्रापि पद्मानि विचिन्वन्भरतर्षभ ।

---

(for चरसि)
2 $2^{ab}$ =(var.) 1 220 $23^{ab}$. — $^{a}$) K (except K2) transp आहु and एक C8 as in text — T1 om. $2^{cd}$. — $^{c}$) D1 व्याप्त (for त्यक्त) K8 5 D10 हीदं, D9 चैतत्, G3 सर्वं, G4 इदं, M2 सप्त (for चेदं) — $^{d}$) K2 4 न स्याद् (for नश्येद्) K8 विनश्यति न सदाय°, D1 अन्य न स्याद्धुताशनात्
3 =(var.) 1 220. 25 — $^{a}$) K1 D1 2 9 तुभ्य कृत्वा (by transp ), K3-5 T G (except G5) तव कृत्वा. — $^{b}$) K1.4 5 सत्कर्म°, K2 B4 D8 D5.7 8 10 T2 G2 °विहितां — $^{d}$) K (except K2) D9 T G (except G5) पुत्रै° (for सुतै°)
4 $^{a}$) K1 D8 D1 हव्यवाह M त्वम(M2 °द)ग्ने हव्यवाहस्तु (M1 2 °स्त्व) — $^{c}$) D8 यजंते D2 सत्रे, T2 यज्ञैस् (for सत्रैस्) — $^{d}$) K1 यजति; T2 मन्त्रैश्च, G3 यच्छति (for यज्ञैश्च) K1 T1 G1.3 4 5 परमा(G2 च वरा, G4 विविधा)ध्वरे, G3 परमेश्वर
5 $^{a}$) K1 D3 दृष्ट्वा (for सृष्ट्वा) K4 त्वम् (for त्रीन्). G1 हव्यवाह.; M2 जातवेदा° K5 सृष्ट्वा च लोकाञ्छ्रुति मान्हव्य°. — $^{b}$) D9 S (except T2 G2 3) transp प्राप्ते and काले K2 3.5 G4 समृद्ध°, D6 प्रसिद्ध°, T2 समस्तान् (for समिद्ध°) — $^{c}$) B (except B1) D (except D1) त्व सर्वस्य (for सर्वस्यास्य) K4 जगतस्त्व (for भुवनस्य) K3.5 त्व प्रसूति (for प्रसूति )
6 =(var ) 1 220 26 — $^{a}$) D2 एव (for अग्ने) — $^{b}$) B (except B1) Dn D5 D8-8 10 T2 (before corr as in text) मनीषिण , M (except M1) महाद्युते (for त्वमेव हि) G2-4 च (for हि) D2 खे विशाखाश्च विद्युत — $^{d}$) K8 4 B Dn D2-4.6 7 वहति, D8 G4 दहते — $^{d}$) B1 भानव ; B2-5 D (except D1 2) हेतय (D9 °च°), T2 दीप्तय°; G1 रश्मिभि., G5 रश्मय , Ca d s हायना° (as in text)
7 $7^{ab}$ =(var ) 1 220 $28^{ab}$ — $^{a}$) K2 T2 त्वयापो, G8 त्वयासीन् (for त्वय्यापो) K2.4 D10 विहिता° (for (for नि°). — $^{b}$) T1 G1 5 विश्व (for सर्वं) — $^{c}$) D9 अस्तु (for अस्ति) — $^{d}$) T1 G1.5 सुव्रत (for पावक)
8 $^{a}$) T2 G5 M स्वा, G4 त्वां (for स्व ) D9 विशते सर्वा (for भजते सर्वो) — $^{b}$) K5 T1 G1(*sup lin.* as in text) 4 विशतु (for विशस्व) — $^{c}$) K5 D9 G3 M (except M2) त्वा (for त्वा) — $^{d}$) T G ब्रह्म° (for ब्राह्मैर्)
9 N (except D8) M (except M1) om the ref. — $^{a}$) B D (except D2 8-10) T G1 2 5 हव्यवाट् स (for °वाहो) — $^{b}$) K4 D2 10 T1 G1-3 कविसत्तम° — $^{c}$) D9 उवाचेदं (for अथोवाच) — $^{d}$) K1 उत्तर, D52 G2 अब्रवीत् (for उत्तमम्). — $^{e}$) M (except M1) transp ते and शक्र G4 अह (for ते) — $^{f}$) K2 D1 2 अह (for ते)
10 Before 10, K3 5 B D (except D51 D1 8) G1 5 M ins. शल्य उ° (S MSS om उ°) — $^{a}$) D2 विचित्य (for प्रविश्य) — $^{b}$) B1 सपर्वता., D2 समुल्वणा° (for सपल्वला ) — $^{c}$) Dn D3.4 आससाद (for आज°). K1 4.5 तद्धि; K2 D2 S तत्र (T2 M1 तत्तु) (for तच्च). — $^{d}$) M3-5 transp. गूढ and यत्र B2 4 शचीपतिः (for शत°)
11 $^{a}$) G4 ससार्चिः; M2 3 4(*sup lin* ) 5 सरसि (for पद्मानि). — $^{c}$) K4 अभ्य°, Dn D2 4 7 9 अपश्यत्स; G3 अथा° (for अन्व°) Dn D3 4 7.9 तु (for स) — $^{d}$

अन्वपश्यत्स देवेन्द्रं बिसमध्यगतं स्थितम् ॥ ११
आगत्य च ततस्तूर्णं तमाचष्ट बृहस्पतेः ।
अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् ॥ १२
गत्वा देवर्षिगन्धर्वैः सहितोऽथ बृहस्पतिः ।
पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् ॥ १३
महासुरो हतः शक्र नमुचिर्दारुणस्त्वया ।
शम्बरश्च बलश्चैव तथोभौ घोरविक्रमौ ॥ १४
शतक्रतो विवर्धस्व सर्वाञ्शत्रून्निषूदय ।
उत्तिष्ठ वज्रिन्संपश्य देवर्षींश्च समागतान् ॥ १५
महेन्द्र दानवान्हत्वा लोकास्त्रातास्त्वया विभो ।
अपां फेनं समासाद्य विष्णुतेजोपबृंहितम् ।
त्वया वृत्रो हतः पूर्वं देवराज जगत्पते ॥ १६
त्वं सर्वभूतेषु वरेण्य ईड्य-
स्त्वया समं विद्यते नेह भूतम् ।
त्वया धार्यन्ते सर्वभूतानि शक्र
त्वं देवानां महिमानं चकर्थ ॥ १७
पाहि देवान्सलोकांश्च महेन्द्र बलमाप्नुहि ।
एवं संस्तूयमानश्च सोऽवर्धत शनैः शनैः ॥ १८
स्वं चैव वपुरास्थाय बभूव स बलान्वितः ।
अब्रवीच्च गुरुं देवो बृहस्पतिमुपस्थितम् ॥ १९
किं कार्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः ।
वृत्रश्च सुमहाकायो ग्रस्तुं लोकानियेष यः ॥ २०
बृहस्पतिरुवाच ।
मानुषो नहुषो राजा देवर्षिगणतेजसा ।

C. 5. 505
B. 5. 16 21
K. 5 16. 21

MSS विस°, बिस° or विश° also B (except B1) Dn Ds D3-8 10 वटा, D2 स्थिर, G4 प्रभुं (for स्थितम्) T2 बिसमध्ये व्यवस्थितं

12 a) S (except G2) आगम्य D2 9 M2 च पुनस्, M3-8 सरसस् (for च ततस्) — b) D10 M2 समा° (for तमा°) K (except K3) B1-3 D2 9 10 बृहस्पतिं — d) K2 °तत्त्वाश्रयं, S (except T2) °सूत्राश्रित

13 a) D9 S (except M2, G1 before corr as in text) °गधर्व- (for °गन्धर्वै ) — c) K1.4 पौराणैः (for पुरा°) D1 कविभिर्, G3 स्तुतिभिर् (for कर्मभिर्) T1 G1.5 दिव्यै (for देव) M विविधाभिश्च स्तुतिभि

14 a) T1 G1 5 शत्रु (for शक्र) — b) K2 D2 9 T2 M दानवस्, D7 दारितस् (for दारुणस्) K1 तथा (for त्वया) — c) D10 दर्भा (for एव) — d) D2 अयोर्मा, D10 मंहर्ता, T2 तथा तौ K3-5 B2 4 D10 घोरदर्शनौ

15 b) D9 T2 G4 सर्व- (for सर्वान्) K4 om from 15c up to हत- in 16c — c) K1.2 D1 M (except M1) वज्र, K3 B (except B1) Dn D2-8 शक्र, Ds2 च हि (for वज्रिन्) — d) Ds D10 मह°; T1 G1 5 ऋषीन्देवान् (for देवर्षींश्च) K5 स्वयमागतान्, D9 च सनातनान्, D10 समुपागतान् (for च समा°)

16 K4 om up to हत- in 16c (cf v 1 15) — b) G2 लोकान् (for लोका ), and (by corr ) प्रभो (for विभो) T2 त्वया लोका सुरक्षिता — c) T2 °दाय (for °साद्य) — d) B Dn1 D2-4 °तेजोति° (for °तेजोप°)

17 a) B (except B1) °देवेषु (for °भूतेषु) Dn Ds D2-8 10 शरण्य (for वरेण्य) K3-5 D9 S वरो (K3 4 D9 समो; K5 मम) वरेण्य (K4 5 T2 °ण्य) (for वरेण्य ईड्य-) — b) D9 समो, G3 पर (for सम) D2 एव (for इह) — c) K5 शश्वत् (for शक्र) — d) K1 G5 अभिमान, K4 D7 महिमा स्व, T2 शत्रुमार्जौ, G4 अतिमानं (for महिमानं) K1 3-5 गतिश्च, G4 च शक्र ; G5 च कर्ता, Cd s चकर्थ (as in text) K2 त्व देवानामापद हसि नून

18 a) K2 त्राहि, G4 पासि (for पाहि) K2 D2 T2 G (except G5) transp देवान् and लोकान् K3 B2 4 Dn D3-8 सर्वान्, D9 M (except M1) लोकान् (for देवान्) K D (except Ds D5 8) T G च, M (except M1) स्व- (for स ) D9 माहेंद्र (for -लोकाश्च) — b) K1 2 G5 त्वमवा° (for बलमा°) — c) K1 2 D2 T G तु, D9 अथ (for च)

19 a) K2 om. च D10 पुरेव (for स्व चैव) G5 आदाय (for आस्थाय) — b) K2 सर्वभूत , D8 (by transp ) स बभूव — c) K1 Ds गुरून् (for गुरु) K1 देवान् (for देवो) — d) K5 B D (except D1) अव(D9 उपा)स्थित

20 a) D1 G4 वै (for वो) — b) M °बल (for °सुर ) — c) K2 स, D9 तु (for च) K1.4 5 D10 अपि (for सु ) — d) K2 3 D1 9 G2 4 M3-5 स- (for य-) B Dn Ds D3-5 यो वै लोकाननाशयत्

21 a) K1 मानवो (for मानुषो) D6 (hapl ) om from राजा up to नहुषो in 22a — b) K (except K3) बलवीर्येण तेजसा, T2 महर्षिगण° — c) K1 4 5 D9 10 T2 अनुप्राप्य (for °प्राप्त ) — d) D8 M बाधति नो (for नो बाधते) G2-4 अधिक (for भृशम्)

देवराज्यमनुप्राप्तः सर्वान्नो बाधते भृशम् ॥ २१

इन्द्र उवाच ।

कथं नु नहुषो राज्यं देवानां प्राप दुर्लभम् ।
तपसा केन वा युक्तः किंवीर्यो वा बृहस्पते ॥ २२

बृहस्पतिरुवाच ।

देवा भीताः शक्रमकामयन्त
त्वया त्यक्तं महदैन्द्रं पदं तत् ।
तदा देवाः पितरोऽथर्षयश्च
गन्धर्वसंघाश्च समेत्य सर्वे ॥ २३
गत्वाब्रुवन्नहुषं शक्र तत्र
त्वं नो राजा भव भुवनस्य गोप्ता ।
तानब्रवीन्नहुषो नास्मि शक्त
आप्यायध्वं तपसा तेजसा च ॥ २४
एवमुक्तैर्वर्धितश्चापि देवै
राजाभवन्नहुषो घोरवीर्यः ।
त्रैलोक्ये च प्राप्य राज्यं तपस्विनः
कृत्वा वाहान्याति लोकान्दुरात्मा ॥ २५
तेजोहरं दृष्टिविषं सुघोरं
मा त्वं पश्येर्नहुषं वै कदाचित् ।
देवाश्च सर्वे नहुषं भयार्ता
न पश्यन्तो गूढरूपाश्चरन्ति ॥ २६

शल्य उवाच ।

एवं वदत्यङ्गिरसां वरिष्ठे
बृहस्पतौ लोकपालः कुबेरः ।
वैवस्वतश्चैव यमः पुराणो
देवश्च सोमो वरुणश्चाजगाम ॥ २७

---

22 D6 om up to नहुषो in 22$^a$ (of v 1 21), Dn1 om the ref K2 B D8 D1 5 7-10 शक्र (for इन्द्र). — $^a$) K D2 7-9 G3 4 M3-5 तु, B2 Dn D3.4 च, B4 वै (for नु) K (except K2) मानुषो (for नहुषो) G2 5 राजा (for राज्य) — $^b$) K1 5 D52 G4 प्राप्य (for प्राप) D10 मानुष (for दुर्लभम्) T2 M देवाना प्राप्तवान् विभो (T2 नृप°, M1 प्रभो), G5 देवराज्येभिषेचित. — $^c$) G2 सयुक्त. (for वा युक्त). — $^d$) D8 वो, T1 G अथ (for वा) — After 22, T1 G (except G3) ins

109* तत्सर्वं कथयध्व मे यथेन्द्रत्वमुपेयिवान् ।
[ G4 कथयस्व त्व (for °ध्व मे) ]

23 T2 G2 om the ref G4 गुर (for बृहस्पतिरु°) — After the ref, S ins

110* त्वयि प्रणष्टे देवेश विश्व प्रव्यथित जगत् ।
परस्परभयोद्विग्न बभूवार्तमराजकम् ।
ततो देवै सगन्धर्वै सर्षिसंघै सपावकै· ।
मानुषो नहुषो राजा देवराज्येऽभिषेचित ।

[ (L 1) T2 प्रविष्टे, M2 3 प्रनष्टे (for प्रणष्टे) — (L 3) G2 5 ऋषिवर्यै (G2 °र्गै), G4 सर्षिसिद्धै (for सर्षिसंघै) ] — $^a$) T1 G1.2 4 5 M1(*sup lin*) 2 ततो, M1. 3-5 यतो (for देवा) D8 T1 G1 4 5 M नाकामयत, D1 9 10 आकाम°, G2 न काम° (for अकाम°) G3 ततो हि ता शकुना कामयन्त — $^b$) S (except T2) राज्यं त्वया त्यक्तमिद महात्मन् — $^c$) D1 तथा; S ततो (for तदा) T1 G1 5 महर्षय° (for अथर्षय°) — $^d$) B Dn D8 D2-8 °मुख्या°, D9 T2 °सिद्धा° (for °सघा°)

24 $^a$) K1 2 Dn D1-4 9 S transp शक्र and तत्र — D4 (hapl ) om from राजा up to देवै in 25$^a$ — $^b$) K3 transp नो and राजा — Dn3 G1 5 om. भव K1 भव वै (for भव) B1 T G1 3 भुवनस्यास्य (for भव भुवनस्य) — $^c$) K5 G5 अस्ति शक्ति (for अस्मि शक्त.) — $^d$) T2 हीनस्त्वह, M आप्याययध्व (for आप्यायध्व) B (except B1) D (except D1 2 9, D4 om ) मां (for च)

25 D4 om 25$^a$ (of v 1 24) — $^a$) K1 3 4 स एवमुक्तो, K2 एवं युक्तो, K5 B1 D9 G5 एवमुक्तो, D1 T1 G1 एव चोक्तैर् (D1 °क्ते) D10 सर्पिदेवै (for चापि देवै ) — $^b$) G3 °रूप· (for °वीर्य ) — $^c$) T2 त्रैलोक्य M3.4 om च T1 G1 5 M1 अस्मिन् (for च) M1 प्राप्तराज्यस् (for प्राप्य राज्य) K4 B (except B1) D (except D9) G2-4 महर्षीन् (for तपस्विन ) — $^d$) D10 transp कृत्वा and वाहान् K1 D9 लोक, D1 लोके (for लोकान्) M3-5 महात्मा (for दुरा°)

26 $^a$) M (except M1) °हण (for °हरं) — $^b$) T G त (for त्व) D2 त नहुष, T1 G त्व नहुष (for नहुष वै) M त पश्येस्त्व नहुष मा कदा° — $^c$) B2 5 Dn D5 D6-9 G4 भृशार्ता , D2 प्रयाता (for भयार्ता·) — $^d$) B1 न पश्यति, B2-5 Dn D8 D2-10 G2 4 न पश्यते, D1 दृश्यते ते, G3 पश्यतो वै (for न पश्यन्तो). B D G2 4 चरत (for चरन्ति)

27 $^a$) K1 T G ब्रुवति (for वदति) — $^d$) G4 transp देव· and सोम· D8 D10 om. the first च

ते वै समागम्य महेन्द्रमूचु-
र्दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः ।
दिष्ट्या च त्वां कुशलिनमक्षतं च
पश्यामो वै निहतारिं च शक्र ॥ २८
स तान्यथावत्प्रतिभाष्य शक्रः
संचोदयन्नहुषस्यान्तरेण ।
राजा देवानां नहुषो घोररूप-
स्तत्र साह्यं दीयतां मे भवद्भिः ॥ २९
ते चाब्रुवन्नहुषो घोररूपो
दृष्टीविषस्तस्य बिभीम देव ।
त्वं चेद्राजन्नहुषं पराजये-
स्तद्वै वयं भागमर्हाम शक्र ॥ ३०
इन्द्रोऽब्रवीद्भवतु भवानपां पति-
र्यमः कुबेरश्च महाभिषेकम् ।
संप्राप्नुवन्त्वद्य सहैव तेन
रिपुं जयामो नहुषं घोरदृष्टिम् ॥ ३१
ततः शक्रं ज्वलनोऽप्याह भागं
प्रयच्छ मह्यं तव साह्यं करिष्ये ।
तमाह शक्रो भवितान्ने तवापि
ऐन्द्राग्ने वै भाग एको महाक्रतौ ॥ ३२

C. 5. 517
B. 5. 16. 32
K. 5. 16. 34

28 [a]) K3 G3 समागत्य — [b]) D10 शक्र (for चैव) — [c]) Dn G1 M1 2 4 त्वा (for त्वां) T G जय सर्वे (for क्षतं च) — [d]) Dn Ds1 D2-4. 7 पश्याम वै, D5 पश्यामि वै, T2 सपश्यामो K D1. 2 10 पश्याम देवेंद्र पुन स्सभा

29 [a]) After यथावत्, N (except K1 2 5) T (T2 marg sec m) ins

111* च दि लोकपालान्
समेत्य वै प्रीतमना महेन्द्रः ।
उवाच चैनान्.

[ (L. 1) K3 प्रतिपूज्येह तथा, D10 तु लोकपालान् — (L 2) K3 तथो मन्ये निष्कामिति शक्र ]

— D9 om from प्रतिभाष्य to °स्यान्तरेण in 29[b] K प्रतिपूज्य (K2 °भाष्य), M परिभाष्य — [b]) K1 2 5 संनोदयन्, K3 4 B D (D5 om) G2 °चोदयिष्यन्, M3 4 °चोदित (for °चोदयन्) D7 नहुष च (for नहुषस्य) T G M1 अतरयम्, Cd 5 अतरेण (as in text) — [d]) S (except G1) तस्मात् (for तत्र) K1 D2 10 साहाय्य, D6 7 मत्त K1 transp दीयता and मे S (except G5) वै (for मे)

30 [a]) G2 तत (for ते) T G तु (G3 ते) (for च) K4 5 °रूपो (for °रूपो) — [b]) Ds2 T G1 2-5 दृष्टिविष (G2 4 °षम्), G3 पश्चिष्टं (for दृष्टी°) K2. 4 G M बिभेम, T बिभेमि K1 B Dn Ds D6 ईश, K2 D10 शक्र, T2 घोर (for देव) D7 दृष्टिविषयस्य वै भीमदर्शी — [c]) K1 D3 G2 चेद्राजा, K2 B Dn D3-8 10 G1 2-5 चेद्राजन (K2 °जा त), D1 चेंद्र जानन, D2 देवराज (for चेद्राजन) D9 त्वा चेद्राजार्या नहुष पराजयेन — [d]) K1 2 5 B2-5 Dn Ds D2-8 10 G1 (after corr ) ततो, K2 B1 D7 ते वै, K4 G3 त्वत्तो, D2 T G1 (before corr ) 2 4 5 M1 त वै, D9 न वै (for तद्वै)

31 [a]) K5 जगाम (for अब्रवीद्), and अयम् (for भवान्) M3-5 भगवान् (for भवतु भवान्) K3 इन्द्रश्च पूर्वं वरुणश्च पश्चात् — [b]) K4 महाभिषेक, B (except B1) Dn Ds D5-6 मयाभि° — [c]) K3-5 सप्राप्नुयु, D2 9 प्राप्नुवन्तद्य, D10 सप्राप्नुवता, T G M1 (orig ) अवाप्नुता (T2 अवाप्याह, G4 सप्राप्नुता), M (M1 sup lin ) अवाप्नुवान् (for सप्राप्नुवन्त्वद्य) K (except K3) D2 9 T G सहिता (T2 °तो) देवताभि (K1 °ताश्च), D10 सह देवताभि, M नहुषो (M1 सहितो) देवताभि (for सहैव तेन) Dn D5-7 देवत, C5 तेन (as in text) D1 (corrupt) प्राप्नुवन्त्वद्य देवता सहिता भीररूप — [d]) G5 रिपून् (for रिपु) K4 B Dn Ds D1. 3-5 T1 G1 रिपु जयाम, D9 रिपुजय, M ज (M1 जा) यामहे B (except B2) Dn1 D2-5 त (D7 वै) नहुष (for नहुष) B1 D2-4 9 10 G4 °रूप (for °दृष्टिम्)

32 [a]) D1 अनल प्राह (for ज्वलनोऽप्याह) T1 2 (m as in text) G ततस्त्वग्नि (G1 2 °स्त्वमग्नि ) प्राब्रवीदिंद्र भाग — [b]) K1 4 5 वै (for मह्य) Dn भवत् (for तव) K1 साहाय्य, Ds D7 8 मत्त (for साह्य) D2 करोमि (for करिष्ये) — [c]) M3 4 तदाह G3 om अग्ने and reads इति (for अपि) — [d]) K1 2 5 ऐंद्राग्न्योर्, K4 B1-4 5 D2-4 6 7 चैंद्राग्न्योर् (K4 °ग्न्यो), B4 Dn Ds D1 6 8 चैंद्राग्न्योर् (Dn1 °ग्नी, Dn2 °ग्नो, Ds °ग्न्यो, D5 °ग्नोर्) D9 चैंद्राग्नौ भाग एतौ महान्तौ

33 Before 33, except K2 all MSS ins शल्य उवाच (S om उ°) — [a]) K (except K2) एतत्, M तत (for एव) T2 G समभ्य (G2 सयम्य), M सत्कृत्य (for सचिन्त्य); cf v 1 34 — T1 G1 5 transp 33[cd] and 34[ab] — [d]) K2 राक्षसाना, B1 धनदाना (for धनाना च) T G चाधिप (T2 G4 अधिप) (for च प्रभु) K3. 5 Ds D1

एवं संचिन्त्य भगवान्महेन्द्रः पाकशासनः ।
कुवेरं सर्वयक्षाणां धनानां च प्रभुं तथा ॥ ३३
वैवस्वतं पितॄणां च वरुणं चाप्यपां तथा ।
आधिपत्यं ददौ शक्रः सत्कृत्य वरदस्तदा ॥ ३४

इति श्रीमहाभारते उद्योगपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## १७

शल्य उवाच ।
अथ संचिन्तयानस्य देवराजस्य धीमतः ।
नहुषस्य वधोपायं लोकपालैः सहैव वैः ।
तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत ॥ १
सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्धते भवान् ।
विश्वरूपविनाशेन वृत्रासुरवधेन च ॥ २
दिष्ट्या च नहुषो भ्रष्टो देवराज्यात्पुरंदर ।
दिष्ट्या हतारिं पश्यामि भवन्तं बलसूदन ॥ ३
इन्द्र उवाच ।
स्वागतं ते महर्षेऽस्तु प्रीतोऽहं दर्शनात्तव ।
पाद्यमाचमनीयं च गामर्घ्यं च प्रतीच्छ मे ॥ ४
शल्य उवाच ।
पूजितं चोपविष्टं तमासने मुनिसत्तमम् ।
पर्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभम् ॥ ५
एतदिच्छामि भगवन्कथ्यमानं द्विजोत्तम ।
परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ॥ ६

---

M (M1 *sup lin* as in text) तदा (for तथा)

34 T1 G1 5 transp 33^cd and 34^ab. — b) T1 G1 हि (for अपि) T1 G1 5 अपि (for तथा) — c) K5 D5 D8 G2 आधिपत्ये (for °पत्यं) — d) K3 D (except D5 D1 2 9 10) संचिंत्य (for सत्कृत्य), cf v. 1 33. N (except K1. 2 4 D5) T G1 2 5 तथा (for तदा)

Colophon K1 2 4 B D (except Dn2 D9) G1 2 M2 3, all om sub-parvan name, cite only इन्द्रविजय (G1 2 M2 3 इन्द्रविजयोपाख्यान) — *Adhy name* K4 5 पुरोहितयानं, M2-5 इन्द्रप्रत्यक्षी(M2 °क्ष)करण — *Adhy no* (figures, words or both)· K1 D31 D5 7 8.10 S 16, D2 6 15. — *S'loka no* K5 Dn 34, D8 36.

## 17

1 a) D9 एवं (for अथ) B1 G3 संचिंतयया(G3 °मा)नस्य, D9 चिंतयतस्तस्य. — d) N (except K2) संदेवतै, T G सहाम(G2 °सु)रै· — f) D2 प्रत्यपद्यत

2 a) S तत्र (T2 अथ) (for अर्च्य) Dn2 G3 M2 4 देवेंद्र — After 2, S ins

112* दिष्ट्या हतारिं पश्यामो देवराज शतक्रतुम् ।
दिष्ट्या धर्मे स्थितो लोके दिष्ट्या लोका प्रतिष्ठिता ।
[ (L 1) T1 G3 5 पश्यामि — (L 2) M1 धर्मे स्थितो लोक° ]
— T G cont M ins after 3^ab

113* दिष्ट्या पश्याम देवेन्द्र दिष्ट्या लोकान्पुनर्नवान् ।

3 a) Dn D3 4 अद्य (for च) D1 नष्ट°, M दग्धः (for भ्रष्ट ) — b) M तिमिरं च प्रणाशित — After 3^ab, M ins 113* — cd) S (except T2 G2-4) transp हतारिं and भवन्तं K2 B1 D1 M1 पश्यामो D1 सर्वं एव च, G2 M2 बलसूदन, M1 3-5 बलसू°.

4 D1 शल्यः (for इन्द्र उ°) — a) D1 तु, S (except G3) वै (for ऽस्तु) — b) M2 प्रीतोस्मि S transp. दर्शनात् and तव — d) Some MSS अर्घं.

5 K D1.2 9 S om the ref. — a) K1 हिं, K4.5 D9 T1 G1 5 च, D1 तद् (for तम्). K3 पूजितेपूपविष्टेषु — b) K4 आसीन (for आसने) K2 T2 मुनिपुंगव — c) D1. 2 देवेंद्र. (for देवेश ). S (except T2) पप्रच्छ देवदेवेश — d) K (except K2) राजसत्तम, D2 T2 मुनिसत्तमं (for ब्राह्मण°) D1 प्रहृष्टवदनस्तदा, D9 प्रहृष्टे नांतरात्मना, T1 G M तदा त नहुष प्रति

6 Before 6, M ins इन्द्र. — a) T G श्रोतुम् (for एतद्) G2 एवं हि (for इच्छामि) M अह ब्रह्मन् (for भगवन्) — b) K5 तपोधन, D10 त्वयानघ (for द्विजो°) — d) D1 कामनिश्चय , D7 पापदुर्मति.

अगस्त्य उवाच ।
शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान् ।
स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलदर्पितः ॥ ७
श्रमार्तास्तु वहन्तस्तं नहुषं पापकारिणम् ।
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ।
पप्रच्छुः संशयं देव नहुषं जयतां वर ॥ ८
य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ।
एते प्रमाणं भवत उताहो नेति वासव ।
नहुषो नेति तानाह तमसा मूढचेतनः ॥ ९

ऋषय ऊचुः ।
अधर्मे संप्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥ १०

अगस्त्य उवाच ।
ततो विवदमानः स मुनिभिः सह वासव ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥ ११
तेनाभूद्धततेजाः स निःश्रीकश्च शचीपते ।
ततस्तमहमाविग्नमवोचं भयपीडितम् ॥ १२
यस्मात्पूर्वैः कृतं ब्रह्म ब्रह्मर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि वै यच्च मूर्ध्न्यस्पृशः पदा ॥ १३
यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान् ।
वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ॥ १४
ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतलम् ।
दश वर्षसहस्राणि सर्परूपधरो महान् ।
विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि ॥ १५　　C. 5 637 B. 5. 17 17 K. 5 17 17

7 b) G3 मदाद् (for यथा) M सुदुर्मति (for दुरा°) — c) D10 transp स्वर्गाद् and भ्रष्ट — d) K3 4 6 B1.2.3 D5 D10 बलगर्वित ; D2 वरदर्पित

8 G3 om. 8ab — ab) M श्रीमत (for श्रमार्ता ) K3 B (except B1) Dn D5 D2-8 च, D10 त (for तु) D10 च (for सं). K1 6 M पापकर्मिण, D2 पापचारिण T G (G3 om ) ऋषयस्तु परिश्रान्ता वाह्यमाना दुरात्मना — d) K3 (m as in text) D7 M3 °र्षयोमला. — ef) D (except D1.2 9) transp संशय and नहुष K1.2 M3-5 देवा , D8 T2 देव, D10 घोर, M3 देव.. K3 जयिना (for जयता) K (except K3) D5 D2 6 7 T G1.3 वर, D1.9 G2 वरा (for वर) M पापचेतन (for जयतां वर)

9 a) K3 6 इमे वै, C5 य इमे (as in text) K (except K3) M1 ब्राह्मणा , C5 as in text — c) K1.4 5 D1 प्रमाणा, C5 प्रमाण (as in text) — d) D2 पार्थिव (for वासव) — f) S सहसा (for तमसा) K1 Dn1 D1.4 गूढ° (for मूढ°)

10 D2 6 ऋषिरुवाच, M2 ब्रह्मर्षय — a) G1 अथाधर्मेण वृत्तस्त्व — b) T G1 3 transp धर्मं and न D2 स्वधर्मं, G2 M अधर्मं (for धर्मं न) D2 नोपपद्यसे, T1 G1.3 च जिघृक्षसि, T2 प्रतिगृह्णसे, G2 4 M प्रतिगृह्णसि K1.4.5 D9 10 (sup lin as in text) स्वमत (D9 अधर्मं) च प्रशंससि, G3 धर्मं प्रतिजिहीर्षसि — c) G3 4 M1.2 4 एकम् (for एतद्). — d) K1.4 6 D9 पूर्वोक्त च, D1 6 G2.4 M1.2 पूर्वप्रोक्त. G3 मनीषिभि..

11 a) K1 B1 तु, K2 T2 G2-4 सन् (for स) — b) K3-5 D2 S (except M2 5) ऋषिभि (for मुनि°) K1 6 Ds2 D9 G3 वासव

12 a) K1 S (except G3) हत°, K3 D2 8 गत° (for हत°) K1.4 5 B D (except D1 9) च, K2 3 असौ, T G1 2 4 सन् (for स) — b) K1.4 5 स नि·श्रीक·, G4 अश्रीकश्च B6 शचीपति , Dn D2.4 महीपति· — c) M1 2.4 अत (for तत ) K4 B2 3.5 Dn D2.4 6 तमसा विग्न, D5 D2.7 8 (before corr ) सहसाविग्न, D10 सहसोद्विग्न, G4 अहमुद्विग्न, M ऋषय क्रुद्धा — d) K2 3 B2 Dn D2-5 9 भृशपीडित (K2 D2 9 °त ) M अवोचन्भय (M2 °न्भृश)पीडिता

13 a) M पूर्वं (for पूर्वैं ) K3 Dn D3-6 ब्रह्मन्, B1 D8 कर्म; D2 वर्त्म, S मार्गं (for ब्रह्म) — c) D1-4 अदृष्ट (for अदुष्ट) K2.4 B2 3 5 Dn D3 4 7 9 मे (for वै) — d) K1 यस्त्व, K3 यन्मा, D10 यन्मे, G3 यस्य, G4 यस्मान् (for यच्च) K1 4.5 D5 मूर्ध्नास्पृश (D5 °शन्), D9 मौर्ध्यास्पृश , D10 मूर्ध्न्यस्पृशन् T G1.2 3 यन्मूर्धन्य स्पृश (G2 °शन्) पदा

14 a) M देवान् (M3 एतान्) (for मूढ) — d) M2 हृतप्रभ

15 a) D8 G3 5 परिभ्रष्ट — b) K4 5 Dn1 D1 महीतले — d) B1 T2 भवान्, T1 G M महीं (for महान्) — e) M चरिष्यसि च (for विचरि°) K1 2 5 D2 चीर्णेन, K4 T1 G M1.2 पूर्णे च, D1 चीर्णे तु, D9 T2 M3-5 पूर्णे तु (for पूर्णेषु) — f) D2 G2 तत (for पुन ) T G गमिष्यसि (for अवाप्स्य°) — K3 5 D8 T G M1 ins after 15 M2, after 16ab

114* दृष्ट्वा युधिष्ठिर नाम तव वंशसमुद्भवम् ।

एवं भ्रष्टो दुरात्मा स देवराज्यादरिंदम ।
दिष्ट्या वर्धामहे शक्र हतो ब्राह्मणकण्टकः ॥ १६
त्रिविष्टपं प्रपद्यस्व पाहि लोकाञ्शचीपते ।
जितेन्द्रियो जितामित्रः स्तूयमानो महर्षिभिः ॥ १७

शल्य उवाच ।

ततो देवा भृशं तुष्टा महर्षिगणसंवृताः ।
पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा ॥ १८
गन्धर्वा देवकन्याश्च सर्वे चाप्सरसां गणाः ।
सरांसि सरितः शैलाः सागराश्च विशां पते ॥ १९
उपगम्याब्रुवन्सर्वे दिष्ट्या वर्धसि शत्रुहन् ।
हतश्च नहुषः पापो दिष्ट्यागस्त्येन धीमता ।
दिष्ट्या पापसमाचारः कृतः सर्पो महीतले ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## १८

शल्य उवाच ।

ततः शक्रः स्तूयमानो गन्धर्वाप्सरसां गणैः ।
ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् ॥ १
पावकश्च महातेजा महर्षिश्च बृहस्पतिः ।
यमश्च वरुणश्चैव कुबेरश्च धनेश्वरः ॥ २
सर्वैर्देवैः परिवृतः शक्रो वृत्रनिषूदनः ।

---

T G M1 2 cont

115* निहतो ब्रह्मशापेन प्रपद्यस्व त्रिविष्टपम् ।

16 $^{a}$) K1 D1.2 9 G2 असौ (for स). — After $16^{ab}$, K (except K2) D8 ins :

116* नहुषस्तु सुदुर्बुद्धिर्दुरात्मा पापचेतन ।
[ K8 D8 पापपूरुष ]

On the other hand, after $16^{ab}$, M2 ins 114* and 115* (cf v l. 15) — $^{d}$) S (except M2 6) ब्रह्मर्षि° (for ब्राह्मण°)

17 $^{a}$) B (except B2) त्रिपिष्टप(!) D9 समासाद्य (for प्रपद्यस्व) — $^{c}$) Dn Ds D9 जितामित्र — $^{d}$) K1 महात्मभि (for मह°)

18 K1.4.6 S (except G6 M1) om the ref — $^{b}$) Ds °सेविता — $^{c}$) G4 ऋषय (for पितर ). D10 पितरो वसवो यक्षा· — K1 8 6 om $18^{d}$–$19^{a}$ — $^{d}$) K4 D1 2 9 S transp भुजगा and राक्षसा· D8 भुजगाश्चैव राक्षसा

19 K1 8 6 om $19^{a}$ (cf v l. 18) — $^{a}$) K2 B1 D1 2 पंनगाश्चैव, K4 शतशश्चैव, T1 G1 6 किंनराश्चैव, T2 G4 °प्सरसश्चैव, G2 8 M1 2 सर्वशश्चैव, M8–6 सर्वतश्चैव (for देवकन्याश्च) — $^{b}$) K1 8 6 गधर्वाप्सरसा गणा ; D9 किंनराश्च सहस्रश , T2 G4 सर्वे देवगणास्तथा — $^{c}$) K8 D2 8 G8 चैव (for शैला ). — $^{d}$) K8 समुद्रा° (for सागरा°)

20 $^{a}$) K4 6 B D (except D8 D6 8 9) T G1 उपागम्य — $^{b}$) K4 6 शत्रुजित D1 दिष्ट्या सवर्धिता वय; T1 G हतारिश्चैव शत्रु° — $^{c}$) D10 निहतो (for हतश्च) — $^{f}$) T2 सर्परूपो (for कृत सर्पो). K8–6 महीपति , T G महीं गत , M1 (*sup lin.*) महीपते

Colophon K1 2 B D (except Dn2 D9) T1 G1 M2 all om sub-parvan name, cite only इन्द्र(D1 शक्र)विजय (T1 G1 M2 इन्द्रविजयोपाख्यान) — *Adhy name* K4 6 पुरोहितयानं, D2 शक्रनद·, G2 नहुषप्रपतन, M2 नहुषपापशासि (sic), M8–6 नहुषशाप — *Adhy no* (figures, words or both) K1 Ds1 D6 7 10 S 17, Dn2 18, D2 8 16 — *S'loka no* K6 13, Dn2 23

### 18

1 $^{a}$) T1 G1 4 6 तत सस्तूयमान. स (G4 °नो धै) — $^{c}$) K (except K2) B1 8 6 D (except Dn D6.8 9) ऐरावण K1 8 °साद्य, Ds D10 °स्थाय (for °रुह्य) — $^{d}$) M1 गजेंद्र (for द्विपेन्द्र) D2 लक्षणान्वितं (for लक्षणैर्युतम्)

2 $^{a}$) K4 D (except D1 2 9 10) सु· (for च) K8 आजगाम महाबुद्धि — $^{b}$) T2 ब्रह्म° (for मह°) — $^{d}$) K (except K2) D10 धनाधिप· (for धने°)

3 $^{a}$) D10 सर्वदेवै· M (except M1) एतै (for देवै ) — $^{b}$) K4 ततो (for शक्रो) D2 9 दैत्य°, G4 नल°, M8–6 शत्रु° (for वृत्र°) — $^{c}$) T1 G सर्वाभिर् (for गन्धर्वैर्) — $^{d}$) M8–6 स्तुतस् (for यातस्) K2 6 B1 M1 विभु , B8 प्रति, B4 हरि , M8–6 ययौ (for प्रभु·). K4 देवराज शतक्रतु (= $4^{b}$), cf v l 4

गन्धर्वैरप्सरोभिश्च यातस्त्रिभुवनं प्रभुः ॥ ३
स समेत्य महेन्द्राण्या देवराजः शतक्रतुः ।
मुदा परमया युक्तः पालयामास देवराट् ॥ ४
ततः स भगवांस्तत्र अङ्गिराः समदृश्यत ।
अथर्ववेदमन्त्रैश्च देवेन्द्रं समपूजयत् ॥ ५
ततस्तु भगवानिन्द्रः प्रहृष्टः समपद्यत ।
वरं च प्रददौ तस्मै अथर्वाङ्गिरसे तदा ॥ ६
अथर्वाङ्गिरसं नाम अस्मिन्वेदे भविष्यति ।
उदाहरणमेतद्धि यज्ञभागं च लप्स्यसे ॥ ७
एवं संपूज्य भगवानथर्वाङ्गिरसं तदा ।
व्यसर्जयन्महाराज देवराजः शतक्रतुः ॥ ८
संपूज्य सर्वांस्त्रिदशानृषींश्चापि तपोधनान् ।
इन्द्रः प्रमुदितो राजन्धर्मेणापालयत्प्रजाः ॥ ९
एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्यया ।
अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया ॥ १०
नात्र मन्युस्त्वया कार्यो यत्क्लिष्टोऽसि महावने ।
द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ॥ ११
एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत ।
वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन ॥ १२
दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः ।
अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः ॥ १३
एवं तव दुरात्मानः शत्रवः शत्रुसूदन ।
क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्योधनादयः ॥ १४
ततः सागरपर्यन्तां भोक्ष्यसे मेदिनीमिमाम् ।
भ्रातृभिः सहितो वीर द्रौपद्या च सहाभिभो ॥ १५
उपाख्यानमिदं शक्रविजयं वेदसंमितम् ।
राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता ॥ १६
तस्मात्संश्रावयामि त्वां विजयं जयतां वर । C. 5. 560 B. 5. 18. 17 K. 5. 18. 17

4 [a]) D7 स महेन्द्रो, T2 G3 समेत्य च, M2 स स्वमेत्य — [b])=8[d] K4 शक्रस्त्रिभुवनेश्वर, cf v 1 3 — [d]) K3 विष्टपं (for देवराट्).

5 [a]) K1.2 B3 D1.2 9 T G M2 तु (for स) — [b]) K2 D2 9 प्रत्यदृश्यत, D6 T2 G1 समपद्यत — D6 (hapl.) om 5[c]-6[b] — [c]) D5 °वेदमन्त्रैश्च, G5 °वेदरेन तु — [d]) D10 महेन्द्र (for देवेन्द्र)

6 D6 om. 6[ab] (cf v 1. 5) — [a]) K1 3 D1.3 (after corr) S (except M5) स (for तु) — [b]) K4 Dn D3-5 महष्ट D1 °दृश्यत (for °पद्यत) — [c]) G2 वासव- (for वर च). K5 स, B1 तु, D10 स- (for च) K1.3.5 राजन्, K2 D5 D6 7 तस्मात् (for तस्मै) — [d]) K1 तस्मादाङ्गिरसे, K5 D2 °गिरसा (D2 °स) K5 अपि, D9 तथा (for तदा)

7 [a]) K4 B D (except D1 9) T2 G1m 4 °रसो (for °रसं) D10 नाम्ना (for नाम) K5 तस्माच्चाङ्गिरसे तात Cs cites अथर्वाङ्गिरा — [b]) K4 5 D2 तस्मिन्, D9 ह्यस्मिन्, T1 G1 6 स्वस्मिन् (for अस्मिन्) K2 क्रूद्रोहे (sic) वै, K3 B D3-7 वेदेस्मिन्वै, Dn D8 वेदोस्मिन्वै, D5 वेदोस्माद्धि Cn अस्मिन्वेदे (as in text) — [d]) D1.2 यज्ञे (for यज्ञ) D1 लिप्स्यसे, D2 9 M लप्स्यसि

8 [b]) K5 °गिरसां, D1 °गिरसे K4 D9 T1 तथा (for तदा) — [c]) Dn1 G5 विसर्जयन् K (except K2) D8 °भागो, M °बाहुर् (for °राज) — [d]) G5 महाराज (for देव°)

9 [a]) K1 4 5 D2 transp सर्वान् and त्रिदशान् — [c]) M4 राज्य (for राजन्) — [d]) M प्रभो (M3 °भु) (for प्रजा)

10 [a]) K3-5 एतद् (for एव) D9 इद (for अनु)

11 [b]) K2 महीपते, K3 5 °द्युते, G3 °मते (for महा°)

12 [b]) D9 लप्स्यसि (for प्रा°) — [cd]) K1.2 B1 D1.2 9 वृत्रहंता (for वृत्र हत्वा) T1 G1.5 M transp प्राप्त and शक्र.

13 [a]) T G दुरात्मा चैव (for दुराचारश्च) K4 स (for च) — [c]) K3 5 °शापाभिभूतो, T1 G (except G1) °शापाग्निहतो

14 [a]) M (except M2) ते च (for तव) — [b]) D2 शत्रुमर्दन, M1 °कर्शन

15 [b]) D9 पृथिवीम् (for मेदिनीम्) — [c]) D3 4.8 9 राजन्, T2 तात (for वीर) — [d]) B1 T1 G1.5 सह प्रभो, B2-5 Dn D5 D3-5 7-10 सहानया; D6 महानय, T2 तथा विभो (for सहाभिभो)

16 [a]) K1 4 5 D9 राजन् (for शक्र) — [b]) K1 नाम समत, D5 D1.7 9 T2 देवस° (for वेदस°) — [c]) K3 राज्ञो, K5 D2 G3 M (except M5) राज्ञा, T1 G1 (m as in text) 2 5 राजन् (for राज्ञा) — [d]) D1 जयतां वर, T1 G4 M3-5 जयमिच्छता

17 D1 om 17[ab] — [a]) D9 सश्रावयामास, G5 °वयिष्यामि (for °वयामि त्वा) M2-4 त्वा (for त्वां). — [b]) M3-5 जयाय, Ca विजय (as in text) D7

संस्तूयमाना वर्धन्ते महात्मानो युधिष्ठिर ॥ १७
क्षत्रियाणामभावोऽयं युधिष्ठिर महात्मनाम् ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ १८
आख्यानमिन्द्रविजयं य इदं नियतः पठेत् ।
धूतपाप्मा जितस्वर्गः स प्रेत्येह च मोदते ॥ १९
न चारिजं भयं तस्य न चापुत्रो भवेन्नरः ।
नापदं प्राप्नुयात्कांचिद्दीर्घमायुश्च विन्दति ।
सर्वत्र जयमाप्नोति न कदाचित्पराजयम् ॥ २०

वैशंपायन उवाच ।

एवमाश्वासितो राजा शल्येन भरतर्षभ ।
पूजयामास विधिवच्छल्यं धर्मभृतां वरः ॥ २१
श्रुत्वा शल्यस्य वचनं कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः ॥ २२
भवान्कर्णस्य सारथ्यं करिष्यति न संशयः ।
तत्र तेजोवधः कार्यः कर्णस्य मम संस्तवैः ॥ २३

शल्य उवाच ।

एवमेतत्करिष्यामि यथा मां संप्रभाषसे ।
यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव ॥ २४

वैशंपायन उवाच ।

तत आमन्त्र्य कौन्तेयाञ्शल्यो मद्राधिपस्तदा ।
जगाम सबलः श्रीमान्दुर्योधनमरिंदमः ॥ २५

इति श्रीमहाभारते उद्योगपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

---

जयमिच्छता (for जयता वर) D2 G4 वर (for वर). — c) K4 सश्रुत्य° (for सस्तूय°) M वर्धंति, Ca वर्धन्ते (as in text).

18 a) K1.4 5 D2 महाबाहो, G4 M अभावाय (for अभावोऽयं) — b) M3-5 दुरा° (for महा°). — After 18, K (except K2) D2 7 8 ins.

117* सग्रामे संक्षयो घोरो भविष्यत्यचिरादिव ।

19 G2 om 19-20. — a) D2 M (except M1) आख्यातं (for आख्यान) D2 9 T1 G1 3 M चैंद्र° (for इन्द्र°) — b) K (except K2) D1 M2-4 इम, T1 G1 5 चैव, G3 4 च वै (for इद) G3 M3 5 नियत — c) D10 धौत°, T G (G2 om) हत°; M1.3 4 पूत°. Dn Ds D3 9 M3 जित स्वर्ग, G4 वसेत्स्वर्गे — d) K2 B1 D1.2 G4 M1 प्रेत्य च; K4 T2 G1 3 सप्रेत्य, B2-5 Dn Ds D3-8 10 परत्र (for स प्रेत्य) K5 मोदति, M नन्दति (for मोदते)

20 G2 om 20 (cf. v. 1 19). — a) T G (G2 om) च शत्रु- (for चारिज) — b) K3 B (except B1) D (except D1 2 9) नापुत्रो वा (for न चापुत्रो) M (except M1) पुन (for नर·) — c) D8 आपद; G4 अशुभ (for आपद) K2 5 Dn1 Ds D1 7 9 T2 G3 4 M1 2 किंचित् D2 नाप्नुयाद्वापदा किंचित् — e) D1 स तत्र (for सर्वत्र). — f) K3 5 पराभव, Ds D10 G1 पराजय·.

21 B2 3 5 om the ref — a) D6 राजन् (for राजा) — b) Dn1 Ds2 G3 M3.4 भरतर्षभः — d) D2 धर्मविदा K2 B1 D2.3 T1 G4 5 M1 2 वर (for वरः) K1 3-5 शल्यं च (K1 तं शल्य, K4 °ल्य तु) कुरुनंदन (K1.3 °न)

22 a) K1 B Dn Ds D1 3-8 10 तु शल्यवचन, D2 S (except T2) तु (M1.3-5 च) शल्यस्य वच· (for शल्यस्य वचनं) — b) B1 धनजय (for युधिष्ठिर·). — c) T1 G तमुवाच (for प्रत्यु°) K5 महाबाहुं, T2 तदा राजा (for महाबाहुर्) — d) M धर्मराज (for मद्रराजम्)

23 Before 23, T2 G2 3 ins युधिष्ठिरः — a) K1.4 5 D3 सारथ्ये (for °थ्य) — b) K1 4 5 D3 भविष्यति (K5 °सि), K2 G4 करिष्यसि — d) K1 न च (for मम) K1 2 D9 सस्तव·; K4 संमते, D1 च स्तव·, G3 संस्तुतै. (for सस्तवै) K3 5 कर्णस्यास्मदभिस्तव; B Dn Ds D2-8 10 T G1.2 Ca कर्णस्यार्जुनसस्तव (Dn1 D2-4 °भव·; T G1.2 °स्तवै)

24 b) T1 G त्वं, M3-5 मा (for मां) K4 T2 स्व (for सं·) — c) K1 वक्ष्यामि, Ds1 D8 शक्यामि; D10 कर्तव्यं (for शक्ष्यामि) G5 वक्ष्यसे राजन् (for अपि शक्ष्यामि) — d) K1 तत्करिष्ये न सशय, K4 करिष्यामि हितं तव

25 a) K4 ततश्चामन्त्र्य, B D (except D1 2 9 10) ततस्त्वामन्त्र्य, T G तमामन्त्र्य च (G2 स तमामन्त्र्य). K2 D1.2 7 T G कौंतेय — b) K1 D9 G1 5 तथा — c) K3 स बली; D10 सेनया (for सबल·) D10 सार्धं (for श्रीमान्) — d) K2 5 Dn2 D3.4.7 8 अरिंदम; K3 4 B3 D9 10 S (except T1 G4 M1 2) अरिंदम D1 सुयोधनपुरं

# १९

वैशंपायन उवाच ।
युयुधानस्ततो वीरः सात्वतानां महारथः ।
महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ १
तस्य योधा महावीर्या नानादेशसमागताः ।
नानाप्रहरणा वीराः शोभयांचक्रिरे बलम् ॥ २
परश्वधैर्भिण्डिपालैः शक्तितोमरमुद्गरैः ।
शक्त्यृष्टिपरशुप्रासैः करवालैश्च निर्मलैः ॥ ३
खड्गकार्मुकनिर्यूहैः शरैश्च विविधैरपि ।
तैलधौतैः प्रकाशद्भिस्तदशोभत वै बलम् ॥ ४
तस्य मेघप्रकाशस्य शस्त्रैस्तैः शोभितस्य च ।
बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ॥ ५
अक्षौहिणी हि सेना सा तदा यौधिष्ठिरं बलम् ।
प्रविश्यान्तर्दधे राजन्सागरं कुनदी यथा ॥ ६
तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली ।
धृष्टकेतुरुपागच्छत्पाण्डवानमितौजसः ॥ ७
मागधश्च जयत्सेनो जारासंधिर्महाबलः ।
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ८
तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः । C. 5. 578 B. 5. 19. 9 K. 5. 19. 9

---

प्रति — After 25, K4 ins 118* (cf v l. 5 19 1)

Colophon K1 2 5 B D G1 2 M all om sub-parvan name, cite only इन्द्र(D2 शक्र)विजय (G1. 2 M इन्द्रविजयोपाख्यान), to it B D (except D2 8) M1. 3-5 add समाप्त — *Adhy name* K1 5 B1 3 पुरोहितयान, D2 इन्द्रराज्यप्राप्ति, T1 G1. 2 महेन्द्रराज्यप्रा(G2 °ज्यावा)प्ति — *Adhy no* (figures, words or both) K1 Ds1 D5 7 8 10 S 18, D2 6 17 — *S'loka no* K6 Dn 25

**19**

1 K D7 8 ins after वैश° उ° (K4, after 5 18 25)

118* तत शल्य: सहानीक कम्पयन्निव मेदिनीम् ।
जगाम धार्तराष्ट्रस्य नगर नागसाह्वयम् ।

— [b]) T1 G सात्वता समतो (G5 प्रवरो) रथी (G3 °थ, G4 °णे), M शिनीनां समतो बली — [d]) K1 M (except M2) अयात् (for अगात्) D1 °न समदृश्यत

2 [a]) M (except M2) यस्य (for तस्य) G1 5 M2. 5 यौधा D1 9 महावीरा — [b]) K1. 4 5 °देश्या, D9 °देशात्, T G °दिग्भ्य (for °देश°) — [c]) B1 D1 कारा; D2 घोरा, D9 T1 G शूरा (for वीरा) K (except K3) T2 °प्रहरणोपेता

3 [a]) Some MSS परस्व° K1-3 5(*sup lin*) D7 8 10 भिंडिमालै, B D2-4 T भिंदि° — [b]) K1 4 5 °पट्टिशै; K3 B (except B1 4) Dn D3. 4 6 9 शूल°, T1 G शर° (G4 प्रास°), M2 गदा°, M3-5 खड्ग° C3 cites शक्ति° तोमर° — [c]) K1 4 5 D5 कुतर्ष्टिपरशुप्रासै (K5 °स), K2 3 B Dn D3 D5-7 10 परिघैर्यष्टिभि (K2 °घैर्ऋष्टिभि, D6 °घै पट्टिशै) प्रासै (K3 Dn D3. 4 6 7 पाशै°), D1 2 पट्टिशैर्ऋष्टिभि प्रासै, T2 यष्टिभि° परिघै प्रासै°, G5 शक्तिटकगदाप्रास° C3 cites यष्टि° प्रास — [d]) K2 सु- (for च) D2 कणपैश्च सुनिर्मलै; T1 G1 2 4 कर्प(T1 °पं)णैश्च वि°, G3 कृपाणैस्तु सु°, G5 कार्पणैरति° C3 cites करवाल

4 [a]) K1 3 4 B3. 5 Dn1 D1-5 7 8 10 °निर्व्यूहै (for °निर्यूहै°) C3 cites निर्व्यूह° — [b]) S (except G2) शस्त्रै° (for शरै°) — [c]) K1. 2 तैलधूतै, T1 G शिला° (G3 शरा°), C3 as in text D1 प्रसन्नाग्रै, G4 पृषत्कैश्च (for प्रकाशद्भि°) — [d]) K3. 4 B3. 5 Dn D2-4 6 सदा, K5 D3 समम्, D5 D1. 7 G2 4 M1 तदा, T2 तथा, G3 तत (for तद्) K4 5 T2 G3 तत् (for वै) K1 अशोभत महाबल

5 [b]) K4 B2 4 D1. 7 10 T2 M (except M2) शस्त्रास्त्रै, Dn D3. 4 सौवर्णै, D2 शस्त्रौघै, G3 चक्रास्त्रै (for शस्त्रैस्तै°) K3 वै (for च) — [d]) D9 एव (for इव)

6 [a]) Here and below S (mostly) अक्षो° (for अक्षौ°)! K1 4 5 B1 3 Dn D2-4 9 G तु (for हि) K1. 4 5 B1 Dn D2-4 6 9 10 G transp सेना and सा T2 सुपूर्णा सा, M प्रविष्टा तु (for हि सेना सा) — [b]) T2 G3 तथा (for तदा) — [d]) K4 5 D9 सागरे, G2 पर्वते (for सागर) K4 5 च, T2 G3 तु (for कु) K1 सागरेषु नदी य°, Dn1 सार कुलनदी य°

7 [a]) D9 तथा च, T1 G पूर्णाम् (for तथैव) — [b]) G1 2 4 M1 अधिपो (for ऋषभो)

8 [b]) K5 Dn1 Ds2 D6 8-10 T1 G3-5 M5 जरासधिर्, D7 जरासधो K1 ततो बली (for महाबल) — [c]) K1. 2 D2 G3 च (for एव) M सैन्यानां (for सैन्यस्य) — [d])

578 19.9 19 9

वृतो वहुविधैर्योधैर्युधिष्ठिरमुपागमत् ॥ ९
तस्य सैन्यमतीवासीत्तस्मिन्वलसमागमे ।
प्रेक्षणीयतरं राजन्सुवेषं वलवत्तदा ॥ १०
द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः ।
शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ॥ ११
तथैव राजा मत्स्यानां विराटो वाहिनीपतिः ।
पार्वतीयैर्महीपालैः सहितः पाण्डवानियात् ॥ १२
इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनाम् ।
अक्षौहिण्यस्तु सप्तैव विविधध्वजसंकुलाः ।
युयुत्समानाः कुरुभिः पाण्डवान्समहर्षयन् ॥ १३
तथैव धार्तराष्ट्रस्य हर्षं समभिवर्धयन् ।
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ ॥ १४
तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम् ।
वभौ वलमनाधृष्यं कर्णिकारवनं यथा ॥ १५
तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन ।
दुर्योधनमुपायाताक्षौहिण्या पृथक्पृथक् ॥ १६
कृतवर्मा च हार्दिक्यो भोजान्धककुलैः सह ।
अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत् ॥ १७
तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्वलम् ।
अशोभत यथा मत्तैर्वनं प्रक्रीडितैर्गजैः ॥ १८
जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः ।
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान् ॥ १९
तेषामक्षौहिणी सेना वहुला विवभौ तदा ।
विधूयमाना वातेन वहुरूपा इवाम्बुदाः ॥ २०
सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा ।
उपाजगाम कौरव्यमक्षौहिण्या विशां पते ॥ २१

---

D7 उपाययौ (for उपागमत्)

9 $^{a}$) D10 पाण्ड्यराजेंद्र° G1 M1 राजेंद्र (for राजेन्द्र) — $^{c}$) D8 ततो (for वृतो) G1 M3.4 यौधे , M1 सैन्यै. (for योधै ) — $^{d}$) T1 G1.5 यौधिष्ठिरमगा(G5 °या)द्वल — After 9, T1 G1.4 read 23 and 25 (G4 *repeating* 23 in its proper place), while G2 3.5 read here 25 only

10 T1 G read 10 after 13 — $^{b}$) T2 वहु°, G1.3 जन° (for वल°) — $^{c}$) K1 4 5 D8 9 T G (except G4) °तम (for °तर) — $^{d}$) K (except K2) D8 सुरूपं, B D5-7 सुवेशं, G5 परेषा (for सुवेष) T2 अभवत्तदा, M (except M1) वलवत्तरं — After 10, T2 reads 25

11 $^{a}$) K2 आययौ, D1 2 S अभवत् (for अप्यभूत्) — $^{b}$) D9 °देशात्समा° — $^{c}$) G2 पुरुषव्याघ्र (for पुरुषै. शूरै ) — $^{d}$) G2 अन्यैर् (for अस्य) D2 °वलै° (for °रथै°)

12 $^{a}$) K5 राजन् (for राजा) G1 3.4 मात्स्यानां — $^{b}$) D1 2 M -क्षौ(*or* -क्षो)हिणी° (for वाहिनी°) — $^{d}$) T1 G1 3.5 अयात्, T2 ययौ, G4 अगात् (for इयात्)

13 $^{a}$) M3 (*sup lin* as in text) अत (for the first इत ) D10 तत (for the second इत ) — $^{b}$) D1 2 समागच्छन्; G2-4 सेना जग्मुर् — $^{c}$) K4 5 D1 2 8 च (for तु) K3 B D (except D1.2) एता (for एव) — $^{d}$) K3 Ds2 D1 विविधा ध्वजसंकुला (D1 °युता ), G5 विविधा सुष्ठलकृता° — $^{f}$) G2 सम्प्रहर्षयन् (for सम°) — After 13, T1 G read 10

14 D7 om 14$^{ab}$ — $^{b}$) T1 G4 संपरि°, G1.2 5 संप्रति° (for समभि°) G3 प्रहर्षं प्रतिवर्धयन्, Cd s as in text Ca cites हर्षं and वर्धयन् — $^{d}$) K2 D1 तदा, Cap dp ददौ (as in text)

15 $^{a}$) D8 (before corr ) तस्य नीचै ; T2 तस्यानीकः — $^{b}$) K3 5 D8 कांबोजै (for काञ्चनै ) K3.5 T2 चैव (for इव) D2 इव संवृतं , G5 M अभिसंवृत (M3-5 °तं ) K1.2 4 कांबोजैश्च सुसंवृत — $^{c}$) K1 4 वभूव तद् (for वभौ वलम्)

16 $^{ab}$) T1 G (except G5) ततो (for तथा) D1.2 transp शूर and शल्य D7 वीर (for शूर°) K3 G1 शाल (for शल्य ) K5 D2 10 S (except M3-5) कुरुनंदन — $^{c}$) B5 D3.4 8 M1 उपायातम्, Ds2 °यातम्, D1.2 °याता°, D9 T1 G1-3 5 M3.4 उपेयाताम्, G4 उपायान्तौ, M2 उपेयातौ K4 (hapl ) om 16$^{d}$–17$^{b}$

17 K4 om 17$^{ab}$ (cf v l 16) — $^{b}$) K2 D1 S (except T2) भोजांध(T1 °ध्र)कवरै (G5 °कुकुरै°, M3 °कुपरै ), B (except B1) Dn D3 D5-8 10 °कुकुरै. — $^{c}$) K2 3 सैन्यस्य (for सेनाया) — $^{d}$) D8 उपागत.

18 $^{b}$) D2 ध्वज°, Cd s वन° (as in text) — $^{cd}$) D2 transp यथा and वन G5 M2 महा° (for यथा) D7 T2 G प्रक्रीडित, D10 विक्रीडित

19 $^{b}$) M2 °वाहिन — $^{d}$) K1 2 अचल, K3 G5 M1 अचला , M2 अवनिं (for अचलान्)

20 D4 om. 20$^{c}$–21$^{d}$ — $^{cd}$) K2 4 5 B D (except D8 D1) M1 °मानो वातेन °रूप इवाम्बुद (K4 °धि )

21 D4 om 21 (cf. v l 20) — $^{b}$) T2 G3.4 M transp यवनै and शकै K1 3 5 सशकै°, K4 शशकै°, B3

तस्य सेनासमावायः शलभानामिवाबभौ ।
स च संप्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ॥ २२
तथा माहिष्मतीवासी नीलो नीलायुधैः सह ।
महीपालो महावीर्यैर्दक्षिणापथवासिभिः ॥ २३
आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ।
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ॥ २४
केकयाश्च नरव्याघ्राः सोदर्याः पञ्च पार्थिवाः ।
संहर्षयन्तः कौरव्यमक्षौहिण्या समाद्रवन् ॥ २५
इतश्चेतश्च सर्वेषां भूमिपानां महात्मनाम् ।
तिस्रोऽन्याः समवर्तन्त वाहिन्यो भरतर्षभ ॥ २६
एवमेकादशावृत्ताः सेना दुर्योधनस्य ताः ।
युयुत्समानाः कौन्तेयान्नानाध्वजसमाकुलाः ॥ २७
न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा ।
राज्ञां सबलमुख्यानां प्राधान्येनापि भारत ॥ २८
ततः पञ्चनदं चैव कृत्स्नं च कुरुजाङ्गलम् ।
तथा रोहितकारण्यं मरुभूमिश्च केवला ॥ २९
अहिच्छत्रं कालकूटं गङ्गाकूलं च भारत ।
वारणा वाटधानं च यामुनश्चैव पर्वतः ॥ ३०

C. 5. 600
B. 5. 19. 31
K. 5. 19. 31

सोमकं (for च शकैं) K1 2 3 वृत; D1.2 T G3 M सह (for तथा) G1 2 5 यवनेशश्च पार्थिव (see below) — After 21ab, T G4 ins

119* आजगाम महाबाहुर्यवनेशश्च पार्थिव ।

[ T2 बलवान्बलसंयुक्तो (for the prior half) G4 यवनै सह (for °नेशश्च) ]

22 a) K1.3 D1 समायाता, S (except T2, G1 inf lin as in text) °समावाप°, Cd 3 °समावाय (as in text) — b) K3 5 इवायति (for इवाबभौ) — c) K1.3–5 D10 अथ, K2 T G सा च (G3 सेना) (for स च) D1 त (for स°) — d) K2 D9 तथा (for तत्र) D9 °दधत (for °दधे) K1.3–5 D1.2 नादृश्यत (D2 °श्यत) महीपति (K1 °तलात्, K3 °तले, K4 °पते)

23 M1 2 om. 23 T1 G1.4 read 23 with 25 after 9 (G1 repeating 23 here) — a) T2 G. ततो, G4 तत्र (for तथा) K3 माहिष्मतीराजा, D8 M3 माहीष्मती°, G1 °वास्मो — b) D2 नाना° (for नीला°) — c) D2 महावीर्यो, G3–5 M3–5 °पालैरू (for °पालो) K1.2 B3 D5 T G M3.4 °वीर्या (for °वीर्यै) — d) K (except K2) दक्षिणावासिभिर्नृपै, D1 दक्षिणानृप°, D9 °गामिभि

24 a) T G2 अवतिकौ (T2 °का), G1.3–5 आवतिकौ (for आवन्त्यौ च) K (except K2) D1 2 9 10 आवत्यश्च महीपालौ (K1 °लै) — b) K1 °सुसयुतं, K3 °पराक्रम°, K4 5 °सुदावृत, D1 °समन्वित, D2 9 सुसवृत, D10 S °समावृ(M2 °समन्वि)तौ — cd) G4 उप° (for अभि°) K2 आपेततुश्च (for तावभियातौ) K1 3–5 D2 अक्षौहिणीभ्या (K3 D2 °हिण्यैव, K4 °हिण्या च) कौरव्य दुर्योधनमुपागमत्

25 For the sequence in T G, cf v 1. 9, 10 — a) Some N MSS कैकेया and कैकया D2 महात्मन, G4 महावीर्या (for नर°) — b) T G सोदरा (G4 भ्रातर a gloss?) (for सोदर्या) G4 पार्थिव (for °वा). — c) D1 सहर्षयत T1 G1 5 कौंतेयान्, T2 G3–4 कौरव्यान् — d) K3–5 समाव्रजन्, D1 °द्रुवन्, T G1 2 °गता, G3–5 °वृता

26 a) M3–5 अत (for the first इत) K2 3 B D त(D10 इ)तस्ततस्तु (K3 °श्च) (for इतश्चेतश्च) K3 भूपानां (for सर्वेषां) — b) K1.2 भूपालाना, K3 सर्वेषां सु°, D1 भूपाना च (for भूमि°) — c) G5 हि (for ऽन्या) M अक्षो(M1 °क्षौ)हिण्योऽभ्यवर्तत

27 a) Dn1 D3 4.7 T2 G2 5 °दशावृत्ता; T1 G1.4 °दशविधा, M °दशाघ्वता° — b) T1 G1 5 वै (for ता) — c) D1 कौरव्य, D10 कौंतेयै (for कौन्तेयान्) D9 प्राप्ता सेनास्त्वथैवात्र

28 ab) M राजन्वै हास्तिनपुरे नावकाशो° — c) K2 D3 D8–10 T2 G3 स्वबल°, K3 सुबल°, Dn D1 च बल°, G4 सबघ°

29 a) D5 पाचनद, D6 पांचनदश् — b) K2 3 D2 5 °जगल, D6 7 °मडल — D8 om 29c–30d — c) K1 रौहीत°, K2 3 रोहीत° — d) K Dn1 D1.3 4 M2 °भूमि च (K2 °भूम्यश्च) K1 5 Dn1 M2 केवला, K2 °वला, K3.4 D3.4 7 G5 °वल, D2 °रला

30 D6 om 30 (cf. v 1 29) — a) K1 4.5 D1 °छत्रा, B D5 D8–10 °छत्रा K1 5 °कूटीं, K2 B2 °कूटी, K4 D1 °कूटा, B1 3–5 D5 D10 °कूटा — b) B D3 D8 10 गगातीर — c) K1 D5 D5 10 वरणा, K3.4 D2 वारुणा, K5 वरुणा, B4 D9 वरण, Dn D3 4 7 G3 वारणं, M3–5 वाराणा K1 2 G1.2 वटधान, K4 वीरधान, B1 M1 वाटधानश्, D1.3 M3–5 °धानाश्, T1 °धार, T2 °दान, G4 °यान, G5 वरधारं — d) K1.2 D1 8 यामुनाश्चैव, T G यामुन चैव K1.4 5 D8 सर्वश, D1 पर्वता, T G1 2 5 पर्वत, G3 सर्वत, G4 भारत

C. 5. 600
B. 5. 19. 31
K. 5. 19. 31

एष देशः सुविस्तीर्णः प्रभूतधनधान्यवान् ।
बभूव कौरवेयाणां बलेन सुसमाकुलः ॥ ३१

तत्र सैन्यं तथायुक्तं ददर्श स पुरोहितः ।
यः स पाञ्चालराजेन प्रेषितः कौरवान्प्रति ॥ ३२

इति श्रीमहाभारते उद्योगपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

## २०

वैशंपायन उवाच ।

स तु कौरव्यमासाद्य द्रुपदस्य पुरोहितः ।
सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च ॥ १
सर्वं कौशल्यमुक्त्वादौ पृष्ट्वा चैवमनामयम् ।
सर्वसेनाप्रणेतृणां मध्ये वाक्यमुवाच ह ॥ २
सर्वैर्भवद्भिर्विदितो राजधर्मः सनातनः ।
वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति ॥ ३
धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ ।
तयोः समानं द्रविणं पैतृकं नात्र संशयः ॥ ४
धृतराष्ट्रस्य ये पुत्रास्ते प्राप्ताः पैतृकं वसु ।
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु ॥ ५
एवं गते पाण्डवेयैर्विदितं वः पुरा यथा ।
न प्राप्तं पैतृकं द्रव्यं धार्तराष्ट्रेण संवृतम् ॥ ६
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।

---

31 a) K2 च, T1 M (except M5) तु (for सु-) — b) D7 9 प्रभूतो (for प्रभूत) — c) K4 बभौ च (for बभूव) — d) K (except K2) बलेनासीत्समावृत॰ (K8 ॰कुला), D1 सैन्येन सुमहाकुला, Dn D2-7. 9 बलेनातीव सवृत॰, S बलेन सुसमावृत (T2 महता॰, G5 ॰हित)

32 a) B1. 3 D1. 5 S तत्तु (for तत्र) K1 D9 यथा॰, Ds2 समा॰, G3. 4 तदा यु॰ (for तथा॰) — c) K (except K2) असौ; D10 G4 तु, T2 च (for स) Some N MSS पचाल॰ G3 ॰राज्ञा तु (for ॰राजेन) — d) K1 3. 5 प्रहित॰ (for प्रेषित॰) T1 G (G1m as in text) कुरुजागल (for कौरवान्प्रति)

Colophon. *Adhy name* K1 2 4 5 B Dn D1. 3-5 7-9 पुरोहितयान; D8 D10 पुरोहितयाने बलागमनं, D2 सैन्यसमवाप्ति॰, D6 संजय(*sup lin* पुरोहित)यान, G1 पुरोहितयाने कौरवयलाभिगमन, M1 सेनासमावाप, M2 पुरोहितयाने सेनासमावाप — *Adhy no* (figures, words or both) K1 Ds1 D5 7 10 S 19, D2 6 18 — *S'loka no* K5 Dn2 G5 33, D8 34

## 20

1 a) B2 4 5 Dn D2-8 च, G3 M1-3 5 त (for तु) K1 D2 कौरव (for ॰व्य) K5 M4 शत्रु (M4 तत॰) कौरवमासाद्य, D1. 10 स कौरव्यं (D10 ॰व) समासाद्य, Cd s as in text.

2 a) K1 Dn1 D1 9 सर्वकौशल्यं, K2 G3 4 M सर्वान् (K2 स वै, G3 4 सर्वं) कुशल, T2 सर्वं कौशल; G2 सर्वान्कौशल्य Cd s cite कौशल्य B2 4 G5 तु, D2 असौ (for आदौ) — b) K2 पृष्टश्, M2 दृष्ट्वा (for पृष्ट्वा) K1 B2 3 एन, D10 एषा, T G1 2 5 एतान्, G3 M एवापि, G4 एव (for एव) G4 निरामयं, Cd. s as in text — c) K2 B Dn1 D5 D3 5 7 ॰सैन्य॰ (for ॰सेना॰) — d) K1 जगाद (for उवाच) K4 तत् (for ह)

3 b) M प्रतापवान् (for सनातन) — c) D1 वाक्योपधानहेतोस्, S वाक्योत्पाद(T1 G5 M5 ॰दा)नहेतोस् (T1 ॰तौ), Ca d s as in text.

5 a) K3. 5 G5 वै (for ये) — b) K1 B Dn D3 D5-8 10 प्राप्त तै, K3 5 तै॰ प्राप्त, D2 प्राप्तास्ते (by transp) K4 B (except B1) D5 D5-7 9 10 पद; T G (except G3) धन (for वसु), see below — G3 (hapl) om 5cd — c) K1. 5 T G (G3 om) पांडो पुत्रा, B3 पाडुपुत्रे॰ — d) B3 प्राप्त (for प्राप्ता) D9 D10 पद, G4 5 धन (for वसु), see above

6 a) G1. 3 वन (for एवं) K1 5 D8 G1 गतै॰, K2 च वै, K3 च तै (for गते) G5 पाडवे च (for ॰वेयै) — b) T2 विहित (for विदित) K2 च, K5 D3 वा, S हि (for व) K4 Ds2 D9 S transp पुरा and यथा — c) K3 राज्य (for द्रव्य) — d) K3 5 D1 S घृत॰ (for धार्त॰) S यद्धृत॰; Ca d s संवृत (as in text)

7 a) K1. 2 M (except M2) अप्यु॰ (for अप्यु॰)

C. 5. 717
B. 5. 24. 5
K. 5. 24. 5

युद्धे च जिष्णोश्च युधां प्रणेतुः ।
समुत्क्रुष्टे दुन्दुभिशङ्खशब्दे
गदापाणिं भीमसेनं स्मरन्ति ॥ ५
माद्रीसुतौ चापि रणाजिमध्ये
सर्वा दिशः संपतन्तौ स्मरन्ति ।
सेनां वर्षन्तौ शरवर्षैरजस्रं
महारथौ समरे दुष्प्रकम्प्यौ ॥ ६
न त्वेव मन्ये पुरुषस्य राज-
न्ननागतं ज्ञायते यद्भविष्यम् ।
त्वं चेदिमं सर्वधर्मोपपन्नः
प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ॥ ७
त्वमेवैतत्सर्वमतश्च भूयः
समीकुर्याः प्रज्ञयाजातशत्रो ।
न कामार्थं संत्यजेयुर्हि धर्मं
पाण्डोः सुताः सर्व एवेन्द्रकल्पाः ॥ ८
त्वमेवैतत्प्रज्ञयाजातशत्रो
शमं कुर्या येन शर्माप्नुयुस्ते ।
धार्तराष्ट्राः पाण्डवाः सृञ्जयाश्च
ये चाप्यन्ये पार्थिवाः संनिविष्टाः ॥ ९
यन्माब्रवीद्धृतराष्ट्रो निशाया-
मजातशत्रो वचनं पिता ते ।
सहामात्यः सहपुत्रश्च राज-
न्समेत्य तां वाचमिमां निबोध ॥ १०

इति श्रीमहाभारते उद्योगपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

— $^{d}$) D1 2 T1 G1.4 5 M1 2 °द्रोह, D9 G3 M3-5 °द्रुह्य, G2 °श्रुक्त्व (for °द्रोह) D1 2 9 S (except T2) गरीय

5 $^{a}$) K जिष्णोर् (for तुम्य) K1 B D T1 G5 सयुगे (for °गमे) — $^{b}$) K4 जित चापि (for च जिष्णोश्च) G2 प्रतिश्रुत (for प्रणेतु) K1 2 युद्ध युद्धे चापि युधा प्र°; K5 युद्धे युता चापि युधां प्र°, D2 युद्धेपु जिष्णु च युधा प्रधान, T1 G1.3-5 M युद्धे चापि युयुधानप्र° — $^{c}$) K2 4 5 Ds D5 M1 समुत्क्रुष्टे, D1 °शब्दे, T1 G4 5 °ह्रुष्टे, G2 °क्रुष्टे K1.2 °शंखनादे

6 $^{a}$) K1-3 D2 M1 °पुत्रौ (for °सुतौ) K1 2 B1 Ds D5-8 10 रणाजिरेपु, K3-5 D2 रणे व्यवस्थितौ, D1 G2 महाजिमध्ये, T G1 4 5 तथाजिमध्ये — $^{c}$) K शरवर्षेण राजन्; D2 शरजालैरजस्रं — $^{d}$) K1 2 समरे दुष्प्रसह्यौ, K4.5 B D (except D9 10) °रे दुष्प्रकंपौ, T1 G1 5 M1-4 °रेष्वप्रकम्प्यौ, T2 °रे निष्प्रकंपौ

7 $^{a}$) M1 किंचिद् (for राजन्) — $^{b}$) G3 M1 3.4 जायते (for ज्ञा°) D1 2 7 S यद्भविष्यत् — $^{c}$) S (except M2 5) त्वा (for त्व) B Dn Ds D3-10 चेत्तथा, D1 चेदिद, G2 चेदय (for चेदिम) S (except M2 5) °धर्मोपपन्नं — $^{d}$) S (except G4 M2) क्लेश° S (except M2) कृच्छ्ररूप

8 $^{a}$) K3 B Dn1 D3 4 M2 कृच्छ्रगतश्च, Dn2 सर्वगताभि, D1 °मतश्च, D2 G2 °तम च, D8 सर्वमवेक्ष्य (for सर्वमतश्च) — $^{b}$) K5 Dn D1 3 7 शमीकुर्या, S (except G1 2) समीक्ष्य कुर्या; Cd s समीकुर्याः (as in text) — D6 om. 8$^{c}$-9$^{b}$ — $^{c}$) G4 ते कामार्थौं (for न कामार्थं) Ds2 T1 च, G4 न (for हि) Ds2 धर्म्यं (for धर्मं) — $^{d}$) K1 2 D1 2 T2 G3 4 पुत्रा (for सुता)

9 K1 2 om 9$^{a}$, D6 om 9$^{ab}$ (cf. v 1 8) — $^{a}$) D2 एक (for एतत्) — $^{b}$) B D G2 स(Dn D1-5 7 8 श)मीकुर्या, T G1 3-5 M क्षम (T1 G1 5 क्षेम, T2 क्षमी) कुर्या (for शम कुर्या) T2 G1 M5 शमाप्नु°, G4 शममाप्नु° (for शर्माप्नु°) Cs has शमाप्नुवति. — $^{c}$) D8 D10 समागता (for धार्तराष्ट्रा) D2 S (except T2) सृजया पांडवाश्च (by transp), of v 1 5 25 1$^{a}$ — $^{d}$) K1.2 D8 पार्थिवा सति वृद्धा, K3-5 B Dn Ds D1.3-7 9.10 सनिविष्टा (K3-5 सति वृद्धा, D8 D5 10 सनिकृष्टा) नरेंद्रा, D2 पार्थिवा सनिवोध (for पार्थिवा सनिविष्टा.) — After 9, K1 2 ins

132* तेषां सर्वेषा शममेव विदध्या ।

10 $^{a}$) K1 B D (except D8 D9 10) T2 G यन्मा; K3 यस्माद् (m यन्मां) (for यन्मा) T G सभायाम् (for निशायाम्) — $^{d}$) K3-5 समेत्य तत्वं वचन निबोध, S (except G2) समेत्य तच्छ्रोप्यसि सनियोग

Colophon missing in B1 — *Sub-parvan* K1-4 B1-3 5 Ds D1.2 5-10 M2-5 सजययान — *Adhy name* T1 G1 M2-5 संजयप्रतिवचन (T1 G1 °प्रतिवाक्य) — *Adhy no* (figures, words or both) K1 23, D5 7 8 S 24; D6 22 — *S'loka no* · K5 Dn2 D8 10

## २५

युधिष्ठिर उवाच ।

समागताः पाण्डवाः सृञ्जयाश्च
जनार्दनो युयुधानो विराटः ।
यत्ते वाक्यं धृतराष्ट्रानुशिष्टं
गावल्गणे ब्रूहि तत्सूतपुत्र ॥ १

संजय उवाच ।

अजातशत्रुं च वृकोदरं च
धनंजयं माद्रवतीसुतौ च ।
आमन्त्रये वासुदेवं च शौरिं
युयुधानं चेकितानं विराटम् ॥ २
पाञ्चालानामधिपं चैव वृद्धं
धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ।
सर्वे वाचं शृणुतेमां मदीयां
वक्ष्यामि यां भूतिमिच्छन्कुरूणाम् ॥ ३
शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत्त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञ-
स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ ४
सर्वैर्धर्मैः समुपेताः स्थ पार्थाः
प्रस्थानेन मार्दवेनार्जवेन ।
जाताः कुले अनृशंसा वदान्या
ह्रीनिषेधाः कर्मणां निश्चयज्ञाः ॥ ५
न युज्यते कर्म युष्मासु हीनं
सत्त्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत्त-
च्छुक्ले वस्त्रे यद्भवेत्किल्बिषं वः ॥ ६
सर्वक्षयो दृश्यते यत्र कृत्स्नः
पापोदयो निरयोऽभावसंस्थः ।
कस्तत्कुर्याज्जातु कर्म प्रजान-
न्पराजयो यत्र समो जयश्च ॥ ७
ते वै धन्या यैः कृतं ज्ञातिकार्यं
ये वः पुत्राः सुहृदो बान्धवाश्च ।

C. 5. 780
B. 5. 25. 8
K. 5. 25. 8

### 25

1 a) T G सृजया पाण्डवाश्च (by transp), cf. v. l. 5. 24. 9c — b) K D10 धृतराष्ट्रोन्वशासत् (K1. 4. 5 °शास्ते), D2 °राष्ट्रादुपात्त, D7 धार्तराष्ट्रानुशिष्ट — d) Some S MSS गावद्गणे

2 ab) S (except G2. 5) transp वृकोदर and धनंजय — d) D1. 2 G2 सत्यार्कि (for युयुधान)

3 a) B and some other MSS पञ्चाला° K5-6 चापि (for चैव)

4 D2 reads 4 after 5ab — a) K1 स मा, D6 Cap सम, G4 धर्मं, Ca d शम (as in text) — b) K1 G3 M1. 2. 4 न्ययोज°, T1 अयोध°, G4 नियोज°, G6 निवेद° (for अयोज°) T1 G4 -थ धर्मं (for रथ मे) — c) K1 Dn D5 स्व- (for स-) K1 सर्वं, K2. 6 राजन् (for राज्ञस्)

5 a) K1 G3 सर्वैं धर्मं, D1 सर्हव ते Cd cites ते T1 G5 समवेता, Cd समुपेता (as in text) K1. 2. 6 B1. 3. 4 D (except D1. 9) T2 तु, Cd स्थ (as in text) S सर्वे (for पार्था) — b) K3 B Dn D5 D3-8. 10 प्र(D5 m D7 सप्र)स्थानेन, D1 प्रस्थायमान, T G (except G3) प्रज्ञानेन, M प्रस्थाने वा, Cd 8 प्रस्थानेन (as in text) K1. 4. 6 प्रस्थापने मार्दवे चार्जवे च Cd मार्दवेनार्जवेन (as in text) — After 5ab, D2 reads 4. — c) K3-6 B D1. 2. 5-8. 10 कुले जाता (by transp) K4 स्वनृशसा, B D (except D1. 2) S ह्यनृ° — d) K2. 3 B D (except D5 1 D2. 9) Cs ह्रीनिषेवा (Csp as in text)

6 a) K4 D5 D1. 9 G2 Cd. 8 दीन, Ca हीन (as in text) — b) G4 सत्य, Ca सत्त्व (as in text) K1 चं, Ca व (as in text) B1 भीमवेगा, S (except T G2) भैमसेना, all comm as in text. — c) M1 उद्भाव्यते, Ca उद्भासेत्, Cd उद्भासेत — d) K3 B D (except D1. 2. 5. 7. 9) शुभ्रे (for शुक्ले) D9 transp यद्भवेत् and किल्बिष

7 a) K1-3 सर्वा(K2 °र्वा)पायो, K4 सर्वं भूयो मे (for सर्वक्षयो) D10 युद्धे (for कृत्स्न) — b) S (except G2) पापोदयोभावसस्थ कुरूणा — c) K4 B (except B1) Dn1 D1. 5. 6. 9 G3 तत्र (for तत्) — d) K3 वा नियमो, K4 यत्र शमो (for यत्र समो) K1 Cd यत्र यमोजय°!

8 b) K2. 6 B Dn D5 D2. 5-8. 10 G2 ते वै, D3. 4. 9 ते व (for ये व) G5 पाण्डवाश्च (for बान्धव°) — c) K1 उपन्यस्त, D8 °कृष्ट, S (except M6) उपकु(G3 उत्कृ)ष्टा,

C. 5. 780 B. 5. 25. 8 K. 5. 25. 8

उपक्रुष्टं जीवितं संत्यजेयु-
स्ततः कुरूणां नियतो वै भवः स्यात् ॥ ८

ते चेत्कुरूननुशास्य स्थ पार्था
निनीय सर्वान्द्विपतो निगृह्य ।
समं वस्तज्जीवितं मृत्युना स्या-
द्यज्जीवध्वं ज्ञातिवधे न साधु ॥ ९

को ह्येव युष्मान्सह केशवेन
सचेकितानान्पार्षतबाहुगुप्तान् ।
ससात्यकीन्विपहेत प्रजेतुं
लब्ध्वापि देवान्सचिवान्सहेन्द्रान् ॥ १०

को वा कुरून्द्रोणभीष्माभिगुप्ता-
नश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे प्रसोढुं विपहेत राज-
न्राधेयगुप्तान्सह भूमिपालैः ॥ ११

महद्बलं धार्तराष्ट्रस्य राज्ञः
को वै शक्तो हन्तुमक्षीयमाणः ।
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किंचित् ॥ १२

कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ।
सोऽहं प्रसाद्य प्रणतो वासुदेवं
पाञ्चालानामधिपं चैव वृद्धम् ॥ १३

कृताञ्जलिः शरणं वः प्रपद्ये
कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।

---

all comm उपक्रुष्ट (as in text) Cs ये (for स) — d) B (except B1) Dn D2-7 G3 M5 यत, G5 सुताः, Cs तत° (as in text) K1 2 D1 2 8 G3 नियतो भवः (K1 °तो वध, D1 °तो मत) स्यात्, K3-5 T G1 3-5 M नियत स्यादभाव (for नियतो वै भव स्यात्) Ca d cites भव°, Cs भाव

9 a) K1 2 D2 तांश्चे(K2 ता चे)त्, K3 तान्वै, K4 5 ए(K4 जे)तान्, D8 M नो चेत्; D9 ते वै, T G (except G5) न चेत्, Cs ते चेत् (as in text) Ca d cite ते (as in text) K1 अनुशिष्या स्थ, K2 °शास्य व°; K5 °शिष्याश्च, B Dn D2-10 °शिष्याथ; D1 °वृत्ता स्थ, S °ने(G2 °शि)ष्यामि, Cd s °शास्य स्थ (as in text) Ca cites स्थ (as in text) K4 अनुशिष्याश्चर्चार (for °शास्य स्थ पार्था) Dn D3 4 G1 पार्थान् — b) K3 5 B Dn D2-8 10 S निर्णी(D2 °र्नी; G5 °ज्ञी)य, K4 D5 निणीय, D9 विनीय, Ca d s निनीय (as in text) D1 विद्विपो, Ca d s द्विपतो (as in text) Dn2 Ds1 वै निगृह्य, D1 G3 विगृह्य, all comm निगृह्य (as in text) — c) K1 D5 च वस्तत्; K2 च तत्, D2 तत, G2 वस्तु, Ca d s वस्तत् (as in text) — d) D2 यज्जीवित, Ca d s °वध्व (as in text) K4 °वधाञ्च, K5 °वधात्तन्न, D1 °नाशाय, G5 °वधो न, Ca d s °वधे न (as in text) D1 साधु, Ca d s साधु (as in text)

10 a) D3 G4 M3 4 को ह्येप, D10 को न्वेप; G5 कोऽप्येत्य (for को ह्येव) — b) K1 Dn1 D5 8 9 T1 सचेकितान्, K4 5 D6 सभीमसेनान् K1 2 पार्थिव° (for पार्षत°) — c) K4 5 D1 8 9 ससात्यकान्, Dn1 D3 4 9 °सात्यकीन्को Ds1 D3-5 7 9 10 विपहेतेह (for विपहेत) Dn1 Ds1 D3-5 7 9 10 जेतु, S (except G2) प्रहर्तुं (for प्रजेतु) — d) K3-5 D2 समहे(D2 सहें)द्रास्तथैव; B (except B2) D3 D5-7 सचिवानपींद्र°, D9 सेंद्रान्सहायान् (for सचिवान्सहेन्द्रान्) D1 लब्ध्वा सहायानपि देवान्सशक्रान्

11 a) K1 क्रुद्धान् (for को वा) K3 भीष्मद्रोणाभि° (by transp), G3 M1 °दिगुप्तान् — c) K1 2 D2 S युद्धे, D1 युद्धं (for रणे) K1 B Dn D3 D5-8 10 विजेतु; D1 प्रकर्तुं (for प्रसोढु) B1 प्रसहेत (for विप°) T G1 2 4 M2 3 5 वीरान्, G2 राजा, G5 कस्मात् (for राजन्)

12 ab) T G (except G2) M1 वृहद्बल K2 राजन् (for राज्ञ) T2 transp राज्ञ and को वै K4 D1 M2 वा (for वै) — c) D10 पार्थ (for चैव), and वा (for the second च) — d) D1 नाभिजानामि, G3 नाभिग°; G4 चाधिग° (for नाधिग°)

13 a) K1 D5 Ca नीता, Cd s ap नीचाः (as in text) G5 दौष्कुलेन — b) D1 विधर्मार्थं, D2 अधार्मिकं (for निर्धर्मार्थं) D1 कुर्युर्हि, D2 कुर्वंति (for कुर्युश्च) — c) K1 2 प्रपद्ये; D2 प्रपद्य (for प्रसाद्य), cf. 14a. B1 प्रयतो — d) Some MSS पचाला° D9 चाधिपतिं च वृद्ध, D10 अधिपं पार्षत च, S (except G2) अधिप चापि वृद्ध

14 B2 om 14ab — a) B1 D1 T1 G1 4 5 M वै, G3 अह (for व) — b) =5 26 18b G4 °पांडवाना (for °सृञ्जयानाम्) — c) K3 B1-4 Dn2 D3 D5-6 ह्येवमेव, B5 D10 ह्येव मे, D9 ह्येप ते, G1 ह्येवमेव, G3 ह्येव

न ह्येव ते वचनं वासुदेवो
धनंजयो वा जातु किंचिन्न कुर्यात् ॥ १४
प्राणानादौ याच्यमानः कुतोऽन्य-
देतद्विद्वन्साधनार्थं ब्रवीमि ।
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## २६

युधिष्ठिर उवाच ।
कां नु वाचं संजय मे शृणोषि
युद्धैषिणीं येन युद्धाद्बिभेषि ।
अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युध्येत सूत ॥ १
अकुर्वतश्चेत्पुरुषस्य संजय
सिध्येत्संकल्पो मनसा यं यमिच्छेत् ।
न कर्म कुर्याद्विदितं ममैत-
दन्यत्र युद्धाद्बहु यल्लघीयः ॥ २
कुतो युद्धं जातु नरः प्रजान-
न्को दैवशप्तोऽभिवृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था

C. 5. 740
B. 5. 26. 3
K. 5. 26. 3

ते (for ह्येव ते) Dn1 D8 T G5 मे (for ते) Cn cites एवमेव — d) K3 नृपाभूत (for धनंजयो) K1 2 D5 D1 G5 om. वा D1 कुर्यान्न किंचित (by transp )

15 a) K5 प्राणानाजौ, Dn D1-4 6 7 9 °न्दद्याद्, D5 D. Cap °न्ददौ, Ca d.8 प्राणानादौ (as in text) Dn D2 4 6.9 10 G1 याचमान , Ca °मानान्, Cd 8 as in text K2 4 प्रयच्छे, K5 D10 प्रयच्छेन्, D1 ततोन्यद्, Ca d कुतोऽन्यद् (as in text) — b) K1.2 एव विद्म , K3-5 D10 कुतोन्यदेतत, D1 T2 G (except G5) एतद्विद्वान्, D2 एवद्वचन, C8 एतद्विद्वन् (as in text) — After 15ab, D10(marg ) ins

133* धनानि रत्नानि बहूनि राज्य
कल्याणरूपाणि च वाहनानि ।
न दुर्लभानीह नरप्रधाना
वृद्धस्य राज्ञः शासने विष्ठता च ।

— d) D10 उत्तर (for उत्तमा) K1 2 मत च व सम्य-गिहोत्तर स्यात्

Colophon — *Sub-parvan* K1 2 4 B D8 D1.2 6-10 M2 संजययान — *Adhy name* Dn1 संजयवाक्य, D2 संदेशप्रदान, T1 संजयवचन, G1 संजयवचनश्रवण, M2 संजयप्रतिवचन — *Adhy no* (figures, words or both) K1 D7 24, D5 8 S 25, D6 23 — *Śloka no* K5 Dn D1 15

26

1 a) K D8 10 कश्चिद्, B8 का त्व, D1.2 कच्चिन्न, G2 कदा नु, M2 कां सु (for का नु) D7 शृणुयात्संजयो मे and also संजय मे शृणोषि (as in text) — c) K2 M2 तात, D7 चैतद् (for वै तात) — d) K1 2 कथ, K5 D1.6 8 G4 5 M3 कस्त, D9 M4 क स्त, G3 कष्ट, M1 क स- (for कस्तद्) S (except T1 G1 2) साधु (for जातु) B (except B1, B5m as in text) सूद (for सूत)

2 b) D1 कामो (for संकल्पो) G4 M5 om. the first य — c) K5 क , Ca 8 न (as in text) K5 ममैव तद्, D2 च ममैतद्, G5 मे तदन्यद् (for ममैतद्) — d) K1 2 अपि, Ca d 8 बहु (as in text) K4 T1 G1 4 5 तल्लघीय , G3 तुल्यवीर्यं , Ca यल्ल° (as in text) K5 बहुलायासपापाद् (for बहु यल्ल°)

3 a) K को वा, D1 2 को नु (for कुतो) D9 युध्येत् (for युद्ध) K5 M कश्चित्, T1 G (except G3) किंचित्, T2 कश्चित् (for नर ) K (except K5) G2 प्रजानेत् (K4 °सन्), B Dn D8 D6-8 10 अवगच्छेत्, D2 प्रपश्येत, G1 सुम्याय (for प्रजानन्) — b) K1 4 Cd 8 दैवसक्तो, K3 B Dn D8 4 6 10 T G1 3 5 M दैवशप्तो, D82 D2 दैवशक्तो, D1 वा शक्तो हि, D7 G4 देवशक्तो, Ca दैवशप्तो (as in text) K1 2 वि-, B D (except D1) T1 G4 5 M2 हि (for अभि-) K1 2 4 दुःख (for युद्धम्) — c) G4 शुभै°, Ca सुखै° (as in text) — d) K1 2 युद्धाद्, Ca d

C. 5. 740
B. 5. 20. 3
K. 5. 20. 3

धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ३
कर्मोदयं सुखमाशंसमानः
कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ।
सुखप्रेप्सुर्विजिघांसुश्च दुःखं
य इन्द्रियाणां प्रीतिवशानुगामी ।
कामाभिध्या स्वशरीरं दुनोति
यया प्रयुक्तोऽनुकरोति दुःखम् ॥ ४
यथेध्यमानस्य समिद्धतेजसो
भूयो बलं वर्धते पावकस्य ।
कामार्थलाभेन तथैव भूयो
न तृप्यते सर्पिषेवाग्निरिद्धः ।
संपश्येमं भोगचयं महान्तं
सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ५
नाश्रेयसामीश्वरो विग्रहाणां
नाश्रेयसां गीतशब्दं शृणोति ।
नाश्रेयसः सेवते माल्यगन्धा-
न्न चाप्यश्रेयांस्यनुलेपनानि ॥ ६
नाश्रेयसः प्रावरानध्यवस्ते
कथं त्वस्मान्संप्रणुदेत्कुरुभ्यः ।
अत्रैव च स्यादवधूय एष

धर्माद् (as in text)
4 [a]) K1 5 B D (except D8) G1 2 धर्मो°, Ca s कर्मो° (as in text) K1 B D (except D10) आशासमाना° — [b]) K1 T2 G1 3 M1 3-5 कृच्छ्रापाय, T1 G5 M2 कृच्छ्रापयन्, all comm as in text K कर्म कुर्वीत (K1 °वेति), D1 किं स्विति कर्म, D2-4 7-9 तत्त्वतिकर्म (for तत्त्वत कर्म) Ca d s cite अतिकर्म D10 m वस्तुत' (probably gloss for तत्त्वत) — B1 (hapl) om 4[cdef] — [c]) K1 B (B1 om) D (except D1 9 10) T2 G1 2 5 M2 Cs सुख प्रेप्सुर्, Ca d as in text. K निजिघांसुश्च, D8 वै जिघां°; G2 विजिगीषुश्च, G4 M विजिहा° D9 सुखप्रेप्सुर्विजित्वा सुखदु ख — After 4[c], D2 ins
134* कुलान्तक सजय कोऽभिवाञ्छेत्,
while S ins
135* कर्मारभेद्यच्च धर्मानपेतम्
— [d]) D1 T G1 3 5 क, D8 यद् (for य) K3-5 °वशानुगश्च, Dn D8 4. 8 10 °रमानुगामी, D9 S (except T2 M5) °वशानुगाना — [e]) T G1 2 5 M कर्मा(T2 M1 [sup lin] 2 4 5 कामा)भिज्ञ ; G3 को हि प्राज्ञ', G4 यै' कर्मभि , all comm कामाभिध्या (as in text) D1 T2 G2 3 धुनोति (for दु°) — [f]) K5 D8 G3 यथा, Cs यया (as in text) B4 Dn D3-7 T1 G2-4 प्रमुक्तो, Cs °युक्तो (as in text) B4 Dn D1-7 G3-5 न, T2 अपि, Cd नु, Cs अनु- (as in text) K1 2 D2 (in addition to the variant shown above) 9 यया प्रयुक्त पुरुष कर्म कुर्यात — After 4, S ins
136* तृष्णा त्यजेत्सर्वधर्मादपेतां
5 [a]) K3 प्रवृद्ध°, Ds2 आसिच्य°, Cs यथेध्य° (as in text) M1 2 समृद्ध° — [c]) K1 कामार्थभावेन, K4 D8 T2 °लोभेन, G1-3 M3. 4 कामोर्थे°, G4 काम्यार्थे° — [d]) K5 न वै तृप्येद्, Cs न तृप्यते (as in text) K3-5 हविषा (for सर्पिषा) — [e]) K यद्, D8 मे, T2 वै (for इम) D2 भोग्यचयं, T G3 5 भोगमोह, G1 2 4 M °मह; Cd s as in text. — [f]) G3 गृहाद्याति, Ca s सहास्माभिर् (as in text). — After 5, K4 ins.:
137* समोहन तस्य महत्तथैत-
द्यदस्माभिर्विप्रयोगो नृपस्य ।
6 [a]) K1 नोश्रेयसाम्, K3 (by corr) M2 न श्रे°, K5 B4 D5-7 T2 Cn नाश्रेयान्, Dn D3 4 न चाश्रेयाणाम्; D10 नाश्रेयान्स्याद्, G3 सश्रेयसाम्, Cn नाश्रेयान्, Cd s नाश्रेयसाम् (as in text) — [b]) K1 नोश्रेयसां, B Dn D3 D8-8 10 नाश्रेयान् (B1 °श्रेयसा) वै (for नाश्रेयसां) K1 गीतनृत्यादिकाना, D7 गीतवृत्तं शृणोति — [c]) K1 नोश्रेयस ; K2 4 5 D9 T2 नाश्रेयसां, B Dn2 D8 D8-8 10 नाश्रेयान् (B1 °यसां) वै, Dn1 निश्रेयसान्वै (for नाश्रेयस ) Cs cites नाश्रेयान् D2 9 सेवति, T2 वहते (for सेवते) K1-3 T1 G1 3 4 गधमाल्यान्, K4 5 T2 G5 गधमाल्य, D8 M3-5 माल्यगंध — [d]) B Dn D8 D3-5 7 10 न चाप्यश्रेयान्, D6 8 नाप्यश्रेयान्, S (except G2) नाश्रेयसश्चापि (for न चाप्यश्रेयांसि)
7 [a]) K5 B D (except D1 2 9) नाश्रेयान्वै, Ca न चाश्रेयान् (for नाश्रेयस ) B Dn1 D8 D8-8 Ca n प्रावारान्, D1 2 G1-4 प्रवरान्, T2 प्रवराणि, Cd प्रावरान् (as in text) K4 प्रावरणोति वस्त्र, D9 प्रावरान्यध्यास्ते; G5 पारराष्ट्राधिपास्ते (for प्रावरानध्यवस्ते) K1 2 एष वस्ते, K3 T2 अप्य(T2 °ध्य)वस्ते, K5 D8 D8 10 Ca सनिवस्ते, B Dn D3-7 सविवस्ते, D1 G4 नाविवस्ते, G2 वाधिवस्ते (for अध्यवस्ते) — [b]) K1-3 नु (K1 न; K3 तु) सोस्मान्, B1 Dn D3-8 तस्मात्; D9 G4 Cn अस्मान्, G3 मम स्यात्, G5 M2 न्वस्मान्, M4 त्वमस्मात् (sup lin. °न्), Cs अथान्

काम: शरीरे हृदयं दुनोति ॥ ७

स्वयं राजा विषमस्थः परेषु
  सामस्थ्यमन्विच्छति तन्न साधु ।
यथात्मनः पश्यति वृत्तमेव
  तथा परेषामपि सोऽभ्युपैति ॥ ८

आसन्नमग्निं तु निदाघकाले
  गम्भीरकक्षे गहने विसृज्य ।
यथा वृद्धं वायुवशेन शोचे-
  त्क्षेमं मुमुक्षुः शिशिरव्यपाये ॥ ९

प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा
  लालप्यते संजय कस्य हेतोः ।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं
  पुत्रं मन्दं मूढममन्त्रिणं तु ॥ १०

अनाप्तः सन्नाप्ततमस्य वाचं
  सुयोधनो विदुरस्यावमन्य ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
  संबुध्यमानो विशतेऽधर्ममेव ॥ ११

मेधाविनं ह्यर्थकामं कुरूणां
  बहुश्रुतं वाग्मिनं शीलवन्तम् ।
सूत राजा धृतराष्ट्रः कुरुभ्यो

C. 5. 790
B. 5. 26. 13
K. 5. 26. 13

(for स्वस्मान्) D2–4 स प्रणुदेत्, D5 Ca d. 5 प्रणुदेत (for सम्प्रणुदेत्) B1. 2 4 कुरुत्वं, Ca d. 5 कुरुष्व (as in text) — c) T2 G4 5 चास्मान् (for एव च स्याद्) G2 5 M1 अवधूत, Ca d 5 अवधुयं (for अवधूय) K1 अत्रैव स्याद वधुयं एष, K2 °व न स्यादवधुय काम , K3 °व न स्यादव बुद्धिमान्, K4 °व तस्य ह्यवधुर्यकाम , K5 °व स्यादवधुय काम , B1 D5 D10 °व च स्यादवधुर्येष (B1 om. एष) काम ; B2–5 Dn D4–7 °व स्यादवधुर्यैव (D5 6 °ष) काम , D1. 2 °व च स्यादवर्तीर्ण (D2 °धुर्य) एष, D8 °व स्यादवधुर्य स काम , D9 °व च स्यादवनिद्य एष — d) K (except K1) शरीरभूतो, B D (except D1. 2 9) C5 प्राय शरीरे (for काम: शरीरे) D1 T1 G3 धुनोति, C5 सदुनोति, Ca. d दुनोति (as in text)

8 b) K3 सामन्यान्, K4 B D (D10 m as in text) S Cap सामर्थ्यम् (D5 सामन्त्यम्, D2 मन्यान्), Ca d s सामस्थ्यम् (as in text) — c) K1 यश्चात्मन , D5 यथा पुन , D2 ययात्मना, C5 as in text B1 T2 G (except G5) M1 2. 4 वृत्तिम्, M3 वृत्तिर् (for वृत्तम्) K2 3 B1 D1 Ca. d 5 एव, K4 D2 9 T2 M एषा, T1 G एष (for एव) — d) B1. 2 D5 D6 8 10 m S (except T2) Cn s सोऽभ्युपैतु

9 a) D2 समिद्धम् (for आसन्नम्) D2 G3 च (for तु) D1 निधाय काले, G2 विधाय काम (for निदाघकाले) — b) K1 2 Ca गम्भीरपार्श्वे (Cap as in text) Cd cites पार्श्वं — c) K3 T1 G1 4 5 M प्रवृद्धे, K4. 5 B4 Dn2 D2 4 7 9 निवृद्ध, B3 G2 वृद्धे, T2 प्रवृद्ध, G3 विवृद्धे (for वृद्ध) K1. 2 B1 2 5 D2 G2 M3–5 °वेगेन, B3 D5 D8 °पथेन (for °वशेन) Dn2 D2 4 7 9 सेचेत, Cn s शोचेत् (as in text) — d) Dn3 D2–4 7 9 क्षिप्र, T1 G1 2 5 कक्ष, T2 G4 कक्षे, all comm क्षेम (as in text) D1 शरदो व्य°, C5 शिशिरव्य° (as in text)

10 a) K1 2 5 D1 आर्त्त°, D2 9 T G C5 आप्त° (for प्राप्त°) — b) S (except T1 G1 2 5) समुदा ते, Cd s लालप्यते (as in text) — c) B1 अनादरे (for अनार्जवे) — d) G2 transp पुत्र and मन्द K3 T G1 4 M1 transp मन्द and मूढ K5 स (for मन्द) D9 M (except M5) असित्रिण (for अमन्त्रिण) K B2 D9 च, B1 T2 M (except M2) त (for तु) D2 T1 G1–3 अमत्रणे रत, G4 5 अमित्रमेष (G5 °वत) (for अमन्त्रिण तु)

11 a) K D10 अनात्मवान्, B Dn D8 D1–9 T2 G3 अनाप्तश्च, Ca d अनाप्तवत् (for अनाप्त सन्) K आत्मवतश्च (K3 °तोस्य) (for आप्ततमस्य) K3 4 B D (except D2 10) G2 C5 वाच (for वाचं) — b) M2 दुर्योधनो ; C5 सुयो° (as in text) B1 4 5 D8 4 T G1 3–5 M Cn अवमत्य, D1 G2 °मेने, C5 अवमन्य (as in text) D9 om. अवमन्य and 11[cd] — d) S (except M5) संयुज्य° (G3 संयोध्य°), Ca d संबुध्य° (as in text) K1 2 मन्यते, T1 G1 द्विपते, Cn s सविशते, Ca d विशते (as in text)

12 a) D1 om हि D2 ह्यर्थकाल and °काम also — b) T1 G1 शीलवृद्ध, T2 °वृत्त, G5 वीर्यवत (for शीलवन्तम्) — c) K1 Ds1 सत, K3 तथा, K4 B1 Dn D2–9 G2 स त, K5 संते, B2–5 Ds2 D10 सूत, D1 स तु (for सूत) T G1 3–5 M सुतस्यार्थे (for सूत राजा) D1 सुमत, D2 G2 समृ(G2 °मि)द्धो, D10 प्रवृद्धो, T G1 प्रमोहाद्, G3–5 M कुरूणा (for कुरुभ्यो) — d) K4 B D (except D8) G2 न ससार, K5 नासस्मरद्, T G1 3–5 M अवासृजद् (for न सोऽस्मरद्) K D2 3 T2 G5 °कामात्

C. 5. 750
B. 5. 26. 13
K. 5. 26. 13

न सोऽस्मरद्विदुरं पुत्रकाम्यात् ॥ १२

मानघ्नस्य *आत्मकामस्य चेर्ष्योः
संरम्भिणश्चार्थधर्मातिगस्य ।
दुर्भाषिणो मन्युवशानुगस्य
कामात्मनो दुर्हृदो भावनस्य ॥ १३

अनेयस्याश्रेयसो दीर्घमन्यो-
र्मित्रद्रुहः संजय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
प्रपश्यमानः प्रजहाद्धर्मकामौ ॥ १४

तदैव मे संजय दीव्यतोऽभू-
न्नो चेत्कुरूनागतः स्यादभावः ।
काव्यां वाचं विदुरो भाषमाणो
न विन्दते धृतराष्ट्रात्प्रशंसाम् ॥ १५

क्षत्तुर्यदा *अन्ववर्तन्त बुद्धिं
कृच्छ्रं कुरून्न तदाभ्याजगाम ।
यावत्प्रज्ञामन्ववर्तन्त तस्य
तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥ १६

तदर्थलुब्धस्य निबोध मेऽद्य
ये मन्त्रिणो धार्तराष्ट्रस्य सूत ।
दुःशासनः शकुनिः सूतपुत्रो
गावल्गणे पश्य संमोहमस्य ॥ १७

सोऽहं न पश्यामि परीक्षमाणः

---

(for °काम्यात्)

13 $^{a}$) K1-3 D1.3 सन्मानघ्नस्यात्म(K3 D1 °र्थ)कामस्य, K4 5 D2 Cd मानघ्न(K4 °स्त)स्यात्मकामस्य, B Dn Ds D3-7 मा(D6 समा)नघ्नस्यामौ मानकामस्य, D9 मानार्थस्यात्मकामस्य, D10 Ca.s मानघ्नस्य मानकामस्य, T G1.3 5 मानघ्नस्याप्यर्थ(T2 °नर्थ-, G3 °प्यात्म)कामस्य, G2 संतानघ्नस्यात्मकामस्य, G4 मानस्तस्याप्यन्यकामस्य, M मानात्मनश्चात्मकार्य (M1 °म)स्य (for मानघ्नस्य *आत्मकामस्य) B D2-4 T2 G3 चेर्षो, G1 राज्ञ, G3 M3-5 चेष्टया, G4 M2 corrupt (for चेर्ष्यो) — $^{b}$) G3 सरम्भेण (for °रम्भिण) T1 G (except G2) M स्वार्थ° (for चार्थ°). T2 त्व भीषणस्यार्थ°. — $^{c}$) K D1 9 G2 निष्ठू(K3 4 D1 G2 °ष्टु)रिणो, T G1.3 4 M दुर्वारि(T2 °दि)णो (for दुर्भाषिणो) K2 B1 D1 2 9 T1 G3.5 °तिगस्य (for °नुगस्य) — $^{d}$) K3 दुर्हृदौ, B D (except D2 9) T2 दौर्हृदर् (B2 °त्रेर्, Ds D10 °दे, D1 सुहृदो), T1 G M दुर्हृदा (for दुर्हृदो) B D (except Ds D1 2 9) T2 भावितस्य; Cap dp अभावनस्य, Ca d s भावनस्य (as in text)

14 $^{a}$) K4 D1.2 G4 अनयस्य, K5 अज्ञाय तस्य, Ca d अनेयस्य (as in text) K3-5 °दृष्टे (for °मन्यो) — M2 om 14$^{c}$–15$^{b}$ — $^{c}$) K4 5 साक्षाद् (for राजा) — $^{d}$) D1 G3 4 M5 °दृश्य°, T1 G2 M1 3 4 °दर्श्य°, G1 °बुध्य°, G5 °दह्य° (for °पश्य°) K B D (except Dn2 D5-8) प्राजहा(K3 4 D9 °हृ)द्, S (except G2, M2 om) प्रजहाति (for प्रजहाद्) S (except G2, M2 om) अर्थधर्मौ (for धर्मकामौ)

15 M2 om 15$^{ab}$ (cf v 1 14) — $^{a}$) S (M2 om) संदेव (for तदै°) S (T2 before corr, M2 om) वै, Ca d s अभूत् (as in text) — $^{b}$) K1 D1 3 न चेत्, B Dn Ds D3-7 10 T2 (before corr.) मतिः, Ca.d.s नो चेत् (as in text) K3 B D (except D3 9) T2 G1.2 Ca s कुरूणाम्; Cd कुरून् (as in text) — $^{c}$) D1 अन्यां, S (except G1) काम्या (T2 काव्या also), Ca d काव्या (as in text) K D2 3 विदुरं भाषमाणं (K3-5 D3 तु ब्रुवाण) — $^{d}$) D10 नाविंदत; Ca.d न विन्दते (as in text) K D3 धृतराष्ट्रो नृशंस, B Dn D3-5 7 10 यद्वार्ते (B1 वै धृत-, B4 Dn2 यद्धृत)राष्ट्रात्प्रशंसा, D1 2 धृतराष्ट्र प्रशास्ता (D2 °स्त), D6 धार्तराष्ट्राप्र°, M2 धृतराष्ट्रप्र° (for धृतराष्ट्रात्प्र°)

16 $^{a}$) G3 4 यथा (for यदा) — Before अन्ववर्तन्त, to avoid hiatus, K2 G2 ins च, K3-5 D3 ते, B Dn Ds D2-7 10 T2 M3 न, D1 9 G3.4 M1.2 4 5 तु, T1 G1 हि, G5 अपि। D1 5 6 G5 अनु° (for अन्व°) K1 क्षत्तुर्यदान्वावर्तते तत्त्वबुद्धिं. — $^{b}$) B D (except D1 2 3 9) T2 सूत (for न) D10 जगाम, G5 M2 ह्याजगाम (for अभ्याज°) — $^{c}$) M राज्ञ, Cs तस्य (as in text). — $^{d}$) D3 M1 2 °बुद्धिर् (for °वृद्धिर्)

17 $^{a}$) Ds1 M5 तदा (for तद्) T1 G1 M अर्थलुब्धेषु, G3 °ब्धे तु, G5 °ब्धेय (for °ब्धस्य) K मे(K4 ते)स्य, G2 मे त्व (for मेऽद्य) — $^{b}$) K4 D10 दुर्मंत्रिणो; G4 लुब्धस्य वै (for ये मन्त्रिणो) K1 B D1 3 T G धृत° (for धार्त°) — $^{c}$) K1 2 B Dn2 Ds सौवल्श्च (for सूत°) — M2 (hapl ) om 17$^{d}$–19$^{a}$ — $^{d}$) Some S MSS गावद्गणे K5 संमोहितस्य (for °हमस्य)

18 M2 om 18 (cf. v 1. 17). — $^{a}$) K1.2 D1 3 T1 G1.5 निरी°, T2 समी° (for परी°) — $^{b}$)=5. 25.

कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
आर्तैश्वर्यो धृतराष्ट्रः परेभ्यः
प्रव्राजिते विदुरे दीर्घदृष्टौ ॥ १८
आशंसते वै धृतराष्ट्रः सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलं नोपलभ्यो
अत्यासन्नं मद्गतं मन्यतेऽर्थम् ॥ १९
यत्तत्कर्णो मन्यते पारणीयं
युद्धे गृहीतायुधमर्जुनेन ।
आसंश्च युद्धानि पुरा महान्ति
कथं कर्णो नाभवद्द्वीप एषाम् ॥ २०
कर्णश्च जानाति सुयोधनश्च
द्रोणश्च जानाति पितामहश्च ।
अन्ये च ये कुरवस्तत्र सन्ति
यथार्जुनान्नास्त्यपरो धनुर्धरः ॥ २१
जानन्त्येते कुरवः सर्व एव
ये चाप्यन्ये भूमिपालाः समेताः ।
दुर्योधनं चापराधे चरन्त-
मरिंदमे फल्गुनेऽविद्यमाने ॥ २२
तेनार्थबद्धं मन्यते धार्तराष्ट्रः
शक्यं हर्तुं पाण्डवानां ममत्वम् ।
किरीटिना तालमात्रायुधेन
तद्वेदिना संयुगं तत्र गत्वा ॥ २३
गाण्डीवविस्फारितशब्दमाजा-

C. 5 762
B. 5. 26 25
K. 5. 26. 25

14b D2 G2 °पाडवाना, D9 °जागलाना (for °सृञ्जयानाम्) — c) K4 B1 G2 आर्से°, Ds अत्यैते°, T G1. 2–5 M1 3–5 प्रार्षै° (for आर्तै°) D6 °राष्ट्रस्य पुत्रो, G4 °राष्ट्र° सपुत्र (for °राष्ट्रः परेभ्य )

19 M2 om. 19a (cf v l. 17) — a) K4 5 D1. 9 S (except G2, M2 om.) आशास्ते (for आश°) K1. 3 Ds D10 G2 om वै D6 G4 धृतराष्ट्रस्य पुत्रो; D10 सविधातुं सपुत्रो — b) S मोहाद् (for महा-) — c) G4 अस्मिन्, Ca d. 3 तस्मिन् (as in text) Ds D3 Ca. d s क्षेम (for शम ) K1 D3–7 9 केवलो नोप°, K3 Dn1 D8 Cd. 3 केवले नोप°, Ca केवलैर्नोप° (for केवल नोप°) — d) K D1–4 8 9 G2 लब्ध सत (K3 स्वक, D1 3. 4 सत्रं, D2 अर्थं), B Dn Ds D5–7 10 Cs सत्वं स्वक (B1 स्वकर्मभूत), T G1. 3 M ह्य(T1 G1 प्र)त्यासन्नं, Ca. d वद्ध सतं (for अत्यासन्न) K3 D5–7 G4 मन्यते; B Ms Cn मद्गते, Dn Cd 6 सगत, Ds D10 केवल, Cdp मद्गत (as in text) K3 चैव स्नोर्थं, D5–7 G4 मद्गते(D7 °ता)र्थं, Ca d s मन्यतेऽर्थम् (as in text)

20 a) K3–5 यत्त (for यत्तत्) K (except K3) D1 T2 G2 4 5 कर्णं, Cs कर्णो (as in text) Dn1 D7 S (except M2 3) वारणीय, all comm as in text. — b) Dn1 D1. 3. 4 7 9 G2 3 M गृहीत्वायुधम् B D (except D1 2 9) अर्जुन वै (for अर्जुनेन). — c) G3 बहूनि तत्र (for पुरा महान्ति) — d) T G1 तदा कर्णो, G3 कस्मात्कर्णो, G4 तदाभवन्; G5 तदा कच्चिन्, M तदा (M2 भो) कथं (for कथं कर्णो) K Dn1 D1 G3 M1 Cd द्वीपम्, T G1. 2 4 5 M2–5 वीर्यम्, Ca. n द्वीप (as in text)

21 b) K3–5 द्रोणोपि (for द्रोणश्च) K4 तथा कृपश्च (for पिता°) — c) K1 तथान्ये (for अन्ये) K2–4 अपि (for च) G5 वै (for ये) G5 सवसति (for तत्र सन्ति) — d) D2 परो, G2 चरो (for अपरो)

22 a) K1. 5 D2 G3 एव, K2 ते, B Dn Ds D5–8 10 T G1 4 5 एतत्, D1 एन, D9 एव (for एते) — c) K5 B D (except D1 8 9) T2 (after corr ) G4 दुर्योधने; T (T2 before corr ) G1 3 5 M °धनो (for °धन) B Dn Ds D5–8 10 T2 राज्यमिहाभवद्यथा, D1 चापराधेन रक्तं, T1 G1 2 5 M1 नापराध्येच्चरत, G3 नापरुध्ये च°, G4 नापराध्यो च°, M2–4 नापराद्धे च°, M5 नापरार्थे च° Ca d cite दुर्योधनस्यापराधेन चरत — d) D10 ह्यरिंदमे N (except D1) G1 2 T2 फाल्गुने

23 a) K5 Ds2 D10 केन, S (except G2) ततो, Ca d s तेन (as in text) B Dn D5–7 9 अनुबंध, Ds1 D2 10 S (except M3. 4) अर्थवध, Ca d s अर्थबद्ध (as in text) — b) K4 5 G2 हतु, Ds D1 कर्तुं, Ca d s हर्तुं (as in text) Ds1 D1 10 T2 G3. 4 M Cs पाडवाना ममेति (Ds1 D1 Cs समस्तं, D10 समस्त), T1 G1. 5 जीवता पाडवाना Ca d cite ममत्व (as in text) — d) K2 Ds2 - D7 तद्वेदिता, T G (except G2) °दिन , Ca d s °दिना (as in text) K1. 2 4 Dn1 D9 सयुगे, T1 G4 सगर, Cn सयुग (as in text)

24 a) D10 गाजीव°, S °शब्दमात्र — b) K3–5 अश्रृण्वतो; S (except G2) श्रुत्वैव (T2 M3–5 °वै-) ते (for अश्रृण्वाना) D2 ह्वयते, T G (except G2) त्रियते, M ह्रि(M2 म्रि)यते, Ca d ध्रियन्ते (as in text) — c) B

वध्यमानाः (वभृण्वाना) धार्तराष्ट्रा म्रियन्ते ।
क्रुद्धस्य चेद्भीमसेनस्य वेगा-
त्सुयोधनो मन्यते सिद्धमर्थम् ॥ २४
इन्द्रोऽप्येतन्नोत्सहेत्तात हर्तु-
मैश्वर्यं नो जीवति भीमसेने ।
धनंजये नकुले चैव सूत
तथा वीरे सहदेवे मदीये ॥ २५
स चेदेतां प्रतिपद्येत बुद्धिं
वृद्धो राजा सह पुत्रेण सूत ।
एवं रणे पाण्डवकोपदग्धा
न नश्येयुः संजय धार्तराष्ट्राः ॥ २६
जानासि त्वं क्लेशमस्मासु वृत्तं
त्वां पूजयन्संजयाहं क्षमेयम् ।
यच्चास्माकं कौरवैर्भूतपूर्वं
या नो वृत्तिर्धार्तराष्ट्रे तदासीत् ॥ २७
अद्यापि तत्तत्र तथैव वर्ततां
शान्तिं गमिष्यामि यथा त्वमात्थ ।
इन्द्रप्रस्थे भवतु ममैव राज्यं
सुयोधनो यच्छतु भारताग्र्यः ॥ २८

इति श्रीमहाभारते उद्योगपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

# २७

संजय उवाच ।
धर्मे नित्या पाण्डव ते विचेष्टा
लोके श्रुता दृश्यते चापि पार्थ ।
महास्रावं जीवितं चाप्यनित्यं
संपश्य त्वं पाण्डव मा विनीनशः ॥ १
न चेद्भागं कुरवोऽन्यत्र युद्धा-

---

D (except D1 2 9) क्रुद्ध न चेद्वी(B D7 °टी)क्षते भीमसेनं Ca cites न चेत् and भीमसेन Cd cites चेत् and भीमसेनस्य वेगात् (as in text) — d) K4 न मन्यते, Ca d मन्यते (as in text) Ca cites सिद्धिं.

25 a) T1 G1 5 एवं (for एतन्) D1 T1 G1 2 4 M2 °त्सहेतापहर्तुं — b) K1 2 ऐश्वर्यं वै, D2 G4 °र्यं मे, D9 मयि स्वय (for °र्यं नो) — d) K D2 9 G2 मदीय, B Dn D3 D8-8 10 सहिष्णौ (for मदीये)

26 a) K8 सदैवैना, G8 स चेदिमां, C8 स चेदेता (as in text). D5 °मिद्येत (for °पद्येत) — b) S (except G2) चैव (for सूत) — c) K8-5 D2 ध्रुव (for एव) — d) K1 4 5 D2 T G1 5 वि-, Ca d न (as in text)

27 b) K1-8 त, C8 त्वा (as in text) K (except K4) D2 क्षमेद्य, D0 क्षमे ह, C8 क्षमेयम् (as in text) — c) G1 4 कौरवे, Ca d 8 °वैर् (as in text) — d) K2 8 धार्तराष्ट्रैस्, C8 धृतराष्ट्रे (for धार्तराष्ट्रे) K2 तदाभूत्, C8 तदासीत् (as in text)

28 a) K अद्यैव (for अद्यापि) K5 तत्तच्च, D10 S (except G8) सा तत्र (for तत्तत्र) — c) T1 G1 5 वास्तु; T2 G8 4 M वा भवतु (for भवतु) K1 2 (marg *sec m* as in text) तथैव, Cn ममोप- (for ममैव) — d) T1 G1 5 दुर्योधनो, M दुर्योधन D1 T2 M गच्छतु. T2 G1 M भारताग्र्यं

Colophon — *Sub-parvan* · K1 2 4 5 B1-3 5 Dn1 D3 D1-5 8-10 T1 G1 2 M2-5 सजययान — *Adhy. name* Dn1 D2 युधिष्ठिरवाक्य, Dn2 सजयवाक्यं; M2-5 संधिप्रशासनः (M2 °प्रशंस·) — *Adhy no* (figures, words or both) K1 D7 25, D5 8 S 26, D6 28. — *S'loka no* K5 Dn 29, D3 27.

## 27

1 a) K1 2 4 5 D6 10 धर्मात्मता, K8 B Dn Dn1 D1. 3-5 9 G4 M2 धर्मनित्या (for धर्मे नित्या) K (except K8) D6 10 विशिष्टा, D1 हि चेष्टा, Ca d विचेष्टा (as in text) — c) K (except K2) B Dn D2-7 9 10 महाश्रा(K4 °श्र)वं, D1 सहस्रार्धं, T1 महाह्राद; Ca 8 np °स्राव (as in text), cf v 1 3. Cd cites स्राव. D1 नित्यं, Ca d अनित्य (as in text) — d) K (except K8) D3 D1 5 6 8 10 T2 संपश्यंस्त्व. K1 पांडवा (marg *sec m* °व as in text), T2 साध्विद K (except K1, K1marg. *sec. m.*) B Dn D3 D8-10 Ca 8 स्य(D6

स्प्रयच्छन्ते तुभ्यमजातशत्रो ।
भैक्षचर्यामन्धकवृष्णिराज्ये
श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ २
अल्पकालं जीवितं यन्मनुष्ये
महास्रावं नित्यदुःखं चलं च ।
भूयश्च तद्वयसो नानुरूपं
तस्मात्पापं पाण्डव मा प्रसार्षीः ॥ ३
कामा मनुष्यं प्रसजन्त एवं
धर्मस्य ये विघ्नमूलं नरेन्द्र ।
पूर्वं नरस्तान्धृतिमान्विनिघ्न-
ल्लँलोके प्रशंसां लभतेऽनवद्याम् ॥ ४
निबन्धनी ह्यर्थतृष्णेह पार्थ
तामेषतो बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणीते स बुद्धः
कामे गृद्धो हीयतेऽर्थानुरोधात् ॥ ५
धर्मं कृत्वा कर्मणां तात मुख्यं
महाप्रतापः सवितेव भाति ।
हानेन धर्मस्य महीमपीमां
लब्ध्वा नरः सीदति पापबुद्धिः ॥ ६
वेदोऽधीतश्चरितं ब्रह्मचर्यं

C. 5 773
B. 5 27 7
K. 5. 27 7

sup lin वि)नीनश , T G विनक्षी (G2 विनश ), Cd विनीनश (as in text)

2 a) D9 T2 नो चेद् K4 (by corr.) राज्य (for भाग) D2 कौरवो (for कुरवो) — b) B Dn D5 D2–8 10 प्रयच्छेरन्, D1 °च्छति (for °च्छन्ते) — c) Some MSS. भैक्ष्य(or °क्ष्या)चर्याम् — d) M5 om. राज्यम् (cf. v. l. 3).

3 M5 om 3a — a) K (except K5) D5 D2 8 T1 G1.4.5 अल्प काल, D6 अकल्पकाल, G3 असल्पकाल. — b) K1(before corr ) 4 5 D2.4 6 7 10 महाश्राव, K3 महाप्राज्ञ (before corr ), D1 सहस्रार्थं, D6 महात्यय (for °स्राव), cf. v 1 1 K4 D2 9 °दुःखात्य च, D7 °दुःख बल च, D3 °दुःख भय च — c) K1 त्वद्वयसो, K1(marg. sec m ) 2 (marg sec m as in text) 3–5 B3–4 Dn D3 D1.5–7 10 m त(K1 m. 2. 4 त्व-, K2 य)थशसो, T2 G1.3 एतद्वयसो, G4 एतद्यशसो. Ca d s cite वयसो (as in text) — d) K1 काम तस्मात्, K1(marg sec m ) 2 पाप तस्मात् (by transp ) K2(marg sec m ) D2 9 प्रकाक्षी , K3 5 अत्र कार्षी , K4 अत्र कार्षी , B Dn D5 D2–8 10 कृथास्त्व, D1 प्रकार्षी , T प्रतीक्ष , G1.2 4 प्रवि(G3 °वी)क्ष , G2 प्रसंक्षी ; G6 प्रविष्ट , M प्रवेक्षा , Ca d प्रसार्षी. (as in text)

4 a) D2 कामान्मा पुष्यते (for कामा मनुष्य) K1.4 D5 प्रसृजत, K2(marg sec m as in text) 5 D5 D6 8 °सज्ज(D6 °सज्य)त, D1 °सहत; D2 °सक्त, D7 m (orig as in text, cancelled) °भवत, S °दह(T2 °हर)त B Dn D5 D2–6 7(m as in text) 8 (before corr ) एते (for एव) — b) S °मूला (for °मूल) D9 ये विघ्नमूल प्रसभ नरेंद्र. — c) K D2 8 प्राज्ञो (for पूर्वं) K4 तत्र, D2 G1 तद् (for तान्). B D (except D1.2 8–10) मति° (for धृति°) B D9 Ca d प्रणि°, Dn D5 D1 3–7 G2 M (except M2) प्रति° (for विनि°) — d) D1 प्रशस्ति (for प्रशंसा) K1.2 न वाच्यं; K3–5 D10 न निंदां, D2 7 चानवद्या (for ऽनवद्याम्)

5 a) K6 D8 9 G1 4 निबधिनी, B1 °धन K1.2 °तृष्णैव, K3 M5 °तृष्णा हि (for °तृष्णेह) K (except K2) D10 पापा (K2 marg sec m पार्थ as in text) — b) B Dn D3–3 G2 Ca इच्छ(B1 G2 एष)तो, D5 D1 10 Cd इच्छता, D2 9 एष्यता, T2 एषिता, G1 M2 एषते, C3 अनिच्छता (for एषतो) T2 G1 4 बाधते D9 एष· (for एव) K3–6 तामिच्छन् (K4 °च्छन्वै) धर्ममर्थं प्रस(K5 °ज)ह्यात् — c) D9 च, T1 G1 हि, Ca तु (as in text) G3 4 M प्र(G4 om. प्र)वृणुते, Ca °वृणीते (as in text) K3–5 स बुद्धिमान्, B1 प्रबुद्ध·, D1 स वै बुध·, D6 बुद्ध , G1 4. 6 सर्वबधु·, G3 M (except M2) स बधु , Ca.s स बुद्ध· (as in text) Cd cites बुध — d) B Dn D3 4 7 9 Ca.d गृध्नो, D2 G2 गृध्रो, T G1 3–5 M गृध्नु (for गृद्धो) K1 चानुसार, K2 चानुकाल, K3 5 चात्र साम्र (K6 सम्रे), B1 D1 9 T1 G1–4 M -र्थानुरोधी, D5 D10 स्वानुरोधात्, D2 -र्थानुसारी, T2 धर्मरोधी, G5 -र्थानुवधी (for ऽर्थानुरोधात्)

6 a) D9 G1 3 5 कर्मणा, C5 °णा (as in text) D1 मोक्ष, C5 मुख्य (as in text) — b) K3.4 S °प्र(G3 °नु)भाव , Ca d °प्रताप (as in text) K3 5 T G1 4 5 अव(K3 G4 °वि)भाति (for भाति) — c) K3 हीनस्तु, K4 B D (except D1) G2 हीनो हि; K5 हीनोपि, T2 त्यागेन (for हानेन) K4 B D (except D1) G2 धर्मेण (for धर्मस्य) T1 G1 4. 5 इमां च (for अपीमां)

7 b) K2 3 D9 प्र , K4 अत्र (for च) — d) D3 चात्मा, C5 आत्मा (as in text) K1 2(marg. sec m.)

C. 5. 778
B. 5. 27. 7
K. 5. 27. 7

यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम् ।
परं स्थानं मन्यमानेन भूय
आत्मा दत्तो वर्षपूगं सुखेभ्यः ॥ ७
सुखप्रिये सेव्यमानोऽतिवेलं
योगाभ्यासे यो न करोति कर्म ।
वित्तक्षये हीनसुखोऽतिवेलं
दुःखं शेते कामवेगप्रणुन्नः ॥ ८
एवं पुनरर्थचर्याप्रसक्तो
हित्वा धर्मं यः प्रकरोत्यधर्मम् ।
अश्रद्दधत्परलोकाय मूढो
हित्वा देहं तप्यते प्रेत्य मन्दः ॥ ९
न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाप्यथ वा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेतदनुयात्येव कर्ता ॥ १०
न्यायोपेतं ब्राह्मणेभ्यो यदन्नं
श्रद्धापूतं गन्धरसोपपन्नम् ।
अन्वाहार्येषूत्तमदक्षिणेषु
तथारूपं कर्म विख्यायते ते ॥ ११
इह क्षेत्रे क्रियते पार्थ कार्यं
न वै किंचिद्विद्यते प्रेत्य कार्यम् ।
कृतं त्वया पारलोक्यं च कार्यं
पुण्यं महत्सद्भिरनुप्रशस्तम् ॥ १२
जहाति मृत्युं च जरां भयं च
न क्षुत्पिपासे मनसश्चाप्रियाणि ।
न कर्तव्यं विद्यते तत्र किंचि-

---

तप्तो; C6 दत्तो (as in text) K3.4 D3.4.10 G2 M2 °पूगान्, Ca d °पूग (as in text)

8 a) D1 सुखं प्रिय, D9 G5 सुखप्रिय Ca.d cite सुख and प्रियं D2 वर्तमानो, G2 सेवमाने — b) D1 योगाभ्यासैर्, S (except T1 G2) योगान्यासे, Ca d s as in text K D2.9 Cd s धर्मं (K2 बुद्धिं), Ca कर्म (as in text) — c) K1.2 पुण्यक्षये; D1 वित्तक्षयैर् D8.2 G3 हीनसुखे — d) G1.4 दु खी (for दु ख) D1 यायात् (for शेते) D1 कामवेगेन नुन्न°, D7 °प्रपन्न, M2 °भोग°

9 B2 (hapl.) om. 9a–11b — a) K2 पुमान् (for पुनर्) K1.2 अर्थचर्याप्रयुक्त, K3 चार्थ°, K4 B1.3.5 Dn2 D3 D2.8 G2 ह्यर्थ°, B4 Dn1 D5–7 Cn ग्रस्त°; D1 ह्यर्थकाम°, T1 G1.3.5 M स्वर्थ°, G4 स्वार्थ° — c) K3.4.5 D10 अश्रद्दधान°; Ca °द्दधत् (as in text) — d) T2 त्यक्त्वा (for हित्वा) K1.2 संघात सीदति, K3.5 च (K5 तु) सतप्यते, K4 असून्सतिष्ठते, D5 देह तप्यति, D1.2.10 G2 तनु (D1 सुखं; G2 त त) तप्यते; T G1.3–5 सोऽसूंस्तप्यते (G3–5 °ति); M -न्नुस(M5 स नस्)तप्यति (for देहं तप्यते)

10 B2 om 10 (cf. v l. 9) — a) K1.5 D5.9 G5 विप्रनाशो°, T2 G1.3 M प्रविनाशो°. — b) K3 पुण्यानां च, D2 पुराणानां (for पुण्याना वा). D1.9 G2 यदि वा, D2 यदिह, D10 पाठव (for अप्यथ वा) K3 पातकानां, D1 पापाना (for पापकानाम्) — d) K3 B4 D3–9 M1.2.4 (inf lin.) त्वेनम्, K5 G3 त्वे(G3 ए)वम्, B1.3.5 चैनम्, D2.10 एनम्, T G1.4.5 एतद् (for त्वेतद्) C3 cites एतत् K4 पुनरभ्येति; K5 पुनरन्वेत्येव (for अनुयात्येव) Ca d s cite अनुयाति

11 B2 om. 11ab (cf v l 9) — a) K5 योगो° (for न्यायो°) K2 हि दत्त, K3–5 प्रदत्त, B4 D6 अय दत्त (for यदन्न). — b) M1 श्रद्धापूर्वं — D4 om 11c–12b — c) K2 D3 G3.5 उत्तम दक्षिणेषु — d) M4 ययारूप; Ca.d s तथा° (as in text)

12 D4 om 12ab (cf. v l 11) — a) G5 महत्क्षेत्रे, Ca d.s इह क्षेत्रे (as in text) D3 विद्यते, G4 क्षीय° (for क्रिय°), see below Dn1 D3.7.9 पार्थ कर्म; G1 पापकार्यं Ca d n कार्यं — b) K1 (hapl.) om 12b. K4 B Dn D3 D2.5–9 G2 क्रियते (for विद्य°), see above. K5 प्रेत; S (except G2) अन्यत्र (for प्रेत्य) Dn1 D3.7.9 कर्म (for कार्यम्) — c) K2.3.5 B Dn1 D3.2 D2–4.9 T1 G5 M पारलौक्यं K1.2 पुण्य, K5 B4 D (except D1.2.9) कर्म (for कार्यं) — d) K2 कार्यं (for पुण्य) K3 अभिप्रशस्त, K4.5 B2 D10 अपि प्र°, B1.3–5 Dn D3 D5–8 G4 अतिप्र°, D1.3.4.9 अनुष्ठित च (for अनुप्र°). K1 तस्मात्सता श्रेष्ठतमोऽसि नित्य

13 a) K1 नरो (for जरां) D2 G4 transp जरां and भयं — b) B1 D9 T2 om. न T1 G (G1 before corr.) M1 (inf lin as in text) स (for न). B1–3.5 Dn D3 D5.6.10 मनस. (B2 °सश्च) प्रियाणि, B4 मनसोऽप्रि°; D1 मनसा प्रि° — c) D1.9 तात; G3 नैव (for तत्र). — d) D1 T G (except G2) वा (for वै) K (K2 m as in text) D2 इंद्रियप्रीणनार्थं; B Dn D3 D1.3–10 -चें(D10 -स्वें)द्रियप्रीणनाद्धि (D1.9 °नार्थात्, D7 [marg. corr.] s

दन्यत्र वै इन्द्रियप्रीणनार्थात् ॥ १३
एवंरूपं कर्मफलं नरेन्द्र
मात्रावता हृदयस्य प्रियेण ।
स क्रोधजं पाण्डव हर्षजं च
लोकावुभौ मा प्रहासीश्चिराय ॥ १४
अन्तं गत्वा कर्मणां या प्रशंसा
सत्यं दमश्चार्जवमानृशंस्यम् ।
अश्वमेधो राजसूयस्तथेष्टः
पापस्यान्तं कर्मणो मा पुनर्गाः ॥ १५
तच्चेदेवं देशरूपेण पार्थाः
करिष्यध्वं कर्म पापं चिराय ।
निवसध्वं वर्षपूगान्वनेषु
दुःखं वासं पाण्डवा धर्महेतोः ॥ १६
अप्रव्रज्ये योजयित्वा पुरस्ता-
दात्माधीनं यद्बलं ते तदासीत् ।
नित्यं पाञ्चालाः सचिवास्तवेमे
जनार्दनो युयुधानश्च वीरः ॥ १७
मत्स्यो राजा रुक्मरथः सपुत्रः
प्रहारिभिः सह पुत्रैर्विराटः ।
राजानश्च ये विजिताः पुरस्ता-

C. 5. 784
B 5. 27 19
K. 5. 27 18

°नार्थं), G5 °प्रीणनत्वात् Cs cites इन्द्रियप्रीणनात्

14 b) B1 D-e.8 9 Cn मात्रावह, Dn1 D3.4.7 मत्वा च त्व, T1 G1-4 M मातापिता, T2 ये तावता, G1.5 मातापित्रोर्, Ca.d s मात्रावता (as in text) Dn1 D2 8 9 T G (except G3) हृदयस्याप्रियेण, Ca d.s हृदयस्य प्रियेण (as in text). — c) D9 सक्रोधज, G5 त्यज क्रोध, Cn.s म क्रोधजात् (for स क्रोधज) G4 M5 हर्षण, Cs लोभजात् (for हर्षज) Ca cites म क्रोधहर्षजौ, Cd सक्रोधहर्षलोभजात् K1.2 वा (for च) — d) K1 लोभ चोर्भा, K3 (m as in text) लोभ नभो (for लोकावुभौ) Ca d cite नभ G3 प्रतिहासी , M जहासी ; Cd हास्मी , Ca प्रहास्मी (as in text)

15 a) D2 अते, Ca d s अन्त (as in text) K4 D6 M2 कर्मणा, B3-5 D5 D2 Cs कर्मणो, Ca.d कर्मणा (as in text) B4 Dn1 D3-5 7 G1 (by corr ) मा प्रजह्या , D6 प्रजत्या , Ca.d s या प्रशंसा (as in text) — b) B1 D3-7 G1 M (except M2) दम, Cs दम (as in text) — c) K3.5 B4 D3-7 अश्वमेध राजसूय, K4 M °मेध (K4 °मेधो) राजसूयस्य, B2 D2 °मेध राजसूयस्, T G1 3-5 °मेधं राजसूयेन (T2 °सूयंद्) (for °मेधो राजसूयस्) K1 °सूयस्तवेज्या (for °सूयस्तथेष्ट ) K2m त्वयेष्ट , K3 5 तथेष्ट्वा, B Dn D5 D1.2 10 तथेज्या (B1.2 D5 °ज्य , D2 10 °ज्या), D3-7 9 T2 स (D9 च) चेष्ट्वा, D8 तथेष्टा, S (except G2, for T2 see above) चेष्ट्वा (for तथेष्ट.) — d) K1 D9 पापस्याते; D2 पापस्वरूपं, Cs पापस्यान्त (as in text) Ca d cite अन्त K4 कर्मणा, Dn2 G3-5 M (except M2) °णा, Cs °ण (as in text) D5 अप्याहुरज्या , Ca.d s मा पुनर्गा (as in text)

16 a) K1 D9 तच्चेदिद, K2-4 तद्दे(K2 °दै)वेद, K5 T G1 3 4 M न चे(M2 चै)वेदं; D10m न चेदेवं, G5 न चैव देव, Cs तच्चेदेव (as in text) Ca cites तच्च, Cd तच्चेत् B Dn D3-7 10 द्वेप° , D1 G5 देव° ; D8 दैव° , M2 तव रू° , Ca.d s देश° (as in text) — M4 (hapl.) om. from कर्म (in b) up to निवसध्व (in c) — c) K1 2 D1 G2 Cd नावत्स्यध्व, K3-5 D3 नि(K4 किं)वसित्वा, D2 किं नु सज्य, M2 निवर्तध्व, Cs नावसध्व, Ca निवसध्व (as in text) M2 4 5 वर्षपूग — d) D9 G2 दुःखे वास, T1 G1 सुखा वास, T2 युयुत्ससे, G3 4 M सुख वास, G5 दु खावास; all comm. as in text D1 G3 5 M पाढव K4 B5m Dn D5 D3-7 10 धर्म एव (D5 7 °व), B1 5 D3.4 धर्मं नित्या , D1 9 धर्मचारिण (D1 °रिन्) (for धर्महेतो )

17 a) K B2 D5 D1-4 8 9 Ca.d s अप्रव्रजन्, T G (except G2) प्रव्रज्यया (for अप्रव्रज्ये) K1-3 योजय(K3 °य)स्त्व, K4 D8 योजयस्व, K5 योजयध्व, B (except B2) Dn D5 D5-7 10 मा स्म हित्वा; S (except G2 3) यात° (for योज°) — b) B (except B1) D (except D1.8 9) ह्येतदासीत् — c) K2 (m as in text) अवनिपाला ; K4 सत्य पा° , B नित्य वश्या पाचाला , Dn D5 D3-8 10 नित्य च वश्या , D9 मत्स्या पाचाला , S (except G2) नित्या पा° (for नित्य पा°) — d) D9 S (except G2) युयुधानो विराट (for °नश्च वीर )

18 a) Some S MSS मात्स्यो — b) K3-5 D10 योधैः , D8 वीरैः , D1.2 G2 मत्स्यैः , T1 G1 5 मित्रैः , G3 4 शस्त्रैः (for पुत्रैः ) T G1.2 5 M (except M2) सशस्त्रैः , G3 4 सपुत्रैः (for विराट·) — c) K1-3 T G (except G2) ते, D8 वै (for च) K1-3 निर्जिता ये (K3 om ये), K5 D8 ये जिता , D2 विजिता ये (by transp ), D9 T2 G2 4 M (except M5) ये विदिता K3.5 D8 पूर्वमेव (for पुरस्तात्) — d) K3 S (except G2 M5) त्वामेवैते, K5 D8 ते सर्वे त्वां (for त्वामेव ते) K1 2 D8 समतात्,

C. 5. 784
B. 5. 27. 18
K. 5. 27. 18

त्वामेव ते संश्रयेयुः समस्ताः ॥ १८

महासहायः प्रतपन्बलस्थः
पुरस्कृतो वासुदेवार्जुनाभ्याम् ।
वरान्हनिष्यन्द्विपतो रङ्गमध्ये
व्यनेष्यथा धार्तराष्ट्रस्य दर्पम् ॥ १९

बलं कस्माद्वर्धयित्वा परस्य
निजान्कस्मात्कर्शयित्वा सहायान् ।
निरुष्य कस्माद्वर्षपूगान्वनेषु
युयुत्ससे पाण्डव हीनकालम् ॥ २०

अप्रज्ञो वा पाण्डव युध्यमानो-
ऽधर्मज्ञो वा भूतिपथाद्व्यपैति ।
प्रज्ञावान्वा बुध्यमानोऽपि धर्मं
संरम्भाद्वा सोऽपि भूतेरपैति ॥ २१

नाधर्मे ते धीयते पार्थ बुद्धि-
र्न संरम्भात्कर्म चकर्थ पापम् ।
अद्धा किं तत्कारणं यस्य हेतोः
प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् ॥ २२

अव्याधिजं कटुकं शीर्षरोगं
यशोमुषं पापफलोदयं च ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ २३

पापानुबन्धं को नु तं कामयेत
क्षमैव ते ज्यायसी नोत भोगाः ।
यत्र भीष्मः शांतनवो हतः स्या-

---

$K_{3.5}$ $D_9$ पुरस्तात्, S (except $G_2$, $G_1$ before corr.) महात्मन् (for समस्ता॰)

19 M om 19$^a$ — $^a$) $K_1$ $Dn_2$ $D_3$ $D_{1.8}$ प्रपतन्, $G_2$ प्रभवन् (for प्रतपन्) $D_1$ रथ॰ (for बल॰) — $^c$) $D_9$ वीरान्, $T_1$ G (except $G_3$) $M_{1.3.4}$ परान् (for वरान्) $Ds_2$ $M_{1.3.4}$ ह्वनिष्ये, $D_7$ ह्वति, $G_4$ हरिष्यन् — $^d$) $D_2$ $G_{2.3}$ $M_{3-5}$ विनेष्यथा, $D_{5-8}$ व्यने(D6 ॰न)श्य(D8 ॰ष्ये)था, $D_9$ व्यनेष्यन्वा, $D_{10}$ Cs व्यपनेष्यथा, Ca d व्यनेष्यथा (as in text) $D_9$ G (except $G_2$) M धार्तराष्ट्रस्य ह्वर्पं, $T_1$ ॰ष्ट्रा सहर्पं (for ॰स्य दर्पम्)

20 $^a$) $K_1$ वर्धयेथा, $D_3$ $T_1$ $G_5$ वर्जयित्वा, $D_9$ धर्प॰. $T_1$ $G_{1.5}$ परस्मिन् (for ॰स्य) — $^b$) $K_1$ जानन्, T $G_1$ $M_2$ निंदा, $G_{3-5}$ दारान्, $M_{1.3-5}$ निंदन् (for निजान्). $K_5$ $D_3$ $D_{1.8.9}$ कामान् (for कस्मात्) $K_1$ कर्शयेथा, $K_{3.5}$ $B_1$ $D_{5.6.8.9}$ कर्पयित्वा, $K_4$ वर्पं॰, S दर्शं॰ ($G_5$ वर्जं॰) T G (except $G_2$) $M_2$ सभायां (for सहायान्) — $^c$) $K_3$ $D_9$ निरूप्य (for निरुष्य) — $^d$) $G_4$ युयुत्सव॰ $K_{3-5}$ कालहीनं, S (except $G_2$) हीनकाले

21 $^a$) $K_4$ B D (except $Dn_2$ $D_1$) $G_2$ $M_{2.5}$ Ca d s अप्राज्ञो $D_9$ वै, Ca d s वा (as in text) — $^b$) $K_{1.3}$ भूतितश्रेय(K3 ॰श्यु)पैति, $K_4$ B D (except $D_1$) भूतिमथो-($K_4$ $Dn_1$ $D_{2-4.7.8.10}$ ॰था)भ्युपैति, $G_2$ ॰पथादपैति, $G_3$ ॰पदाद्व्यपैति, $G_4$ ॰पथा (or ॰पथो) व्यपैति, $M_{1.3-5}$ ॰पथो व्य($M_5$ ॰प्य)पै($M_4$ ॰वं)ति, $M_2$ ॰वथोप्युपैति (for भूतिपथाद्व्य॰) Cs cites भूतिं and उपैति — $^c$) $K_2$ $D_7$ S (except $T_1$) युध्य॰, Cs बुध्य॰ (as in text). $K_2$ -पि धर्म्यं; T $G_{1.3-5}$ -पि धर्मात्; $G_2$ $M_{1.3}$ विधर्मा; $M_{4.5}$ -पि धर्मा (for ऽपि धर्मं) — $^d$) $K_{3-5}$ B D (except $D_3$ $D_{1.9}$) $G_2$ सत्त्वभाद्, Ca d s as in text. $T_2$ om वा $T_2$ सोभि-, $G_3$ नोपि (for सोऽपि) $K_4$ $D_{5.8}$ $T_1$ $G_{2-5}$ भूतेरपैति, $K_5$ $D_3$ ॰रुपते ($Ds_2$ ॰त, $K_5$ ॰ति), Cs as in text

22 $^a$) K $D_{10}$ वर्त॰ (for धीय॰) $G_5$ नाधर्मे ते पार्थ बुद्धिर्न कार्या — $^b$) $K_4$ $D_2$ करोषि (for चकर्थ) — $^c$) $K_{1-3}$ $D_2$ अत्र, $K_{4.5}$ $D_3$ अत, B Dn $D_3$ $D_{3.4.7.10}$ आस्य ($B_1$ अय), $D_{5.6}$ $G_2$ अथो, $D_9$ अन्यद्वा, $T_1$ अस्या, $T_2$ अर्थात्, $G_{4.5}$ अर्था, $M_2$ अध, Cd अद्धा (as in text) $D_1$ तस्कि, T $G_3$ किंचित् (for किं तत्). $K_2$ (*sup lin.* as in text) त्वस्य, $D_{2.7}$ $T_2$ $G_{2.4.5}$ कस्य, $T_1$ तस्य (for यस्य) — $^d$) $K_{1.5}$ $D_1$ प्रजा॰ (for प्रज्ञा॰) $D_1$ च (for कर्म) $K_5$ $D_3$ $G_5$ त्वं (for इदम्)

23 =(var.) B 2. 64. 18 — $^a$) $D_1$ सव्याधिज, Cs as in text $D_1$ कपकं (for कटुक) $K_{1.2}$ तीक्ष्णरोग, $K_3$ तीक्ष्णमुष्ण, $K_{4.5}$ तीक्ष्णरोगि, B D (except $D_{1.2.3}$) शीर्षरोगि ($Dn_1$ $Ds_2$ $D_{7.9}$ ॰गी) (for शीर्षरोग) — $^b$) $D_2$ ॰व्यय, $D_{3.4}$ ॰जुप (for ॰मुप) $B_4$ $Dn_2$ $D_3$ $D_{5-7.10}$ वा (for च) — $^c$) $D_1$ $T_2$ $G_5$ सतामपेय न पिबति ($T_2$ ॰त्य-) सतो. — $^d$) $K_1$m (*sec. m.*) $D_1$ मृत्यु, $G_4$ $M_{3.4}$ मन्युर् (for मन्यु) $D_1$ महाराजमिम प्रशास्य

24 $^a$) $K_{1.2}$ कर्म, $D_2$ $G_2$ को हि (for को नु) $D_{1.2.9}$ S तत्, Cd तं (as in text) $K_1$ कृत्वा कामयेत; $K_2$ कृत्वा ह्यलं वै (for तं कामयेत) — $^b$) $G_4$ एषा (for ते) $D_{2-4.7}$ $G_{2.4}$ नोत ($D_{3.4}$ ॰प-) भोग॰, $T_1$ $G_1$ को नु भोग ($G_1$ ॰गा) (for नोत भोगा) Cd cites उत.

यत्र द्रोणः सहपुत्रो हतः स्यात् ॥ २४
कृपः शल्यः सौमदत्तिर्विकर्णो
विविंशतिः कर्णदुर्योधनौ च ।
एतान्हत्वा कीदृशं तत्सुखं स्या-
द्यद्विन्देयास्तदनुब्रूहि पार्थ ॥ २५
लब्ध्वापीमां पृथिवीं सागरान्तां
जरामृत्यू नैव हि त्वं प्रजह्याः ।
प्रियाप्रिये सुखदुःखे च राज-
न्नेवं विद्वान्नैव युद्धं कुरुष्व ॥ २६
अमात्यानां यदि कामस्य हेतो-
रेवंयुक्तं कर्म चिकीर्षसि त्वम् ।
अपाक्रमेः संप्रदाय स्वमेभ्यो
मा गास्त्वं वै देवयानात्पथोऽद्य ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## २८

युधिष्ठिर उवाच ।
असंशयं संजय सत्यमेत-
द्धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां संजय गर्हयेस्त्वं
यदि धर्मं यद्यधर्मं चरामि ॥ १
यत्राधर्मो धर्मरूपाणि बिभ्र-

C. 5 795
B. 5 28. 2
K. 5. 28. 2

25 [a]) K1 Dn2 D1 8 T2 G2 4 5 सोमदत्तिर्, M8-5 °दत्ती (for सौम°) — B4 is missing from 25[c] up to 5 29 3[c]. — [c]) D9 ईदृशा (for एतान्) — [d]) D7 G4 पार्थां (for पार्थ)

26 B4 missing (cf. v l. 25) — [a]) G3 M2 लब्ध्वा मीमा S (except G2) सागराता धरित्रीं (for पृथिवीं सा°) — [b]) K1 (before corr ) 3-5 D2 8 (by corr ) प्रजह्यात् — [d]) B3 D2 नैव, D8 4 9 जानन्, S (except G2) एतद् (for एव) B (B4 missing) Ds2 D8-7 10 M विद्वन् K1-3 Dn Ds D1 5 6 8 मैव (for नैव) B (B4 missing) Dn D2-9 T G1 2 5 कुरु त्व, Ds D1 G4 °त्त्र (for °ष्व) K4 5 नैच युद्धं विप्र(K5 त्रि)कुर्वति धीरा

27 B4 missing (cf v 1 25) — [a]) T G1 3 M1 3 4 चा यदि (for यदि) — [b]) D1 हि त, G4 कर्तुं (for -युक्त) — [c]) K2 T1 M1.3 5 अपाक्रम , K3 B3 अपाक्रामे , K5 Dn D2-7 9 10 Cd 8 अपक्रामे , D8 Ca अपक्रमे , T2 M2 अपाक्राम (M2 °मत्), G अपक्राम (G3 अपि क्रामा) K3 B (B4 missing) D (except D1 5 9 10) स्व, Ca d स (as in text) K1 2 स्वमेभ्यो, K3 5 त्वमेपा, K4 स्वमेपा, B (B4 missing) D (except D1 3. 4 9) एव तेपा, Ca d स्वमेभ्यो (as in text) Cs cites स्व — [d]) D9 मापन्गास्त्व, T G1.3 4 M1 4 मा वा गास्त्व, G5 मा चापगास्त्व, M2 3 5 मापागास्त्व (for मा गास्त्व वै) D3.4 अधो, D7 त्वयो, G2 पथा (for पथो) K3 तु न°; K4 D2 M अन्यत्, K5 च, B1 3 5 D10 (m as in text) अन्य, B2 नु, D1 3. 4 9 वै (for अद्य)

Colophon missing in B4 — *Sub-parvan* K B1-3. 5 Dn Ds1 D1 2 6-8 10 G1 2 M3 4 संजययान. — *Adhy name* D5 D2 10 संजयवाक्यं, T1 G1 मन्युनिन्दा, M3 4 युद्धनिंदा, M5 युद्धनिंदासम — *Adhy no* (figures, words or both) K1 D7 26, D5 2 S 27, D6 29 — *S'loka no* Dn2 D8 27

## 28

☞ This adhy is missing in B4 (cf v 1 5 27 25)

1 [a]) G4 नित्यम् (for सत्यम्) — [b]) K1 2 धर्म्यं वच , K3 m 3-5 D8 धर्मं पर°, D9 धर्माचार , M2 धर्मतो वर (for धर्मो वर ) M1 (inf lin ) कर्मणो — [c]) G4 गर्हसे, Cs गर्हये° (as in text) M2 गर्हयेया (for °स्त्व) — [d]) B (B4 missing) D (except D1. 2 9) चरेय, Ca d s चरामि (as in text) K1 2 4 D1. 2 G2 Ca d s यद्यधर्मं यदि धर्मं चरामि, K3 धर्मं हित्वा यद्यधर्मं चरामि.

2 K2 *repeats* 2 (with v l.) — [a]) B (B1 m as in text, B4 missing) D (except D1. 2 8) G4 धत्ते, Ca बिभ्रत् (as in text) — [b]) K2 (first time) तथा धर्मो,

C. 5 765
B. 5. 28. 2
K. 5. 28. 2

द्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
तथा धर्मो धारयन्धर्मरूपं
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥ २
एवमेतावापदि लिङ्गमेत-
द्धर्माधर्मौ वृत्तिनित्यौ भजेताम् ।
आद्यं लिङ्गं यस्य तस्य प्रमाण-
मापद्धर्मं संजय तं निबोध ॥ ३
लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत्तत्परीप्सेद्विहीनः ।
प्रकृतिस्थश्चापदि वर्तमान
उभौ गर्ह्यौ भवतः संजयैतौ ॥ ४
अविलोपमिच्छतां ब्राह्मणानां
प्रायश्चित्तं विहितं यद्विधात्रा ।
आपद्यथाकर्मसु वर्तमाना-
न्विकर्मस्थान्संजय गर्हयेत ॥ ५
मनीषिणां तत्त्वविच्छेदनाय
विधीयते सत्सु वृत्तिः सदैव ।
अब्राह्मणाः सन्ति तु ये न वैद्याः
सर्वोच्छेदं साधु मन्येत तेभ्यः ॥ ६
तदर्था नः पितरो ये च पूर्वे

---

D1 कृत्स्नो धर्मो (for धर्म कृत्स्नो) Ca s cite कृत्स्न° and धर्म° — M2 om 2° — c) B (B4 missing) D (except D1-4 9) विप्रद्धर्मो, T2 तदा धर्मो, Cd s तथा धर्मो (as in text) K (K2 both times) D1-4 9 विप्रदधर्मरूप, B (B4 missing) Dn Ds D5-8 10 धर्मरूप तथा च (for धारयन्धर्मरूपं) — d) K2 (second time) प्रविशति (for संप्र°) Ca cites धीरबुद्ध्या

3 a) B (B4 missing) D (except D1 2 9) G1 (by corr ) M1 (inf lin ) तथैव; Cd s एतौ (as in text) K3 m ते मतिस्तत्; Ca. d s लिङ्गमेतत् (as in text) —b) K3 नीतियुक्तौ; K4. 5 D2 G2 नित्ययुक्तौ, B (B4 missing) Dn Ds1 D2-8 10 नित्यवृत्ती, G4 भक्तिनित्यौ, Ca d s वृत्तिनित्यौ (as in text) K5 भजेत्, S भजेते, Ca d s भजेतां (as in text) — c) S आद्या(G1 अर्था)ल्लिंगाद् (G2 M1 inf lin as in text), Ca d s आद्य लिङ्ग (as in text) — d) T1 G1 आपद्धर्म°, Ca d s as in text K1 2 एत; K5 D1 7 तन्; D9 स-, D10 त्वं (for त) M1 (inf lin ) वदंति (for निबोध) — After 3, D2 reads 5cd for the first time, repeating it (marg sec m ) with v l in its proper place

4 a) D1. 9 T1 G1 2 M1 यो न, Ca d s येन (as in text) — b) K1-3 D8 G2 परीप्से(K3 °प्सी)त हीन , K4 D2 T2 G4 °प्सेदहीन , T1 °प्सन्निहीन , Ca. d °प्सेद्वि हीन (for °प्सेद्विहीन ) Cs cites परिप्सेत् — c) K3 प्रकृतिश्चेच्, Ca d s °स्थ (as in text). D2. 4 7 अनापदि, Ca s आपदि (as in text) K5 °मानो, M3. 4 °माना, Ca d s °मान (as in text) K1 2 प्रकृतिस्थौ (K1 °स्थे) चापदि वर्तमानौ — d) M3-5 भवता (for भवत ) T1 G1 4 5 इमौ (for एतौ). K1. 2 उभौ गर्ह्यौ सजयैतौ निबोध.

5 For D2 cf. v 1 3 also. — a) Dn D5-7 °नाशम्, Ca d. s °लोपम् (as in text). K1 M1. 4 इच्छता, Ca. s °तां (as in text) D10 m अनुतापवता (for अविलोपमिच्छता). — b) K1 2 D8 D1 G2 Cd transp विहितं and यद् — c) K स आ(K1 सत्या-; K4 अत्या)पदि कर्मसु; B1 2 Dn2 सपद्यथा(B2 °ता)क°; B3 5 Dn1 D2 (second time) 3-8. 10 सपद्ये(B3 °द्ये)था. क°, D1 संसा ह्यायास्व क°; D2 (first time) असत्यामापदि क°, D9 अनापद्यक°, S आ(G2 ना)पद्येतान् (G4 °पद्वेतो°) क° (for आपद्यथाक°) Ca. s cite आपदि. K1. 5 D2 (first time) °मानो, K3 °माना (for °मानान्) — d) D1 S Cd. s विमार्गस्थान्, D2 (first time) विकर्मस्थ°; Ca विकर्मस्थान् (as in text). K3 गर्हयेनं, K4 B (B4 missing) Dn Ds D2 (second time) 3-6 8 10 °येस्त्वं, D2 (first time) °ये त, D7 (sup. lin as in text) °येस्थ, D9 °यीत, S °येथा° (for °येत) Ca d cite गर्हयेत्, Cs विगर्हये° — After 5, S (except G2) reads 4 29 19 for the first time, all of these MSS. except G5 repeating it in its proper place

6 a) K D (except D1) G2 Ca d s सत्व°; Cap तत्त्व° (as in text) — b) S सत्य(T2 °वें-, G2 °स्व)वृत्ति° (T1 G1. 2 4 °त्त), Cs असत्सुवृ°, Ca d सत्सु वृ° (as in text) — c) S (except G2) अब्रह्मण्याः, Ca d s अब्रा° (as in text) K ये त्व(K1 -त्र)वैद्या., S (except G2) ये न विद्यु (T1 G4 °द्या , G3 °द्यन्), Ca ये न वैद्या (as in text) Cd s cite वैद्या — d) Dn2 D5 6 T1 सर्वोत्सग, D7 °त्सेद, Ca. d s np °च्छेदं (as in text). G2 5 धीर°, Ca d s तेभ्य (as in text)

7 a) K3. 5 B (B4 missing) Dn Ds1 D3-7 10

# ३३

वैशंपायन उवाच ।
द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
विदुरं द्रष्टुमिच्छामि तमिहानय माचिरम् ॥ १
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वा महाराजो महाप्राज्ञ दिदृक्षति ॥ २
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थ मां प्रतिवेदय ॥ ३

द्वाःस्थ उवाच ।
विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ४

धृतराष्ट्र उवाच ।
प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकाल्यो जातु दर्शने ॥ ५

C. 5. 673
B. 5. 33. 5
K. 5. 33. 5

---

Dn1 D3 D1-8.7 10 T2 C3 अभिपद्ये; D6 निपद्ये, D5 निरोध, T1 G अनुपद्ये, Cn प्रपद्ये, Ca d निपद्ये (as in text). K1.2 D8 प्रपद्य, D- नरेन्द्र (for नृसिंह) — [d]) K (K3 missing) D1 समग्र, D7 त्वयोक्त, G3 M यथोक्त (for समेता) — After 30, K4 5 B (B1 missing) D (except D7, Dn2 missing, D1 marg ) T G (except G3) ins

165* धृतराष्ट्र उवाच ।
अनुज्ञातोऽस्यावसथं परेहि
प्रपद्यस्व शयनं सूतपुत्र ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं त्वयोक्तम् ।

[ (L. 1) K4 चावसथ, K5 D1 T1 G1 3 स्याव°, D2 त्वाव°, D9 G2 4 आव° (for स्याव°) K4 B (B1 missing) D10 C3 n परेहि, K5 D1.2 परेत्य, D3 T1 G1 4 5 समेत्य, G2 प्रविश्य (for परेहि) — (L. 2) K4 D6.8 T2 सुत प्रपद्यस्व, K5 D5 D1-4 9 10 G1 2 4 सुत प्रपद्य (D9 °द्ये), T1 प्रपद्ये, G6 सुत प्रपद्ये (for प्रपद्यस्व) Cd s cite प्रपद्य (then reading probably समपद्य) — (L. 4) K5 B. Dn1 D5 D6 8 T2 G2 समेता (cf. 30[d]), B2 3 यथावद्, D8 समग्र, G1.4 5 यथोक्त (for त्वयोक्तम्) ]

Colophon missing in K3 Dn2; B1 om. it — *Sub-parvan* K1 2 4 5 B (B1 om ) D5 D1 2 5-7 9 T2 G1 2 M1 2 सञ्जययान; to it K5 D1 2 5 G1 2 M1.2 add समाप्त — *Adhy name* D3 सञ्जयहस्तिनापुरगमन, D10 सञ्जयागमनं, T1 G1 M सञ्जयप्रत्यागमन — *Adhy no* (figures, words or both) K1 D5 7 31, D6 (sec m ) 29, D8 S 32 (M 33) — *S'loka no* Dn1 32, D8 33

33

☞ This adhy is missing in K3 (cf v 1 5 32 15), 1-92[a] is missing in B1 (cf v 1 5 30 37), and 1-34 is missing in Dn2 (cf. v 1 5 32 30) K3 and B1 are mostly ignored in this adhy

1 [a]) Most MSS द्वास्थ G3-5 चाह, M3 4 स्वाह (for प्राह)

2 Dn2 missing (cf v 1 1) — [a]) T1 G3-5 प्रेषितो (for प्रहितो) — [b]) T1 G1 द्वास्थ, G5 सूत (for दूत) — [c]) D1 9 त्वा (for त्वा) K2 D9 T1 G1 3 5 M °प्राज्ञ (D9 M1 2 5 °प्राज्ञो), G4 °बाहो (for °राजो) — [d]) K2 5 m G3-5 M महाराजो, K1 D1 2.4 7 °प्रज्ञो, K5 T2 °प्राज्ञो, D5 D6 8 10 °प्रज्ञ, T1 G1 धृतराष्ट्रो K1 4 5 B2 3 D1 9 G1 2.5 दिदृक्षते

3 Dn2 missing (cf. v 1 1) — [b]) K2 Dn1 D3 4 7 9 राजनिकेतन, G3 राज्ञो निवे° — [d]) B (B1 missing) D3 9 G2 M2 द्वास्थ G1 मा (for मां) K1 प्रतिबोधय, B3 D5 6 T2 प्रतिपादय, D3 4 7-9 सन्निवेदय, M5 प्रतिवेदाय, Ca d as in text G3 प्राप्त प्रतिनिवेदय

4 Dn2 missing (cf v 1 1) — [a]) G3 महाप्राज्ञ (for अनुप्राप्तो) — [d]) D3 G2 4 करोमि (for °तु)

5 Dn2 missing (cf v 1 1) — [a]) D (except D1 2 6 8 9, Dn2 missing) T G5 महाप्रज्ञ — [d]) K1.4 5 B2.4 5 D (except D5, Dn2 missing) T2 नाकल्पो, K2 m नाममयो, G3 नाकार्यो, G4 न कालो, Ca नाकाल्यो (as in text) Cd cites अकाल्य

6 Dn2 missing (cf. v 1 1) — [c]) K1.4 5 B (B1 missing) D (except D5, Dn2 missing) T2 G5 अकल्पो (D1 °काल्य); G3 अकार्यो (for अकाल्यो) — [d]) S (except T2 G2 5) महाराजो (for जातु राजा) B (B1

C. 5. 976
B. 5. 33. 6
K. 5. 31. 6

द्वाःस्थ उवाच ।

प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः ।
न हि ते दर्शनेऽकाल्यो जातु राजा ब्रवीति माम् ॥ ६

वैशंपायन उवाच ।

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ७
विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ८

धृतराष्ट्र उवाच ।

संजयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १०
जाग्रतो दह्यमानस्य श्रेयो यदिह पश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ११
यतः प्राप्तः संजयः पाण्डवेभ्यो
न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि
किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता ॥ १२

विदुर उवाच ।

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १३
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिन्न परवित्तेषु गृध्यन्विपरितप्यसे ॥ १४

---

missing) D (Dn2 missing) T2 अब्रवीद्धि (for ब्रवीति) G2 अब्रवीत्पुन॰ (for ब्रवीति माम्) — After 6, G8 reads 13

7 Dn2 missing (cf. v. l. 1). G8 om 7–8 — ᵇ) G2 प्राजलिं वीरं (for प्राञ्जलिर्वाक्य) — For 7, K (K8 missing) subst

166* एवमुक्त प्रविश्याथ क्षत्ता राजानमब्रवीत् ।

8 Dn2 missing (cf v l 1), G8 om 8 (cf v. l 7) Before 8, G6 ins. विदुर॰ — ᵃ) K5 D5.10 महाप्रज्ञ — ᶜ) K2 किंचित्तु, K4 Dn1 D2 किंचिच्च, B8 किंचिन्नु (for किंचन) D8 4 9 यदि (D9 °च) किंचिन्मया कार्यं, D6 वचनं तव कर्तव्य. — ᵈ) B8 किं करोमि (for अयमस्मि) — After 8, T1 G1 4 read 13–14.

9 Dn2 missing (cf v l 1) — ᵇ) D8 T1 G5 तु, G4 स (for च) D9 G4 मा (for मां)

10 Dn2 missing (cf v l. 1). — ᵃ) G2 अथ (for तस्य) K4 अथ, B3 D1 2 G2 तत्, G4 5 अस्य (for अद्य) B8 कुरुराजस्य, G8 °सिंहस्य — ᶜ) B8 D1 2 S (except T2 G1) दहन्मे (B8 °हते, G5 °हते) सर्वगात्राणि

11 Dn2 missing (cf. v. l 1) — ᵇ) K5 B (B1 missing) D (Dn2 missing) यदनु॰, G1 यद्यत्र (for यदिह) — ᶜ) K4 च हि (for ब्रूहि) K (K8 missing) हित (for हि न). — ᵈ) D1 2 9 G8 शुचि॰, G2 यत (for ह्यसि) M अर्थधर्मविशारद.

12 Dn2 missing (cf v l 1) — ᶜ) G5 प्रयाति (for गतानि) — ᵈ) K1 2 5 अत्र (for एव) B8 5 मेद्य, G2 मेत्र, G5 मम, M च मे (for हि मे) K2 अस्ति, D2 9 अत्र, D6 च, G5 इह (for अद्य) K1 4 5 (*sup lin.*) B8 5 D1 8 4 7.8 G2 M Cn प्रचिंता, K5 प्रशंसा; T1 विचिंता (for ऽद्य चिन्ता) — After 12, S (except T2) ins

167* तन्मे ब्रूहि विदुर सर्वं यथाव-
त्सान्त्वं तस्मै सर्वमजातशत्रोः ।
यथा च नस्तात हितं भवेत
प्राज्ञाश्च सर्वे सुखिनो भवेयु॰ ।

[ (L. 1) T1 G (except G2) त्व (for सर्वं). — (L. 2) T1 G M4 (*sup lin.*) मनीषित (for सान्त्व तस्मै) — (L. 3) T1 G1 5 भवेच्च, G2–4 भवेत्तत् (for भवेत) — (L. 4) T1 G प्रजाश्च सर्वा (G1 m तन्मे) सुखिता भवेयु ]

13 Dn2 missing (cf. v l 1). D6 om 13–14, G3 om 13 T1 G1 4 read 13 and 14 after 8, G8 reads 13 after 6. — ᶜ) N (except B8; B1 Dn2 missing, D6 om) चौर (for चोर) Cn cites हृतस्व॰, कामी, चौरम् — After 13, G3 reads 15ᵃᵇ

14 Dn2 missing (cf v l 1) D6 om 14 (cf. v. l 13), G8 om 14 For T1 G1 4 cf v. l. 13 — ᵇ) G4 M1 3.4 अस्पृ॰ (for न स्पृ॰) — ᶜ) B (B1 missing) D (except D1 9, Dn2 missing, D6 om) T2 G3 च (for न) — ᵈ) G1.4 M1 (*sup lin* as in text) 2 4 गृध्नन् (for गृध्यन्) K5 B (B1 missing) D (except D1 2 9, Dn2 missing, D6 om) न परितप्य(D5 D8 before corr °प्स्य)से (for विपरि॰)

15 Dn2 missing (cf v. l. 1). G3 reads 15ᵃᵇ after 13. — ᵃ) T1 G अहं (for ते) K4 सर्वं, T1 G M

धृतराष्ट्र उवाच ।
श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १५
विदुर उवाच ।
निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ १६
क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ १७
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ १८
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ १९ C. 5. 994 B. 5. 33. 19 K. 5. 34. 20

---

सत्त (G2 स्तत्त) (for धर्म्यं) — b) K (K3 missing) D1. 2 T1 G1 3 नि॰ (for नै॰) — c) K1 2 4 वै (for हि) — d) T1 G1. 3 प्राज्ञसत्तम..

16 Dn2 missing (cf v 1 1) — After the ref., K (K3 missing) D1. 2 7 8 S (except T2) ins

168* राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत् ।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ।
विपरीततरश्च त्वं भागधेयेन संमतः ।
अर्चिषा प्रज्ञया चैव धर्मात्मा धर्मकोविदः ।
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् । [5]
गुरुत्वं त्वयि संप्रेक्ष्य बहून्क्लेशांस्तितिक्षते ।
दुर्योधने सौबलेये कर्णे दुःशासने तथा ।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ।
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।

[ (L. 1) D2 राजन्, G2–3 M राज (for राजा) K4 D7 अपि नो (for अपि यो) — (L 2) K2 G5 प्रेष्य, Cn प्रेष्य (as above) T1 G M प्रेषिता (G3 प्रेक्षिता), Cn प्रेषित (as above) M3–5 सोऽत्र (for चैव) — (L 3) D1 नत्र, D2 त्व तु, D7 त्व च (for च त्व) S (except T2) विपरीत-पुरुष (T1 G1–3 °ष)स्त्व Cn explains both भागधेयेन (as above) and भागधेये न S (except T2) स्थित (for संमत॰) — (L. 4) K4 D7 Cn अर्चिषा प्रज्ञयाचैव S (except T2) धन्वया, Cn धर्मात्मा (as above) — (L 5) K1 2 D1 सत्यात्सत्य॰, T1 G2–3 M °क्रम — (L 6) K2 D7 गुरुत्वात् K2. 4 D2 8 M तितिक्षति, Cn as above — (L. 7) D1. 2 सौबले च, S (except T2) दुःशासने (for सौबलेये) S (except T2) राजन्कर्णे च (M °र्णेषु) सौबले — (L. 8) S (except T2 M2) आत्मनो (for कथं त्व) D2 शान्तिम् (for भूतिम्) — (L 9) S (except T2 M2) धर्मेषु (for समा॰) K1. 2 D1 7 8 आत्मज्ञानमना॰. — Of this passage, lines 1–6 are an anticipation (with variation) of 5 34 81–83, and, similarly, lines 7–8, of 5 35 66 The Bombay ed of the comm of Nil contains a comment on this passage with the remark क्वचित्पुस्तकान्तरे स्थितस्य मूलस्य व्याख्या, but this is an *interpolation* made in the *comm* by some modern Pandit! The MSS of Cn ignore this portion of the comment altogether The passage is unnoticed in Ca d s! ] — After the above, K1 2 D2 7 read $17^{cd}$ (*repeating* it in its proper place), while S (except T2) cont.

169* वाक्संयमश्च दानं च नैतान्येतानि कुर्वतः ।
एकस्माद्वृक्षाद्यज्ञपात्राणि राज-
न्स्रुक्च द्रोणी चोदनी पीडनी च ।
एवं राजन्ब्रुवतो मे निबोध
एकस्मात्पुरुषाज्जायतेऽसच्च सच्च ।

[ (L. 2) M तस्मात् (for राजन्) — (L. 3) T1 G5 पेषणी, G1 चोदनी, G2 चोटिनी, G3 4 वेपनी (for चोदनी). — (L 5) G1 3 4 दे, G2 च (for पुरुषात्) ]

— c) K2 T1 G2–5 आस्तिक श्रद्दधानश्च

17 Dn2 missing (cf v 1 1) — a) D6 अमर्ष॰ (for हर्ष॰) D6 दम्भ, C5 दर्प (as in text) — b) K1 2 C5 अमान्यमानिता — K1. 2 D2 7 read $17^{cd}$ for the first time after 168* (cf v. l. 16), *repeating* it here. — c) K1 (before corr as in text) Dn1 D3. 4 9 T2 G (except G2) अर्था (for अर्थान्) — d) = $18^d$, $19^d$, $20^d$ etc — After 17, T1 G1 3 M read 20, while D7 ins

170* योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ।

[ = (var ) 1. 68 26, = (var ) Manu 4 255 ]

18 Dn2 missing (cf v 1 1) K1 om 18–20, D6 G4 om 18–19, B2 om 18 T1 G1. 3 M transp 18 and 19 — a) K2 4 5 मन्त्र (for कृत्य) M विंदति (for जानन्ति) — b) D2 मित्र (for मन्त्र) K2 4 5 m वाह्याश्चाभ्यन्तराश्च ये — c) K2 अपि- (for अस्य)

19 Dn2 missing (cf. v 1 1) K1 D6 9 G2 4 om. 19 (cf v 1 18), G5 om. 19–26 T1 G1 3 M transp 18 and 19 — a) K2 D8 निघ्नति; T2 विंदति — c) T1 G2 M च (for वा)

20 Dn2 missing (cf v 1. 1) K1 G3 om 20

C. 5. 990 B. 5. 23. 20 K. 5. 33. 27

यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ २०
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यन्ते पण्डिता भरतर्षभ ॥ २१
क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २२
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २३
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ २४
आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ २५
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ २६
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ २७
प्रवृत्तवाक्चित्रकथ ऊहवान्प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च स वै पण्डित उच्यते ॥ २८

---

(cf v l 18, 19). T1 G1 5 M read 20 after 17, G2, after 22 — a) K4 Dn1 D7 सचारिणी, all comm ससा° (as in text) — b) G2 धर्मार्थों वशमुच्यते — c) D7 8 कामार्थं न, G6 कामाक्षार्थं — After 20, D7 ins.

171* कामादर्थं वृणीते यो मोक्षादर्थं स विन्दति ।
राजनीतिं समीक्ष्याथ स वै पण्डित उच्यते ।

21 Dn2 missing (cf v. l. 1). G3 om. 21 (cf v. l. 19), G4 om 21^ab — b) K2 हि कुर्वते; D5 च कुर्वति, G2 M उपकुर्वते — d) D9 G2 पुरुष° (for भरत°). B (B1 missing) Dn1 D5 D8-8 10 T2 नरा॰ पडितबुद्धय (B8 °वृत्तय, D82 °मानिन)

22 Dn2 missing (cf v l 1) K2 D10 G3 om 22 (cf v l. 19) — b) K1 D1 चार्थान् (for चार्थं) Cs cites अर्थं (as in text) D2-6 T2 (by corr.) च, Cs न (as in text) D1 M काम, D8 (sup lin as in text) 4 5, 9 G6 कामान्, Cs as in text. — c) K4 असस्पृष्ट, T G6 सपृष्ट, G4 ससृष्ट, Ca d s असपृष्ट. (as in text) K1 B2, 8 Dn1 D5 D8-6 8 T2 ह्युपयुक्ते, D1 व्यपयुक्ते (sic), D9 नोपयुक्ते, Cs उप°; Cd n व्युप° (as in text) K1, 4, 5 (m as in text) परस्य, D8, 4 6 T G4 5 परार्थं, Cd s परार्थे (as in text) G1 2 M न ससृष्टोप्युपयुक्ते परार्थं. — d) D2 प्रथित (for प्रथम) — After 22, G2 reads 20.

23 = (var) Hitopades'a (ed. Peterson) 1. 127 — Dn2 missing (cf. v l 1) G3 om. 23 (cf v. l. 19) — c) D3 4 T1 G (G3 om) न वि- (for च न) — d) D5 °मानिन (for °बुद्धय) K1 पडिता भरतर्षभ

24 Dn2 missing (cf v l. 1) G3 om 24 (cf. v l 19). — a) K2 S (except T2 G2, G3 om) प्रकुरुते, Ca d प्रक्रमते (as in text) — b) G6 नांतर्विशति; Ca d s as in text K4 G6 कर्मणा, Cs as in text

25 Dn2 missing (cf v l 1) G3 om 25 (cf v l. 19) — a) K4 आर्ये (for आर्य-) K4 रस्यति, D5 सज्यते — b) B3 D5 D9 G6 M4 भूति(D9 °तिं)कर्मणि B3 युज्यते (for कुर्वते) — c) D5 हेतु (for हित). T1 G1, 5 M transp च and न. T G1 4 5 अस्यसूयते; M अप्यसूयते — d) D9 S (except T2 G2, G3 om.) पुरुषर्षभ (D9 °भाः)

26 Dn2 missing (cf v l. 1). B2 G3 om. 26 (cf. v. l. 19) — a) K (K8 missing) आत्मसन्माने. S (except T2 G2, G3 om) न प्रहृष्यति समाने — b) K1 D3 4 M2 अपमानेन (K1 °ने च); K2 4, 5 D8 G4 अवमाने च (for अवमानेन) K (K8 missing) कुप्यति (for तप्यते). D9 न तप्यते परोदये — c) K4 D1 G1 4 गागा (for गाङ्गो)

27 Dn2 missing (cf v l 1). B4 G3 om 27-28. M transp 27 and 28 — a) S (except T2, G3 om) मनोज्ञ°, Cs तत्त्वज्ञ (as in text) Cn cites तत्त्व — d) S (except T2, G3 om) स वै (for नरः) — After 27, T1 G1 reads 39

28 Dn2 missing (cf. v l 1). B4 G3 8 om 28 (cf. v. l 27). M transp. 27 and 28 — ab) K1 B2 5 D5 ऊहावान्; D8 ज्ञानवान्; Ca ऊह° (as in text). Cd n s cite ऊह D9 प्रवृत्तिमाक्षिमित्तज्ञो शुद्धतामनुभाववान् — c) S (except T2, G3 8 om) शुद्धवाक्यस्य (G1 4 °श्च) (for आशु ग्रन्थस्य) K1 D2-4 8 य (for च) — d) K3 4 5 B (B1 missing) Dn1 D5 D1 6-7 9 10 T1 य स; D8 स च (for स वै)

29 Dn2 missing (cf. v. l. 1). Dn1 om 29 — a) D3 4 शास्त्र, Ca. d. s श्रुत (as in text) K1 चैव (for यस्य) — b) D2 यस्य (for चैव) — d) D8 D9

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ २९

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३०

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३१

अकामान्कामयति यः कामयानान्परिद्विषन् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३२

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३३

संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ३४

अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
विश्वसत्यप्रमत्तेषु मूढचेता नराधमः ॥ ३५

परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशः सन्स च मूढतमो नरः ॥ ३६

आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ३७

अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ३८

C. 5 1009
B. 5. 33. 29
K. 5. 33. 47

---

लभेत्तु (for लभेत) — After 29, G3 4 M1 read 39

31 Dn2 missing (cf. v l 1) — [a]) Ca स्वमन्न (for स्वमर्थं) D2 सं- (for य) — [b]) Ca परान्न, Cd.s परार्थं (as in text) ✻Ca परार्थमिति अपस्पक्।✻ D1 अनुधावति; G4 उपतिष्ठति — [d]) T1 G1.3 स (for च) T1 G1 इहोच्यते, G3 प्रकीर्त्यते (for स उच्यते) K1 2 4 तमाहुर्मूढलक्षण; D2 य स मूढतमो नर — After 31, D3 ins

172* य प्राप्य मानुषं जन्म मोक्षद्वारमपावृतम् ।
गृहेषु सज्जते मूढस्तमाहुर्मूढचेतसं विदुः ।

On the other hand K4 ins 173* after 31

32 Dn2 missing (cf. v l 1) K4 om 32–34 — [a]) G1 M1.2.4 अकामा, Ca as in text G3 य कामयते (for कामयति य) — [b]) G3 4 M1.2.4 कामयानां K3 B (B1 missing) D (except D1.2) T2 G2.3 परित्यजेत् (G3 °जन्) (for परिद्विषन्) — T2 om. 32[d]–34[c] — [d]) =33[d], 38[d] K1 2 5 °लक्षण (for °चेतसम्)

33 Dn2 missing (cf. v l. 1) K4 T2 om. 33 (cf. v l 32) K2 reads 33 after 35 — 33[ab] = Pañcatantra (ed. Kosegarten) 3 231[ab] — [b]) Dn1 द्वेष्टि हिनस्ति च क्रमात् — [d]) K1 2 5 D8 मूढलक्षणं

34 Dn2 missing (cf. v l 1) K4 om. 34 (cf. v l. 32), T2 om. 34[abc] — [a]) Ca cites सेव्यानि — [b]) K2 D8 Ca विचिकित्सति — [c]) D9 क्षिप्रार्था, G5 क्षिप्रस्य, Cd s as in text. — [d]) K1.2 तमाहुर्मूढलक्षणं; S (except T2 G2) मूढो भरतसत्तम — B (B1 missing) D (except D1, Dn2 missing) T2 ins. after 34 K4 (which om. 32–34) ins after 31

173* श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढलक्षणम् ।

[ (L. 1) D2 नो दद्यात् (for न ददाति), and देवतांश्च (for दैव°) D2 अपि, D3.4 च (for न) D2-4 न, T2 वा (for च) — (L 2) D2-5 8 9 T2 भजते (for लभते) Ds2 D2 10 मूढचेतसं (D2 °न). ]

35 35[ab] =(var) Hitopades'a 2 45 — Dn2 resumes! — [a]) G3 4 M सम्प्रविशेत् (for प्रविशति). — [b]) Ds2 प्रविष्टो (for अपृष्टो). — [c]) K1 D2 T1 G5 विश्वसिति T1 G M अप्रज्ञातेषु, Ca d अप्रमत्तेषु (as in text) B (B1 missing) Dn D3 D8-10 T2 अविश्वस्ते विश्वसिति (Ds1 D8 °सति; T2 °सीत), D1 विश्वसेद्य प्रमत्तेषु — [d]) K2 नराधिप (for °धम) — After 35, K2 reads 33

36 [a]) K1 2 4 D1 6 8 G2 परान्, Dn2 पुत्र (for पर). — [c]) D1 यस्तु, D8 यच्च K1.2 कुप्यति (for क्रुध्य°) B (B1 missing) D (except D1-4 8) T2 अनीशान, G3 अशक्त सन्, M नीच सन् (for अनीश सन्) — [d]) D1 वै, G4 तु (for च) K1.4 मूढ° सदा, T1 G (except G2) मूढतर D8.4 नृप (for नर) K2 मूढचेता नराधिप

37 [a]) G5 बच (for बल) D8 अज्ञात्वा, G5 आस्थाय (for अज्ञाय) — [b]) Dn1 Ds D3 4 8 T G (except G3) M5 °परिवर्जित — [c]) D1 वै कामं, Ca d s नैष्कर्म्यात् (as in text) S (except T2 G2) अमात्य कर्म य कुर्यात् — [d]) D7 स (for इह)

38 G2 om 38–39 — [a]) D3 4 G3 अशिष्यान्; Ca d अशिष्यं (as in text) — [b]) D1 न (for च) D1 शिष्य, Ca d s शून्य (as in text) T1.2 (before corr as in text) G (G2 om) M1 (*sup lin* as in text) यश्च (G4 न च) शिष्यान् (G4.6 M1 °ष्य) न शास्ति च (T2

C. 5. 1010
B. 5. 3. 40
K. 5. 33. 37

अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ ३९
एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ४०
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ४१
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ४२
एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥ ४३
एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविस्रवः ॥ ४४
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ४५
एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ४६
एकः क्षमावतां दोषो द्वितीयो नोपलभ्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ४७
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा दृष्टिरहिंसैका सुखावहा ॥ ४८

---

शासते) — $^c$) Dn1 कमर्थं, Dn2 कदर्पं, G5 कातर्यं, all comm कदर्यं (as in text) Ds2 असते (for भजते). K2 Ds D9 T1 G (G2 om) तु (for च) — K4 om from 38$^d$ up to वासश्च in 40$^b$ — $^d$) G5 विदुर् (for आहुर्) K1 2 मूढलक्षणं, D8 मूढचेतनं

39 K4 G2 om 39 (cf v l 38). T1 G1 read 39 after 27, G3 4 M1, after 29 — $^b$) K2 D1 2 8 T G1 4 च (for वा) — $^d$) G5 य· पंडित इहोच्यते

40 K4 om up to वासश्च (cf v l. 38) — $^b$) K2 5 (*sup lin* as in text) धत्ते, Ca वस्ते (as in text) K1 सु- (for च) — $^c$) K1 अस° (for योऽस°) G5 Ca भूते° (for भृत्ये°) — $^d$) K2 (m as in text) पुमान्, G3 स्मृत (for तत )

41 $^b$) D9 G3-5 M1 8 5 महाजना , Ca as in text. — $^c$) S (except T2 G1 2) तत्र मुच्यते (T1 लुप्यंते), Ca विप्र° (as in text) — $^d$) K2 B2 पापेन, Ca दोषेण (as in text)

42 =(var ) Pañcatantra 1 219, =(var ) Śārngadharapaddhati 1355, =(var ) Śukasaptati (*text simpl* ), ed R Schmidt (Leipzig 1893), p 101 — $^a$) G5 द्वि (for न) — $^b$) G2 धनुर्भृता, G3 M (except M1) महेषुणा — $^d$) D2 हंति (for हन्याद्)

43 D6 om 43. G1 transp 43 and 44 — $^a$) S (except T2) द्वौ, Ca d s द्वे (as in text) — $^b$) K1.2 4 Dn1 D1-4 7 8 G5 वशीकुरु, Ca वशे कुरु (as in text) — $^c$) G1 हित्वा, Ca d जित्वा (as in text) B1 D2 T विजित्वा, Ca विदि° (as in text)

44 G1 transp 43 and 44 — $^a$) T1 G विषधरो — $^b$) K2 शिवेन (for शस्त्रेण), and (before corr ) एकेन (for एकश्च) — $^c$) Ds D9 °राज्यं (for °राष्ट्र) — $^d$) K1 5 (orig ) मन्त्रनिश्रव , K2 4.5 (*inf lin* ) °निश्चय°, B (B1 missing) Dn D2-7 10 T2 (before corr as in text) G2 Ca s °विप्लव.; D1 °निस्रवः, D8 °विश्रव°, T1 °विश्रवं.

45 =(var.) Pañcatantra 5 88 — $^b$) D1-1.7 स्वार्थान्, T1 G1-4 चार्थं, G5 शास्त्र (for चार्थान्). — $^d$) S (mostly) जाग्रियात्

46 $^{ab}$) D1 अद्वितीयस्य (for °तीय तद्) K1 D1 transp. तत् and यत् K4 Dn1 Ds D9 °बुध्यते, Ca.d as in text. — $^c$) T1 G1 सयानं; G3 सधान (for सोपान)

47 =(var.) B 12. 160. 34 — $^a$) G3 क्षमावतो — $^b$) K (K3 missing) B2 3 5 Dn Ds D2-10 T2 G1 उपपद्यते, D1 एव लभ्यते (for °लभ्यते). — After 47, N (K3 B1 missing) T2 G1.2 ins

174* सोऽस्य दोषो न मन्तव्य क्षमा हि परम बलम् ।

[ K (K3 missing) D1 G3 अपि (for अस्य). D6 6 T1 धन (for बलम्) G2 क्षमया हि परं बलम् ]

D2 (marg ) 3 4 7 10 T2 G1 cont .

175* क्षमा गुणो ह्यशक्तानां शक्तानां भूषण क्षमा ।
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्ग करे यस्य किं करिष्यति दुर्जन· ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।

[ (L 3) D10 transp किं करिष्यति and दुर्जन ]

D2 (marg ) 3.4 7 10 (marg ) T2 G1 cont K (K3 missing) B (B1 missing) Dn Ds D1.5 6 8 9 G2 ins after 174*

176* अक्षमावान्पर दोषैरात्मानं चैव योजयेत् ।

[ Noticed in Ca d s! — (L 1) K (K3 missing) B2 4 D2-4 G1 2 चापि, D1 अपि (for चैव) G2 वर्जं° (for योज°) ]

द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ४९
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन्परुषं किंचिदसतो नार्थयंस्तथा ॥ ५०
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ ५१
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ५२
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ५३
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ५४
त्रयो न्याया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ५५ C. 5. 1032 B. 5. 33. 62 K. 5. 33. 69

---

48 c) B1 Dn D5 D3-7 9 10 T2 तुष्टि, D8 T1 G (except G2) M तुष्टि° (for दृष्टि.)

49 =(var) C 2 1958, 12 665, 2049, 13 2180 — b) D1 G1 5 M (except M2) सर्पौ Dn1 D1 S (except T2 G2) बिलशयाविव, D7 °शयानि च — c) K3 om. च K4 विरोद्धत, B8 अवियोद्धार, B5 D52 D6-7 9 S (except T1) अप्ययोद्धार; D1 अप्यरुधानं (for अविरोद्धार) — After 49, D2 ins 180*, followed by 178* (cf. v. l. 54, 52) On the other hand, T1 G1 4.5 ins after 49

177* पृथिव्या सागरान्तायां द्वाविमौ पुरुषाधमौ ।,
followed by line 2 of 179* (cf. v l. 52)

50 b) K2 5 Dn1 D7 विराजते, D9 10 [S]धिरोचते, S (except T2 G2) महीयते, Cd s विरोचते (as in text) — c) T1 G (except G2) M न ब्रूयात्, T2 (before corr as in text) नाब्रुवन् (for अब्रुवन्) Dn1 D1 10 कचित् (for किं°) — d) K1 B2.4.5 Dn D51 D5 6 9 10 T2 [S]नर्चयंस्तथा, K4 B8 नार्चयस्तथा, K5 D8 4 7 8 नाभ्र-यंस्तथा, D2 G2 [S]नर्थयंस्तथा, T1 G1.3-5 नार्थयेत च, M नार्थयीत च

51 d) D1 S (except G2, T2 by corr) मूर्खा (D1 लोका) पूजितपूजका Cd cites लोक — After 51, D2 G2 ins 179* (cf. v l. 52)

52 B1 om 52 — b) K (K3 missing) शारीरस्याव-शोष(K1 °पि)णौ, B (except B3) Dn1 D2-4.6 T G1 M1 (*sup lin*) Cs °परिशोषिणौ, D5 G2 °परिशोषकौ — cd) M1 (*sup lin*) 2-4 both times यत् (for य) — K2 4 5 D8 10 ins after 52 K1, after 54 D2 7, after 180*

178* द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हत ।

[ =(var) Pañcatantra 1 345 — (L. 1) K5 D10 पुरुषव्याघ्र (for पुरुषौ लोके) D8 °नेदकौ (for °भेदिनौ) — (L. 2) D2 (marg *sec m*) स्वामिना संप्रयुक्तश्च ]

After the above, K4 D10 ins 180* (cf v l 54) — K2 D10 ins after 53 K4, after 180* K5 D8, after 178* Dn D8-7 T2, after 52 D2 G2 after 51 T1 G1 4.5 (all four om line 1), after 49

179* द्वाविमौ न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भ कार्यवांश्चैव भिक्षुक ।

[ (L 1) Dn द्वावेव (for द्वाविमौ) — (L 2) T1 G4 5 वै (for च) T1 G4.5 सारम्भ (for कार्यवान्). D8 अथ (for एव) K2 कार्यारम्भश्च भिक्षुक ]

— After the above, K5 D8 ins 180*

53 a) G5 लोके (for राजन्) — b) D1 सर्वस्य (for स्वर्ग°) — d) K5 M4 प्रताप° (for प्रदान°) — After 53, K2 D10 ins 179*

54 =(var) C 12 798 — a) T1 G5 M1 (*sup lin*) न्यायार्जितस्य K1.2 D2 6 T1 G1.5 M1 (*sup lin*) वित्तस्य — b) K2 विज्ञेयौ (for बोद्धव्यौ) D1 T1 G1 5 व्यति° (for अति°) — After 54, K1 ins 178* — K2 Dn D8-7 T2 ins after 54 K4 D10, after 178*. K5 D8, after 179* D2, after 49

180* द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढा शिलाम् ।
धनवन्तमदातार दरिद्र चातपस्विनम् ।

[ (L. 1) Dn1 D5-7 T2 विनिक्षेप्यौ (for निवे°) K2 4.5 D8 द्वावेवाप्सु प्रवेष्ट°, D2 द्वाविमावप्सु निक्षेप्यौ (for the prior half) K2 4 D8 कण्ठे, D5 6 गाढ (for गले) D5 6 गले (for दृढा) — (L 2) K4 D8-8 7 T2 धनिन चाप्यदातार-Cn cites अप्रदातार ]

— After the above, D2 7 ins 178*

55 a) D2 अन्यो, Cs np त्रयो (as in text) K5 B8 D..6 T2 Cn उपाया ; D2 न्याय°, Cd.s np न्याया (as in text) — b) K2 किल भारत (for भरत°) — d) K1 तत्व°, K2 4 D2 G2 Cd.s वृत्त°, D1 वृत्ति°, D8.4 7 G1.8 5 M धर्म° (for वेद°)

56 =(var) Hitopades'a 2 63, =(var) Śārṅ-

C. 5. 1093 B. 5. 33. 63 K. 5. 33. 70

त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ५६
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ५७
चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ ५८
चत्वारि ते तात गृहे वसन्तु
श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥ ५९
चत्वार्याह महाराज सद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ६०
देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ६१
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ६२
पञ्चैव पूजयल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ६३

---

gadharap 1366. — c) K2 यथावृत्त (for यथावत्तान्)

57 =1 77 22, =(var.) Manu 8 416 — b) D1 भार्या दासास्तथा सुता — d) D1 S (except T1 G2) एते (for ते) — After 57, N (except K1 2. 5 D1, K8 B1 missing) T ins

181* हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ।
भक्तं च भजमानं च तवास्मीति च वादिनम् । [5]
त्रीनेतान्शरणं प्राप्तान्विषमेऽपि न संत्यजेत् ।
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ।

[(L 1) B2 4 5 D2 4 7 8 10 °भिमर्षणं, Ds2 °भिदर्शनं — (L 2) K4 D2 सुहृदां च, D3 4 शुश्रूषोश्च, T2 (by corr.) निहितस्य (for सुहृदश्च) B2 4 Ds D5 6 8–10 T2 भयप्रदा (for क्षया°) — (L 3–4) = Bhagavadgītā (Vulg.) 16 21 K4 D3 4 एनत् (for इदं) — After line 4, T1 reads 58 — K4 B5 Dn T1 read lines 5–6 after line 8 — (L 5–6) Om. (hapl.) in B1 D2 T1 विषमानपि न त्यजेत्, D3 4 °मेष्वपि न त्यजेत् — (L 8) Dn1 n2 (before corr.) D3 4 7 कृत्वा, Cn कृच्छ्रात् (as above)]

58 T1 reads 58 after line 4 of 181* — a) K3 4 अपि; S (except T2 G2 M5) हि (for तु) — b) K1 2 5 D2 9 विंद्यात्, Dn1 D2–4 जह्यात्, M4 (inf lin, as in text) विद्वान् (for विद्यात्) — cd) D1 transp अल्पप्रज्ञै° and न दीर्घसूत्रै° D1 प्रकुर्यात् (for न कुर्यात्) B2 Ds1 (sup lin.) Cn s रभसैं, Cd np sp अलसैं (as in text). K1 Cd ap np अशनै°, Ds D8 9 अयलै°, Ca. s चारणै° (as in text).

59 a) S (except T2) चत्वारस् (for चत्वारि) — b) D5 6 श्रेय° (for श्रिया) K1 2 4 D2 G2 4. 5 M1 अभियुक्तस्य (K2 m अवियुक्तस्य), M2–5 Cd °भूतस्य (for °जुष्टस्य) K1 मनुष्यधर्मे, Ds D9 G4 गृहस्थधर्मे. (for गृहस्थधर्मे). — c) B2 T G1 (before corr.) 2 3. 5 M Cap श्रान्त°, D3 4 आर्त, G4 शान्त°, Ca d s वृद्ध (as in text)

60 a) D9 G1. 2 M5 °प्राज्ञ, T1 G5 M1–4 °प्राज्ञः (for °राज) — b) K2 श्रेयस्कानि, K5 B (B1 missing) Dn D3 D5–7 9 10 T2 M5 Ca. s साद्यस्कानि; D1 यशस्यानि, G1 सदृशानि, G4 सद्यस्तानि; Cd as in text. — d) T1 G5 एतानि, G3 तानि (for इमानि) G4 M (except M1) तानि वक्ष्यामि मे शृणु

61 a) D3 दैवतानां (for देव°) Cn cites देवता — b) K2 महात्मनां (for च धीमताम्) — d) M2. 5 विनाश (for °शं) M3–5 °कर्मिणां (for °कर्मणाम्) — After 61, the Bombay, Calcutta and Kumbhakonam ed ins the foll stanza (which is noticed in the comm of Arj, but *not* found in our MSS.!)

182* चत्वारि कर्माण्यभयकराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥

[=1 85 24, =(var.) 5 35. 38.]

62 a) G3 पञ्चैव तु (for पञ्चाग्नयो) G3 M मनुष्याणां — b) D1 समतत (for प्रयत्नतः).

63 a) D8 9 G4 पूजयेल्लोके. — b) T1 G1 4 5 चाप्नोति (for प्राप्नोति) G3 पुष्कलं (for केवलम्) — c) K1 2 4 ब्राह्मणान्, S (except T2 G2) च भृत्यान्, Cs मनुष्यान् (as in text).

पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥ ६४
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥ ६५
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ६६
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ६७
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ६८
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ६९
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ७०
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ७१ C 5. 1059 B. 5. 23. 84 K 5. 33. 91

---

64 a) Dn1 D8 अमित्रमित्र(D8 °त्रा)मध्यस्था — d) S (except T2) उदा(T1 अथा)सीनोपजीविन

65 =(var) C 12 8782, =(var) Manu 2 99 — b) K1 2 स्यात् (for चेत्) — c) K2 D8 C8 क्षरति, T1 व्रवति, G4 द्रवते, G5 M स्रवते (for स्रवति) — d) D1 हृरे, D2 m 8 4 T2 गिरे, Ca s दृते (as in text) B3 4 D7 8 10 पात्रा° (for पादा°)

66 =Hitopades'a 1 25 — a) K1 एते (for दोषा) — b) D7 G3 हतव्या (for हात°). K1 4 वृद्धिम्, K3 श्रेय (for भूतिम्) — c) D2 4 मान (for निद्रा) K2 मोह, K5 मान, D3 4 निद्रा, D7 मान, C8 तद्रा, Ca d तन्द्री (as in text) K1 तद्रा भय क्रोधनिद्रा

67 =(var) C 12 2090, =(var) Pañcatantra 3 71 — a) B8 मति° (for षडि°)

68 =(var) C 12 2091, =(var) Pañcatantra 3 72 — a) K1 B8 भर्तार (for राजान) — G2 om. 68c-70b

69 G2 om. 69 (cf. v l. 68) — a) T1 G (G2 om.) एते (for एव) G6 जीवता (for तु गुणा) — b) K2 D5 D9 G4 M कयं° (for कदा°) — c) K2 अहिंसा च (for अनालस्यम्) — K4 D1-7 T2 ins after 69 B Dn D5 D8-10, after 72 T1, after 70

183* षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गाव सेवा कृषिर्भार्या विद्या वृषलसगति ।
षडेते ह्यवमन्यन्ते नित्य पूर्वोपकारिणम् ।
आचार्यं शिक्षिता शिष्या कृतदाराश्च मातरम् ।
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजनम् । [5]
नाव निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ।
आरोग्यमानृण्यमविप्रवास
सद्भिर्मनुष्यै सह सप्रयोग ।
स्वप्रत्यया वृत्तिरभीतवास
षड् जीवलोकस्य सुखानि राजन् । [10]
ईर्षुर्घृणी न सतुष्ट क्रोधनो नित्यशङ्कित ।
परभाग्योपजीवी च षडेते नित्यदु खिता ।

[(L. 1) Om in K4 D1 2 5 6 8 T2 मुहूर्तेन (for मुहूर्तम्) D8 अनपेक्षणात् (for अनवे°) — (L 2) D5 वृषलसंहति, D7 विमलसंगति — (L. 3) D2 एतान् (for एते हि) T1 नर (for नित्य) D2 मर्वो° (for पूर्वो°) — (L 4) K4 D1 आचार्यान् Dn1 D5 4 6 7 T2 कृतकृत्या नरेश्वर — (L 5) K4 D1-4 6 T च (for तु) Dn1 D6 कृतार्थश्च Dn D8 (before corr ) T1. 2 (before corr as above) प्रयोनक, D8 (after corr ) प्रयोजकान् — (L 6) B2 निर्विद्य°, T2 ह्यरोगा° (for आतुरा ) K4 B (except B8, B1 missing) D5 D8 10 चिकित्सकान् D2 चिकित्सकमनातुरा — (L 9) B5 सुप्र°, C8 स्वप्र° (as in text) D5 D10 अभीतिवास° — (L 10) T1 एव (for जीव ) — (L 11) =(var ) Hitopades'a 1 19 Some MSS ईर्षु Dn1 घृणि, D5 नही, Cn घृणी (as above) K4 B5 D1-7 T2 त्वसंतुष्ट, Dn1 असंतुष्ट° (for न संतुष्ट ) — (L 12) K4 D2 दु खमाजना°, D1 दु खजीविन° (for नित्यदु खिता°) ]

— K4 D1-7 T cont B Dn D5 D8 10 ins after 69

184* अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ।

[ =(var ) Hitopades'a Prastāvanā 16 — (L 4) T1 षडेव (for षड् जीव ) D7 सुखावहानि (for सुखानि राजन्) D10 तात (for राजन्) ]

70 =C 3 13941 — G2 om 70ab (cf v l. 68) — b) K5 D5 अधि°, B8 नानु°, Dn नाधि°, G1 5 मोधि° (for योऽधि°) — c) G1 3 5 च (for स) S (except T2 G2, G4 damaged) न च, Ca कुतो (as in text) Cd s कृतानर्थै G3 आलस्यै, Ca अनर्थै (as in text) — After 70, T1 ins 183*

71 a) K1 G5 एते (for इमे) — b) K1 2 B3 4 T1 G °पद्यते (for °लभ्यते) — c) N चौरा (for चोरा)

C 5 1090 B 5 23. 65 K 5. 23 92

प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ७२
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूलाश्च पार्थिवाः ॥ ७३
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ७४
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ७५
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ७६
नैतान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुद्ध्या बुद्ध्वा विवर्जयेत् ॥ ७७
अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ॥ ७८
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः संनिपातश्च मैथुने ॥ ७९
समये च प्रियालापः स्वयूथेषु च संनतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ ८०
नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ॥ ८१
दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ ८२

72 K2 transp 72b and 72d — b) G3 यागशीलेषु (for यज°). — d) Dn सुरितेषु; T1 आर्तेषु, Cn मूर्खेषु (as in text)

73 a) M तथा (for सदा). — b) S (except T2 G3) विजिगीषुणा, Ca व्यसनोदयाः (as in text) — c) K1 D1 T1 वै (for यैर्). — d) G1 कृतमूला°, Ca कृतमूला° (as in text) K1 2 D1 2 हि, K4 D8 4 9 G2 अपि (for च) K5 इव द्रुमा°; B (B1 missing) Dn Ds D5 6 8 10 T2 अपीश्वरा (for च पार्थिवा)

74 = Pañcatantra (Pūrnabhadra's recension) 1 158 — b) T1 G3 वाक्पारुष्यपंचमं (catalectic!), G5 वाक्यपारुष्यपचमं — After 74, K (K3 missing) D2 7 read for the first time 5 35. 45, all MSS. (except K1) *repeating* it in its proper place (v. l some MSS प्रीण° for दीप°, and कुलं चैव for च कौल्य च), cf v l 80 also

75 b) B2 4 भवति (for नरस्य) D1 हि विनश्यत (for विनशिष्यत) — d) B8 प्रबोध्यते; Ca d s विर° (as in text)

76 a) M उपादत्ते (for चादत्ते) — b) B5 D8.4 जिघांसते — d) K2 अधिगच्छति, Ds1 D1 अभिनंदते

77 a) B2 4 5 D (except D5 6 10) G2 नैनान् (for नैतान्) G5 कृच्छ्रेषु, Ca d s कृत्ये° (as in text) — b) K2 4 अभ्यसूयति, B3 D1 5 6 T2 अभ्यसूयते. — After 77ab, K2 ins

185* यस्यैतानि निमित्तानि तस्याभव्य पराभव° ।

— d) K4 5 D3 बुध्या, B (B1 missing) Dn2 Ds D5 8.10 T2 G2 बुध्येद्, G4 वाचा (for बुध्या). K4 Ds1 D2.4 G3 4 बुध्या, K5 D8 चैव (for बुद्ध्वा) K1 6 Dn D5 6 10 T2 M2 विसर्जयेत्; K2 4 D1.3 4 7 G3 4 च वर्जयेत्

78 a) D3.4 9 एतानि (for इमानि). — b) B1 महास्थानानि, D1 रमणीयानि (for नव°) C5 cites हर्ष स्थानानि. — d) T1 G (except G2) तथैव (for तान्येव) K2 D8 सुसुखान्युत (D8 °नि च), K5 B2 4.5 Dn D1.9 10 स्वसुखान्यपि, D1 च सुखानि च, D2–4 सुसुखान्यपि.

79 a) Dn2 सखिभिर्वै (for च सखिभि°) Dn1 मित्रेण, D8 सुखिभि°, Ca d सखिभि° (as in text). — b) Dn1 D3.4 9 सुमहांश्च (for महांश्चैव). — c) K2 तनयस्य (for पुत्रेण च)

80 a) M (except M5) तु (for च). D1 G3 M °लाभ, T1 °जात°, C5 °लाप° (as in text). — b) K1 B2–4 D2 10 G5 Ca स्वयूथ्येषु, K2 4 5 °पूज्येषु, Dn °यूथ्ये च, D1 प्रयुज्येषु, Cd स्वयूथेषु (as in text). B (B1 missing) D (except D1) T G1 2 4 C5 समुन्नति° (for च संनति) Cd cites संनतिः. — c) K1 2.4 अभिप्रेतार्थ लाभश्च Cd cites अभिप्रेतस्य — After 80, B (B1 missing) Dn Ds D1 3–6 8–10 T2 read for the first time 5 35 45, all MSS (except D1) *repeating* it in its proper place (v l some MSS प्रीण° for दीप°) — In Ds D10, (this first occurrence of) 5 35. 45 is followed by 5 35 46 also.

81 b) K1 2 4 D1–4 7–9 Cnp पांच(K4 D1 3 पंच)भौतिक, K5 Ds C5 np पंच(K5 पांच)भूमिक, G3 पांच°, Ca d as in text ꙳Cn पाञ्चभौतिकमित्यर्वाचीन पाठ उपेक्ष्य ।꙳

82 a) T1 G1 3 5 M (except M5) धर्मान् (for धर्मं) — d) M transp श्रान्त and क्रुद्ध°

83 Dn1 om 83 — a) K4 B3 D1.2 भीत°, K5

त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश ।
तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः ॥ ८३
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ ८४
यः काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान्क्षिप्रकारी
तं सर्वलोकः कुरुते प्रमाणम् ॥ ८५
जानाति विश्वासयितुं मनुष्या-
न्विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च
तं तादृशं श्रीर्जुषते समग्रा ॥ ८६
सुदुर्बलं नावजानाति कंचि-
द्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः
काले च यो विक्रमते स धीरः ॥ ८७
प्राप्यापदं न व्यथते कदाचि-
दुद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते जितात्मा
धुरंधरस्तस्य जिताः सपत्नाः ॥ ८८
अनर्थकं विप्रवासं गृहेभ्यः
पापैः संधिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं
न सेवते यः स सुखी सदैव ॥ ८९
न संरम्भेणारभतेऽर्थवर्ग-
माकारितः शंसति तथ्यमेव ।
न मात्रार्थे रोचयते विवादं
नापूजितः कुप्यति चाप्यमूढः ॥ ९०

C. 5. 1079
B. 5. 33. 109
K. 5. 34. 110

---

Dn2 Ds D3–6 8 10 T2 लुब्ध°, G4 भीम° (for भीरु°) — b) K5 B2 4 5 D (except D1. 2 7 9, Dn1 om ) T2 भीत (for लुब्ध ) — c) K5 B2 4 Dn2 Ds D5 6 8 10 T2 सर्वे° (for भावे°) — d) K4 Dn2 D1. 2 5 S (except T1 G5) प्रसज्येत, Ds2 D9 प्रसह्येत, D3 4 प्रमाद्येत, D8 असजेत

84 G2 om 84 — c) Ca असुरेन्द्राय — d) T1 G3 4 M1 वेदे, G1 चेद्, G5 वेद्, M (M1 *sup lin* ) वादे (for चैव)

85 M5 om 85^ab — a) G1 विजहाति (for प्रज°) — b) Ca d प्रतिष्ठापयति — c) D2–4 विशेषवान्, G3 विशेषत , Ca d °वित् (as in text) — d) K1 (before corr ) प्रणाम (for प्रमाणम्)

86 b) K2 4 G5 विज्ञाय (for विज्ञात-) D1 9 ददाति (for दधा°) T1 G (except G2) ददान् — c) D1 G2 पात्र, T1 G1 3–5 M पथ्य, Ca. d s मात्रा (as in text) B2 3 5 G2 यथा (for तथा) D9 क्षमा च देश, G4 पराक्रम च (for तथा क्षमा च) T G1 2 M1 3 4 क्षम (for क्षमा) D3. 4 जानाति मात्रानुगम च देशे — d) D9 ईदृश (for ता°) K1 भजते (for जुषते) D3. 4 समस्ता (for °ग्रा)

87 a) K2 4 B3 T1 यो (T1 स) दुर्बल, D9 सुदुर्लभ (for सुदुर्बल) Dn Ds D2 5 8 9 G1. 2 4 M5 किंचित् (for कं°) — b) D2 युक्त्या, Ca d s युक्तो (as in text) K2 4 Dn1 D9 M (except M1) सेवति — c) K1 4 विक्रम (for °ग्रह) — d) Ds कालेन (for काले च) K1 वीर (for धीर )

88 b) K1(*inf lin* ) 4 उत्थान, K1 (*orig* ) Ds Ca. d s उद्यान, D1 विद्वास, D9 यो योग (for उद्योग) K1. 2 वा (for च) — c) K1 2 4 5 (*sup lin* ) D (except D1–5 9) T2 महात्मा, B (B1 missing) यता° (for जिता°)

89 K5 om 89 — b) B2 4 5 Dn1 D2–4 6 8 10 T2 °भिमर्षं, D5 °भिमर्षण, D7 °वमर्शं, G2 °भिमर्शन — c) S (except T G2) दम (for दम्भ) K1 2 D1 G2 स्तेय (for स्तैन्य) — d) Dn च (for स) K2 स धन्य (for सदैव)

90 a) D1 transp न and सरम्भेण K2 4 सरभाद्, D9 सभ्रमेण (for सरम्भेण) T1 हरते, G1 आहरते (for आरभते) K5 (*sup lin* ) B (B1 missing) Dn Ds D5 6 10 T2 त्रिवर्गं, D3 4 9 अर्थकृत्य, T1 G1 परार्थं, M अर्थवर्गान् (for अर्थवर्गम्) — b) D1 अकारित , T G3 M1 2 नाकारित , G1 न चानृत, G2 M3–5 न कारित , G5 न कामत , Ca d s आकारित (as in text) B (B1 missing) Dn2 Ds D5 6 10 T2 तत्त्वम्, D1. 7 S (except T2) सत्यम् (for तथ्यम्) — c) B2–4 Ds1 D1 5 6 10 T2 G2 मित्रार्थे, Ca. d s np मात्रार्थे (as in text) K5 न मित्रार्थे रोचते विप्रवाद, S (except T2 G2) न च स्त्रियोर्थे यतते विवाद — d) D3 4 9 न कोपित (for नापूजित ) D1 स (for च) K2 अनीश (for अमूढ )

91 a) K5 D8 m Ca d s transp न and य B2 4

C. 5. 1080
B. 5. 33. 110
K. 5. 33. 117

न योऽभ्यसूयत्यनुकम्पते च
न दुर्बलः प्रातिभाव्यं करोति ।
नात्याह किंचित्क्षमते विवादं
सर्वत्र तादृग्लभते प्रशंसाम् ॥ ९१
यो नोद्धतं कुरुते जातु वेषं
न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्च्छितः कटुकान्याह किंचि-
त्प्रियं सदा तं कुरुते जनोऽपि ॥ ९२
न वैरमुद्दीपयति प्रशान्तं
न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोति मन्युं
तमार्यशीलं परमाहुरग्र्यम् ॥ ९३
न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रतीतः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं
न कत्थते सत्पुरुषार्यशीलः ॥ ९४
देशाचारान्समयाञ्जातिधर्मा-
न्बुभूषते यस्तु परावरज्ञः ।
स तत्र तत्राधिगतः सदैव
महाजनस्याधिपत्यं करोति ॥ ९५
दम्भं मोहं मत्सरं पापकृत्यं
राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं
यः प्रज्ञावान्वर्जयेत्स प्रधानः ॥ ९६
दमं शौचं दैवतं मङ्गलानि
प्रायश्चित्तं विविधाँल्लोकवादान् ।

---

D1–4 7 S (except G2) च (for यो) G4 5 M4 अभ्य॰सूयति, Ca d s अभ्य° (as in text) D2 य॰ (for च) — b) K1 G3 (before corr) दुर्लभ.; Cs दुर्बल॰ (as in text). D1 3 प्रतिभाव्य, D3 (m as in text) 4 प्रातिभाप्य, G5 °भव्यं, Ca प्रतिभाव; Cd as in text G1 5 च याति (for करोति) D9 न दुर्बलोस्मीति करोत्यकार्यं — c) D2 अपि, Ca d s अति- (as in text) D8 G3 Cd कचित्, Ca as in text D1 कुरुते, D6 8 क्षमते वै, Cs क्षमते (as in text) D5 नात्याहिते क्षमते वै विवाद, S (except T2 G3) न विग्रहाद्रोच(G4 °धाप)यते विवादं

92 B1 resumes from वेष (cf v l 1). — a) D2 G5 उद्धत D9 T2 (after corr) G5 दोष (for वेषं) — b) K2 अति (for अपि) K4 हि, Cd वि- (as in text) Dn G4 अन्यात्, M अन्य (for अन्यान्) — c) K4 D9 G3 कचित्. K5 न मूर्छितोप्याह कटूनि किंचित् — d) G2 जनौघ (for जनोऽपि) K5 D1 2 7 अय, B3 Dn D5 D6 6 8 10 T2 हि (for ऽपि)

93 a) G3 चैनम् (for वैरम्) — b) K1 नांतम्, K2 वास्तम्, S (except T2) शातिम्, Cd s नास्तम् (as in text) — c) G3 4 दुर्बलो (for दुर्गतो) K5 B D (except D1 2 8 9) S (except M1 2 4) अकार्यं, Ca d s मन्यु (as in text) — d) K1 नरस्य, K2 तदस्य (for तमार्य-) Dn1 आह (for आहुर्) K4 5 B Dn2 D5 D3–6 8 10 T आर्यां, Dn1 पूर्णं, D1 अग्रे, G2 आद्य, M1 (sup lin as in text) 2–5 अर्घ्यं (for अग्र्यम्)

94 a) K2 यः (for वै) D1 T G कुरुतेति (T1 °ते ते, G4 °ते य॰) (for वै कुरुते) T2 मोदं (for प्रहर्षं) — b) K5 B D (except D1 2 7) T1 (m as in text) 2 G1.3 प्रहृष्टः, Ca d प्रतीत. (as in text) — c) K2 D8 G4 तु; D1 T2 G5 नु (for न) K2 B3 4 D7 10 G2 न तापं; D1 प्रलापं, T2 (before corr) न पापं (for ऽनुताप) — d) K5 B D (except D1 9) T2 G1 2 स (for न) B D (except D1 7 9) T G2 कथ्यते (for कत्थते). K1.2 5 B2–4 Dn G5 सत्पुरुषार्थशील., G1 4 M सत्पुरुष॰ सुशील॰.

95 a) K1 2 4 B1 D1 3–5 ज्ञाति° (for जाति°) — b) S (except T2 G3 4) बुभुत्सते, Cd s बुभूपते (as in text). D1 स (for य) K4 5 B D (except D1) T2 स; Cs च (for तु). — c) K1 4 5 B D T2 G5 यत्र (for the first तत्र). K2 T1 G1 2 5 यत्र (for the second तत्र) B D (except D1) M1 (sup lin as in text) अभि° (B1 D1 अपि) (for अधि°) — d) T1 °राज्यस्य (for °जनस्य)

96 ab) S (except T G1 2) दर्भं K1 transp. मत्सर and पैशुनं D3 (by corr, orig as in text) राज° (for पाप°) D9 M2 राजन् द्विष्ट, G3.4 राजद्वेष G1 परदाराभिमर्शं (for पैशुनं पूगवैरम्) K2 गर्ववैर, D1.3 G3 पूर्व°, G4 °कृत्य, Cd.s पूगवैरम् (as in text) — c) D1 अभि॰, G2 अप-, M3 अचि- (for अपि) — d) K1 S (except T2 G2 4) transp. य and प्रज्ञावान् K2 अत्र धीर (for प्रधान)

97 a) K1 B2 4 5 Dn D5 D10 दानं, D1 सम (for

एतानि यः कुरुते नैत्यकानि
　तस्योत्थानं देवता राधयन्ति ॥ ९७
समैर्विवाहं कुरुते न हीनैः
　समैः सख्यं व्यवहारं कथाश्च ।
गुणैर्विशिष्टांश्च पुरोदधाति
　विपश्चितस्तस्य नयाः सुनीताः ॥ ९८
मितं भुङ्क्ते संविभज्याश्रितेभ्यो
　मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः सं-
　स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ ९९
चिकीर्षितं विप्रकृतं च यस्य
　नान्ये जनाः कर्म जानन्ति किंचित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
　स्वल्पो नास्य व्यथते कश्चिदर्थः ॥ १००
यः सर्वभूतप्रशमे निविष्टः
　सत्यो मृदुर्दानकृच्छुद्धभावः ।
अतीव संज्ञायते ज्ञातिमध्ये
　महामणिर्जात्य इव प्रसन्नः ॥ १०१
य आत्मनापत्रपते भृशं नरः
　स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजाः सुमनाः समाहितः
　स्वतेजसा सूर्य इवावभासते ॥ १०२
वने जाताः शापदग्धस्य राज्ञः
　पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।
त्वयैव बाला वर्धिताः शिक्षिताश्च
　तवादेशं पालयन्त्याम्बिकेय ॥ १०३
प्रदायैषामुचितं तात राज्यं
　सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां
　भविष्यसि त्वं तर्कणीयो नरेन्द्र ॥ १०४

C. 5. 1093
B. 5. 33. 123
K. 5. 33. 130

इति श्रीमहाभारते उद्योगपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

द्रमं) $B_{2\,4\,5}$ Dn $D_{10}$ होम; $D_{8}$ मोह (for शौचं) S (except $T_{2}$ $G_{2\,4}$) दैविक, Cd $_{8}$ दैवत (as in text) $K_{2}$ मंगलेज्या — $^{b}$) $B_{2}$ Dn $D_{10}$ $M_{2}$ प्रायश्चित्तान्, Cd as in text. $D_{2}$ S (except $T_{2}$ $G_{2}$) विविध °वाद Cd.s cite लोकवादान् — $^{c}$) $G_{4}$ वै (for य ) $K_{2}$ नैत्ति(read °त्यि)कानि, $D_{8}$ नित्य°, $D_{8}$ मद° (for नैत्य°) — $^{d}$) $G_{8}$ $M_{8-6}$ दैवता (for देवता) $K_{1\,2\,5}$ $D_{1\,2\,5\,6\,8}$ (by corr) $_{9}$ $G_{2\,3}$ M धारयति, Ca d $_{8}$ राधयन्ति (as in text)

98 $K_{6}$ transp 98 and 99 — $^{a}$) $K_{1}$ $D_{8}$ $D_{9}$ $T_{1}$ $G_{1.2\,3}$ विवाद — $^{b}$) $K_{4}$ समैश्च, $D_{8}$ सम (for समैः) $K_{2}$ $B_{3\,4}$ $Dn_{2}$ $D_{8\,4\,7\,10}$ $G_{3\,5}$ कया (for कथा ) — $^{d}$) $K_{3\,5}$ जिता , $D_{1}$ नय $G_{2}$ नरा (for नया ) $K_{2\,5}$ सपत्ना , $D_{1}$ सुनीत· (for सुनीता )

99 $K_{6}$ transp 98 and 99 — $^{c}$) $D_{1}$ मित्रेषु (for अमित्रेषु) $D_{1}$ य·; $D_{5\,6\,9}$ $T_{2}$ स्व (for सन्) — $^{d}$) $K_{2\,4}$ $D_{2\,5\,8}$ $G_{1\,5}$ प्रजहति, $D_{9}$ प्रजयति (for प्रजहति)

100 $^{a}$) $K_{2}$ किंचित् (for यस्य) — $^{b}$) $D_{9}$ अन्य , Ca d अन्ये (as in text) $D_{9}$ जन· (for जना ) $D_{9}$ जानाति, Ca d जानन्ति (as in text) $K_{1\,5}$ $G_{5}$ केचित्; $K_{2}$ यस्य (for किंचित्) — $^{c}$) $K_{1}$ अपि, $M_{3\,4}$ न (for च) — $^{d}$) $D_{2}$ $M_{2}$ नाल्प , $D_{9}$ स्वार्थो (for स्वल्प·) B Dn $D_{8}$ $D_{1.3-6\,8.10}$ $T_{2}$ $G_{2}$ Ca d नाल्पोपि (for स्वल्पो न) K ($K_{8}$ missing) $D_{2}$ अप्यर्थ·, $D_{9}$ M तस्य (for नास्य) $K_{2}$ B Dn $D_{5}$ $D_{8-6\,8\,10}$ $T_{2}$ Ca $_{8}$ च्यवते; $D_{7}$ बाध्यते (for व्यथते) K ($K_{8}$ missing) $D_{2\,7}$ नास्य कश्चित्, $D_{9}$ नापवाद· (for कश्चिदर्थ·)

101 $^{a}$) M (except $M_{8}$) स (for य·) $K_{2}$ सर्वभूतोपशमे, Ca. s as in text Cd cites प्रशमे — $^{b}$) $K_{5}$ B Dn $D_{2-7\,10}$ $T_{2}$ $G_{1.2}$ $M_{2}$ मान°, $D_{9}$ मौन° (for दान°) $K_{2}$ सुप्रभाव (for शुद्ध°) — $^{c}$) $K_{2\,4\,5}$ B (except $B_{3}$) D (except $Dn_{1}$) $T_{2}$ $G_{1.4}$ $M_{1}$ स ज्ञायते; $M_{1}$(*sup lin* as in text) $_{2-5}$ सशोभति, Ca. d $_{8}$ सज्ञा° (as in text) $G_{8}$ अतीव स ज्ञातिमध्ये प्रशस्त — $^{d}$) $K_{2}$ (before corr ) प्रधान·, $D_{3}$ $D_{8}$ प्रपन्न (for प्रसन्न )

102 $^{a}$) $B_{4}$ यथा (for य ) $G_{4}$ स्वय (for भृश) — $^{b}$) $K_{1}$ पर , $K_{3}$ $D_{2\,9}$ पुर (for गुरु ) $D_{2}$ भवेत्पुन (for भवत्युत) $K_{4}$ स सर्वलोकप्रवरो भवत्युत; $D_{1}$ S (except $T_{2}$, $G_{4}$ damaged) स सर्वलोकेष्वधिको भव°. — $^{d}$) $K_{2\,4}$(before corr ) $_{5}$ B D (except $D_{1\,9}$) स (for स्व·)

103 $^{b}$) $G_{6}$ चैवेंद्र° (for पञ्चेन्द्र°) — $^{c}$) $K_{1\,4}$ $D_{1\,2}$ $G_{2}$ om. एव $D_{9}$ $G_{4}$ transp वर्धिता and शिक्षिता

# ३४

C. 5 1034
B. 5 34 1
K. 5 34 1

धृतराष्ट्र उवाच ।
जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः ॥ १
त्वं मां यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्त्व
श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ २
पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनात्मनाहम् ।
कवे तन्मे ब्रूहि सर्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ॥ ३
विदुर उवाच ।
शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ ४
तस्माद्वक्ष्यामि ते राजन्भवमिच्छन्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५
मिथ्योपेतानि कर्माणि सिध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ६

---

— $^d$) K4 D8 त्वद्- (for तव)

104 $^a$) D9 राष्ट्रं (for राज्य) — $^b$) T1 G1 3 5 वर्धयस्व, M वर्तयस्व (for मोदमान) — $^c$) K4 D2 (by corr, orig as in text) 8 9 देवतानां (for देवाना) — $^d$) K3 इत्य (for त्वं) K1 m 3 T2 (by corr) धर्ष°, D7 10 G1 गर्हं°, G8 क्रम°, Ca तर्क° (as in text)

Colophon K8 missing — *Major parvan* K2 उद्यम (for उद्योग)! — *Sub-parvan* K1 4 5 Dn1 संजययान, B1 3.4 Dn2 D3-6 8 10 T G1 M प्र(D5 6 om प्र)जागर; B2 सजयप्रजागर, B5 D3 G5 विदुरप्रजागर — *Adhy name* K (K8 missing) D1 2 7-9 G2 विदुरवाक्यं (K4 °रवचन), D10 संजयागमने विदुरवाक्य, G1 M पंडित(M5 सचित)लक्षणं — *Adhy no* (figures, words or both) K1 D5 32, K3 1 (of प्रजागरपर्व?); D6 (*sec m*) 30, D7 8 S 33 (M 34) — *S'loka no* K2 111, K5 107, Dn2 119, D8 125

## 34

☞ This adhy is missing in K8 (*of v.* 1 5 32 15) G4 is missing and damaged in many places in this adhy, the variants in this MS are given wherever possible

1 $^b$) K3 D1 3 4 6 7 9 श्रेयो यद्, S (except T2, G4 missing) यत्कृत्यं (for यत्कार्यं) K3 इह (for अनु-) — $^d$) N (except K5 D1 2 7, K8 missing) T2 G8 शमि (for शुचि)

2 G4 missing (cf. v 1 1) G5 om 2$^{ab}$. — $^a$) D9 त्वं मा, T1 तस्माद्, G3 M तन् मा (G8 मा) — $^b$) T1 G1 3 प्रज्ञातपूर्वस्त्वं (for प्रज्ञापूर्वं सर्वं) — $^c$) T1 G1 3 तत्व, Ca d s पथ्यं (as in text) — $^d$) T1 G1.3 श्रेय पथ्य, all comm श्रेयस्कर (as in text) K3 तद्ब्रूहि सर्वं (for ब्रूहि तद्वै) G8 तथा (for तद्वै)

3 G4 missing (cf. v 1 1) — $^a$) D2 5 पापशकी, Cd s as in text D9 अनुपृच्छन् Cs cites पश्यन् — $^b$) Dn1 G8 5 M1 3 4 त्वा (for त्वां) S (except T1 G2, G4 missing) व्याकुलितान्तरात्मा (for व्याकुलेना त्मनाह) — $^c$) K1 कश्चित्, K2 किंचित्, G8 त्वं मे (for कवे). B1 2 5 Dn1 तदेतत् (for कवे तत्) T1 G (G4 damaged) तत्त्वं (for सर्वं).

4 =(var) Pañcatantra 1 269. — G4 missing (cf v 1. 1) — After the ref, D8 ins

186* सुलभा पुरुषा राजन्सततं प्रियवादिन ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ।
[=5 37 14 (q v), Rām 6 16 21]

— $^b$) S (except T2 G2, G4 damaged) प्रिय (for द्वेष्यं) D9 वेतरं, S (except T2 G2, G4 damaged) वाप्रियं (for वा प्रियम्) — $^c$) D2 ब्रूया (for ब्रूयात्) D1 अपृष्ट कस्य न ब्रूयात्, S (except T2) नापृष्ट कस्यचि (M2 5 °स्य त)द्ब्रूयात् — $^d$) D1 यदि, T1 G1 य स, G3 5 यस्तु (for यस्य) K1 °जय (for °भवम्)

5 G4 missing (of v 1.1), G8 om 5$^a$-7$^b$ — $^b$) K1 5 D8 D1 2 5 7 8 10 Ca d s भाव, T1 2 (by corr) G1 2 5 शर्म, Cap भवं (as in text) B3 4 Dn D3 4 हित यस्मात्, D9 यत्पृच्छसि (for भवमिच्छन्) — $^c$) M वाच श्रेयस्करीं धर्म्यां — $^d$) D9 त्वं, M तां (for तत्)

6 G4 missing (cf. v 1. 1) G8 om 6 (cf. v 1 5). — $^b$) M नु(M4 *sup lin* यु)ध्येयुर् (for सिध्येयुर्)

तथैव योगविहितं न सिध्येत्कर्म यन्नृप ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७
अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ८
अनुबन्धं च संप्रेक्ष्य विपाकांश्चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १०
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११
न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
रूपाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ १३
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदद्यं भूतिमिच्छता ॥ १४
वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ १५
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ १६
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७

C 5. 1110
B 5. 34 17
K. 5 34. 17

T1 G1.3 अपि (for यानि) — c) K1 2 4 D1.2 G2 Ca d अनुपायेन युक्तानि, Dn2 T G1.5 M अनुता(Dn2 °पा)यप्रयुक्तानि, Cn as in text.

7 G3 missing (cf v 1. 1) G3 om. $7^{ab}$ (cf. v 1 5) — a) K2 °सहित (for °विहित) — b) D2-4 6 कर्मज (for कर्म यत्) B Dn Ds D3 10 यस्तु कर्म न सिध्यति — c) K2 G2 अपाययुक्त, T G1.2 5 उपाययुक्तो, Ca.d उपाययुक्त (as in text) Cs cites उपाय. — d) K4 transp न and तत्र

8 a) K5 B2-4 Dn Ds D5-7 10 T1 M (except M1) अपेक्षेत, D9 च सम्प्रेत्य (for अवेक्षेत) — c) D1 न, D9 प्र-; G3 तु (for च). — d) D2 न चोद्वेग, S (except T2 G2, G1 damaged) सहसा न (for न वेगेन) Ca d cite वेगेन (as in text)

9 a) S (except T2 G2, G1 damaged) °बधान् (for °बन्ध) — b) B Dn Ds D3-6 8-10 T2 G3 विपाक, Ca d s as in text — c) K2 आरमवान् (for आत्मन) K1.2 4 T2 G2 आदौ (for एव) — d) D2-4 8 9 मानव (for वा न वा)

10 b) K3 transp तथा and क्षये — c) Some MSS कोपे K2 दुर्गे; Ca d s दण्डे (as in text) — d) D9 राष्ट्रे (for राज्ये) K2 B3 Dn1 Ds2 D3 9 अवतिष्ठति (Dn1 Ds2 °त), G4 अवशिष्यते, G5 पतिष्यति, Ca व्यव तिष्ठते, Cd as in text.

11 K2 om. 11 — ab) K1 च (for तु) K1.4 transp प्रमाणानि and यथोक्तानि, and reads उपसेवते (for अनुपश्यति) — d) D9 स राष्ट्र (for स राज्य) K5 D2 °तिष्ठति (for °गच्छति).

12 = Hitopades'a 3 109 — K2 transp 12 and 13 — a) D9 राष्ट्र (for राज्य) K2 Dn1 D3.4 9 एव (for एव)

13 K2 transp 12 and 13 — b) G4 आमिषं (for आयसम्) — c) K5 Ds C3 ap रूपातिपाती, K5 (*sup lin*) B Dn D3-7 T2 लोभाभिपा(B3 °घा)ती; D8 (by corr) 9 10 G2 रसाभिलाषी (D9 G2 °पाती), T1 G1.3 5 M अन्नाभिलाषी, G4 रूपाभिलाषी, Ca d as in text (Cap लोभातिपाती) — d) Ds D3-6 अपेक्षते (for अवेक्षते).

14 =(var) Pañcatantra 4 23, 79, =(var) Śārṅgadharapaddhati 1308 — ab) K2 transp शक्य and ग्रस्य B2 transp ग्रस्य and ग्रस्तं K1 4 5 D1 2 8 ग्रास, Ds2 m वस्तु, D9 यस्य, G4 ग्रस्तं (for ग्रस्य) D10 G2 5 परिणमेत (for °णमेच्च) Ca d cite परिणमेत् — After $14^{ab}$, D1 reads 19-20 — c) D3.4 9 G3.4 स्यात्, M च (for यत्) — d) K5 B (except B1) Dn2 D3-7 10 T2 Ca तदाद्य, Ds तदाज्यं, G3 तथाद्य Cd cites अद्य T1 तदद्य स्यादभीप्सित, G5 तदद्यादभीप्सया (sic), M यत्तदद्यमभीप्सया

15 b) K1 G2 विचिनोति, B3 उपचि° (for प्रचि°). — c) S (except T2, G1 damaged) सेपा (for तेभ्यो) — d) B1 8 तस्य, D2 चैव (for चास्य) D2 प्रणश्यति (for विन°)

16 a) D1 उपाधत्ते, D2 समादत्ते — d) S (except T2 G2) बीज (for बीजात्) T1 G1.3.4 M1.2 फलात् (for फल)

17 c) S (except T2 G3 4) अर्थं (for अर्थान्) — d) G5 विहित सदा (for अविहिंसया)

C. 5 1111
B. 5. 34. 18
K. 5 24 18

पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ १८
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा ॥ १९
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथागताः ।
कृतः पुरुषकारोऽपि भवेद्येषु निरर्थकः ॥ २०
कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् ॥ २१
ऋजु पश्यति यः सर्वं चक्षुषानुपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २२
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति लोकं यः तं लोकोऽनुप्रसीदति ॥ २३
यस्मात्त्रसन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २४
पितृपैतामहं राज्यं प्राप्तवान्स्वेन तेजसा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २५
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी ॥ २६
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ २७

---

18 $^{a}$) K1 m पुष्पमादौ, Dn2 T1 (also as in text) G2 8 पुष्पं फल D2 9 विचिन्वीयात् (for विचिन्वीत) — $^{b}$) G8 M वि(G8 तु)वर्जयेत् (for न कारयेत्)

19 $19^{ab}$ = C. 3 $2342^{ab}$. — D1 reads 19–20 after $14^{ab}$ — $^{c}$) K4 D9 S (except T G2.8) °प्रेक्ष्य (for °चिन्त्य) — $^{d}$) D6 G8 धीर. (G8 वीर ) कुर्वीत वा न वा, C8 as in text

20 D1 reads 19–20 after $14^{ab}$ — $^{a}$) B1 अनवद्या (for अनारभ्या) — $^{b}$) G8 कृत्वा, M कृत्य, Ca d s नित्यं (as in text) K2 4 D7 तथाकृता°, G8 तथापरे, G6 तथैव च, Ca d s तथागता. (as in text) — $^{c}$) B D (except D1 9) T2 G8 हि (for ऽपि) — $^{d}$) D1 भवत्येष (for भवेद्येषु). — After 20, Dn (for the first time) reads 5 38 29, and D5 D2–4 7 8 10 (all first time) read 5 38 $29^{cd}$ only On the other hand, S (except G2) ins after 20

187* अनर्थं चैव निरतमर्थं चैव पराङ्मुखम् ।,

and thereafter read (for the first time) the lines of stanza 5 38 29 as follows

T1 G1 5 187*, $29^{cd}$, $29^{ab}$, $29^{cd}$ (repeated)
T2 187*, $29^{abcd}$
G8 187*, $29^{cd}$
G4 187*, $29^{ab}$
M1 2 187*, $29^{cd}$, $29^{ab}$
M8.5 187*, $29^{ab}$, $29^{cd}$, $29^{cd}$ (repeated)

21 $^{a}$) D1 T1 G (except G2) कश्चित् (for कांश्चित्) T1 G1 8 महाप्राज्ञो (for नरः प्राज्ञो). — $^{b}$) D3.4 लघूपायान्, T1 G1 M °यत्नान्, G8 4 °युक्तान्, G6 °मूल B2 4 महोदयान्, G8 महोदय — $^{d}$) D1 विधूयति, G1 8 दीर्घं°; G4 M8 चिरम° (for क्षिप्र°).

22 $^{a}$) K5 B5 D (except Dn D1.2.6) T G1.2.4 ऋजु°; Cd s as in text D8 सर्वत्र (for यः सर्वं). — $^{b}$) K1 D8–0 T2 प्र-, C8 as in text. — $^{c}$) K4 अपि° (for अपि) K2 स तूष्णीं, Cd तूष्णीकं (as in text). — $^{d}$) D5 अपि रज्यंति, D8 अनुरक्षंति, Cd as in text. K2 वै (for तं) — After 22, B D (except D1.7 9) T2 ins..

188* सुपुष्पित. स्यादफलः फलितः स्याद्दुरारुह° ।
अपक्व. पक्वसंकाशो न तु शीर्येत कर्हिचित् ।

[ = (var ) Ādi. App. I, No 81, line 1371.; = (var.) C 12. $5277^{cd}$–$5278^{ab}$. — (L 1) B1.1 D8 D8 10 पुष्पित स्यादफलित (for the prior half). C8 सफल सन् (for फलित° स्यात्). — (L 2) B1.8 °सद्गो (for °संकाशो) B (except B8) D2–6 8 T2 च (for तु) B1 सीदेत (for शीर्येत), and कस्य° (for कर्हि°) ]

23 = (var ) Śārṅgadharapaddhati 1394. — $^{ab}$) K2 transp चक्षुषा and कर्मणा — $^{c}$) B D (except D2) T2 G2 transp लोकं and य K4 लोके; Ca.d लोक (as in text) — $^{d}$) K2 (m as in text) स राज्यमधितिष्ठति, M तस्य (M1 2 ततो) लोक प्रसीदति.

24 $^{a}$) K2 यतस् (for यस्मात्). K4 D9 M त्रसति — $^{d}$) K4 D8 D1 T1 G1 2 transp. लब्ध्वा and स

25 $^{b}$) T1 G1 2 प्राप्यापि, G2.5 लब्ध्वा च (G5 अपि). G4 लब्धवान् (for प्राप्तवान्). K5 Dn D6 M कर्मणा (for तेजसा) — $^{c}$) D8 वज्र (for अभ्रं) T1 G1 अभ्येत्य (for आसाद्य). — $^{d}$) B4 D5 D1 अनयस्थित , G4 अपथे स्थित°; Cd s अनये स्थित (as in text)

26 $^{b}$) D1 आत्मन (for आदित.). — $^{d}$) Dn1 D1 6 8 G5 भूति(D1 °मि)वर्धिनी, Dn2 D9 G8 4 भूरिवर्धनी.

27 $^{b}$) D8–6 8 T G (except G2) om. च — $^{c}$) K1 4 B8 D8 4 °चेष्टते, D9 °चरते, Ca d s °वेष्टते (as in

य एव यत्नः क्रियते परराष्ट्रावमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ २८
धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ २९
अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३०
सुव्याहृतानि सुधियां सुकृतानि ततस्ततः ।
संचिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥ ३१
गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३२
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥ ३३
यदतप्तं प्रणमति न तत्संतापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ॥ ३४
एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३५
पर्जन्यनाथाः पशवो राजानो मित्रबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥ ३६
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ३७
मानेन रक्ष्यते धान्यमश्वान्रक्ष्यत्यनुक्रमः ।
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ॥ ३८ C. 5. 11 3 B. 5. 34 40 K. 5. 34 41

---

text) — d) K3 अग्नावाहितचर्मवत्

28 a) G3 M transp यत्न° and क्रियते B3 D1 4 कर्तव्य° (for क्रियते) — B3 om 28ab — b) B (B3 om) D (except D1. 2 7 9) T G परराष्ट्रविमर्दने — d) M स्वराष्ट्रपरिरक्षणे

29 a) K1 D1 2 7 9 S (except T3 G3, G4 damaged) राष्ट्र (for राज्यं) K2 (by corr, orig as in text) विंद्येत, D2 विदित, T2 वीक्षेत — After 29, G5 repeats 25 with v l [प्राप्यापि (for प्राप्तवान्), and अनवस्थित (for अनये स्थित)]

30 b) K2 B (except B1) Dn D5 6 10 T2 °जल्पत, Ca d s °सर्पत (as in text) T1 G (except G2) बालादपि सुभाषितं — d) S (except G2, T2 by corr, orig as in text) पांसुभ्य (for अश्मभ्य)

31 a) D5 D1 अव्याहृ(D1 °हि)तानि B Dn D5 D6 6 10 T2 सूक्तानि (B1 सुमत), T1 G (except G2) M महतां (for सुधिया) — b) M सुमतानि (for सुकृ°) — c) K4 विचिन्वन्, Cd s as in text D51 D1 वीर (for धीर) — d) K1. 2 D8 शलाहारी, K5 G2 4. 5 M सला°; D5 शिलाहार, Ca. d s as in text K1. 2 5 D8 शाल, G2 4 5 M सल; Ca d s as in text

32 =(var) Pañcatantra 3 64, =(var) Śārṅgadharapaddhati 1448, =(var) Vikramacarita (ed F Edgerton) SR 8 1 and JR 8 2 — a) K2 5 गाव पश्यति गधेन — b) K5 शास्त्रै (for वेदै°) K3 D5 D10 वाडवा, K5 D1 पंडिता, D8 4 च द्विजा° (for ब्राह्मणा°) — d) G3 सर्वजतव (for इतरे जना)

33 =C 12 2503 — b) T1 G1 दुर्दुघा, Ca d दुर्दुहा (as in text) — c) Dn D8 अथ वा (for अथ या) T1 G1 2 5 सुदुघा D1 गाव, D2 7 S (except T2 G1) भवति (for राजन्) — d) T1 G (except G2) transp नैव and ता K (K3 missing) D2 9 विनि(D9 °प्र)युजते, Dn D5 D8-8 10 वितुदत्यपि D1 नैव तद्धि नियुज्यते

34 =(var) C 12 2504 — a) T G (except G2) प्रणमते, Cd as in text. — b) T1 G1. 3-5 M उत (for अपि) K1. 2 4 D1-4 7-9 T2 G2 न तत्सतापमर्हति — c) G2 न तद्, G3 नते, M नमेद्, Ca d नत (as in text) D9 यत्स्वय सनमेद्दारु, T1 G1. 4 यत्स्वय नमते दारु — d) K1. 4 5 Dn D3. 4. 7 8 T2 न तत्सता(K4 °द्दा)पयत्यपि, S (except G2, G4 damaged) M न तत्सनामयेद्बुध

35 a) K (K3 missing) D2 G1 (before corr) 4 5 वीर, D9 धीमान्, G3 राजन् (for धीर) — b) K (K3 missing) D8 प्रणमेत, D9 यो नमेत (for सन°) — c) K3 B8 प्रणमति — d) D2 यो नमेत (for नमते यो)

36 b) K2 अमात्य°, K3 D (except D1 2 9) T2 G1 (after corr) Cap मन्त्रि°, T1 G1 (before corr) भृत°, Ca d s मित्र° (as in text) — c) T2 G3 4 M transp पतय and बाधवा G5 तथा वै (for पतयो) T1 G1 देवता, G5 पतय, Ca d बान्धवा (as in text)

37 b) K5 S (except T2 G4. 5) अभ्यासेन, Ca d s योगेन (as in text) — c) K4 (sup lin) लज्जया, D52 मृगया, Ca d s मृजया (as in text) — d) D1 शीलेन, T1 वृद्धेन (for वृत्तेन)

38 b) S (except T2 G2) रक्षेत् (for रक्षति) S अनुक्रमात्, Ca d अनुक्रम (as in text) C3 cites अनुक्रमण — c) K5 B D (except D9) T3 G1. 2 C3 अभी

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ३९
य ईर्ष्युः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखे सौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ४०
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ४१
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
एते मदावलिप्तानामेत एव सतां दमाः ॥ ४२
असन्तोऽभ्यर्थिताः सद्भिः किंचित्कार्यं कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ४३
गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ॥ ४४
जिता सभा वस्त्रवता समाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ ४५
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ ४६
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
लवणोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ४७
संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ४८
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
दरिद्राणां तु राजेन्द्र अपि काष्ठं हि जीर्यते ॥ ४९

---

क्षणदर्शन गाश्च (D7 T2 G1 °व) — d) K1 2 4 D9 G2 रक्षेत् (for रक्ष्या.) K (K8 missing) B1 5 Dn2 Ds2 D8 Cap कुचेलता, Dn1 कुलेन च, D9 G8 कुशीलता D1 2 स्त्रियो रक्ष्यत्यचेलता Ca d s cite अचेलता

39 a) B3 वृत्तिहीनस्य, D2 हीनवृत्तानां (for वृत्त°) — c) K2 4 5 B2 4 Dn2 Ds2 D6 7 अतेषु, D1 S (except T2 G2) अन्येषु (for अन्त्येषु) S (except T2 G2–4) च (for हि) D10 अंतावसायिजाताना

40 a) K2 ईर्ष्यालु, G3 5 यस्यैषा, G4 यं रक्ष्य (for य ईर्ष्यु) K5 B D (except Dn2 Ds D5 8) T2 G2 ईर्षु, Cd s ईर्ष्यु° (as in text) — b) K1 4 5 G4 transp रूपे and वीर्ये K1 4 D1 T1 G (G4 damaged) M1 (sup lin) कुलेन्वये (for कुला°) — c) G4 शीले (for सुखे) D1 °सस्कारे (for °सत्कारे) K (K8 missing) Dn2 Ds D5 6 8 10 T G5 M1 2 सुखसौभाग्यसत्कारे (K1 °सस्कारे) — d) G3 M तस्य चाधिर्निरतर

41 b) D2 तु (for च) T1 G1 4 5 विसर्जे° (for विवर्जे°) — d) Cd येन माद्येत तत्पिबेत्।

42 c) K1 (by corr) 4 5 B (except B3) D (for D9 see below) T2 G2 transp एते and मदा. K1 (orig) 2 D9 एते मदा मदांधाना — d) K1 त एव हि (for एत एव)

43 a) K6 प्रार्थिता, B1–5 Dn Ds D2–5 10 T2 -भ्य- (D10 -प्य) र्चिता, D1 G5 ह्यर्थिता Cn cites अर्थिता — b) B D (except Dn2 D1 2 7 9) T2 क्वचित्कार्यं (for किंचित्कार्यं) — After 43ab, B1 D5 6 T2 ins

189* तावन्न तस्य सुकृत किंचित्कार्यं कदाचन ।

— d) B1 D2 G3 इति; T1 G1 4 5 वापि, Ca d अपि (as in text)

44 a) S (except T2) एवात्मन°; Ca s आत्मवतां (as in text) D9 असत सतमात्मानं — b) D9 ** समा वयस्युत — cd) D9 आत्मनो हि गति. सत सत एव सतां गति°।

45 a) T1 G1. 3 5 transp जिता and सभा D1 वसु°, G4 शास्त्र° (for वस्त्र°) — b) K (K8 missing) B3 4 Dn D2–8 10 T2 G1 मि(K2. 4 5 D7 G1 मृ)ष्टाशा, B1 3 5 धनाशा, Ds G2 सुखाशा, D1 सधना (for समाशा) — d) G4 अर्थं° (for शील°)।

46 b) D2 3 9 तद्यदास्य, M तच्च यस्य (for °स्येह) K1 (after corr.) न विद्यते, (before corr) न विदति (for प्रणश्यति) G4 तद्यस्य विप्रण°. — d) Ds2 D9 10 च (for the second न)

47 b) B1 D6 8 9 गोरसोत्तम, B3 गोरस पर, Ca as in text — c) Hypermetric! K1 2 4 तैलप्राय; K5 B3–5 Dn T2 (m as in text) G2 तैलोत्तर (Dn1 °म); B1 2 तिलोत्तम (B2 °र) (for लवणोत्तर)

48 b) B1 D3 4 9 जना (for सदा) — d) D1 सदा (for सा च) — K4 repeats 48 with v l [सपन्नरस (for °तर), and नत (for क्षुत्)]

49 a) D9 गेहे, Ca लोके (as in text) — c) K1 D9 च (for तु) K2 काष्ठान्यपि हि जीर्यते; B Dn Ds D2–8 10 T2 G1 जीर्यन्त्यपि हि (B1 Ds1 D3–8 T2 तु) काष्ठानि; G3 दरिद्राणा महाराज — d) D1 ह्यपि (for अपि) K1 T1 G1. 2 5 काष्ठादि (K4 °नि), D1 काष्ठोपि, M काष्ठ च (for काष्ठं हि) M जीर्यति (for जीर्यते) K3 B1–5 दरिद्राणा तथोदरे (K2 °णा तु भारत), K5 G3 4 काष्ठमश्म च

अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५०
ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥ ५१
इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५२
यो जितः पञ्चवर्गेण सहजेनात्मकर्शिना ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५३
अविजित्य य आत्मानममात्यान्विजिगीषते ।
अमित्रान्वाजितामात्यः सोऽवशः परिहीयते ॥ ५४
आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५५
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५६
रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशलः सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥ ५७
एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ५८
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैः प्रसृतो बालः सुदुःखं मन्यते सुखम् ॥ ५९ C. 5 1155 B 5.34 61 K. 5.34 62

---

($G_3$ °ष्टमश्मापि, $G_4$ °ष्ट वाश्मापि) जीर्यते $B_{1.5}$ Dn $D_8$ $D_{2-8}$ 10 $T_2$ दरिद्राणा महीपते Cd cites 49[d] as in text. — After 49, $K_2$ $D_7$ ins

190* यथा यथा महत्तत्र विस्तरश्च यथा यथा ।
तथा तथा महद्दुःख सुखं तु न तथा तथा ।

50 [a]) $B_{1.2.5}$ Ca अवृत्ते, $T_1$ $G_{1-4}$ M अशनात्, Cd s अवृत्ति (as in text) $K_{2.4.5}$ $D_{1-4.7.10}$ $T_2$ अ($D_1$ प्र)वृत्तिभयम् $G_5$ अशनाद्भयं तु मंदानां (hypermetric) — [c]) $D_1$ तु सत्वाना, $D_2$ मनुष्याणा, $G_5$ तु सर्वेषां (for तु मर्त्याना) — [d]) $K_1$ $D_9$ अव($D_9$ °व)मानान्महद्भय, M ($M_1$ *inf lin* as in text) अवमानभय भयं

51 [a]) $D_{1.9}$ ऐश्वर्यप($D_9$ °म)दमाविष्टा, S ऐश्वर्यमत्त ($G_2$ °मद) पापिष्टो, Cn s °मद पापिष्टो, Cd as in text — [b]) $K_{1.2.4}$ $D_9$ मदा मद्य($D_9$ -व्यान)मदादय, $D_2$ मद्यपान°, S मधु($T_2$ °द्य)पानमदादपि — [c]) $T_2$ तु (for हि) M ऐश्वर्यमदमत्ताना — [d]) $K_{1.2.4}$ $D_{1.2}$ विमाद्यति ($D_2$ °ते), $D_9$ विरुध्यते (for विबुध्यते) $D_8$ नोपतित्वाव-बुध्यते, $T_1$ G नाव($G_4$ न हि)तिष्ठति ($G_2$ °ष्ठेत) कुत्रचित्, M गतिरूर्ध्वा न विद्यते — After 51, $G_3$ *repeats* 51[cd], with v l, as in M.

52 [b]) $K_2$(m as in text) असंयुते, Ca d अनिग्रहै° (as in text) — [c]) $D_1$ नीय°, $D_9$ भ्राम्य°, $G_{1.3.4}$ M तप्य° (for ताप्य°) $D_1$ $G_4$ लोके (for लोको)

53 [b]) B Dn $D_5$ $D_{1-4.7.8}$ $T_2$ Ca आत्मकर्षिणा, $D_{6.8}$ अनु°, $D_9$ अप°, $D_{10}$ °वर्तिना

54 =(var) 5 127 27 (cf. v l 55) — [a]) $B_{3.4}$ $Dn_2$ $D_{3.4.10}$ ययात्मान, $G_3$ यमा° (for य आ°) — [c]) K $D_{2.7}$ $G_2$ अजितात्मा, $B_1$ अमित्रात्मा, $D_1$ नमात्यान्वि- (for अमित्रान्वा) $D_9$ अमित्राश्चार्थतोमात्य°

55 =5 127 28 (cf v l 54) — [b]) $K_1$ (before corr as in text) उपदेशेन, $B_{2-5}$ $T_2$ (before corr) Cn द्वेष्यरूपेण, $B_1$ Dn $D_{3-6.8}$ द्वेष°, $D_E$ देशे कालेन, $G_{3.5}$ शम°, Ca d s देश° (as in text) ꕥ Ca दृष्टरूपेणेत्यसम्यक् । ꕥ — [c]) M मित्राणि (for अमात्यान्) $M_{1.3.4}$ अमात्यान् (for अमित्रान्) — [d]) $K_{1.4}$ क्रमेण, $K_2$ ततोन्य (for न मोघ) $D_9$ न स मोघं जिगीषति, S (except $T_2$ $G_2$) नियत° कुरुते वशे, Cs as in text

56 =5 127 29 — [a]) $K_5$ B D (except $D_{1-4.7}$) $T_2$ $G_3$ जितात्मान (for °मात्य) — [b]) $K_1$m (orig as in text) $D_5$ $D_{10}$ Cs विकारिण ($D_5$ Cd.s °णा), Ca विकारिषु (as in text) — [c]) $D_{5.6.8}$ वीर, $D_9$ शूर, S (except T $G_{1.2}$) दांत (for धीर) $D_5$ $D_{10}$ अभ्यस्त (for अत्यन्त)

57 =(var) C 3 13942 — [a]) K ($K_3$ missing) $D_{1.7.9}$ $G_2$ सर्वं, $D_2$ सृष्ट, $T_1$ $G_3$ M दृष्ट, $G_5$ दृष्ट (for राजन्) — [b]) $T_1$ $G_1$ यता च, $G_5$ यता (for नियन्ता) $D_{10}$ एव (for अस्य) $D_9$ अस्य वाहा, $T_1$ $G_{1.3.5}$ आहुरश्वान् (for अस्य चाश्वा) — [c]) $K_{1.2.5}$ $D_3$(orig) 9 कुशलै°, $K_4$ B $Dn_2$ $D_5$ $D_{1-7.8}$(by corr) 10 $T_2$ $G_2$ कुशली (for कुशल) $D_9$ $G_5$ सदाश्वै — [d]) $G_5$ कृती (for सुख) $K_2$ (orig as in text) $D_1$ M पथीव, $T_1$ $G_{1.5}$ स एव, $G_3$ सदैव (for रथीव) $D_5$ $G_3$ वीर (for धीर)

58 =(var) 5 127 26 — [a]) $D_3$ अपि गृहीतानि, M (*inf lin* as in text) अनुगृही° — [c]) $D_1$ अयनार्हा (for अविधेया) — [d]) $B_3$ $D_5$ $D_{1.9.10}$ हया पथिषु सारथिं, S (except $T_1$ $G_2$, $G_4$ damaged) सरथ सारथिं हया

C. 5. 1156
B. 5. 24 62
K. 5. 34 63

धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६०
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ६१
आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६२
क्षुद्राक्षेणेव जालेन झषावपिहिताावुभौ ।
कामश्च राजन्क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ६३
समवेक्ष्येह धर्मार्थौ संभारान्योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ६४
यः पञ्चाभ्यन्तराञ्शत्रूनविजित्य मतिक्षयान् ।
जिगीषति रिपूनन्यान्रिपवोऽभिभवन्ति तम् ॥ ६५
दृश्यन्ते हि दुरात्मानो वध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ६६
असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा-
त्तस्मात्पापैः सह संधिं न कुर्यात् ॥ ६७
निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ६८
अनसूयार्जवं शौचं संतोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ ६९

---

59 $^{a}$) ꣸Ca आद्यन्तमिति च पाठ । ꣸ D8 अर्थवत्, Ca d.s अर्थत (as in text). — $^{b}$) B1 3 5 Ds2 D7 अनर्थवत्, Ca.d.s as in text. — $^{c}$) M3-5 इन्द्रिय- K2 5 D7 G2 प्रसृते ; K4 B Dn Ds D8-6 8 10 T2 अजिते , T1 G1 3-5 प्राकृत°, Cd s प्रसृतः (as in text). — $^{d}$) T1 G1 स (for सु-)

60 $^{c}$) D7 श्रीधनप्राणदारेभ्य°, T1 G (except G2) M1.2 श्रीप्राणराष्ट्र°, M3 4 °धान्येभ्य°. — $^{d}$) K (K3 missing) सोवश. (for क्षिप्रं स), cf. 54$^{d}$. G5 परिभूयते (for °हीयते)

61 $^{d}$) D9 G2 (by corr ) भ्रश्यतीह (for भ्रश्यते हि) B1.3 भ्रश्यतीह न सदाय

62 $^{a}$) K2 आत्मनो मानमन्वि°, D2 G3 आत्मान ह्या(G3 आ)त्मनान्वि°. — $^{b}$) D8 यत., D1 रत°; T1 G (except G2) युतं , M हितै° (for यतै ) K (K3 missing) आत्मानमवसादयेत् Ca cites 62$^{a}$, and Cd cites 62$^{ab}$ as in text. — 62$^{cd}$ =(var ) 1 67 7$^{ab}$, Gītā (Vulg.) 6 5$^{cd}$ — $^{c}$) K2 आत्मनो यधुरात्मैव; K4 5 B D (except Dn2 D1-4 8) T2 आत्मा ह्येवात्मनो बधु — $^{d}$) M3-5 गति (for रिपु ) K3 4 5 G2 रिपुरात्मैव चात्मन°. — After 62, K4 5 (om line 2) B (B1 3 4 om line 2) D (D2 marg ; D9 om line 1) T2 ins

191* बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जित ।
स एव नियतो बन्धु स एव नियतो रिपु ॥

[ (L. 1) =(var.) Gītā (Vulg ) 6 6$^{ab}$ Dn2 D1 transp एव and आत्मा — (L 2) K4 नियमो, D8 D3 (by corr ) 6.9 अनियतो (for the second नियतो) ]

63 =(var ) 5 127 30 — $^{a}$) K2 (m as in text) छिद्राक्ष्येण; Ca.d s as in text Dn1 च, D8 G1 5 एव; Ca n s द्रव (as in text) — $^{b}$) K1 4 Dn D3 D1.14 (by corr as in text) 7 9 10 G2 Ca d s उरू; Cap उभौ (as in text). — $^{c}$) T1 G1 5 द्वौ (for तौ) D8 प्रदानं; D1 G3 विज्ञानं, Ca d as in text. K2 तौ ज्ञानमवलुप्त°.

64 $^{a}$) D3 प्रसमीक्ष्य; Ca d.s समवेक्ष्य (as in text). K1 2 5 D7 T1 G1 हि (for इह). — $^{b}$) D3 4 सभा राज्ञोधि°.

65 $^{a}$) G3 पंचाप्यंतरजाञ्छत्रून् — $^{b}$) G4 विनिर्जित्य (for अविजित्य). B Dn D8-6 10 T2 Ca p s मनोमयान्; G3 M मनीषयान्, Ca d as in text — $^{c}$) G1 जिगीषते K2 विजिगीषति वै बाह्यान् — $^{d}$) G3 M आपदो; G1 नृपांश्च (for रिपवो) G4 M3 4 (inf lin. as in text) अपि (for अभि-) K2 सोचशास्तैर्विजीयते.

66 K2 om 66–71. — $^{a}$) D2 9 च (for हि). B2 4 Dn D1 5.7.8 महा° (for दुरा°) — $^{b}$) K1 वध्य- कामा°, B D1 3.4 6.9 G2 वध्यमाना°, T1 G1 5 वध्यंते हि; M मुह्यमाना°. — $^{c}$) K1 अनैश्वर्यात् (for अनीशत्वात्) — $^{d}$) K1 4 5 D1 2 7 G2 चित्तविभ्रमै., B (except B1) D8 D8-6 10 T2 राज्यविभ्रमे, T1 G1 3-5 M °विप्लुता.

67 =(var ) C 12. 2797. — K2 om. 67 (cf v 1 66) — $^{b}$) D1 स्पृशति Dn2 D10 T1 G3 M1 2 मित्रभावात्, D9 अपि भारत (for मिश्र°) — $^{c}$) Dn2 G1 M2 मित्र°; D8 (m as in text) मिथ्या° (for मिश्र°) — $^{d}$) D7 T1 G1 सम (for संधिं)

68 K2 om. 68 (cf v. 1. 66) — $^{a}$) K4 अविजित्य तत शत्रून् — $^{b}$) D6 G3 4 (by corr. as in text) M1 °प्रयोजनात्, Ca d s as in text.

69 K2 om 69 (cf v 1 66) — $^{b}$) D1 नाभिमानिता (for प्रिय°) — $^{d}$) T1 G1.5 नैष मार्गो (for न भवन्ति)

आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥ ७०
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७१
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥ ७२
वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ७३
अभ्यावहति कल्याणं विविधा वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७४
संरोहति शरैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ७५
कर्णिनालीकनाराचा निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ७६
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नाममर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ ७७
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपाचीनानि पश्यति ॥ ७८
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ७९

C. 5 1176
B. 5. 34. 82
K. 5. 34 83

---

70 K2 om 70 (cf. v 1 66) — [a]) M1 (*inf lin* as in text) 2-8 अमरम (for अनायास ) K1 आत्मज्ञान-समारम — [b]) Dn सूक्ता, Cn d s गुप्ता (as in text) D1 G2 गुप्तदान च, D3 4 9 मधुरा दान, Cs as in text D2 वाक्शौचमधुरादान — [d]) K5 एते हि, D1 G1 एतान्, G3 एषाम् (for एतानि) K1 4 B1. 2 4 5 Dn1 Ds2 D7-10 M5 अतेषु, K6 अन्तेषु, B3 G4 अन्येषु, D1 T1 G1 3 एतेषु, G5 एतानि, Ca d n अन्त्येषु (as in text) D3 4 9 कुरूत्तम (for भारत)

71 K2 om. 71 (cf v 1 66) — [b]) D1 बुध (for बुधान्) K1. 4 5 D3-6 8-10 विहिं(K1 D3 °ह)सत्यबुधो बुधान्, M हिंसयन्त्यबुधा बुध

72 [b]) K1 राज्ञो, Cs राज्ञा (as in text) — [c]) K2 D2 च (for तु) — [d]) Dn1 D1 T1 G1 3 बल° (for गुण°)

73 [a]) K (K3 missing) D7 G2 मे, D2 M वै (for हि) D2 9 G3 5 नृपते — [c]) K2 अर्थ्यं वचो, K5 B3 अर्थयुक्त K5 च चित्र, Ds पवित्र, Cs विचित्र (as in text) — [d]) K5 B1 5 D7 8 G2 भाषित (for भाषितुम्)

74 D2 om 74-75, B1 om. 74[ab] — [a]) B3 अभ्याहरति, G5 असौ वहति — [b]) K1. 4 B2-4 Dn2 D1 2 विविध, K2 5 D7 सतत (for विविधा) — [c]) D1 सा वै दुर्भाविता; G1 सुभाषितेतरा (for सैव दुर्भा°) — [d]) G4 M °कल्पते (for °पद्यते)

75 =(var ) C 13 4987, =(var.) Pañcatantra 3 112 — D8 om. 75 (cf v 1 74) — [a]) K1 4 5 D1 2 G2 द्रुपुणा (for शरैर्) K2 B Dn Ds D3-7 9 10 T2 रोहते सायकैर्विद्ध — [b]) D2 (after corr as in text) 4 व्रण (for वन) — [c]) K2 5 Ds D1 बीभत्सु (D1 °त्सु ), Ca d s बीभत्स (as in text)

76 =C 13 4988 — [a]) B D (except Dn Ds D2 8) G2 3 कर्णिनालीकनाराचान्, Ds2 D9 °नालिकनाराचा , Ca d as in text Cn cites कर्णी नालीक, Cs कर्णि नालिका नाराचा — [b]) K1 m T G1 5 M नि सरति, G3 4 निष्पतति, Ca निर्वहति, Cd s as in text D3 4 शरीरिण (D4 °णा), G3 शरीरगा — [c]) D1 °शर (for °शल्य ) Ds तेन (for तु न) G1 न निर्गंतु (for न निर्हर्तुं) K2 न वाक्शल्यस्तु निर्हर्तुं — [d]) K2 स्याद्दूरो (for हृदिशयो) — K2 repeats 76[cd] in marg with v 1 as above.

77 =(var ) 1 82 11, =(var ) C 2 2192, =C 12 10999, =(var ) B 13 104 32 — [a]) K1 (after corr, as in text) नि सरति (for निष्पतन्ति) — [b]) D6 राजन्हत (for यैराहत ) — [c]) D3 (before corr, as in text) ते, D10 वा (for ना ) K2 D3 वै, D2 ये (for ते) — [d]) D (except D1-4) T2 G3 परेभ्य (for परेषु)

78 =(var ) C 2 2679, =(var ) Śukasaptati (*text simpl*), p 29 — [d]) B Dn D3-6 8-10 T2 G2 Cs ap अपा(B1 D4 6 T2 °वां)चीनानि, T1 G1 3-5 M अपनीतानि, Ca d as in text K1 2 (m as in text) 4 न स वेत्त्यात्मनो हित — After 78, K2 ins 192* (cf. v 1. 79)

79 =(var ) C 2 2680, =(var ) Śārṅgadhara paddhati 1319, =(var ) Pañcatantra (*text simpl* ed Kielhorn and Bühler) 3 184 — [b]) K1 D8 T1 समुप°, K2 D1 7 G (except G2) पर्युप°, M2 प्रत्यव°

C. 5. 1177 B. 5. 34. 63 K. 5. 34. 84

सेयं बुद्धिः परीता ते पुत्राणां तव भारत ।
पाण्डवानां विरोधेन न चैनामवबुध्यसे ॥ ८०
राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥ ८१
अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८२
आनृशंस्यादनुक्रोशाद्योऽसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ८३

इति श्रीमहाभारते उद्योगपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## ३५

धृतराष्ट्र उवाच ।
ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ १
विदुर उवाच ।
सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे एते समे स्यातामार्जवं वा विशिष्यते ॥ २
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ३
यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते ।
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ४

---

(for प्रत्युप°) — c) G3 नयरूपेण (for नयसकाशो) — d) B3 G5 उप° (for अप°) M बुद्धिमाक्रम्य तिष्ठति — T1 G1 4 5 ins after 79 K2, after 78

192* न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥
[=(var.) 5. 35. 33 — (L. 2) K2 सद्बुद्ध्या ये जयति (for बुद्ध्या संयो°)]

80 b) B D T2 G2 3 भरतर्षभ (for तव भारत) — c) D3 निरो° (for विरो°) — d) K2 5 तत्त्वं; D8 न त्व (for न च) K2 5 नैव, D8 चैव, B Dn D2–4 7 10 T G एना(T1 G5 °ता)न् (for एनाम्) K1 अवरुध्यसे, D5 D10 अवमन्यसे, D7 G2 5 नावबुध्यसे, D8 अनुबुध्यसे

81 $81^{ab}$=(var.) 5. 88. 21$^{ab}$, =line 1 of 168* — a) B3 4 Dn1 D5 D1 5 6 8 G4 5 M राजलक्षणसपन्न° (D1 °युक्त) — b) D8 अधिपो (for अपि यो) M5 सं- (for यो) — c) D8 (sup. lin.) ० पुत्र, G4 प्रेष्य°, C5 शिष्य (as in text) Ca cites शमिता T1 G चैव (G2 ते तु) (for सोऽस्तु). K1 4 5 शिष्यस्ते शाधि तस्मात्त (K1 °त्व)

82 a) K (K3 missing) D1–8 G2 अतीत्य, Ca अतीव (as in text) K2 स च, D9 शक्त° (for सर्वान्) — b) Cn भागधेये, C5 °देय (for °धेय-) — c) D1 पूजया (for प्रज्ञया)

83 a) K2 B D (except D8 9) T2 G2 Ca d s transp आनृशंस्यात् and अनुक्रोशात् — d) D2 T1 G1 4 5 तितिक्षते — Ca reads $83^{cd}$ as in text

Colophon. K3 missing — *Sub-parvan* K1 4 संजययान, B Dn D5 D8–6 8 10 T2 M प्रजागर; G1 विदुरप्रजागर — *Adhy. name* K1 2 5 D1 2. 7 G3 विदुरवाक्य, K4 विदुरवावर (sic), T1 G1 हिताहितविवेक; M हितोपदेश° (M4 °शं). — *Adhy. no.* (figures, words or both) K1 D5 33, K2 2 (of प्रजागरपर्व?), D6 (sec. m.) 31, D7. 8 S 34 (M 35) — *S'loka no.* K1 78, K5 83, Dn D8 86, G5 87, M5 84.

## 35

☞ This adhy. is missing in K3 (cf. v. l. 5. 32. 15)

1 K4 om. 1 — d) K1. 2 (before corr. as in text) B (except B4) D1 हि, D9 प्र (for इह). K4 G1 भापते, D1 शस मे

2 a) D8 4 9 G4 च, D7 यत् (for वा). K1 4 G1. 4 M सर्ववेदेषु वाज्ञा(K4 °चात्मा)नं — b) D6 (m. as in text) °तीर्थेषु (for °भूतेषु). K2 B3 D2 G1 वा (for च) — c) B Dn D5 D6 6 8 T2 स्वेते, D8 4 ह्येते; D10 चैते (for एते) G (except G1) M उभावेतौ समौ स्यातां — d) K1 2 D1 10 G2 Cd तु, K4 5 Dn1 D7–9 च; Ca वा (as in text)

3 b) K2 स्वेषु तेषु च, D7 तेषु भारत (for सततं विभो) — d) G4 अवाप्नुहि (for °प्स्यसि)

4 b) K5 B4 Dn D5 D6 7 10 T2 लोके प्र (for लोकेषु) T1 G (except G2) M लोके भवति भारत

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५

केशिन्युवाच ।

किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन ।
अथ केन स पर्यङ्कं सुधन्वा नाधिरोहति ॥ ६

विरोचन उवाच ।

प्राजापत्या हि वै श्रेष्ठा वयं केशिनि सत्तमाः ।
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥ ७

केशिन्युवाच ।

इहैवास्स्व प्रतीक्षाव उपस्थाने विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ ८

विरोचन उवाच ।

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टासि संगतौ ॥ ९

सुधन्वोवाच ।

अन्वालभे हिरण्मयं प्राह्रादेऽहं तवासनम् ।

C 5 1195
B 5 35 14
K 5 35 15

— ᵉ) D2–4 T2 पुरुषव्याघ्र, G3–5 M °श्रेष्ठ (G1 M1 °श्रेष्ठ)
5 ᵈ) K5 महात्मन, D8 सुधन्वन — After 5, Dn D2 (marg) 3 4 5 (marg) 8 T2 ins

193* स्वयंवरे स्थिता कन्या केशिनी नाम नामत ।
रूपेणाप्रतिमा राजन्विशिष्टपतिकाम्यया ।
विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह ।
प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ।

6 ᵃ) D5 ब्राह्मण K3 m D3 7 वै, M3 4 स्विह, Ca d s स्वित् (as in text) — ᵇ) G1 (before corr) 5 च, G3.4 स्यु (for स्वित्) — ᶜ) Dn1 D3–6 T2 (before corr) अस्य (for स) K4 G2 पर्यंके, C9 पर्यंक (as in text) S (except G2, T2 by corr) इद (M2–5 इम) व्यवस्य पर्यंक — ᵈ) K1 नाधिगच्छति, K4 नानु°, D1 ह्यधि°, D2 वाधि°, S (except T2 G2) -प्यधिरोहतु

7 After the ref, K2 reads 9 — ᵃ) Dn1 D1 9 M2 प्रजापत्या (D9 °त्या) B3 Dn D8 4 T2 तु वै, D8 -थ वै, D9 G (except G2) M वय (for हि वै) — ᵇ) D9 सदा, S (except T2 G2) सर्वे, Cd वय (as in text)

8 ᵃ) K2 अद्य; K3 m 5 B Dn Ds D3–8 10 Cap आवां, K4 आस्य, D1 अप्सु, D9 आस, Ca d आस्स्व (as in text) D9 प्रतीक्षाम, Cd.s as in text S (except T2 G2, G4 damaged) इह त्व वस वै भोगा (T1 G1 °ग्या) — ᵇ) K1 2 4 D9 उपस्थान, T1 G3.4 M त्वदर्थां मे; G1 स्वधर्मा मे, G5 स्वार्थामेह, Ca d s उपस्थाने (as in text) — ᵈ) K1 4 D9 वा (for वां)

9 K2 om the ref. and reads 9 after the ref. of 7 — ᵇ) M5 यथार्थं (for यथा त्व) G5 अभि (for भीरु) M वक्ष्यसि (for भाषसे) — ᶜ) S (except T2 G2) उभौ (for एव) — ᵈ) K2 M द्रक्ष्यसि (for द्रष्टासि) — After 9, K1 5 B (except B1) Dn Ds D1 3 5–8 T2 G1 ins.

194* अतीतायां च शर्वर्यामुदिते सूर्यमण्डले ।

[ K1 D1 प्रभाताया (for अतीताया) D7 ततो रात्र्यां व्यतीताया (for the prior half) ]

Dn1 D3 7 8 T2 cont K4 D2 4. 9 G2 ins after 9

195* अथाजगाम त देश सुधन्वा राजसत्तम ।

K4 Dn1 D2–4 7–9 T2 cont.

196* विरोचनो यत्र विभो केशिन्या सहित· स्थित ।

[ D2 सह सगत (for सहित स्थित) ]

— Dn1 D2–4 8 (all om. line 1) T2 cont K1 5 B (except B1) Dn2 Ds D1 5 6 ins after 194* D10 (which om 9ᶜᵈ) ins after 9ᵃᵇ

197* सुधन्वा च समागच्छत्प्राह्रादिं केशिनीं तथा ।
समागत द्विज दृष्ट्वा केशिनी भरतर्षभ ।
प्रत्युत्थायासन तस्मै पाद्यमर्घ्यं ददौ पुन ।

[ (L 1) B2 4 5 Dn D8 D5 सुधन्वान (for °न्वा च) K1 वै, K2 D6 त, D1 तु, D10 ता (for च) K1 प्रति (for तथा) K5 प्रल्हादिमवनीपतिं, Dn D8 D5 6 प्रान्हा(D8 D6 °ल्हा)दि· केशिनी तथा — (L 2) K1 5 तमा° (for समा°) — (L. 3) D5 D1 पाद्या(Ds2 °दा)र्घ्ये प्र(D1 च)ददौ (for पाद्यमर्घ्यं ददौ) G4 अनुत्तम (for ददौ पुन) ]

— T1 G3 5 M ins after 9 G1, after 194*

198* एतस्मिन्नन्तरे तत्र सुधन्वा प्रत्यदृश्यत ।
इति होवाच वचन विरोचनमनुत्तमम् ।

10 S (except T G2 M5) om the ref — ᵃ) D3 4 9 समालभे, D7 अन्वारेभे, Ca d as in text K2 अन्वारुहेय रम्यं वै, S (except T2 G2) आस्स्व तल्पे हि सौवर्णे — ᵇ) K4 5 Ds1 D3 4. 6 T2 G3 4 M प्राह्लादे; Dn1 Ds2 D1 9 T1 G1 प्रह्लादे B Dn D5 10 T2 ते (D5 T2 ह) वरासन; Ds D3 4 तव चासन, S (except T2 G2) ब्राह्मण-स्त्वह — ᶜ) K5 समत्व, D1 एव त्व, S (except T2 G2) एकात, Ca.d s एकत्व (as in text) K2 5 अनुसपन्नो, Ca d as in text — ᵈ) K4 5 B D (except Dn D1. 2 7 8) T2 आसेह, Ca d आसेय (as in text)

C. 5. 1125
B. 5. 35. 14
K. 5. 35. 15

एकत्वमुपसंपन्नो न त्वासेयं त्वया सह ॥ १०

विरोचन उवाच ।

अन्वाहरन्तु फलकं कूर्चं वाप्यथ वा बृसीम् ।
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ ११

सुधन्वोवाच ।

पितापि ते समासीनमुपासीतैव मामधः ।
बालः सुखैधितो गेहे न त्वं किंचन बुध्यसे ॥ १२

विरोचन उवाच ।

हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ १३

सुधन्वोवाच ।

हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ १४

विरोचन उवाच ।

आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।
न हि देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ १५

सुधन्वोवाच ।

पितरं ते गमिष्यावः प्राणयोर्विपणे कृते ।

---

11 G2 om 11$^a$–13$^b$ — $^a$) K1 5 D2.8 अथा(D2 °थ्या)हरतु; B Dn D8 D5 9 10 तवाहंते तु, T2 हरतु कूर्चं (for अन्वाहरन्तु) Cd n cite अथ K1 D2 7 8 T2 फलकीं, B (except B4) D5 फलकी, Ca.d s as in text K5 D3.4.9 तवाहं फलक मह्यन्, D1 अथाह दत्तफलक, T1 G (G2 om) M हरन्तु फलक (T1 G1 M4 5 °का, M8 °कौ) पूर्चं — $^b$) T2 वर्ही; Ca d s कूर्चं (as in text) K1.2 5 D7 वृर्षी, K4 B1-3 5 Dn1 D5 D3 4 6 9 10 Cs वृषी, B4 D6 Cn वृमी, D1 2 8 T2 Ca d वृर्षी (for बृसीम्) T1 G (G2 om) M तथा वृ(T1 -ष्य, M2-5 वृ)स्सतृणानि च — After 11$^{ab}$, D1 ins

199* न मत्तो ह्यधिकोऽसि त्वं गुणतो जन्मतोऽपि वा ।

— $^c$) Dn2 transp सुधन्वन् and न — $^d$) K5 समामितु; D1 ममासन, D10 सहा°, Ca समा° (as in text) S (except T2, G2 om, G4 damaged) यदासीथा (T1 G8 °सिद्धा) मया सह.

12 G2 om 12 (cf. v. l 11), Dn1 om 12–13. — After the ref, K5 D1 8 ins the foll stanza (which is reproduced in some of the old printed ed)

200* पितापुत्रौ महासीता द्वौ विप्रौ द्वौ च पार्थिवौ ।
द्वौ चैव वैश्यौ शूद्रौ च न त्वन्यावितरेतर ॥

[ (L 1) Bom and Kumbh ed. क्षत्रियावपि (for द्वौ च पार्थिवौ). — (L. 2) D1 द्वावेव वैश्यौ द्वौ शूद्रौ (for the prior half) ]

— $^a$) B D (except D1.2 7) G1 (before corr as in text) M4 हि (for अपि) M (except M5) सहा° (for समा°) — $^b$) K2 उपासीते च, T1 G1 उपासीदति, G2 4 M उपोपासीत (for उपासीतैव) G5 विपणा चास्तु केशिनी. — $^c$) K4 D2 सुगोपितो (for सुखैधितो) S (except T2, G1 om) बालो गृहेषु सुस्थितो — $^d$) K1 D1 बोधिपि; K4 D9 जानासि, D1 बुध्यसि (for किंचन) K1 4 D1.7 9 किंचन (for बुध्यसे). K2 5 बुध्यसे त्व न किंचन, G1 न त्व किं नावबुध्यसे.

13 Dn1 om 13 (cf v l 12), G2 om 13$^{ab}$ (cf v l 11) — $^a$)=14$^a$ G4 चैव गाव, G5 च गवाश्वान्; M मधुपर्कं (for च गवाश्व) — $^b$) K5 D1 9 असुरे पुन (for असुरेषु न) K1 D7 8 च (for नः) — $^c$) K3 D1 विपण (for विपणे) T1 G4 M (M1 inf lin as in text) तस्य नः (T1 स°) कृत्य (for विपणे तेन) — $^d$)=14$^d$ G2 प्राज्ञ, G5 प्राज्ञान् (for प्रश्न) K2 Dn1 D1 m 10 G3 पृच्छामहे (G3 °म ये), M1 (sup lin) 2 गच्छाव ये (for पृच्छाव ये) K2 विशु, Dn1 D10 विम (for विदु°). Cd cites ये विदु°

14 T1 M4 om 14, D9 om. 14$^{bcd}$. — $^a$)=13$^a$. G3 सुवर्णं (for हिरण्य) G3 M1-3 चैव गाव°; G5 च गवाश्वान् (for च गवाश्व) — $^b$) K1 Dn1 D8 D1 7.8 T2 G3 M2 तथा (for तव) G5 विशेषत (for विरोचन) — $^c$) G1 5 M (M1 inf lin as in text, M3 om.) प्राणयोरेव न कृत्य — $^d$)=13$^d$. K2 पृच्छामहे; G1 5 M1 (inf lin as in text) 2 3 गच्छाव ये.

15 $^a$) K1 B1 D7 T2 तौ वै, K2 तौ च, K4 त नौ (for आवां) D9 आवा क्व नु गमिष्याम (sic), T1 G1.3-5 M ते वय (G4 तावावा) क्व गमिष्यामः — $^b$)=16$^b$. G1 5 M (M1 inf lin as in text) एवमंतरे (for विपणे कृते) — $^c$) K5 B D (except D1 7-9) तु; T2 नु (for हि). D2 अवस्थाता, T1 G1 2 4 5 M (M1 inf lin as in text) सस्थान, G3 अधिष्ठान (for अहं स्थाता) — $^d$) T1 मनुष्येष्विह तीमत., G1 3 5 M (M1 inf lin. as in text) मनुष्येष्विह (G1 5 °षु हि, G3 °षु च) तिष्ठत. (G1 °ति)

16 K4 om 16 — $^a$) D9 प्रह्लाद नौ (for पितर ते).

पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ १६

प्रह्लाद उवाच ।

इमौ तौ संप्रदृश्येते याभ्यां न चरितं सह ।
आशीविषाविव क्रुद्धावेकमार्गमिहागतौ ॥ १७
किं वै सहैव चरतो न पुरा चरतः सह ।
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना ॥ १८

विरोचन उवाच ।

न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
प्रह्लाद तत्त्वां पृच्छामि मा प्रश्नमनृतं वदीः ॥ १९

प्रह्लाद उवाच ।

उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने ।
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता ॥ २०

सुधन्वोवाच ।

उदकं मधुपर्कं च पथ एवार्पितं मम ।
प्रह्लाद त्वं तु नौ प्रश्नं तथ्यं प्रब्रूहि पृच्छतोः ॥ २१ C. 5. 1208 B. 5. 35. 27 K. 5. 35. 28

T1 G2.5 गमिष्याम — b)=15b S (except T2 G2) एवमतरे (for विपणे कृते) — c) D7 तु (for हि) K1 पुत्रस्यापि हिते प्रश्न; K5 पुत्रस्य हेतोरपि स , S (except T2 G2) अपि पुत्रस्य चेत् (G4 वै) हेतो — d) K1 B1 3-5 Dn2 D2 5-7 9 10 T G1 5 प्रह्लादो (as in text), the rest प्रह्रादो — After 16, K2 4 5 D (for D2 see below) T1 (om. line 2) 2 G (G4 damaged, all G om line 2) M1 (om line 2) ins

201* विदुर उवाच ।
एव कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा ।
विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ।

[ (L. 1) K2 5 T1 G3-5 M1 om the ref K2 5 D7 T1 G M1 एवमुक्त्वा गतौ तौ तु (K2 5 ततश्चोभौ, D7 गतौ शीघ्र), K4 D5 D10 एव कृतप्राणपणौ, D1 एव निपणमास्थाय, D5 एव कृतपणौ तौ तु, D8 T2 एव कृत्वा तु तौ क्रुद्धौ (for the prior half) K2 5 प्रह्लाद प्रतिजग्मतु°, D1 प्रह्लादस्यातिक गतौ, D3-6 8-10 T2 क्रुद्धौ (D3.4 8 उभौ, D9 तौ तु) तत्राभिजग्मतु°, D7 प्रह्लादस्य निवेशन, T1 G (G4 damaged) प्रह्लाद दितिनदन (for the posterior half) — (L. 2) D5 D8 6 प्रह्लादो D7 प्यत्र (for यत्र) K2 5 विरोचनस्तु प्राह्लादि सुधन्वाङ्गिरसश्च य (K5 स ), D1 सुधन्वान [तु?] दृष्ट्वैव प्रह्लादो वाक्यमब्रवीत् ]
— On the other hand, D2 ins after 16

202* इत्युक्त्वा जग्मतुस्तौ तु प्रह्लादस्य गृह प्रति ।
गत्वा त ददृशुस्तत्र दैत्यानामीश्वरं तदा ।
तावागतावभिप्रेक्ष्य प्रह्लादो विस्मितस्तदा ।
पप्रच्छागमने हेतु उभयोर्दितिजस्तत ।

17 Some MSS प्रह्लाद in the ref. — a) D2 भूमौ (for इमौ) D1 मम दृश्येते, D9 विप्र°; M (M1 sup lin as in text) प्रतिगृह्येते (for सम्प्र°) — b) K2 द्वाभ्यां, S (except T2 G2) ययो (for याभ्या) K2 चरितु, Ca d 8 चरित (as in text) — c) M आस्ता च (for क्रुद्धौ) — d) K5 B D (except D1 7) T2 मार्गौ (for मार्गं) K1 उपस्थितौ, K2 अनुश्रितौ (for इहागतौ) T1 G1.3 5 एकमार्गगतावुभौ, M क्रुद्धावेकाशय गतौ

18 a) K1 4 D1 2 3 T2 Ca d किं वा, G3 किंचित् (for किं वै) K2 5 B3-5 D (except Dn1 D1.2 5) T2 एव, Ca एव (as in text) K1 4 D1 2 G3 Ca d चरित, B Dn Ds1 D3-5 7 10 चरयो, D6 सुरयौ (marg sec m सुहृदौ) — b) K1.4 B D (except D2 8 9) T2 G2 Ca d चरथ (for °त ) — After 18ab, K2 ins

203* तत्वा सुधन्वन्पृच्छामि मा पृष्टमनृत वदी ।

19 a) Some MSS प्रह्लाद K1 5 B3 D5-7 10 T2 तत्व (for तत्वा) K1.5 D1 2 7 G2 पृच्छावो (D7 °मो), Dn2 गच्छामि K4 D8 4 9 प्रह्लादैतद्विजानीहि, T1 G1 3 5 Mतत्वा (G3 M1 inf lin त्वां तु, M1-4 तत्व) पृच्छावहे तात — d) K2 D10 पृष्ट, D6 तत्व (for प्रश्न) K1 4 B1 D1 3-6 T2 वदे , B3 T1 G3 5 वद (for वदी ) — After 19, M2 ins (cf v l. 21)

204* प्रह्लाद ।
न कल्माषो न कपिलो न कृष्णो न च लोहित. ।
अणीयान्क्षुरधाराया को धर्मं वक्तुमर्हति ।
सुधन्वा ।
यद्यत्तत्व वक्ष्यसि त्व यदि वा नापि वक्ष्यसि ।
प्रह्लाद प्रश्नमनघ मूर्धा ते विफलिष्यति ।

20 M2 om 20-23 — Some MSS प्रह्लाद in the ref — ab) K4 B2 4 Dn Ds D1-4 10 वा, D9 गा (for च) K1 D8 आनयध्व, K2 D7 अप्यानयध्व, D1 प्रयच्छतु, D9 आनयतु (for अप्या°)

21 M2 om 21 (cf. v l. 20) — b) K1 D7 8 सर्वमेव, K5 B Dn1 D3-6 T2 पथिष्वेव, D2 तव पच , D10 यथावद्, T1 G1 3 M (M2 om ) प्रश्न एव (T1 G1 वाचा), G2 त एव हि, Ca d 8 पथ एव (as in text) G3 काङ्क्षित, C3 अर्पित (as in text) B3 D2 मया, C3 मम (as in text) K4 D9 तथैवास्तु सुरोत्तम (D9 सुरेश्वर), G5

C 5 1210
B 5 35 28
K. 5. 35 20

प्रह्लाद उवाच।

पुत्रो वान्यो भवान्ब्रह्मन्साक्ष्ये चैव भवेत्स्थितः।
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ २२
अथ यो नैव प्रब्रूयात्सत्यं वा यदि वानृतम्।
एतत्सुधन्वन्पृच्छामि दुर्विवक्ता स किं वसेत् ॥ २३

---

प्रश्नान्तावर्पित (sic) मम. — $^{cd}$) Some MSS प्रह्लाद, D8 D10 पृच्छाम (D10 °व) (for प्रह्लाद) K1 त्वं हि, K4 D9 एव तु, D1 त्व च, D3 4 ब्रूहि, T1 G1 5 इद (T1 इम) तु, G8 M (M2 om) एत तु (for त्व तु) K4 D9 G8 न, B Dn D5 6 T G1 5 मे, Cd s नौ (as in text) K4 B Dn D8 D2-7 9 10 T2 G2 transp प्रश्न and तथ्य D1 तत्व, D8 पथ्य (for प्रश्न) K3 प्रह्लाद तव प्रश्नोस्ति D1 8 प्रश्न, T1 G1 3 5 M1 3 4 तत्व (for तथ्य) D3 4 त्व चैव (for प्रब्रूहि). K4 B Dn D1 2 5 6 9 T1 G1 3 5 पृच्छत (D1 2 °ते, D9 °ता) — After 21, N (except D9, K3 missing) T2 G1 2 ins.

205* किं ब्राह्मणा स्विच्छ्रेयास उताहो स्विद्विरोचन।

[ =(var) 6$^{ab}$ K3 B1 3 D2 7 10 G2 वै, D1 अह (for the first स्वित्) D1 श्रेय स्याम् (for श्रेयांस) K1 2 विरोचन B3 उता गौ पीवरी कृना (for the posterior half) ] K3 cont.

206* सत्यं प्रब्रूहि दैत्येन्द्र सत्यं हि परम तपः।

Lines 1-2 of 204* are ins in G1 after 205*, in T1 G3-5 M1 3-5 after 21, in M3-5, they are followed by lines 3-4 (with v l ) of the same passage

22 M2 om 22 (of v l 20), M3-5 om 22-23 — Some MSS प्रह्लाद in the ref. — $^{a}$) K4 B Dn D8 D3-7 10 T2 Cap पुत्र एको, K5 D8 Cd पुरोधान्यो, T1 G (except G2) M1 अभिवाद्यो (for पुत्रो वान्यो) K1 2 D1 2 9 T1 G (except G2) M1 भवेत्, K4 B Dn D8 D3-7 10 T2 Cap मम (for भवान्) Ca पुरोधा ममान्यो ब्रह्मन् — $^{b}$) D1 सत्य (for साक्ष्ये) K1 2m D1 8 तथा, K4 भवान् (for भवेत्) B Dn D8 D3-7 9 10 T2 Cap त्व च साक्षादिहास्थित, Ca त्व च साक्ष्य इव स्थितौ Cd cites साक्ष्ये and स्थितौ — $^{c}$) D1 द्वयो (for तयो) K3 अन्यत्, G2 प्रश्न (for प्रश्न) — $^{d}$) B1 T2 भवेत् (for वदेत्) — Lines 3-4 of 204* are ins (with v l ) in T1 G (except G2) M1 after 22, in M3-5 after 194*. — T1 G (except G2) M1 cont.

207* विदुर।

आदित्येन सहायान्त प्रह्लादो हसमब्रवीत्।
धृतराष्ट्रं महाप्राज्ञ सर्वज्ञ प्रियदर्शनम्।

प्रह्लाद।

पुत्रवान्यो भवेद्ब्रह्मन्साक्ष्ये चापि भवेत्स्थित।
वयोर्विवदतोर्हंस कथ धर्मं प्रवर्तते।

[ (L. 2) M1 सर्वदर्शिन (for प्रिय°) — (L. 3) G3 4 प्रीतवान् (for पुत्रवान्), and साक्षी (for साक्ष्ये) ] — T1 G1. 3-5 cont K4 B D T2 G2 ins after 22

208* सुधन्वोवाच।

गा प्रदद्यास्त्वौरसाय यद्वान्यत्स्यात्प्रिय धनम्।
द्वयोर्विवदतोस्तथ्यं वाच्य च मतिमंस्त्वया।

[ T1 G1 5 हस (for सुधन्वो°) — (L 1) K4 B1 D (except Dn D8 D10) T2 G2 गा (for गां) T1 G (except G2) वै दद्यात्, Ca. d प्रदद्या (as in text) D3 D9 T1 G (except G2) Ca d औरसाय (for त्वौ°) D9 च; G3 4 अस्य (for अन्यत्) — (L 2) B3 T1 G (except G2) तयो (for द्वयो) T1 G (except G2) राजन् (for तथ्य) K4 B1 D8 D1-4 7 9 तु, G2 तत् (for च). T1 G1 5 प्रश्न सत्य यथा वदेत्, G3 4 यथा धर्मस्ततो वदेत् ]

23 M om 23 (of v. l 20, 22) Before 23, K4 B D T G ins. प्रह्लाद उ° (resp. प्रह्लाद) — $^{a}$) K1 2 D2 7 G2 तद् ब्रूयात्, D8 तु ब्रूयात्, T1 G1 3-5 विब्रू°; C8 प्रब्रू° (as in text) — $^{b}$) D9 T1 G (except G2) न सत्य नानृत वदेत् (D9 नर°) — $^{cd}$) D1 कां (for किं) C3 किंचन, Cd किं वसेत् (as in text) T1 G (except G1) हस तत्व च पृच्छामि कियद्देन करोति सः — T1 G (except G2) ins. after 23 M1 (which om. 23), after 22

209* हस°।

पृष्टो धर्मं न विब्रूयाद्लोकर्णशिथिल चरन्।
धर्माद्भ्रश्यति राजस्तु नास्य लोकोऽस्ति न प्रजाः।
धर्मं एतान्सरजति यथा नद्यनुकूलजान्।
ये धर्ममनुपश्यन्तस्तूर्णीं ध्यायन्त आसते।
श्रेष्ठोऽर्धं तु हरेत्तत्र भवेत्पादश्च कर्तरि। [5]
पादस्तेपु सभासत्सु यत्र निन्द्यो न निन्द्यते।
अनेना भवति श्रेष्ठो मुच्यन्ते च सभासद।
कर्तारमेनो गच्छेच्च निन्द्यो यत्र हि निन्द्यते।

प्रह्लाद°।

मोहाद्वा चैव कामाद्वा मिथ्यावाद यदि ब्रुवन्।
धृतराष्ट्र त्वा पृच्छामि दुर्विवक्ता तु कां वसेत्। [10]

[ Cf 214* — (L 2) T1 G5 राजा (for राजन्) — (L 3) T1 G5 स रुजति. — (L 5) G3. 4 अर्थ (for अर्ध), and पाद (for पाद ) — (L 7) G3 4 मुच्यते (for मुच्यन्ते) T1 G1 5 अपि (for च) — (L. 8) M1 निन्दार्हो यत्र निंद्यते — (L 10) G1 3 4 तत्व (for त्वां) T1 G5 M1 नु (for तु) M1 क (for कां) ]

सुधन्वोवाच ।

यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भारामितप्राङ्गो दुर्विवक्ता स तां वसेत् ॥ २४
नगरे प्रतिरुद्धः सन्बहिर्द्वारे बुभुक्षितः ।
अमित्रान्भूयसः पश्यन्दुर्विवक्ता स तां वसेत् ॥ २५
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ २६
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥ २७

प्रह्राद उवाच ।

मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥ २८
विरोचन सुधन्वायं प्राणानामीश्वरस्तव ।
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम् ॥ २९

सुधन्वोवाच ।

यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः ।
पुनर्ददामि ते तस्मात्पुत्रं प्रह्राद दुर्लभम् ॥ ३०
एष प्रह्राद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात्कुमार्याः संनिधौ मम ॥ ३१

विदुर उवाच ।

तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।
मा गमः ससुतामात्योऽत्ययं पुत्राननुभ्रमन् ॥ ३२
न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् ॥ ३३ C. 5. 1222 B. 5. 35. 40 K. 5. 35. 51

---

24 G1 M (except M1) om. the ref. T1 G3-5 M1 हंस (for सुधन्वा) — $^{a}$) M (M1 *sup lin* as in text) या, C3 स्त्री (as in text) — $^{b}$) M (M1 *sup lin.* as in text) स्त्रिया वा (for या चैव) B1.2 5 D3 4 अक्षे (for अक्ष-) D2 -पराजितां — $^{c}$) D5 यया, D2 य च (for या च) T1 G (G1 by corr as in text, G4 damaged) M यां च भारामितप्ता गौ (M1 *inf lin* °पन्नान्ते) — $^{d}$) = 25$^{d}$ S (except T2 G2, G4 damaged) तु (for स) M1 (*inf lin*) कृता (for स ता)

25 $^{a}$) D5 D10 °वद्ध°, D1 °विद्ध (for °रुद्ध) D1 वहिर्मार्गे; D2 G (G4 damaged) M °द्वारो, D3.4.9 T1 °द्वार K2 वहिर्द्वारेषु रक्षित — $^{c}$) K4 भूय स, T1 भूयस, M (M1 *inf lin* as in text) चैव तान् B Dn D5 D2 5-7 10 पश्येत् (for पश्यन्) D3 4 अमित्रीभूय सर्वस्य — $^{d}$) = 24$^{d}$ T1 G1.3 5 M तु, G4 स (for स) D8 व्रजेत् (for वसेत्) B Dn D5 D6 8 10 य साक्ष्यमनृत वदेत् — After 25, S (except T2 G2) ins.

210* यां च रात्रिममित्रघ्नो या च मित्रे प्रिये मृते ।
सर्वस्वेन च यो हीनो दुर्विवक्ता तु तां वसेत् ।

[ (L. 1) M अमित्रेते (for अमित्रघ्नो) T1 G1 पुत्रे (for मित्रे) ]

26 = Manu 8 98, = (var) Pañcatantra 3 109 — D2 transp 26$^{ab}$ and 26$^{cd}$ — $^{a}$) K1 T1 G1 (after corr) 3 पश्वानृते, D5 पचा°, G1 (before corr) 4 5 कन्या°, Ca पश्व° (as in text)

27 = Manu 8 99 — $^{b}$) B3 Dn1 Ds2 D1.6 8 T2 G3 4 वदेत्, G3 ब्रुवन् (for वदन्) — $^{c}$) M सर्वान् (for सर्वं) K5 Dn2 D9 Cn भूम्यनृत — $^{d}$) G5 अस्तु (for स) D8 हन्यानृत, D10 हन्याकृत (for भूम्यनृत) K4 वद, B (except B4) D1.3.4 वदे, D2 T2 G3 4 वदेत्, D10 वदन् (for वदी)

28 Some MSS प्रह्लाद in the ref. — $^{a}$) D6 m पण्डितो, Ca.d.s अंगिरा (as in text) — $^{b}$) K2 5 B1.3 D3 4.7 G2 त्वत्त एव च, D1.9 G5 तु (D9 वै) विरोचनात् (for त्वद्विरोचन) Ca cites त्वत्त, Cd s त्वत् — $^{d}$) K4 तव त्व, D1.2 G2 ततस् त्व (G2 तु), T1 G3 M1 भवत, G1 5 भवास्तु, M2 भवतु, M3 4 भवसि, M5 भवति (for तस्मात्त्व) G1.2 M2-5 एतेन (for तेन) K2 ततस्त्व वै पराजित, D10 तव पूज्यो द्विजस्तव

29 K1 om 29$^{a}$-30$^{b}$ — $^{a}$) K4 D9 वै (for अय) — $^{c}$) B1 D3 4 10 T1 G1 M1 (*sup lin* as in text) पुत्र, D5 G3 पुत्र (for पुनर्)

30 K1 om. 30$^{ab}$ (cf. v 1 29) — $^{a}$) B1 D9 यो; Ca तत् (for यत्) K4 योत्र धर्मं वृणीथास्त्व — $^{cd}$) B3 D1 ददानि K2 4 B D (except D7) T2 transp तस्मात् and पुत्र Some MSS प्रह्लाद (in this and the foll stanza) G4 (by corr from text reading) दुर्बल (for दुर्लभम्)

32 $^{a}$) D7 नरेंद्र (for राजेन्द्र) — $^{d}$) K2 भवान्, B Dn D5 D6 6 8 10 T G (except G2) M1 नाश, D1 अनर्थं (for अत्यय) B (except B1) Dn D5 D6 6 8 10 T2 पुत्रार्थमब्रुवन् (for पुत्राननुभ्रमन्) K1.5 D2 G3.4 अनुसरन्, K2 D9 अनुव्रजन् (for अनुभ्रमन्) M2-5 य. पुत्राननुविभ्रमन्

C. 5. 1273
B. 5. 35. 41
K. 5. 35. 52

यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथा तथास्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥ ३४

न छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा-
श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ३५

मत्तापानं कलहं पूगवैरं
भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुमांसोर्विवादं
वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ३६

सामुद्रिकं वणिजं चोरपूर्वं
शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च
नैतान्साक्ष्येष्वधिकुर्वीत सप्त ॥ ३७

मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयंकराणि
भयं प्रयच्छन्त्ययथाकृतानि ॥ ३८

अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ॥ ३९

भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ॥ ४०

स्रुवप्रग्रहणो व्रात्यः कीनाशश्चार्थवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महणैः समाः ॥ ४१

---

33 =(var.) Pañcatantra (*txt simpl*) 3 182, =(var.) 192*. — [a]) B2. 4. 5 D (except D1. 7. 9) T2 ददम् (for यष्टिम्) — [c]) G5 हि (for तु) — [d]) K1. 5 B D T2 सविभजति (as in text), the rest संयोजयति.

34 [b]) D1. 2. 7 S (except T2, G4 damaged) मतिं (for मन.) — [cd]) G2 यथा यथा (for तथा तथा) K1. 4 D1 हि; D9 अत्र (for अस्य) K1 सर्वाणि, S (except T2 G3) सिध्यति (for सर्वार्था ) S (except T2 G3) सर्वार्था (for सिध्यन्ते)

35 =5 43 3 — [a]) N (except K1. 3 D1, K2 missing) T2 नैनं, Cs न (as in text). G2 वृजिनं (for वृजिनात्)

36 [a]) K2 महापान, K4 B D (except Ds D2. 8. 10) T2 Ca p मद्यपान, T1 G1 M मद्या(T1 °द्या)ग्रपान, G3. 5 मध्यान्दयान, Ca d s as in text K1 Ds2 Ca d s विकल; Cap कलह (as in text) G5 पूर्वं (for पूग°) — [c]) D1 G2 °द्वेष (for °द्विष्ट) B3-5 D (except D8. 9) T2 °पुंसयोर् (for °पुमांसोर्) B1 राजद्विष्ट पुंस्त्रियोश्चापि भेद — [d]) K4 D8. 9 विवर्जयेद्, D1 त्याज्यानाहुर् (for वर्ज्यानाहुर्) D8 पचातिरिक्त (for पन्था प्रदुष्ट ) K4 G2. 4 सुदुष्ट , D8. 9 तु दुष्ट' (for प्रदुष्ट )

37 [a]) B1 G2 M (except M2) Ca d s सामुद्रक K2. 5 B (except B1) Dn वाणिजक, Ds D1. 9 G2 वाणिजं (for वणिज) K1. 4 B2. 5 Ds D1. 2. 8 m. 8 Cd s चौरपूग, K3 च चौर, K5 B1 Dn D4. 5. 7 चौरपूर्वं, D9 चौर्यमुग्र, G3 भोगपूर्वं (for चोरपूर्वं) — [b]) D1 T1 M Cd शाला(D1 T1 °ट)काधूर्तं, G2 शाठ धूर्तं, Ca s as in text G3 स्थाल धूर्तं चचक (for शलाकधूर्तं च ) — [d]) K1 B (except B1) Dn Ds T2 G3-5 साक्ष्ये तु, M साक्षीन् (for साक्ष्येषु) D8-9. 8. 9 विप्रकुर्वीत, G (except G1) M1 (*inf lin* as in text) 2-5 अधि(M2. 4 °ति)कुर्वति (M2 °तु) G1-4 M काले (for सप्त)

38 =(var.) 1 85 24, cf. 182* — [a]) T1 M2-4 °यज्ञ', G1. 5 °यज्ञ (for °मौन) — [b]) D9 T1 मानाधीत; G1. 5 मानादधीत, Ca as in text T1 G1. 5 M3-5 °मौन (for °यज्ञ ) — [c]) D1. 9 T1 G (except G3) M1 (*inf lin*, as in text) भयकराणि, Ca d s अभयं' (as in text) — [d]) T1 G (except G3) M1 (*inf lin* as in text) श्रिय प्रयच्छंति यथाकृतानि Ca d cite अयथा कृतानि, Cs cites 38[d] as in text

39 39[ab]=Manu 3. 158[ab] Cf Gautama-dharma sūtra 15 17 (ed. Mysore, 1917, p 255). — [a]) K1 (before corr ) D1. 2. 9 Cd आगार°, Ca as in text M3. 4 दरद (for गरद ) — [c]) S (except T2) चर्म°, Ca d पर्व° (as in text) Cs cites पर्ववदक'. — [d]) K1 °यायिक , K5 D1. 7. 9 °जायिक (for °दारिक ).

40 [c]) B1. 2. 5 S (G4 damaged) कार', Ca d s काक (as in text)

41 [a]) K1. 4. 5 Dn1 D1. 7. 9 G3 श्रु(Dn1 G5 स्रु)वग्रह°(K4 °श्रव)णो, B1. 2 D2 श्रुव(D2 °त)प्रग्रहणो, D8. 4 सुरप्र°; G1. 2 M सुवप्रग्राह(G2 M1. 3 °वाह)णो, G3 नृप ग्रहणो; M1 (*inf lin* ) सुराग्रहवणो, Ca d s as in text — [b]) B1 D6. 7 आत्मवान्, D2. 4 स्वार्थवान्, Ca अस्तवान्, Cs अर्थवान् (as in text) K2 कीनाशश्चार्थहा तथा — [c])

तृणोल्कया ज्ञायते जातरूपं
युगे भद्रो व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः
कृच्छ्रास्वापत्सु सुहृदश्चारयश्च ॥ ४२
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया ।
क्रोधः श्रियं शीलमनार्यसेवा
ह्रियं कामः सर्वमेवाभिमानः ॥ ४३
श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥ ४४
अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ४५
एतान्गुणांस्तात महानुभावा-
नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान्गुणानेष गुणोऽतिभाति ॥ ४६
अष्टौ नृपेमानि मनुष्यलोके
स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येषामन्ववेतानि सद्भि-
श्चत्वार्येषामन्ववयन्ति सन्तः ॥ ४७
यज्ञो दानमध्ययनं तपश्च
चत्वार्येतान्यन्ववेतानि सद्भिः ।

C. 5. 1233
B. 5. 35. 55
K. 5. 35. 67

---

D1 रक्षास्युक्तश; D7 रक्षेत्युक्ते. — [d]) K3 4 B Dn D3 D1.3-7 10 T2 G1-3 ब्रह्महमि , D2 °हन (for °हणे )

42 [b]) K4 D5 D8 T1 G2-5 युगेन, K5 B Dn D3-6 10 T2 वृत्तेन; G2 योगे, Cd धूर्युगे, Ca.s युगे (as in text) D9 धुर्यो, G शूद्रो, Ca.d s भद्रो (as in text) K1 व्यवहारेपि; D1.2 व्यवहारे च, D3 4.7 G4 M व्यवहारेषु, Ca व्यवहारेण (as in text) Cd s cite व्यवहारे K1 असाधुः. — [c]) D5.6 अय कृच्छ्रेषु, Cs as in text — [d]) K1 Dn1 D5 2 D7 8 10 M1.3 4 कृच्छ्रास्स्वापत्सु; B कृच्छ्रे-ष्वापत्सु (so mostly old printed ed !)

43 [a]) K1.2 5 D3 9 हरते K (K3 missing) Dn2 D1 5 8 9 om. हि. D3 m.10 आशा, Cs आशा (as in text) — [d]) K5 B1 S (except T2 G2) अति° (for अभि°), cf. v 1 5 37 7 — After 43, S (except T2) ins

211* न क्रोधिनोऽर्थो न नृशंसस्य मित्रं
क्रूरस्य न स्त्री सुखिनो न विद्या ।
न कामिनो ह्रीरलसस्य कोश
सर्वं तु न स्यादनवस्थितस्य ।

[ (L. 3) T1 G4 न स्त्री, G2 दाक्ष्याद्, G3 न श्री , G5 न श्री (for कोश·) ]

44 [a]) D1 धीर्धर्मात्, M1.3 4 मगल्यात्; Ca as in text — [b]) D1 G5 संप्रवर्तते, G3 संविवर्धते (for सप्र°) — [c]) K1 Dn1 D9 प्र-, K3 5 च; T1 G1.2 M1 (*inf lin.*) त्वं, G3 M स- (for तु) S (except T2, G4 damaged) रूपं (for मूल) — [d]) B1 संशयात्, Ca d s सयमात् (as in text) K2 D5 D10 °तिष्ठते

45 K1 D1 om. 45 — [a]) K2 (m as in text) D7 प्रीणयति, Cd दीपयन्ति (as in text) — [b]) K2 कुलं चैव (for च कौल्य च) T1 G3 4 M कौली, Ca.d कौल्य (as in text) G4 शम (for श्रुत) — Cf. v 1. 5 33 74, 80, 37 28 for this and the foll. stanza

46 Cf. v 1 45 — [a]) G5 तांश्च (for तात). S (except T2 G2) महानुभाव, Cd °भावान् (as in text) G3-5 M (except M5) प्रगृह्य, Cd s प्रसह्य (as in text) — [c]) D5.6 सश्रयते (for सत्कुरुते) G3 M1 मनुष्यान् — [d]) D3 4.7 9 एक-, Cd.s एष (as in text) K1 अतियाति, K2 4 B3 D2 4 (by corr ) 5-7 T Cn विभाति; B1 Dn D8 G1 अभिभाति, D9 10 विभर्ति, Ca अतिभाति (as in text)

47 T1 (hapl.) om. 47[d]–48[b] — [d]) K5 B1 4 Dn1 D6-7 T2 G5 चैषाम्, B3 Dn2 तेषाम्, D1 नैषाम् (for एषाम्) K5 B4 Dn D6 7 T2 अनुयाति, D1 अन्ववसति; G3 4 M °वायति, G5 °धावति, Ca s °वयति (as in text), cf. v 1. 48

48 K4 D1 G5 om 48, T1 om 48[ab] (of v 1. 47) — [b]) K3 अन्ववयति, Cs °वेताति (as in text) K2 om. 48[cd] — [c]) D3 transp दम and सत्य and adds च B1 D3.4 धर्म (for दम·) — [d]) B3 4 Dn D3-5 T2 अनुयांति, D2 अन्ववेतानि, T1 G3.4 M °वायति, G2 °वसति (for °वयन्ति), cf. v 1. 47 — After 48, N (except B1 D9, K3 missing) T G1.2 ins

212* इज्याध्ययनदानानि तप सत्य क्षमा घृणा ।
अलोभ इति मार्गोऽय धर्मस्याष्टविध स्मृत ।

C. 5. 1279 B. 5. 35. 55 K. 5. 35. 57

दमः सत्यमार्जवमानृशंस्यं
चत्वार्येतान्यन्ववयन्ति सन्तः ॥ ४८
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥ ४९
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दश संसर्गयोनयः ॥ ५०
पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमेवाश्नुते फलम् ॥ ५१
पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥ ५२
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥ ५३
असूयको दन्दशूको निष्ठुरो वैरकृन्नरः ।
स कृच्छ्रं महदाप्नोति नचिरात्पापमाचरन् ॥ ५४
अनसूयः कृतप्रज्ञः शोभनान्याचरन्सदा ।
अकृच्छ्रात्सुखमाप्नोति सर्वत्र च विराजते ॥ ५५

---

[ =(var.) 3. 2. 71, =(var ) Hitopades'a 1 7. — (L. 1) D8 transp क्षमा and घृणा D2 T1 G1 दम', D8 4 दया (for घृणा) — (L. 2) K1 2 4 D8–5 8 T1 G1 धर्मश्च (for धर्मस्य) ]
— K (K8 missing) D (except D8 D9 10) T G1 2 cont G4 ins after 48

213* तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो नामहात्मसु तिष्ठति ।

[ =(var ) Hitopades'a 1 8 — (L. 1) Cf. 3 2 72^ab D8 T1 अत्र (for तत्र) Dn पूर्व (for पूर्व ) T1 G1 धर्मार्थ, C8 दम्भार्थ (as in text) T1 G1 4 शक्यते (for सेव्यते) — (L. 2) K4 D8 D2 G2 च (for तु) ]

49 =(var ) Hitopades'a 3. 59, =(var ) Śārṅgadharapaddhati 1344 — ^b) K4 D8 D8 4 transp न ते and वृद्धा B4 D7 विदति (for वदन्ति) K2 धर्मान् (for धर्मं) — ^d) D8 transp न तत् and सत्यं G4 नैतत् (for न तत्) N (except K2 4 D2, K8 missing) अभ्युपेत (Dn2 °पैति) (for अनुविद्धम्)

50 ^a) Dn1 व्रत, C8 श्रुत (as in text) — ^b) Dn1 D8 4 9 S (except G8, G4 damaged) कुलं, Ca d कौल्य (as in text) — ^c) D1 चरित्र°; G1–8 M विचित्र° (for च चित्र°) K2 प्रीति°, D2 G5 मित°, D8 9 मित्र°, Ca d s चित्र° (as in text) K5 शौर्यं च प्रीतिसभाष्य — ^d) K1 5 Cnp दश ससर्गजा गुणा , K4 B Dn D8 D1–7 10 m T2 दशेमे (Dn1 D7 दशैते, D1 दश वै) स्वर्गयोनय Ca cites सम्सर्गयोनय (as in text), Cd s cite संसर्गस्य योनय — After 50, M ins

214* अथ यो नैव विब्रूयान्न सत्य नानृत वदेत् ।
ये धर्ममभ्यसूयन्तस्तूष्णीं ध्यायन्त आसते ।
श्रेष्ठ पाद हरेत्तत्र भवेत्पादश्च कर्तरि ।
पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते ।
अनेना. श्रेष्ठो भवति प्रमुच्यन्ते सभासद' । [5]
एनो गच्छति कर्तार निन्दार्हो यत्र निन्द्यते ।

[ Cf 209*. ]

51 ^d) K2 B D (except D8 4 9) T2 पुण्यमत्यतमश्नुते (K2 °मेधते) — After 51, K4 B (except B1) D (except D1) T2 ins

215* तस्मात्पाप न कुर्वीत पुरुष' शंसितव्रत. ।

[ D9 कुर्वति (for कुर्वीत) Some MSS. संशित° (for शसित°) D9 पुरुषा' °व्रता ]

52 ^a) D8 D5 6 8 10 T2 transp. पापं and प्रज्ञां — ^b)=53^b. Dn2 D8 D10 ह्रिय° (for क्रिय°) — ^d)=53^d. D2 क्षिप्र (for नित्य), and जन (for नर')

53 D2 om 53 — ^a) D8 D10 वर्धयते — ^b)=52^b. Dn2 D8 D10 ह्रिय° (for क्रिय°) — ^d)=52^d. K4 D1 7 क्षिप्रम् (for नित्यम्) K4 G5 आचरते (for आरभते). K4 D9 सदा (for नर.) — After 53, B D (except D1. 9) T2 ins

216* पुण्य कुर्वन्पुण्यकीर्ति' पुण्य स्थान स गच्छति ।

[ D82 D8 पुण्य- (for the second पुण्य) B2 D5 D10 स, D7 च (for स) ]

— B Dn D8 D2–8 10 T2 cont. K1 5 D1 T1 G1. 2 4 ins after 53

217* तस्मात्पुण्य निषेवेत पुरुष सुसमाहित ।

54 K2 om 54^ab — ^a) B1 2 5 Cap अकृतप्रज्ञो, Ca d s दंदशूको (as in text) — ^b) S (except T G1) नै(G2 नि)ष्ठुरी, Cd. s निष्ठुरो (as in text) K4 °किंकर (for °कृन्नर.) B D (except D1. 2 7 9) T2 शठः (for नर ) K4 (hapl ) om 54^d–55^c.

55 K4 om 55^abc (cf. v. 1 54) — ^a) K1 B2. 3 D2–7. 9 S (except T2 G8 M8 4) अनुसूयु' K1 2 5 G1 कृतज्ञश्च, D7 दृढप्रज्ञ' — ^b) K2 धर्ममेवाचरेत्सदा — After

प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥ ५६
दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ५७
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ५८
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विगतसंग्रामं गतपारं तपस्विनम् ॥ ५९
धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ६०
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ६१
ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥ ६२
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रियः स्वर्गभाग्राजंश्चिरं पालयते महीम् ॥ ६३
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ६४
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ ६५

C. 5. 1257
B. 5. 35. 75
K. 5. 35. 87

55[ab], D7 ins.

218* पूजा च महतीं प्राप्य स सर्वत्र विरोचते ।

— [a]) K2 B1.2 Ca d अकृच्छ्रं, B3-5 D (except D8 9) T2 C3 न कृच्छ्र॰, G2 ससुख, G4 अचिरात् (for अकृच्छ्रात्) K2 B D (except D8 9) T2 G2 महद्, T1 शुभम् (for सुखम्) — [d]) D7 अपि, D10 स, S (except T2 G3) तु (for च) K2 4 B2 D (except D8) T2 G2 ॰रोचते (for ॰राजते)

56 [a]) K2 आगमयते, Ca d as in text — [b]) G2 transp य॰ and प्राज्ञेभ्य॰ — [c]) D7 S (except T2) प्रज्ञामवाप्य (for प्राज्ञो ह्य॰) G3 धर्मार्थान् (for धर्मार्थौ) — [d]) D7 G2 परिरक्षितु (for सुखमेधितुम्)

57 D9 reads 57[ab] after 58 — [a]) S (except T2 M5) अपि (for एव) D7 (hapl.) om 57[bc] — [b]) K2 4 5 D1 8 M स्वपेत्, D2 भवेत् (for वसेत्) — G3 om. 57[cd], D8 transp 57[cd] and 58[ab], B1 (hapl ) om 57[c]-58[b] — [c]) K1 ॰मासैस्तु, K2 5 D8 ॰मासैश्च — [d]) G3 वर्षात्, M वर्षं (for वर्षा ) K2 D1 9 भवेत् (for वसेत्)

58 B1 om. 58[ab] (cf v 1. 57) D8 transp 57[cd] and 58[ab] — [b]) K4 G4 सुखी (for सुख) K4 G4 भवेत्, D1.7 स्वपेत् (for वसेत्) — T1 G3 om 58[cd] — [c]) K1 D1.9 ॰जीव च, D8 G4 M1.3 4 ॰जीव तु (for ॰जीवेन) D2 कार्यं (for कुर्यात्) — [d]) D5 अमुत्र (for प्रेत्य) K (K3 missing) D7 सुखी भवेत् (for सुख वसेत्) D1 स्वपेत् (for वसेत्) — After 58, D9 reads 57[ab]

59 =(var ) Cāṇakyas'ataka 79 (ed Haeberlin) — [a]) K1.4 D1.2 G2 प्रशसे(K1 ॰सी)त, K2 5 B2 D7 8 प्रशंसीयात् (for प्रशसन्ति) — [b]) S (except T2 G2 M5) नारीं (for भार्यां) — [c]) B D (except D52 D1 2 7 9) T2 G5 विजितसंग्राम, Cd s as in text K1 2 5 रणप्र त्यागत शूर, G4 रणे प्रतिहत शूरं — [d]) D1 ॰पाप, Ca d s ॰पार (as in text) K2 5 D1.2 7 Ca.d मनस्विनं, Cs ap तप॰ (as in text) K1 धान्यं च गृहमागत

60 [b]) G5 यदि (for यत्) K4 सवि॰, D8 G2-4 अभि॰, G5 वि॰, Ca.s अपि॰ (as in text) — [d]) B2 D1 अवधीर्यते, T1 G1 5 अपि जीर्यते, G2 अवकीर्यते, G3 अपि विद्यते, G4 अभिधीयते, Cs अवदीर्यते (as in text)

61 [a]) K2 (*sup lin* as in text) आचरता; Cd s आत्म॰ (as in text) — [b]) K2 D1.3 4 transp शास्ता and राजा — [c]) K1 D7 G2 3 M1 इह, G4.5 M4 (*sup lin* as in text) अत (for अथ)

62 [b]) D7 T1 G (except G3) शूराणां (for कुलाना) — [c]) K2 B3 प्रभावो, D1 नियमो, D9 सभवो, Ca d s प्रभवो (as in text) K2 अवमतव्य , G3 अभिगतव्य , Ca d s अधि॰ (as in text)

63 [a]) K2 G1 M5 ॰निरतो — [b]) K1 2 5 D8 दांतो (for दाता) — [c]) K1 सर्व॰, B D (except D1 2 9) T2 शील॰ (for स्वर्ग॰) Dn1 प्राज्ञ (for राजन्) K4 क्षत्रिय स्वर्गमाप्नोति

64 =(var ) Pañcatantra 1 51, = Dhvanyāloka (ed N S P ), p 49 Cited by Appayadīkṣita in Kuvalayānanda (p 50) — [a]) K4 D3 4 सुवर्णपुष्पितां पृथ्वीं Cd s cites सुवर्णपुष्पा — [b]) K1 2 5 D2-4 7 9 विचिन्वति त्रयो जना (D9 नरा॰), K4 D8 G3 विचिन्वति नरास्त्रय

65 = C 12 4191 — [a]) K1 कार्याणि (for कर्माणि) — [c]) D1 यानि (for तानि) M1 (*sup lin* as in text) जङ्घाजघन्यानि, Ca d as in text — [d]) D1 तानि प्रत्यवराणि च, D9 भारयन्त्यपराणि च, Cd as in text. Ca cites प्रत्यवराणि, Cs प्रत्यवर

दुर्योधने च शकुनौ मूढे दुःशासने तथा ।
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ६६

सर्वैर्गुणैरुपेताश्च पाण्डवा भरतर्षभ ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ६७

इति श्रीमहाभारते उद्योगपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

# ३६

विदुर उवाच ।

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् ॥ १

चरन्तं हंसरूपेण महर्षिं संशितव्रतम् ।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा ॥ २

साध्या देवा वयमस्मो महर्षे
दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम् ।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः
काव्यां वाचं वक्तुमर्हस्युदाराम् ॥ ३

हंस उवाच ।

एतत्कार्यममराः संश्रुतं मे
धृतिः शमः सत्यधर्मानुवृत्तिः ।
ग्रन्थिं विनीय हृदयस्य सर्वं
प्रियाप्रिये चात्मवशं नयीत ॥ ४

---

66 [a]) K1 6 B1 3 4 D T अथ, G3.4 न (for च) — [c]) K3 एतेषु, K5 कर्णे तु (for कर्णे च) D7 आस्थाय (for आधाय) — [d]) T1 G1 5 M (except M5) आत्मनो; G3 कस्मात्त्व, G4 तस्मात्त्वं (for कथं त्वं) — Cf. v 1 5 122 44.

67 [a]) K2 D8 (before corr ) सर्वे (for सर्वै ) K3 D1 ते, K5 B Dn D5 D7 8-10 तु (for च) — [b]) D2 भरतर्षभा — [c]) G2 पितृवत्तेषु (for °वत्त्वयि) — [d]) K2 पूर्ववत् (m पितृ° and पुत्र° [ as in text ])

Colophon K3 missing — *Sub-parvan* K1 सनत्सुजात, K4 B1-3 Dn D5 D1 2 9.10 G3 M प्रजागर, G6 विदुरप्रजागर — *Adhy name* K (K3 missing) B1 2 4.5 D (except Dn1 D9) T2 G2 विदुरवाक्य, G1 सत्यप्रशमादिकथन, M सत्यप्रशमा (M1 °शंसन) — *Adhy no* (figures, words or both)· K1 D5 34, K2 3 (of प्रजागरपर्व?), D6 (*sec m* ) 32, D7 S 35 (M 36). — *S'loka no* K3 70, K5 74, Dn3 76, G6 83

## 36

☞ This adhy is missing in K3 (cf. v 1 5. 32 15)

1 [a]) K4 D2 S (except T2 M3 5) अपि (for एव) — [c]) S (except T2 G2) हंसस्यापि (for आत्रे°) — [d]) G5 सिद्धाना (for साध्या°) D1 om च D3.4 9 तच्छ्रुतं; D8 विश्रुत (for न श्रुतम्)

2 [b]) K1.2 D82 D5-8 शंसित° (for संशित°) — [c]) K3 महाराज, K4 D1 2 7 महात्मान, B2 4 5 D3-5.9 T2 महाप्रज्ञं, T1 महाप्राज्ञा . — [d]) K2 °पृच्छन्त (for °पृच्छन्त) T1 G1 5 भारत (for वै पुरा)

3 Before 3, K1 2 5 B1 3 Dn3 D1.6 7.10 T1 G1-3 M1 ins साध्या ऊचु· (B1 3 T1 G3 M1 om. ऊचु ). — [a]) K1 D9 Ca स ; K2 5 D82 D7 8 आस्म°, B Dn Dn D3-6 10 T2 एते, Cd.8 अस्म (as in text). S (except T2) साध्याश्च देवाश्च वय महर्षे — [b]) S (except T1) transp न and शक्नुम K1 2 (*sup. lin.* as in text) शक्ष्यामो; D1 2 9 अशक्नामो, D8 शक्यामो (for शक्नुमो) K1.2 D7 G6 अनुगन्तु, D1 °मतु; Cn °मातु (as in text). — [c]) D1 श्रुतो (for श्रुतेन) G4 श्रुतो नाधीरो बुद्धिमान्समतश्च — [d]) T2 G1.2 4 M3 काव्या, Cd 5 काव्यां (as in text).

4 [a]) G3 समत (for अमरा·) K3 संस्कृतं, T1 सुश्रितं (for संश्रुतं) G3-5 सर्वदैव ; M सम्यगेव (for सश्रुतं मे). — [b]) T1 G1.5 सर्व° (for सत्य°) — [c]) K1 4 5 D1-4. 7-9 G2 ग्रंथीन्, K2 ग्रंथान्वं, Ca ग्रन्थि (as in text) K1 5 D8 T1 G1 विमुच्य, D3 4 9 एतान्, T2 विनायस्य, G3 4 विभिद्य, M3 5 द्वितीयं, Ca विनीय (as in text) M1.2 4 ग्रंथिद्वितीय (for ग्रन्थि विनीय) K (K3

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ५
नाक्रोशी स्यान्नावमानी परस्य
मित्रद्रोही नोत नीचोपसेवी ।
न चातिमानी न च हीनवृत्तो
रूक्षां वाचं रुशतीं वर्जयीत ॥ ६
मर्माण्यस्थीनि हृदयं तथासू-
न्घोरा वाचो निर्दहन्तीह पुंसाम् ।
तस्माद्वाचं रुशतीं रूक्षरूपां
धर्मारामो नित्यशो वर्जयीत ॥ ७
अरुंतुदं परुषं रूक्षवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निर्ऋतिं वहन्तम् ॥ ८
परश्चेदेनमधिविध्येत बाणै-
र्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।
विरिच्यमानोऽप्यतिरिच्यमानो
विद्यात्कविः सुकृतं मे दधाति ॥ ९
यदि सन्तं सेवते यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ १०

C. 5 1269
B 5. 36. 10
K. 5 35 10

missing) D1-5.7-9 G2 सर्वान् (for सर्वं) — d) B1 एव, G4 न (for च) K4 D3.4 9 M उपशम (K4 °मसं; M1.3.4 °वशं), K5 Dn D5 6 8 10 T2 आत्मसम (D5 °नि स, D8 °समां), B1 G4 अवशम, B2 T2 G1-3 अनुवश (B2 T1 °सम; G1 °शमं) K1 2 D1-4.7-9 G1 2 नयेत, K4 नयेच्च, G4 अधील्य

5 =1 82 7 — a) K2 4 G1 2 नाक्रुश्येत्, G5 नाक्रुश्ये, Cs नाक्रोशेत् (as in text) — b) K5 मृन्युर्, Cs मन्युर् (as in text) — After 5ab, D9 ins

219* पुनाति ह्यात्मनात्मान सुकृत चास्य विन्दति ।

— c) D3 निर्दहते, Cs as in text — d) T1 अपि (for अस्य)

6 b) K2 नापि द्रोही, D3 4 मित्रध्रुक्, G1 M2-4 न मित्र°, M1 नो मित्र° (for मित्रद्रोही) K2 D2-4 नैव, K4 D9 नापि (for नोत) — c) T1 वा (for the *first* च) K2 4.5 B Dn Ds D1-6 8 10 T2 G4 अभिमानी, D9 T1 अपि मानी, Ca अतिमानी (as in text) Cd cites अतिमान° D2 T2 नि- (for the *second* च) K1 D3 4 वृत्तहीन, K4 दीनवृत्त, D2 G1 हीनवृत्ती, G4 हीन प्रमत्त — d) K2 रूप्या (for रूक्षा) G5 कुवाच (for वाच) K1 D1 3 4.6 10 G5 Ca d n रुपतीं, B1 2 5 D9 Cap np उपतीं, Dn Ds D5 उशतीं, M1 रुचतीं, T2 ऋशतीं, Cs रुशतीं (as in text) K1 D1 2 7 G1 2 वर्जयेत, K4 वर्जयेच्च, G5 वर्जयेत्ताम् (for वर्जयीत)

7 K1 D8 om 7 — b) B Dn Ds D5 10 T2 रूक्षा, D6 रूप्या (for घोरा) Dn D3 4 9 G4 M1 इव (for इह) — c) K4 B Dn Ds D3 4 8 9 उपतीं, other MSS रुपतीं, रुसतीं, ऋशतीं etc (for रुशतीं) D1 G2 तीक्ष्णरूपा, D2 °कृष्णं, M3-5 पापरौक्ष्यान् — d) G3 वर्जयेत् (for नित्यश) K4 T1 G2 4 5 M वर्जयेत्ता, D1.2 G1 वर्जयेत, G3 नित्यशस्तां

8 =(var) 1 82 9 — a) K1 4 B4 Dn1 D1.3-6 8 9 T2 पुरुष, Cd परुष (as in text) K2 4 D1 2 G (except G4) T1 तीक्ष्ण° (for रूक्ष°) — b) K1 Dn1 D3 4 9 वाक्सायकैर् (for वाक्कण्टकैर्) — c) K1 2 5 D10 विंद्यात् (for विद्यात्) K2 नराणा (for जनानां) — d) B1 S निकृतिं, Ca d.s निर्ऋतिं (as in text) K4 D2-5 वै वहंत, Ds2 D9 वहतीं (for वहन्तम्) D6 मुखे विद्धा निर्ऋतिं वै वहत

9 a) K1 D3 M1 (*inf lin*) पर, T1 वर, Cs पर (as in text) K1 D3 तु यो न, D1.9 G4 चैन, M1 (*inf lin*) चैक न, Cs चेदेन (as in text) K1 D1 G4 अभि°, D2 9 Cs अति° (for अधि°) — b) M1 3.4 om. सु- K1 D2 अनिलोग्रदीप्तैः, K4 D1 अनलाग्रदीप्तै, G2 अनलार्करूपै Ca d cite उग्र and दीप्त — c) K4 विविध्य°, B1 3 स ताड्य°, Dn Ds D3 4 10 T2 स विध्य°, D1 M5 विरच्य°, G3 उदीच्य°, G4 विरच्य°, Cd s विरिच्य° (as in text) K1 G4 M1 3 प्र(K1 व्य)तिरिच्य°, K4 5 B Dn D3-7 10 अप्यतिदह्य°, M4 न प्रतिरिच्य°, Cd s अप्यतिरिच्य° (as in text) — d) K2 D7 10 विंद्यात्, Dn1 D1 3 4 विद्वान्, Ca. d विद्यात् (as in text) G5 transp सुकृत and मे K5 D8 नो (for मे) D1 करोति, G3 4 ददाति, Ca d s दधाति (as in text) — Cf C 12 11001

10 a) B1 3 5 D5 6 T M सेवति — K4 om 10c-11b — c) D9 S (except T2 M3-5) राग°, Ca d s रङ्ग° (as in text) — d) T1 G3 हि (for स)

C. 3. 1270
B. 5. 36. 11
K. 5. 36. 11

वादं तु यो न प्रवदेन्न वादये-
द्यो नाहतः प्रतिहन्यान्न घातयेत् ।
यो हन्तुकामस्य न पापमिच्छे-
त्तस्मै देवाः स्पृहयन्त्यागताय ॥ ११

अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद्व्याहृतं तत्तृतीयं
धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२

यादृशैः संविवदते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ १३

यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १४

न जीयते नोत जिगीषतेऽन्या-
न्न वैरकृच्चाप्रतिघातकश्च ।
निन्दाप्रशंसासु समस्वभावो
न शोचते हृष्यति नैव चायम् ॥ १५

भावमिच्छति सर्वस्य नाभावे कुरुते मतिम् ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६

नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
राद्धापराद्धे जानाति यः स मध्यमपूरुषः ॥ १७

दुःशासनस्तूपहन्ता न शास्ता
नावर्तते मन्युवशात्कृतघ्नः ।
न कस्यचिन्मित्रमथो दुरात्मा
कलाश्चैता अधमस्येह पुंसः ॥ १८

---

11 K4 om $11^{ab}$ (of v l 10) — a) S वाच (T1 G1 °च्य), Cd वादं (as in text) K3 5 D7 9 G2 च (for तु) B D (except D1 7–9) T2 अतिवाद (for वादं तु यो) — b) B3 D1 T1 G1. 5 ये (for यो) D1 नाभित, D5 नास्यात (for नाहत°) — c) T1 G (except G2) हंतुमिच्छेत्श् (G1 4 °च्छेच्) च (for हन्तु°) K1 D2 इच्छति (for इच्छेत्) B Dn D3 D5 6 10 T2 हंतु (Dn D3 °तुश्) च यो नेच्छति पापक वै Cn cites नेच्छेत्, Cd पाप

12 =(var) C 12. 11029. B1 om. $12^{cd}$ — d) K1. 3 B (B1 om) D2–4 6 10 T1 G3 M धर्मं (for धर्म्यं) D10 तुरीय, Ca d चतुर्थं (as in text)

13 =(var) C 12 11023, =(var) Pañcatantra 1 279 — a) K1 2 5 D1–4 8 9 G3 सनि(K1 °चि, K5 °च्य)वसते (K3 m संविवहते), K4 B2 4 Dn D3 D5 7 10 T2 Ca d s सनिविशते, G4 सविदधते; Cap सविवदते (as in text) — b) K4 Ds1 G4 यादृशै, Dn2 D1 यादृश (for यादृशान्)

14 a) K1 3 5 Ds2 D1 7 9 G3 M4 निवर्सेत, Dn1 निवृत्तेत, D5 निमुच्येत, Cd. s as in text — b) K5 transp ततस्तत and निमुच्यते K1 D8 विमुच्ये(D8 नियर्ते)त ततस्तत Ca d s cite विमुच्यते (as in text) — c) D4 निवर्नमान (for °र्तनाद्धि) K3 च; K4 D5 7 9 S (except T1 G2 5) तु (for हि) K5 D3 4 T1 G3 सर्वत्र — d) K2 D1 8 चास्मि, Cs वेत्ति (as in text)

15 a) K3 D1 नो जीयते; G3 सजीयते; Cd n s न जीयते (as in text) K1 Ca नोप, K3 न चि°; K3 D8 4 7 चानु°, Dn Ds D10 Cnp(?) नानु°; D5 T2 अन्याश्; D6 T1 G4 Cd अन्यैर्न, D8 नोतु° (for नोत) D1 मन्य, Cs अन्यान् (as in text) — b) K3 D5 वैर कृत्वा, K4 D9 वैरीकृद्वा; K5 D8 वैरीकृत्, D6 T1 वैरीकृच्च; G3 °कृच्छाद्; G5 °कृच्चापि (for °कृच्च). K5 D8 न प्रति°, T1 G4 प्रतिघातक (for अप्रति°) K3 D7 स्यात् (for च).

16 a) D7 S (except G2) सर्वत्र (for °स्य). — b) K1 B Dn D3 D5 6 8 10 T2 मन° (for मतिम्). — d) D1 सततं य. स पूरुषः

17 D1 om 17 — a) G4 नानर्थकान्; Cd s नानर्थकं (as in text) D9 स्थापयति, Ca. d. s सान्त्वयति (as in text) — b) K1 D9 प्रतिज्ञात K4 वा (for च). — c) K (K3 missing) D (except Dn2 D3 D1 3 8) T2 M5 रध्र परस्य, T1 G (except G2) M1 3–5 रंध्रापरंध्रे; Ca d s राद्धापराद्धे (as in text) K1 2 m. 5 D7 नो याति; K3 यो याति, K4 नो वेत्ति (for जानाति) — d) K1 2 4 B Dn1 D3 D2 5 8 9 T1 G1 3 4 उत्तम° (for मध्यम°).

18 a) S (except T2) दुर्दर्शन. (for दुःशासन). Cs cites दु शासनस्था K1 4 5 D1 2 8 9 G1 5 M1 (sup lin as in text) उपह(G5 °ग)तातरात्मा, B Dn D3 D5–7 10 T2 उपहतोभिशस्तो (for उपहन्ता न शास्ता) K3 अभिशास्ता, T1 G4 अनुशास्ता, G2 परस्य (for न शास्ता) — b) K4 यो वर्तते, D1 G4. 5 M4 (inf lin) न वर्तते, T1 G1 प्रवर्तते Ca d s नावर्तते (as in text) — c) G3 मत्रम् (for मित्रम्) D1 मित्रमहो, D9 मत्रहेतो° (for मित्रमथो) — d) M3 4 (sup lin) काल, Ca. d s कला. (as in text) G3 M (except M1) एचैताः. D9 स्युरधमस्य (for

न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ १९
उत्तमानेव सेवेत प्राप्ते काले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेच्छ्रेय आत्मनः ॥ २०
प्राप्नोति वै वित्तमसद्बलेन
नित्योत्थानात्प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां
न वृत्तमाप्नोति महाकुलानाम् ॥ २१

धृतराष्ट्र उवाच ।

महाकुलानां स्पृहयन्ति देवा
धर्मार्थवृद्धाश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर प्रश्नमेतं
भवन्ति वै कानि महाकुलानि ॥ २२

विदुर उवाच ।

तपो दमो ब्रह्मवित्त्वं वितानाः
पुण्या विवाहाः सततान्नदानम् ।
येष्वेवैते सप्त गुणा भवन्ति
सम्यग्वृत्तास्तानि महाकुलानि ॥ २३
येषां न वृत्तं व्यथते न योनि-
र्वृत्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
त्यक्तानृतास्तानि महाकुलानि ॥ २४
अनिज्ययाविवाहैश्च वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २६

C. 5 1.85
B 5.36 23
K. 5. 36 26

अधमस्येह) G3 अधर्मस्य, C5 अधमस्य (as in text) G3 om. इह G2 4 एव (for इह) G3 पुमा (for पुम )

19 D10 om. 19 — a) G2 अ (for न) — b) K4 D5 S (except T2 G1.2) हि (for अपि) D5 अनु°, G1 अति°, Ca.d s आत्म° (as in text)

20 b) K4 B (except B2) Dn D1.3–6 T2 प्राप्त, Cs प्राप्ते (as in text) T1 G1 4 5 M transp प्राप्ते and काले — c) K1.2 D1.2 G2 न, T1 G1.2–5 M च (for तु) K1.2 D1.2 G3 एव (for न) — d) K4 B Dn2 D5 D7 –10 G2 भूतिम्, Dn1 D3–6 T2 गतिम् (for श्रेय )

21 a) S (except T2 G2) वीर्यम् (for वित्तम्) K4 B2 Dn2 D6 6 T2 अथ बलेन, T1 G1.5 M असद्रूप, Ca d s असद्बलेन (as in text) — c) D3 न त्वेव, G3 सदैव (for न त्वेव) G4 सन्य (for सम्यग्) K4 रमते, G5 वदते (for लभते) — d) K4 निवृत्तिम्, B2 5 Dn2 D5 D1 6.6 न वृत्तिम्, G2 स वृत्तम् (for न वृत्तम्)

22 a) K1.5 Dn1 D2–4 7 9 10 T2 G2 Cn महा कुलेभ्य , M1 °कुलानि (sup lin as in text) — b) K1 D3 G2 °युक्ता°, K4 5 B Dn D5 D3–5 7 10 T2 °नित्या°, D1 °वृत्ता°, D2 °यथा° (for °वृद्धा°) — c) G3 M त्वा (for त्वां) K2 D3 एकं, D2 9 एन, G एतत् (for एत)

23 D10 om 23–24. — a) G3 शमो (for तपो) D1 बलो (for दमो) K1 2 4 B1 2 5 Dn Ds2 D2 7 8 M2.3 °वित्त, K5 D2.4 9 °वृत्त, G4 °चर्य (for °वित्त्व) S विविक्षा, Ca d वितानाः (as in text) — b) B3 विहारा (for विवाहा ) B3 D1 सततं प्रदान (for सततान्न°) S (except T2) इज्या विवाह सास्वन (M मन्त्रविदः) चान्नदान — c) K1 येष्वेवैते वै, K2 Dn2 येष्वेव ते, K4 यत्रैवैते वै, D2 ज्येष्टे ते वै, D3 यत्रैवैते, S (except T2) यद्यावेते (for येष्वेवैते) S (except T2) नित्यमेव (for सप्त गुणा) K (K2 before corr ) B2 4.5 Dn Ds1 वसति, Ds2 च सति (for भवन्ति) — d) S सतां गुणा (for सम्यग्वृत्ता ) — After 23, D2 reads 25[ab], 27[cd], 27[ab], 25[ab] (repeated), 26, 28, 29, 24, 220*, 30[ab], etc.

24 For D2 cf v 1 23 D7 10 om. 24 (for D10 cf v 1 23) — a) K2 om the first न, reading नैव for the second. D3–6 T2 transp न and वृत्त S (except T2) येषां न (T1 G1 2 प्र-) वृत्त साधुकारेण युक्त- — b) K1 वित्तप्रसादे, K2 4 5 Dn1 D1–6 8 9 T2 वित्त(D2 वित्त)प्रमादेन, T1 G M वृत्तप्रधानेन (G3 **प्रदानेन), Ca वृत्तिप्रमादेन Cd s cite प्रमादेन K1 सचरति, Dn2 धरति, Cs चरन्ति (as in text) — c) D5 ईहति, Ca d इच्छन्ति (as in text) D1 विसृष्टां, T1 G1 3 4 M निविष्टा , G5 विनष्टा (for विशिष्टा)

25 =(var ) Manu 3 63 — a) K2 B D5–8 10 T2 Cs कुविवाहैः , Ca d as in text M1 अविवाहेन (for अविवाहैश्च) K4 अनिष्टकुविवाहैश्च, D9 अनिष्टकुलसयर्थै — b) K2 M2 उच्छेदनेन, Ca.d उत्सा° (as in text) — D3.4 om 25[c]–26[d], T2 om 25[cd] — d) K1 Dn D3 9 G2 ब्राह्मणा° (for धर्मस्या°), cf. 26[d]

26 D3 4 om. 26 (cf. v 1 25) K1 5 Dn D8 om. 26, G2 om 26[ab] T2 reads 26[ab] after 27 — a) B1

C. 5. 1160
B. 5. 36. 27
K. 5. 36. 27

ब्राह्मणानां परिभवात्परिवादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ २७
कुलानि समुपेतानि गोभिः पुरुषतोऽश्वतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ २८
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसंख्यां तु गच्छन्ति कर्षन्ति च महद्यशः ॥ २९
मा नः कुले वैरकृत्कश्चिदस्तु
राजामात्यो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा
पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ३०
यश्च नो ब्राह्मणं हन्याद्यश्च नो ब्राह्मणान्द्विषेत् ।
न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृपिम् ॥ ३१
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३२
श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मणाम् ॥ ३३
सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै
शक्तो वोढुं न तथान्ये महीजाः ।
एवं युक्ता भारसहा भवन्ति
महाकुलीना न तथान्ये मनुष्याः ॥ ३४
न तन्मित्रं यस्य कोपाद्बिभेति
यद्वा मित्रं शङ्कितेनोपचर्यम् ।

---

D8 °लोपेन (for °नाशेन). — D5 om $26^{c}$–$27^{d}$, D9 T2 om $26^{cd}$. — $^{d}$) D7 G2 धर्मस्या° (for ब्राह्मणा°)

27 D5 (cf v l 26) and D6 om 27 — $^{b}$) K2 D9 G4 Cs परीवादात्, Cd as in text — $^{d}$) T2 धर्मस्यातिक्रमेण च (= $25^{d}$) — After 27, T2 reads $26^{ab}$

28 $^{b}$) Dn Ds D8–6 T2 M1 (*sup lin*) Cs अर्थत , D1 अयत , T1 अन्यत , Ca d अश्वत (as in text). — $^{c}$) T1 G1 कुलाख्या नानुगच्छति — $^{d}$) G5 Ca वृत्तित°, Cd वृत्त° (as in text) — After 28, D3 4 7 9 ins. lines 3–4 of 220*

29 =(var.) Manu 3 66. — $^{a}$) D2 9 च (for तु) D9 अविपन्नानि (for अविहीनानि) — $^{b}$) K5 D3 D10 T1 च (for अपि) — $^{c}$) K1 4 5 B1 8 D1–7 9 10 T2 G2 5 च; M5 न (for तु) K2 निगच्छति, B5 प्रग°, Dn Ds प्रय° (for तु ग°) — $^{d}$) D10 प्रकर्षं (for कर्षन्ति) G8 अपि (for च) K5 T1 G1 M महाजन, G5 महाधन (for महद्यश ) — K4 B D (except D2) T2 ins after 29 (D3 4 7 9 ins lines 3–4 after 28) T1, after 30

220* वृत्त यत्नेन संरक्षेद्वित्तमेति च याति च ।
अक्षीणो वित्तत क्षीणो वृत्ततस्तु हतो हत ।
गोभि पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्तत ।

[ (L 1) D5 D8 यत्नेन (for यत्नेन) D3 4 वै (for सं ) B1 8 D7 आयाति (for एति च) — (L 3) D10 गोभिरश्वैश्च कृष्या च पृथक् सुसमृ°. ]

30 $^{a}$) D1 °भृत् (for °कृत्) T1 G1 5 M (by transp ) अस्तु कश्चित्, T2 अस्तु राजन् — $^{b}$) D2 राज्ये- पथ्यो, T1 G M1 राज्ञा वध्यो (G2 राजापथ्यो), M2–5 राजावध्यो D1 न, D5 य° (for मा) — $^{c}$) D52 नैकृतिवान् D2, 9 नैष्कृतिको (for नैकृतिको) Ds2m सदैव (for अनृती वा) — $^{d}$) D1 य (for वा) — After 30, T1 ins. 220* (cf v l 29).

31 $^{a}$) K (K3 missing) D7 गो- (for नो) K (K3 missing) B8 Dn2 Ds2 D1–4 7–10 T2 ब्राह्मणान् (for °ण) — $^{c}$) K2m D8m नर. स, K4 G8 तत. स; Dn1 Ds2 D3, 4 Cnp न तस्य, D9 यश्च न, D10 न च स , G4 स नर , Cn न नः स (as in text) K1 समतिं, K5 (before corr.) सुमतिं, Cd s समिति (as in text). D1 न सुसुमतिं (sic) गच्छेत् — $^{d}$) K4 विवदेत्, K5 विद्विषेत्, D1 निर्वहेत्, D9 निर्वदेत्, Ca d s निर्वपेत् (as in text). K1 2 D8 Cnp पितॄन्, K4 5 ऋषीन्, D3 4 कचित्; D5 गुरून्, Cs कृपिम् (as in text).

32 =3 2 52, =(var ) Manu 3 101, =(var ) Pañcatantra 1 187, =(var ) Hitopades'a 1. 45, =(var ) Śārṅgadharapaddhati 642 — $^{c}$) K1 हर्म्येषु (for गेहेषु) D3, 4 एतान्यपि सतां गेहे

33 $^{b}$) D1 सत्कृति; Cd सत्कार्ति, Cs सत्कृति (as in text) — $^{c}$) B8 प्रसूतानि, D9 प्रदत्ता°; Cd s प्रवृत्ता° (as in text) K2 D1 2 G1 °राज (for °प्राज्ञ) — $^{d}$) K5 B D2–5 7 8 T G (except G8) पुण्यकार्मिणां

34 $^{a}$) K1 D8 नृपते — $^{b}$) K2 D2 7 T2 G2 सोढुं शक्तो, D1 विसोढुं शक्तो, G8 शक्नोति वोढुं; G5 शक्नोति नर्तं (for शक्तो वोढुं) — $^{c}$) K5 भारवहा

35 M2 om 35–36 — $^{b}$) T1 G (except G1) M (M2 om ) कोपनेनोत (G1 °प) शक्य; Ca d शङ्कितेनोप°

यस्मिन्मित्रे पितरीवाश्वसीत
　　तद्वै मित्रं संगतानीतराणि ॥ ३५
यदि चेदप्यसंबन्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ३६
चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ॥ ३७
चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समतिवर्तन्ते हंसाः शुष्कं सरो यथा ॥ ३८
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ३९
सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ४०
अर्चयेदेव मित्राणि सति वासति वा धने ।
नानर्थयन्विजानाति मित्राणां सारफल्गुताम् ॥ ४१
संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते बलम् ।
संतापाद्भ्रश्यते ज्ञानं संतापाद्व्याधिमृच्छति ॥ ४२
अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ४३
पुनर्नरो म्रियते जायते च
　　पुनर्नरो हीयते वर्धते पुनः ।
पुनर्नरो याचति याच्यते च
　　पुनर्नरः शोचति शोच्यते पुनः ॥ ४४
सुखं च दुःखं च भवाभवौ च
　　लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमिह स्पृशन्ति
　　तस्माद्धीरो नैव हृष्येन्न शोचेत् ॥ ४५

C. 5. 1336
B. 5. 36. 47
K. 5. 36. 47

---

(as in text)

36 M2 om. 36 (cf v 1 35) — a) B Dn Ds D2-5.8-10 य कश्चित्, D2 G3 अथ चेत् (for यदि चेत्) K1.4.5 B1.3.4 D1.3-5 T2 G1-3 Cn असंयद्धो; Dn1 असपर्धी, Dn2 असयद्धो, D7.4 असयद्धि (for असंबन्धो) D1 यस्य चेतसि सपर्धी, M1 यदि कश्चिदसयद्धो — d) G2.3 स (for सा)

37 a) Dn1 D3-4 चलचि(D3 °चि)त्तस्य, T1 G4 न कश्चि(G4 °चि)त्तस्य, M2 न उन्मित्र यस्य (for चलचित्तस्य) — b) D2.4.5 G1.2.4 M2.4 अनुपसेविन — d) B3 Dn2 °सगत (for °संग्रह°)

38 a) D1 स्थिर°, D3.8 चल° (for चल°) K3 T1 G1.3 अनात्मज्ञ; D1 महात्मान, M दुरात्मान (M1 sup lin as in text), C5 अनात्मान (as in text) — c) K5 B1-3 Dn D6.10 T2 समभि°, D7 समधि°, C1 p समति° (as in text) — d) K2 Dn1 D2.8.9 G4 शुष्कमगे

39 a) D1 अथ (for एव) — d) B1 D1 मित्र, D5 अब्द, T1 G1.2.3 अप्सु, M1-3 अभूत्, C2.d 3 अभ्र (as in text)

40 =(var) Rāmāyaṇa (ed N S Press) 4 30 73

41 a) B Ds2 D2.6.8.10 अर्च°, T1 G1.2 प्रार्थ° (for अर्थ°) — b) Dn D5 च (for the first वा) — c) B1.2.3 D5 नानर्थयन्, D7 नान्यथा मित्र, T1 G1.2.3 नान्यर्थयन् (for नानर्थयन्) K2 D1 T1 G M विजानाति (as in text), the rest प्र°

42 K2 Ds2 om. 42ab G3 transp 42ab and 42cd — b) Ds1 D10 कुल, D2 फल (for बलम्) — d) B1.2.4 D3 अर्ह°, Dn अर्ह° (for ऋच्छ°)

43 a) K1.2 अनवाप्य, K4 D5 सप्राप्त च, B1.3 अनिवार्यं च, T1 G अपहास्यत् (G3.4 °स्य), Cd 5 अनवाप्यं (as in text) — b) K1 व प्रतप्यते, K4 चोपतप्यत, B2 D1.2.4.9 G1 दप°, D3 चोपपद्यते — c) B1.3 प्रहृष्यते

44 a) G4 transp म्रिय° and जाय° K1.4.5 D5 पुन (for च) — b) K4.5 transp हीय° and वर्ध° B1.3 D1 G1.3 M1.3.4 याचति याच्यते, T1 याचते याच्यते; T2 हीयते वर्धते, G3 याच्यते याचते, G4 याच्यते याच्यते, M2.5 याचति याप्यते (for हीयते वर्धते) K2 B D (except D2.7.9) T2 G (except G6) च (for पुन) — c) B1.3 शोचति, B2 याचते, T1 G1.4 M1 वर्धते, G5.6 हीयते, M2-5 हायति (for याचति) B1.3 शोच्य°, Ds2 D5.8 याच°, T1 जाय°, G1.4 M1 हीय°, G5.6 M2-5 वर्ध° (for याच्य°) K1.4 D2.7-9 M2-4 पुन (for च) — d) B1.3 हीयते, B2 शोचते, T2 G3 शोच्यति (for शोचति) B1.3 वर्ध°, T2 G3 शोच° (for शोच्य°) K2.3 B D (except D7-9) G1.5 च (for पुन)

45 =(var) C 12 762 — b) K5 वा (for च) — c) Dn1 D2.4.10 G1.2.4 पर्यायत, G5 पर्यायशश्चैव (for °शः) K1.4.5 D5.9 हृद, B Dn Ds1 D2-6.10 T2 एते; Ds1 इव (for इह) D5 स्पृशते, T1 M आस्पृशति (for स्पृशन्ति) — d) Ds1 D7 T2 G4 वीरो (for धीरो) K5 B (except B3) Dn2 D5.6.8 T2 च (for एव) S

C 5. 1307
B. 5. 36. 48
K. 5. 35. 43

चलानि हीमानि षडिन्द्रियाणि
तेषां यद्यद्वर्तते यत्र यत्र ।
ततस्ततः स्रवते बुद्धिरस्य
छिद्रोदकुम्भादिव नित्यमम्भः ॥ ४६

धृतराष्ट्र उवाच ।

तनुरुच्चः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ४७
नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ॥ ४८

विदुर उवाच ।

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागाच्छान्तिं पश्यामि तेऽनघ ॥ ४९
बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं त्यागेन विन्दति ॥ ५०
अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५१
स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५२
स्वास्तीर्णानि शयनानि प्रपन्ना
न वै भिन्ना जातु निद्रां लभन्ते ।
न स्त्रीषु राजन्रतिमाप्नुवन्ति
न मागधैः स्तूयमाना न सूतैः ॥ ५३
न वै भिन्ना जातु चरन्ति धर्मं
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं मानयन्ति
न वै भिन्नाः प्रशमं रोचयन्ति ॥ ५४
न वै तेषां स्वदते पथ्यमुक्तं
योगक्षेमं कल्पते नोत तेषाम् ।

---

(except T2) transp हृष्येत् and शोचेत् B3 शोच्येत्, D3 हृष्येत् (for शोचेत्)

46 ^a) B3 D3 4 चला° (for चला°) Dn1 D9 हीना°, T1 G6 भीमा°, G3 हृमा° (for हीमा°) D9 यदि (for षड्) — ^b) D3-4 9 transp तेषां and यद्यत् K1 यद्वत्, K4 T1 यत्, Dn1 यत्तद् (for यद्यत्) B1 4 Dn Ds D8 10 T2 G1 2 C5 वर्धं°, D1 यत° (for वर्तं°). B2 5 Ds D10 तत्र तत्र, D7 T2 यत्र तत्र, C5 यत्र यत्र (as in text) — ^d) T1 G6 सच्छिद्र° (for छिद्रोद°) — Cf 5 33 65

47 =(var ) 5 52 13 — ^a) K1 4 D1 8. 9 T1 G1. 3-5 तनुरुच्चशिखी (T1 G4 5 °खो), B3 4 Dn1 D2-6 T2 Cn °स्त्वं शिखी, G2 °रत्पसुखी, Ca d s as in text

48 ^a) G4 समुद्विग्न (for नित्यो°) K (K3 missing) B2 4 5 Dn1 Ds1 D2 7 Ca d s सत्व, Dn2 नित्य, G2 सत्य (for सर्वं) — ^c) K4 5 चात्यतम् (for तत्पदम्). K4 5 S (except T2 G2) अनुद्वेग (for °द्विग्न) — ^d) B2 4 D9 ब्रूहि (for वद) S (except T2 G2 4 M2) °द्युते (for °मते)

49 ^a) Dn Ds2 D3 G2-5 विद्यातपस , D1 विद्यते ध्यमो (for °तपसो ). Cd n cite विद्या तप — D1 om 49^c-50^b — ^c) K1 2 5 D3 G2 लोभसन्यासात्, K3 सर्वसंत्यागात्; G4 प्रशमाद्राजन् (for लोभसंत्यागात्) — ^d) G4 हित, Ca d शान्ति (as in text)

50 D1 om 50^{ab} (cf. v 1 49) — ^a) B3 तम , Ca d s भय (as in text) — ^d) K5 B2 4 5 Dn Ds D5-8 10 T2 योगेन, Ca d s त्यागेन (as in text)

51 ^{ab}) K2 D1 2 G2 transp. दान° and वेद°. B1. 4 देव°, Cd s वेद° (as in text) Ds2 धर्मं चैव समाश्रिता

52 ^a) Dn अधीतस्य (for स्वधी°). K1 स्वयुद्धस्य, K3 D2 9 T1 G (except G3) सु(G4 च, G5 स्व)युद्धस्य (for सुयु°) — ^b) D9 सुश्रु° (for सुकृ°) — ^d) K1 अश्नुते (for एधते) Dn1 D3 4 9 भवत्येते सुखोदयाः

53 ^a) Ds आस्ती° (for स्वास्ती°) — ^b) T1 G1 3 निद्रा भजति, G2 4 M लभन्ति निद्रा; C5 निद्रा लभन्ते (as in text) K1 5 D8 न वै भिन्नाः प्रशमं रोचयन्ति (=54^d) — ^c) K1 4 5 धृतिम् (for रतिम्) — D8 om 53^d-54^d

54 D6 om 54 (cf. v 1 53) — ^a) D9 transp चरन्ति and धर्मं — ^b) K1 (before corr ) धीरा. (for भिन्ना ) — ^c) K2 D7 9 मानयन्ते, K5 B (except B1) Dn Ds D3-5 8 10 T2 प्राप्नुवन्ति (Ds1 °ते), D1 च श्रयति (for मानयन्ति) — ^d) T1 G3 M1 2 प्रथम, C5 प्रशम (as in text) B3 मान° (for रोच°).

55 ^a) K1 4 न चैषां, K2 D2 न वै चैषां, K3 D1 न चैवैषां (for न वै तेषां) T2 स्वादते, G3 संदधे; G5 रोचते (for स्वदते) — ^b) K5 B1 D1. 8 T1 G1 2 6 योगक्षेम , Ca d s as in text. B D T2 एव; G2 4 M इह (for उत) — ^c) T1 G1 5 वा (for वै) — ^d) G5 कच्चित् (for किंचित्) G4 अन्यत्र नाशात् (for अन्यद्वि°)

56 =(var ) Rāmāyana 6 16. 9; =(var.) Pañ°

भिन्नानां वै मनुजेन्द्र परायणं
न विद्यते किंचिदन्यद्विनाशात् ॥ ५५

संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं स्त्रीषु चापल्यं संभाव्यं ज्ञातितो भयम् ॥ ५६

तन्तवोऽप्यायता नित्यं तन्तवो बहुलाः समाः ।
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम् ॥ ५७

धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ५८

ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ५९

महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य एव वातेन शाखास्कन्धं विमर्दितुम् ॥ ६०

अथ ये सहिता वृक्षाः संघशः सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान्वातान्सहन्तेऽन्योन्यसंश्रयात् ॥ ६१

एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६२

अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।
ज्ञातयः संप्रवर्धन्ते सरसीवोत्पलान्युत ॥ ६३

अवध्या ब्राह्मणा गावो स्त्रियो बालाश्च ज्ञातयः ।
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ६४

न मनुष्ये गुणः कश्चिदन्यो धनवतामपि ।
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ६५

C. 5. 1323
B. 5. 36 67
K. 5. 36 67

---

catantra 4 81 — a) B2 4 6 Dn2 Ds D2 6 T2 transp संभाव्य and संपन्न D1 च क्षीर (for संपन्न) — c) B Dn1 D2-6 8 9 चापल स्त्रीषु, Ds D10 चापल स्त्रीणा, T2 वा फलं स्त्रीषु (for स्त्रीषु चापल्य)

57 =(var) Pañcatantra 2 8 — a) Ds D2 जतवो, D1 तरवो (for तन्तवो) G2 M1 4 त्रि, G4 हि (for ऽपि) K1 (by corr) Cd आतता, B D2 (before corr) 4-6 10 T1 G3 M2 4 आयिता, C3 s आयता (as in text) — b) B (except B1) D (except Dn1 D1 2 9) T2 G1 2 4 Ca d.s तनवो (for तन्तवो) T2 G2 4 M स्मृता, Ca.d.s समा (as in text) — c) D1 आयाम्या, T1 M2 4 व्यायामान्, G1.2 M2 6 व्यायामान्, G2 4 आयामान्, M1 व्यायामा, Ca d आयामान् (as in text) K2 बहु वाद्बहुलत्वाच — d) K2 महति, S (except T2 G2) वहंति, Ca सहति (as in text)

58 =5 62 19 — a) K4 B2 Dn2 Ds D2 6 8 10 S (except T1 G1 4 6) धूमायति, Ca d as in text G4 व्यपेता हि, Ca d व्यपेतानि (as in text) — b) D2 7 M1 2 ज्वलते, Ca as in text K2 6 Dn1 M1.2 महतानि G2 तु (for च) K1 महतानि ज्वलति च, T1 G1 4 प्रज्वलतीह (G4 °व) सगता·

59 =(var) Śārṅgadharapaddhati 1312 — a) G2 तु (for च) — b) M2 transp स्त्री° and ज्ञाति° B1 स्त्रीषु गोषु च भारत, D2 m. 2 4 स्त्रीषु गोषु तपस्विषु

60 =(var) Pañcatantra 3 51 — a) K1 2 Dn1 D2 4 T2 एकक, Ca d एकज (as in text) — b) K2 फलवान्, M (M1 *sup lin* as in text) बलवत् (for बलवान्) K2 तु (for सु) — M2 (hapl.) om. 60c– 61b — c) D9 विपह्य, D10 सुशक्य, Ca d s प्रसह्य (as in text) K1 प्रसह्यैव हि (for प्रसह्य एव) B3 इव (for एव) S (except T2 G2, M2 om) वातस्य (for वातेन) — d) D2 9 शाखास्कधे, Ca d as in text D1 विमर्पितु, D2 च मर्दितु, D9 प्रमर्दितु (for विम°) K1 शक्य स्कधे प्रमर्दितु, K4 शक्य स्कवेन म°, K6 T1 G M शाखास्कधेव· (T1 G1 °धेन, G2 °धश्च)म°, B Dn Ds D2-6 10 T2 सस्कधो मर्दितु क्षणात्, T1 शाखास्कधेन म°

61 =(var) Pañcatantra 3 60 — M2 om 61ab (cf v 1 60) — a) K1.2 महता (for सहिता) — b) K2 सर्वत्र, T1 G1.6 अमूला, G2 आमूला, G4 M (M2 om) समूला (for संघशः) T1 G1 6 अप्र° (for सुप्र°) G3 आमूलाप्राप्यतिष्ठिता — c) K4 B1 3 D2.4 9 S (except T2 M2 3) अपि, D2 तेपि (for ते हि) — d) K2 [अ]न्योन्यमाश्रयात्, D4 [अ]न्योन्याश्रयेण च (hypermetric!)

62 =(var) Pañcatantra 3 53 — D4 (hapl.) om 62a–63b — d) K1 B3 Ds D1.9 10 T2 एकक (for एकज)

63 D4 om 63ab (cf v 1. 62) — a) K (K3 missing) D1 2 6 6 8 G2 अन्योन्यसमुपस्त्र(K2 °पास्त, K4 °पल)भात्, T1 G1.3-6 M अन्योन्यसोप(G1 °स्याप·, G4 °स्नेह, G5 °स्थैव)मस्त्रभात्, T2 अन्योन्यसमनुस्तभात — b) B1.3 वा (for च) G1 अन्योन्याश्रयणेन च, G4 अन्योन्यस्याश्रयेण च — c) B3 G2 M1 (*sup lin*) संप्रवर्तंते — d) D2-4 9 G4 (before corr) च (for उत)

64 b) K1 वृद्धा (for बाला) M बालाथ (for °श्च) D2 बाधवा (for ज्ञातय) B Dn Ds D3-6 8-10 T2 ज्ञातय शिशव स्त्रिय — d) K2 T1 G (except G6)

C 5 1727 B 5 ... K 5 35 63

अव्याधिजं कटुकं शीर्षरोगं
पापानुबन्धं परुषं तीक्ष्णमुग्रम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ ६६

रोगार्दिता न फलान्याद्रियन्ते
न वै लभन्ते विषयेषु तत्त्वम् ।
दुःखोपेता रोगिणो नित्यमेव
न बुध्यन्ते धनभोगान्न सौख्यम् ॥ ६७

पुरा ह्युक्तो नाकरोस्त्वं वचो मे
द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां
कितवत्वं पण्डिता वर्जयन्ति ॥ ६८

न तद्बलं यन्मृदुना विरुध्यते
मिश्रो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्री-
र्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ६९

धार्तराष्ट्राः पाण्डवान्पालयन्तु
पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः कुरवो ह्येकमन्त्रा
जीवन्तु राजन्सुखिनः समृद्धाः ॥ ७०

मेढीभूतः कौरवाणां त्वमद्य
त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान्बालान्वनवासप्रतप्ता-
न्गोपायस्व स्वं यशस्तात रक्षन् ॥ ७१

---

शरणं गता (for शरणा°) — After 64, D8 ins.:

221* महत्यप्यपराधेऽपि तेषां दण्डो विसर्जनम् ।

65 a) D9 मनुष्येषु (for न मनुष्ये) K1 D8 T1 G3 4 M मनुष्यगुण, D2 G2 5 मनुष्यगुणा (for मनुष्ये गुण) — b) K1 D2 G4 गुण° (for धन°) D3 ऋते (for अपि) K4 B1 3 Dn D8 D3-7 10 T2 राजन् (K4 B1 3 D7 अन्य) सधनतामृते

66 =(var) 5 27. 23, =(var) B. 2 64 18 — G2 4 5 transp 66 and 67 — a) M3-5 अव्याधिकं, Ca d as in text K4 B1 3 4 D (except D1 2 7. 8) T2 G4 Cn शीर्षरोगि, G2 शीर्षतोय, Cd °रोग (as in text) — b) G3 पापानुविद्धं, Ca d as in text K1 तीव्रम्, Cn d 8 तीक्ष्णम् (as in text) N (except D1, K3 missing) T2 Ca d 8 उष्ण (for उग्रम्) — c) D1 G2 5 अपेय; Ca d पेय (as in text) D1 G2 om यत्. D1 च (for न)

67 G2 4 5 transp 66 and 67 — a) T1 रोगान्विता K1 वै (for न) K1 बलम्, G3 M (except M5) फलान्, G4 बलान् (for फलानि) K1 आश्रियते, G5 आश्र°, Ca d आद्रि° (as in text) — d) T1 G5 न विंदते, G1 निर्विंदते, G2 न लभ्यते (for न बुध्यन्ते) Dn1 धनयोगात्, T2 न च भोगात् (for धनलोभात्) D1 धनलोभात्सुसौख्य; M1 (sup lin) धनभोगात्सुभोगान् T1 G (except G3) M3-5 भोगान् (for सौख्यम्)

68 a) K1 D1 S (except T2 G2) अपि (for हि) K1 2 B1 3 4 Dn D8 D2-8 10 T2 उक्त, D9 युक्तो (for उक्तो) — b) D1 G5 वीक्ष्य (for प्रेक्ष्य). — c) D1 9 वारयति, D2 धारयति, D5. 6 वारयेस्त्व (for वारयेति) — d) K2 5 D1 2 7. 8 G2 कैतव्य वै, D9 कितवस्त्व K1 4 B1 D8 D10 वै पण्डिता (for पण्डिता)

69 a) T1 G1 अव°, Ca. d 8 वि° (as in text) — b) K4 5 B Dn D8-6 10 T2 Cap सूक्ष्मो; T1 मैत्री°; G मैत्रो (G8 मित्रो), M मित्रं; Ca d 8 मिश्रो (as in text) T1 G1. 5 सहसा (for तरसा) — 69cd = C 2 2488cd. — c) K1 2 D1 7 प्रभ्रंशिनी (for प्रध्व°) T1 G क्रूरसमाश्रिता D1 ते (for श्री.) — d) D1 मतिर्मोहाद्; Cs मृदुप्रौढा (as in text). Ca d cite प्रौढा. K2 धार्तराष्ट्रान् (for पुत्रपौत्रान्)

70 a) B8 पांडवेयान् (for पाण्डवान्). — b) K1. 2 4 D81 D1 9 T1 G (except G5) पुत्राः (for सुताः) T1 G (except G8) तु (for च) D9 जातु (for पान्तु). — c) D8 D1 10 एकामित्राः (for एकारि°). K4 D1 G3 ह्येकमित्रा, B1 2 4 5 Dn D8 D5 6 8 10 T2 ह्येककार्याः; B1 D8 4 9 पाडवाश्च; D2 T1 G1 2 4 5 M1-3. 4 (inf. lin as in text) 5 -श्चैकमित्रा — d) S (except T1) कुरव (for सुखिनः) D7 G4 समेताः (for समृद्धाः)

71 a) B4 D8 D9 S (except T G1. 2) Cd मेधी°, Ca 8 मेढी° (as in text) K1 एक (for अद्य) — b) D7 8 G3. 4 त्वया, T1 G1 5 त्वद्- (for त्वयि) K3 D1. 8 S (except T2 G2 M1) अधीन (for आधीनं). D12 D1 कुरुकुशल (for कुरुकुलं) — c) T1 G1 3. 4 °वासे (for °वास-) — d) K1 4 गोपाय त्व, K3 गोपायन्वै; D2 (उ)पालयस्व (for गोपायस्व) D7 रक्ष (for रक्षन्) S (except T2 G2) गोपायेस्त्व स्वान्सुतांस्तात रक्ष.

संयच्छ त्वं कौरवान्पाण्डुपुत्रै-
र्मा तेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव सर्वे
दुर्योधनं स्थापय त्वं नरेन्द्र ॥ ७२

इति श्रीमहाभारते उद्योगपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

# ३७

विदुर उवाच ।
सप्तदशेमान्राजेन्द्र मनुः स्वायंभुवोऽब्रवीत् ।
वैचित्रवीर्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ॥ १
तानेवेन्द्रस्य हि धनुरनाम्यं नमतोऽब्रवीत् ।
अथो मरीचिनः पादाननाम्यान्नमतस्तथा ॥ २
यश्चाशिष्यं शास्ति यश्च कुप्यते
यश्चातिवेलं भजते द्विषन्तम् ।
स्त्रियश्च योऽरक्षति भद्रमस्तु ते
यश्चायाच्यं याचति यश्च कत्थते ॥ ३
यश्चाभिजातः प्रकरोत्यकार्यं
यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति
यश्चाकाम्यं कामयते नरेन्द्र ॥ ४

C. 5. 1337
B. 5. 37 4
K 5. 37 4

72 $^a$) D9 सयक्ष, G2 अद्यस्व, G8 सयच्छ (for सघस्व) K5 B D (except D1) T G (except G2) कौरव (for कौरवान्) — $^d$) D5 सुयो° (for दुर्यो°) G2 वारय, Ca स्थाप° (as in text) D10 सुमार्ग (for नरेन्द्र)

Colophon K8 missing — *Sub-parvan* K2 B1-4 Dn2 D5 D1.8-8 8 10 T G1 2 M प्रजागर, K4 6 सजययान, B6 G6 विदुरप्रजागर — *Adhy name* K (K8 missing) D1 2 7 8 10 G2 विदुरवाक्य, G1 M कुलप्रशासन (G1 °शासा) — *Adhy no* (figures, words or both) D6 35, Dc (*sec m*) 33, D7 S 36 (M 37) — *S'loka no* K6 71, Dn D8 73, G6 72, M6 70

## 37

☞ This adhy is missing in K8 (cf. v 1 5 32 15)

1 $^a$) K2 धृतराष्ट्र (for राजेन्द्र) G6 मनुर्व्येंद्र (for इमान्राजेन्द्र) D9 दोषान्सप्तदश श्रीमान् — 1$^b$=1 67 9$^d$, 111 31$^d$ — $^d$) D8 आकाशे (for आकाशं) M6 आकाशं प्रति मुष्टिभि

2 $^a$) Dn D2-6 T2 दानवेंद्रस्य (for तानेवेन्द्रस्य) Ca.d cite इंद्रस्य K1 कोमुन्न (sic), K2 4 6 D1 7 9 G2 Cd.s कार्मुक, D2 कोदंड, T2 च धनु, G3-6 M धं चाप (for हि धनु) T1 G1 तानेव हींद्रस्य चाप — $^b$) D8 T1 G3 4 M4 अनम्य (for अनाम्य) K4 M1.4 नाम्यतो; G1 नमते, G8 नयतो (for नमतो) D1 °ब्रुवन्, T1 G1.2 5 ब्रुव (for ऽब्रवीत्) K1 मान्य कामयतो व्रत — G2 om. 2$^{cd}$ — $^d$) T1 G (G2 om) अनम्यान्, M8 4 अनम्यन् (for अनाम्यान्) D1 T1 G (G2 om) M2-6 अब्रवीत् (for तथा) K4 6 B Dn D5 D8-8 10 T2 अप्राह्यान्गृह्णतस्तथा, D9 अनामयतोब्रवीत् (sic), M1 आनम्याश्चैव नाम्यत

3 $^a$) K2 6 B Dn D8 D8-8 10 T शास्ति वै (K2 D7 च, T1 त, G6 तु) (for शासति) K6 Dn1 D2-6 8 T2 Cn तुष्येत्, B Dn2 D5 D10 G2 रुष्येत्, D1 तप्यते, D9 कल्पेत, G8 कुप्यति; G4 Cs कुप्येत् (for कुप्यते) — D9 om 3$^{bcd}$ — $^c$) K1 2 D2 7 Ca स्त्रिय, K4 श्रिय, D1 प्रिय (for स्त्रिय) T1 G1 2.6 नो, Ca d यो (as in text) K4 6 B1.2 4 Dn D1-5 6(*sup lin*) T2 अश्नुते (for अस्तु ते) — $^d$) B D (except D1.2 7, D9 om.) T G4 याचते (for °ति) B1 2 4 5 Dn D8 कत्थते वा, B3 D5 D8-6 10 T2 कत्थते च, G4 वै ह्यनीयं (sic) (for यश्च कत्थते) K2 D1 2 G2 कुप्यते (for कत्थते)

4 K4 om 4$^{abc}$ — $^b$) D1 अवली (for अबलो) B1 2 5 Dn2 D5 T1 बलिना (for °ना) — $^c$) D1 ह्यश्र° (for अश्र°) T1 G1 वचो (for च यो) — $^d$) K2 अधन, K4 कामं, D5 D10 G2 Ca d s अकामान्, D1 कामान्; D5 T1 G1 8 6 M8 अकाम, G4 M1.4 6 Cdp sp अकामा (for अकाम्य)

5 $^a$) K1 Ca वध्वा हास्यं, K4 B Dn D2-6 8 T2 G2 वध्वावहास, D1 यद्वा दुराप, T1 G1.3-6 वध्वा वास, M1(*sup lin* as in text) 2-6 वध्वा सहाम्य, Cd s वध्वा हास (as in text) D1 सुलभ (for श्वशुरो) B D

C. 5. 1358
B. 5. 37. 5
K. 5. 37. 5

यच्चा हासं श्वशुरो यश्च मन्यते
वध्वा वसन्नुत यो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं
स्त्रियं च यः परिवदतेऽतिवेलम् ॥ ५
यश्चैव लब्ध्वा न स्मरामीत्युवाच
दत्त्वा च यः कत्थति याच्यमानः ।
यश्चासतः सान्त्वमुपासतीह
एतेऽनुयान्त्यनिलं पाशहस्ताः ॥ ६
यस्मिन्यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युदेयः ॥ ७

धृतराष्ट्र उवाच ।

शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ८

विदुर उवाच ।

अतिवादोऽतिमानश्च तथात्यागो नराधिप ।
क्रोधश्चातिविवित्सा च मित्रद्रोहश्च तानि षट् ॥ ९
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान्घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ १०

---

(except D1 2 7 9) T2 transp य and मन्यते (om. च) — b) K4 B3 4 D (except D8 D1 9) T2 वध्यावसन्नभयो (for वध्वा वसन्नुत यो), see Cn T1 G1 8.6 M वास, Ca d s वसन् (as in text) T1 G1 8 6 सहते, M सह यो (for उत यो) G6 धर्म°, Cs मान° (as in text) — c) K2 निर्वपते S (except T2 G2) यश्च वपेत (for निर्वपति यश्च) Ca cites परक्षेत्रेषु, Cd क्षेत्रे D7 स्व- (for च) D9 वीर्यं, Ca d बीज (as in text) — d) K1 4 स्त्रिय, T1 G3 4 M1(inf lin as in text) 8.4 प्रिय, G1 6 प्रिया (for स्त्रिय) Ca d cite परिवदति

6 a) B Dn Ds D6 6 10 T2 अपि (for एव) S (except T2 M2) लब्धं (for लब्ध्वा) B (except B3) Dn2 Ds D6 6 8 10 T2 वादी, Dn1 वदेत् (for उवाच). — b) B2 4 कथयति, T1 G6 कथ्यते, G3 4 कथ्यति, Cn कत्थते (for कत्थति) K1 6 D8 D1 याचमानं, K2 D8-7 याच्यमान, B3 4 M1(sup lin as in text) 2 4 याचमान (for याच्य°) — c) K1 2 6 D7 9 ये च, K4 तमेव (for यश्च) K1 असत (for असत.) K (K3 missing) D2-4 7 9 G2 सत्यम्, B3 D6 6 8 10 T2 G4 सन्वम्; D1 सततम् (for सान्त्वम्) K1 4 6 D8 4 7 9 T2 G2 उपासते ह; B Dn D6 6 8 10 °नयीत, Ds °शयीत (for °सतीह) — d) K4 उपल्य नयन्ति, K6 B Dn Ds D2-8 10 T2 ध्यासयन्ति, D9 ता सर्वे नु याति, T1 G1 6 एते हि यांति, G2 एते मनुष्या , G6 एतेन मास्यति; G4 एतेन यास्यति (for एते नु यान्ति) K1 6 B Dn Ds D3-9 10 T2 G3 निरयं, D1 मल्लिर, G6 अनिश (for अनिलं) D1 चै मनुष्या , G1 5 पाशहस्त (G6 °स्तान्)

7 =(var ) C 12 4052 — a) Ds G3.4 M वर्तंति — b) B2 T G1 2 6 वर्तितव्य D2 G2 धर्मं — c) D1 मायाविनो (for °चारो) D1 वर्तितव्या., T1 G1 2 6 चाधि°, G3.4 M चोधि° — d) D1 साध्वाचारा· B D (except D2 8) T2 प्रत्युपेय (D1 °देया ) — After 7, K2 B D (except D2-4 9) T G (except G3) M1 ins (a variant version of 5 35 43)

222* जरा रूप हरति हि धैर्यमाशा
मृत्यु' प्राणान्धर्मचर्यामसूया ।
कामो ह्रिय वृत्तमनार्यसेवा
क्रोध' श्रिय सर्वमेवाभिमान ॥

[ (L 1) K2 Ds D1 7 M1 om हि Dn1 G4 M1 आशां — (L 3) D1 transp. कामो and ह्रिय — (L 4) D7 सर्वहरो (for सर्वमेव) D1 T1 G (except G3) M1 अति (for अभि-) ]

8 b) K1 G2 वै सदा, D1 सर्वदा, D7 वै तदा; T1 G1 4 6 M1 (inf. lin.) वै तथा, G3 वै यथा; M भारत (for वै यदा) — c) D7 प्राप्नोति (for नाप्नोति) Dn1 D8 4 अय, D2 इह, G3 अपि (for अथ) D7 न (for च) D9 न चाप्नुवन्ति तत्सर्वं — d) K2 G3 एव (for इह) S (except T2 G2 8) कर्मणा (for हेतुना)

9 a) K1 4 5 B2 4 Dn Ds D6 8 10 T2 transp °वाद· and °मान B1 8 5 T1 G5 अभिवादो, Cd s अतिवादो (as in text) D2 अतिमानोतिवादी च — b) D2 अति (for तथा) K1 4 6 T1 Cdp np sp अत्याशो; K2 G अत्याशा, B2 अन्यायो, Cd s अत्यागो (as in text) D9 तथा संभावनात्मना — c) K1.4 5 B2 8 D2-4 7 9 T2 विचिकित्सा, B1 4 5 D6m 6 8 G1 M6 Cn आत्म(G1 M1 अति)विधित्सा, Dn Ds D10 Ca d s अनुविधित्सा, D1 अति प्रहर्ष (for अतिविवित्सा) — d) M °द्रुह्यं (for °द्रोह·)

10 a) B1 D8 G2 8 M अयसा., D2-4 आमया (for असय ) — d) K1 2 4 Ds1 T2 अश्नुते (for अस्तु ते)

11 a) D3 4 9 निश्वस्तवर्गान् (D9 °न्त इति) यो हन्यात्·

C. 5. 1690
B. 5. 44. 7
K. 5. 44. 7

त आत्मानं निर्हरन्तीह देहा-
न्मुञ्जादिषीकामिव सत्त्वसंस्थाः ॥ ४
शरीरमेतौ कुरुतः पिता माता च भारत ।
आचार्यशास्ता या जातिः सा सत्या साजरामरा ॥ ५
आचार्ययोनिमिह ये प्रविश्य
भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति
प्रहाय देहं परमं यान्ति योगम् ॥ ६
य आवृणोत्यवितथेन कर्णा-
वृतं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ७
गुरुं शिष्यो नित्यमभिमन्यमानः
स्वाध्यायमिच्छेच्छुचिरप्रमत्तः ।
मानं न कुर्यान्न दधीत रोष-
मेष प्रथमो ब्रह्मचर्यस्य पादः ॥ ८
आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥ ९
समा गुरौ यथा वृत्तिर्गुरुपत्न्यां तथा भवेत् ।
यथोक्तकारी प्रियकृत्तृतीयः पाद उच्यते ॥ १०

---

all comm as in text Ds D8-10 S Cs' धीर(G8 M देह)भावात्, Ca d s सत्त्वसस्था: (as in text). — After 4, B3 ins 281*, while D7 ins

282* यदि सर्वे प्रमुच्यन्ते कामा ये हृदि संस्थिता. ।
अथ मृत्योर्मृत इति तत्र ब्रह्म समश्नुते ।

5 Cf Manu 2. 147-148 — After 5ab, D5 T2 ins 283* — c) T2 M °शिष्टा, Ca d s °जाता (for °शास्ता) K1 आचार्यजातयो जातिः — d)=Manu 2. 148d. K1 Cd s सा नित्या, K4 D2-4 सा दिव्या; B Dn2 D5 D1.5 6 Ca सा पुण्या; Dn1 दुरापा (for सा सत्या) — D8-10 T1 G subst for 5cd D5 T2 ins after 5ab

283* आचार्यतस्तु यज्जन्म तत्सत्यं वै तथामृतम् ।

[ Noticed in Cs', but *not* in Ca. d. s — D5 D8-10 च (for तु) ]

— T2 ins after 5cd

284* तस्मात्तामेव यत्नेन बुद्धिमान्प्रतिपद्यते ।

— After 5, M1 ins. 281*.

6 B1 5 om 6 B3 Dn D5 D8-10 T G M1 Cs' read 6 after the ref of stanza 4, Ca d.s read as in text — a) K1 4 B2.3 D1 6 Ca. d s °योनौ, Cs' °योनिं (as in text) K1 4 D1.2 5 स, Cs' ये (as in text). Ca d s cite प्रविश्य (as in text) — b) K1.4 B D (except D5 D8 9) Ca d s गर्भे; Cs' गर्भं (as in text) — d) D5 D8-10 T G M1 Cs' विहाय, Cs प्रहाय (as in text) D5 D8-10 T G Cs' सत्य, D1 रूप, D5 योगान्; Cs योगं (as in text). — Here two folios missing in Cd !

7 Cf. Manu 2 144 — a) K4 D32 G4 om य. D8-10 T1 Cs' स, Cs य (as in text). B1 5 Dn D1 6 प्रावृणोति, B3 वै वृणोति, M1 2 आतृणति, M3.4 आतृणोति; Cs. s' as in text D8-10 T1 G2 Cs' om from अवितथेन up to कुर्वन् in 7b ! D5 अतिरत; G5 अविरुद्धेन, Cs as in text. B (except B2) Dn D3.4 6 वर्णान्, D5 सुशिष्य, D7 T2 कर्मणा (for कर्णौ) — b) D3 विद्यां, T2 G5 दुःखं; G1 4 अदुःख, Cs ऋत (as in text). K1 4 D1 2 7 ब्रुवन्; D5 अन्न, Cs कुर्वन् (as in text). D7 अमृतत्वं (for अमृत स-). D5 M5 सम्प्रयच्छेत्. — c) Om in D8-10 T1 G2 Cs'. D5 तस्मिन्, G4 M5 तत् (for त). K1 4 B2 D1-7 वै मन्ये (B2 D5 मन्येत्), G4 M1 मन्ये (for मन्येत) — d) D5 D6 9 तस्मिन्न, D2 नास्मै (for तस्मै न) D2-4 Cs प्रजानन्, Cs' जानन् (as in text)

8 a) B3.4 Dn D8-10 T1 G2 3 Cs' अभिवादयी(D5 °ये)त, Ca s अभिमन्य° (as in text) — b) K4 D5 D5 7-10 S Cs' इच्छेत (D5 D8-10 T1 G2 5 Cs' °च्च) सदाप्रमत्त , B1 इच्छेच्छुचिरेवाप्रमत्तः Ca cites इच्छेत् (as in text). — After 8ab, D8-10 G2 ins 285*. — D8-10 G2 Cs' om 8cd — c) S (except T1, G2 om ) मानाश्च माद्येत्; Ca s as in text Dn D5 D7 T1 Cs नादधीत, D2 5 निद°, M विद°; Ca न दधीत (as in text) — d) Dn एषामानं नित्यमभिमन्यमान° (*not* adopted in the old printed editions !); see above — B1 4 (om line 2) 5 Dn D5 T2 G1 3 5 ins. after 8. D8-10 G2, after 8ab

285* शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।
ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ।

[ Noticed in Cs', but *not* in Ca s ]

9 D5 D8 9 T1 G2 read 9 after 287*, D10 T2 G1 3 5, after 11 — a) D5 D8-10 S (except G5) Cs' आचार्याय D5 D8 10 ब्रूयात्, T1 कुर्वन् (for कुर्यात्) — d) D5 D8 9 T2 G चतुर्थः (for द्वितीय.)!

नाचार्यायिहोपकृत्वा प्रवादं
प्राज्ञः कुर्वीत नैतदहं करोमि ।
इतीव मन्येत न भापयेत
स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥ ११
एवं वसन्तं यदुपप्लवेद्धन-
माचार्याय तदनुप्रयच्छेत् ।
सतां वृद्धिं बहुगुणामेवमेति
गुरोः पुत्रे भवति च वृत्तिरेषा ॥ १२
एवं वसन्सर्वतो वर्धतीह
बहून्पुत्राल्लँभते च प्रतिष्ठाम् ।
वर्षन्ति चास्मै प्रदिशो दिशश्च
वसन्त्यस्मिन्ब्रह्मचर्ये जनाश्च ॥ १३

C. 5. 1702
B. 5. 44. 19
K. 5. 44. 19

---

10 G4 om 10 D5 G1. 2 read 10 *twice* (reading 10$^{cd}$ *second* time as in text!) — $^{a}$) G1 (second time) M transp गुरौ and यथा D5 (both times) D8–10 T G1(first time) 2. 3(first time) 5 यथा नित्य गुरौ वृत्ति (D9 °त्ति), G2 (second time) समाधाय गुरौ वृत्तिं. — $^{b}$) B (except B1) Dn D5 (both times) D8–10 T G1(both times) 2. 3(first time) 5 आचरेत् (for भवेत्) — $^{c}$) B1 Dn D5 (first time) D8–10 T G1(first time) 2. 3(first time) 5 तत्पुत्रे च तथा कुर्वन् — $^{d}$) B1. 6 Dn D5 (first time) D8–10 T G1(both times) 2. 3(first time) 5 द्वितीय (for तृतीय)! K4 D7 तृतीय पादमाप्नुयात् — After 10, D8. 10 ins (cf 287*)

286* आचार्येण कृत ज्ञात्वा भावितोऽस्मीति मन्यते ।
तं गुरुं प्रति हृष्ट संस्तृतीय पाद उच्यते ।

D8 cont. B1. 6 Dn D5 D9 T G (except G4) ins after 10

287* आचार्येणात्मकृत विजान-
न्ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।
यन्मन्यते तं प्रति हृष्टबुद्धि
स वै तृतीयो ब्रह्मचर्यस्य पाद ।

[ Noticed in C5', but *not* in Ca s — (L 1) T1 उपकृत, T2 G1 5 अधिकृत, C5' आत्म° (as above) D5 विजानता, T1 Cn जानन्, C5' विजा° (as above) — (L 3) D5 तन्, T1 G5 य, C5' यन् (as above) ]

— Thereafter D5 D8. 9 T1 G2 read 9

11 D8–10 G2 om 11 (*not* noticed in C5') For G4 see below — $^{a}$) B Dn2 D5 D8–7 नाचार्यस्य, Dn1 C5 आचार्यस्य (for नाचार्याय) K1 अप्राप्य चेत, B1 3–5 Dn C5 अनपाकृत्य, B2 D2–6 अनुपाकृत्य, D5 अनुपकृत्य, D1 इहोपकृत्य, D7 अनुपहत्य (for इहोपकृत्वा) B1. 4. 6 Dn D8–6 प्रयास, D1 विवाद, Ca s as in text S (G2 om) ना(M1 आ)चार्याय कृतमिति चा(M1 ना)भिमानात् (G3 M °मान) — $^{b}$) D2 कुर्वीत्, T1 मन्यते; T2 G1 मन्येत; G3 M2 मन्ये; M1 3–5 मन्येत्, C5 कुर्वीत (as in text) K1. 4 D1. 3. 4 T2 G1 om न K1 तद् (for एतद्) — $^{c}$) T2 G1. 3 M भाव° (for भाप°) — For 11, G4 subst

288* एव वसन्त यदुपप्लवेद्धि
नाचार्याय कृतमिति चाभिमानात् ।
प्राज्ञो मन्ये नैतदह करोमि
स वै चतुर्थो ब्रह्मचर्यस्य पाद ।

— After 11, T2 G1. 3–5 read 9 — B1. 6 Dn T1 ins after 11 D5 D8–10 T2 G, after 9 (cf v.l 9)

289* कालेन पाद लभते तथार्थं
ततश्च पाद गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छे-
च्छास्त्रेण पाद च ततोऽभियाति ।

[ Noticed in C5', but *not* in Ca s — (L. 1) D10 G तथाय (G3 तदाय), T1 यथा च, T2 ययाय (for तथार्थं) — (L 2) D9 T G तथा, C5' तत (as above) — (L 3) T1 योग (for पाद) G1. 4 इच्छेत् (for ऋच्छेत्) — (L. 4) T1 G1. 4 छात्रेण (for शास्त्रा) T1 G1 तथा (for ततो) ]

— B1. 6 Dn D5 D8–10 T1 G2. 5 cont T2 G1. 3. 4 M1 ins after 13

290* ज्ञानादयो द्वादश यस्य रूप-
मन्यानि चाङ्गानि तथा बल च ।
आचार्ययोगे फलतीति चाहु-
र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ।

[ Noticed in C5', but *not* in Ca s — (L 1) Dn धर्मा°, C5' ज्ञाना° (as above) — (L 2) T2 G2 M1 C5' transp अन्यानि and अङ्गानि — (L 3) T2 भवति, C5' फलति (as above) ]

12 D9. 10 T1 G2. 5 C5' om 12–13, D7 om 12 — $^{a}$) G4 M सत (for वसन्त) B Dn D5 D8–6 T2 एव प्रवृत्तो (T2 च सर्वं) यदुपालभेत (D5 T2 °पप्लवेत) वै, Ca एव सत यदुपप्लवते धन, C5 तमेव सत यदुपाहरेद्धनं — $^{b}$) K1. 4 D2 आचार्यायैव, B Dn D5 D8–6 धनमाचार्याय; D1 तमाचार्यैव, C5 आचार्याय (as in text) C5 cites सप्रयच्छेत्

13 D9. 10 T1 G2. 5 om 13, which is *not* noticed in Ca s' (cf v l 12) — $^{a}$) K4 एव कुर्वन्, D1 स एव

C. 5. 1703
B. 5. 44 20
K. 5. 44 20

एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ॥ १४
गन्धर्वाणामनेनैव रूपमप्सरसामभूत् ।
एतेन ब्रह्मचर्येण सूर्यो अह्नाय जायते ॥ १५
य आशयेत्पाटयेच्चापि राज-
न्सर्वं शरीरं तपसा तप्यमानः ।
एतेनासौ बाल्यमत्येति विद्वा-
न्मृत्युं तथा रोधयत्यन्तकाले ॥ १६
अन्तवन्तः क्षत्रिय ते जयन्ति
लोकाञ्जनाः कर्मणा निर्मितेन ।
ब्रह्मैव विद्वांस्तेन अभ्येति सर्वं
नान्यः पन्था अयनाय विद्यते ॥ १७

धृतराष्ट्र उवाच ।

आभाति शुक्लमिव लोहितमिव
अथो कृष्णमथाञ्जनं काद्रवं वा ।

---

वै; C3 एव वसन् (as in text) K1 B2 3 D5 D8 T2 G1 3 4 C3 वर्धते, D1 भवति K1 D5 T2 G3 हु, B2 3 D5 हि, D6 इव, G1 4 च (for इह) — [b]) K1 D1 2 7 8 बृहत्, C3 महत् (for बहून्) K4 पुत्रान्पौत्रान् (for बहून्पुत्रान्) — [c]) S (T1 G2 5 om) प्राप्य प्रतिष्ठा (T2 G1 4 °तिष्ठेत्) (for वर्धन्ति चास्मै) C3 cites वर्धन्ति — [d]) K4 B Dn D2–4 6 7 वसति, C3 वसन्ति (as in text). K4 B2–4 D5 D6 7 ब्रह्मचर्यं D6 om. from ब्रह्मचर्ये to महाभागा in 14 S (T1 G2 5 om) धीरः पुनर्ब्रह्मचर्यं चरेत — After 13, T2 G1 3 4 M1 ins 290*

14 D6 om $14^{ab*}$ (of v l 13) G4 (hapl) om $14^{b}$–$15^{c}$ — [b]) = 5 60 $3^{d}$ K1 G2 आप्नुयु , D1 आग मन्, C3' आप्नुवन् (as in text) — [d]) D3.4 M3–5 °चर्यं, T2 G1 3 M1.2 °चर्यान् (for °लोकं) D5 D8–10 T1 G2 5 ब्रह्मचर्येण चाभवन् — After 14, D8 ins 291*

15 G4 om. $15^{ab*}$ (of v l 14) — [ab]) D5 D8–10 S (G4 om) C3' एतेनैव सगधर्वा रूपमप्सरसोजयन् (M1–3. 5 °भजन्, M4 °भवन्) — [d]) K1 सूर्योह्वाय प्रजायते, K4 सर्वमाह्वाय जायते, B Dn D1–6 सूर्योप्य(B3 D5.6 ह्य)ह्वाय जायते, D8 सूर्ये आह्वायते सदा, D7–9 T1 2m G1.2 4 5 M सूर्य (sic) अह्वाय जायते (T1 कल्पते), T2 सूर्यो ब्रह्मा ह्यजायते, text as in D10 G3 only (K2 3 5 missing) — B1 5 Dn D5 D9 10 T G2 5 ins. after 15 G1 3 4, after 16 D8, after 14

291* आकाङ्क्षार्थस्य सयोगाद्रसभेदार्थिनामिव ।
एव ह्येतत्समाज्ञाय तादृग्भाव गता इमे ।

[ Noticed in C3', but *not* in Ca. 3 — (L 1) Dn D10 आकांक्ष्यार्थस्य, C3' as above G2 सक्षोभ (for संयोगात्) D5 आकाक्षन्नर्थसयो°, G1. 4 5 °क्षार्थसमायोगात्, G3 आकाक्षितार्थे सयो° C3' as in text. — (L 2) B1 5 एते, C3' एतत् (as above). D5 समादाय (for °ज्ञाय) T2 G C3' त्विमे (for इमे) ]

16 D9 10 T G2 5 om 16 (*not* noticed in Ca 3'). — [a]) G3 om य K1 D1 तम , D5m 7 तप; D8 अति (for य) K1 D1 नाशयेत्, K4 B Dn D2–7 आश्रयेत्, G1. 3 4 M आशसेत्, C3 as in text B (except B2) Dn D2–7 पावयेत्, G3 त्वरयेत्, C3 as in text. D2 M वा (for च) K4 विद्वान् (for राजन्) — [c]) B Dn D5 D6 G1 3. 4 M1 वै, D2 च; D5 एव (for असौ) D1 M2–5 om. असौ D2 अस्य; C3 बाल्य (as in text). B Dn D5 D3. 4 6 G1. 4 अभ्येति, D2 सत्येन, C3 as in text — [d]) D5 6 यथा, M1 (*sup lin* as in text) जरा (for तथा) B1 3 5 स जयति, B2 4 Dn D5 6 सजयति, D5 रुधसि, D1 नान्वयाति, D2 अपराधयति, G1 3. 4 M रधयति, C3 रुणद्धि (C3p वधयति) (for रोधयति) — After 16, G1 3 4 ins 291*

17 [a]) B D2–4 7 10 T G1 2 5 Cn अतवत°, C3 3' as in text — [b]) G3 5 लोकं, C3 3' लोकान् (as in text) B Dn D5 D1–6 8–10 T1 C3 निर्मलेन, D7 तर्पितेन (for निर्मि°) — [c]) D5 D8 9 T1. 2 (m as in text) G C3' ज्ञानेन, C3 ब्रह्मैव (as in text) D5 D8 9 T G C3' तेज, C3 तेन (as in text) K1 4 B (except B2) Dn D1–6 10 चाभ्ये(D2–4 °प्ये)ति, Cn 3' as in text. B2 युक्तो; D5 D7–10 S C3' नित्य, D5 6 सर्वो; C3 मृत्युं (for सर्वं) — [d]) = (var ) Vāj Sam 31 $18^{d}$, (var ) Śvetāśvatara Up. 3 $8^{d}$, 6 $15^{d}$. K1 एष; B2 यत्र स, D1 नैष, D2 यो न°, C3 नान्य (as in text) D5 6 विद्यात्, C3 विद्यते (as in text) D5 D8–10 S C3' न विद्यते ह्यन्यथा तस्य (M तत्र) पंथाः

18 B3 T1 om. the ref. — [a]) T1 नाभाति, Ca. 3. 3' as in text — [b]) K4 तथाजनमिव, D5 इवाप्यजनं, T2 इवार्जुन, G2 C3' अर्जुन, G3 अजन, M अथार्जुन, Ca 3 इवाजन (for अथाञ्जन) D3 4 कांचनं, T2 G3 रौद्रव, Ca 3 3' काद्रव (as in text) K1 अथांजनं धूसर काद्रव च.

तद्ब्राह्मणः पश्यति योऽत्र विद्वा-
न्कथंरूपं तदमृतमक्षरं पदम् ॥ १८

सनत्सुजात उवाच ।

नाभाति शुक्लमिव लोहितमिव
अथो कृष्णमायसमर्कवर्णम् ।
न पृथिव्यां तिष्ठति नान्तरिक्षे
नैतत्समुद्रे सलिलं बिभर्ति ॥ १९
न तारकासु न च विद्युदाश्रितं
न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु
न तच्चन्द्रे दृश्यते नोत सूर्ये ॥ २०
नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु
न चैव दृश्यत्यमलेषु सामसु ।
रथंतरे बार्हते चापि राज-
न्महाव्रते नैव दृश्येद्ध्रुवं तत् ॥ २१
अपारणीयं तमसः परस्ता-
त्तदन्तकोऽप्येति विनाशकाले ।
अणीयरूपं क्षुरधारया त-
न्महच्च रूपं त्वपि पर्वतेभ्यः ॥ २२
सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च ॥ २३
अनामयं तन्महदुद्यतं यशो
वाचो विकारान्कवयो वदन्ति ।
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥ २४

C. 5. 1714
B. 5. 44. 31
K. 5. 44. 22

इति श्रीमहाभारते उद्योगपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

— T1 G3.4 om 18c–19b — c) B3 Dn2 D3–5.10 मद्; T3 G1.2 यद्, Ca s s' तद् (as in text) B Dn2 D5 D3–5.10 T2 G1.2 Ca ब्रह्मण°, Cs ब्राह्मण (as in text) Dn1 D5 D8–10 T2 G1.2.6 M Cs' यत्र (T2 m तत्र), Ca n योऽत्र (as in text) — d) K4 D3.4 M अक्षय, Ca s s' अक्षर (as in text) K1 B3 Ca. s s' पर (for पदम्) D5 D8–10 कथरूप तदक्षर पर ब्रह्म (cf. Śaṃkara's comm कथरूपं तदमृतमक्षरं पर ब्रह्म!) Ca d s s' cite तदमृतमक्षर पर (as in text)

19 T1 G3.4 om. 19ab (cf v l 18), K4 om 19ab — Cd resumes from 19a! — a) K1 B Dn D1–7 T2 Ca आभाति, Cs' नाभाति (as in text) — b) D5 D8–10 G6 अथो (D5 अप्य) कृष्णमयाजन काद्रव वा, T2 G1.2 अयो कृष्णमर्जुन काद्रव वा, M अयो न काद्रव कृष्णमयार्कवर्ण Ca d. s cite आयस, Cs अर्कवर्ण, Ca d अर्कं. — d) K4 D1 नैवं, D2–6 M3–5 Cn नैन, M1.2 न, Cs' नैतद् (as in text) M1.2 om. समुद्रे

20 a) D5 transp न and च, and reads आश्रय (for आश्रित) — b) G3 विद्यते (for दृश्यते) — c) D1 च न (or वन-) (for न च) — d) K4 वा, B1.2.5 Dn D5 D8–10 G6 एतद्, B4 D3–6 वै (for तद्) T2 G1.2.4 चद्रे वा (for तच्चन्द्रे) T1 विद्यते (for दृश्यते) D2 नोत दृश्येत (for दृश्यते नोत)

21 a) Hypermetric! D7 न ऋक्षु, T2 न चैवर्क्षु (for नैवर्क्षु) Ds1 D8 T1 नैतद्, Ds2 G6 m नैव, G1.4 तच्चैव (for तन्न) T2 G2 om (the last) न, G1.3.4 om. नापि, D3–6.7 om अपि! K4 न ऋक्षु तद्दृश्यते नो यजुःषु — b) S चापि (for चैव) K1 D1.7 अखिलेषु (for अमलेषु) K4 न वै दृश्यते प्रचलेषु सामसु; B Dn D5 D3–6 न दृश्यते वै विमलेषु सामसु — c) K4 B Dn D1–9 M बार्ह(D8.9 बृह)द्रथे, Ca d s बार्हते (as in text) B Dn D1–9 T2 G1.2.5 M1.5 वा, Cs च (as in text) K4 वा तथास्मिन् (for चापि राजन्) D8 D10 T1 रथतरे चापि बृहद्रथतरे — d) K1 महानाम्नि, Cs महाव्रते (as in text) D3–5.7 दृश्यते, T2 दृश्य (for दृश्येत्) D5 महात्मन स्वात्मनि दृश्यते तत्, D8–10 G1.2.4 Cs' महाप्रतस्यात्मनि दृश्यते तत् (D8.9 °तेपि, D10 °ते हि, G2 °ते यत्) T1 महाप्रशास्यात्मनि दृश्यमेतत्

22 a) K4 D7 अणोरणीयान् (D7 °य°), D8–10 S (except G4 M2) Cs' अवार°, Ca d s as in text — b) D5 D8–10 S (except G3) Cs' अतत्तो(T G1.4 M2.5 °को)प्येति, Ca d s as in text — c) K1 B Dn1 D2–6

अनीयो रूप (for °यस्य). B1 s D7 s समान, B1 s Dn Ca मम, D7 e तु (for सत्) D8 D8-10 T G Cs' अणीयरूपं च तथाप्यणीयसां — d) Dn D1 s-10 G8 स्व, Ca च (as in text) K1 G1 त्वति, K4 T1 अपि; B Dn D1-7 Ca तद्ध, G4 त्वय (for त्वपि) — After 22, D9 10 T1 G2 Cs' ins 292*.

23 D9 10 T1 G2 om 23a–24b (not noticed in Cs') D7 transp 23 and 24 — a) D8 सत् (for सा) — b) K1 D1 Ca d लोक°, K4 लोकान्; T2 m लोके (for लोका) D8 4 G1 s-5 M ते मह्म, Ca s तद्ब्रह्म (as in text) — c) D8 तस्मिन् (for तस्मात्) — d) Dn D8-7 हि, Ca च (as in text) — After 23, D8 D8 ins 292*

24 D8 D8-10 T1 G2 om. 24ab (cf v. l 23), the line is not noticed in Cs'. D7 transp. 23 and 24. — a) T2 G (G2 om) M1 स्वय, M2-3 corrupt, Ca d महत् (as in text) K1 4 D2 उच्यते, D1 उच्यतां, G2 5 M1 उग्रत, Ca उद्यतं (as in text) Cap उद्यतानुगं — b) K1 B Dn D8-7 Cd s विकारं, T2 विचारान् (m as in text) Cap cites अवचोऽविकार — c) B2 s Dn D2-4 G3 यस्मिन्; D1 s T2 G1 s 4 M (M1 inf lin as in text) अस्मिन्; Ca s' तस्मिन् (as in text) M (except M1) ins. स after जगत् and om the remaining portion of the stanza! — d) =(var) 5. 45 6d, =(var) Bṛhad Ā. Up 4 4 14d, Kaṭha Up 2 3 2d, Śvetāś'vatara Up 3. 10c, 13d, 4 20d D8 D7 s 10 T1 M1 Cs' एतत् (for तद्) — T2 G1 M1 ins after 24 D9.10 T1 G2, after 22 D8 D8, after 23

292* यदेतदद्धा यस्थितं भाति सर्वं
यदात्मविपश्यति ज्ञानयोगात्।
[Noticed in Cs', but not in Ca d.]

T2 G1 M1 cont.

293* तस्मिञ्जगत्सर्वमिदं प्रतिष्ठित
य एतद्विदुरमृतास्ते भवन्ति।,

which is a repetition of 24cd (with v l), and noticed in Cs'.

Colophon Om in K4 G2, K3 s s missing — Sub-parvan K1 M सनत्सुजात; B1 s s D सनत्सुजातीय; G1.4 प्रजागर and सनत्सुजात — Adhy. name D2 ब्रह्मोपदेश°, M ब्रह्मप्रतिपादनं — Adhy no (figures, words or both) K1 T2 44 (as in text), Dn D8 D8 9 3 (D9 44 also), D1 43, D6 40, D7 T1 G1-4 M1 2 4 45, M1 (inf. lin) s.s 46 — Śloka no Dn 31; D8 24, D8 29

☞ After adhy 44, all MSS. (K3 s s missing) except D9 10 G2 ins an additional adhyāya, which is given in App I (No. 2), K4 omitting lines 2–25, TG om lines 5–23 This adhy is not commented upon by Śaṃkara! It cannot be said that this part of his commentary is lost, for his remarks at the beginning of his commentary on our adhy 45 (=Bom ed adhy. 46) clearly refers to and takes up the thread from the end of our adhy. 44, thus indicating that there is no gap in the continuity of treatment. Besides the three MSS. (D9 10 G2) mentioned above, one of Telang's MSS (cf Sanatsujātīya, *SBE*, Oxford 1898, Introd. p 137) also omits this adhy It may be observed that almost the whole of this additional adhy, as Telang has also noted (*op cit* p 181 f.n.), is practically made up of passages which, as a reference to the critical notes to the adhy given in App I (No 2) will show, are nothing more than *variants* of stanzas already occurring in our adhy 42–44 It will be seen that excepting lines 1–23, which give a continuous variant version of 5. 43 8–14, the adhy. is a curious medley of variant passages or unconnected fragments culled from the three preceding adhyāyas This *repetitious* character of the adhy. was recognised by Dev, Arj and Nil Thus Arj श्लोकार्द्धं स्वरूपावरणरूपानुक्तानपि पुनर्भूते तत्स्वरूपावधारणनिरोधयोरादरातिशयविधानाय श्लोक इत्यादि।; and Nil समासा ज्ञानप्रधाना योगोपसर्जना ब्रह्मविद्या। इदानीं योगप्रधानां ज्ञानोपसर्जना तां वक्तुमध्यायद्वयमारभ्यते। यत्र पूर्वं चित्तवृत्तिनिरोधेन त्वंपदार्थं ज्ञात्वा पश्चाद्वेदान्तश्रवणादिना तस्य ब्रह्मत्व निश्चीयते सा आद्या। यत्र तु श्रवणादिना पूर्वं पारोक्ष्येण प्रतीचो ब्रह्मभाव निश्चित्य पश्चान्निदिध्यासनेन स अपरोक्षीक्रियते सा द्वितीया। क्रमद्वयेऽपि फलैक्यात्साधनजातमप्येकरूपमेवेति दर्शयितु प्रागुक्तानेव हेयान्दोषान् उपादेयान्गुणांश्च दर्शयति श्लोक क्रोधश्च इत्यादिना।

But their tortuous explanations do not rise above scholastic logomachy, and offer no satisfactory explanation of the meaningless *repetition* involved. It is also worthy of note that though the TG version (which Śaṃkara generally follows), admits this adhy, it omits no less than 19 lines of the adhy. (viz. lines 5–23), while another MS K4 omits as many as 24 lines (viz. lines 2–25), that is, more than half of the adhy! The Javanese version does *not* cite any line or stanza from this adhyāya.

# ४५

सनत्सुजात उवाच ।
यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासन्ते यस्मादर्को विराजते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १
शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २
आपोऽथ अद्भ्यः सलिलस्य मध्ये
उभौ देवौ शिश्रियातेऽन्तरिक्षे ।
स सध्रीचीः स विषूचीर्वसाना
उभे बिभर्ति पृथिवीं दिवं च ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३
उभौ च देवौ पृथिवीं दिवं च
दिशश्च शुक्रं भुवनं बिभर्ति ।
तस्माद्दिशः सरितश्च स्रवन्ति
तस्मात्समुद्रा विहिता महान्तः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ४
चक्रे रथस्य तिष्ठन्तं ध्रुवस्याव्ययकर्मणः । C. 5. 1745 B. 5. 46. 5 K. 5. 46. 5

---

## 45

☞ This adhy is missing in K2 3 5 (cf. v.l 5 41 1, 32 15, 43 9) — For sequence of D5 D8–10 T G Cs' cf the tabular statement facing this page

1 G4 om 1[a]–2[b] — [a]) Dn1 D4.4 8 M3 4 (*sup lin* as in text) एतत्, Ca.n s.s' यत्तत् (as in text) B3 D2.4 7 M3 शुक्लं, D2 उक्त, all comm. शुक्र (as in text) M2 3 महाज्योति, Ca.s s' as in text — [b]) D5 वीक्ष्यमाण, all comm as in text. — [c]) D1 T2 G1–3 Cs' यद्वै, M (except M1) यस्मै, Ca तद्वै (as in text) B3–5 Ca n.s s' उपासते D5 उपासते स तद्देवा, D2 यद्वै उपासते देवा — [d]) B Dn D5–7 10 Ca तस्मात्, Cs' यस्मात् (as in text) K1 G1 एको, B4 5 Dn D3–7 सूर्यो; Ca.s' अर्को (as in text) — [e]) D1 तत्र पश्यति, G3 त प्रशसति, Ca.s as in text. — [f]) Ca (which cites the whole st.) महेश्वरं, Cs s' सनातन (as in text)

2 K1 M4 om 2, G4 om 2[ab] (cf v 1. 1) — [a]) D7 T1 शुक्रात्, all comm. as in text G3 शुक्राच्च ब्रह्म भवति — [b]) D7 शुक्लेन Cap वर्तते — [c]) D7 शुक्र — [d]) D7 G1 5 भवति, Ca d तपति (as in text) D1 तापन ; G3 4 तापस B3 4 दीप्यमान महद्यश (=1[b]) — D1 om 2[ef] — After 2, D5 (for the first time) D8–10 T G Cs' read 10 (G4 reads here 10 followed by 13)

3 D7 M2 om. 3 M3–5 read 3 after 6 — [a]) K1 4 Ca s आपो नु अद्भ्य, B (except B4) Dn D1 3–6 M5 अपोय अद्भ्य, D5 D10 T1 G5 अपोयाद्भ्य, D2 अपो वसंत्य, D8 अथापोद्य, T2 G2 3 (by Sandhi) आपोयाद्भ्य, G1 4 आपोयाद्भि D5 D8–10 T1 G (except G1) Cs' सलिल तस्य, Ca s सलिलस्य (as in text) — [b]) Ca उभौ, Cs s' उभौ (as in text) D1.2 M3 4 अतरिक्षं — [c]) =(var) Rgveda 1 164. 31, Vāj Samhitā 37 17 K4 D1 2 Ca. d s अ(K4 आ)वद्रित, D5 D8–10 T2 (by corr) G3 5 M3–5 Cs' आ(G3 अ)दध्रीची (M3–5 °च), G5 सदध्रीची, Cap np स सध्रीची (as in text) Ca d विसूचि ; Cs s' ap as in text K4 वसाम, D1–4 M1 3.4 Ca s वसान, D5 T G1 3 5 Cs' np वसानौ, M5 विवस्वान् (for वसाना) B Dn D5 6 अवद्रित सवितुर्विवस्वान् — [d]) B4 Dn D5 D5 6.9 T G Cs' ap उभौ, Ca.s उभे (as in text) — After 3, D1 ins

294* अप एव ससर्जादौ तासु वीर्यमथासृजत् ।
तदण्डमभवद्धैम सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वय ब्रह्मा सर्वलोकपितामह ।
योगिनस्त प्रपश्यन्ति भगवन्त सनातनम् ।
[ Lines 1–3 =(var) Manu 1 8[cd]–9[cd] ]

4 T2 om. 4, K1 om 4[a] Ds1 transp 4 and 5, Ds1 repeats and Ds2 D8–10 T1 G2 3.5 Cs' read 4 after 299* The sequence in G1 4 is 6, 5, 4 — [a]) D1 Ca उभे, T1 आजौ, Cs ap उभौ (as in text) G4 5 om. च T1 स (for च) Ds1 G1 4 M1–3 4 (*sup lin* as in text) 5 Ca देव्यौ, Ds2 देवीं, D1 दिव्यौ, T1 देव, G2 देवी, Cs देवौ (as in text) K4 M2 दिव, Ca s दिव (as in text) — [b]) K1 D1.7 Ca शश्वत्, Cs दिश (as in text) B Dn Ds1 D5 6 om च K1 4 B Dn Ds1 D2–6 Cap शुक्र, D7 शुक्लौ, T1 शुक्र, Ca शुक्रे — [c]) Ds2 D8–10 यस्मात्, Ca (which cites the whole st) तस्मात् (as in text) — [d]) Dn1 D5 8–10 G3 महांता, Ca s as in text

C. 5. 1743
B. 5. 46. 5
K. 5. 40. 5

केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५
न सादृश्ये तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
मनीषयाथो मनसा हृदा च
य एवं विदुरमृतास्ते भवन्ति ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ६
द्वादशपूगां सरितं देवरक्षितम् ।
मधु ईशन्तस्तदा संचरन्ति घोरम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ७
तदर्धमासं पिबति संचित्य भ्रमरो मधु ।
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ८
हिरण्यपर्णमश्वत्थमभिपत्य अपक्षकाः ।
ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ९
पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ।

---

5 K4 om 5. K1 (which om 5ef) D2 read 5 in marg. sec. m. T2 transp 5 and 6. For G1. 4, cf. v. l. 4. — a) B Dn D3. 5. 6 T G3 Ca. d तिष्ठत ; Cs' तिष्ठन्तं (as in text). — c) M3–5 केतुमत. — d) G2 Cd तत् (for त). K1 देवं; G3 M2. 3. 4 (inf. lin. as in text) s विश्व, Ca. d. s दिव्यं (as in text). M3. 4 (inf. lin. as in text) s अजयं; Ca. d. s as in text. G2 अपराजित (for अजर दिवि). K1 G3 M विदु ; Cs s' दिवि (as in text). — K1 om 5ef.

6 =(var.) Kaṭha Up. 6. 9; Śvet. Up. 4. 20. — G5 om. 6. For G1. 4, cf. v. l. 4. T2 transp 5 and 6, G3 transp 6 and 7. — a) B1. 2. 4. 5 Dn1 सादृशे; D5 सादृश्य, T G1. 3. 4 M1 (sup. lin.) सदृशे; all comm. सादृश्ये (as in text). — b) T1 दृश्यते; M3–5 दृश्यति; Ca s' पश्यति (as in text). D5 देवमीट्य; T1 G1. 3. 4 कश्चनैन; Ca s' कश्चिदेन (as in text). — c) M1 (sup. lin. as in text) 3–5 अहो (for अथो). — d) =(var.) 5. 44. 24d, =(var.) Kaṭha Up. 6. 2d and 9d, Śvet. Up. 3. 1d, 10b, 13d, 4. 17d, 20d. K1 Cs' एच (for एन). M (except M1) यथा (M2 यदा) चैन (for य एन). — After 6cd, G3 ins.:

295* यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्य ते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।
[ =(var.) Śvet. Up. 6. 23 ]

— After the above, G3 reads 7 (for the second time), 11, 12. — D1–7 G3 om 6ef. — After 6, M3–5 read 3.

7 T2 M2 om 7. G3 transp 6 and 7. — a) D5 D8–10 T1 G M1 (inf. lin. as in text) Cs' °पूगाः सरितो. — b) Before देव°, K1 Dn D1–5 M1 ins. पिबतो (K1 विशतो, D2 वहतो, D3. 4 पियतो). K4 B D2. 5–7 Ca. d. s °रक्षिता; D5 D8–10 T1 G M1 (inf. lin. as in text) Cs' °रक्षिताः. — c) K4 Ca. d इच्छत, D1 जुषत, Cs ईप्सत. M1 सदा (for तदा). K1 D2 मध्विच्छत परं तस्य (D2 पारं तस्या), B1. 2. 3. 5 Dn D5. 6 M1 (inf. lin.) मध्वीक्ष(D5 °छ)तश्च ते (B1. 2. 5 °तस्तदा) तस्या, B4 मध्वीक्षतस्तदा; D5 D8–10 G5 मध्वीशते तदनु पिधायिनस्तदा, D3. 4 M3 मध्वीशतस्तदा (as in text, but with Sandhi), D7 T1 G1–4 Cs' मध्वीशते सदा (T1 G2 तथा; G1. 4 Cs' तदा). — d) K1. 4 B Dn D1–5 M1 Ca. d सचरंतीह घोर (B Dn D5. 6 M1 [inf. lin.] Ca. d °रा). Cs सचरति घोरां, Cs' as in text. — Unidentified metre!

8 D7 G4 om 8–9. — a) D3. 4 Cn भवति, Ca. s. s' पिवति (as in text). — b) D5 T G (G4 om.) M1 Cs' सचित (M1 inf. lin. °चित्य), Ca as in text. — c) M1 ईश्वर, Ca s s' ईशान (as in text). D1 °भूतानि, Ca s s' as in text.

9 B3 D7 G4 om 9 (cf. v. l. 8). — a) Dn D5 D6. 8–10 T1 G2. 5 M1. 2. 5 Cs' हिरण्यपर्णम् (as in text), the rest (with Ca d. s) °वर्णम्. — b) B (B3 om.) Dn D5 D6. 8. 10 T1 M1 (inf. lin. as in text) Cs अभिपद्य, Ca d s' as in text. K4 B (B3 om.) Dn D5 D1–6. 8–10 T2 G (G4 om.) M1 (inf. lin. as in text) Ca ह्यपक्ष(D5 D8–10 °क्षि)का ; D1 T1 तु पक्षिका ; Cs स्वपक्षका (for अपक्ष°). — c) D5 त पुरे; D8–10 T G1. 5 तत्र ते (by transp.). — d) D1 प्रापयति, D3 प्रपश्यति, T2 G3 प्रवदति, all comm. as in text. D5 D8–10 S (G4 om., M1 sup. lin. as in text) Cs' यथासुखं (G3 °दिश).

10 =(var.) Bṛhad-Ā. Up. 5. 1. — D1 om 10, D5 (first time) om. 10a. D5 (for the first time) D8–10 T G Cs' read 10 after 2, D7, after 12. — a) K1 D5 (first time) D2. 7–10 S (M1 sup. lin.

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १०
तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा ।
तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः ॥ ११
सर्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२
अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रमादित्यं गिरते परः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १३
एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत्सततमृत्विजं न मृत्युर्नामृतं भवेत् ।

C 5.1762
B 5.46.14
K 5.45.14

---

as in text) Cs.d.s s′ पूर्णम् (for पूर्णानि) K₁ Ds (second time) D₆ ₈ T₁ G₃ M (except M₁) Ca d.s उद्धरति — ᵇ) Ds (first time) D₅–₁₀ S (M₁ *sup lin* as in text) Cs′ पूर्णात्पूर्णं प्रचक्षते (M °चक्रिरे) — ᶜ) Ds (first time) T G₁.₂ ₄ ₅ M₁ (*sup lin* as in text) Cs′ पूर्णं च, Ca पूर्णाश्च, Cd पूर्णानि (as in text) G₃ M₂–₅ पूर्णात्पूर्णं च हरति — ᵈ) T₂ M₁(*sup lin* as in text) ₂–₅ °मिन्यते, Ca d s sp °क्षिप्यते (as in text) — Śaṃkara's reading of 10ᵈ cannot be made out with certainty — G₂ ₄ om 10ᵉᶠ

11 G₄ om 11–12, T₂ om 11ᵃᵇ D₈–₁₀ G₂ ₅ Cs′ read 11 after 24, while Ds *repeats* 11 there, T₁ reads 11 after 298* G₂ reads 11 (for the first time), after the repetition of 7 (cf. v.l. 6) and *repeats* it after 24! M (except M₁) transp 11ᵃᵇ and 11ᶜᵈ — ᵃ) K₁ D₂ G₁ M (except M₁) Cd यस्मात्, Ca s तस्मात् (as in text) D₈–₁₀ G₁–₃ ₅ च, Ca वै (as in text) K₁ ₄ Ds D₂ Ca d s आतत, G₅ आयाति (for आयात) — K₄ (hapl.) om from प्रयत to तस्मिंश्च (in ᵈ) — ᵇ) K₁ D₂ M₂ ₈ Cd यस्मिन्, G₂ ₅ तस्मात्, Ca s तस्मिन् (as in text) K₁ D₁ ₇ Ca प्रलय, Ds D₂ ₈–₁₀ T₁ G₅ M₁(*sup lin* as in text) ₂.₃ Cd s प्रलय°, G₂ प्रणव° (for प्रयत°) K₁ D₁.₇ Ca गत, D₈–₁₀ T₁ G₂ ₅ M₁ (*sup lin* as in text) तथा, Cs सदा (as in text) G₁.₃ M₂ ₄ यस्माच्च प्राण आगत — ᶜ) K₁ D₁ ₂ M (except M₁) यस्मात (for तस्मात्) — After 11ᵃᵇᶜ, K₁ ins :

296* यस्मिंश्च प्रलयं गता।
तस्माद्वै वायुराततः॥

— ᵈ) D₁ यस्मिन्; D₈ T₁ G₁–₃ ₅ M₁ तस्मात्, M₂–₅ यस्मात् (for तस्मिन्) Ds D₈ T₁ G₁.₂ ₅ M आगत, D₁ आयत, Ca d s as in text T₂ प्रलयस्तथा (for प्राण आतत°) — After 11, T₂ G₂ M₁.₃ ins (the refrain)

297* योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् !,

presumably on the supposition that the stanza ends at 11ᵈ — M₁ ₃ cont G₁ ins after 12 T₁, after 13

298* यस्माद्वै वायुरायातो यस्माच्च प्राण आगत । (= var 11ᶜᵈ) — D₈–₁₀ G₁ ₅ ins after 11 Ds T₁ G₃ ins after the *repetition* of 11 G₁.₄ ins after 18 M₁, after 21 :

299* तत्सविष्टान्तदमृत लोकाल्ब्रह्म तद्यश ।
भूतानि जज्ञिरे तस्मात्प्रलय यान्ति तत्र च ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।

[Noticed in Cs′. — (L 1) G₁ ₄ M₁ तत्पृष्ठादमृत लोका° (for the prior half) T₁ G₂ ₃ लोक°, G₁.₄ M₁ तथा (for लोका°) — (L. 2) G₅ भूत सजज्ञिरे तस्मात् ]

12 B₃ D₂ ₈–₁₀ T G₂ ₄.₅ om. 12 (*not* noticed in Cs′) — ᵃ) D₁ सर्व, Ca s as in text D₅ G₃ एवम्, Cs.s एव (as in text) K₁.₄ D₁ Ca d.s विश्व, G₁.₃ M विद्वन् (for विद्यात्) — ᵇ) K₁.₄ D₆ G₁ त तु, Ds तत्तु, D₁ तत्र, G₃ ततो, M (M₁ *sup lin* as in text) तत्त्व, Ca.d तं वा (for तत्तद्)

13 D₇ om 13 M (except M₁) transp 13 and 14. — ᵃ) D₁ M₅ Cs गिरति, Cs d.s′ as in text — ᵈ) K₁ ₄ B (except B₄) D₁.₂ Ca सूर्यं (B₂ अपो) गिरति तत्परं (B₂ ₃ D₁ ₂ चन्द्रमा) — After 13 T₁ ins 298* (cf. v.l. 11).

14 14ᵃᵇ = (var) Atharvaveda 11 4. 20ᵃᵇ — G₄ om. 14. M (except M₁) transp 13 and 14 — ᵃ) D₁ एकपादो नोच्चरति — ᵇ) B₃ D₂–₄ T G (G₄ om) M₂ सलिलार्घं (T₂ G₂ ₃ °र्थे) स उ(G₁.₂ ₅ समु)च्चरन्, D₁ सलिलं हसवच्चरन् — ᶜ) D₂.₄ न (for त) G₅ सिंचेत् (for तं चेत्) K₄ B (except B₂) D₂ ₆ G₅ M₁ (*sup lin* as in text) Cn संततं, Cd सतत, Ca s as in text Dn D₆ ₇ M₁ (*sup lin* as in text) ऊर्ध्वाय, G₁ अत्यन्त, G₂ Cs′ उत्क्षिप्येत्, G₃ उत्पन्न, M₂–₅ ऋत्विजा, Ca d s ऋत्विज (as in text) Ds D₂ तं चेत्सततमृत्युजन्म (D₂ om. न्म) — ᵈ) K₄ वानृत, T₁ M₁(*sup lin* as in text) ₂ Cap अमृतं, Cd.s नानृत, Ca.s′ नामृत (as in text) K₁.₄ D₁.₂ Cd s चरेत्, B₂ Ca भजेत्, M₁(*sup lin* as in text) ₂ कुत, Cs′ भवेत् (as in text) Cap न मृत्युरमृतं भजेत् — Dn Ds D₈–₁₀ T G₂ ₃.₅ M₁ ins

C 5. 1763 B 5. 46. 14 K. 5. 46. 14

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १४
एवं देवो महात्मा स पावकं पुरुषो गिरन् ।
यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १५
यः सहस्रं सहस्राणां पक्षान्संतत्य संपतेत् ।
मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनोजवः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १६
न दर्शने तिष्ठति रूपमस्य
पश्यन्ति चैनं सुविशुद्धसत्त्वाः ।
हितो मनीषी मनसाभिपश्ये-
द्ये तं श्रयेयुरमृतास्ते भवन्ति ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १७
गूहन्ति सर्पा इव गह्वराणि
स्वशिक्षया स्वेन वृत्तेन मर्त्याः ।
तेषु प्रमुह्यन्ति जना विमूढा
यथाध्वानं मोहयन्ते भयाय ।

---

after 14 (T2, after 16)

300* अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
लिङ्गस्य योगेन स याति नित्यम् ।
तमीशमीड्यमनुकल्पमाद्य
पश्यन्ति मूढा न विराजमानम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।

[ Noticed in Cs', but *not* in Ca d s Cf. stanza 24 ] Thereafter Dn reads 20–21 for the first time, while Cs reads 18 followed by 20–21. — D8 on the other hand ins. after 300*

301* नात्मानमात्मस्थमवैति मूढ॰
संसारकूपे परिवर्तते यः ।
त्यक्त्वात्मरूप विषयांश्च भुङ्क्ते
स वै जनो गर्दभ एव साक्षात् ।
योगिनस्त प्रपश्यन्ति भगवन्त सनातनम् ।

15 K1 om 15–16, D6 G4 om. 15 D8 *repeats* 15 after 23 — a) B8 Dn D8 (second time) D8–10 T1 G2 3 M1 Cs' -रूपो, D7 देवं, G6 -भूतो, Ca. d s देवो (as in text) D8 D8–10 T1 G2.3 5 M1 Cs' महानात्मा, D7 महात्मान, T2 G1 M2–5 महात्मासौ, Ca. d s महात्मा स (as in text). — b) M (except M1) पावक , all comm as in text T1 M2–5 गिर॰, M1 (*inf lin.* as in text) गिरेत्, all comm गिरन् (as in text) — c) K4 Ds1 (second time as in text) s2 (both times) D10 T2 Cs पुरुषो, Ca s' as in text. — d) B3 4 Dn2 Ds1 (both times) s2 (second time) D5 M1 (*sup lin.* as in text) 5 Cn अर्थो, Ca d s s' आत्मा (as in text). D1 T1 लिप्यते, D7 निंद्यते, G8 रिष्यति, all comm. रिष्यते (as in text)

16 K1 om. 16 (of v l 15) — b) B1 5 M1 सह्हत्य, D8. 9 T G2 3 M2–5 Cs' आहृत्य, G1 4 संभृत्य, G5 सम्प्राप्य, Ca d s सतत्य (as in text) — c) K4 स मध्ये, D1 मध्यमैः (for मध्यमे). Dn1 मध्ये मध्यस्य आग॰, D7 मध्यमे च सदाग॰, D8 9 T G M1 Cs' नांतं गच्छेत्कारणस्य, M2–5 अमध्यमध्य नो गच्छेत्, Ca मध्ये मध्ये स आग॰, Cn s as in text. Cd cites मध्ये आगच्छेत्. — d) D8 9 T1 G2 3 5 M1 Cs' यद्यपि; T2 G1 4 अपि वा, M2–5 अपि च, Ca. s अपि चेत् (as in text). — Ca ends the Sanatsujāta here!! — G2 om. 16$^{ef}$ — After 16, T2 ins 300*.

17 For sequence in D8 D8–10 T G Cs', cf v l 3, — a) K1 4 D1 Cd s न सादृश्ये, D8–10 S Cs' अदर्शने (for न दर्शने) — b) D8–10 S Cs' सुसमि(T2 G5 ॰मृ)द्ध॰ (for सुविशुद्ध॰). — c) D8–10 T G M2–5 Cs' हीन , M1 धीर॰; Cd s हितः (as in text) K1 मनसाभिपश्यन्, K4 B Dn D8 D5–7 ॰सा न तप्यते, D1 ॰सोपि तप्यते, D2 ॰सोभितप्यते, Cs' as in text Cs cites तप्यति — d) B Dn D7 ये प्रव्रजेयु , D8 Cs ये त्वे (Ds1 om त्वे) न श्रयेयु॰; D1 8–10 T G2 3 Cs' य एन (D8 T2 ॰व) विदु , D2 4 ये त भजेयुः, D5.6 ये ते प्रव्रजेयु॰, G1 4 5 M1 य एतद्विदुः, M2 3 ये (M5 ए॰) तज्जयेयु , M3–4 एतं जयेयु॰ (for ये त श्रयेयु ). — G2 om 17$^{ef}$.

18 For sequence in D8 D8–10 T G Cs', cf. v l 3 — a) M1 (*sup lin* as in text) 2–5 सर्पम्, Cd s s' as in text. D8 9 T1 2 (before corr ) G (except G8) Cs' गह्वरेषु, Cd s as in text — b) K1 4 D1 शि(K1 श)शिक्षया, D8 D5 8 9 T1 G (except G8) Cs' क्षय नीत्वा; Cd शशिक्षयात् (sic), Cs dp स्वशिक्षया (as in text) G8 योगेन (for वृत्तेन) D8 D5 7–10 T1 G1.2.5 Cs' मर्त्यान्; Cd s as in text — c) D8 D8 9 T G M2 Cs' ते वि(T G2 तेपि, G1 येपि, G8 तेन, M2 ते च)प्रमुह्यति; M1 (*inf lin* as in text) 3–5 ते न प्रपश्यति; Cd as in text. M5 न (for वि ) — d) K1 4 D1 2 Cd यथाध्वा (D1 2 Cd ॰ध्व)न॰; D8 D8–10 G5 Cs' तैर्दत्तभोगा , T1.2

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १८
सदा सदासत्कृतः स्यान्न मृत्युरमृतं कुतः ।
सत्यानृते सत्यसमानबन्धने
सतश्च योनिरसतश्चैक एव ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १९
न साधुना नोत असाधुना वा
समानमेतद्दृश्यते मानुषेषु ।
समानमेतदमृतस्य विद्या-
देवंयुक्तो मधु तद्वै परीप्सेत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २०
नास्यातिवादा हृदयं तापयन्ति
नानधीतं नाहुतमग्निहोत्रम् ।
मनो ब्राह्मीं लघुतामादधीत
प्रज्ञानमस्य नाम धीरा लभन्ते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २१
एवं यः सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किं स शोचेत्ततः परम् ॥ २२
यथोदपाने महति सर्वतः संप्लुतोदके ।

C. 5. 1765
B. 5. 40. 26
K. 5. 40. 26

---

(before corr ) G1-4 तंद्वेत्ता वं, M1 (*inf lin* as in text) 2-5 यथाख्यान, Cs as in text K4 D7 Cd. 8 मोहयते, G4 5 मोहवतो D5 D8-10 G5 Cs' भवाय (D8 °वस्य), Cs असमाय — M2 5 om 18[ef] — After 18, G1 4 ins 299*, and D8-10 T1 G2 8 read 21 (with v l.)

19 G3 om. 19 D8 repeats 19 (cf v l 23) Cs' reads 19 after 15 — [a]) K1 नाह सदासं सत्कृत सन्न मृत्युर् (Tristubh, here and in the next three!), K4 नाहं सदा सत्कृत स्यान्न वाल्य, B1. 6 Dn Ds1 (second time as in text) 2 D1-7 M1 (*sup lin* as in text) Cd s नाहं सदा सत्कृत' स्या न (Ds D5 6 स्यान्न) मृत्युर्, B2-4 नाह सदा किमु तस्य कृत स्या, Cs' तस्मात्सदा सत्कृत स्यात् — [b]) K1 न वा सदसंरमृतन्न कुत स्यात् (Tristubh, here and in the next five), K4 मृत्युरप्यमृत' कुत स्यात्, B1. 6 Dn D3 4 M1 (*sup lin* as in text) Cs न चामृत्युरमृत मे (D3 4 om. मे) कुत स्यात्, B2 4 Ds1 (second time as in text) 2 D2 6 6 न मृत्युरप्यसा(B4 om. स्या, Ds °स्य)मृत कुत' स्यात्, B8 न मृत्युरसाप्यमृत मे कुत स्यात्, D1 7 न सदादमप्यमृत कुत स्यात्, Cd s' as in text. — [e]) B2 4 Dn D1. 2 6 e समानबधे, Ds (first time as in text) D8-10 T1 G2 Cs' समान(Ds2 D8 9 T1 Cs' °नु)बधिनी, Cd s as in text G4 तस्यानृते तस्य च मानवचने — [d]) D8 9 T1 G2 5 M1 (*sup lin* as in text) 1-4 Cd s' एकम्, Cs एक (as in text) D7 चैव योनि (for चैक एव) — D7 om 19[ef]

20 Dn reads 20-21 (for the first time) after 300*, and again here (that is, after 19) — [a]) M2-5 वापि (for नोत) Dn (first time) Ds D8-10 T G M1 Cs' असाध(G4 °धु)ना वापि ससाध(G4 °धु)ना वा — [e]) Dn (first time) Ds D8-10 T G2 2. 6 Cs' इतरस्य (for विद्यात्) — [d]) Dn (first time) D8-10 T1 G2 8 5 Cs' मु(D9 G2 3 Cs' यु)क्तास्तत्र मध्व(G2 °धु) त (Ds स्तू)स्त समापु (Ds श्रयेयु , D8 9 G5 शमापु )

21 Dn reads 20-21 (for the first time) after 300*, and again here, D8-10 T1 G2 8 Cs' read 21 after 18 G5 om 21 — [a]) Dn (first time) S (G5 *om* ) Cs' इमौ लोकौ विद्यया व्याप्य याति (M1. 8-5 व्याप्य याति, M2 प्राप्नुवति), Cd s as in text — [b]) B1 2 5 Ds नानाहित, Dn (first time) T G (G5 om ) M1 Cs' तदाहुत, M2-5 नास्याहुत (for नानधीत) Dn (first time) Cs' चाहुतं, D7 नाग्निहोत्र, Cs नाप्यनृत (for नाहुत) D7 च राजन्, Cs अग्नि° (as in text) — [c]) Dn (first time) T2 G2 8 M Cs' मा ते, T1 मौनेन, G1. 4 ततो, Cd s मनो (as in text) K4 B2 4 Dn1 (first time) n2 (both times) D2 5-10 S Cs' ब्राह्मी Cd cites मनो ब्राह्मीं — [d]) K4 B Dn (second time) Ds D8-7 प्रज्ञा चास्य, T2 प्रज्ञा धीरा, G1 4 प्रज्ञातार, Cd s प्रज्ञानमस्य (as in text) Dn2 (first time) D8-10 T1 G2 8 Cs' स्यात्, M अस्या (for अस्य) T2 G1 नित्यधीर (T2 °धैर्यं), Cd s s' नाम धीरा (as in text) — After 21, M1 ins 299*

22 K4 om. 22[a]-23[b] — For sequence in Ds D8 10 Cs' cf. v l. 3 — [a]) K1 य एवं, D8-10 T G Cs' इम य , M य इम, Cd s एव य (as in text) — [d]) D8-10 (by transp ) स किं, D1 किमु, T1 न किं, T2 M4 किं न Cn cites शोचति — After 22, G3 ins the refrain (योगिनस्त etc )

23 =(var ) Gītā (Vulgate) 2 46 — G3 om 23, K4 om 23[ab] (cf v l 22) — [c]) K4 G1. 4 Cd transp सर्वेषु and वेदेषु M भूते° (for सर्वे°) D1 8-10 T G5 Cs' भूते°, D6 7 देवे°, M सर्वे° (for वेदे°) — [d]) Dn D5 6 आत्मानमनुजानत , D9 T2 G1 Cs' °णस्य विशेषत ;

C. 5. 1765
B. 5. 46. 26
K. 5. 46 26

एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ २३
अङ्गुष्ठमात्रः पुरुषो महात्मा
न दृश्यतेऽसौ हृदये निविष्टः ।
अजश्चरो दिवारात्रमतन्द्रितश्च
स तं मत्वा कविरास्ते प्रसन्नः ॥ २४
अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ २५
पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न वोऽप्यहम् ॥ २६
आत्मैव स्थानं मम जन्म चात्मा
वेदप्रोक्तोऽहमजरप्रतिष्ठः ॥ २७
अणोरणीयान्सुमनाः सर्वभूतेषु जागृमि ।
पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ २८

इति श्रीमहाभारते उद्योगपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ समाप्तं सनत्सुजातपर्व ॥

---

Cd s as in text. — After 23, D5 *repeats* 15 and 19

24 24ab = (var) Kaṭha Up 6 17ab, Śvet Up 3. 13ab. — D9 om 24 — a) D5 D8 S (except T1 M5) अंतरात्मा, Cd s महात्मा (as in text) — b) B Dn D3–6 10 M1 (*sup lin* as in text) Cs हृदि संनि(B3 °प्र)विष्ट, Cd s′ हृदये निविष्ट (as in text). — c) Hypermetric! K1 अजेश्वर, D8 अंतश्चर, D1 अनश्वर, D2 अज (for rectifying metre!), G2 चराचर°, G5 अचचल; Cd s′ अजश्चरः (as in text) Cs cites नित्यचर K1 अजस्रम्, D2 दिवारात्रिम्, D8 4 नित्यम् (for rectifying metre!), Cs दिवारात्र (as in text). B त (for च) D5 D1. 2 8 T1 G2 5 M3–5 om. च T2 G1. 3 4 M1 इम हि मत्वा च दिवा च रात्र (M1 °त्रौ), M2 सर्वस्य धातारम°चिंत्यरूप — d) D5 D8 M3–5 om स. K1 य एन मत्वा, K4 हृदा मत्वा, D1 2 त मन्वान, T1 तस्माद्वा, T2 G1 3 4 M1 अतंद्रित, M2 त विदित्वा (for स त मत्वा) Cd cites मत्वा, Cs तं मत्वा K1 D8 M4 (*inf lin* as in text) 5 Cd प्रपन्न, Cs s′ as in text — After 24, D8 G3 read the refrain (योगिनस्तं etc) On the other hand, after 24, D5 G3 *repeat*, and D5 D8–10 G2 5 Cs′ read, 11 Thereafter D51 *repeats* 4!

25 D4 om 25–27. — a) K4 B Dn D1–3. 5–7 M1 (*sup lin* as in text) स्मृतो, Cs′ अस्मि वो (as in text) — b) K4 ह्यहं, T1 अप्यह, G3 त्वह (for अस्म्यह) Cs′ cites अस्मि — c) D5 D8 9 T G1 2 5 अस्य, G3. 4 M (except M2) Cs′ अस्मि (for अपि).

26 D4 om. 26 (cf v l 25) — d) D5 D8 9 S Cs′ च, D1 2 8 (after corr) वा (for वो) K4 D3 (after corr) 5 7 हि, B1 2 4 5 D3 (before corr) अति, D1 2 अस्मि, Cs′ अपि (as in text). B3 Dn1 Cn वय, Dn2 D6 ह्यय (for ऽप्यह)

27 D4 om 27 (cf v l 25) — b) K1 B5 D1 2 T2 देव प्रोक्तो, B4 Dn D5 D8–10 T1 G2 5 Cs′ ओतप्रोतो (for वेद°). Cd s cites देव°. D2 M3–5 अजरोप्रविष्ट (D2 °विष्ट°). — After 27, N (except D4 8) T1 G5 *repeat* 24cd with v.l. [ (Prior half.) K1 अजेश्वरो; D1 अजो, D9 अनश्वरो (for अजश्चरो) — (Posterior half.) K1 D9 मां विज्ञाता; K4 D1 8 सविज्ञाय (D1 °ता), D5 ज्ञात्वा तु मां, D2 विज्ञात्वा वै, T1 विज्ञानात्मा वै, G5 विज्ञाय वै (for मां विज्ञाय) K1 D2 7 9 प्रपन्न°, D5 D10 T1 न मत्त° (for प्रसन्न) ]

28 a) K1 D9 G1 4 सुमहान्, Cs s′ सुमना (as in text) — b) K4 B Dn D1–7 9 M4 (*sup lin* as in text) Cd s जाग्रति, D5 D8 10 T G M1 (*inf. lin* as in text) Cs′ अवस्थित (for जागृमि) — c) M (except M1) आत्मान, Cd s s′ पितर (as in text) B4 D (except D5 D8 10) M (except M1) °भूतेषु, Cs s′ °भूताना (as in text) — After 28, K4 ins

302* विष भुङ्क्ष्व सहामात्यैर्विनाशं प्राप्नुहि ध्रुवम् ।
राजन्केन विना नाम्यां स्फीत कृष्णाजिन वरम् ।

[ This is said to be a cryptic stanza, with *double entendre* A tortuous attempt at explanation will be found at the end of the Udyogaparvan of the Chitrashala ed. (Poona 1931), which may be consulted by the curious ]

Colophon K2 3. 5 missing — *Sub-parvan* K1 D9 G1 2 M स(K1 सा)नत्सुजात, K4 B D5 D2–5. 8 10 T1 G5 सनत्सुजातीय, Dn सनत्सुजातीयमध्यात्मशास्त्र, D1 7 G1 4 प्रजागर and सनत्सुजात; to these K1 4 B Dn D5 D1 3–7 9 10 T1 G1 5 M add समाप्त — *Adhy name* D2 ज्ञानोपदेश (followed by समाप्त), G1. 4 आत्मज्ञा(G4

## ४६

वैशंपायन उवाच ।
एवं सनत्सुजातेन विदुरेण च धीमता ।
सार्धं कथयतो राज्ञः सा व्यतीयाय शर्वरी ॥ १
तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते ।
सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया ॥ २
शुश्रूषमाणाः पार्थानां वचो धर्मार्थसंहितम् ।
धृतराष्ट्रमुखाः सर्वे ययू राजसभां शुभाम् ॥ ३
सुधावदातां विस्तीर्णां कनकाजिरभूषिताम् ।
चन्द्रप्रभां सुरुचिरां सिक्तां परमवारिणा ॥ ४
रुचिरैरासनैः स्तीर्णां काञ्चनैर्दारवैरपि ।
अश्मसारमयैर्दान्तैः स्वास्तीर्णैः सोत्तरच्छदैः ॥ ५
भीष्मो द्रोणः कृपः शल्यः कृतवर्मा जयद्रथः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ॥ ६
विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः ।
सर्वे च सहिताः शूराः पार्थिवा भरतर्षभ ।
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम् ॥ ७
दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः ।
दुर्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः ॥ ८
कुरुराजं पुरस्कृत्य दुर्योधनममर्षणम् ।
विविशुस्तां सभां राजन्सुराः शक्रसदो यथा ॥ ९
आविशद्भिस्तदा राजञ्शूरैः परिघबाहुभिः ।
शुशुभे सा सभा राजन्सिंहैरिव गिरेर्गुहा ॥ १०

C 5. 1801
B 5. 47. 11
K. 5. 47. 10

---

आत्मविद्या)नाधिकार , M1. 2 आत्मज्ञानाधिकारकथन, M1 (*inf lin*) 3–5 आत्मज्ञानस्वरूपकथनं — *Adhy no* (figures, words or both) K1 D5 45, D6 42, D9 T2 G2. 3 46, T1 G1. 3. 4 M 47 (M2. 3. 5 48) — *S'loka no* Dn 31, D5 28, D3 30, G5 38.

### 46

☞ This adhy is missing in K2. 3 (cf v l 5. 41 1, 32 15).

1 Before the ref, G2 ins

303* नम पुंसे पुराणाय पूर्णानन्दाय विष्णवे ।
निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे ।

K5 om 1–3 (cf. v l 5 43 9) — c) D3 सर्वं (for सार्धं) — d) K4 B3 व्यतीता च (for व्यतीयाय)

2 K5 om 2 (cf. v l 1) — a) T2 राज्या तु (for रजन्या) — b) K1 एव ह, D7 9 एव हि, S पार्थिवा (for एव ते) — c) T1 G1. 4. 5 प्रविविशुर् (for आवि°) B3 सर्वे (for हृष्टा) — d) D2 सूतपुत्रदिदृ°. Ca d cite सूतस्य

3 K5 om 3 (cf. v l 1) — b) B2. 4 Dn D5 D2–4. 6. 10 M5 वाचो (for वचो). Dn D5 D3–6. 8. 10 °सहिता, D2 °संयुत, M3–5 °सश्रित (for °सहितम्) — d) K1 D9 विविशुस्ता (for ययू राज) S (except G3 M1) राजन्सभां

4 K5 resumes ! — a) M3–5 शुभा° (for सुधा°) — b) K5 °जितभूपिता, B1. 2. 4. 5 Dn D5 D5. 8. 10 °जिर°भूषणां, B3 D1. 3. 4. 7. 9 G4 °जिनभूषिता; D2. 6 °जिनभूषणा, Cn as in text — c) K1 D7. 9 °प्रभामा, B3 °प्रभावा, G4 °प्रभासु° (for °प्रभां सु°) — d) K4. 5 B D (except D7. 9) चदन° (for परम°)

5 a) K1 D9 G3 M कीर्णां (for स्तीर्णां) — b) K1 D5 तारकैर्, Dn1 दारुकैर्, T1 G M तारवैर् (G3 स्फाटिकैर्) (for दारवैर्) — d) B1. 2. 5 स्वास्तीर्णां, M2 सास्तीर्णैः.

6 K5 om 6abc, G5 (hapl.) om 6c–7b — d) D2 S (except T2, G5 om.) °दत्तोय, D10 °दत्तिश्च (for °दत्तश्च)

7 G5 om. 7ab (cf. v l 6) — c) D1 धीरा. (for शूरा.) — d) K4 D1 पुरुषर्षभ, K5 भरतर्षभा — ef) D9 प्रविवेश (for विविशुस्ता) B2 transp सभां and शुभा G1. 3. 5 त पुरस्कृत्य विविशुस्तां सभां सहिता शुभा

8 D5 D10 om 8ab — c) B2. 4 D9 दु सहो दुर्मुख (by transp) T2 G1. 5 दुष्प्रह (G1 °भ) (for दु सह) — d) T2 च, G2 अय (for अथ) D1 विशा पते (for विविंशति) — After 8, D10 ins

304* दु शासन सौबलश्च शकुनि शालतोशलौ ।,

while S ins

305* एते चान्ये च बहव पार्थिवा भरतर्षभ ।

9 c) D1 ते (for ता) — d) D3. 4 S देवा (for सुरा) Dn1 °सभा (for °सदो)

10 a) K1 D2. 9 प्रविशद्भि K1 D9 G3 om (hapl.) from राजन् up to सभा (in c) K4 यथा, Dn1 D3–5 T2 तथा, T1 G M सभा (for तदा) G5 राज्ञ (for राजन्)

C. 5. 1801 B. 5. 47 11 K. 5 47 11

ते प्रविश्य महेष्वासाः सभां समितिशोभनाः ।
आसनानि महार्हाणि भेजिरे सूर्यवर्चसः ॥ ११
आसनस्थेषु सर्वेषु तेषु राजसु भारत ।
द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम् ॥ १२
अयं स रथ आयाति योऽयासीत्पाण्डवान्प्रति ।
दूतो नस्तूर्णमायातः सैन्धवैः साधुवाहिभिः ॥ १३
उपयाय तु स क्षिप्रं रथात्प्रस्कन्द्य कुण्डली ।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ १४

संजय उवाच ।

प्राप्तोऽस्मि पाण्डवान्गत्वा तद्विजानीत कौरवाः ।
यथावयः कुरून्सर्वान्प्रतिनन्दन्ति पाण्डवाः ॥ १५
अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत् ।
यूनश्चाभ्यवदन्पार्थाः प्रतिपूज्य यथावयः ॥ १६
यथाहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः ।
अब्रुवं पाण्डवान्गत्वा तन्निबोधत पार्थिवाः ॥ १७

इति श्रीमहाभारते उद्योगपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

— $^{b}$) D8 परिववाहवः — $^{c}$) K4 D1 तैस्तु, T2 रम्या (for राजन्)

11 $^{a}$) D2 transp ते and प्रविश्य — $^{b}$) B D (except D1–4 7 9) सर्वे महौजस , Ca. d समितिशोभनाः (as in text) — $^{c}$) K5 B D (except D1–4. 9) M1. 2 विचित्राणि (for महा°)

12 $^{c}$) S (except G8 5) द्वा:स्था निवेदयामासु° — $^{d}$) K1 राज्ञे सूतम्, Ca सूतपुत्रम् (as in text). D2 अच° (for उप°)

13 $^{a}$) T G (except G8) सारथिर् (for स रथ) — $^{b}$) K5 D7 योगच्छत्, D8 य आसीद् (for योऽयासीत्) — $^{c}$) D7 दूतो, G5 सूतो (for दूतो). D1 व (for न ) K1 D2 9 तूर्णमभ्येति; K5 D1 7 चोदयन्नश्वान्, D3.4 8 तूर्णं आयात°, T G8 M तूर्णमुशति, G1 2 4 5 तूर्णमायाति. D10 दूतस्ते संजयस्तूर्णं — $^{d}$) G2 साधुवाहित° K5 D1. 7 M सैंधवान्साधुवाहि(K5 D7 °ह)न° — After 13, D10 *repeats* 5 32 4–5 [ v l गावल्गणि. (for संजयोऽयं in 4$^{a}$), प्रतीहारं धृतराष्ट्रोन्ववोचत् (for 5$^{a}$), स मे कस्मात्तिष्ठति द्वारि रुद्ध° (for 5$^{d}$) ], followed by वेश°

14 $^{a}$) K1 5 B4 Dn1 D6 7. 9 10 M5 Cn उपेयाय, B8 उपागच्छत्, D1 उपाययौ, G (except G8) उपधावत् K1 B1 4 5 Dn2 D2–4 10 T2 G8 M2 स तु (by transp.), K4 तु वै, B8 सद° — $^{d}$) K4 D1 2 भूमि° (for मही°)

15 $^{b}$) B (except B8) Dn D2–6 10 त, S मां (G8 मा) (for तद्) K5 विजानीथ G2 पार्थिवा. (for कौरवा ) — $^{cd}$) S सर्वान्कुरून्पांडवेयो ह्य(T1 अ)भ्यभाषत धर्मवित् (T2 °राट्)

16 $^{a}$) Hypermetric! D5 अभिवादयति, S °यते S om. च (to avoid the hypermetric). — $^{c}$) S पुनश्चाभ्यवदत् पार्थ (M1. 3 4 प्रीतः)

17 $^{a}$) K1 D9 तथाहं, D5 6 यथा हि, M2 यथार्हं — $^{b}$) S इहागत. (for इतो गत°) — $^{cd}$) Dn2 D9 पांडवं (for पाण्डवान्) K4 सत्तमा , D2–4 7 कौरवाः (for पार्थिवा.) S अब्रु(M °ब्र)वं वचन (T1 G1. 4 तदब्रुव वचो) युक्तं नात्र किंचन हापितं — After 17, S ins.

306* अब्रूतां तात धर्मेण वासुदेवधनजयौ ।
[ =(var.) 5 58 1$^{ab}$. T2 तत्र (for तात) ]

Colophon missing in K2 3 — *Sub-parvan* K1 B Dn D8 D5–9 संजययान, D2 यानसंधि, D10 T1 G1. 3 4 M संजयप्रतियान — *Adhy name* D2 सभाप्रवेश°, G2 वासुदेववचनं, M सदेशकथनारंभ° — *Adhy no* (figures, words or both) K1 T2 G5 47, D5 46, D6 43, D7 T1 G1–4 M 48 (M2 3 5 49) — *S'loka no* K5 13, Dn. 17, D8 18.

## 47

☞ This adhy is missing in K2 3 (cf v.l. 5 41 1, 32. 15).

1 $^{a}$) G8 M त्वा (for त्वा) — $^{b}$) S यद् (for किम्) G8 अर्जुनो योत्स्यमान. (for वाक्यमदीनसत्त्व°) — $^{c}$) T1 जनार्दन (for धनजय ) — $^{d}$) K1 D1 जीवितमिच्छन्; K4 साधयिता (for जीवितच्छिन्) — S reads adhy. 58 after 1 (M8 5, after 5 47. 19), followed by the *repetition* of 1 !

# ४७

धृतराष्ट्र उवाच ।

पृच्छामि त्वां संजय राजमध्ये
किमब्रवीद्वाक्यमदीनसत्त्वः ।
धनंजयस्तात युधां प्रणेता
दुरात्मनां जीवितच्छिन्महात्मा ॥ १

संजय उवाच ।

दुर्योधनो वाचमिमां शृणोतु
यदब्रवीदर्जुनो योत्स्यमानः ।
युधिष्ठिरस्यानुमते महात्मा
धनंजयः शृण्वतः केशवस्य ॥ २

अन्वत्रस्तो बाहुवीर्यं विदान
उपह्वरे वासुदेवस्य धीरः ।
अवोचन्मां योत्स्यमानः किरीटी
मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ॥ ३

ये वै राजानः पाण्डवायोधनाय
समानीताः शृण्वतां चापि तेषाम् ।
यथा समग्रं वचनं मयोक्तं
सहामात्यं श्रावयेथा नृपं तम् ॥ ४

यथा नूनं देवराजस्य देवाः
शुश्रूषन्ते वज्रहस्तस्य सर्वे ।
तथाशृण्वन्पाण्डवाः सृञ्जयाश्च
किरीटिना वाचमुक्तां समर्थाम् ॥ ५

इत्यब्रवीदर्जुनो योत्स्यमानो
गाण्डीवधन्वा लोहितपद्मनेत्रः ।
न चेद्राज्यं मुञ्चति धार्तराष्ट्रो
युधिष्ठिरस्याजमीढस्य राज्ञः ।
अस्ति नूनं कर्म कृतं पुरस्ता-
दनिर्विष्टं पापकं धार्तराष्ट्रैः ॥ ६

येषां युद्धं भीमसेनार्जुनाभ्यां
तथाश्विभ्यां वासुदेवेन चैव ।
शैनेयेन ध्रुवमात्तायुधेन
धृष्टद्युम्नेनाथ शिखण्डिना च ।
युधिष्ठिरेणेन्द्रकल्पेन चैव
योऽपध्यानान्निर्दहेद्गां दिवं च ॥ ७

C. 5. 1917
B. 5. 48. 9
K. 5. 48. 9

---

2 b) B3 युध्य° (for योत्स्य°) K5 om. 2c–3a

3 K5 om. 3a (cf. v.l 2) — a) K1 D5 D7 Ca d अनुत्रस्तो, B3.4 अनुमतो, D2 S अविभ्रस्तो; D8.9 असम्रस्तो; D10 दिव्यास्त्रज्ञो (for अन्वत्रस्तो) Dn1 D3.4 बाहुवीर्येण, Cd.s as in text Dn1 D3.4 विद्वान्, D1 ततान, D2 दधार, S विजानन्, Ca.n.s विदान (as in text) — b) S तस्य (for वासु-) K4.5 B (except B1) Dn1 D1.8–8 वीर (for धीर) — c) K4 अथावदन् (for अवोचन्) M मा (for मा) — d) K1 G3.4 ब्रूयाद् (for ब्रूया) — After 3, K4 B D (D2 marg sec m) ins

307* संशृण्वतस्तस्य दुर्भाषिणो वै
दुरात्मन सूतपुत्रस्य सूत ।
यो योद्धुमाशंसति मां सदैव
मन्दप्रज्ञ कालपक्वोऽतिमूढ ।

4 a) Dn1 D1 राजन् (for राजान ) D1 पार्थिवायो°, D3 8.6–8 पाण्डवान्यो°, S (except G5) पांडवैर्यो°, Ca d पाण्डवायो° (as in text) — c) G5 अयो समत्र (for यथा समग्रं) K1 D9 S (except T1) ययोक्तं (for मयो°) — d) G5 सामात्यमाशु (for सहामात्य) K4 B D (except D1.2 9) G5 (inf lin ) नृप तद्, G6 नरेंद्र (for नृप तम्)

5 a) S गिरं (T1 पर) (for नून) M3 देवस्य (for °राजस्य) — c) G1.4 5 तथा ह्यशृण्वन् D7 (by transp ) सृजया पाण्डवाश्च — d) K1 किरीटिनो K1 D9 समस्ता, B4 समग्रा (for समर्थाम्) S किरीटिना वाक्यमुक्तं समर्थं (T2 °र्थां, G2 °र्थां)

6 b) D2 आयतपत्रनेत्र, T1 G1.4.5 लोहिततोयजाक्ष, T2 अरुणपद्मनेत्र (for लोहितपद्मनेत्र ) — e) D2 आस्ते, G1.4 अस्त्येव (for अस्ति) — f) D5 Cd अनिविष्ट, Cs अनिर्दिष्ट, Ca अनिर्विष्ट (as in text)

7 b) D1 8.4 यमाभ्या, Ca d 8 अश्विभ्या (as in text). — After 7ab, D2 ins

308* तथा पाञ्चालैः सृञ्जयैश्चापि राजन् ।

— c) Some N MSS सैनेयेन — d) K1 6 D3 वा (for

C. 5. 2034
B. 5. 51. 36
K. 5. 51. 35

मम पुत्राश्च भृत्याश्च राजानश्चैव संजय ॥ ३६
येन राजा महावीर्यः प्रविश्यान्तःपुरं पुरा ।
वासुदेवसहायेन जरासंधो निपातितः ॥ ३७
कृत्स्नेयं पृथिवी देवी जरासंधेन धीमता ।
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता ॥ ३८
भीष्मप्रतापात्कुरवो नयेनान्धकवृष्णयः ।
ते न तस्य वशं जग्मुः केवलं दैवमेव वा ॥ ३९
स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना ।
अनायुधेन वीरेण निहतः किं ततोऽधिकम् ॥ ४०
दीर्घकालेन संसिक्तं विषमाशीविषो यथा ।
स मोक्ष्यति रणे तेजः पुत्रेषु मम संजय ॥ ४१
महेन्द्र इव वज्रेण दानवान्देवसत्तमः ।
भीमसेनो गदापाणिः सूदयिष्यति मे सुतान् ॥ ४२
अविषह्यमनावार्यं तीव्रवेगपराक्रमम् ।
पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम् ॥ ४३
अगदस्याप्यधनुषो विरथस्य विवर्मणः ।
बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ॥ ४४
भीष्मो द्रोणश्च विप्रोऽयं कृपः शारद्वतस्तथा ।
जानन्त्येते यथैवाहं वीर्यज्ञस्तस्य धीमतः ॥ ४५
आर्यव्रतं तु जानन्तः संगरान्न बिभित्सवः ।
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः ॥ ४६
बलीयः सर्वतो दिष्टं पुरुषस्य विशेषतः ।
पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान् ॥ ४७
ते पुराणं महेष्वासा मार्गमैन्द्रं समाश्रिताः ।
त्यक्ष्यन्ति तुमुले प्राणान्रक्षन्तः पार्थिवं यशः ॥ ४८
यथैषां मामकास्तात तथैषां पाण्डवा अपि ।
पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च ॥ ४९
यत्त्वस्मदाश्रयं किंचिद्दत्तमिष्टं च संजय ।
तस्यापचितिमार्यत्वात्कर्तारः स्थविरास्त्रयः ॥ ५०
आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः ।
निधनं ब्राह्मणस्याजौ वरमेवाहुरुत्तमम् ॥ ५१
स वै शोचामि सर्वान्वै ये युयुत्सन्ति पाण्डवान् ।

---

वीरा, T G1 8 5 M1 (*inf lin* as in text) 2 वध (for वश) — b) K5 B D (except D7 9) °भया° (for °बला°) — c) G5 transp पुत्रा° and भृत्या°.

38 a) K4 D8 4 वसुधा (for पृथिवी) S सुत (for देवी) — b) D1 2 जरासधभयार्दिता. — c) D9 तेनैव मागधेंद्रेण — d) K4 D1-4 9 प्रशासिता (for प्रता°)

39 a) K1 5 D7 9 10 भीष्मप्रभावात्, K4 D8 4 °प्रसादात्, G2 8 भीमप्रतापात् — c) K1 D1 2 8 T2 G4 ये न, K4 5 B Dn D5 D8-7 9 10 यत्र (for ते न) K4 B Dn D5 D8-6 8 M2 वशे (for वशं) — d) K4 B Dn D5 D8-9 तत्, D2 च (for वा)

41 a) K4 D1-6 °युक्त, T1 G8 4 °सक्त, G5 M1 °सिद्ध (for °सिक्त) B Dn D5 D8 दीर्घकाल(Dn1 °ल)-समास(B1 2 4 D5 D8 °यु)क्त — d) K4 D1-6 पांडव (for सजय)

42 c) D1 2 महाबाहु° (for गदा°)

43 a) K1 4 5 D3 4 7 9 T2 °ह्य(D3.4 T2 °ह्य)महावीर्यं, D1 2 °ह्यमनासाध्य, T1 G M °ह्यमनाहार्यं. — c) D5 इह, D8 4 G3 5 च, D8 G4 M8 वा (for इव) D5 D1 2 S अभि (G4 हि) (for अति)

44 c) B2 Ds2 D8 °चर्मण°; T G °सज्जिन (for °वर्मण)

45 ab) G4 भीष्मद्रोणकृपश्चायमश्वत्थामा तथैव च — c) B (except B8) D5 D8 तथैवाह; D1 यथा वाह — d) B D1 2 S वीर्यज्ञास्.

46 a) D1 S आर्यवृत्त. — b) D1 G1 2 विभत्सव, T G3 5 भिभत्सव., G4 corrupt.

47 a) K4 D3.4 तु भवेद्, S तत्तु वै (for सर्वतो)

48 a) S अविपह्य (T1 G1 3.4 °ह्या, T2 G5 °ह्य) (for ते पुराण) — b) K4 B1 2 4 D7 समाश्रिता, D2 अवस्थिता — c) A few N MSS तुमले

49 a) D1 सूत (for तात) — cd) D1 पौत्रा भीष्मस्य द्रोणस्य शिष्याश्चैव कृपस्य च

50 a) B2 D1 10 ये तु; B8 T2 यत्तन्, D5 यत्र (for यत्तु) B8 T2 मदाश्रय (T2 °ये), T1 G3 5 अस्मदाश्रयाद्, Cs अस्मदाश्रय (as in text) G2 तात (for किंचिद्). K5 D7 यत्त(D7 °द)स्मादाश्रयं किंचिद्, M6-8 यत्तस्मादाश्रयात्किंचिद् — b) K1 4 D8-0 9 हितम् (for दत्तम्) — K4 om 50d–52a

51 K4 om 51 (cf v l. 50) — b) B1 2 5 D1 2 क्षात्रधर्मं Ds2 D2 परीप्सव — c) K5 B D (except D1 2 7 9) क्षत्रिय° (for ब्राह्मण°) — d) D1 T1 G4.5 M1 परम् (for वरम्)

52 K4 om 52a (cf. v l 50) — a) D9 शश्वद्

विक्रुष्टं विदुरेणादौ तदेतद्भयमागतम् ॥ ५२
न तु मन्ये विघाताय ज्ञानं दुःखस्य संजय ।
भवत्यतिबले ह्येतज्ज्ञानमप्युपघातकम् ॥ ५३
ऋषयो ह्यपि निर्मुक्ताः पश्यन्तो लोकसंग्रहान् ।
सुखे भवन्ति सुखिनस्तथा दुःखेन दुःखिताः ॥ ५४
किं पुनर्योऽहमासक्तस्तत्र तत्र सहस्रधा ।
पुत्रेषु राज्यदारेषु पौत्रेष्वपि च बन्धुषु ॥ ५५
संशये तु महत्यस्मिन्किं नु मे क्षममुत्तमम् ।
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन् ॥ ५६
द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत् ।
मन्देनैश्वर्यकामेन लोभात्पापमिदं कृतम् ॥ ५७
मन्ये पर्यायधर्मोऽयं कालस्यात्यन्तगामिनः ।
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ॥ ५८
किं नु कार्यं कथं कुर्यां क्व नु गच्छामि संजय ।
एते नश्यन्ति कुरवो मन्दाः कालवशं गताः ॥ ५९
अवशोऽहं पुरा तात पुत्राणां निहते शते ।
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ॥ ६०

यथा निदाघे ज्वलनः समिद्धो
　दहेत्कक्षं वायुना चोद्यमानः ।
गदाहस्तः पाण्डवस्तद्वदेव
　हन्ता मदीयान्सहितोऽर्जुनेन ॥ ६१

C. 5. 2084
B. 5. 51. 61
K. 5. 51. 67

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

---

(for म वै) D3 4 S वो (for वै) — b) G2 3 M ये युयुत्स(G5 °त्स)व K4. 5 B D (except D2 7 9) पाडवै — d) D3 तदेव म°

53 a) K4 Ds2 ननु, T G न तन् (for न तु) G5 विनाशाय (for विघाताय) — b) G5 नून, M जानन् (for ज्ञानं) D3 भेषज (for संजय) — c) K4 5 B Dn2 Ds D1 3–8 10 T2 G3 अतिबल, D2 अनानिल — d) K4 5 B D (except D1. 2 9) ज्ञानस्यापि (for ज्ञानमपि)

54 a) G2 अपि हि, G4 ह्यपि, M3 4 (inf lin) 5 ह्याधि- (M4 orig व्याधि-) (for ह्यपि) K5 संयुक्ता, Cs निर्मुक्ता (as in text) G5 विषयेभ्यो विनिर्मुक्ता — b) K1 5 D1–4 7–10 लोकसंग्रह, Cs as in text — c) K4 5 B2 4 Dn1 D2. 4. 10 सुखैः (for सुखे)

55 a) K4 5 B1–3 5 D3 D2–8 10 मोहम्, B4 S योयम् (G4. 5 यो मया) (for योऽहम्) D5 आसक्ता — c) K1 5 D7 राष्ट्र-, K4 B4 Dn1 D8 D3–5 8 10 राज्ये, D9 राष्ट्रे (for राज्य) D6 पुत्रेषु दारे राज्येषु, G2 पुत्रेष्वपि दारेषु (sic) — d) B3 पौरेष्वपि

56 b) K1 5 D5 6 8 तु (for नु) K5 B3 Dn1 D3 4. 7–9 T G1 क्षेमम्, Cs as in text K4 B4 5 Dn Ds1 D1. 5. 6 10 G3 उत्तर (for उत्तमम्) — c) K4 D3 4 ह्यनुपश्यामि, D2 ह्यवगच्छामि, T1 G1 5 एव पश्यामि — d) T1 G1. 5 अनयात्तत, G3 4 M2 अपि चिंतयन्

57 a) K4 आप्नोति, Dn1 D10 (sup lin) T G1 4 5 आयाति (for आभाति) D5 D1 2 द्यूतप्रमुखतो भाति

58 c) T2 G1. 2 M प्रधि, Ca d s प्रधि (as in text) — d) M1 2 नात्र, Cs नास्मात् (for नास्य)

59 a) K4 B D (except D9) कुर्यां (for कार्यं) K1. 5 D9 तथा, D5 6 च वै (for कथं) D5 6 तेषु (for कुर्यां) — b) K4 D3 4 कुत्र, G4 अनु (for क्व नु) In D9 the portion from $59^{cd}$ up to 5 60 12 is lost on missing folios — d) K1. 5 Dn1 D10 कालवशा(Dn1 °शे)नुगा, S क्रोधवशं गताः

60 D9 missing (cf. v.l. 59) K4 B D (D9 missing) तदा (for पुरा) — c) T1 G1 रुदित (for निनदं) — d) T1 G3. 5 M1–4 मा (for मां)

61 D9 missing (cf v l 59) — a) T2 G1 M3 4 (sup lin) 5 यदा (for यथा) — b) Dn1 चीयमान; D2 क्षोभ्य°, D10 नोद्य°. — c) K4 B D (except D1 2 7 10, D9 missing) वै तथैव (for तद्वदेव) — d) K1 5 D7 10 (sup lin) अस्मदीयान् (for मदीयान्) G5 सहितानर्जुनेन

Colophon missing in K2 3 D9. — *Sub-parvan* K1 4 5 B (except B3) D (D9 missing) संजययान (D2 यानसंधि); G2 M1 2 संजयप्रतियान — *Adhy no* (figures, words or both) K1 51, D5 50, D8 47, D7 G5 52, T G1–4 M 53 (M2 3. 5 54) — *S'loka no* K5 60, Dn G5 61, D8 62

# ५१

C. 5. 2088
B. 5. 52. 1
K. 5. 52. 1

धृतराष्ट्र उवाच ।
यस्य वै नानृता वाचः प्रवृत्ता अनुशुश्रुमः ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनंजयः ॥ १
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् ॥ २
अस्यतः कर्णिनालीकान्मार्गणान्हृदयच्छिदः ।
प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ॥ ३
द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ ।
माहात्म्यात्संशयो लोके न त्वस्ति विजयो मम ॥ ४
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ।
समर्थो बलवान्पार्थो दृढधन्वा जितक्लमः ।
भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजयः ॥ ५
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ।
वधे नूनं भवेच्छान्तिस्तयोर्वा फल्गुनस्य वा ॥ ६
न तु जेतार्जुनस्यास्ति हन्ता चास्य न विद्यते ।
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति य उत्थितः ॥ ७
अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च ।
एकान्तविजयस्त्वेव श्रूयते फल्गुनस्य ह ॥ ८
त्रयस्त्रिंशत्समाहूय खाण्डवेऽग्निमतर्पयत् ।

---

## 51

☞ This adhy is missing in K2 8 D9 (cf v l 5. 41 1, 32 15, 50 59).

1 =(var ) 3. 46 5 — $^{a}$) K1 नैवानृता, D8 चैतानृता, T1 G1 ता. सूनृता, T2 (orig.) G3. 5 ता नानृता, T2 (*inf. lin* ) G4 नानानृता; G2 नानाविधा, M तादृगृता (for वै नानृता) — $^{b}$) K1 T1 M4 अनुशुश्रुम B D (except D7, D9 missing) कदाचिदनुशुश्रुम (D9 °म.) — $^{c}$) K1 D7 10 T2 G2 अद्य (for स्याद्) — $^{d}$) K1 D2 10 S (except G3) यस्य योद्धा (by transp.).

2 =(var.) 3 46 8 — $^{a}$) T2 तु न, G2 4 न च (by transp ) — $^{b}$)=3$^{d}$ D2 T1 G3. 5 °धन्विन. — B2 (hapl ) om. 2$^{c}$–3$^{d}$, K1 reads it in marg

3 B2 om. 3, K1 reads it in marg (cf v l 2) — 3$^{ab}$=(var ) 3 46 6$^{ab}$. — $^{a}$) D52 D7. 8 G4 कर्णनालीकान् — K5 om 3$^{cd}$ — $^{c}$) K4 प्रतीयान्, D1 युध्यतो, D2. 8 प्रमेत्ता, Ca d प्रत्येता (as in text) — $^{d}$) =2$^{b}$ S विद्यते सव्यसाचिनः

4 =(var ) 3 46 9 — $^{b}$) S वीर (T1 G1 वा त) नरर्षभं — After 4$^{ab}$, N (K2 8 D9 missing) ins .

332* कृतास्त्रौ बलिना श्रेष्ठौ समरेष्वपराजितौ ।

— $^{c}$) K4 5 B D (except D1 8, D9 missing) G1 3 महान्स्यात्, T2 G4 उभाभ्यां, Ca. d माहात्म्यात् (as in text).

5 =(var ) 3 46 10–11$^{ab}$. K5 om 5$^{a}$–8$^{b}$ — $^{d}$) G4 M (except M1) जित° (for दृढ°) — $^{e}$) T1 G4. 5 M (except M2) तु (M1 *inf lin.* सु- as in text). A few MSS -तुमल K1 D8 Ca. d 8 तुमु(K1 D8 °म)ले युद्धे — $^{f}$) G5 सर्वतः, C8 सर्वशः (as in text) K1 M1 Ca d 8 अपराजित T2 सर्वक्षत्रभयावह

6 =(var.) 3 46 11$^{c}$–12$^{d}$ K5 om. 6 (cf. v l 5) — $^{a}$) K4 D8 4 [अ]प्यस्त्र°; M1 शास्त्र° (for ह्यस्त्र°) — $^{b}$) D2 सर्वं प्राप्तं (for सर्वे प्राप्ता). — S *repeats* 6$^{cf}$–10$^{ab}$ here (with v l.), reading the lines for the first time after 5. 18 45$^{ab}$. — $^{e}$) G1 (first time) यथा, G5 (second time) जये (for वधे) — $^{f}$) S (first time) तव and (second time) ए(T1 ते)षां, Ca. d तयोर् (as in text) K1 वै (for वा). K1 4 B D (except D1. 2, D9 missing) फाल्गुनस्य K4 B (except B2) D (except D1 8–5 7, D9 missing) च (for वा)

7 =(var ) 3 46 13 K5 om 7 (cf v l 5) S *repeats* 7 here (with v.l ), cf. v l 6 — $^{ab}$) B Dn D8 D5 6 8 transp जेता and हन्ता T1 G2 4 M (all first time) and T2 G1 3 5 (all both times) वा (for च) D1 2 नैवास्य (for चास्य न) — G5 om. 7$^{c}$–8$^{d}$. — $^{d}$) K1 D7 समुत्थित° (for य उत्थित.)

8 K5 om 8$^{ab}$, G5 om. 8 (cf. v l 5, 7) S *repeats* 8 here (with v l ), cf v l 6 — $^{a}$) D2 शस्त्राणि, G3–5 M (all first time) ह्यस्त्राणि (for ऽप्यस्त्राणि) — $^{b}$) D2 जयति न जयति च; S (both times) युध्यति विजयति च (G5 om second time) — $^{c}$) S (first time) अथ तु, Ca एकात- (as in text). D2 चेह, T1 G1 (both second time) स्त्वेष (for स्त्वेव). — $^{d}$) Some N MSS फाल्गुनस्य K1 5 तु, B2 D1 2 8 T2 (second time) G4 (both times) च, D3 4 7 10 G1 (both times) हि; M5 (second time) वा (for ह).

9 =(var ) 3 46 14 S *repeats* 9 here (with

जिगाय च सुरान्सर्वान्नास्य वेद्मि पराजयम् ॥ ९
यस्य यन्ता हृषीकेशः शीलवृत्तसमो युधि ।
ध्रुवस्तस्य जयस्तात यथेन्द्रस्य जयस्तथा ॥ १०
कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः ।
युगपत्त्रीणि तेजांसि समेतान्यनुशुश्रुमः ॥ ११
नैव नोऽस्ति धनुस्तादृग्योद्धा न च सारथिः ।
तच्च मन्दा न जानन्ति दुर्योधनवशानुगाः ॥ १२
शेषयेदशनिर्दीप्तो निपतन्मूर्ध्नि संजय ।
न तु शेषं शराः कुर्युरस्तास्तात किरीटिना ॥ १३
अपि चास्यन्निवाभाति निघ्नन्निव च फल्गुनः ।
उद्धरन्निव कायेभ्यः शिरांसि शरवृष्टिभिः ॥ १४
अपि बाणमयं तेजः प्रदीप्तमिव सर्वतः ।
गाण्डीवेद्धं दहेताजौ पुत्राणां मम वाहिनीम् ॥ १५
अपि सा रथघोषेण भयार्ता सव्यसाचिनः ।
वित्रस्ता बहुला सेना भारती प्रतिभाति मे ॥ १६
यथा कक्षं दहत्यग्निः प्रवृद्धः सर्वतश्चरन् ।
महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् ॥ १७

यदोद्वमन्निशितान्बाणसंघा-
न्स्थाताततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा
यथा भवेत्तद्वदवारणीयः ॥ १८

यदा ह्यभीक्ष्णं सुबहून्प्रकारा-
ञ्श्रोतास्मि तानावसथे कुरूणाम् ।
तेषां समन्ताच्च तथा रणाग्रे
क्षयः किलायं भरतानुपैति ॥ १९

C. 5 2105
B. 5. 52 20
K. 5. 52. 20

इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

v.l.); cf. v.l. 6 — a) K1 B (except B1) D3 D1 5 7 8 10 समा सूत, K5 समये तेषु, D6 क्षपा सूत, T1 G5 M (all both times), T2 (second time) and G1–3 (all first time) सहस्रेण; T2 G4 (both first time) सहस्राणि, G1 3 4 (all second time) सहस्रेण, G2 (second time) महेन्द्रेण (for समा सूत); all comm. cite त्रयस्त्रिंशत्समा ꙮ Ca त्रयस्त्रिंशत् समा वर्षाणि यस्य स तथा । त्रयस्त्रिंशत् समा इति पाठेऽसमस्ते त्रयस्त्रिंशत् समा यस्येति शेष । Cn त्रयस्त्रिंशत्समा वर्षाणि अतीता इत्यर्थ । सधिरार्षं ।ꙮ — d) K5 B Dn D3 D5 6 8 10 Ca विद्म, T1 G1 5 (all second time) वेत्ति (for वेद्मि) S both times (G1 M5 first time only) पराभव

10 S *repeats* $10^{ab}$ here, cf v l 6 — b) K1 °समायुत, D7 °यशोनिधि (for °समो युधि) — c) K4 B1 ध्रुव (for ध्रुव) K1 कृत तात मत तस्य, K5 क्षेम तस्य ध्रुव तात, D1 2 ध्रुव तस्य भवेत्तात, S कृतं तस्य (G3 कृतस्तस्य, G5 अर्जुनस्य) ध्रुव तात

11 a) S युक्तौ (for यत्तौ) — b) B3 वरिष्ट, Ca d अधिज्य (as in text). — d) D2 इति (for अनु) K4 B D (except D6 7 10, D9 missing) °शुश्रुम

12 a) K4. 5 B Dn D3 D2–6 8 10 नैवास्ति नो, D2 न रथोस्ति, S नैव चास्ति — b) D1 G3 न योधा, G4 M न हया — c) K1 T2 ते (for तत्) D1 2 बुध्यन्ते (for जानन्ति)

13 =(var) 3 46 15 — a) G4 5 शोषयेत् D1 M दीप्ता (for दीप्तो) — b) K5 B (except B5) Dn D3. 4 7 10 विपतन्, D1 G3 M पतती, D2 प्रपतन्, D5 6 8 निष्पतन् — K5 om $13^{c}$–$19^{d}$, D3 om. $13^{c}$–$15^{b}$ — c) K4 B (except B3) Dn D3–6 8 10 तात (for कुर्युं) — d) K4 B Dn D3–6 8 10 कुर्युरस्ता (B3 मुक्तास्तात) (for अस्तास्तात)

14 K5 D3 om 14 (cf. v l 13) — b) D7 एव (for इव) B Dn D1 2 5 6 8 धनजय, a few N MSS च फाल्गुन (for च फल्गुन) S विनिघ्नन्निव फल्गुन — c) K1 क्रुद्ध शरसहस्रेण, S उत्पततीव (T1 G1 °तति च, T2 G3 °तन्निव) कायेभ्य

15 K5 om 15, D3 om $15^{ab}$ (cf. v l 13) — b) D2 T1 G5 सर्वशः (for °तः) — c) K1 गांडीवेयं, B1 3 4 Dn D3 D7 8 T G (except G2) Cs °वीर्य, D1 °वाग्निर्, D2 °वेन (for °वेद्ध) D1 2 10 S (except M5) दहेत्तात Cs cites आजौ (as in text)

16 =(var) 3 46 17 K5 om 16 (cf v.l 13) — a) D3 स; M1 2 वा (for सा) — c) K4 B (except B2) Dn D1–6 8 10 बहुधा (for °ला)

# ५२

C. 5. 2106
B. 5. 53. 1
K. 5. 53. 1

धृतराष्ट्र उवाच ।
यथैव पाण्डवाः सर्वे पराक्रान्ता जिगीषवः ।
तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः ॥ १
त्वमेव हि पराक्रान्तानाचक्षीथाः परान्मम ।
पाञ्चालान्केकयान्मत्स्यान्मागधान्वत्सभूमिपान् ॥ २
यश्च सेन्द्रानिमाँल्लोकानिच्छन्कुर्याद्वशे बली ।
स श्रेष्ठो जगतः कृष्णः पाण्डवानां जये धृतः ॥ ३
समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान् ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ ४
धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्मा महारथः ।
मामकेषु रणं कर्ता बलेषु परमास्त्रवित् ॥ ५
युधिष्ठिरस्य च क्रोधादर्जुनस्य च विक्रमात् ।
यमाभ्यां भीमसेनाच्च भयं मे तात जायते ॥ ६
अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा ।
मम सेनां हनिष्यन्ति ततः क्रोशामि संजय ॥ ७
दर्शनीयो मनस्वी च लक्ष्मीवान्ब्रह्मवर्चसी ।

---

17 K5 om 17 (of v l 13) — a) Dn1 स च (for कक्ष) K4 B D (D9 missing) महानग्नि (D2 महावह्नि), G3 दहेदग्नि — b) K4 B D (except D7, D9 missing) प्रदहेत्, G3.4 प्रदीप्त॰ (for प्रवृद्ध॰) — c) G3 4 महाग्निर् (for °र्चिर्) M महानिलबलोद्धूत॰. — d) D10 तथा (for तद्वद्) T1 G1 5 मे सुतान् (for मामकान्)

18 =(var) 3 46 18 K5 om 18 (of v l. 13) — a) T G यतः (T2 G5 यथा) (for यदा). T G उद्वहन् (T2 G3 उत्सृजन्) (for उद्वमन्) T1 G1 निहितान् (for निशितान्) G2 3 M °वर्षान्; G4 °पूगान् (for °संघान्) D2 यदोद्वमद्बाणसंघाञ्शिताग्रान् — b) K4 B D (except D1 2, D9 missing) T तानाततायी, G5 अस्त्राततायी. — d) K4 B D (D9 missing) अपार° (for अवार°)

19 K5 om. 19 (of v l. 13) — a) K1 तस्य, D1 2 यस्य, G (except G5) यथा (for यदा) M (except M1) अपि (for हि) S प्रणादान्, all comm प्रकारान् (as in text) — b) T2 श्रोष्यामि, all comm श्रोतास्मि (as in text) K1 वा चातिवधे, K4 B (except B4) Dn1 D5 6 तातावं, D1 धाताव°; T2 यानाव°, G3 नानाव° (for तानाव°) All comm. cite आवसथे (as in text) — c) K1 समं तत्र (for समन्ताच्च) G5 हि (for च) G3 तदा (for तथा) — d) S (except G1 5) भवताम् (for भरतान्).

Colophon missing in K2 3 D9 — *Sub-parvan* K1 4 5 B D संजययान (D2 यानसंधि, D9 missing), M संजयप्रतियान — *Adhy name* M अर्जुनप्रशंसा — *Adhy no* (figures, words or both) K1 52, D5 51, D6 48, D7 G5 53, T G1–4 M1 4 54, M2 50, M3. 5 55 — *S'loka no.* Dn 20, D3 21.

## 52

☞ This adhy. is missing in K2 3 D9 (cf. v l. 5 41. 1, 32. 15, 50 59) G5 transp. adhy 52 and 53.

1 K5 om. from $1^{cd}$ up to 5 54 $25^{ab}$ — d) D2 रणे, G5 जयैर् (for जये). D2 G5 वृता, T2 G2–4 रता (for धृता॰), cf. v l $3^{d}$.

2 K5 om 2 (of v.l. 1). — cd) A few MSS पंचालान्, कैकयान्, मात्स्यान् and मगधान्. K1 वङ्ग°, D2 सर्व°, D7 10 अङ्ग°, T2 अन्य° (for वत्स°)

3 K5 om. 3 (of v.l 1). — a) D2 यः सहेंद्रान् — b) B2 5 D8 D1–3 10 वशी (for बली) — c) Dn1 Cn स स्रष्टा, D1 स ज्येष्ठो; T1 G1 5 श्रेष्ठोऽस्य (for स श्रेष्ठो) D3 स्रष्टा (for कृष्णः) — d) K4 D1 2 वृत॰, G2 रत (for धृत॰), cf. v.l. $1^{d}$.

4 K5 om 4 (of. v.l. 1) — b) S क्षिप्रहस्तवान् — c) K1 S संप्राप्त (for शैनेय.) T1 G1 5 स्थायी (for स्थाता) — d) D7 बीजवद्विसृजन्, G5 जवाप्रतिवपन् Ca cites प्रवपन् (as in text).

5 K5 om. 5 (of. v.l. 1) — a) D7 G4 5 पाचाल. — b) T1 G1 5 दृढवर्मा, T2 G2 M कृतवर्मा; G3 कृतकर्मा; G4 धृत° (for क्रूर°)

6 K5 om 6 (of. v l 1) — a) K4 D2.4 तु (for च)

7 K5 om 7 (of. v.l. 1) — b) D1 बलं, Ca 3 जाल (as in text) G5 अतकृत्; Ca. d 3 अन्तरा (as in text). — c) G5 हरिष्यति K4 B2 4 Dn D8 D3–8 10 m C3 न मे सैन्या(D7 सेना)स्तरिष्यति, D2 सेना हनिष्यति मम — d) D7 ततः शोचामि, T G1–3 M1 इत्यभिक्रो°; G4 अभिक्रो°, M2–5 यदि क्रो°

मेधावी सुकृतप्रज्ञो धर्मात्मा पाण्डुनन्दनः ॥ ८
मित्रामात्यैः सुसंपन्नः संपन्नो योज्ययोजकैः ।
भ्रातृभिः श्वशुरैः पुत्रैरुपपन्नो महारथैः ॥ ९
धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः ।
अनृशंसो वदान्यश्च ह्रीमान्सत्यपराक्रमः ॥ १०
बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः ।
तं सर्वगुणसंपन्नं समिद्धमिव पावकम् ॥ ११
तपन्तमिव को मन्दः पतिष्यति पतंगवत् ।
पाण्डवाग्निमनावार्यं मुमूर्षुर्मूढचेतनः ॥ १२
तनुरुच्चः शिखी राजा शुद्धजाम्बूनदप्रभः ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ १३
तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत ।
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् ॥ १४
एषा मे परमा शान्तिर्यया शाम्यति मे मनः ।
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे ॥ १५
न तु नः शिक्षमाणानामुपेक्षेत युधिष्ठिरः ।
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम् ॥ १६ C. 5. 2120 B. 5. 52. 16 K. 5. 53. 16

इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

8 K5 om. 8 (cf. v l 1) — a) D1.2 यशः° (for मन°) — b) G2 4 M1 (inf lin) बल° (for लक्ष्मी°) D8 D1 M1.2 3 (inf lin as in text) 5 °वर्चमा, T2 M4 °वर्चस — d) D1 धर्मपुत्रो युधिष्ठिर

9 K5 om. 9 (cf v.l. 1) — a) K1 D1 T G सु(G4 सं)प्रमत्रैः (T2 °त्र); M सु(M3 स)संपन्नै — b) K1 D8 युज्य, K4 Dn D2-8 G3 युद्ध-, B1 2 3 D5 D10 युग्य-, B3 4 D1 T2 योग्य, Ca d s योज्य- (as in text) — c) K4 B Dn D5 D2-8 वीरैर् (B3 सर्वैर्), D8 घोरैर्, T1 G1 3 मित्रैर् (for पुत्रैर्) D7 10 शूरैश्च भ्रातृभि पुत्रैर् — d) D1 T1 G1 4 उपपन्नैर्

10 K5 om. 10 (cf v.l 1) — b) D2 मित्रभृत्यै, D7 नैपुण्येन, Ca d s नैभृत्येन (as in text) — d) D2 धी°, T1 G1.4.5 श्री° (for ह्री°)

11 K5 om. 11 (cf. v l 1) — a) S (except M2) श्रुतात्मा (for कृ°)

12 K5 om. 12 (cf. v l 1) — a) K1 एव, K4 B2 4 अग्नि (for इव) T2 मर्त्य (for मन्द°) — d) K4 B2 4 D (except D7 10, D9 missing) नष्ट° (for मूढ°)

13 =(var) 5 36 47 (q v) K5 om 13 (cf. v l 1) — a) Dn D5m तनुरुद्ध, Ca d np तनुरुच्च (as in text) — b) K1.4 B4 D (D9 missing) Ca d मिथ्योपचरितो मया, T2 जांबूनदसमप्रभ

14 K5 om 14 (cf. v l 1) — a) B3 5 नैव युद्ध (for तैरयुद्ध)

15 K5 om 15 (cf v.l 1) — a) T1 G1 च परा (for परमा) K4 B2 4 Dn D5 D2-6 8 बुद्धि°, D1 शक्ति° (for शान्ति) D7 10 इयमेव परा शांति, T2 एवमेषा परा शाति, M2 एषा तथा परा शाति — b) D5 D2 7 10 T2 G3 5 यथा (for यया) D1 T2 शाम्येत S (except G2-4) मति° (for मन) — B5 om. 15c-16a — c) K1 D8 यदिदं युद्धम् — d) K1 T2 G3 शात्या, T1 G1 5 गत्वा, G2 M शात्या (for शान्त्यै) S (except G4) यतेमहि

16 K5 B5 om 16 (cf. v.l 1, 15) — a) D5 2 D6 G1.2 न तु न, D7 न पुन K1 Ca d शिष्यमाणानां, K4 B (B5 om) D (except D1, D9 missing) क्लिश्यमानाना (B1-3 °मानान्वै), G3 क्षममाणानां, G4 शाम्य°, C5 शिक्ष° (as in text) T1 नतु निरीक्षमाणानां — c) B2 D2 S Cd.8 जुगुप्सते, Ca as in text D3 4 च, D7 स्व (for ह्य) — d) D2 G3 ममेव, all comm मामेव (as in text)

Colophon missing in K2 3 D9, K5 D8 om it. — *Sub-parvan* K1 4 B Dn D5 D1 2-7 10 संजययान, T1 G1 M संजयप्रतियान — *Adhy name* M (except M1) धर्मपुत्रप्रशसा — *Adhy no* (figures, words or both) K1 53, D5 52, D6 49, D7 54, S 55 (M2 3 5 56) — *S'loka no* Dn D5 16.

## 53

☞ This adhy is missing in K2 3 5 D9 (cf v l 5 41 1, 32 15, 52 1, 50 59) G5 transp adhy 52 and 53

1 G5 om 1-2 — a) K4 भाव°, G2 क्रुद्ध°, G3 कृत्स्न° (for क्षत्र°)

2 G5 om 2 (cf v l 1) — b) K1 4 D5 D2 7 10

## ५३

C 5. 2121
B. 5. 54 1
K. 5. 54 1

संजय उवाच ।
एवमेतन्महाराज यथा वदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ १
इदं तु नाभिजानामि तव धीरस्य नित्यशः ।
यत्पुत्रवशमागच्छेः सत्त्वज्ञः सव्यसाचिनः ॥ २
नैष कालो महाराज तव शश्वत्कृतागसः ।
त्वया ह्येवादितः पार्था निकृता भरतर्षभ ॥ ३
पिता श्रेष्ठः सुहृद्यश्च सम्यक्प्रणिहितात्मवान् ।
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ॥ ४
इदं जितमिदं लब्धमिति श्रुत्वा पराजितान् ।
द्यूतकाले महाराज स्मयसे स्म कुमारवत् ॥ ५
परुषाण्युच्यमानान्स्म पुरा पार्थानुपेक्षसे ।
कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ॥ ६
पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः ।
अथ वीरैर्जितां भूमिमखिलां प्रत्यपद्यथाः ॥ ७
बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता ।
मयेदं कृतमित्येव मन्यसे राजसत्तम ॥ ८
ग्रस्तान्गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि ।
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ ९
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् ।
पाण्डवेषु वनं राजन्प्रव्रजत्सु पुनः पुनः ॥ १०
प्रवर्षतः शरव्रातानर्जुनस्य शितान्बहून् ।
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ ११
अस्यतां फल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
केशवः सर्वभूतानां चक्राणां च सुदर्शनम् ॥ १२
वानरो रोचमानश्च केतुः केतुमतां वरः ।

---

वीर° (for धीर°). D8 D5 6 8 धीमत., D1 निश्चय, T1 G1 निर्णय (for नित्यश.) — c) B (except B8) Dn1 D8 4 य (for यत्) T G1.2 M (except M1) °शतम् (for °वशम्) D1 आपन्नः, D8 अन्विच्छे., D8 S (G6 om.) आगच्छेत् (T1 °च्छत्, M8 °च्छे) — d) K4 B8 D (except D6 8, D9 missing) तत्त्वज्ञ, S (G6 om.) सत्त्वस्य D7 T2 G1.2 M2 सव्यसाचिन

3 a) D1 G8 नैव, C8 नैष (as in text). G6 एव॰ मेतन्महाराज — b) D2 तावकाश्च कृता° C8 cites शश्वत् (as in text) — c) S अर्दि(G8 °र्थि)ता (for आदित°) K1 पार्थौ. — d) K1 निकृतो, Dn1 D8 4 वञ्चिता (? gloss), S (except G2 M6) निकृत्या (for निकृता) — After 3, S ins

333* स्वीकृतास्तैर्जनपदाः कुरवस्ते सजाङ्गलाः ।
कथ वीरैर्जितां भूमिमखिला प्रतिपद्यथा° ।

[ =(var.) 7 — (L 1) G3–4 ते (for तैर्) — (L 2) G6 प्रतिपद्यते ]

4 a) K1 D1.7 10 T G3 5 M (except M2) ज्येष्ठ° (for श्रेष्ठ) D8 G5 सुहृच्चास्य; D2 गुरुर्यस्य, T1 सुहृदश्च. — c) K1 S स्व(T G सु)मत (for हि हित)

5 b) S °जित (G4 °जयं) (for °जितान्) — After 5, T G (except G2) read 10.

6 a) K1 D7.10 तान्, K4 D5–6 स्व, B Dn D8 D8 च, T1 G1 4.5 तु; T2 ते (for स्म). — c) D1 राज्यं कृत्स्न (by transp.) M (except M1) इह (for इति)

7 After 7ab, D5 (marg.) 8 ins.

334* प्रार्थयन्ति महायुद्धे नानुबन्धमवेक्षसे ।

— D2 transp 7cd and 8ab. — c) K1 पृथक्; S कथं (for अथ) D2 वीर्यार्जिताम् K4 B D (except D7.10, D9 missing) उर्वीम् (for भूमिम्) — d) D5 S (except T2 G1 2) प्रति° (for प्रत्य°)

8 D2 transp. 7cd and 8ab. — a) D1 S (except T2 G1 2 4) °वीर्यजिता — c) K4 D1–3 7 एव (for एव) — d) G2.3 साधु° (for राज°)

9 G4 (hapl.) om. 9 — c) K4 पुरा (for पुन°)

10 T G (except G2) read 10 after 5 — c) K4 B2 D1–4 T2 G2–4 वने (for वन)

11 a) K4 शरजालान् — b) K4 D10 (sup. lin. शरान्) सितान्, B8 तथा (for शितान्)

12 a) Some N MSS. फाल्गुन S C8 पाण्डव(C8 °व°)श्रेष्ठो — b) K1 D8 4 8 गांडिव, C8 as in text. — d) K4 B1 2 5 D (except D1 2 7 10, D9 missing) आयुधाना, T2 अस्त्राणां च (for चक्राणा च)

13 a) D5 8 तु (for च) — c) G4 वहतो; G6 सुरथो (for सरथो) — d) B (except B4) Dn D6 8 बहून्; G1 युधि (for वहन्) G8 4 वाहा° श्वेतहया रणे (G4 रथे) — e) B4 D5 ते, D2 T2 G2 8 M चो, T1 G5 वै; G1 4 यो (for नो) S राज्ञ° (for राजन्) — f) D1 6 ध्रुवोदित

एवमेतानि सरथो वहञ्श्वेतहयो रणे ।
क्षपयिष्यति नो राजन्कालचक्रमिवोद्यतम् ॥ १३
तस्याद्य वसुधा राजन्निखिला भरतर्षभ ।
यस्य भीमार्जुनौ योधौ स राजा राजसत्तम ॥ १४
तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ।
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः ॥ १५
न हि भीमभयाद्भीता लप्स्यन्ते विजयं विभो ।
तव पुत्रा महाराज राजानश्चानुसारिणः ॥ १६
मत्स्यास्त्वामद्य नार्चन्ति पाञ्चालाश्च सकेकयाः ।
शाल्वेयाः शूरसेनाश्च सर्वे त्वामवजानते ।
पार्थं ह्येते गताः सर्वे वीर्यज्ञास्तस्य धीमतः ॥ १७
अनर्हानेव तु वधे धर्मयुक्तान्विकर्मणा ।
सर्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः ।
तव पुत्रो महाराज नात्र शोचितुमर्हसि ॥ १८
द्यूतकाले मया चोक्तं विदुरेण च धीमता ।
यदिदं ते विलपितं पाण्डवान्प्रति भारत ।
अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ १९

C. 5. 2142
B. 5. 54. 22
K. 5. 54. 22

इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

14 $^{b}$) D5 T2 G4 M (except M1) अखिला (for नि°) — $^{d}$) K1 B5 Dn2 D5 D8–6 8 10 °सत्तम

15 $^{c}$) M दुर्योधनमुखान् D7 तात, D10 सर्वे (for दृष्ट्वा)

16 $^{a}$) T1 G1.2 5 °बलाद् (for °भयाद्) K4 B2 5 Dn D5 D8–6 न भीमार्जुनयोर्भीता — $^{b}$) B1 3 4 Dn D8–7 10 लप्स्यति, T G लभते B5 T2 G3 4 प्रभो, T1 G1 5 कथ (for विभो) — $^{c}$) S (except G5) °बाहो (for °राज) — $^{d}$) D2 10 (m as in text) °चारिण (for °सारिण)

17 $^{a}$) D1 2 तात, G2 एव (for अद्य) D8 नार्छति, G3 M नेर्च्छति — $^{b}$) A few MSS पचाला Some N MSS कैकया B4 मद्रके° (for च सके°) — $^{c}$) Some MSS साल्वेया B8 शूरसेनाश्च सर्वेपा — $^{d}$) K1 सर्वे ते त्वामुपेक्षते, B8 शाल्वेया अवजानते, D10 सर्वे ते त्वावजा°, S सर्वे प्राच्याश्च मारिष — $^{e}$) D7 10 transp ह्येते and सर्वे S एव (for ह्येते) T1 G1.5 आगता° (for गता°) — After 17, S reads $18^{ef}$, while N (K2 8 5 D9 missing) ins

335* भक्त्या ह्यस्य विरुध्यन्ते तव पुत्रै सदैव ते ।

[ Dn1 D51 D8 4 6 भक्ता D51 तस्य K1 D7 10 दुग स्मनि°, D1 महात्मै (for मत्रैव ते) B5 Dn1 D2 8 6 तै° (for ते) ]

18 $^{a}$) D1 अर्हानेकश्च याध्येयो, D2 अर्हानेव तु राधेयो, D7 तानेव वुवुधे यो वै, D10 अनर्हो नैव वुवुधे, S अनर्हो येन वध्येत (T1 याध्येत, G2 बुध्येत, G3 5 युध्येत) — $^{b}$) S धर्मयुक्तो विचक्षण — After $18^{ab}$, K4 B D (except D1, D2 marg *sec m*, D9 missing) ins

336* योऽक्लेशयत्पाण्डुपुत्रान्यो विद्वेष्ट्यधुनापि वै ।

— $^{c}$) S सर्वैरुपायैर्निग्राह्य — $^{d}$) D1 2 7 T2 G4 M1 (*inf lin*) 3 4 (*inf lin*) सोधम, T1 G1–3 M1 8–3 सोधर्म्य (for सानुग) — After $18^{cd}$, S ins

337* अपरोक्ष महाराज साक्षाच्चैन ब्रवीम्यहम् ।

[ M एनद् (for एन) ]

— S reads $18^{ef}$ after 17 — $^{e}$) K1 D5 6 महाराजन् S पुत्रस्य तव दोषेण — $^{f}$) K4 5 B Dn D5 D2–8 नानु°, D1.10 नात, G5 नाव° (for नात्र)

19 $^{a}$) K4 D8 4 G8 प्रोक्त (for चोक्त) — $^{b}$) S तथा भीष्मेण धी° — $^{c}$) K4 Dn2 D1 8 G1 अनीशेनैव, D7 °शे तव, T2 G2–5 °शे त्वयि Ca d cite अनीशेन (as in text) — $^{f}$) D2 एव (for एतन्)

Colophon missing in K2 8 D9, K5 om it — *Sub-parvan* K1 4 B D संजययान (D2 यानसंधि, D9 missing), T1 G1–4 M संजयप्रतियान — *Adhy name* M पाडवप्रशसन — *Adhy no* (figures, words or both) K1 G5 54, D5 53, D6 50, D7 55, T G1–4 M 56 (M2–5 57) — *S'loka no* Dn 22, D8 38, G5 23

## 54

☞ This adhy is missing in K2 8 D9 (cf v l. 5 41 1, 32 15, 50 59) K5 om 1–$25^{ab}$ (cf v l 5 52 1)

1 G2 4 M1–3 5 om $1^{cd}$, T2 reads it in marg — $^{a}$) T G1 5 च (for स) K1 D52 परा (for परान्) K1 B3 4 Dn D5 D5 6 8 T2 G8 जेतुं (for राजन्) M4

## ५४

C. 5. 2143
B. 5. 55. 1
K. 5. 55. 1

दुर्योधन उवाच ।

न भेतव्यं महाराज न शोच्या भवता वयम् ।
समर्थाः स्म परान्राजन्विजेतुं समरे विभो ॥ १
वनं प्रव्राजितान्पार्थान्यदायान्मधुसूदनः ।
महता बलचक्रेण परराष्ट्रावमर्दिना ॥ २
केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः ।
राजानश्चान्वयुः पार्थान्बहवोऽन्येऽनुयायिनः ॥ ३
इन्द्रप्रस्थस्य चादूरात्समाजग्मुर्महारथाः ।
व्यगर्हयंश्च संगम्य भवन्तं कुरुभिः सह ॥ ४
ते युधिष्ठिरमासीनमजिनैः प्रतिवासितम् ।
कृष्णप्रधानाः संहत्य पर्युपासन्त भारत ॥ ५
प्रत्यादानं च राज्यस्य कार्यमूचुर्नराधिपाः ।
भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः ॥ ६
श्रुत्वा चैतन्मयोक्तास्तु भीष्मद्रोणकृपास्तदा ।
ज्ञातिक्षयभयाद्राजन्भीतेन भरतर्षभ ॥ ७
न ते स्थास्यन्ति समये पाण्डवा इति मे मतिः ।
समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ॥ ८
ऋते च विदुरं सर्वे यूयं वध्या महात्मनः ।
धृतराष्ट्रश्च धर्मज्ञो न वध्यः कुरुसत्तमः ॥ ९
समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः ।
एकराज्यं कुरूणां स चिकीर्षति युधिष्ठिरे ॥ १०
तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान्वा संपरित्यज्य प्रतियुध्यामहे परान् ॥ ११
प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः ।
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः ॥ १२
विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः ॥ १३
प्रणिपाते न दोषोऽस्ति बन्धूनां शाश्वतीः समाः ।

---

महाबाहो (for परान्राजन्) — d) K1 राजेंद्र; B2 4 Dn Ds D5.6 8 G8 बलिन, T1 राजंश्च (for विजेतु). D1 वय, D2 प्रभो (for विभो)

2 a) K4 B D (except D1 2, D9 missing) G3 4 वने K1 4 B1.2 5 D2–5 8 G8 प्रव्रजितान् — c) D2 महता च बलौघेन — d) K1 परराष्ट्रवि°.

3 a) A few MSS कैकया or कैकेया — b) T1 G1 वीर्यवान्, T2 M पार्थिव (for पार्षत.) — G5 om. 3cd — c) G8 आययु (for अन्वयु) D10 पार्थं, M1 2 5 (inf lin) पश्चाद् (for पार्थान्) — d) D1 2 ये, G4 हि (for अन्ये)

4 c) K1 विगर्हन्नप्यसंगम्य; D1 2 10 S वि(G1 2 व्य)गर्हयंत (D1 °त) सं°

5 a) D5.6 8 G3 युधिष्ठिर समासीनं — b) T2 अनुजै (for अजिनै) S परिवारित — c) G5 संगम्य; M2 संगत्य, Ca d संहत्य (as in text) — d) K1 B5 Dn1 Ds T1 G (except G3) पर्युपासत

6 a) K1 °दानेन, D1 °दानस्य (for °दानं च).

7 a) K4 B Dn Ds D2–6 M4 चैव, D1 एवैतन्, D2 एव तु, G चैते (for चैतन्) D1 2 ते (for तु) — b) K1 B5 D1 2 5 6 8 T2 G2 8 °कृपास्तथा, G4 °कृपादय°

8 D1 om 8ab — a) B Ds1 न न°, Dn D6 तत, Ds2 न तु, D2 नाव°, T G4 न चेत्, G1 3.5 M न च, G2 न हि (for न ते). Ds D3–5 8 T2 समरे (for °ये) — G2 om 8cd.

9 D10 om. 9a–10a — a) Dn1 चै, G2 हि (for च). K4 B D (except D1 7, D10 om, D9 missing) G3 M2 5 विदुरात् — b) B2–4 Dn Ds मता मम, D7 8 T G1.5 महात्मना (T2 °ना) (for महात्मन) — c) K4 B D (except D1 2.7; D10 om, D9 missing) M3 तु (for च) — d) B2 8 D2 5.6 8 T1 G3 5 M3–5 °सत्तम

10 D10 om 10a (cf v.l 9) — a) D7 7 G2 हि (for च). D2 T G1 2 4 5 M न कृत्स्न (by transp), D7 न° सर्वं. G8 समुच्छेद तत° कृत्वा — b) G8 कृत्स्न (for कृत्वा). D2 तत्र (for तात) — c) B7 5 Ds1 ऐक° (for एक°) K1 Ds2 D10 च, D2 G3 हि, G4 स, M1 स्व (inf. lin as in text) (for स)

11 b) M (except M1) प्रणिपात, Ca d as in text — d) T2 G2 3 °योत्स्यामहे

12 a) T1 नियते, T2 G5 नियत — b) G4 ह्यस्माक तु परा°

13 c) K4 D3 4 पांडवै. सर्व°, G1 पांडवा सर्वे — d) T1 G1 दुर्धूतेन (for स्वज°)

14 b) K4 B D (except D1 8 10, D9 missing) सधर्म. (for बन्धूनां) Cs cites सधि° — c) T1 G (except G2) चैव (for स्वेव) — d) K4 B D (except

तरं त्वेव शोचामि प्रज्ञानेत्रं जनेश्वरम् ।
त्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकम् ॥ १४
तं हि तव पुत्रैश्च परेषामवरोधनम् ।
त्प्रियार्थं पुरैवैतद्विदितं ते नरोत्तम ॥ १५
राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः ।
रं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः ॥ १६
तो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ।
त्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम् ॥१७
मिद्रुग्धाः परे चेन्नो न भेतव्यं परंतप ।
समर्थाः परे जेतुमस्मान्युधि जनेश्वर ॥ १८
कैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान् ।
गच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः ॥ १९
रैकेन हि भीष्मेण विजिताः सर्वपार्थिवाः ।
ते पितर्यभिक्रुद्धो रथेनैकेन भारत ॥ २०
घान सुबहूंस्तेषां संरब्धः कुरुसत्तमः ।
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् ॥ २१
स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे ।
परान्विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ ।
इत्येषां निश्चयो ह्यासीत्तत्कालममितौजसाम् ॥ २२
पुरा परेषां पृथिवी कृत्स्नासीद्वशवर्तिनी ।
अस्मान्पुनरमी नाद्य समर्था जेतुमाहवे ।
छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः ॥ २३
असत्संस्था च पृथिवी वर्तते भरतर्षभ ।
एकार्थाः सुखदुःखेषु मयानीताश्च पार्थिवाः ॥ २४
अप्यग्निं प्रविशेयुस्ते समुद्रं वा परंतप ।
मदर्थे पार्थिवाः सर्वे तद्विद्धि कुरुसत्तम ॥ २५
उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम् ।
विलपन्तं बहुविधं भीतं परविकत्थने ॥ २६
एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान्प्रति ।
आत्मानं मन्यते सर्वो व्येतु ते भयमागतम् ॥ २७ C. 5. 2170 B. 5. 55. 23 K. 5. 55. 23

---

D1. 10, D9 missing) जनाधिप, T2 नरेश्वर (for जने°) — f) S अनुत्तमम् (for अनन्तकम्) — After 5. 56. 27, G3 repeats 14–42ab, with Dn readings!!

15 b) T2 उपरोधन, G3 आपराध°, M3 अपरोध° — c) K1 D10m इंद्रियार्थं, T1 G (except G1) M5 त्वत्प्रियार्थं K1 D1. 2. 7. 10 पुरा चै(K1 वै)तद्, Dn D3 पुरे वै(Dn1 वै)वद्; S परै(G3 वध)श्चैव — d) K1 D7. 10 नृपोत्तम; D1 नराधिप, S जनेश्वर (for नरो°)

16 c) K1 D1. 7 M2. 3 प्रतिहरिष्यति; T2 परिवारयिष्यति (hypermetric) — d) D3. 4. 8 T2 G3–5 कुलस्छेदेन

17 c) G5 मा चाहुर् (for मत्वा मा)

18 a) D1 द्रोणधारो वै, G3 अभिरुद्धा, G4 °क्रुद्धा, G5 द्रुह्य°, all comm °द्रुग्धा (as in text). G3 च केचिन्न, G4 परे चैव, G5 परश्चैव; Ca परे चेन्न (as in text). Cd cites चेन्न (as in text) — b) D1 नरेश्वर (for पर°) — d) D7 भुवि (for युधि) K1 D7. 10 G1 नरेश्वर, K4 B Dn D3 D8–6. 8. 10m समास्थि(D8. 4 °श्रि)तान्, D1 परतप (for जने°)

19 a) K1 B5 D7. 10 T2 G5 स्म (for स्मो) — b) D4 reads पांडवान्प्रति, in addition to सर्वपार्थिवान्

20 a) T G1–3. 5 M अपि (for हि) G1 पुनरेकेन भीष्मेण — c) K4 B (B1 marg.) Dn D3 D5–6 अति-, D2. 7 G3 अपि (for अभि)

21 b) D6 G5 M2 °सत्तम

22 d) G3 M1. 3. 4 व्यैतु; G1 व्यपेतु (for व्येतु) — e) D10 एतेषां (for इत्येषां) — f) K4 B D (except D7. 8. 10, D9 missing) तत्कालेमिततेजसा, T1 G1. 5 तत्कालमतितेजसा, G4 तस्मिन्कालेमितौजसां

23 c) D1 G3 तस्मात् (for अस्मान्) T G (except G2) इमे (for अमी) — ef) T1 भिन्न°, M1 हीन°, Ca छिन्न° (as in text) T2 पर वै वीर्यहीनाश्च पार्थां सभिन्नपक्षका

24 M1 om. 24 — d) B Dn D3 D4–6 समानीताश्च Ca cites समानीता, C3 मया आनीता M (M1 om.) बांधवा (for पार्थिवा)

25 K5 resumes from 25cd (cf. v.l. 5. 52. 1) — a) T1 G1. 5 अप्यग्नीन् — c) B D (except D7. 10, D9 missing) G1 मदर्थं — d) D3 कुरुनदन, D1. 7. 10 S भरतर्षभ (for कुरु°)

26 a) D10 G5 अपि (for इव) D1 G3 M त्वा (for त्वां) — b) D7 हसति स्म (for प्रहसन्ति) K1 M1 इव, B3 च, D7. 8 G3 तु (for इह) D1. 3. 4 दुःखिता — c) D7. 10 प्रलपत — d) Dn1 G3 M °विकत्यनै, C3 as in text Ca d cite परेषा विकत्थने

27 a) D1 एव (for एषां) D1. 2 om. हि K5 D1. 2 राजन् (for राज्ञा) — b) Dn D7 T1 G1. 2 समर्थ, D1 M

C. 5. 2170
B. 5. 55 29
K. 5. 55 29

सर्वां समग्रां सेनां मे वासवोऽपि न शक्नुयात् ।
हन्तुमक्षय्यरूपेयं ब्रह्मणापि स्वयंभुवा ॥ २८
युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान्स याचति ।
भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे प्रभो ॥ २९
समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ।
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्थ भारत ॥ ३०
मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत्कश्चिदतिक्रान्तो भविता न च कश्चन ॥ ३१
युक्तो दुःखोचितश्चाहं विद्यापारगतस्तथा ।
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ॥ ३२
दुर्योधनसमो नास्ति गदायामिति निश्चयः ।
संकर्षणस्य भद्रं ते यत्तदैनमुपावसम् ॥ ३३
युद्धे संकर्षणसमो बलेनाभ्यधिको भुवि ।
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ॥ ३४
एकं प्रहारं यं दद्यां भीमाय रुषितो नृप ।
स एवैनं नयेद्घोरं क्षिप्रं वैवस्वतक्षयम् ॥ ३५
इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् ।
सुचिरं प्रार्थितो ह्येष मम नित्यं मनोरथः ॥ ३६
गदया निहतो ह्याजौ मम पार्थो वृकोदरः ।
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ॥ ३७
गदाप्रहाराभिहतो हिमवानपि पर्वतः ।
सकृन्मया विशीर्येत गिरिः शतसहस्रधा ॥ ३८
स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा ।
दुर्योधनसमो नास्ति गदायामिति निश्चयः ॥ ३९
तत्ते वृकोदरमयं भयं व्येतु महाहवे ।
व्यपनेष्याम्यहं ह्येनं मा राजन्विमना भव ॥ ४०

---

समर्थो.; D2 G4 समर्थान् — d) G4 M1 3 4 व्येतु K1 5 D1 भयमुत्तम, D2 7 10 मानसो ज्वर°; S मानस भयम् (for भयमागतम्)

28 a) K4 B Dn Ds D2 7 8 (by corr) 10m जेतु (for सर्वां) D7 समर्थां, D8 (before corr) G1 संग्राम° (for समग्रां) D8 येनास्मि (for सेनां मे) — c) D1 2 S °रूपा (D2 °रूपा) हि (for °रूपेय) All comm. cite अक्षय्यरूपा (as in text) — d) G1 4.5 हि (for अपि) K4 B Dn Ds D8–9 8 ब्रह्मणोपि स्वयंभुवः

29 a) S युधिष्ठिरोपि तज्ज्ञात्वा (T2 तच्छ्रुत्वा). — b) K1 B3 4 Dn D1 7 स्म, K5 D2 S च, D10 तु (for स) K1 5 B3 5 D8 10 T1 G3 याचते — c) K1.5 D7 10 अय (for हि) — d) K1 5 D7 10 एव, T2 G2 3 चापि (for चैव) K4 B D (except D1 7 10, D9 missing) विभो (for प्रभो)

30 d) K4 B D (except D1 2 7, D9 missing) वेत्सि (for वेत्थ)

31 K1 D1 T2 G4 om (hapl) 31cd — c) K5 D7 नास्ति (for नासीत्). — d) K5 D7 10 वा न (for न च)

32 a) K4 B Dn D2–7 दु खोषित (B8 दु खे जित), Ca d s दु खोचित° (as in text) — b) K1 5 D2 7 10 विद्याया (K1 °यां) पारगस्, Dn2 D1 S विद्यापार गतस् T1 G3 4 M4 तदा (for तथा) — c) S तेभ्यश्च (G5 युद्धे च) (for नान्येभ्यो) D2 तस्माद्भीमान्न चान्येभ्यो — d) K1.5 ते (for मे) D1 विद्यते मे भय क्वचित्

33 33ab = 39cd — a) D3 4 संकर्षणश्च; Ca d as in text T G (except G1) भवने (for भद्रं ते). — d) D1 7 यत्तदेन (cf Cs below), D2 यत्र चैनं, D3 4 यत्तदेव; D10 यत्र दैन्य, S तत्र चैन, Ca.d यत्तदैन (as in text) Cs cites यत्, तत् and एनं D3 D2 7 Cd 8 °विद्य, D10 °गतं, Ca °वस (as in text). K1 Dn1 यत्तदेनं (Dn1 °दस्त) पुरावस, K5 युद्धेन व पुरा कृत (s10)

34 b) T1 बले वा, G3 5 M बले च (for बलेन) K1 5 D7 10 अस्म्यधिको, Dn1 Ds अस्त्य°, D1 अस्म्यतुलो; M3 4 अप्यधिको (for अभ्यधिको)

35 a) T G चेत् (for य) — c) T G तदै(G1 तथै)वैन (G4 तत एनं) (for स एवैन) K4 B2 D (except D2 10) G4 घोर (for घोर)

36 G5 M1 om (? hapl) 36cd — d) D1 राजन् (for नित्य) D10 (sup lin as in text) S वृकोदर (for मनो°)

37 G3 (hapl) om. 37ab, D2 reads it in marg — a) D7 राजन्, G5 अप्याजौ (for ह्याजौ) — b) K4 B D (D9 missing) मया (for मम) — c) D1 2 वसुधा (for पृथिवीं) — d) K5 गतासु° (? gloss), Ca परासु° (as in text)

38 b) T2 वज्रिणा (for हिमवान्) K1 5 B1.3 5 D1 2 8 T2 G1 2 M5 इव (for अपि). — c) K4 5 B D (D9 missing) T2 G1 2 4 विदीर्येत

39 a) S °जानीते (for °जानाति) — 39cd = 33ab.

तस्मिन्मया हते क्षिप्रमर्जुनं बहवो रथाः ।
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ॥ ४१
भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा ।
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः ॥ ४२
एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान् ।
समस्तास्तु क्षणेनैतान्नेष्यन्ति यमसादनम् ॥ ४३
समग्रा पार्थिवी सेना पार्थमेकं धनंजयम् ।
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते ॥ ४४
शरव्रातैस्तु भीष्मेण शतशोऽथ सहस्रशः ।
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ॥ ४५
पितामहो हि गाङ्गेयः शंतनोरधि भारत ।
ब्रह्मर्षिसदृशो जज्ञे देवैरपि दुरुत्सहः ।
पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ॥ ४६
ब्रह्मर्षेश्च भरद्वाजाद्द्रोण्यां द्रोणो व्यजायत ।
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ॥ ४७
कृपश्चाचार्यमुख्योऽयं महर्षेर्गौतमादपि ।
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः ॥ ४८
अयोनिजं त्रयं ह्येतत्पिता माता च मातुलः ।
अश्वत्थाम्नो महाराज स च शूरः स्थितो मम ॥ ४९
सर्वे एते महाराज देवकल्पा महारथाः ।
शक्रस्यापि व्यथां कुर्युः संयुगे भरतर्षभ ॥ ५०
भीष्मद्रोणकृपाणां च तुल्यः कर्णो मतो मम ।
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ॥ ५१
कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ।

C. 5. 2197
B 5. 55. 54
K. 5 55. 55

---

40 $^{c}$) D2 3 T1 G1 °कृत, T2 °भय (for °मय) — $^{b}$) M स्येतु (for व्येतु) B8 व्येतु ते भयमाहवे, T2 व्येतु राजन्महाहवे — $^{c}$) K5 M1 ह्येतन्, G2 सर्वं, G8 शोक (for ह्येन)

41 $^{a}$) D5 अस्मिन् (for तस्मिन्) D1 2 हते मया (by transp), S महाहवे

42 $^{c}$) D1 °ज्योतिषेश्वर°

43 $^{c}$) K4 B Dn D5 D8-7 10 Ca समेता, D1 2 T2 G2 M2 समस्तान्, D8 समेतान् (for समस्ता) S एव (for एतान्) — $^{d}$) D1 यममन्दिर

44 $^{a}$) K1 समस्ता; K5 D1 7 समर्था (for समग्रा) K1 (before corr) D5 पृथिवी (for पार्थिवी) S समर्था (G4 सामात्या, M2 समस्ता) पाद्मवीं सेना — $^{b}$) D5 6 8 पार्थिवानां, S हरिकेतु (for पार्थमेक) D1 2 10 m प्रबाधितु (for धन°) — $^{c}$) S (except M1 2 5) तस्माद् D1. 2 8 T G अशक्तो

45 $^{b}$) K1 5 शतशो विचितो मृधा, K4 Dn2 D8 4 (m as in text) 7 10 °शो निचितोवश, D1 2 °शो निचितोगश; T1 G M1 शतशो (G1 दशाप्या) वृण्वता दिश, T2 M2-5 °शो विजि(T2 °घ्)ता दिश Ca cites निचित, Ca d s अगश — $^{d}$) D2 पार्थो गता (by transp)

46 $^{a}$) K4 B Dn D5 D1 2-6 8 10 T2 G3 4 M2 अपि, D2 अथ (for हि) — $^{b}$) Some MSS and Ca s शान्तनोर्, Cd as in text K1. 5 D1. 2 8 अपि (K1 अपि च); D7 10 इति, Ca d s अधि (as in text) S शतनो रथिना वर — $^{c}$) M1 ब्रह्मर्षिसदृशो — $^{d}$) K4 B (except B2) D (D9 missing) Ca सुदु॰सह (D2 दुरासह, D7 दुरासद), G2 सुदुर्जय (for दुरुत्सह°) — After 46$^{cd}$, N (K2 8 D9 missing) ins

338* न हन्ता विद्यते चापि राजन्भीष्मस्य कश्चन ।

— $^{e}$) S अपि (for हि) D1. 2 उक्त पित्रा ह्यसौ पूर्वं — $^{f}$) G2 कामतस्त्व मरि°

47 $^{a}$) D1. 7 महर्षेश्च — $^{b}$) T2 G1 2 M2 5 अपि (for वि) K4 B Dn D5 D2-6 द्रोणो द्रोण्यामजायत — D1 (hapl.) om 47$^{d}$–50$^{a}$

48 D1 om 48 (cf v.l. 47) — $^{a}$) K5 कृपाचार्यो मुख्योय च, G8 कृपाचार्यश्च मुख्योय — $^{b}$) K5 D10 S (except T2 G1. 2) ब्रह्मर्षेर् (for महर्षेर्) — $^{c}$) D2 °स्तम्भव, G5 °स्तम्भवत् G4 धी° (for श्री°) — $^{d}$) G8 M3 न वध्य (for अवध्य)

49 D1 om 49 (cf. v l. 47) — $^{a}$) G2-4 तु (for हि) K4 B Dn D5 D2-6 8 °जास्त्रयो ह्येते (D2 ह्यत्र) — $^{b}$) G3 पुत्रो (for माता) G2-4 M1 3 4 अथ (for च) — $^{c}$) K1 B2 D3 S (except G3 M2-4) अश्वत्थामा

50 D1 om 50$^{a}$ (cf. v.l 47) — $^{b}$) D1 ब्रह्म° (for देव°) — After 50, N (K2 8 D9 missing) ins

339* नैतेषामर्जुन शक्त एकैकं प्रति वीक्षितुम् ।
सहितास्तु नरव्याघ्रा हनिष्यन्ति धनजयम् ।

51 G2 4 M om 51 — $^{b}$) Dn1 D5 4 6 G3 कर्णस्तुल्यो (by transp) — $^{c}$) K4 Dn1 D1 तु (for च)

52 $^{ab}$) D5 कवचे (for रुचिरे) D6 G4 5 वास्ता, D8 आस्ता (for चास्ता) K1 रुचिते शुभे; G8 रुचिरप्रभे K4 Dn1 D2 4 S (except T1 G1) transp रुचिरे and सहजे — $^{c}$) B3 4 Dn2 D7 8 शास्यर्थं, G5 M शास्यर्थे (M1

5. 2198 / 5 55 55 / K. 5. 55 55

ते शच्यर्थे महेन्द्रेण याचितः स परंतपः ।
अमोघया महाराज शक्त्या परमभीमया ॥ ५२
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनंजयः ।
विजयो मे ध्रुवं राजन्फलं पाणाविवाहितम् ।
अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः ॥ ५३
अह्ना ह्येकेन भीष्मोऽयमयुतं हन्ति भारत ।
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि ॥ ५४
संशप्तानि च वृन्दानि क्षत्रियाणां परंतप ।
अर्जुनं वयमस्मान्वा धनंजय इति स्म ह ॥ ५५
तांश्चालमिति मन्यन्ते सव्यसाचिवधे विभो ।
पार्थिवाः स भवान्राजन्नकस्माद्व्यथते कथम् ॥ ५६
भीमसेने च निहते कोऽन्यो युध्येत भारत ।
परेषां तन्ममाचक्ष्व यदि वेत्थ परंतप ॥ ५७
पञ्च ते भ्रातरः सर्वे धृष्टद्युम्नोऽथ सात्यकिः ।
परेषां सप्त ये राजन्योधाः परमकं बलम् ॥ ५८
अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः ।
द्रौणिर्वैकर्तनः कर्णः सोमदत्तोऽथ बाह्लिकः ॥ ५९
प्राग्ज्योतिषाधिपः शल्य आवन्त्योऽथ जयद्रथः ।
दुःशासनो दुर्मुखश्च दुःसहश्च विशां पते ॥ ६०
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ।
शलो भूरिश्रवाश्चोभौ विकर्णश्च तवात्मजः ॥ ६१
अक्षौहिण्यो हि मे राजन्दशैका च समाहृताः ।

---

*inf lin* as in text) — $^{d}$) Dn1 T2 G2 परतप — $^{e}$) D10 om सफलया (? gloss) (for अमोघया) — $^{f}$) D7 T1 G (except G5) परम(G3.4 समर)भीपया

53 $^{a}$) D7 शक्त्याप°, G2 5 M (except M4) °गूढश्च, G3 शक्त्याव°, C5 as in text. — B4 om 53$^{cd}$, G2 3 om (hapl) 53$^{e}$–53$^{f}$. — $^{e}$) K4 D2–4 ध्रुवो (for ध्रुव) S (G2 3 om) महाराज (for ध्रुव राजन्) — After 53$^{cd}$, T1 G1 4 5 M (except M1) read 59$^{c}$–60$^{b}$ (for the first time), *repeating* the lines in their proper place. — $^{f}$) D1 2 युधि, G5 विद्धि (for भुवि)

54 $^{a}$) D1 S (except T1) अपि (for हि) — $^{b}$) K4 B (except B3) D (D9 missing) Cd प्रयुत (for अयुत) — $^{d}$) T1 G1 °कृपादय° (for °कृपा अपि)

55 $^{a}$) M3–5 ससक्तानि, Cd सशप्तानि (as in text) K1 5 D1.2 7 प्रवृत्तानि; T G1 2 5 च वृत्तानि (for च वृन्दानि). K4 B Dn D5 D3–6 8 10 सश(some MSS सस)प्तकानां वृदानि, G3 सशप्तकानि वृदानि Ca cites सशप्तकाना, C5 ससप्तकानि — $^{c}$) D5 वाय, Cd वयम् (as in text) — $^{d}$) K4 B D (except D1 2 7, D9 missing) निहन्यात्कपिकेतन°

56 $^{a}$) K4 B (except B1) Dn D3–5 त, D6 तत्, G2 M ते (for तान्). D7 10 मन्येहं (for मन्यन्ते) D2 तांश्च कालमह मन्ये Ca d 5 cite तान् अल इति मन्यते — $^{b}$) D1 °वध; Ca d 5 °वधे (as in text) K4 B3 D5 6 8 वृता, B1 2 4 5 Dn D5 D2–4 10 C5 धृता° (D10 धृतान्), D1 प्रभो (for विभो) — $^{e}$) D10 पार्थिवान्, Ca d as in text D1 सन्; D7 च (for स) S सगता (for स भवान्) K4 B D (except D7, D9 missing) तेभ्यो (for राजन्) — $^{d}$) K4 B D (except D7 8; D9 missing) ह्यकस्मात् (for अकस्मात्) K5 D8 S व्यथसे, Ca d as in text.

57 After 57, S ins

340* पाञ्चालेषु च भग्नेषु कोऽन्य° स्यातुमिहार्हति ।

58 $^{a}$) K1.5 D1 7 10 एते (for ते) — $^{b}$) D3.4 अपि (for अथ) — $^{d}$) G2 M (except M1) यौधा° K4 B Dn D5 D2–6 8 योधा° सार बलं मत (B3 महत्), D1 योध्यास्माक बल महत्

59 $^{a}$) = Gitā (Vulg) 1 7$^{a}$. K4 D3 4 G4 च (for तु) — $^{b}$) S (except T1 G1 5) °कृपा नृप — T1 G1 4 5 M (except M1) *repeat* 59$^{e}$–60$^{b}$ here (with v.l.), reading it for the first time after 53$^{cd}$. — $^{e}$) G3 द्रौणिः कर्णो विकर्णश्च — $^{d}$) T1 G1 (first time) स (for अथ).

60 T1 G1 4 5 M (except M1) *repeat* 60$^{ab}$ here (with v.l ), cf v l 59 — $^{b}$) B Dn D5 D8 T1 G1 (latter two second time) आवंत्यौ च, T1 G1.4 5 M2–5 (all first time) सिंधुराजो, T2 आवती च; G3 अवंत्येशो (for आवन्त्योऽथ) — $^{cd}$) K1 5 D7 विकर्ण° (for दुर्मुख°) B4 D2 transp दुर्मुख° and दु सह° B2 दुर्मुख° (repeated) (for दु°सह°) T2 G (except G1) M1 स (for the second च). S विविंशति (for विशा पते), cf. v l 61$^{b}$.

61 $^{a}$) T1 G1 श्रुतायुश्चाश्रुतायुश्च — $^{b}$) K5 B5 S विशा पते (for विविंशति.), cf. v l. 60$^{d}$ — $^{c}$) K4.5 B1 Dn1 D1–4 T G1.2 शल्यो (for शलो) K4 B (except B3) D (except D7 10, D9 missing) G3 चैव (for

न्यूनाः परेषां सप्तैव कस्मान्मे स्यात्पराजयः ॥ ६२
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥ ६३
गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणमात्मनश्च विशां पते ॥ ६४
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ॥ ६५
वैशंपायन उवाच ।
इत्युक्त्वा संजयं भूयः पर्यपृच्छत भारत ।
विधित्सुः प्राप्तकालानि ज्ञात्वा परपुरंजयः ॥ ६६

इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## ५५

दुर्योधन उवाच ।
अक्षौहिणीः सप्त लब्ध्वा राजभिः सह संजय ।
किं स्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ १
संजय उवाच ।
अतीव मुदितो राजन्युद्धप्रेप्सुर्युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः ॥ २
रथं तु दिव्यं कौन्तेयः सर्वा विभ्राजयन्दिशः ।
मन्त्रं जिज्ञासमानः सन्बीभत्सुः समयोजयत् ॥ ३
तमपश्याम संनद्धं मेघं विद्युत्प्रभं यथा ।
स मन्त्रान्समभिध्याय हृष्यमाणोऽभ्यभापत ॥ ४

C. 5. 2217
B. 5. 56. 4
K. 5. 56. 4

चोभौ) — $^{d}$) D2 महारथ (for तवात्मज)

62 $^{a}$) D5 अक्षौहिण्या, G1 2 अक्षोहिण्यश् K5 D1 7 10 S च, D2 [अ]स्ति (for हि) K4 D8 4 महाराज (for हि मे राजन्) G2 सति (for राजन्) — $^{b}$) D1 5 दश चैका K1 5 B3 D1.8 10 समाहिता, D7 °कृता, S समाश्रि(G4 °वृ)ता — $^{d}$) T1 G1 तस्मात्तेषां, G4 कथ मे स्यात् (for कस्मान्मे स्यात्)

63 $^{a}$) K1 हि त्रिगुणोहीन, Dn1 D5 D10 द्विगुणतो हीन, S त्रिगुणयोगेन All comm cite त्रिगुणत (as in text) — $^{b}$) K5 D1 2 साध्य (for योध्य) D2 आह (for प्राह) — $^{c}$) K4 चेद्य, T1 राजन्; C5 चेय (as in text) — $^{d}$) T1 चेयम् (for राजन्) — K5 om 63$^{d}$–64$^{b}$

64 K5 om. 64$^{ab}$ (cf. v.l 63) — $^{d}$) K4 D2 आत्मान च (for आत्मनश्च)

65 $^{a}$) T1 G1 5 अवि° (for समा°) — K5 om 65$^{c}$–66$^{b}$

66 K5 om 66$^{ab}$ (cf v l 65) K4 5 B D (except D7 10; D9 missing) G2 M1 om the ref. — $^{a}$) K1 4 D1 5 7 8 इत्युक्त T2 भीत (for भूय) — $^{c}$) K4 B D (except D1 3 4 10, D9 missing) T2 G1 2 5 विविस्तु°, K5 विद्धि न, Ca.d विधित्सु° (as in text) — $^{d}$) G1 5 राजा (for ज्ञात्वा) D2 भरतसत्तम (for पर°)

Colophon missing in K2 3 D9 — *Sub-parvan* K1 4 5 B D सजयप्रयान (D2 यानसधि, D9 missing), G1 M1 3–5 सजयप्रतियान — *Adhy name* M2–5 धृतराष्ट्रशोकापनोदन — *Adhy no* (figures, words or both) K1 55, D5 54, D6 51, D7 G5 56, T G1–4 M 57 (M2 3 5 58) — *S'loka no* Dn 69, D3 72, G5 68

### 55

☞ This adhy is missing in K2 3 D9 (cf v l 5 41 1, 32 15, 50 59)

1 K1.4 5 D1–8 धृतराष्ट्र (for दुर्योधन) — $^{a}$) A few MSS अक्षोहिणी — $^{b}$) G2 भ्रातृ° (for राज°) — D2 om 1$^{cd}$ — $^{c}$) K1 5 Cd अर्चति, D1 चर्चति (for इच्छति) — $^{d}$) T1 G1 5 महारथ (for युधि°)

2 G2 4 om 2$^{ab}$ — $^{c}$) K1 5 D7 10 चैव; T2 G2–4 M चापि (for चोभौ) — $^{d}$) K1 T1 G1 3.5 यमस्यापि, K5 यमस्थान, G2 4 M यमौ चापि (for यमावपि)

3 $^{a}$) D1 रथे तिष्ठस्तु कौंतेय — $^{c}$) K1 5 D1 2.7 10 T G3.4 M1 मन्त्रान् K5 D1 स, S तु (for सन्)

4 $^{a}$) S बीभत्सु (for सनद्ध) — $^{b}$) K4 B Dn D3–6 8 विद्युद्युत, C5 °त्प्रभ (as in text) — $^{c}$) K4 B D (except D7 8, D9 missing) समतात् (for स मन्त्रान्) K5 D5 D8 10 S (except T1) समभिध्यायन्

5 $^{c}$) G3 4 M मा (for मा) — $^{d}$) K5 D1 10 S तथ (for तथा) K1 T2 G4 अच्युत, D52 उत्तम, D2 T1 G1 5

C. 5. 2218
B. 5. 56. 5
K. 5. 56. 4

पूर्वरूपमिदं पश्य वयं जेष्याम संजय ।
बीभत्सुर्मां यथोवाच तथावैम्यहमप्युत ॥ ५

दुर्योधन उवाच ।

प्रशंसस्यभिनन्दंस्तान्पार्थानक्षपराजितान् ।
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजः ॥ ६

संजय उवाच ।

भौवनः सह शक्रेण बहुचित्रं विशां पते ।
रूपाणि कल्पयामास त्वष्टा धात्रा सहाभिभो ॥ ७
ध्वजे हि तस्मिन्रूपाणि चक्रुस्ते देवमायया ।
महाधनानि दिव्यानि महान्ति च लघूनि च ॥ ८
सर्वा दिशो योजनमात्रमन्तरं
स तिर्यगूर्ध्वं च रुरोध वै ध्वजः ।
न संसज्जेत्तरुभिः संवृतोऽपि
तथा हि माया विहिता भौवनेन ॥ ९
यथाकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च विद्म किं नु तत् ।
तथा ध्वजो विहितो भौवनेन
बह्वाकारं दृश्यते रूपमस्य ॥ १०
यथाग्निधूमो दिवमेति रुद्ध्वा
वर्णान्बिभ्रत्तैजसं तच्छरीरम् ।
तथा ध्वजो विहितो भौवनेन
न चेद्भारो भविता नोत रोधः ॥ ११
श्वेतास्तस्मिन्वातवेगाः सदश्वा
दिव्या युक्ताश्चित्ररथेन दत्ताः ।
शतं यत्तत्पूर्यते नित्यकालं
हतं हतं दत्तवरं पुरस्तात् ॥ १२

---

M2 अच्युत (for अप्युत)

6 K1 4 5 Dn1 D1-8 धृतराष्ट्र (for दुर्योधन) G3 om the ref — D6 (hapl.) om 6 and the ref before 7 — $^{a}$) D7 समस्तास्तान् (for अभिनन्दस्तान्) — $^{b}$) K1 5 D7 सर्वान् (for पार्थान्) — $^{c}$) S रथं (for रथे) — $^{d}$) K4 B Dn Ds D1-5 8 G3 ध्वजा.

7 D6 om the ref (cf v l 6) — $^{a}$) K4 B D (except D1 8 10, D9 missing) Cs भौमन, Cd as in text (cf v l. 9, 10) Dn1 G5 चक्रेण (for श°) — $^{b}$) S (except M1 4) बहुचित्रो. — $^{d}$) K4 B1 3 5 Dn Ds D3-6 Cs धाता (for धात्रा) D7 धाता त्वष्टा (for त्वष्टा धात्रा) K4 B1 3 5 D3-6 सदा विभो, B2 4 समं विभो; D2 7 8 G3 M6 सहाविभो

8 $^{a}$) S तस्य (G3 सर्व-) (for तस्मिन्) — After 8, K4 (om line 2) B D (D9 missing, D2 10 marg sec. m) ins

341* भीमसेनानुरोधाय हनूमान्मारुतात्मज ।
आत्मप्रतिकृतिं तस्मिन्ध्वज आरोपयिष्यति ।

9 K4 om. 9$^{ab}$ — $^{a}$) T1 G1 उन्नत (for अन्तरं) — $^{c}$) K4 Ds D5 6 न सज्जत्यसौ, B1.3.5 Dn D3 4 न ससज्जत्यसौ, B2 4 सज्जत्यसौ, D1 7 G4 न ससजेत्; D2 न स सज्जेत्, D8 T1 G1 न सज्जते, T2 न ससजेते, M8 न संसजेत् (for न ससज्जेत्) T2 बहु° (for तरु°) — $^{d}$) K1 5 D2 7 10 M om हि K4 B Dn Ds D3-7 भौमनेन (cf v l 7, 10)

10 $^{b}$) K4 Ds D5-7 T2 G2 4 चैव वर्णं; T1 G1.5 चैकरूप B (except B2) Dn D1.2 10 M2 वेद्मि (for विद्म). T1 G1-3 5 M किंचन, T2 किंचित् (for किं नु तत्). G4 न विदु॰ कथंचन (for न च वेद्मि किं नु तत्) — $^{c}$)=11$^{c}$ K5 रचितो (for विहितो) K4 B Dn D3 D5-7 भौमनेन (cf v l 7, 9) — K5 B2 om (hapl) 10$^{d}$-11$^{c}$, D8 reads the portion in marg (sec m)

11 K5 B2 om 11$^{abc}$ (cf v l 10). D7 reads 11$^{ab}$ twice (with v l) — $^{a}$) D7 (second time) तथा (for यथा) D7 (second time) T1 G1 5 एव (for एति). D1 तांस्तान्, Cd रुध्वा (as in text). D7 (first time) निरुद्धो गरीयान् (for दिवमेति रुद्ध्वा) — $^{b}$) M (except M1) वर्णं G4 सिताभ्र (for बिभ्रत्) K4 B Dn Ds D3-6 7 (second time) 10 तैजसाश्चित्ररूपान् — $^{c}$)=10$^{c}$. K4 B (B2 om) Dn Ds D3-7 G3 4 भौमनेन. — $^{d}$) M1 विहितो; Cs भविता (as in text) S (except T2) नोत (M नैव) बाधा (G2 4.5 °ध) Cd cites रोध and न चेद्भार Cs cites the whole pāda as in text

12 $^{a}$) D1 वायु° (for वात°) — $^{b}$) S रथे (for दिव्या) D7 युक्ताश्चित्रा पावकेनेह दत्ता — After 12$^{ab}$, K4 Dn D2 (marg sec m) 3-6 8 10 ins

342* भुव्यन्तरिक्षे दिवि वा नरेन्द्र
एषां गतिर्हीयते नात्र सर्वा ।

— $^{c}$) S हि यत् (for यत्तत्)

13 $^{a}$) K1 दधिवर्णा, S दत्तवरा (G4 °र्णा) (for

# ६०

वैशंपायन उवाच ।
पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ १
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ॥ २
अकामद्वेषसंयोगाद्द्रोहाल्लोभाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ ३
इति द्वैपायनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ॥ ४
नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन ।
कामाल्लोभादनुक्रोशाद्द्वेषाच्च भरतर्षभ ॥ ५
यदि ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ ६
तस्मान्न भवता चिन्ता कार्यैषा स्यात्कदाचन ।
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ७
अथ चेत्कामसंयोगाद्द्वेषाल्लोभाच्च लक्ष्यते ।
देवेषु देवप्रामाण्यं नैव तद्विक्रमिष्यति ॥ ८
मयाभिमन्त्रितः शश्वज्जातवेदाः प्रशंसति ।

C. 5. 2390
B. 5. 61. 9
K. 5. 61. 9

यानसंधि, M (except M1) संजयप्रतियान — *Adhy name* M पांडवशक्तिकथन — *Adhy no* (figures, words or both) D5 59, D6 55, D7 G2 3 5 M1 4 61, T G4 M2 3 5 62, G1 63 — *S'loka no* K5 22, Dn 23, D5 21

## 60

☞ This adhy is missing in K2 3 (cf v l 5 41 1, 32 15), st 1–12 are missing in D9 (cf v l 5 50 59) K4 om. 1–26 (cf. v l. 5 59 20)

1 c) K5 D1 आस्थाय, T1 G1. 4 5 आदाय

2 Before 2, K5 G3 ins दुर्योधन उ° (G3 om उ°) — a) G3 असाध्या (for अशक्या) G4 देवशिवाद , Ca as in text — c) M स्येतु, Ca व्येतु (as in text)

3 ab) D2 G1 2 अकामाद्वेष° (D2 °द्वय°), Ca अराग द्वेष°, Cs as in text B1 2–5 Dn2 D3–6 8 G3 Ca d s transp द्रोहात् and लोभात् Ds2 D5 लोभात्, T2 G5 M1 मोहात् (for द्रोहात्) D8 स्नेहात्, D2 द्वेषात् (for लोभात्) B2 3 Dn1 D1 10 °मयोगलोभद्रोहा(D10 °सयोग द्रोहलोभा)च भा° — c) D1 अपेक्षया, Ca d s उपेक्षया (as in text) — d) B2 4 आगता , D2 T G1 4 आप्नुयु , Ca as in text

4 a) T2 एतत् (for इति) — c) Ds2 D6 जामदग्नि K5 स (for च) K1 5 D7 रामोपि, S यो राम — d) K1 5 D1. 7 10 कथा (for कथाम्) K1 5 D1. 2 7 10 S स्व(D1. 2 T2 G4 चा)कथयत् (for अकथयत्)

5 a) K1 5 D7 8 10 वै (for एव) G4 नैव मानुष भावेन — b) D1 कथ° (for कदा°) — G2 reads 5c–21d after 5 59 8ab (om altogether 19c–20d) — c) B Dn Ds D3–6 8 कामात्क्रोधात्तथा लोभात्; D2 अकामद्वेषसयोगात् — d) S भेदाद्वा (for द्वेषाच्च) D2 लोभाद्वेषाच्च भारत

6 a) B3 D (except D1 2, D9 missing) G1 4 यदा; G3 यथा (for यदि) K1. 5 Ds2 D10 तु, D7 वा (for हि). — b) D2 प्रजापति (for अश्विनावपि) — c) S प्रवर्तते (for प्रवर्तेरन्) — d) T2 पांडवा (for न पार्था)

7 b) B D (except D10, D9 missing) G3 कथ° (for कदा°) — c) K5 B3 देवास्तु, Dn D3–6 8 देवेषु; D1 T G देवा(G5 °वै)श्च, D2 7 10 देवा (D2 °वे) हि, Cn दैवेषु (as in text) K5 अपेक्षता, Dn2 Ds2 D1 2 8 (by corr ) 4 10 T G (except G5) उपेक्षका , Cn अपेक्षका (as in text) B3 त्वेते, D7 ह्येतै (for ह्येते) K1 दैवैरुपेक्षिता ह्येते, M देवेषूपेक्षका (M1 *sup lin* °क्षिता ) कार्या — d) D2 सर्व° (for शश्वद्°)

8 a) T G5 M कर्म° (for काम°) — b) B (except B3) D (except D8, D9 missing) Ca d द्वेष , G5 लोभात् (for द्वेषात्) K1 5 B (except B3) D (D9 missing) Ca d लोभ , G5 द्वेषात् (for लोभात्) B1 (m as in text) जायते, D8 D7 दृश्यते, D2 लभ्यते, G4 भारत; Ca d 'लक्ष्यते (as in text) — G4 om 8c–10d — c) D7 तथा तु, D8 G2 दैवेषु, Ca d देवेषु (as in text) K1. 5 D1 2 चैतत्प्रामाण्यात् (D2 °माण्य), B Dn1 D5 6 8 10 Cn दैवप्रामाण्यात्, Dn2 Ds D3. 4 7 10 Ca s देवप्रामाण्यात्, T1 दैवप्रा°, G3 चैव प्रा° — d) K1 Ca d s तेषा, K5 B D1 3–8 10 नैषा (for नैव) D2 नैषा क्रुद्ध क्रमिष्यति, G3 नैतच्चित्र क्रमिष्यति Ca d s cite विक्रमिष्यति

36

नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ २१
भविष्यतीदमिति वा यद्ब्रवीमि परंतप ।
नान्यथा भूतपूर्वं तत्सत्यवागिति मां विदुः ॥ २२
लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ २३
न ह्यहं श्लाघनो राजन्भूतपूर्वः कदाचन ।
असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ २४
पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया ॥ २५
सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः ।
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥ २६
परा बुद्धिः परं तेजो वीर्यं च परमं मयि ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ २७
पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते ॥ २८
इत्युक्त्वा संजयं भूयः पर्यपृच्छत भारत ।
ज्ञात्वा युयुत्सुः कार्याणि प्राप्तकालमरिंदम ॥ २९ C. 5. 2410 B. 5. 61. 29 K. 5. 61. 29

इति श्रीमहाभारते उद्योगपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

तत्तद्भवेद्धि पूर्वं मे

22 G2 om 22a–29b — c) K1 वा, B4 D (except D1–4 7 10) च, G4 तु (for तत्) — d) M (except M1) मा (for मां)

23 G2 om. 23 (cf v l 22) — a) K5 मे तात, D10 एवैतत् (for एतन्मे) — b) K1 5 D8 भुवि (for दिक्षु) D1 माहात्म्य विश्रुत भुवि — d) G1 श्लाघयन् G4 अनघ (for नृप)

24 G2 om. 24 (cf. v l 22) — b) Dn2 Ds2 G4. 5 भूतपूर्वं D1 T1 कथचन — d) K1. 5 D8 10 य (for यद्)

25 G2 om. 25 (cf v l 22) — a) A few S MSS मात्स्या — b) Some N MSS कैकयं — d) D1 निहतान् (for विजितान्)

26 G2 om 26 (cf. v l 22) — c) S (G2 om ) नशिष्यति (for विनङ्क्ष्यन्ति) — d) D8 सबाधवा (for सहान्वया )

27 K4 resumes ! G2 om 27 (cf v l 22) — b) K1. 5 D7 10 एव पर (for परम) B3 4 5 D (except D1–4. 7 10) T2 M2 मम (for मयि) — d) S (G2 om ) विशा पते (for विशिष्यते)

28 G2 om 28 (cf v l 22) — b) D6 चैव (for शल्य ) — c) K1 5 प्रनदति, D1 विजानति (for प्रजानन्ति) — d) D2 च (for तत्) S (G2 om ) वर्त° (for विद्य°)

29 G2 om 29ab (cf v.l 22) Before 29, K1 D1 T2 G4 5 M1 ins वैश° — a) K1 5 D1 7 8 उक्ते, K4 D2–6 9 उक्त°, Cs उक्त्वा (as in text) — b) G5 पर्यपृच्छत्त — c) D8 4 9 ज्ञाता, S °तु (for °त्वा) K1 4 5 (m as in text) B4 D (except Dn2 Ds D7) Cn युयुत्सो (for °त्सु ) — d) D1 °कालान्, T1 G1 3 5 M °कालानि (for °कालम्) K4 B Dn2 D6 T G1 3 4 M5 अरिंदम , M2 ह्यरिंदम

Colophon missing in K2 3 D9. — *Sub-parvan* K1. 4 5 B Dn Ds D3–8 10 सजययान, D2 यानसधि, M (except M5) सजयप्रतियान — *Adhy name* T1 दुर्योधनविक्रमकथन, G1 5 दुर्योधनविकत्थन, M1 दुर्योधनगर्ववचन — *Adhy no* (figures, words or both) K1 61, D5 60, D6 57, D7 G2 3. 5 M1 4 62, T G4 M2 3 5 63, G1 64 — *S'loka no* K5 Dn D8 29, G5 30.

## 61

☞ This adhy is missing in K2 3 (cf v l 5 41 1, 32 15)

1 a) K1 4 5 D7 10 नु, S एव (for तु) K4 B Dn Ds D2–6 8 9 पार्थं, D1 G4 पार्थिव (for पार्थान्)

2 Before 2, T2 M1 ins कर्ण — b) K1 5 B3 4 Dn2 D1 2 5–8 कृत; K4 कृष्ट, Ca हृत (as in text) K4 5 D1 6–8 °पुर, B2–4 Dn Ds °मय (Ds2 °प्रत), D2 °कृत, D10 °पद, T1 G1 4 M2 °वृत, G5 °घृत, Ca °पर (as in text) — d) K4 B4 Dn D1 3–6 8 9 ते न, D7 न च, T G न ते (for तव) Cn cites प्रतिभा अस्यति,

## ६१

C. 5. 2411
B. 5. 62. 1
K. 5. 62. 1

वैशंपायन उवाच ।
तथा तु पृच्छन्तमतीव पार्था-
न्वैचित्रवीर्यं तमचिन्तयित्वा ।
उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन्संसदि कौरवाणाम् ॥ १
मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामाद्धृतं ब्रह्मपरं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्त-
स्तवान्तकालेऽप्रतिभास्यतीति ॥ २
महापराधे ह्यपि संनतेन
महर्षिणाहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः
ससागरामप्यवनिं महर्षिः ॥ ३
प्रसादितं ह्यस्य मया मनोऽभू-
च्छुश्रूषया स्वेन च पौरुषेण ।
ततस्तदस्त्रं मम सावशेषं
तस्मात्समर्थोऽस्मि ममैष भारः ॥ ४
निमेषमात्रं तमृषिप्रसाद-
मवाप्य पाञ्चालकरूपमत्स्यान् ।
निहत्य पार्थांश्च सपुत्रपौत्रा-
ल्लँलोकानहं शस्त्रजितान्प्रपत्स्ये ॥ ५
पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।
यथाप्रधानेन बलेन यात्वा
पार्थान्हनिष्यामि ममैष भारः ॥ ६
एवं ब्रुवाणं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने
हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ ७
यत्खाण्डवं दाहयता कृतं हि
कृष्णद्वितीयेन धनंजयेन ।
श्रुत्वैव तत्कर्म नियन्तुमात्मा
शक्यस्त्वया वै सह बान्धवेन ॥ ८
यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान्महेन्द्रः ।
भस्मीकृतां तां पतितां विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ॥ ९
यस्ते शरः सर्पमुखो विभाति

---

Cn प्रतिभास्यति

3 [a]) S (except $G_4$ $M_8$) महापराधेष्वपि (for °धे ह्यपि). $D_1$ त्वयि (for ह्यपि) $K_{4\ 5}$ B Dn Ds $D_{3-6\ 8-10}$ यन्नतेन, $D_{1\ 2\ 7}$ सत्तमेन, $M_{2\ 4}$ (*inf lin* as in text) $_5$ तन्नतेन (for संनतेन) — [b]) $G_3$ न (for च) — [c]) $B_2$ Ds $D_{3-6}$ S (except $G_3$) अति॰ (for अपि) — [d]) Some MSS अवनीं

4 [a]) $K_1$ $D_{7\ 10}$ M तस्य; $K_5$ यस्य (for ह्यस्य) — [c]) $K_4$ B D (except $D_{2\ 7}$) तदस्ति च ($K_4$ वा) (for ततस्तद्) Ds मम चावशेषं, $G_{1\ 5}$ प्रददावशेषं — [d]) $K_5$ $D_1$ एव (for एष) $K_{1\ 5}$ $B_3$ $D_{1\ 2}$ यत्न॰; $G_2$ भाव॰ (for भार )

5 [a]) $K_4$ B D (except $D_{1\ 2\ 8}$) T G (except $G_2$) निमेषमात्राद् $K_{1\ 4.5}$ $B_4$ D (except Ds) $T_2$ ऋषे प्रसादं; $G_4$ ऋषिप्रभाव — [b]) Some N MSS पञ्चाल°, S (mostly) °करूश° — [c]) T $G_{1\ 5}$ पांडून् (for पार्थान्) $K_4$ B D (except $D_{1\ 2\ 7\ 10}$) सह पुत्रपौत्रैः (for च सपुत्रपौत्रान्) — [d]) S (except $M_1$) शत्रु° (for शस्त्र°).

6 [a]) $D_2$ M मे (for ते) — [c]) $T_2$ $G_3$ ऋषे॰ ($G_4$ ऋषि॰) प्रसादेन (for यथाप्रधानेन) $K_4$ B D (except $D_{7\ 10}$) गत्वा, $K_5$ यत्त ; T $G_{1\ 5}$ चैतान्, $G_2$ तेन (for यात्वा) — $G_2$ om 6[d]–8[a] — [d]) $D_{1.2}$ भाव॰ (for भार॰).

7 $G_2$ om 7 (cf v l 6) — [a]) $D_7$ इति (for एव), $K_4$ B (except $B_4$) D (except $D_{1\ 2\ 7\ 10}$) ब्रुवत (for ब्रुवाणं) — [b]) $D_7$ S ($G_2$ om ) °बुद्धि॰ — [d]) $K_4$ धृतराष्ट्रस्य पुत्रा

8 $G_2$ om 8[a] (cf v l 6) — [d]) $K_4$ शक्त॰, B D (except $D_{7\ 9\ 10}$) युक्त॰ (for शक्य॰)

9 [b]) $D_1$ सुरेंद्र॰, $G_1$ नरेंद्रः (for महेन्द्र॰) — [c]) $K_4$ B D (except $D_7$) समरे (for पतितां)

10 [a]) S शरश्च य॰ (for यस्ते शर॰) $K_1$ अभियाति

सदाग्र्यमाल्यैर्महितः प्रयत्नात् ।
स पाण्डुपुत्राभिहतः शरौघैः
सह त्वया यास्यति कर्ण नाशम् ॥ १०
बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च गरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ११

कर्ण उवाच ।

असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च भूयश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किंचि-
त्पितामहस्तस्य फलं शृणोतु ॥ १२
न्यस्यामि शस्त्राणि न जातु संख्ये
पितामहो द्रक्ष्यति मां सभायाम् ।
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ १३

वैशंपायन उवाच ।

इत्येवमुक्त्वा स महाधनुष्मा-
न्हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राज-
न्मध्ये कुरूणां प्रहसन्नुवाच ॥ १४
सत्यप्रतिज्ञः किल सूतपुत्र-
स्तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा
लोकक्षयं पश्यत भीमसेनात् ॥ १५
आवन्त्यकालिङ्गजयद्रथेषु
वेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां
सहस्रशश्चायुतशश्च योधान् ॥ १६
यदैव रामे भगवत्यनिन्द्ये
ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ १७
अथोक्तवाक्ये नृपतौ तु भीष्मे
निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धि-
र्दुर्योधनः शांतनवं बभाषे ॥ १८

C. 5. 2423
B. 5. 62. 13
K. 5. 62. 13

इति श्रीमहाभारते उद्योगपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

K5 निपातां (for विभाति) — [b]) Dn1 Ds D6 7 अग्र° (for अग्र्य°) K1 कुलेन, K6 सदैव, S कुले (G4 सदा) ते (for प्रयत्नात्)

11 [c]) K4 D9 वली°, B Dn Ds D2-6 वरी°, D1 यवी° (for गरी°) — [d]) K4 D3 4 9 प्रहसन्, a few MSS सुमले, (for तुमुले) K4 B3 D3 4 9 वि- (for प्र)

12 [a]) K5 T2 G1.6 यथोक्तं — [b]) K4 B Dn Ds D2-7 9 10 G3 भूयाश्च (for भूयश्च) D1 भूयात्म मतो (for भूयश्च ततो) — [c]) K4 B (except B6) D2-5 7-10 G4 च (for तु)

13 [a]) G6 न्यस्तानि (for न्यस्यामि) — [b]) S सहायं (for सभायाम्) — [c]) K1 6 D1 7 8 10 T1 G6 मयि (for मम) — [d]) T2 G3 द्रक्ष्यतु T G1.6 M सह, G2 3 मम (for भुवि)

14 [a]) M1.2 सहमा (for स महा)

15 Before 15, T2 ins भीष्म — [a]) K1m सुयोधनाय, Ca.s सत्यप्रतिज्ञ (as in text) — [b]) K6 D7 10 G6 विषहेत्त Cs cites सहेत — [c]) K6 S (except G3) हत्वा (for भित्त्वा) — [d]) K1 D2 T1 G1-3 6 पश्यतु, K4 6 B2 Ds1 D3.4 7 9 G4 Cs पश्यति, Dn1 पश्यता (for पश्यत) T1 G3-6 भीमसेन, T2 G1 भैमसेनं, G2 M भैमसेना (G2 °न), Cs भीमसेनात् (as in text)

16 K6 om. 16-18 — [b]) K4 वेदिष्टय(sic), B Dn2 Ds D2 6-8 10 G2 4 चेदिध्वजे, D1 यूपध्वजे, D3 4 9 चेदिध्वय Ds2 D7 बाह्लिकेषु (for °के च) — [d]) B3 अप्य युतां (for अयुतशस्) D3.4 9 अस्य (for the second च) M3-5 यौधान्, Ca d.s as in text

17 K6 om 17 (cf v l 16) — [a]) D10 अचिन्त्ये, G6 अनिंदिते (for अनिन्द्ये) — [b]) D3.4 तथैव (for तदस्त्रम्)

18 K6 om 18 (cf. v l 16) Before 18, K1 Dn D8 ins वैश° उ° — [a]) N (except K1, K2 3 missing,

# ६२

C. 5. 2429
B. 5. 63. 1
K. 5. 63. 1

दुर्योधन उवाच ।

सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ १
सर्वे स्म समजातीयाः सर्वे मानुषयोनयः ।
पितामह विजानीषे पार्थेषु विजयं कथम् ॥ २
नाहं भवति न द्रोणे न कृपे न च बाह्लिके ।
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ॥ ३
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे ।
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः ॥ ४
ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ।
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ॥ ५

विदुर उवाच ।

शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ ६

---

K6 om ) तथा, G4 यथा (for अथ). K4 B2.4 Dn D8 D8-9 9 नृपतींद्र (for नृपतौ तु) D2 T1 च (for तु). K1 D7 8 10 तस्मिन् (for भीष्मे)

Colophon missing in K2.8 — *Sub-parvan* K1 4 5 B Dn D8 D6-8.10 सजययान, D1 सजययानसंधि, D2 यानसधि, M सजयप्रयियान — *Adhy. name* D2 कर्णप्रतिज्ञा, G5 कर्णास्त्रनिक्षेप , M कर्णनिर्गमन — *Adhy. no* (figures, words or both) K1 62, D5 61, D6 58, D7 G2 3 5 M1 4 63, T G4 M2 3 5 64, G1 65 — *S'loka no* Dn D8 18.

## 62

☞ This adhy is missing in K2 3 (cf v.l. 5. 41 1, 32 15)

1 [a]) S मनुष्यैस्तु (G3 °ष्याणा) — After 1, N (K2 3 missing) ins

355* वयं च तेऽपि तुल्या वै वीर्येण च पराक्रमे. ।
समेन वयसा चैव प्रातिभेन श्रुतेन च ।
अस्त्रेण योधयुग्यासु शीघ्रत्वे कौशले तथा ।

[ (L 1) K4 D1 3 4 9 च, D5 6 8 न (for ऽपि) K1 D7 वीर्ये चैव पराक्रमे (D7 °मैं ) — (L 2) Some MSS Ca d शमेन, D1 दमेन (for समेन) K1 6 (m as in text) D1 Ca d वर्चसा, D8 यश° (for वय°) K4 D2 4 प्रभावेन, K6 प्रज्ञया च, D1 पांडित्येन, Ca as in text — (L 3) K4 D2 4 9 योधयोगेषु, B °योग्यासु (B2 °योग्या च), Dn2 D5 (m as in text) 6 °युग्या वै (Dn2 च) K1 5 D2 7 8 10 अस्त्रलाघवयोग्यासु (D2 °यै), D1 शस्त्रलाघवयुक्ता च Ca cites योग्या, Cn योधयुग्या, Cs लाघवयोग्यासु D1 2 शीघ्रता, D5 (m as in text) 6 सुशीघ्रे (for शीघ्रत्वे) K (K2 3 missing) D1.3 4 8 9 10 (*sup lin* as above) कौशलेन च (for कौशले तथा) ]

2 [a]) D1 6 च, G2 सु- (for स्म) D2 सह° (for मम°) — [b]) S सर्वे स्म समयोनय — [c]) S (except T2 G4) न (for वि ) — [d]) S (except T2) विजय .

3 [c]) G4 5 वा (for च). K5 पराक्रम्य (for नरेन्द्रेषु) G3 अन्येषु पार्थिवेन्द्रेषु — [d]) K1 m पराक्रांतिं, K5 भारमेतं; D8 पराक्रम (for °क्रम्य)

4 [b]) D7 तथा, G3 (*sup lin* as in text) मम (for च मे). — [d]) S ससोमकान् (for शितैः शरैः)

5 [b]) D1 2 विधिवद् (for विविधैर्) — [c]) B4 M तर्पयिष्याम. — [d]) B1 3 अन्यैर्, D8 अश्वैर् (for अश्वैर्) D1 S धनैरपि (D1 °स्तथा) (for धनेन च) — After 5, N (K2 3 missing) ins a passage given in App I (No 3), while S ins

356* सुखान्यवाप्य सहिता कृत्वा कर्म सुदुष्करम् ।
विस्रब्धा स्वर्गमेष्याम काले प्राप्ते गतज्वराः ।
अथाब्रवीन्महाराजो धृतराष्ट्र सुदुर्मना ।
विदुर विदुषां श्रेष्ठ सर्वपार्थिवसंनिधौ ।
मोहितो मृत्युपाशेन कालस्य वशमागत' । [5]
तात कर्णेन सहित पुत्रो दुर्योधनो मम ।

[ (L 2) T1 G1-3 गर्व ष्याम , G3 तु गमिष्याम' (for स्वर्गमे°) T1 G4 °तमा (for °ज्वरा') G4 प्राप्तकालहतत्वरा' (for the posterior half) — (L. 3) T1 G1 3 महाराज ]

6 K6 missing from 5 62. 6 to 5 67. 4 The MS is ignored here S transp 6[ab] and 6[cd]. — [a]) D5 (by corr ) S (except M5) शकुनाना D1 2 T G वधार्थाय (for इहा°) — [b]) T2 G2-5 M (except M1) पाशान् (for °श) T1 G1 भूमौ पाशानयोजयत् — [c]) B (except B2) T2 G1 2 शाकुनिक S राजन् (for तात) — [d]) K1 D7 न श्रुतं, Dn1 D2 3 शुश्रुम , C3 as in text. S पूर्वमासीदिति श्रुति' (T1 G5 °त )

तस्मिन्द्वौ शकुनौ बद्धौ युगपत्समपौरुषौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ ७
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स गच्छतः ॥ ८
तथा तमनुधावन्तं मृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ९
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ १०
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे ।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ११

शाकुनिक उवाच ।

पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ १२

विदुर उवाच ।

तौ विवादमनुप्राप्तौ शकुनौ मृत्युसंधितौ ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥ १३
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्यापरिज्ञातो जग्राह मृगयुस्तदा ॥ १४
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥ १५
संभोजनं संकथनं संप्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ १६
यस्मिन्काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ १७
येऽर्थं संततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विपद्भ्यो भरतर्षभ ॥ १८
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।

C. 5 2468
B. 5. 64. 14
K. 5. 64. 14

7 a) K4 B (except B3) Dn D3-6 8 9 तौ (for द्वौ) — b) B4 D (except D1 2 7) सहचारिणौ, G2 युक्तपौरुषौ (for सम°) — c) T G1 2 M3-5 तौ पाशौ (for तं पाशं) — d) K4 D2 4 9 T1 G1. 2 4 खेचरौ (for खचरौ)

8 a) K1 Ca d विहाय (for विहाय) Cs ap विहायस (as in text) — b) B3 D8 T2 शाकुनिकस् D8 T G5 (*sup lin*) तथा (for तदा) D1. 2 दृष्ट्वा श(D2 शा)कुनिग्घक.. — G4 (hapl.) om 8c–10d — c) G5 सुनिर्विण्ण° (for अनि°) G3 अन्वधावत निर्विण्ण

9 G4 om. 9 (cf v l 8) — a) B Dn D2-4 अन्व° (for अनु°)! — b) D6 8 मृगय, S (except M5) मृगघ्नं — d) D7 10 (m as in text) ददृशे (for ददर्श)

10 G4 om 10 (cf. v.l. 8) — a) K1 D7 G6 M1 3-5 शीघ्रौ (for शीघ्र) — b) D5 अन्व°, T1 G5 M1-3 उप°, G3 M4. 5 उपा° (for अनु°) — d) Ds2 पप्रच्छ मुनिस्सत्तम

11 b) S मृगयो (G2 4 °वत्) (for °हन्) S (except T2 G1 M1) मा (for मे) — d) G4 M (except M1) अनुधावति

12 Dn Ds2 D1 शाकुनि , D9 M3 शकुनिक (for शाकु°) — b) T2 transp सहितौ and हरतो T1 G1 5 हरतो मम गर्हि(G5 *sup lin* °विं)तौ — c) D5 एव, G5 M (except M1) तौ (for वै) T2 G3 4 M3-5 त्रि(T2 नि)पतिष्येते (for विवदि°) — d) G2 4 वै (for मे)

13 K4 om 13ab — b) M1 सहितौ (for शकुनौ) K1 °खढितौ, B2 D3 M1 Ca d °सदितौ, D1 °समतौ, D5 6 9 °सन्धितौ, T2 G3 4 °समितौ, G1 °सहितौ, G3 5 M3-5 °सनिधौ (for °संधितौ) — c) D1 विगाह्य, M5 °हृष्य, Ca d °गृह्य (as in text) S पाश (for च सु) — d) S सनिपी(T G5 °पे)दतु (for °पेततु)

14 a) T1 G1 समेक्ष्य (for संरब्धौ) — b) K1 T2 G3. 4 M (except M1) °वेग° (for °पाश°) — c) D7 अपरिश्रान्तौ, S अप्रमत्तौ तौ (G5 तु), Ca d अपरिज्ञात (as in text) — d) K4 B D (except D7 10) G2 मृगहा (for °युस्)

15 a) K1 D7 10 ज्ञातिभि सार्धं (for ज्ञातयोऽर्थेषु) — G4 om 15c–17d — c) K1 D1 2 7 10 om ते G5 मृत्युपाशम् (for ऽमित्रवशम्)

16 =(var) 5 39 22 — G4 om 16 (cf v l 15) — b) T1 G1 5 प्रीतिश्चैव परस्पर — d) S (G4 om) विवाद (for °रोध°) D1 T G1 2 कथ° (for कदा°)

17 G4 om 17 (cf v l 15) — a) K4 B (except B3) D (except D1 2) ये स्म, T1 G1. 5 येस्मिन् (for यस्मिन्) D1 गृहे (for काले)

18 G3 om 18ab — a) D1 यत्र, G4 येन (for येऽर्थं) K1 T G5 M तु (for ऽर्थं) K1 समतिम्, Dn1 Ds D5 7 9 10 सततम्, S (except M5, G3 om) सन्नतिम् (M1 *inf lin* °स्निधिम्) (for सततम्)

C. 5. 2408
B. 5. 64. 14
K. 5. 64. 14

धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ १९
इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु ॥ २०
वयं किरातैः सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवातिकैः ॥ २१
कुञ्जभूतं गिरिं सर्वमभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् ॥ २२
तत्र पश्यामहे सर्वे मधु पीतममाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसंमितम् ॥ २३
आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत्प्राश्य पुरुषो मर्त्यो अमरत्वं निगच्छति ॥ २४
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा ।
इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः ॥ २५

ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे ॥ २६
तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति संमोहात्प्रपातं नानुपश्यति ॥ २७
दुर्योधनो योद्धुमनाः समरे सव्यसाचिना ।
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम् ॥ २८
एकेन रथमास्थाय पृथिवी येन निर्जिता ।
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव ॥ २९
द्रुपदो मत्स्यराजश्च संक्रुद्धश्च धनंजयः ।
न शेषयेयुः समरे वायुयुक्ता इवाग्नयः ॥ ३०
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ ३१

इति श्रीमहाभारते उद्योगपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

19 = 5 36. 58 — D8 (hapl.) om 19. — $^a$) D5 D10 S (except G4) धूमायति, Ca d s °यते (as in text) — $^b$) K1 D1 G1 संहितानि (for सहि°)

20 $^b$) K4 D8 4 9 transp गिरौ and मया

21 $^b$) K1 (sup. lin. as in text) B8 Dn2 Ds2 D7 (before corr.) °मो गिरिमुत्तमं, D1 2 °मो दिशमुत्तरां (D2 °र), S °मोत्तर(G5 °मोत्तम)पर्वत — G4 om 21$^e$–23$^d$ — $^d$) K4 B3 4 Dn2 Cn विद्याजभकवार्तिकैः (K4 °का°); Dn1 D3 4 7 °जृंभकवाति(Dn1 °र्ति°)कै, D2 जभविद्याकयातिगै, T G1–3 M1 2 °जंभकसाधकै. (T1 G1.3 °नै°), G5 वेदाध्ययनशालिभि°, M3–5 °जभकवादिकै Ca s cite विद्याजभकवातिका, Cd °वाहिका.

22 G4 om 22 (cf v l 21) — $^a$) T2 G2 कुजमीतं, Ca d रुजीभूत, Cs कुजभूत (as in text) — $^c$) M4 5 °गुण

23 G4 om 23 (cf v l 21) — $^a$) K4 B D (except D1.2 7) T1 G3 Ca अपश्याम वै (for पश्यामहे). Cd cites तत्र पश्यामहे — $^b$) K4 Cs पीत समाक्षिकं, B Dn D5 6 8 9.10m Cap पीतकमा°, T1 G1 पीन स्वमी°, T2 G2 पीत (G5 °न) च मा°, M पीनममा°, Ca पीतममाक्षिक (as in text) — $^c$) K1 Dn2 D5 D6 8 10 Ca d मरुत्प्रपाते (D5 D10 °त-), D2 7 Cs मेरुप्रपाते; T G1–3 M1 (inf lin) 3–5 मरुप्रपात, G5 बहुप्रपात, M1 (orig) मरुप्रवात° — $^d$) D5 विनष्ट K1 M (except M1) कुंभसनिभं, Ca. d as in text.

24 $^c$) K4 B Dn2 D5 D1 2 8 प्राप्य (for प्राश्य). — $^d$) K4 B D (except D7.10) [ऽ]प्यमरत्व; T1 G1 ह्यमरत्व, G5 अमृतत्वं (for अमरत्व) K4 B Dn D5 D6–8 8 9 नि(Dn1 हि)यच्छति, D1 2 च ग° (for निग°)

25 G3 (hapl.) om. 25$^a$–27$^b$ — $^c$) G5 एव (for ते) — $^d$) Dn1 जृंभसाधका; D5 D10 (sup. lin) जभवातिका°, M जभपाठका

26 G3 om 26 (cf v l. 25) — $^a$) K1 Ds2 D3 6 T G (G3 om) त (for तद्) — $^b$) K4 D5 D8.4 9 °सले (for °पते) — $^c$) T G1 2.5 M2–5 विविशु°; G4 ददृशु. (for विनेशु°) K4 D8 4 9 सर्वे (for तस्मिन्). — D8 om 26$^d$–27$^a$ — $^d$) K1 D7 सुदुर्गे, T G1 2 4 ते सर्वे; G5 सर्वे ते (for ससर्पे) B2 गिरिकंदरे — After 26, T2 G2 ins

357* आशाबद्धा पतन्ति स्म सर्वे एव गतासवः ।

28 $^a$) T G युध्यमान, M युद्धमना° (for योद्धु°) — $^c$) M2 पश्यति (for पश्यामि) — $^d$) K4 D7 च; T1 हि (for वा) S (except G4) °गतं (for °विधम्)

29 $^{ab}$) S एकेन पृथिवी येन रथमास्थाय नि°. — K4 B Dn D5 D1–6.8 9 ins after 29$^{ab}$ K1 D7.10, after 29.

# ६३

धृतराष्ट्र उवाच ।
दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ १
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रमिमीपसि ।
पञ्चानामिव भूतानां महतां सुमहात्मनाम् ॥ २
युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम् ।
परां गतिमसंप्रेक्ष्य न त्वं वेत्तुमिहार्हसि ॥ ३
भीमसेनं च कौन्तेयं यस्य नास्ति समो बले ।
रणान्तकं तर्कयसे महावातमिव द्रुमः ॥ ४
सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव ।
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥ ५
धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत् ।
शत्रुमध्ये शरान्मुञ्चन्देवराडशनीमिव ॥ ६
सात्यकिश्चापि दुर्धर्षः संमतोऽन्धकवृष्णिषु ।
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ७
यः पुनः प्रतिमानेन त्रीँल्लोकानतिरिच्यते ।
तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान् ॥ ८
एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।
आत्मा च पृथिवी चेयमेकतश्च धनंजयः ॥ ९
वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः ।

C. 5. 2491
B. 5. 63. 10
K. 5. 65. 10

---

358* भीष्मद्रोणप्रभृतय मत्वा माधुयायिन ।
विराटनगरे भग्ना किं तत्र तव दृश्यताम् ।

[ (L. 1) K1 D1–4 7 8 10 पड्या सानु(D7 °यानुप)- यायिन (for the posterior half) — (L. 2) B transp त्र and दृश्य° K1 4 D1–4 7 8 10 किं नु तद्विस्मृतं तव (D2. 4 8 च तद्) (for the posterior half) ]

— c) D2–4 8 T2 G2–5 M धीर (M1 inf lin वीर as in text) — d) G6 निकृतिं, Cs वीक्षित (as in text)

30 D5 om 30c–31d, D3 om 30c–31c — c) D5 नि- (for न) — d) K1 B3 D1–4 8 वात° (for वायु°)

31 D6 om. 31, D9 om 31abc (cf. v.l. 30) — c) D1 लोके, D2. 4 मूढ (for युद्धे) — d) D3 4 9 transp भवेत् and जय°

Colophon missing in K2 3. 6 — *Sub-parvan* K1 4 B Dn D5 D6–8 10 भजययान, M संजयप्रतियान — *Adhy name* M (except M2) विदुरहितोपदेश — *Adhy no* (figures, words or both) K1 64, D6 63, D8 60, D7 T G2 4 M2 3 5 65, G1 66, G2 3 M1. 4 64. — *S'loka no* Dn D5 27

## 63

☞ This adhy is missing in K2 3 6 (cf v l 5 41 1, 32 15, 62 6)

1 b) T1 G3 6 M (except M1) त्वा, T2 G2 ते (for त्वा).

2 b) K1 4 D1 2 6–8 प्रममीक्ष्यते (D1 °से), B Dn D5 D10 प्रजिहीर्षसि, D3 4 6 सुममीक्ष्यसे, T2 (by corr) प्रमर्मीप्यसि, G1 प्रमिमीक्षसि, G6 प्रमदिप्यसि (sup lin प्रशमिप्यसि) — c) M3–5 इह (for इव) — d) K4 B D (except D1–4 7 8) लोकधा(D5 °चा)रिणा (for सुमहा°)

3 a) D2. 4 9 तु (for हि) S कौरव्य (T2 G2 M1 °व्य) (for कौन्तेय) — b) D8 T G1 3–5 M इव (for इह) D1 स्थित (for आस्थितम्) T2 G2 परम धर्मसास्थित — c) D1 शक्तिम् (for गतिम्) B1. 2 5 Dn D5 D7 10 अभिप्रेक्ष्य (B1. 2 Dn2 °त्य), B3 4 D6 8 8 Cn अप्रेत्य, S सुमप्रेक्ष्य (G2 °त्य) (for असंप्रेक्ष्य) — d) D1 S तत्वं (for न त्वं) K4 B D जेतुम् (for वेत्तुम्) T2 G2 वेदितुम् (for वेत्तुमिह) D1 इच्छसि (for अर्हसि)

4 a) T2 G2 4 कौरव्य (for कौन्तेय) — b) T1 G1. 6 युधि (for बले) — c) K1 D7 रणाय किं (for रणान्तक) K1 B1 Dn D2–6 8–10 तर्जयसे, D5 तर्कयसि, D7 प्रार्थ°, Ca d as in text T2 G4 कथ तर्कयसे वीर (G4 °र)

6 B3 D7 M2 om (hapl ) 6–8 — b) G3 6 किम् (for कम्) Ds2 D1 6 8 M3 4 शातयेत्, T G नाशयेत् (for शातयेत) — c) T2 G2 स शत्रुषु (for शत्रुमध्ये)

7 B3 D7 M2 om. 7 (cf v l 6) — c) D3 4 9 ता (for ते)

8 B3 D7 M2 om. 8 (cf v l 6) — a) T1 G1. 3 य पुमान्, G4 पुरुष (for य पुन ) S (M2 om ) प्री(M5 प्र)तिमानेव, Ca d s प्रतिमानेन (as in text) — D1 om 8d–10a

9 D1 om. 9 (cf. v.l 8) — b) T2 G2 सह-

## ६४

वैशंपायन उवाच ।
एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनम् ।
पुनरेव महाभागः संजयं पर्यपृच्छत ॥ १
ब्रूहि संजय यच्छेषं वासुदेवादनन्तरम् ।
यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ २
संजय उवाच ।
वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनंजयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥ ३
पितामहं शांतनवं धृतराष्ट्रं च संजय ।
द्रोणं कृपं च कर्णं च महाराजं च बाह्लिकम् ॥ ४
द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम् ।
दुःशासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ ५
विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि कौरवम् ॥ ६
सैन्धवं दुःसहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसंधं च पार्थिवम् ॥ ७
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं
समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते
समानीता धार्तराष्ट्रेण सूत ॥ ८
यथान्यायं कौशलं वन्दनं च
समागता मद्वचनेन वाच्याः ।
इदं ब्रूयाः संजय राजमध्ये
सुयोधनं पापकृतां प्रधानम् ॥ ९
अमर्षणं दुर्मतिं राजपुत्रं
पापात्मानं धार्तराष्ट्रं सुलुब्धम् ।
सर्वं ममैतद्वचनं समग्रं
सहामात्यं संजय श्रावयेथाः ॥ १०
एवं प्रतिष्ठाप्य धनंजयो मां
ततोऽर्थवद्धर्मवच्चापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य
पार्थो धीमाँल्लोहितान्तायताक्षः ॥ ११
यथा श्रुतं ते वदतो महात्मनो
मधुप्रवीरस्य वचः समाहितम् ।
तथैव वाच्यं भवता हि मद्वचः
समागतेषु क्षितिपेषु सर्वशः ॥ १२
शराग्निधूमे रथनेमिनादिते
धनुःस्रुवेणास्त्रबलापहारिणा ।

C. 5. 2310
B. 5. 64. 13
K. 5. 59. 12

---

6 [b]) D3 जयसेन (for °त्सेन) G2 पार्थिव च महाग्य D1 (hapl.) om. 6[c]–7[d]

7 D1 om. 7 (cf. v.l. 6) — [a]) M1–3 दुःसह (for दुःसह) — [d]) D4 जरासंध; D[?] 8 जारासंधि (for जल°) S (G2 om.) पौ(T1 G4 कौ)रव (for पार्थिवम्)

8 [a]) D7 एव (for अपि) T1 G1 4 5 भूमिपाला (for पार्थिवा) — [b]) T1 G1 प्रियाय, G4 प्रियार्थाय (for प्रियार्थम्) — D[?] om. 8[d]–9[a]. — [d]) B Dn D3 D2 4 5 8 10 तात (for सूत)

9 D2 om. 9[a] (cf. v.l. 8) — [a]) D1 °नय (for °न्याय) D1–4 5 transp. कौशल and वदन S (G2 om.) कुशल (for कौ°) G2 बूहि न (for वदन) — [d]) B2 Dn D5 निधान (for प्रधा°)

10 [a]) K1 दुर्मर्षण (for अम°) — [b]) D2 4 5 सगर्व (for सुलुब्धम्) — [c]) D1 सर्वं मे तद्वचनं च समग्र; D2.4 5 सर्वांश्चैतान्मद्वचनं समग्र

11 [a]) S (G2 om.) परिष्वज्य (for प्रति°) — [b]) T G1 3 चाग (for चापि) — [c]) G4 चेद (for इद) D1 3 निरी° (for समी°) D2 4 5 प्रोवाचेद वचन वासुदेव — [d]) B2 4 G1 लोहितनयनेत्र, Dn1 D2.4 5 लोहिताक्ष प्रवीक्ष्य, G. लोहितोत्पलाक्ष, Cn लोहितान्तायताक्ष (as in text)

12 [a]) K1 D2 6 8 यो वचन (for ते वदतो) — [b]) D1 S (G2 om.) यदु° (for मधु°) D4 6.8 G4 समीहित — From here up to 5. 66. 10, the collations of B2 are shown wherever possible, as the fol. is torn, and a part of it lost — [c]) K1 D4 (m as in text) 6 8 सरता (for भवता) S (except M3, G2 om.) अपि (for हि) K1 D1 3 5 8 मद्वच (for हि म°) G4 मनय (for मद्वच)

13 [a]) B2 missing K4 Dn D5 D7 10 महाशरार्मि

C. 5. 2310
B. 5. 65. 13
K. 5. 59. 12

यथा न होमः क्रियते महामृधे
तथा समेत्य प्रयतध्वमादृताः ॥ १३
न चेत्प्रयच्छध्वममित्रघातिनो
युधिष्ठिरस्यांशमभीप्सितं स्वकम् ।
नयामि वः स्वाश्वपदातिकुञ्जरा-
न्दिशं पितृणामशिवां शितैः शरैः ॥ १४
ततोऽहमामन्त्र्य चतुर्भुजं हरिं
धनंजयं चैव नमस्य सत्वरः ।
जवेन संप्राप्त इहामरद्युते
तवान्तिकं प्रापयितुं वचो महत् ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## ६५

वैशंपायन उवाच ।
दुर्योधने धार्तराष्ट्रे तद्वचोऽप्रतिनन्दति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरेश्वराः ॥ १
उत्थितेषु महाराज पृथिव्यां सर्वराजसु ।
रहिते संजयं राजा परिप्रष्टुं प्रचक्रमे ॥ २
आशंसमानो विजयं तेषां पुत्रवशानुगः ।
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥ ३
धृतराष्ट्र उवाच ।
गावल्गणे ब्रूहि नः सारफल्गु
स्वसेनायां यावदिहास्ति किंचित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं
किमेषां ज्यायः किमु तेषां कनीयः ॥ ४

---

रथवायुनोद्धते, Cn presupposes the text reading! — b) K1.4 D1 5-8 °णाश्वबलप्रसा(D1.7 °ह्रा)रिणा (reading implied by Cn)) — c) B3 कुरुते (for क्रियते) D1.7 महाध्वरे, D3 4 9 मया मृधे, D10 रणाध्वरे (for महामृधे) — d) B Dn D3 समेत्य सर्वे (for तथा समेत्य) G3 M इह यतध्वम्, G4 विघटयध्वम् (for प्रयतध्वम्) T1 G1 5 आगताः (for आदृताः)

14 b) T G1.3 अह्नकमीप्सित स्वकं, G2 4 M अंशमभीप्स(G3.4 °प्सि)त स्वक — d) B3 असितां (for अशिवां)

15 a) K1 D5 6 8 महाचतुर्भुजं, B1 2.4 5 Dn D3 तदा धनंजय, B3 D7.10 हरिं चतुर्भुजं (by transp.), D3.4.9 तदा चतुर्भुज K4 विभु (for हरिं) — b) B (except B3) Dn D3 चतुर्भुजं (for धनजयं) D3 4.9 S (G2 om) सत्वर. — d) K1 D5-8 10 transp. वचो and महत्

Colophon missing in K2 3 5, B2 T2 G1.2 om. it — *Sub-parvan* K1 4 B1 3-5 Dn D3 D1 5-8 10 सजययान, D2 यानसधि; M1 संजयप्रतियान, M3-5 सजयप्रतियान and सजययान; to these all except K4 B1.5 D2 8 add समाप्त — *Adhy name* M1 अर्जुनोद्धतवचनं, M3-5 अर्जुनोद्धतवचनकथनं — *Adhy no* (figures, words or both) K1 G3 M1 4 66, D5 65, D6 62, D7 G4 M2 3.5 67, T1 61, G5 60 — *S'loka no.* Dn 15

## 65

☞ This adhy is missing in K2.3 5 (of v l 5 41. 1, 32 15, 62 6) The MS B2 being damaged, its variants are given wherever possible (cf. v.l 5. 64. 12)

1 b) B D (except D1-4 9) नाभि° (for ऽप्रति°). — d) K1 D10 जनेश्वरा°; Dn D3 D5 6 8 नरर्षभाः, T2 G2.4 नराधिपा (for नरेश्वराः)

2 cd) T1 प्रति° (for परि°) G5 रहिते नृपतीन्सर्वान्संजय पर्यपृच्छत

4 a) A few T G MSS गावल्गणे D3 4 9 सारं च (for नः सार°). — b) Dn1 D3.4.9 त्वं सेनयोर् (for स्वसेनाया) G4 सेनाया वा यदि वेहास्ति किंचित — c) K1 S (except G4 M2) om. त्वं D3 पांडवान् (for °वानां) G4 वेत्सि (for वेत्थ) D3.4.9 पांडवानां च निपुण वेत्थ सर्वं — d) D10 transp किमेषा and ज्यायः K1 किमु चैषा; Dn1 किं नु तेषां, T1 M1.3.4 किमुतैषां D10m G4 गरीय° (for कनीय°)

5 a) K1 D7.10 त्व सेनयो.; T1 G1.3 समेतयोः (for

त्वमेतयोः सारवित्सर्वदर्शी
धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टः संजय ब्रूहि सर्वं
युध्यमानाः कतरेऽस्मिन्न सन्ति ॥ ५
संजय उवाच ।
न त्वां ब्रूयां रहिते जातु किंचि-
दसूया हि त्वां प्रसहेत राजन् ।
आनयस्व पितरं संशितव्रतं
गांधारीं च महिषीमाजमीढ ॥ ६
तौ तेऽसूयां विनयेतां नरेन्द्र
धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां संनिधौ तद्वदेयं
कृत्स्नं मतं वासुदेवार्जुनाभ्याम् ॥ ७
वैशंपायन उवाच ।
ततस्तन्मतमाज्ञाय संजयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ८
संपृच्छते धृतराष्ट्राय संजय
आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।
सर्वं यावद्वेत्थ तस्मिन्यथाव-
द्याथातथ्यं वासुदेवेऽर्जुने च ॥ ९

C. 5. 2522
B. 5. 67. 10
K. 5. 66. 10

इति श्रीमहाभारते उद्योगपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

5 ᵃ) त्वमे°) D1.3 4 S (except T2 G4 M2) सर्वव(D3 4 °वि)त् (for सारवित्) K4 D9 सर्वविचारदर्शी (for सारवित्सर्व°) — ᵇ) T2 G2 निपुण — ᶜ) M स पृष्ट सन् (for स मे पृष्ट) — ᵈ) D5 प्रयुध्य° (for युध्य°)

6 ᵃ) G1 न त्वा, G3 त्वा न, M3-5 त्वा (for न त्वा) — M2 om from हि त्वां up to निपुणौ in 7ᵇ — ᵇ) D1 2 अभ्यसूया हि (for असूया हि त्वा) T2 G1.2 असूया S (except G4 5 M5, M2 om) त्वा (for त्वां) K4 B Dn D5 D8-10 प्रविशेत, M3-5 °सहेतु (for °सहेत) — ᶜ) T1 G1 5 आनायस्व (for आन°) K1 D10 शसित°, K4 B Dn D5 D1.2 5 6 8 महा° (for संशित°)

7 M2 om up to निपुणौ in 7ᵇ (cf. v l 6) — ᵃ) T1 विनयेते — ᵇ) K1 D7 10 धर्माभिज्ञौ (for धर्मज्ञौ तौ) — ᶜ) D1 ज्ञात्वा (for तु त्वा) T1 M (except M2) त्वा (for त्वां) — ᵈ) M (except M2) मन्त्र (for मत) K4 B Dn D5 D6 8 10 केशवपार्थयोर्यत् (for वासुदेवा°)

8 B (except B5) om. the ref — After the ref, Dn D2-6 8 9 ins

359* इत्युक्तेन च गान्धारी व्यासश्चात्राजगाम ह ।
आनीतौ विदुरेणेह सभा शीघ्र प्रवेशितौ ।

— After 8ᵃᵇ, K1 D8 ins

360* त्रिकालदर्शी भगवान्धृतराष्ट्र महामुनि ।

— ᶜ) Dn2 D5 D5 6 महाप्रज्ञ

9 Before 9, K1 4 B Dn D5 D3-6 8 9 ins व्यास उ°. — ᵇ) D3.4.9 एव (for एषो) K1 D7 अभियुक्ते; T G1 2 अनि° (corrupt), Ca अनु° (as in text) — ᵈ) T2 G (except G1) यथातथ्य K1 D10 यद्बूचतुर्वासुदेवार्जुनौ च, D1 यथातथ्य वासुदेवार्जुनौ च

Colophon missing in K2 3 5, D2 3 om it — *Sub-parvan* K1 B Dn D5-7 10 M यानसधि; K4 सजययान, D51 सजययानसधि (510), D52 सजयसधि — *Adhy name* G1 व्यासागमन, M व्यास(M5 वासुदेव) वाक्य — *Adhy no* (figures, words or both) K1 T G2 3 M1 4 67, D5 G5 66, D6 63, D7 G1.4 M2 3 5 68 — *S'loka no* Dn D3 10

## 66

☞ This adhy is missing in K2 3 5 (cf v l 5 41 1, 32 15, 62 6) The MS B2 being damaged, its variants are given wherever possible (cf v l 5 64 12)

1 D2 वैश° उ° (for सजय उ°) — ᵈ) K1 m B (B2 damaged) Dn2 D1.5 (before corr ) 6 7 9 10 Cn स(K1 पू)र्वभावाय, Ca d s as in text B1 3.5 Dn2 D2 7 8 10 Ca समतौ, Cd n.s समितौ (as in text) K4 पूर्वदेवौ सनातनौ, S पूर्वभाव(T1 G1 °ग)समन्वितौ

2 ᵃ) K4 B1 4 Dn2 D5 6 10 m Cn व्यामातर; B2 भावातर, D1-4 7 9 10 दिवोतर, Ca d s धामन्तर (as in text) — ᵇ) B1 3 4 Dn2 D3-6 यथायुक्त, G4 युक्तरूपौ (for यथायुक्त) S (except G2) मनस्विनौ (M2 विच क्षणौ), Cs as in text — ᵈ) D7 प्रतिवर्तते (for वर्तते

## ६६

संजय उवाच ।

अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।
कामादन्यत्र संभूतौ सर्वाभावाय संमितौ ॥ १
द्यामन्तरं समास्थाय यथायुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ २
सापह्नवं पाण्डवेषु पाण्डवानां सुसंमतम् ।
सारासारबलं ज्ञात्वा तत्समासेन मे शृणु ॥ ३
नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान्घोरसंकाशान्क्रीडन्निव जनार्दनः ॥ ४
पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५
भूयो भूयो हि यद्राजन्पृच्छसे पाण्डवान्प्रति ।
सारासारबलं ज्ञातुं तन्मे निगदतः शृणु ॥ ६
एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ७
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ॥ ८
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ ९
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ १०
स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव ।
अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान् ॥ ११
कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान्परिवर्तयतेऽनिशम् ॥ १२
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।

---

विभो) K1 D10 प्रभो, Dn1 Ds1 D8 विभो·

3 $^a$) K4 B D (except D1 8) G8 कौरवेषु (for पाण्ड°) — $^b$) S इति राजसु (T2 इतरेषु च) सत्तम (G3 भारत), C3 पांडवेषु च समत, Cn d पाण्डवानां तु समत — After $3^{ab}$, D5 D9 10 read $6^{ab}$ (D5 D9 *repeating* it in its proper place) — B1 3.4 D2 4 om $3^{cd}$ — $^c$) K1 Ds1 D7 10 G4 सारासार बल; C3 तथाख्येन यल B2 Dn Ds D10 ज्ञातु, C3 ज्ञात्वा (as in text) D6 सारासारं परिज्ञातु — $^d$) B4 Dn तेज पुजावभासित

4 $^b$) B3 D3 6 S चैव (for चैद्य) T G1-4 M स (for च) B2 जनार्दन, G5 महासुरं (for च माधव) — $^c$) K1 D7 8 हतवान्, G5 दानवान् T2 G3 8 °सकाश — $^d$) B (B3 om) Dn Ds महायल (for जना°) — After 4, G3 reads $8^c$ and $9^d$

5 T1 (hapl) om 5–7, M4 (hapl) om 5–10 — $^c$) B3 विशुद्धात्मा, T2 G1 विसृष्टा°, Cn d विशि° (as in text) — After 5, G3 reads $8^c$–$9^d$

6 T1 M4 om 6 (cf v l 5) D5 D9 10 read $6^{ab}$ after $3^{ab}$, D5 D9 *repeating* it here — $^a$) K4 D1 6 9 10 च, G3 M (M4 om) अपि (for हि) — D10 om $6^{cd}$ — $^c$) K4 B2 Dn1 Ds1 D2-6 G4 सारासारं यच, C3 सर्वाचारेण यत K1 C3 ज्ञात्वा (for ज्ञातु) — $^d$) K4 B (B3 damaged) D (except D1.2 7, D10 om)

तत्समासेन मे शृणु

7 T1 M4 om 7 (cf v l 5) G3 (hapl.) om $7^b$–$8^a$ (cf. the reading of D1 M for $8^a$)

8 M4 om 8 (cf. v l. 5), Dn G4 5 om (hapl) $8^{ab}$, G3 om $8^a$ (cf v l 7) — $^a$) K4 Ds1 D1 8 M1 2 भस्मी· (for भस्म) K1 D3 7 10 T2 G1 2 सर्व; D1 M (M4 om) कृत्स्न (for इद) G3 reads $8^c$–$9^d$ after 5 — $^d$) K4 D1 5 M (M4 om.) भस्मी; T G किंचित् (for भस्म) T G जनार्दने

9 M4 om 9 (cf v l 5). For G3 cf. v l 8 — $^b$) D10 (m as in text) धीर् (for ह्रीर्)

10 G3 M4 om 10 (cf. v l 5) — $^c$) D8 विचेष्ट°; Cn विचेष्ट° (as in text) D8 T1 G1 8 भूतानि; Cn d भूतात्मा (as in text) — After 10, D8 ins

361* भस्मीकुर्याज्जगत्सर्वं निमेषेणेति मे मतिः ।;

while T G1 3 ins

362* यत्र मातेऽपि यद्राजन्पृच्छसे पाण्डवान्प्रति ।

11 $^a$) S पांडव (G4 °वे) (for °वान्) D1 पूर्व; D4 सर्व, D8 सर्व, G4 कृत्स्न; Cn d 8 सत्र (as in text) — $^b$) D1 लोकशकाभयादिव

12 $^d$) K4 G1 M (except M8) भृश (for ऽनिशम्)

13 $^a$) D7 M transp च and हि. K1 D3 एव; T1 G1 3 अपि (for च). K4 D1.2 एव (for हि). — $^c$)

ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ १३
ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ १४
तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५

इति श्रीमहाभारते उद्योगपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## ६७

धृतराष्ट्र उवाच ।
कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व संजय ॥ १
संजय उवाच ।
विद्या राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥ २
विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ३
धृतराष्ट्र उवाच ।
गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ४
संजय उवाच ।
मायां न सेवे भद्रं ते न वृथाधर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ ५
धृतराष्ट्र उवाच ।
दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।

C. 5. 2543
B. 5. 69. 6
K. 5. 68. 6

---

G1 5 ईष्टे हि, Ca ईशान (for ईशते)
14 a) G4 ईशिता, Cd ईशन् (as in text) G1 5 °बाहु° (for °योगी) — c) M (except M2) कर्म हि (for कर्माणि) — d) K1m D7 G3 अनीश°, Ca d s कीनाश (as in text) K4 B4 Dn2 D5 6 8 Cn वर्धन, Ca d s दुर्बल (as in text)
15 c) Dn2 D8 4 G3 4 M4 (inf lin as in text) एतम्, D2 एनम्; T2 G2 एवम् (for ये तम्) T1 G1 5 एक, T2 एते (for एव) — d) D1 2m 3–6. 8 9 M2 transp न and ते

Colophon missing in K2 3 5 — *Sub-parvan* K1. 4 B D (except D2) G1 M यानसधि (D8 संजय-यानसधि) — *Adhy name* D2 वासुदेवमाहात्म्य; T1 G1 भगवन्माहात्म्यं, M जनार्दनस्तुति — *Adhy no* (figures, words or both) K1 T G2 3 M1 4 68, D5 G5 67, D6 64, D7 G1 4 M2 3 5 69 — *S'loka no* Dn 15, D8 25

### 67

☞ This adhy is missing in K2 3 (cf v l 5 41 1, 32 15) K5 resumes from stanza 5 (cf. v l 5 62 6)

1 D6 om 1–5 Stanzas 1–4 are missing in K5 (see above) — c) D8 4 9 M2 एत (for एन) — d) K4 त्वम् (for मम)
2 D6 om 2 (cf v l. 1) — a) K1 D2 7 10 Ca d विद्या, B Dn D5 D1 3–5 8 9 10m शृणु, G4 विद्धि (for the first विद्या) K1 D1 2 7 10(m as in text) वेत्थ (D2 °द) त्व (for ते विद्या) — b) G3 M1. 3. 4 मयि (for मम) G5 राजन् (for विद्या) K1 4 D3. 4 9 महीय(K4 D9 °प)ते (for न हीयते) — D7 om. 2cd — c) B (except B1) Dn2 तपो° (for तमो°) — d) T G नाभि(G5 न स)जानासि
3 D6 om 3 (cf v l 1) — 3b=4d — d) B1 3 4 D5 D2–4 7 9 10(m as in text) T Cap प्रभवाव्यय, Ca प्रभवाप्यय (as in text)
4 D6 om 4 (cf v l. 1), G2 om 4–5 — a) A few S MSS गावल्गणे S (G2 om.) ते (for ऽत्र) K1 कथ, B (except B1) [ऽ]धिका (for ऽत्र का) D5 D10 शक्तिर्, T G3. 5 विद्या (for भक्तिर्) — b) D5 transp ते and नित्या K1 नित्य, M2 5 नित्ये (for नित्या) — c) D5 G5 यथा (for यया) — 4d=3b
5 D6 G2 om 5 (cf. v l. 1, 4) K5 resumes! — a) D5 सेवेत (for न सेवे) — b) D2 मृषा-, Ca d s वृथा (as in text) K1. 5 D7 10 वृथा(D7 10 मृषा)धर्मं

C. 5. 2543
B. 5. 69. 6
K. 5. 68. 6

आप्तो नः संजयस्तात शरणं गच्छ केशवम् ॥ ६

दुर्योधन उवाच ।

भगवान्देवकीपुत्रो लोकं चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ७

धृतराष्ट्र उवाच ।

अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्ष्युर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ८

गान्धार्युवाच ।

ऐश्वर्यकाम दुष्टात्मन्वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ ९
वर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ १०

व्यास उवाच ।

दयितोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते संजयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥ ११
जानात्येष हृषीकेशं पुराणं यच्च वै नवम् ।
शुश्रूषमाणमेकाग्रं मोक्ष्यते महतो भयात् ॥ १२
वैचित्रवीर्य पुरुषाः क्रोधहर्षतमोवृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥ १३
यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः ॥ १४
एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जते ॥ १५

धृतराष्ट्र उवाच ।

अङ्ग संजय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां शान्तिमुत्तमाम् ॥ १६

संजय उवाच ।

नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।

---

न चाचरे — c) K5 D7 10 (*sup lin* as in text) शुद्धभावस्ततो, B (except B1) Dn2 Ds D1 3 4 9 शुद्धभाव(D3 4 9 °वा)गतो; Ca d n as in text

7 a) G4 पुडरीकाक्षो (for देवकी°) — b) K4 B D (except D1 7 10) लोकान् (for लोक) K1 स्व, Dn1 M च, Ca d s चेत् (as in text). K1 M3–5 न हनिष्यति, K5 (corrupt) नितर्ष्यति (for निह°)

8 a) K4 अद्य, K5 D2 10m G3 अयं, B3 Dn1 Ds D3–8 Ca s अर्वाक्, D1 सर्वान्, D9 सर्वे, T2 आवा, Cd n अवाक् (as in text). — b) K5 स (for सु) K1 D6 न गच्छत्येष दुर्मतिः — K4 (hapl.) om $8^{c}$–$9^{b}$ — c) K1.5 B D1–6 9 G4 ईर्षुर्, G2 3 ईर्ष्यांद् (for ईर्ष्युर्) M2–5 ईर्ष्यु(M2 5 °पुं)र्दुरात्मवाक्नीचः — d) S शासना° (for वचना°)

9 K4 om $9^{ab}$ (cf v.l 8) — a) G5 ऐश्वर्यं कामाद्दुष्टात्मा — b) G4 श्रेयसां K5 B3 Dn D3 G3 शासनातिग°, D1 वचनातिग — c) K1 5 D7.8 ऐश्वर्यं जीवितं, G4 ऐश्वर्यजीवित, G5 ऐश्वर्ये जीविते — d) T1 G1 3 5 बालिश

10 a) K5 शातिं, D1 हर्षं (for प्रीतिं). — b) S शोकाय (for शोकेन) K4 योज°, D7 10 पीड°, T1 M4 रध°, T2 G2 3 5 रुध°, G1 4 M1–3 5 रध्र°; Cd अर्द°; Ca वर्ध° (as in text) B मा च शोकानले दहन्

11 D1 G5 श्रीव्यास. — a) Hypermetric! K4 B Dn Ds D1–6 8–10 प्रियो° (for दयितो°) K1 5 D7 कृष्णस्य दयितो राजन् — c) D3 4 9 यश्च (for यस्य)

12 b) K1 D1 2 य, Ca s यत् (as in text) K4 Dn1 D3–6 9 10 T1 नर, B Dn2 Ds Ca पर, G1 (*inf lin.*) भव, Cd s नव (as in text) — c) B1–3 D5 8 एकाग्र्य, B4 Dn D6 M2 5 ऐकाग्र्य (for एकाग्र) — d) K1.5 D10 त्रास्यते, B D1.2 मोक्षये, S त्राय° (for मोक्ष्य°). K1.5 B D1 2 7.10 स्वा महाभयात् (for महतो भ°)

13 b) K4 °तमोहता ; B2 4 5 Dn Ds D2–6.9 °समावृता°, D1 M4 क्रोधामर्षतमोवृ(M4 °हृ)ता, G5 क्रोधमोहतमोवृता, M1 (*inf lin* as in text) 2 3 4 (*inf. lin*) 5 °तमो(M2 5 °समा)हृता Cs cites तमोद्धता — c) T2 G2 5 श्रिता., G1 वीता°, G3 स्थिता, Ca d s सिता° (as in text)

14 b) S काममन्युवशानुगाः (T G1 2 °वशगता) — c) D3 4 9 अनु°, Ca d.s अध° (as in text). G5 अधैरधा नीयमानाः — d) G5 तद्वते वै (for नीय°)

15 a) G4 एकतर, Cs एकायन, Ca d as in text — c) K4 Dn1 D1 5 6 8 9 10 (m as in text) Cnp अभ्येति; Cn अत्येति (as in text) — d) K1 D8 सुधन्, Ca d s महान् (as in text) K1 D7 8 नि(D7 न)मज्जति; K5 न गर्हति, B3 4 Dn Ds D1–6 9 10 न सज्जति

16 D6 om from 16 up to $14^{ab}$ of the next adhy. — a) K4 D7.8 अथ, T1 G1 5 त्व हि (for अङ्ग). — d)

आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ १७
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ १८
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च मा ते च्यवतु नियच्छैतां यतस्ततः ॥ १९
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥ २०
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगतो योगाद्वशी तत्त्वे प्रसीदति ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

# ६८

धृतराष्ट्र उवाच ।
भूयो मे पुण्डरीकाक्षं संजयाचक्ष्व पृच्छते ।
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ १

संजय उवाच ।
श्रुतं मे तस्य देवस्य नामनिर्वचनं शुभम् ।
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ २

C. 5. 2560
B. 5. 70. 2
K. 5. 69. 2

K4 B D (except D7 10, D8 om.) सिद्धिम् (for शान्तिम्)

17 D8 om. 17 (cf. v.l. 16) — b) K5 Dn1 Ds2 D10 विद्यात् — c) K4 आत्मात्मनो; C5 आत्मनस्तु (as in text) K1 कृत्नोपायो, D2-4 क्रियोपाय; S प्रियोपायो,ᵒ C5 as in text

18 D8 om. 18 (cf v.l. 16) — c) S संममेन (M ᵒना) (for ऽविहिंसा च) — d) T G (except G3) असशय॰, M2 न सशय

19 D8 om. 19 (cf. v.l 16) — a) D1 G5 Ca.d s शमे (for यमे) G4 युक्तो (for यत्तो) — D7 om. 19ᵉ–20ᵇ. — c) B3 तु (for च) B3 T2 G2 transp मा and ते. K1 Cd च्यवता, B3 च्यचरन्, T G1-3 5 M1.3-5 च्ययतु (for च्यवतु) G4 M2 बुद्धिस्ते मा च्ययां यातु (G4 च्ययतु) — d) G1 नियच्छेस्, Ca d s as in text K4 B Dn D1-2 5 G3 C5 पुनः, D3 D10 इमा, G1 ता, Ca.d पुतान् (for पुता) K5 ततस्, B3 इतस् (for यतस्)

20 D5 om. 20 (cf. v l. 16), D7 om 20ᵃᵇ (cf. v.l 19) — a) K1 ध्यानं (for ज्ञानं) K5 G5 प्राज्ञा (for विप्रा)

21 D8 om 21 (cf. v.l 16) — b) D5 G2 इन्द्रियैरद्(G2 ᵒजि)ताम्मभि — c) K1 (sup lin as in text) आरामाधिगतो, K4 B1 2 6 Dn D3-5 8 आगमाधिगमाद्, B3 4 D5 D7 10 Ca s ᵒधिगताद्, S ᵒभिग(G4 M5 ᵒमिद्र)तो T G (except G3) योगी, Ca d s योगाद् (as in text) — d) K1 Cd s वशे, Ca वशी (as in text)

Colophon missing in K2 3, D8 om it — *Sub-parvan* K1.4 B D (except D1, D8 om.) यानसधि (Ds2 मजानसधि, K5 सजययानसधि — *Adhy name* M दुर्योधनानुशासन — *Adhy no* (figures, words or both) K1 T G2 3 M1 4 69, D5 68, D7 71, G1 4 M2 3 5 70, G5 66 (*inf. lin* 68) — *S'loka no* Dn 21, D5 20

## 68

☞ This adhy is missing in K2 3 (cf v.l. 5 41 1, 32 15)

1 D8 om 1 (cf v.l. 5 67 16) — b) K4 5 B D (except Dn1 D10, D8 om ) पृच्छत , T2 G2 तत्वत (for पृच्छते) — d) G1.3 M2 3 5 प्राप्नुयात्, C5 प्राप्नुयां (as in text)

2 D8 om 2 (cf. v l. 1) — a) M1 (*inf lin* ) शृणु (for श्रुत) K4 B1-3.5 D5 D3-5 8 9 देव-, B4 Dn वासु (for तस्य) K5 यथा श्रुत मे देवस्य — b) K5 श्रुत (for शुभम्) — c) G3 विजाने, C5 अभिजाने (as in text)

3 D8 om 3 (cf v l 1) — a) T1 G1 वासनात्, Ca d.s वसनात् (as in text) — b) G5 M3-5 वासत्वात्; Ca d s वसुत्वात् (as in text) T2 (*inf lin* as in text) G2 सर्व॰, Ca.d.s देव॰ (as in text) — c) K1 2 D7 10 वाच्यो, S ज्ञेयो, Ca वेद्यो (as in text) — d) K4 B (except B4) Dn2 D8-2 9 Cn बृहत्त्वात्,

C. 5. 2609
B. 5. 73. 25
K. 5. 72. 25

तदैव निहतो राजन्यदैव निरपत्रपः ।
निन्दितश्च महाराज पृथिव्यां सर्वराजसु ॥ २१
ईपत्कार्यो वधस्तस्य यस्य चारित्रमीदृशम् ।
प्रस्कम्भनप्रतिस्तब्धश्छिन्नमूल इव द्रुमः ॥ २२
वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।
जह्येनं त्वममित्रघ्न मा राजन्विचिकित्सिथाः ॥ २३
सर्वथा त्वत्क्षमं चैतद्रोचते च ममानघ ।
यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः ॥ २४
अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम् ।
येषामस्ति द्विधाभावो राजन्दुर्योधनं प्रति ॥ २५
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान्गुणान् ।
तव संकीर्तयिष्यामि ये च तस्य व्यतिक्रमाः ॥ २६
ब्रुवतस्तत्र मे वाक्यं धर्मार्थसहितं हितम् ।
निशम्य पार्थिवाः सर्वे नानाजनपदेश्वराः ॥ २७
त्वयि संप्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति ।
तस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत ॥ २८
गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि ।
वृद्धबालानुपादाय चातुर्वर्ण्यसमागमे ॥ २९
शमं चेद्याचमानस्त्वं न धर्मं तत्र लप्स्यसे ।
कुरून्विगर्हयिष्यन्ति धृतराष्ट्रं च पार्थिवाः ॥ ३०
तस्मिँल्लोकपरित्यक्ते किं कार्यमवशिष्यते ।
हते दुर्योधने राजन्यदन्यत्क्रियतामिति ॥ ३१
यात्वा चाहं कुरून्सर्वान्युष्मदर्थमहापयन् ।
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ॥ ३२

---

वधो (for वधश्च). K4 B Dn Ds D6 8 8 चा (for च) G5 °घातिनः, some MSS. °कर्पण — c) D5 8 8 G3 महागुणवधो. — d) D1.2 च (for तु) K1 2 D1 2 10 M1 2 कुजीवित (D1.10 °ता), D3 4 0 जुगुप्सिता, T1 G M3–5 कुजीवन

21 K5 om 21 (of v l. 13). — a) K1 हि; K2 स (for नि) — c) D7 तु, S (except T2 G4) स (for च) — d) K4 B D (except D1.2 7) T2 सर्वराजभि

22 K5 om 22 (of v l 13). — a) T1 G (except G5) ईपत्कार, Ca s as in text. D1.3 4 0 तत्र; D2 स्वस्य (for तस्य) — b) D1.3 4 0 यत्र (for यस्य) — c) K2 प्रस्कंदितप्रतिस्तभ°, K4 D5 6 8 प्रस्क(K4 °स्कु)देन प्रति° ध्वस्त, B1 Dn Ds D3 4 7 9 10 T2 Cs प्रस्कदेन प्रतिस्त(Ds1 D7 Cs °ष्ट)ब्ध, B2–5 प्रस्कुंदेन प्रति°, D1.2 G3 5 Ca d प्रस्कदनप्रतिस्त(D2 °ष्ट)ब्ध, M (except M2) प्रस्तभनप्रति°

23 K5 om 23 (of v l 13) — a) K2 सर्वो वध्य इवानर्थ°. — b) D2 सर्वलोकेषु G5 दुष्कृतिः. — d) K4 Ds2 S (except T2 G1 3.4) Ca d °चिकित्सथा°

24 K5 om. 24 (of v l. 13) — a) K2 T2 स्वक्षम, D1 2 स्वन्मतं, D3 4.0 स्वत्कृते, T1 G1.3 4 M तु मतं; G2 5 अनुमत (for त्वत्क्षम) — b) D3.4.0 transp च and मम T1 G1 4.5 तु; G3 न (for च) T2 रोचते मम मानद — c) D3 4 0 T1 G (except G4) स (for यत्) — d) D3.4 0 10 G3 समाचर

26 K5 om. 26 (of v.l. 13) — b) B3 G5 प्रति° पौरुपि(G5 °प)कान्, D2 G1 प्रातिपौरपकान्, D3 4 8 प्रास° पौरुप(D8 °पि)कान्, Ca d.8 as in text.

27 K5 om 27 (of v l 13) — a) D3 4 0 ब्रुवाणस्य च (for ब्रुवतस्तत्र) D1 7 S (except T2) तस्य (for तत्र). — b) K1 D7 विभो (for हितम्) T1 G1 3 धर्मकामार्थसहित — c) D1 2 श्रुत्वा तु (D2 च); D3 विश्वस्य (for निशम्य)

28 K5 om 28 (of v l 13). — a) G2 4 M सम्प्रतिपत्स्यति. Ca d cite सम्प्रपत्स्यते — b) T1 सत्यवानिति — c) K4 D5 6.8 अस्मिन् (for तस्मिन्)

29 K5 om 29 (of v.l 13) — a) K1 2 D1–4 7.9 10 T2 गर्हयिष्यति K1 ते चैन; K2 ते नून; D3.4 G3 4 चैवैतान्; T1 G1 2 5 M1 2 °नान् (for °न) — d) K4 B1 2.5 D (except D7) T2 चातुर्वर्ण्ये (D3 °र्ण्य) समागते (D3 °मे)

30 K5 om 30 (of. v l 13). — a) S (except T2) धर्मं (for शमं) K4 B D (except D3–8 10) वै (for चेद्) D2 सन् (for त्व) — b) B1 2 4 5 Dn Ds D1 3–0 नाधर्मं, D2 स धर्मस्, D10 T2 न शम (for न धर्मं) B3 नाधर्मं प्रतिपत्स्यसे, T1 G M धर्मं तत्र न लप्स्यसे — d) K4 D5.6 8 T2 पार्थिव

31 K5 om. 31 (of v l 13). — a) D1 2 तत्र दुर्योधनो राजा (D2 राजन्) Ca d 3 cite हते (as in text). — d) D2 किम् (for यद्)

32 K5 om 32 (of v l. 13). — a) K2 D10 गत्वा; B3 यद्वा; Ds योद्धा, D3 4.9 T2 तथा, Ca d यात्वा (as in text) — d) D3.4 9 10 चि- (for च).

33 K5 om 33 (of v l 13). — b) K1 यु(m यु)ध्वा च कारिकां, K2 M2 युद्धाभिकारिकां (M2 °तां);

कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम् ।
निशाम्य विनिवर्तिष्ये जयाय तव भारत ॥ ३३
सर्वथा युद्धमेवाहमाशंसामि परैः सह ।
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे ॥ ३४
मृगाः शकुन्ताश्च वदन्ति घोरं
हस्त्यश्वमुख्येषु निशामुखेषु ।
घोराणि रूपाणि तथैव चाग्नि-
र्वर्णान्बहून्पुष्यति घोररूपान् ।
मनुष्यलोकक्षपणोऽथ घोरो
नो चेदनुप्राप्त इहान्तकः स्यात् ॥ ३५
शस्त्राणि पत्रं कवचान्रथांश्च
नागान्ध्वजांश्च प्रतिपादयित्वा ।
योधाश्च सर्वे कृतनिश्रमास्ते
भवन्तु हस्त्यश्वरथेषु यत्ताः ।
सांग्रामिकं ते यदुपार्जनीयं
सर्वं समग्रं कुरु तन्नरेन्द्र ॥ ३६
दुर्योधनो न ह्यलमद्य दातुं
जीवंस्तवैतन्नृपते कथंचित् ।
यत्ते पुरस्तादभवत्समृद्धं
द्यूते हृतं पाण्डवमुख्य राज्यम् ॥ ३७

C. 5 2716
B. 5. 73. 42
K 5. 72. 42

इति श्रीमहाभारते उद्योगपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

$B_{1\,2\,3}$ $D_{1\,7}$ T $G_{1\,2\,4\,5}$ $M_1$ युद्धाधिकारिणा ($B_3$ $G_4$ °र्णी; $D_{1.7}$ $M_1$ °तां), $D_2$ युद्धा विकारिणा, $D_{3-6\,9}$ युद्धाधिकार ($D_{5\,6}$ °रि)ण, Cd युद्धावधारिका, Cs as in text — [c]) $K_4$ B D (except $D_1$) $T_2$ $G_3$ निश($D_2$ °य)म्य — [d]) $G_5$ भरतर्षभ (for तव भा°)

34 $K_3$ om. 34 (cf. v l 13) — [c]) $K_1$ $D_3$ $D_1$ च, $K_2$ $D_6$ $G_{1-3\,5}$ दृष्ट (for हि) $D_{n1}$ $D_{3\,4\,9}$ पश्यामि, $D_7$ रूपाणि (for सर्वाणि) $G_4$ निमित्तानि सहस्राणि — [d]) $D_5$ दृष्ट्वा, $D_7$ यथा (for तथा)

35 $K_3$ om 35 (cf. v l 13) — [b]) $D_5$ निशामुखे च, $D_6$ तथा रथेषु, $G_{3\,4}$ M निशामये च — [c]) $K_2$ $D_2$ च, $T_1$ $G_1$ अति- (for अथ) $K_4$ B Dn $D_5$ $D_{8-10}$ $T_2$ मनुष्यलोक($D_9$ °के)क्षयकृत्सुघोरो ($D_{n1}$ °त्सुघोरात्, $D_8$ °त्स मघो), $D_1$ मनुष्यलोक कृपणश्च घोरो — [f]) $K_{1\,4}$ $D_{3-5\,7-9}$ $T_2$ Cd s न (for नो) $K_{2\,4}$ S (except $T_2$ $G_4$) इह (for अनु) $D_{n1}$ $D_5$ $D_{8\,10}$ S (except $T_2$) ह्यान्तक, Cn s as in text $D_1$ इहानु कस्मात्

36 $K_3$ om 36 (cf v l 13) — [a]) $D_{3\,4\,9}$ $T_2$ अस्त्राणि $K_4$ B (except $B_3$) D (except $D_5$ $D_{1\,7\,10}$) $T_2$ यत्र, Ca.d पत्र (as in text) Cn कवचा, Cnp कवचान् (as in text) $K_1$ कवचायुधानि, B कवचा रथाश्च, $D_2$ $G_6$ M कवच रथांश्च, $G_4$ पवनाश्रयाश्च ※ Cn कवचा कवचानि वर्माणि सुपा सुलुगिति सुपो डादेश. । नान्त पाठे पुस्त्वमार्षं । ※ — [b]) $K_4$ B Dn $D_5$ $D_{6\,8}$ $T_2$ हयान्, $G_4$ ग्रहान् (for ध्वजान्) $K_1$ S (except $T_2$) °पादयस्व; $K_2$ °पादयामि, $D_{7\,10}$ °पादयध्व, Cs as in text — [c]) $G_5$ $M_{3-5}$ यौधा $K_4$ B Dn $D_5$ $D_{2\,5-8\,10}$ $T_2$ $G_2$ $M_{2\,5}$ °निश्चयास्ते ($B_1$ $G_2$ °श्च), $D_{3.4\,9}$ °युद्धनिष्ठा ; $T_1$ $G_{3\,4}$ °विश्र($G_3$ °विक्र)माश्च — [d]) $K_1$ $D_{1\,2}$ $G_{1\,3\,5}$ $M_1$ भवति S (except $T_2$ $G_{1\,4}$) युक्ता (for यत्ता) $D_{3\,4\,9}$ हस्त्यश्वमुख्याश्च रथेन युक्ता — [f]) $K_2$ सज्ज (for सर्वं) $K_2$ वै, $D_1$ $M_4$ ते, $D_6$ त (for तन्)

37 $K_3$ om 37 (cf v l 13) — [b]) $K_{2\,4}$ $D_{1\,8}$ $G_5$ तथा (for तव) — [c]) $D_7$ $G_5$ $M_{2\,4}$ यस्, $G_3$ तत् (for यत्) — [d]) $K_1$ $D_{10}$ जित (for हृत)

Colophon missing in $K_3$, $K_5$ $D_{5\,6\,8}$ $T_2$ om it — *Sub-parvan* $K_{1\,2}$ B Dn $D_5$ $D_{1\,2\,7\,10}$ $T_1$ $G_1$ M भगवद्यान — *Adhy name* M वासुदेववाक्य — *Adhy no* (figures, words or both) $D_7$ $T_1$ $G_{2\,3}$ $M_{2\,3\,5}$ 74, $G_{1\,4}$ 75, $G_5$ $M_{1\,4}$ 73 — *S'loka no* Dn 42, $D_5$ 43

## 72

☞ This adhy is missing in $K_3$ (cf v l 5 32 15)

1 $K_{2\,4\,5}$ Dn $D_5$ $D_{5\,7\,8\,10}$ $T_2$ भीम उवाच, G M भीम — [d]) $K_5$ $D_{n1}$ भीषये, S (except $G_4$) भीषय.

# ७२

C 5. 2717
B. 5. 74. 1
K. 5. 72. 1

भीमसेन उवाच ।

यथा यथैव शान्तिः स्यात्कुरूणां मधुसूदन ।
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः ॥ १
अमर्षी नित्यसंरब्धः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः ॥ २
प्रकृत्या पापसत्त्वश्च तुल्यचेताश्च दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥ ३
अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥ ४
म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतम् ।
तादृशेन शमं कृष्ण मन्ये परमदुष्करम् ॥ ५
सुहृदामप्यवाचीनस्त्यक्तधर्मः प्रियानृतः ।
प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ॥ ६
स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः ।
स्वभावात्पापमन्वेति तृणैस्तुन्न इवोरगः ॥ ७
दुर्योधनो हि यत्सेनः सर्वथा विदितस्तव ।
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ॥ ८
पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम् ।
इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः ॥ ९
दुर्योधनस्य क्रोधेन भारता मधुसूदन ।
धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः ॥ १०
अष्टादशेमे राजानः प्रख्याता मधुसूदन ।

---

D8 4 9 मा स्म युद्धैर्विभीषयेः

2 a) Dn2 S (except T2 G2, M1 *inf lin* as in text) अमर्षात, D8 4 9 स मूर्खो (for अमर्षी) K1 (m as in text) D10 T1 G4 5 M1 (*inf lin*) नित्यसरभ , K4 B Dn D8 D8–9 T2 जातसरभ. — b) D7 10 असहृद्वेषी, G1 3–5 M श्रेयो द्वेष्टि (M1 *inf lin* श्रियो द्वेष्टि, M5 श्रेयो दृष्टि) K1 5 D7 10 दुरात्मवान्, G2 महात्मना (for महामना ) — d) K5 G2 4 साम्ना चैन (G2 °च), D2 सान्त्वेनैव, D8 4 9 सान्त्वोपेत K2 समाचर, Ca s as in text

3 a) K1 2 D1 2 °शील:, D7 M1 °चेता°, T1 G1 4 °सधि°, G2 3 5 M (M1 *inf lin*) °सध (for °सत्त्व ). — b) K5 B (except B3) Dn D8 D5 6 10 T2 G3 तु, G2 स (for च)

4 a) K2 5 निष्ठूर , D8 4 5 m. 9 पापात्मा; D7 दुष्टात्मा, Cs as in text — b) D8 4 9 क्षेप्ता तुल्यपराक्रमी — c) K2 4 D1 2 (m as in text) अमेय°, D8. 4 9 अतेजा°, G4 अनीश , Ca d as in text — d) D8 4 9 दुरात्मा (for पापा°)

5 a) G3 5 M म्रियेद्द (for म्रियेत) — b) D8 न वै (for नैव) K2 स्वक प्रिय, Dn2 (*sup lin*) स्वभावक, S (except T2) स्वकर्म त(T1 °कृ)त् (for स्वक मतम्) — c) K5 D10 (*sup lin* as in text) तादृशे तु K1 5 B3–5 D (except D1 2 3) शम — d) K1 5 B2–5 D (except D1) °दुष्कर , G5 °दुस्सह

6 a) K2 अनाधीन°, K4 D7 नाधीन , Ca d s as in text — b) K2 4 B (except B2) Dn T1 G1 2 5 M1 त्यक्तधर्मा B3 T1 G1 5 अनृतप्रिय° (for प्रियानृत ) K5 त्यक्तधर्मपरानत (sic) — c) K1 2 5 D7 10 निहति च (for प्रतिहन्ति) — d) G2–5 M वचासि च (for वाचश्चैव) T1 G1 मनांसि च वचांसि च

7 b) B (except B4) Dn2 D8 D3–5 9 T2 G5 स्वभावात् (for °व) B1–3 तुष्टिं, B5 D8 दुष्टिं, Ca दुष्ट (as in text) K2 D2–4 9 आश्रित° (for आस्थित°) N (except K2 D1 7, K3 missing) T2 अभ्येति (for अन्वेति) — d) B3 तृणात् (for तृणैः) K2 D10 तुन्न ; K4 5 B Dn D8 D1–6. 8 9 T G3 छन्नः, G2 स्विन्न°; Cs रिन्न°, Cd तुन्नः (as in text)

8 a) K1 2 5 D7 जयत्सेन°, B3 हि दुश्चेष्ट , D8 D3. 4 9 तु यच्छीलः, D1 2 यथा कृष्ण, S हृषीकेश (for हि यत्सेन ). — c) D1 °प्रभाव° (for °स्वभाव°). — d) K4 D5 6 8 यद्धनो (for यद्बलो)

9 b) M सहमित्रास् (M5 सुहृन्मित्रास्) G5 प्रसुप्तास्ते तदा वय.

10 a) S (except T2) क्रोधस्तु (for क्रोधेन) — b) K4 B (except B3) D10 भरता, D8 भविता (sic), D1–4 9 S (except T2) भारतान् — K5 (hapl) om 10c–11b — c) K2 धक्ष्यति, D1. 3 4 9 T1 G धक्ष्यते; M1 धक्ष्येद्धि — d) D1 2 तृणानि (for वनानि) D1 एव (for इव) K1 हुताशिना, K2 D1–4 7–9 S हुताशन°

11 K2 om. 11ab (cf v l 10). — b) D2 4. 9 पुरुषोत्तम (for मधु°) — c) D8 4 9 चै सचिच्छिदुर् (for समुधि°) — d) D2 4 9 एव (for स )

ये समुच्चिच्छिदुर्ज्ञातीन्सुहृदश्च सवान्धवान् ॥ ११
असुराणां समृद्धानां ज्वलतामिव तेजसा ।
पर्यायकाले धर्मस्य प्राप्ते बलिरजायत ॥ १२
हैहयानामुदावर्तो नीपानां जनमेजयः ।
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः ॥ १३
अजबिन्दुः सुवीराणां सुराष्ट्राणां कुशर्द्धिकः ।
अर्कजश्च बलीहानां चीनानां धौतमूलकः ॥ १४
हयग्रीवो विदेहानां वरप्रश्च महौजसाम् ।
बाहुः सुन्दरवेगानां दीप्ताक्षाणां पुरूरवाः ॥ १५

सहजश्चेदिमत्स्यानां प्रचेतानां बृहद्बलः ।
धारणश्चेन्द्रवत्सानां मुकुटानां विगाहनः ॥ १६
शमश्च नन्दिवेगानामित्येते कुलपांसनाः ।
युगान्ते कृष्ण संभूताः कुलेषु पुरुषाधमाः ॥ १७
अप्ययं नः कुरूणां स्याद्युगान्ते कालसंभृतः ।
दुर्योधनः कुलाङ्गारो जघन्यः पापपूरुषः ॥ १८
तस्मान्मृदु शनैरेनं ब्रूया धर्मार्थसंहितम् ।
कामानुबन्धबहुलं नोग्रमुग्रपराक्रमम् ॥ १९
अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः ।

C. 5. 2726
B 5. 74. 20
K. 5. 72. 20

12 a) D8 4 9 S (except T2) प्रवृद्धाना (for समृ°) — d) K5 B D (except D1. 5 9) T2 (*inf lin* as in text) कलिर् (for बलिर्)

13 a) D1 S (except T2 G4) हेहयाना K5 B Dn1 D2 7 10 G1. 2 मुदावर्तो (G1 2 °र्ति), D1. 2. 4 G4 उपावर्तो (G4 °र्ती), T1 G3 5 M1. 2 उदावर्ती — b) K5 मायाना, M2-5 नीचा° (for नीपा°) — c) K5 तु जलम्नाना, D7 तारजवानां — d) D4 कृपीणाम्, D9 वृष्णीनाम्, a few MSS क्रिमीणाम् K1 कृपीणा मुद्गलो, K2 हयीणां मुद्गलो, K5 क्रपीणा मुजलो, D1 क्रिमीना सुहृतो, D7 कृमीणा युगलो, T1 G कृमीणा (G3 क्रपीणा) मुद्गलो D2 T2 M उद्गतो, D9 उद्भवो (for उद्धतो)

14 b) K5 M4 5 सु(M4 सौ)वीराणां, M1 (*sup lin*) 2 कुणिकाना (for सुराष्ट्राणा) K1 2 5 D8 10 कुशद्विप, K4 रथार्द्धिक ; B Dn2 Ds D1 2 5 6 T2 स्पर्द्धिक (B3 स्वपर्द्धिक), Dn1 D2 4. 9 अयार्द्धिक — c) Ds D7 अलर्क°, S अजक° (for अर्कज°) K1. 2 D7 9 बलाहा(D7 °का)ना, K5 बलाना च, G2 5 कलिंगाना — M2 om $14^{d}$–$16^{c}$ — d) Ds D3 4 9 नीचाना, T1 G2-4 वैनाना, T2 वीराणां K1 दौतमूलक, K2 दूत°, K5 दौनु°, Dn1 D2 4 9 चौर°, D5 धौतमौलिक, D2 धौति°, T1 G2 4 M1 धौ(G4 द्वै)तमोहक, G1 2 5 °मोहन ; M2-5 °माहुक

15 M2 om 15 (cf v l 14) — b) B Dn1 D2-4 9 10 T2 वरसु°, Dn2 D6 वरमु°, Ds D10 (*sup lin*) वनेयु°, D5 8 वरज°, G4 परमू° (for वरप्र°) K1 G3 4 M3 4 मनौजमा T1 G2 5 व(T1 प)रश्च प्रमनौक्मा, G1 परविस्रो वर्नौकमा, G2 वरग्रीहो वर्नौकमा — c) K1 वह, K2 5 D1 7 वाह, Dn1 D4. 6 बहु (for बाहु°) K4 Dn Ds D3 6 8 9 T2 °वेपाणा (*or* °वेगानां), D7 °वशाना

16 M2 om $16^{abc}$ (cf v.l. 14) — a) K1 2 5 D7 समाज (for सहज) K1 5 D7 चेदि(K5 चैव)मुत्स्याना, D1 चेदिवत्साना G5 सजयश्चेतिखनता — b) K4 B D T2 प्रवीराणा, T2 वृकाणा च, G1 वृत्साद्याना, G2-4 M3-5 प्रस्ता(G3 °स्या-, G4 °या)ता°, G5 मतस्या°, M1 प्रवादा° (for प्रचेता°) K4 हर्योद्वह, B Dn Ds D1. 5 6 8 10 वृषध्वज, D2 नृपध्वज, D3. 4 9 नृपोद्वह, T1 G5 वृपोत्सव, G1 2 M (M2 om) वृपोद्वह, G3 मनोद्वह, G4 वृपोध्वगा° (for बृहद्बल) — c) K1 2 5 B3 D1 5 8 वारणश् K2 चडवत्साना, K4 B2 4 Dn Ds D5-7 10 चन्द्रवत्साना, B1. 3 5 D3. 4 9 T2 चन्द्रवशाना, D8 G4 चेदि° — d) K1 सुदुरघाना, K2 B2 मकुष्ठा°, K5 सुधन्वा°, B3 स्वकुमा°; Ds मुकुन्दा°, D6 8 उत्कटा°, D7 सुकुन्दा°, D10 मुकुटी°, T1 G1 5 करभ्राणा; G2 आभ्राणा च, G3 4 M1 3 करधाना, M2 4 (*inf lin*) कवधाना K5 विहायन, D7 विमोह°, G2 विराह°, G4 विशोभ°, G5 वशो हि न, M3 4 (*inf lin* as in text) विशाहन

17 G3 om 17 — a) K2 5 B5 Dn1 D3 4 9 ममश्च; G5 दमश्च D1 गमश्चदनवेगाना — b) A few MSS °पाशना — d) K5 B3 4 Dn2 Ds D6 7 10 (*sup lin*) T2 कुले कु(K5 च)पुरुषाधमा

18 a) D3 4 9 अय च (for अप्यय) — D8 (hapl.) om. $18^{b}$–$21^{b}$ — b) K1 2 युगात K4 कालसमत

19 D8 om 19 (cf v.l 18) — a) D3. 4 9 मृदु ; T2 (by corr) मृत्यु (for मृदु) K5 तु शामनैर् (for मृदु शनैर्) K1 2 m D3. 4 9 एवं, K4 B Dn Ds D6-7 T2 ब्रूया (for एन) — b) K2 स्व ब्रूया धर्मसंहित, K4 B Dn Ds D6-7 T2 धर्मार्थमहित हित (Dn1 वच) — c) K4 B (except B4) Dn2 D2 10 G3 M कामानुबध बहुलं, G4 कामानुबधमघुर, Cn as in text. — d) G4 क्रूर न (for नोग्रम्) K4 5 B D (except D3. 4 9 10, D8 om) T2 उग्रपराक्रम (Ds2 D2 T2 °म)

20 D8 om. 20 (cf v l 18) — b) K5 T1 G4

नीचैर्भूत्वानुयास्यामो मा स्म नो भरता नशन् ॥ २०
अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह ।
वासुदेव तथा कार्यं न कुरूननयः स्पृशेत् ॥ २१
वाच्यः पितामहो वृद्धो ये च कृष्ण सभासदः ।
भ्रातॄणामस्तु सौभ्रात्रं धार्तराष्ट्रः प्रशाम्यताम् ॥ २२
अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति ।
अर्जुनो नैव युद्धार्थी भूयसी हि दयार्जुने ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## ७३

वैशंपायन उवाच ।
एतच्छ्रुत्वा महाबाहुः केशवः प्रहसन्निव ।
अभूतपूर्वं भीमस्य मार्दवोपगतं वचः ॥ १
गिरेरिव लघुत्वं तच्छीतत्वमिव पावके ।
मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरम् ॥ २
संतेजयंस्तदा वाग्भिर्मातरिश्वेव पावकम् ।
उवाच भीममासीनं कृपयाभिपरिप्लुतम् ॥ ३
त्वमन्यदा भीमसेन युद्धमेव प्रशंससि ।
वधाभिनन्दिनः क्रूरान्धार्तराष्ट्रान्मिमर्दिषुः ॥ ४
न च स्वपिषि जागर्षि न्युब्जः शेषे परंतप ।

---

अधी(G4 °नी)श्वरा (for अधश्चरा) — K5 om 20ᶜ–22ᵃ — ᵃ) T1 G1 5 M स्थित्वा; G3 भूयो (for भूत्वा). M3–5 अनुपास्यामो — ᵈ)=5. 74 18ᵈ D3.4.9 T2 न, Ca d मा (as in text) K4 [अ]स्माको, D5–7.9 T2 [अ]स्मत्तो (for स्म नो) T1 G (except G3) M1 (inf lin) 3 4 ते (for नो) K1 2 T1 G4 भारता D3.4 9 S नशुः, Ca d as in text.

21 D3 om 21ᵃ (cf v l 18), K5 om 21 (cf. v l. 20) — ᵈ) G5 कुरुश्च (for कुरून्) G3 M1 अयश (for अनय)

22 K5 om 22 (cf v l 20), K4 om 22ᵇ–23ᵉ — ᵇ) D1 2 तस्य, D3 4 9 S (except T2 G3) तत्र (for कृष्ण) — ᵉ) G1 5 सौहार्दं, Ca सौभ्रात्र (as in text)

23 K4 om 23ᵃᵇᶜ (cf v l 22) — ᵃ) M1 2 एव, Ca एतत् (as in text) K2 5 D7 एन, M1 2 एतत् (for एव) — ᵇ) Dn2 D5–7 10 M1 एव (for एव) K5 B5 S (except M1 2) प्रशास्यति (for प्रशंस°) — ᵈ) K5 भुयिष्ठा हि, G5 गुदासीनो, Ca as in text T1 G1 3 4 M नो, G2 मे (for हि).

Colophon missing in K5, D5 6 8 T2 om it — *Sub-parvan* K1 2 5 B Dn Ds D1 2 7 10 T1 G1 M भगवद्यान — *Adhy name* D3 भीमसेनवाक्य, M1 भीमवाक्यं, M2–5 भीमसेनवचनं — *Adhy no* (figures, words or both) K1 (marg sec m) D7 T1 G2 3 M2 3.5 75, G1 4 76, G5 M1.4 74 — *S'loka no* Dn1 23, D3 66.

### 73

☞ This adhy is missing in K5 (cf. v l. 5. 32 15)

1 ᵃ) K2 D1 2 G1 3–5 M स तत् (for एतत्) G2 तच्छ्रुत्वा तु महा° — ᵈ) K4 B Dn2 Ds D5 6 8 10 (sup lin) मार्दवोपहित

2 ᵃ) T1 G1 5 तु, G2 च (for तच्) — ᵇ) T1 G1 5 घर्मदीधिते, T2 (inf lin) G2–4 M इव तेजस° (for इव पावके) — K3 (hapl) om 2ᶜ–3ᵇ — ᶜ) Ds1 M राजानुज; Ca as in text

3 K5 om 3ᵃᵇ (cf v.l 2) — ᶜ) D7 10 भीमसेनं स (for भीममासीन) — ᵈ) G4.5 हि (for अभि)

4 Before 4, K1.4 B2 5 D3 D5 6 8 ins. भगवानुवाच, K2 5 B1 3 4 Dn D3 4 6 7 9 10 T2 श्रीभगवानुवाच (D3 4 om उ°), G5 श्रीकृष्ण — ᵃ) T2 (by corr) G2–5 M1 2 स (M1 3 यस्) त्व सदा, M3–5 न त्व यदा (for त्वमन्यदा) T1 G1 ननु स त्व सदा भीम, G3 ननु त्व सर्वथा भीम. — ᶜ) G2 3 5 युद्धाभिनदिन. K1 क्रोधात्, D1 S (except T2) पापान् (for क्रूरान्) — ᵈ) K1 प्रमर्दिषु°; K4 D2–5 9 S (except T G1 2) निमर्दिषु (D3 °तु), Ca d as in text

5 ᵇ) S (except T2) कुब्जः, Ca न्युब्ज (as in text) K5 निशि न्युब्ज, D3 4 9 शुप्यसे च (for न्युब्ज शेषे)

घोरामशान्तां रुशतीं सदा वाचं प्रभाषसे ॥ ५
निःश्वसन्नग्निवर्णेन संतप्तः स्वेन मन्युना ।
अप्रशान्तमना भीम सधूम इव पावकः ॥ ६
एकान्ते निष्टनञ्शेषे भारार्त इव दुर्बलः ।
अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ॥ ७
आरुज्य वृक्षान्निर्मूलान्गजः परिभुजन्निव ।
निघ्नन्पद्भिः क्षितिं भीम निष्टनन्परिधावसि ॥ ८
नास्मिञ्जनेऽभिरमसे रहः क्षियसि पाण्डव ।
नान्यं निशि दिवा वापि कदाचिदभिनन्दसि ॥ ९
अकस्मात्स्मयमानश्च रहस्यास्से रुदन्निव ।
जान्वोर्मूर्धानमाधाय चिरमास्से प्रमीलितः ॥ १०
भ्रुकुटिं च पुनः कुर्वन्नोष्ठौ च विलिहन्निव ।
अभीक्ष्णं दृश्यसे भीम सर्वं तन्मन्युकारितम् ॥ ११
यथा पुरस्तात्सविता दृश्यते शुक्रमुच्चरन् ।
यथा च पश्चान्निर्मुक्तो ध्रुवं पर्येति रश्मिवान् ॥ १२
तथा सत्यं ब्रवीम्येतन्नास्ति तस्य व्यतिक्रमः ।
हन्ताहं गदयाभ्येत्य दुर्योधनममर्षणम् ॥ १३
इति स्म मध्ये भ्रातॄणां सत्येनालभसे गदाम् ।

C. 5. 2733
B. 5. 75. –
K. 5. 74. 1–

— c) D8 4 अशीता (for अशान्ता) K1 B1.4 5 Dn D1 2 6 7 Ca d s स्पर्ती, B2 8 Ca p उपर्ती, D3 4 9 उशर्ती, G2 8 रुदर्ती

6 a) K4 B Dn D3–5 8 9 T2 (before corr ) अग्निवत्तेन, Ca d s अग्निवर्णेन (as in text) S (T2 by corr ) विनिश्वसन्नग्निवर्ण — b) T1 G1.5 सक्रुद्ध स्वे(T1 ते)न तेजसा — d) T1 G1 5 विधूम, G8 निर्धूत, M निर्धूम (for सधूम)

7 a) K (K8 missing) B1 D1–8 T2 Ca. d नि श्वसन् (for निष्टनन्) — c) K1 D2 6–7 T1 G1 5 M3–5 त्वा (for त्वां)

8 a) K3 D1 Cd आभज्य, K5 B1 2 5 Dn1 D5–9 G1 Ca आरुह्य, Cn s आरुज्य (as in text) K5 निश्चिलान्, D1 उन्मूल्य, S (except T2 G3 4) उन्मूलान्, Ca निर्मूलान् (as in text) — b) Dn1 मत्त, D8 4 9 गजान्, S (except T2) भजे (for गज ) K1 4 5 B1 D (except D5 D1) T2 Ca d.s परिरुजन्, K2 प्रविरुजन्, T1 G M परिभवन् (for °भुजन्) — K5 (hapl ) om 8c–11b — c) S (except T2 M2) पद्भ्या (for पद्भि ) D8 4 9 चापि (for भीम) — d) K1 निधुनन्, K4 D1.2–6 8 9 T2 निष्टुर, D7 नि श्वसन्, G2 निनदन्, Ca निष्टनन् (as in text) K2 तिष्टन्निपरिधावसि

9 K5 om 9 (cf. v l 8) — a) B1 Dn1 D5 6 8 T2 Cn जने न, G8 जने ह्रि (for जनेऽभि ) — K4 om 9b–10a — b) K1.2 D1 T2 G2–4 M क्षीयसि, B Dn D5 D2–10 T1 G1 5 क्षिपसि (N B In D MSS प and य are almost indistinguishable), Cd क्षीयसे, Ca s क्षियसि (as in text) — c) K1 2 त्व, Ds2 अन्यत्, D1 10 अत्र, S (except T2 G8) अत्रन (for अन्य) G2 अपि (for निशि) B D (except D1) T2 G2 4 M2 च (for वा) — d) D5 D7 m T1 G1 5 अपि (for अभि )

10 K5 om 10 (cf v l 8), K4 om 10abc (cf v l 9) — a) D2 अकाम स्मय°, S (except T2) अस्वस्थो (T1 G2 °स्थ )स्मय°, Ca d as in text — b) K1 D8 अभि , K2 D1 G4 5 आमे, D2 7 आस्ते, Ca d आस्से (as in text) D2 9 रुद°, D8 4 तुद° (for रुद°) — After 10ab, D8 reads 11c–13b — c) T1 G1 2 5 अमे, G8 4 M अर्धा (for जान्वोर्) K1 2 D8 4.9 आस्थाय, T1 G2 M8 4 (inf lin as in text) आदाय (for आधाय) — d) K1 2 Ds2 T1 आसे, D1 आमे (for आस्से) Dn1 D8 4 9 प्रपीदित , D7 m 10 निमीलित , Ca d प्रमीलित (as in text)

11 K5 om 11ab (cf v l 8) — a) Some MSS भ्रुकुटीं D7 10 वै (for च) D8 4 9 तत (for पुन ) — b) K4 B Dn Ds D2 5–8 10 T2 विदशन्, D8 4 9 एव लिहन् (for विलिहन्) G4 ओष्ठौ परिलिहन्निव — For sequence of D8 cf v l 10 — c) D1 2 वीर (for भीम)

12 For sequence of D8 cf v.l. 10 D6 (hapl ) om 12ab — a) T1 G1 8 4 M4 (inf lin ) सवितुर् (for सविता) — b) T1 G8 4 Cd शुक्र , Ca शुक्र , Cs शुक्र (as in text) — K5 (hapl ) om 12cd — c) K2 G8 M2 तथा (for यथा) — d) B2 8 Ds1 T1 G2 M4 5 रश्मिमान — After 12, G5 reads 15cd

13 For sequence of D8 cf v l 10 — a) D5 G5 यथा, Cs तथा (as in text) K5 D1 सत्वं, Cs सत्य (as in text) D1 ब्रवीम, Cs ब्रवीमि (as in text) K2 एप, K4 B8 D8 4 9 एव, Cs एतत (as in text) — b) G2 M4 (inf lin ) मत्य (for तस्य)

14 b) G2 8 M1 8 आलप(M8 °भ)से, Ca d आलभसे (as in text) — d) K4 B Dn1 Ds D1 5 6 8 10 G8 ध्रियते (B8 ह्रीयते), D2 4 9 यतते, D7 ह्रीनेव, Ca d

C. 5 2763 B 5. 75. 14 K. 5. 74 14

तस्य ते प्रशमे बुद्धिर्धीयतेऽद्य परंतप ॥ १४
अहो युद्धप्रतीपानि युद्धकाल उपस्थिते ।
पश्यसीवाप्रतीपानि किं त्वां भीर्भीम विन्दति ॥ १५
अहो पार्थ निमित्तानि विपरीतानि पश्यसि ।
स्वप्नान्ते जागरान्ते च तस्मात्प्रशममिच्छसि ॥ १६
अहो नाशंससे किंचित्पुंस्त्वं क्लीब इवात्मनि ।
कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः ॥ १७
उद्वेपते ते हृदयं मनस्ते प्रविषीदति ।
ऊरुस्तम्भगृहीतोऽसि तस्मात्प्रशममिच्छसि ॥ १८
अनित्यं किल मर्त्यस्य चित्तं पार्थ चलाचलम् ।
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ १९
तवैषा विकृता बुद्धिर्गवां वागिव मानुषी ।
मनांसि पाण्डुपुत्राणां मज्जयत्यप्लवानिव ॥ २०
इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम् ।
यदीदृशं प्रभाषेथा भीमसेनासमं वचः ॥ २१
स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत ।
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव ॥ २२
न चैतदनुरूपं ते यत्ते ग्लानिररिंदम ।
यदोजसा न लभते क्षत्रियो न तदश्नुते ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

धीयते (as in text) K5 D8 4 7 9 च (for ऽद्य).

15 a) K4 B D (except D1-4 9) T2 अहो युद्धाभिकांक्षाणा (D8 D7 °णि) — G5 reads 15cd after 12 — c) D8 चेतसा, D2 पश्यसे (for पश्यसि) K4 B Dn D5 6 8.10 T2 चेतांसि विप्रतीपानि, D8 4 9 T1 G M पश्यसे चासमृद्धानि, D7 ये तां विप्रतिमानिकीं Ca d cite अप्रतीपानि (as in text) — d) K4 B Dn2 D3 5.6 8 10 T2 यत्त्वा, D8 यद्वा, D1 तं त्वा, T1 G1 2 न त्वां, G3 M न त्वा (for किं त्वां) K5 किं त्वा भीम वदति ते, Dn1 D8 4 9 त्व भीमार्थाश्च विदसि, D7 त्वा भीर्भीम विनदति, G4 न त्वा भीम विनदति, G5 मनसा भीम नश्यति

16 B8 om 16ab — c) D1 7 जाग्रतांते, S जाग्रदंते, all comm जागरांते (as in text) — d) = 18d M3 4 कस्मात् (for तस्मात्)

17 K4 om from 17 up to 5 74 3, G2 4 om (hapl) 17-18. — a) D8 4 9 किं तु (for किंचित्) — b) D1 इह (for इव) — K5 om 17c-20d — c) D8 4 9 अभिसपन्न° (for अभिपन्नोऽसि) — d) D7 किं तु; M3-5 केन (for तेन)

18 K4 5 G2 4 om 18 (cf v l 17) — a) Ds2 D4 9 G3 5 मे (for ते) — b) D1-4 9 च (for ते) B Dn D5 D2-10 T2 प्रतिसीदति (for प्रविषी°) — c) D8 4.9 अनुकपगृ° — 18d = 16d.

19 K4 5 om 19 (cf v l 17) — b) B D (except D8 4 7 9 10) T2 M2 5 transp चित्त and पार्थ K2 D8 4 9 चलाचलं, D7 चल सुख, Ca.d 8 चलाचल (as in text) — c) B2 4 D1 वातवेगप्रतिहता (D1 °चला); D8 4 9 वातवेगेन चलिता — d) K2m अकूल, Ca.d 8 अष्ठीला (as in text) Some MSS शाल्मलेः

20 K4 5 om 20 (cf v l 17) — a) D8 4 तव (for तव) B8 5 Dn1 D8 धिकृता (for विकृता) — d) K2 B2 D (except Dn2 D1 2 7 8 10) मज्जयति; T2 (before corr ) G3 M1 3-5 मज्जयसि T1 G1.2 5 मज्जयस्यप्लवेभसि

21 K4 om 21 (cf. v l 17). — c) D2 भाषयेथा (for प्रभाषेथा) — d) D8 4 9 T1 G1 4 M तव, T2 (inf lin.) G2 तत (for वच°) G5 M1.3 (inf. lin ) भीमसेन परतप

22 K4 om. 22 (cf v l 17) — a) G2 अ-; Ca स (as in text) — K5 om 22c-23d

23 K4 5 om 23 (cf v l 17, 22) — b) S (except T2) तेषु शांतिर् (for यत्ते ग्लानिर्) — c) M यदि (for यद्) D8 4 तेजसा, Ca ओजसा (as in text)

Colophon missing in K3, K4 5 om. it — *Subparvan* K1 2 B Dn D8 D1 2 5-8 10 T1 G1 M भगवद्यान — *Adhy name* D2 वासुदेववाक्य; G1 भीमप्रोत्साहन प्रति भगवद्वचन, M भीमरोपदी(M5 °पोद्दी)पन — *Adhy no* (figures, words or both) K1(marg. sec m ) G1 77, D5 (sec m ) 72, D6 68, D7 T1 G1-3 M2 3 5 76, T2 73, G5 M1 4 75. — *S'loka no* Dn1 23, D8 89.

# ७४

वैशंपायन उवाच ।

तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः ।
सदश्ववत्समाधावद्बभाषे तदनन्तरम् ॥ १
अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत ।
प्रणीतभावमत्यन्तं युधि सत्यपराक्रमम् ॥ २
वेत्थ दाशार्ह सत्त्वं मे दीर्घकालं सहोषितः ।
उत वा मां न जानासि प्लवन्ह्रद इवाप्लवः ।
तस्मादप्रतिरूपाभिर्वाग्भिर्मां त्वं समर्छसि ॥ ३
कथं हि भीमसेनं मां जानन्कश्चन माधव ।
ब्रूयादप्रतिरूपाणि यथा मां वक्तुमर्हसि ॥ ४
तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन ।
आत्मनः पौरुषं चैव बलं च न समं परैः ॥ ५
सर्वथा नार्यकर्मैतत्प्रशंसा स्वयमात्मनः ।
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः ॥ ६
पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः ।
अचले चाप्यनन्ते च प्रतिष्ठे सर्वमातरौ ॥ ७
यदीमे सहसा क्रुद्धे समेयातां शिले इव ।
अहमेते निगृह्णीयां बाहुभ्यां सचराचरे ॥ ८
पश्यैतदन्तरं बाह्वोर्महापरिघयोरिव ।
य एतत्प्राप्य मुच्येत न तं पश्यामि पूरुषम् ॥ ९

C. 5 2772
B. 5 76. 10
K. 5 75. 10

## 74

☞ This adhy is missing in K8 (cf. v l. 5 32 15)

1 K4 om. 1–3 (cf. v.l 5 73 17) — [a]) G4 तथोक्ते वासुदेवे च — [c]) D1 Cd समाधावन्, D2 M3–5 समाधाय, T1 G M1 2 समाधू(G4 °हू)य, Ca as in text. K1 ममाधावत्स गोविंद, D3 4. 9 समाश्वमन्माधव स

2 K4 om 2 (cf. v l 1) Before 2, K1. 2 5 Dn1 D2–4 7 8 10 T1 G1 2 4 5 ins भीम उ° (resp भीम ), B Dn2 Ds D1 5 6 9 T2 भीमसेन उ° (D1 om उ°), K4 (which om 2–3) ins भीम उ° (wrongly) before 4[cd] — D7 om 2 — [a]) D1 M1 2 मा (for मां) — [c]) B Dn Ds D5 6 8 T2 अत्यर्थं (for अत्यन्त) — [d]) B D (except D1 2 6 10, D7 om ) सत्यपराक्रम

3 K4 om 3 (cf v.l 1), K5 om from 3 up to 5 79 7 — [a]) B2–4 Dn Ds D5 6 8 वेत्सि (for वेत्थ) K1. 2 G3 तत्त्वं, B3 4 Dn Ds2 D3 G4 सत्य, D3 4 9 सर्वं (for सत्त्व) D3 4 9 त्व (for मे) — [c]) K1. 2 D7 10 अथ (for उत) Ds यात्वान् (for वा मा) B2 4 नाभि-, Dn2 D5 6 8 नानु-, M3–5 मा न (for मा न) — [d]) K2 Ds प्लव, M3–5 प्लवान् (for प्लवन्) K1 2 D7 G4 M1 2 ह्रदं, Cs ह्रदे (as in text) B D (except D1 2 7 10) T2 Cs अप्लवे — G4 om 3[e]–4[d] — [e]) B D (except D3 4 7 9 10) T2 अनभिरूपाभि ; G5 अप्रतिरूपो हि — [f]) D7 transp मां and त्व T1 G1. 2 5 समार्च्छसि, T2 G3 M (except M3) समृ(M5 °मि)च्छसि, Ca d समर्छसि (as in text)

4 K5 G4 om 4 (cf v l 3) — [a]) K1 D7 10 च, K2 त्व (for हि) D5 8 °सेनस्य (for °सेन मा) D1 M3 5 मा (for मा) — [b]) D1 G2 मानव (for माधव) — [c]) K2 M1 (inf lin as in text) अप्रतिरूपाभिर् — [d]) K2 नैव, M2 तथा (for यथा) D3 4 9 त्व, M3 5 मा (for मा) D1 इच्छ° (for अर्ह°)

5 K5 om 5 (cf v l. 3) — [b]) T1 G1 5 वृष्णिपुगव

6 K5 om. 6 (cf v l 3) — T2 (hapl.) om 6[cd] — [c]) K4 D3 4 7 9 अतिवादाति(K4 D7 °नु)विद्धस्, B2 8 अभिवादापविद्धस्, S (except G4, T2 om ) अपवादाप(T1 °भि-, G2 °दि , M3 °व)विद्धस्, Ca d as in text

7 K5 om. 7 (cf v l 3) — [a]) K1 D1 7 T G3–5 मे (for इमे) — [c]) K1 Dn1 Ds D3 4 8 9 T2 G2 वा (for the *first* च) K4 Dn Ds D5 6 T2 अप्रतिष्ठे (for अप्यनन्ते) Dn1 Ds D3 4 8 9 T2 वा (for the *second* च) — [d]) K4 Dn Ds D5 6 8 T2 अप्यनते, D2 7 10 अप्रतिष्ठे, Ca d प्रतिष्ठे (as in text) Dn1 D3. 4 9 चैव (for सर्व-) T1 G M सु(T1 G1. 3 4 अ)प्रतिष्ठे च मातरौ

8 K5 om 8 (cf v.l 3) — [a]) K4 B2 4 5 D1. 7 10 T G2 5 M यदिमे (=यद् + इमे) *or* यदि मे (Laksā ), G3 4 यदि ते (for यदीमे) S (except T2) सहस (for °सा) — [c]) G5 एको, Ca एते (as in text) Dn वि , D5 6 8 [ऽ]नु (for नि-) G3 सरथ्य तेन गृह्णीयां — B2 om 8[d]–11[a]

9 K5 B2 om 9 (cf. v.l 3, 8) — [c]) S (except T2 G3 4 M2) एतौ (for एतत्)

10 K5 B2 om 10 (cf v l 3, 8) — [b]) B (B2

C. 5. 2772
B 5. 76. 10
K 5. 75. 10

हिमवांश्च समुद्रश्च वज्री च बलभित्स्वयम् ।
मयाभिपन्नं त्रायेरन्बलमास्थाय न त्रयः ॥ १०
युध्येयं क्षत्रियान्सर्वान्पाण्डवेष्वाततायिनः ।
अधः पादतलेनैतानधिष्ठास्यामि भूतले ॥ ११
न हि त्वं नाभिजानासि मम विक्रममच्युत ।
यथा मया विनिर्जित्य राजानो वशगाः कृताः ॥ १२
अथ चेन्मां न जानासि सूर्यस्येवोद्यतः प्रभाम् ।
विगाढे युधि संबाधे वेत्स्यसे मां जनार्दन ॥ १३
किं मात्यवाक्षीः परुषैर्व्रणं सूच्या इवानघ ।
यथामति ब्रवीम्येतद्विद्धि मामधिकं ततः ॥ १४
द्रष्टासि युधि संबाधे प्रवृत्ते वैशसेऽहनि ।
मया प्रणुन्नान्मातङ्गान्रथिनः सादिनस्तथा ॥ १५
तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान् ।
द्रष्टा मां त्वं च लोकश्च विकर्षन्तं वरान्वरान् ॥ १६
न मे सीदन्ति मज्जानो न ममोद्वेपते मनः ।
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम ॥ १७
किं तु सौहृदमेवैतत्कृपया मधुसूदन ।
सर्वांस्तितिक्षे संक्लेशान्मा स नो भरता नशन् ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

om ) Dn2 D8 D2. 5. 6 8 10 T3 वा, Dn1 D9 G4 इव (for च) D7 बलवान् (for °भित्) — c) M3 4 अभिपन्नान्; Ca d °न्न (as in text). — d) G1 5 बलान् K4 D3 4 9 G2-4 M आधाय, T1 आदाय, G1 5 माधव (for आस्थाय) D2-4 7 9 T2 तत् (for न)

11 K5 om. 11 (of v l 3), B2 om 11a (of. v l 8) — a) K1 4 D3. 4 7 9. 10 अद्याह, K2 अयाह, B (B2 om ) Dn D8 D5. 6 8 T2 युद्धार्हान्, D1 2 हताहं, G3 8 M2 युद्धेहं, M1. 4 युध्येहं (for युध्येय) K1. 2 D10 कौरवान् (for क्षत्रियान्). — c) T1 G2 3-5 M अथ (for अधः ) K1 B2 D7 10 T1 G1 2 4 M एनान्, G5 एव (for एतान्)

12 K5 om 12 (of v l. 3) — a) B3 T2 (by corr ) अभि- (for नाभि-) — G2 om from विक्रम° up to व्रण in 14b. — c) K1 2 D7 10 बलोन्मत्ता° (for विनिर्जित्य) D3 4 9 यथा निर्जित्य राजानो — d) D3 4 9 राज्ञोस्य (for राजानो)

13 K5 G2 om 13 (of v l 3, 12). — a) K1 2 तथा, G4 अपि (for अथ) D5 (by transp ) मा चेन्, D3. 4 9 कस्मान् D1 M4 मा (for मां) G4 नाभि- (for मां न) — b) D8 D6 7 उद्यत-, Ca d उद्यत (as in text) D1 सर्वथा वै हि भारत, S (T2 by corr , G3 om ) यथा (G3 4 दिवि) सूर्यमिवोदितं — T2 om 13c–14b — c) Dn1 सवादे, D3 4 9 सम्प्रासे, Ca d संबाधे (as in text) Ca d भोत्स्यसे (for वेत्स्यसे)

14 K5 om 14 (of v l 3) G2 om up to व्रण in 14b (of v l 12) T2 om 14ab (of. v l, 13) — a) K1 D7 8 10 मा दुनोषि, K2 D5 D1 2 Cd 8 मा नेनेक्षि, G3 M3-5 माश्य(G3 °म)त्राक्षी (for मात्यवाक्षी ) K4 B D5 प(K4 D5 पौ)रुषैराक्षिपस्येव (B1 °क्षिपसि किं), Dn1 परुषा वाक् क्षिप्यस्येव, Dn2 D3. 4 9 किं पौ(Dn2 °प)रुषैराक्षिपसि, D7 पौरुषे जक्षयस्येव; G4 किमात्य चाक्षीद्दाशार्ह — b) K1 D7 व्रणपूतिर्, K3 व्रणपूतिम्, K4 B Dn D5 D1-6 8 9 Cs व्रणं पूतिम्, D10 पूतिव्रणम् (for व्रण सूच्या) — c) K4 D3 4 9 यथा ह्येतद्, D2 यया सत्य, D10 यथाविध (for यथामति) D3 4 9 अद्य (for एतद्) D5 D7 यया ह्यतिब्रवीम्येतद् — d) K1. 2 G3 4 M1 माभ्यधिकं

15 K5 om 15 (of v l 3) — a) D3. 4 9 सबरे — b) K1 D7 8 भुवि (for ऽहनि) — d) D7 10 सरथान् (for रथिन°)

16 K5 om 16 (of v l 3) B2 om from 16 up to the end of this adhy K2 om 16ab — a) D1 वरान् (for नरान्) K4 B3 Dn1 D9 अतिक्रुद्धान्, D3-6 8 अतिक्रुद्ध (for अभिक्रुद्ध) S तथान्तकमिव क्रुद्ध — c) K1 M1 लोकाश्च, D1 ये लोका° — d) K1 2 B1 3 5 D1-4 9 निष्कर्षंत, Ca d 8 विकर्षंत (as in text) T1 नरान्, G (except G4) M3 परान् (for the *first* वरान्) G4 M4 परान् (for the *second* वरान्)

17 K5 B2 om 17 (of v l 3, 16) — a) D1 ह्यगानि, D7 10 S (except T2) गात्राणि (for मज्जानो) — b) S (except T2) न च मे (M3 5 ते) वेप(G3 सीद)ते मन. — c) K1 2 D7 समा°, B5 D2-4 9 T G1. 2 5 M1 2 4 (*inf lin* ) अपि, D5 अति (for अभि-)

18 K5 B2 om 18 (of v l 3, 16) — a) D9 G1 5 नु (for तु) D3 4. 9 एकं (for एतत्) K2 D7 किं नु (D7 तु) सीदति मे चेत — d) = 5. 72 20d B3 च

# ७५

भगवानुवाच ।
भावं जिज्ञासमानोऽहं प्रणयादिदमब्रुवम् ।
न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ १
वेदाहं तव माहात्म्यमुत ते वेद यद्बलम् ।
उत ते वेद कर्माणि न त्वां परिभवाम्यहम् ॥ २
यथा चात्मनि कल्याणं संभावयसि पाण्डव ।
सहस्रगुणमप्येतत्त्वयि संभावयाम्यहम् ॥ ३
यादृशे च कुले जन्म सर्वराजाभिपूजिते ।
बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः ॥ ४
जिज्ञासन्तो हि धर्मस्य संदिग्धस्य वृकोदर ।
पर्यायं न व्यवस्यन्ति दैवमानुषयोर्जनाः ॥ ५
स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु ।
विनाशेऽपि स एवास्य संदिग्धं कर्म पौरुषम् ॥ ६
अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ७
सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ॥ ८
दैवमप्यकृतं कर्म पौरुषेण विहन्यते ।
शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ ९
यदन्यद्दिष्टभावस्य पुरुषस्य स्वयंकृतम् ।

C. 5. 2791
B 5. 77 10
K. 5. 76. 10

---

(for स्म) D8 4 9 अस्मत्तो (for स्म नो) S नद्यु (for नद्यान्)

Colophon missing in K3, K5 B2 om it — *Sub-parvan* K1 2 4 B1 3–5 Dn D8 D2 5–10 T1 G1 M भगवद्यान — *Adhy name* D2 भीमसेनवाक्य, T1 भीमकोपवचन, G1 भीमकोप, M भीमस्वामि(M1 भीमाभि-, M5 °स्वाभि)प्रायकथन — *Adhy no* (figures, words or both) K1 (marg *sec m*) G1 4 78, K2 68, D5 (*sec m*) 73, D6 69, D7 T G2 3 M2 3 5 77, G5 M1 4 76 — *S'loka no* Dn D8 19

## 75

☞ This adhy is missing in K3 (cf v l 5 32 15) K5 om the whole adhy (cf. v l 5 74 3)

1 K2 B3 Dn D6 7 10 T2 G3 4 M1 5 श्रीभगवानुवाच (S MSS om उवाच), D1 2 वासुदेव, G1.5 श्रीकृष्ण — $^{a}$) K1 युष्मान्, K2 युष्मत्, Ca d भावं (as in text) S भाव(T1 भव-, T2 भाव, G1 भवज्, M2 तव)जिज्ञासया पार्थ — $^{b}$) D1.2 S Ca d सौहृदात्, Cap प्रणयात् (as in text) — G4 om 1$^{c}$–2$^{b}$ — $^{c}$) K1 D7 अपक्षेपात्, K2 अवज्ञया, S अधि(M1 2 °व)क्षेपात् (for चाक्षेपात्)

2 G4 om 2$^{ab}$ (cf v l 1) — $^{c}$) G3 मत (for उत) — $^{d}$) T1 G5 M त्वा (for त्वां)

4 $^{a}$) G4 हि, G6 व (for च) — $^{d}$) K1 2 G5 अपि (for असि)

5 $^{a}$) K1 2 D7 अपि (for हि) D8 4 9 S किं तु (D9 T1 G1.3–5 नु) पर्यायधर्मस्य — $^{c}$) K1.2 B D (except D1–4 9) Cd [अ]व्यवस्यति, Ca s व्यवस्यन्ति (as in text) — $^{d}$) K4 B2–4 Dn D1 5 6 8 T G1–3 देव°, Ca दैव° (as in text) Cd s cite दैव

6 $^{a}$) D10 M (except M2) य, Ca. d s स (as in text) D1 भूताय, M भवति (for भूत्वा हि) — $^{b}$) K2 D1 2 अर्थसिद्धये, D8 4 9 इह सिद्धिषु — $^{c}$) K1 D5 Ca d. s विनाश (for °शे) S च (M2 स) (for ऽपि) M2 च (for स) K1 D7 10 (before corr) M (except M5) स्यात् (for अस्य)

7 $^{d}$) K1 2 D (except Dn D5 6 8) मरुत्वत (for नभस्वत)

8 $^{a}$) D7 (before corr) सुमित्र, Ca d s सुनीत (as in text) — $^{c}$) D1 7 G3 मानुषक T2 G2 तत्कृत मानुष कर्म — $^{d}$) D1 G2 देवेन, Ca d s दैवेन (as in text) S (except T2 G2–4) एतद् (for अपि) K2 न रुध्यते, D8 4 9 न हन्यते, T1 G1 विहन्यते, G3 विमथ्यते, all comm विरुध्यते (as in text)

9 G3 M om (hapl) 9$^{ab}$ — $^{a}$) T G (G3 om) तेन (T2 G2 तथा, G4 किं नु) दैवकृत Cs cites दैव, Ca d. s cite अकृत — $^{b}$) K2 D7 निहन्यते, T2 विकुर्वते, Cs विरुध्यते, Ca d as in text — $^{c}$) D8. 4 9 क्षुत्पिपासे (for तथा वर्षं) — $^{d}$) D8 4 9 लाभालाभौ (for क्षुत्पिपासे)

10 $^{a}$) G4 यत्तत्तद्, all comm. यदन्यद् (as in text) K1 Ds2 D2 7 G2 4 इष्टभाव(G4 °त्य)स्य, K4 दिष्टभाव स्यात्, Ca d s as in text D8 4 9 यदि स्यादिच्छया तात — $^{c}$) K4 B D (except D1 7) G4 अनुपरोध, Ca d

C 5.2701
B. 5 77 10
K. 5. 76. 10

तस्मादनवरोधश्च विद्यते तत्र लक्षणम् ॥ १०
लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः ।
एवंबुद्धिः प्रवर्तेत फलं स्यादुभयान्वयात् ॥ ११
य एवं कृतबुद्धिः सन्कर्मस्वेव प्रवर्तते ।
नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥ १२
तत्रेयमर्थमात्रा मे भीमसेन विवक्षिता ।
नैकान्तसिद्धिर्मन्तव्या कुरुभिः सह संयुगे ॥ १३
नातिप्रणीतरश्मिः स्यात्तथा भवति पर्यये ।
विषादमर्छेद् ग्लानिं वा एतदर्थं ब्रवीमि ते ॥ १४
श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव ।
यतिष्ये प्रशमं कर्तुं युष्मदर्थमहापयन् ॥ १५
शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम ।
भवतां च कृतः कामस्तेषां च श्रेय उत्तमम् ॥ १६
ते चेदभिनिवेक्ष्यन्ति नाभ्युपैष्यन्ति मे वचः ।
कुरवो युद्धमेवात्र रौद्रं कर्म भविष्यति ॥ १७
अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः ।
धूरर्जुनेन धार्या स्याद्वोढव्य इतरो जनः ॥ १८
अहं हि यन्ता बीभत्सोर्भविता संयुगे सति ।
धनंजयस्यैष कामो न हि युद्धं न कामये ॥ १९
तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव ।
तुदन्नक्लीबया वाचा तेजस्ते समदीपयम् ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

अनवरोध (as in text). — d) D1 2 विद्यात्तत्, Ca.s विद्यते (as in text)

11 a) G5 अन्यथा, Ca.d.s अन्यत· (as in text). — b) D8 (m as in text) 4 9 कर्मसु, Ca d.s as in text — After 11ab, D8 4 9 ins.

375* बाहुशालिन्महावीर्य भीमसेन विचक्षण।

D4 (which om. 11c–13b) cont

376* मात्रा स्यादवधारणे ।

— D4.9 om 11c–13b — c) T G (except G4) एवं बुध्वा; Ca d s as in text — d) K1.2 °न्वय, K4 B D (except D1 2, D4 9 om ) T2 Cs °न्वये, Ca d °न्वयात् (as in text)

12 D4 9 om. 12 (of v.l 11) — a) G3 4 M3–5 स (for य) D1 M8 4 एव (for एवं) B4 Dn D6 Ca.d स, M3–5 य , Cs सन् (as in text) — b) S कर्म च; Ca d s कर्मसु (as in text) K1 D1.2 S (except G2–4) एव, Ca.d s एव (as in text) — c) T G1 M कश्चित्, G2–5 किंचित्, Ca d's तस्य (as in text).

13 D4 9 om. 13ab (cf. v l. 11). — a) D7 M3–5 अत्र, T G (except G3) यत्र, Cs तत्र (as in text). K4 B (except B2) Dn1 D5.6 8 Cn अनुमात्रा, Ca d.s अर्थमात्रा (as in text) T G ते (for मे) — c) K4 B D (except D2 7 10) वक्तव्या (for मन्तव्या) — d) K4 B2–4 Dn D8 D3m.5 6 8 9 शत्रु° (for कुरु°) D7 सयुगे कुरुभि सह

14 a) K4 B Dn D8 D1 2 5–8.10 °प्रहीणरश्मिः, D3.4 S °प्रणीतबु(G5 °सि)द्धि°, Ca d.s as in text — b) K2.4 B D8 D2 5–8.10 T2 G2–4 M1(inf lin ) 3–5 Cs भाव विपर्यये - Dn1 D8 4 9 तद(Dn1 °था)भावि विपर्यये Ca.d as in text. — c) K1 D10 अर्छन्; K2 T1 G4.5 इच्छेद्; K4 अर्थं, D8 D7 G1 M ऋच्छेद्, D5 6.8 अर्थे, T2 G3 इच्छन्; Cs गच्छेद् (for अर्छेद्). — d) K1 2 D1.9 10 अप्येतद्, K4 B Dn D8 D2–6 8 10 (sup lin ) अप्येतम् (for एतद्) D7 तदर्थं प्रब्रवीमि ते.

15 a) B3 D9 धार्तराष्ट्रस्य — b) D1 भारत (for पाण्डव)

16 b) D8 तदा (for ततो)

17 a) K2 न, Cs ते (as in text) K4 B (except B5) Dn D8 D5 6 8 (by corr ).10 T2 G4 अभिनिवेक्ष्यते (G4 °त), D8 4 9 अभिनिविष्टार्थं, Ca as in text — b) K1 D1 G3 4 अभ्युपेष्य(K1 °ष्ये)ति, K2 अभ्युपेक्षति, D8 4 9 अवेक्षति न, T1 अप्युपेष्यति, T2 G2 अभ्युपेक्ष्यति, G1 M1 अप्यवेक्ष्य(M1 °क्ष)ति, G5 M3 4 अभ्युपेक्ष्यं(M4 °क्ष)ति; M1 2 5 अप्यपे(M1 °वे)क्षंति (M1 inf lin अव्यवेक्ष्यति) (for अभ्युपैष्यन्ति) B3 मद् (for मे) — c) D7 कुरवो रौद्रमेवात्र — d) K4 B Dn D8 D5 6.8 घोरं; D7 युद्धं (for रौद्रं)

18 b) K2 समर्पितः (for समाहि°) — d) T2 इतरे, M चेतरो, Ca इतरो (as in text) Ds2 इति रोचते (for इतरो जन.) T1 G1 5 वोढव्या इतरे जनाः.

19 d) K2 मयि, G5 नाभि°, Ca d.s न हि (as in text) K1 2 D1 G5 कामयेत्, Ca d s °ये (as in text).

# ७६

अर्जुन उवाच ।

उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।
तव वाक्यं तु मे श्रुत्वा प्रतिभाति परंतप ॥ १
नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो ।
लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् ॥ २
अफलं मन्यसे चापि पुरुषस्य पराक्रमम् ।
न चान्तरेण कर्माणि पौरुषेण फलोदयः ॥ ३
तदिदं भाषितं वाक्यं तथा च न तथैव च ।
न चैतदेवं द्रष्टव्यमसाध्यमिति किंचन ॥ ४
किं चैतन्मन्यसे कृच्छ्रमस्माकं पापमादितः ।
कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ॥ ५
संपाद्यमानं सम्यक्च स्यात्कर्म सफलं प्रभो ।
स तथा कृष्ण वर्तस्व यथा शर्म भवेत्परैः ॥ ६
पाण्डवानां कुरूणां च भवान्परमकः सुहृत् ।

C. 5. 2606
B. 5. 76. 7
K. 5. 77. 7

---

20 a) D7 S (except T2 G1.2) आशंसमानो — b) D7 मत (for मतिं) K4 तदा (for तव) G4 वृकोदर-मरिंदम — c) K1 ब्रुवन् K3 ब्रुवन्निव क्लीवया वाचा (hypermetric), K4 B Dn Ds D5 6 8 10 वदत क्लीवया वाचा, D2 4.9 वाचा त्वक्लीवया वीर, G5 इदं न क्लीवया वाचा — d) K3 T2 सम(T2 °मु)दीपयन्, K4 B Dn2 Ds D6 10 समदीदिपं; Dn1 D3.4 7 9 G5 समुदीरय (D7 °यन्), D1.5 8 समदीपित G3.4 तेजस्तेजसि दीपये (G4 °यन्)

Colophon missing in K3, K5 om. it — *Sub-parvan* K1.2 4 B Dn Ds D2 5–8.10 T1 G1 M भगवद्यान — *Adhy name* D2 भीमसेनमान्त्वन, M भीमानुमोदनं — *Adhy no* (figures, words or both) K1(marg sec m) G1.4 79, K2 69, D5 (sec m) 74, D6 70, D7 T G2 3 M2 3 5 78, G5 M1.4 77 — *S'loka no* Dn D8 20

## 76

☞ This adhy is missing in K3 (cf. v.l. 5 32 15) K5 om. the whole adhy (cf v l. 5 74 3)

1 a) D8 G3–5 M4 युक्तं (for उक्त) K1.2 M4 एवं (for एव) — b) K1 2 D1 7 G3 वाक्य (for वाच्यं) — c) T2 G2 च (for तु)

2 a) T2 G2 नैव प्रशमनं त्व(T2 m त)त्र — b) D2 transp मन्यसे and सुकर D9 G4 सुकृतं (for सुकर) D2.4 8 9 विभो (for प्रभो) — c) T1 G5 M1(*sup lin* as in text) 2 धार्त° (for धृत°) — d) D6 8 M1 (*sup lin* as in text) C3 दैवाद्वा S समुपस्थित

3 a) N (except D1–4.9, K3 missing, K5 om.) T1 G3 वा (for च) D8 अथ (for अपि) — c) D2 4 9 कर्मापि; Ca.d.s कर्माणि (as in text) — d) D1 M पुरुषस्य, D2 पुरुषेषु, G1 पुरुषेण, G2 येषा नास्ति (for पौरु°) B3 Dn2 D8 चलोदय, Dn1 D8 4 9 G5 अफलोदय (Dn1 G5 °य)

4 a) T2 G3–5 M1 2 यदिद, Ca d as in text D2 संपाद्यमान सम्यक्च — b) S (except M2) तथैव, Ca d तथा च (as in text) Nil reads तथाचन (=तथापि)' K4 B Dn Ds D2 5 6 10 Ca तत् (for the second च) D8 4 9 यथा तव तथैव तत्, D7 तथ्यमेव न चान्यथा — c) K1 तथा (for न च) Ds D5 6 8 एव, G3 इति (for एव) — d) K4 B D (except D1–4 9) Cs अपि (for इति) M3–5 किं परं (for किंचन)

5 M3–5 (hapl.) om 5a–6d — a) B1.2 5 Dn Ds वा, D8 4 9 G3 M1 2 न, D2m 5 6 तु (for च) T G (except G4) M2 एव (for एतन्) K1 2 D1.2 7 के(D1 2 ये)नैव (for किं चैतन्) K3 क्षुद्र, Ds2 D1.2m कृष्ण, D3 4 7 9 कृत्स्नं, C3 कृच्छ्र (as in text) — b) K1 D1.2(m as in text) Ca d s असत्त (for अस्माक) K4 B Dn Ds D2m 5 6 8 10 अवसादित, S (M3–5 om) उपपादितं (for पापमादित) — c) K1 ते न, K2 4 D7 तानि, D2 ये वै, M1 2 तेपि (M1 inf lin ये न), Ca d.s तेषां (as in text) — d) D2 M1 तेषा (for येषा)

6 M3–5 om 6 (cf v l. 5) — a) G3 4 सत्य (for सम्यक्) B1 2 5 D2–6 8–10 G4 स्याद्, D1 T1 G1–3 5 M1 2 तु (for च) — b) B1.5 D2–6 8 10 तद्, B2 सद्, D9 यद्, C3 स्याद् (as in text) S (M3–5 om) च कर्मफलं (for कर्म सफल) D3.4 9 भवेत् (for प्रभो) — d) K1 2 येन, C3 यथा (as in text)

7 D9 om 7 — a)=1 1 11a Ds2 G3 4 M हि (for च) — b) K4 हि परम., B1 2 4 प्रथमत, B2 Ds D5 6 8 च प्रथम, B5 Dn न प्रथम, D1 2 प्रथमक, D3.4 हि प्रथम, M5 परमकृत् (for परमक) Ca cites प्रथम

C. 5.2808
B. 5.78.7
K 5.77.7

सुराणामसुराणां च यथा वीर प्रजापतिः ॥ ७
कुरूणां पाण्डवानां च प्रतिपत्स्व निरामयम् ।
अस्मद्धितमनुष्ठातुं न मन्ये तव दुष्करम् ॥ ८
एवं चेत्कार्यतामेति कार्यं तव जनार्दन ।
गमनादेवमेव त्वं करिष्यसि न संशयः ॥ ९
चिकीर्षितमथान्यत्ते तस्मिन्वीर दुरात्मनि ।
भविष्यति तथा सर्वं यथा तव चिकीर्षितम् ॥ १०
शर्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितम् ।
विचार्यमाणो यः कामस्तव कृष्ण स नो गुरुः ॥ ११
न स नार्हति दुष्टात्मा वधं ससुतबान्धवः ।
येन धर्मसुते दृष्ट्वा न सा श्रीरुपमर्षिता ॥ १२
यच्चाप्यपश्यतोपायं धर्मिष्ठं मधुसूदन ।
उपायेन नृशंसेन हृता दुर्द्यूतदेविना ॥ १३
कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः ।
समाहूतो निवर्तेत प्राणत्यागेऽप्युपस्थिते ॥ १४
अधर्मेण जितान्दृष्ट्वा वने प्रव्रजितांस्तथा ।
वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ॥ १५
न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि ।
क्रिया कथं नु मुख्या स्यान्मृदुना वेतरेण वा ॥ १६
अथ वा मन्यसे ज्यायान्वधस्तेषामनन्तरम् ।
तदेव क्रियतामाशु न विचार्यमतस्त्वया ॥ १७
जानासि हि यथा तेन द्रौपदी पापबुद्धिना ।
परिक्लिष्टा सभामध्ये तच्च तस्यापि मर्षितम् ॥ १८
स नाम सम्यग्वर्तेत पाण्डवेष्विति माधव ।
न मे संजायते बुद्धिर्बीजमुप्तमिवोषरे ॥ १९
तस्माद्यन्मन्यसे युक्तं पाण्डवानां च यद्धितम् ।
तदाशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम् ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

— $^{d}$) K2 D2 6 8 T G1 2 M2 8 5 वीर. (for °र)
8 Cf. 377* — $^{a}$) =(var ) 7$^{a}$ D8 transp. कुरू° and पाण्ड° — $^{b}$) S प्रविधत्स्व (for प्रतिपत्स्व) K1 त्वनामय, K2 अना°, D1 ह्यना°, Ca s निरा° (as in text). — $^{c}$) K4 B D (except D2 7 10) G4 °ष्ठान (for °ष्ठातु) — $^{d}$) K4 B D (except D1 2 7 8.10) मन्ये तव न (D8 4 9 सु-) दुष्कर
9 $^{a}$) B D (except D1 7 9 10) M2 च (for चेत्) — D8 om 9$^{cd}$ — $^{c}$) T G1 2 4 M गमन, G8 M1 (sup lin ) वचन (for गमनाद्) K4 S (except G5) चैवम्, D1 2 G5 एव (for एवम्) K4 Dn1 D8 4 7 9 T G1 8 4 M (except M2) एतत्, D1 देव, D2 चापि, G5 शर्म (for एव) — $^{d}$) B Dn Ds D5 6 जनार्दन (for न सं°)
10 $^{c}$) K4 B D (except D1–4 7 9) च तत् (for तथा)
11 K2 D1 T1 G4 om (hapl.) 11$^{ab}$ — $^{a}$) B8 सम, D8 D10 G1 शमं (for शर्म) K4 D7 transp वा and नो — $^{b}$) G2 यथा तव (for तव वा यच्) — $^{d}$) K2 D8 समो (for स नो)
12 $^{b}$) K2 ससुतबाधव — $^{c}$) G4 5 धर्मसुत K4 B (except B8) Dn Ds D2–4 T2 G2 M8–5 दृष्टा (for °ष्ट्वा).
13 $^{a}$) D7 यथा, S (except G4, T2 before corr.) या च (for यच्च) K1.2 4 Dn1 D8 4.7 9 अस्य (for अपि) T2 (after corr ) न्यायेन पश्यतोपाय — K4 om 13$^{d}$–15$^{a}$ — $^{d}$) Dn1 D8 4 9 हृत, Ca कृता (for हृता) D7 G2 8 °वेदिना, G4 °सेविना, Ca as in text.
14 K4 om 14 (of v l 13) — $^{d}$) D8 4 6 हि (for ऽपि) S पठित (for उपस्थिते).
15 K4 om 15$^{a}$ (of v l. 13) — $^{a}$) D1 2 जित (for जितान्) — $^{b}$) D1 T1 G1 2 5 M8 4 प्रव्राजितान् (D1 °त), D2 प्रव्रजित M1 (sup lin as in text) तदा (for तथा) — $^{c}$) K4 D7 10 (sup. lin ) तव, T G1 8 4 M1–4 एष, G2 5 M5 एव (for मम) — $^{d}$) D8 विज्ञातो; D7 10 निश्चितो, Ca d s निर्गतो (as in text). T1 G1.5 अय (for असौ)
16 $^{a}$) D1 कर्म (for कृष्ण) — $^{b}$) K1 D8 4 7 9 मित्रार्थं, K2 ममार्थं, G8 मित्रत्व D5 6 8 चिकीर्षसे — $^{c}$) D7 क्रिया . K1 D8 4 7 तु, K4 Dn D8 D5 6 8 10 च, M न (for नु) D1 पुण्या, M मूढा, Cs मुख्या (as in text) D7 स्यु (for स्यात्) — $^{d}$) K2 4 Dn2 Ds1 D1 8 T G2 8 M1 2 वा (as in text), the rest च. G1 दारुणेन (for वेतरेण)
17 $^{c}$) D1 M1 स (for तद्) G5 एवं (for एव)

## ७७

भगवानुवाच ।
एवमेतन्महाबाहो यथा वदसि पाण्डव ।
सर्वं त्विदं समायत्तं बीभत्सो कर्मणोर्द्वयोः ॥ १
क्षेत्रं हि रसवच्छुद्धं कर्षकेणोपपादितम् ।
ऋते वर्षं न कौन्तेय जातु निर्वर्तयेत्फलम् ॥ २
तत्र वै पौरुषं ब्रूयुरासेकं यत्नकारितम् ।
तत्र चापि ध्रुवं पश्येच्छोषणं दैवकारितम् ॥ ३
तदिदं निश्चितं बुद्ध्या पूर्वैरपि महात्मभिः ।
दैवे च मानुषे चैव संयुक्तं लोककारणम् ॥ ४
अहं हि तत्करिष्यामि परं पुरुषकारतः ।
दैवं तु न मया शक्यं कर्म कर्तुं कथंचन ॥ ५
स हि धर्मं च सत्यं च त्यक्त्वा चरति दुर्मतिः ।
न हि संतप्यते तेन तथारूपेण कर्मणा ॥ ६
तां चापि बुद्धिं पापिष्ठां वर्धयन्त्यस्य मन्त्रिणः ।
शकुनिः सूतपुत्रश्च भ्राता दुःशासनस्तथा ॥ ७
स हि त्यागेन राज्यस्य न शमं समुपेष्यति ।

C. 5. 2829
B. 5. 79. 8
K. 5. 78. 8

— d) S (except G3) न विचार्यो मत(T1 G1 5 वध, G4 °वम)स्त्वया.

18 a) T2 G2 तदा (for यथा) B4 Dn एतेन (for तेन) — d) T2 G2. 3. 5 M3-5 transp तच्च and तस्य K4 D5-8 अप-, B Dn D8 D1-4 9 10 उप- (for अपि)

19 a) T2 G1 (before corr) 2 3 न, C3 स (as in text) S (except G4) चैव, C3 नाम (as in text) — b) D1 G3 अपि, C3 इति (as in text) — d) D5 transp बीज and डस

20 b) D1. 2 कौंतेयाना (for पाण्ड°) D7 (m as in text) मत (for हित) K4 B D (except D1 2 7 10) हित च यत् (for च यद्धितम्) — c) K4 B3 4 तथाशु, D1 तदत्र (for तदाशु) — d) K2 ते (for न) S यत्कार्यं सम(M3-5 तद)नतर

Colophon missing in K3, K5 om. it — *Sub-parvan* K1 2 4 B Dn D5 D1. 2 6-8 10 T1 G1 2 M भगवद्यान — *Adhy name* D2 T1 G1 M अर्जुनवाक्य — *Adhy no* (figures, words or both) K1 (marg sec m) G1. 4 80, D5 (sec m) 75, D6 71, D7 G5 M1 4 78, T G2 3 M2 3 5 79 — *S'loka no* Dn 19, D8 G5 20

### 77

☞ This adhy is missing in K3 (cf v l 5 32 15) K5 om the whole adhy (cf v l 5 74 3)

1 K2 B3 Dn D1 10 T2 G (except G2) read भगवानुवाच (resp भगवान्), some with prefixed श्री — a) T1 G5 °भाग (for °बाहो) — b) B1 2 भारत (for पाण्डव) — After 1ab, K2 B D (except D1 3 4 9, D2 10 marg sec m) ins

377* पाण्डवाना कुरूणां च प्रतिपत्स्ये निरामयम् ।

(cf 5 76 8ab) — c) B1-4 D (except Dn2 D2 5 8) G4 ममायत्त, T1 G1 3 5 समायुक्त B5 युष्मद्धितमनुष्ठेय

2 a) G3 सारवत (for हि रसवत्) — b) B Dn2 D8 D1 5 6 10 (marg sec m) कर्मणैव, Dn1 D7 9 10 कर्षकेन Cn 3 cite कर्मणा — c) B Dn D10 G3 4 वर्षान्, C3 °र्षा (for °र्षं) Ds1 वर्षासु, Ds2 वर्ष्मसु (for वर्षं न) K1 T1 G1 5 तु (for न) — d) B2 D1 2 निर्वर्तते (for °येत्)

3 a) K1 2 D7 10 अपि, Dn2 D1 एव, G5 एव (for वै) K4 D8 T2 (inf lin as in text) G2 पुरुष K1 2 D7 10 T1 G1 5 प्राहु°, Dn1 D8 4 9 कुर्यु (for ब्रूयु). — b) K2 (before corr) 4 Dn2 D3 4 6 T2 (inf lin as in text) G2 4 C3 यत्र, G5 यत्तु (for यत्न) — c) S पश्य (for पश्येत्)

4 a) D5 यद् (for तद्) — c) D1 दैव च मानुष चैव — d) D2 ससिद्ध, C3 °युक्त (as in text)

5 a) K1. 2 D7 10 तदेतर्हि, D1 अहं तद्धि, D8 4 9 तदिद हि, M1 2 अह तु हि, M3-5 अह तर्हि (for अह हि तत्) — cd) T2 G2 3 M transp शक्य and कर्तुं, G4 transp कर्म and कर्तुं

6 a) G4 सत्य (for धर्मं) K4 B D (except D7 10) लोक, G4 धर्मं (for सत्य) — b) D5 6 8 पूरुष (for दुर्मति) — c) T1 G1 5 स्वेन (for तेन)

7 G5 om 7a–8d — a) B3 4 Dn तथा, D8 4 9 ते च (for ता च) G4 अस्य (for अपि) — b) D2 कर्मणा (for मन्त्रिण) D5 वर्धयिष्यत्यमन्त्रिण, D8 4 9 वर्तयते च म° — d) D8 4. 9 च ह (for तथा)

8 G5 om 8 (cf. v l 7) — ab) T2 G2 transp

C. 5. 2830
B. 5. 79. 9
K. 5. 78. 8

अन्तरेण वधात्पार्थ सानुबन्धः सुयोधनः ॥ ८
न चापि प्रणिपातेन त्यक्तुमिच्छति धर्मराट् ।
याच्यमानस्तु राज्यं स न प्रदास्यति दुर्मतिः ॥ ९
न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनम् ।
उक्तं प्रयोजनं तत्र धर्मराजेन भारत ॥ १०
तथा पापस्तु तत्सर्वं न करिष्यति कौरवः ।
तस्मिंश्चाक्रियमाणेऽसौ लोकवध्यो भविष्यति ॥ ११
मम चापि स वध्यो वै जगतश्चापि भारत ।
येन कौमारके यूयं सर्वे विप्रकृतास्तथा ॥ १२
विप्रलुप्तं च वो राज्यं नृशंसेन दुरात्मना ।
न चोपशाम्यते पापः श्रियं दृष्ट्वा युधिष्ठिरे ॥ १३
असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः ।
न मया तद्गृहीतं च पापं तस्य चिकीर्षितम् ॥ १४
जानासि हि महाबाहो त्वमप्यस्य परं मतम् ।
प्रियं चिकीर्षमाणं च धर्मराजस्य मामपि ॥ १५
स जानंस्तस्य चात्मानं मम चैव परं मतम् ।
अजानन्निव चाकस्मादर्जुनाद्याभिशङ्कसे ॥ १६
यच्चापि परमं दिव्यं तच्चाप्यवगतं त्वया ।
विधानविहितं पार्थ कथं शर्म भवेत्परैः ॥ १७
यत्तु वाचा मया शक्यं कर्मणा चापि पाण्डव ।
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः ॥ १८
कथं गोहरणे ब्रूयादिच्छञ्शर्म तथाविधम् ।

---

स and न $T_1$ $G_1$ शर्मं; M (except $M_2$) सम (for शर्मं) $K_4$ Dn Ds $D_{6\ 10}$ $G_{3\ 4}$ समुपेष्यति, $T_2$ °पेक्ष्यति, $G_2$ °पेक्षति, M शममेष्यति — $^{c}$) $K_4$ B Dn Ds $D_{6\ 8}$ वध (for वधात्)

9 $^{b}$) $M_1$ (*inf lin*) राज्य, Cs त्यक्तु (as in text) — $^{c}$) B Dn Ds $D_{1\ 2\ 7}$ च (for तु). $Dn_1$ ते, $D_2$ च, $T_2$ $G_2$ स्वं, $G_4$ हि (for स)

10 $^{a}$) $K_1$ $Dn_2$ $D_{3\ 4.\ 9}$ न तन्; $G_{2\ 3}$ स तु (for न तु) $D_3$ $T_2$ $G_2$ मन्येत (for मन्ये स) $K_1$ $D_2$ Ca d न, $D_{3.\ 4\ 9}$ च (for स) — $K_4$ om $10^{b}$–$11^{d}$ — $^{b}$) $B_{2\ 4}$ °भाषित; Cs as in text. — $^{c}$) $B_{2\ 4}$ D (except $D_{1-4\ 7\ 9}$) यत्तु (for तत्र)

11 $K_4$ om 11 (cf. v l. 10), $D_1$ (hapl ) om $11^{a}$–$12^{b}$ — $^{a}$) $D_{2-4\ 9}$ तथाप्यापस्तु (for तथा पापस्तु) $K_3$ सत्यं (for सर्वं) — $^{b}$) $B_{1\ 3}$ पाडव, $T_1$ $G_{1\ 5}$ से वच°, $T_2$ $G_2$ दुर्मतिः (for कौरव ) — $^{c}$) $D_3$ अस्मिन् $T_2$ $G_2$ अपि (for असौ) — $^{d}$) $B_{2\ 4\ 5}$ $Dn_2$ $D_{2-4}$ लोके (for लोक°)

12 $D_1$ om. $12^{ab}$ (cf. v.l 11) — $^{a}$) $D_7$ मया (for मम) $B_{1\ 5}$ वा (for च) $K_4$ $B_{2-4}$ Dn Ds $D_{2-8\ 10}$ हि; $B_{1\ 5}$ अपि, $D_{3\ 4\ 9}$ स्यात् (for वै) — $^{b}$) $B_{2\ 4}$ कृत्स्नस्य जगतस्तथा; $D_7$ लोकवध्यश्च भारत — $B_5$ om $12^{c}$–$13^{d}$ — $^{d}$) $K_{1\ 2\ 4}$ B ($B_5$ om ) Ds $D_{1\ 3-7\ 9\ 10}$ तदा, Dn सदा, $G_5$ परै (for तथा)

13 $B_5$ om 13 (cf v l 12) — $^{a}$) $K_2$ $D_1$ $M_2$ विप्रल($K_2$ °लु)ब्ध; $D_8$ °कृष्ट, $G_1$ °युक्त (for °लुप्तं) $T_1$ $G_1$ च ते, $G_3$ ततो (for च वो)

14 $G_5$ om. 14–17. — $^{d}$) $D_{3.\ 4.\ 9}$ जानतास्य, T $G_3$ पाप तच्च

15 $G_5$ om. 15 (cf v l. 14) — $^{b}$) $K_{1.\ 2}$ $D_{1-4\ 7\ 9\ 10}$ त्वमस्य परम मत — $G_3$ (hapl ) om $15^{c}$–$16^{b}$.

16 $G_5$ om 16 (cf v.l 14), $G_3$ om $16^{ab}$ (cf v l. 15). — $^{a}$) $K_4$ $Dn_1$ $D_{1-4\ 6\ 7}$ $G_4$ स , $T_1$ न (for स) $T_1$ न हि, $T_2$ $G_{1\ 2\ 4}$ M अपि (for तस्य) — $^{b}$) $G_2$ मम वै परमं मतं — $^{c}$) $K_4$ B D (except $D_{3\ 4\ 7\ 9}$) मां कस्माद्; $T_2$ (*inf lin.*) चात्मान (for चाकस्माद्) — $^{d}$) $D_2$ अपि; $T_1$ $G_{1\ 3.\ 4}$ हि, $T_2$ $G_2$ अस्य (for अद्य) $K_1$ $D_2$ T $G_{1.\ 2}$ अति°; $D_{3\ 4}$ अपि, Cs अभि° (as in text). M अर्जुनाम्यतिशंकसे

17 $G_5$ om. 17 (cf v.l 14) — $^{b}$) $D_{3\ 4\ 9}$ S ($G_5$ om.) om च $K_4$ B D (except $D_{1-4\ 9.\ 10}$) अनु° (for अव°) $B_3$ S (except $G_3$, $G_5$ om ) मया (for त्वया) — $^{c}$) B (except $B_5$) Dn $D_{3.\ 4}$ $T_2$ $G_4$ Cs विधानं विहित, Ca d as in text — $^{d}$) $T_2$ (*inf lin.* as in text) $G_3$ कर्म (for शर्म)

18 $D_1$ (hapl ) om 18 — $^{a}$) Ds $D_{3\ 4.\ 9}$ च (for तु) — $^{b}$) $K_1$ $D_{6\ 7}$ M चापि (as in text), $T_1$ $G_{1\ 3}$ अपि च, $G_3$ चैव, the rest वापि — $^{d}$) $T_1$ $G_5$ नु (for तु)

19 $^{a}$) $B_5$ गोहरणान्, S (except $T_2$ $G_{1\ 2}$) गोग्रहणे $K_4$ $B_{1-4}$ Dn $D_2$ m $_{5\ 6\ 10}$ ह्युक्त°; $B_5$ सुक्त°, Ds [अ]त्युक्त°, $D_8$ युक्त° (for ब्रूयाद्) — $^{b}$) $K_4$ B (except $B_3$) Dn Ds $D_2$m $_{5\ 6\ 8\ 10}$ नैतच्, $D_{2-4}$ इत्थ (for इच्छन्) $B_3$ $D_2$(m as in text) $_{3.\ 4\ 9}$ धर्मं, $D_7$ कर्म (for शर्म) $K_4$ $B_5$ Dn Ds $D_2$m.$_{5\ 6\ 8\ 10}$ तथा हित, $B_{1-4}$ तथादित°; $D_{1\ 2}$ T G $M_1$ त($G_5$ य)था चिर; $D_{3\ 4\ 9}$ तथा परं — $^{c}$)

याच्यमानोऽपि भीष्मेण संवत्सरगतेऽध्वनि ॥ १९
तदैव ते पराभूता यदा संकल्पितास्त्वया ।
लवशः क्षणशश्चापि न च तुष्टः सुयोधनः ॥ २०
सर्वथा तु मया कार्यं धर्मराजस्य शासनम् ।
विभाव्यं तस्य भूयश्च कर्म पापं दुरात्मनः ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## ७८

नकुल उवाच ।
उक्तं बहुविधं वाक्यं धर्मराजेन माधव ।
धर्मज्ञेन वदान्येन धर्मयुक्तं च तत्त्वतः ॥ १
मतमाज्ञाय राज्ञश्च भीमसेनेन माधव ।
संशमो बाहुवीर्यं च ख्यापितं माधवात्मनः ॥ २
तथैव फल्गुनेनापि यदुक्तं तत्त्वया श्रुतम् ।
आत्मनश्च मतं वीर कथितं भवतासकृत् ॥ ३
सर्वमेतदतिक्रम्य श्रुत्वा परमतं भवान् ।
यत्प्राप्तकालं मन्येथास्तत्कुर्याः पुरुषोत्तम ॥ ४
तस्मिंस्तस्मिन्निमित्ते हि मतं भवति केशव ।
प्राप्तकालं मनुष्येण स्वयं कार्यमरिंदम ॥ ५
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ।

C. 5. 2849
B. 5. 80. 6
K. 5. 79. 6

K2 वाच्यमान, Dn1 युध्यमान, Cn as in text B2. 4 Dn D1 हि (for ऽपि) — d) K1. 2 द्रोणेन च गतात्म(K2 °ध्व)ना, G1 स शम्भुगतेध्वनि, M1 (sup lin as in text) 2-3 संवत्सरकृतेध्वनि

20 ab) T G1-3 तथा (for तदा) G2. 4 M यथा (for यदा) — c) K1 T G2 कणश, Cs क्षणश (as in text) S (except G3) एव (for अपि) — d) G3 दुष्ट, Cs तुष्ट (as in text)

21 a) K1 अपि, D7 हि, T1 G1. 5 च, T2 G2. 3 तन् (for तु) — c) D5 समाव्यं, T1 विचार्यं, Ca d s as in text T2 G2 तत् (for च)

Colophon missing in K3, K5 om it. — *Subparvan* K1. 2. 4 B Dn D5 D1. 2. 6-8. 10 G1 M भगवद्यान — *Adhy name* M वासुदेवस्वाभिप्रायकथन — *Adhy no* (figures, words or both) K1 (marg sec m) G1. 4 81, D5 (sec m) 76, D6 72, D7 T G2. 3 M2. 3. 5 80, G5 M1. 4 79 — *S'loka no* Dn 21

## 78

☞ This adhy is missing in K3 (cf v.l 5 32 15) K5 om the whole adhy (cf v.l 5 74 3)

1 d) K1 T2 (inf lin as in text) G3 M1. 2 त(K1 य)त्वया (for तत्त्वत·) K2 धर्म्यं युक्त वचस्त्वया, K4 B Dn D5 D1. 2. 6-8. 10 श्रुत चैवेह (B1. 3. 4. 5 Dn °व हि, B3 °व ह) तत्त्वया (D2 तत्तया), D3. 4. 9 धर्मयुक्त श्रुतं त्वया; G4 धर्मयुक्तेन तत्त्वत

2 D6 (hapl.) om. from 2a up to तत्त्वया in 3b — a) T1 G5 मति (for मत) S विज्ञाय (for आज्ञाय) D1. 2 तु (for च) — c) K1. 2 शसता, K4 D7 सगमे; Dn1 D5 सगमो, D2 शसित, D3. 4. 9 शस मे, D8 T2 शसतो, T1 शस नो, G2 शसितो, G3 सशयो, G4 सम मे, G5 शसावो, Cn सशमो (as in text) — d) K1. 2 D7 तथैव बलमात्मन, D1. 2 ख्यापितं परमात्मन

3 D6 om. up to तत्त्वया in 3b (of v l 2) — a) D1 S फल्गुनेन (as in text), the rest फा°

4 b) D5 ज्ञात्वा, T2 (inf lin as in text) G2 कृत्वा (for श्रु°) T1 G3 M परमक T1 G1. 5 पुमान् (for भवान्) — d) D2 S कार्यं (for कुर्या)

5 a) K1 यस्मिंस्तत्तन्; K2 M3 यस्मिंस्तस्मिन् (K2 sup lin यस्मिन्यस्मिन्); T2 G (except G1) M4 तस्मिंस्तत्तन्, Cs as in text K1 निमित्त हि, T2 (inf lin as in text) G निमित्तेषु D3. 4. 9 यस्मिन्निमित्ते हि मत — b) K2 हित, D3. 4. 9 वर, Cs मत (as in text) — c) D5. 6. 8 मनुष्येषु — d) K4 B D (except D1) Cs क्षम (for स्वय)

C. 5 2849
B. 5 80 6
K. 5 79 6

अनित्यमतयो लोके नराः पुरुषसत्तम ॥ ६

अन्यथा बुद्धयो ह्यासन्नसासु वनवासिषु ।
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ७

असाकमपि वार्ष्णेय वने विचरतां तदा ।
न तथा प्रणयो राज्ये यथा संप्रति वर्तते ॥ ८

निवृत्तवनवासान्नः श्रुत्वा वीर समागताः ।
अक्षौहिण्यो हि सप्तेमास्त्वत्प्रसादाज्जनार्दन ॥ ९

इमान्हि पुरुषव्याघ्रानचिन्त्यबलपौरुषान् ।
आत्तशस्त्रात्रणे दृष्ट्वा न व्यथेदिह कः पुमान् ॥ १०

स भवान्कुरुमध्ये तं सान्त्वपूर्वं भयान्वितम् ।
ब्रूयाद्वाक्यं यथा मन्दो न व्यथेत सुयोधनः ॥ ११

युधिष्ठिरं भीमसेनं बीभत्सुं चापराजितम् ।
सहदेवं च मां चैव त्वां च रामं च केशव ॥ १२

सात्यकिं च महावीर्यं विराटं च सहात्मजम् ।
द्रुपदं च सहामात्यं धृष्टद्युम्नं च पार्षतम् ॥ १३

काशिराजं च विक्रान्तं धृष्टकेतुं च चेदिपम् ।
मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि ॥ १४

स भवान्गमनादेव साधयिष्यत्यसंशयम् ।
इष्टमर्थं महाबाहो धर्मराजस्य केवलम् ॥ १५

विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः ।
श्रेयः समर्था विज्ञातुमुच्यमानं त्वयानघ ॥ १६

ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम् ।
तं च पापसमाचारं सहामात्यं सुयोधनम् ॥ १७

श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन ।
कमिवार्थं विवर्तन्तं स्थापयेतां न वर्त्मनि ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

6 a) S चरितो (for चिन्तितो). — b) D2 S च (for सः). — c) K2 4 अनन्यमतयो; G1 5 अनित्यमनसो.

7 a) B8 D7 10 मतयो (for बुद्धयो)

8 b) G4 विपिने (for वने वि-) Dn1 D3.4 9 सदा; G2 8 M1 (inf lin as in text) 3-5 तथा (for तदा) — c) D8 प्रत्ययो (for प्रणयो)

9 a) K2 B3 D2 °वनवासा.. K1 2 B3 D2 M स (for न·) — b) D3 4 9 श्रुत्वा वीरान्समागतान् — c) S (mostly) अक्षो° T1 G1 तु, G5 अपि (for हि). D1 7 T G2.5 एता (for इमा)

10 c) K1 2 4 D5 6 8 श्रुत्वा (for दृष्ट्वा) — d) K1 2 व्यथेद्धृदि, D3 4 9 G1 5 °तेह, D7 °दपि, T1 व्यथंते ह (for °दिह) T1 केचन, G5 कश्चन (for क· पुमान्) B3 व्यथते न हि क पुमान्

11 a) K1.2 °मुख्य (for °मध्ये) K2 त्व (for त) — b) K4 B Dn1 D8 D1 2 6 10 भयोत्तर, D7 नयान्वित, T1 G1 5 दयान्वित, M भवान्वित Dn2 D5 8 सांत्वपूर्व· भयोत्तर — c) S (except G3 4) [अ]सत्तो (for मन्दो)

13 b) D1 2 महारथ, D3 4 9 महाबल, D5 6 8 M2 सहानुज, G5 महामति (for सहात्मजम्) — d) K4 B D (except D1-4 7 9, 10) माधव (B2 केशव) (for पार्षतम्).

15 a) G4 देवकार्यं च (for गमनादेव). — d) G4 केशव (for केवलम्).

16 b) K2 D3 4.7 9 10 T1 G1 5 द्रोणश्चैव सबाह्लिक· — c) G4 सर्वेशृण्वन्यथावाक्य — d) K4 B D (except D1.7 9 10) G4 उच्यमानास्

17 a) B1 3 5 D1 वै तम्, D5.6 8 चैवम् (for चैनम्) — b) B2 4 सबांधव (for जना°)

18 b) T2 G2 वक्तासि; G1 3.5 M वक्ता च (by transp ), G4 वक्ता वै — c) G4 5 किम् (for कम्) K1.4 B1 2 5 Dn2 D1-4 9 10 नि(K1 न)वर्तंत, T1 G1 5 M विवर्त्मस्थ, T2 G2 विपक्षस्त्व, G3 4 विपक्षस्थ; Ca d s as in text. — d) T1 G1 5 स्थापयेथा T2 G2 नृपात्मज (for न वर्त्मनि) D8 स्थापयेतात्मवर्त्मनि.

Colophon missing in K3, K5 om. it — *Sub-parvan* K1 2 4 B Dn D8 D1 2 5-8 10 T1 G1 M1 3-5 भगवद्यान — *Adhy name* T1 G1 M नकुलवाक्य, G2 कृष्णयानं — *Adhy no* (figures, words or both) K1 (marg *sec m* ) G1 4 82, D5 (*sec m.*) 77, D6 73, D7 T G2 3 M2 3 5 81, G5 M1.4 80. — *S'loka no.* Dn D8 18.

## ७९

सहदेव उवाच ।

यदेतत्कथितं राज्ञा धर्म एष सनातनः ।
यथा तु युद्धमेव स्यात्तथा कार्यमरिंदम ॥ १
यदि प्रशममिच्छेयुः कुरवः पाण्डवैः सह ।
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः ॥ २
कथं नु दृष्ट्वा पाञ्चालीं तथा क्लिष्टां सभागताम् ।
अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ ३
यदि भीमार्जुनौ कृष्ण धर्मराजश्च धार्मिकः ।
धर्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे ॥ ४

सात्यकिरुवाच ।

सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ॥ ५
जानासि हि यथा दृष्ट्वा चीराजिनधरान्वने ।
तवापि मन्युरुद्भूतो दुःखितान्प्रेक्ष्य पाण्डवान् ॥ ६
तस्मान्माद्रीसुतः शूरो यदाह पुरुषर्षभः ।
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ॥ ७

वैशंपायन उवाच ।

एवं वदति वाक्यं तु युयुधाने महामतौ ।
सुभीमः सिंहनादोऽभूद्योधानां तत्र सर्वशः ॥ ८
सर्वे हि सर्वतो वीरास्तद्वचः प्रत्यपूजयन् ।
साधु साध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ ९

C. 5. 2870
B. 5. 81. 9
K. 5. 80. 10

इति श्रीमहाभारते उद्योगपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

### 79

☞ This adhy is missing in $K_8$ (cf v.l 5 32 15)

1 $K_5$ om. 1–7 (cf v l 5 74. 3) — [a]) $D_{3\ 4\ 9}$ $T_1$ $G_3$ M (except $M_4$) यर्येतत् ($M_1$ *inf lin* यदेतत्) — [c]) S तथा (for यथा) $K_2$ (before corr ) नो, $K_4$ B D (except $D_{3\ 4\ 7\ 9\ 10}$) च, T $G_{1\ 2}$ न; $G_3$ नु (for तु) S साध्य एव (for युद्ध°) — [d]) S यथाका($G_1$ °क्र)-मरिंदम

2 $K_5$ om 2 (cf v l 1) — [b]) $T_1$ $G_{1\ 5}$ युधि (for सह) — [d]) $K_{1.2}$ $D_{3\ 4\ 9}$ सदैव

3 $K_5$ om 3 (cf v.l. 1) — [a]) $K_{1\ 2}$ $D_{6\ 9}$ तु, $D_1$ $G_{3\ 4}$ M हि, $D_7$ च (for नु) — [b]) $K_{2\ 4}$ B Dn $D_8$ $D_{2-6\ 8\ 9}$ $G_{1.4}$ कृष्णा (for क्लिष्टा) $Dn_1$ गता सभा, $G_1$ $M_{3\ 5}$ सभां गता, Ca as in text. $D_7$ क्लिश्यमानामनागसम्

4 $K_5$ om 4 (cf v l 1) — [b]) $D_7$ सात्यकि , $T_1$ $G_{1.5}$ धार्मिका — [d]) $B_3$ $D_8$ युद्धम् (for योद्धुम्) — After 4, $D_1$ S ins

378* ब्रूहि मद्वचनं कृष्ण सुयोधनमपण्डितम् ।
कृच्छ्रे वने वा वस्तव्य पुरे वा नागसाह्वये ।

[ (L 1) $D_1$ तद्वचनं $T_2$ $G_2$ दुर्योधनम् $T_1$ $G_{1\ 5}$ उपस्थित (for अपण्डितम्) — (L 2) $D_1$ कृच्छ्रेणापि न कौरव्य पुरे सिद्धागसा° ]

5 $K_5$ om 5 (cf v l 1) — [a]) S (except $G_4$) महाबाहु° — [b]) $D_8$ $D_1$ $T_1$ $G_{1\ 5}$ $M_1$ °द्युति (for °मति ) — [c]) $K_{1.2}$ $D_{7\ 10}$ सुयो° (for दुर्यो ) — [d]) $K_{1.2}$ $D_{7\ 10}$ सम्यक् (for तस्य)

6 $K_5$ om 6 (cf v l 1) — [a]) $K_4$ B Dn $D_8$ $D_{3-8}$ न जानासि, $D_1$ जानामि हि, $D_2$ जानामीति, $D_9$ जानासि न (for जानासि हि) $T_2$ $G_3$ कृष्ण (for दृष्ट्वा). — [b]) $D_2$ चीराम्बर° — [c]) $D_8$ उद्भूत , $D_{1\ 3.4.9}$ समूत (for उद्भूत°)

7 $K_5$ om 7 (cf v l 1) — [a]) $B_3$ वीर (for शूर ) — [b]) $K_4$ B D (except $D_{3.4\ 9}$) रणकर्कश (for पुरुष° ) — [c]) $G_1$ $M_{3-5}$ °यौधाना — [d]) $B_{2\ 4}$ मधुसूदन (for पुरुषो°)

8 $K_5$ resumes ! — [a]) $K_{1.2}$ $B_2$ $D_{3.4\ 7\ 9}$ $G_4$ ब्रुवति (for वदति) $D_1$ तद्वाक्य, $D_7$ $T_1$ $G_5$ $M_1$ वाक्ये तु — [c]) $G_4$ समृत (for सुभीम ) $K_{1\ 2}$ बभूव सुमहानाद , $K_5$ बभौ मही सुनादेन, $D_{3.4\ 9}$ सहर्ष समभूद्धय ; $D_7$ बभौ मही तदा * * — [d]) $D_2$ भारत, $D_{7\ 10}$ गर्जतां (for सर्वश )

9 [a]) B Dn $D_{1.5\ 6\ 8\ 10}$ सर्वश (for °त ) $D_1$ शूरा (for वीरा ) — [b]) $D_1$ $G_2$ सम° (for प्रत्य°) — [c]) A few MSS सैनेय

Colophon om in $K_2$ $G_3$, $K_8$ missing — *Sub-parvan* $K_{1\ 4\ 5}$ B Dn $D_8$ $D_{1\ 2\ 5-8\ 10}$ $G_1$ M भगवद्यान

## ८०

C. 5. 2871
B. 5. 82. 1
K. 5. 81. 1

वैशंपायन उवाच ।

राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता ॥ १
सुता द्रुपदराजस्य स्वसितायतमूर्धजा ।
संपूज्य सहदेवं च सात्यकिं च महारथम् ॥ २
भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ॥ ३
विदितं ते महाबाहो धर्मज्ञ मधुसूदन ।
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ॥ ४
धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन ।
यथा च संजयो राज्ञा मन्त्रं रहसि श्रावितः ॥ ५
युधिष्ठिरेण दाशार्ह तच्चापि विदितं तव ।
यथोक्तः संजयश्चैव तच्च सर्वं श्रुतं त्वया ॥ ६
पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते ।
कुशस्थलं वृकस्थलमासन्दी वारणावतम् ॥ ७
अवसानं महाबाहो किंचिदेव तु पञ्चमम् ।
इति दुर्योधनो वाच्यः सुहृदश्चास्य केशव ॥ ८
तच्चापि नाकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः ।
युधिष्ठिरस्य दाशार्ह ह्रीमतः संधिमिच्छतः ॥ ९
अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः ।
संधिमिच्छेन्न कर्तव्यस्तत्र गत्वा कथंचन ॥ १०
शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह ।

— *Adhy. name* T1 M1 सहदेववाक्यं, G1 M2–5 सहदेवसात्यकिवाक्यं — *Adhy. no.* (figures, words or both) K1 G1.4 83, D5 78, D6 74, D7 G5 M1.4 81, T G2 M2.3.5 82. — *S'loka no.* Dn D8 9

## 80

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15).

1 ^a) B5 D9 तद् (for तु). — ^b) G4 वच॰ (for हित॰). — ^c) G4 कृष्णा तदनु दाशार्हं — ^d) B1.3 Ds2 D8 ॰कर्पिता

2 ^b) K1 Ca d असिता॰; S (except G4) स्वंचिता॰ — ^c) D3.4.9 M पूजयन् (for संपूज्य). K1.5 D7.10 त, Ds2 तु (for च) G3.4 पूजयित्वा तु शैनेय — ^d) G2.4 सहदेव (for सात्यकिं च)

3 ^c) D2–4.9 वाचं, T1 G1.5 देवी (for वाक्य).

4 Before 4, K1 D5 T2 G1.2.5 ins. द्रौपद्युवाच (resp. द्रौपदी) — D1 om. 4^c–5^b.

5 D1 om. 5^ab (cf. v.l. 4) — ^c) K1.5 D7.10 हि, K2 Ds2 D6 स (for च) D8 राज्ञः

6 ^a) D10 युधिष्ठिरस्य D1 धर्मज्ञ (for दाशार्ह). — K5 om. 6^cd. — ^c) T2 G2.5 M5 यथोक्त. T1 G1 समय. (for सजय॰) — ^d) K1 D5.4.7.9.10 transp श्रुत and त्वया K2 यथा, D8 D1.6 T1 G1.5 मया (for त्वया)

7 7^ab =(var.) 5. 70. 16^ab. — ^b) D2 ग्रामाणि नगराणि च — 7^cd = 5. 31. 19^ab, 70. 15^ab — ^c) N अविस्थ(D5 D6 ॰स्थू)ल Dn2 D8 D6.9 वृकस्थूल — ^d) K2 M आसदी, K4 B Dn2 D5 D6.8.3.10 माकंदी, K1 D7 मासदी, Dn1 D8.4.9 माकद, D1 मासदे (sic), T1 G4 अवर्ती, T1 (sup. lin.) 2 G1.2.5 वासर्ती, G3 वारावं (for आसन्दी as in K1 D2 only)

8 8^ab =(var.) 5. 31. 19^cd, =(var.) 5. 70. 15^cd. — ^a) K2 D1.2 T G तु (K2 D2 G4 च) गोविंद (for महा॰). M अवसाने च (M1.2 तु) गोविंद — ^b) B Dn D5 T1 G1.2 M (except M4) कचिद् (for किंचिद्) K4 B Dn D3–6.8.9 एकं (for एव) K1.2.5 D5 D2.7.10 अत्र, K4 B Dn D1.3–6.8.9 च (for तु) — ^d) K2 D1.2 सजय (for केशव) — K4 om. from केशव up to 10^a.

9 K4 om. 9 (cf. v.l. 8) — ^a) B Dn D5 D6.8 न (for तच्), and हि (for न) D1 तत्र (for तच्च) — After 9^ab, D8 reads 10^c–11^b — K5 D1 om. (hapl.) 9^c–10^b — ^d) B (except B5) Dn D5 D3.4.9 G2 श्री॰ (for ह्री॰)

10 K5 D1 om. 10^ab (cf. v.l. 9), K4 om. 10^a (cf. v.l. 8) D8 reads 10^c–11^b after 9^ab — ^c) K5 B1.2 D (except D1.3.4.7.9) G3 M1 (inf. lin.) 2 कर्तव्य

11 ^a) K1.2 Ds2 द्राक्ष्यति, M3–5 शक्ष्यसि Ds2 इ, D1 च, G3 इह, M3–5 त्व (for हि) — ^b) S विनाशे (M1.2 ॰रोधे) पाडवा (G3 बांधवै, M3–5 पांडवै॰) सह. — ^cd) G5 M3–5 घृत॰ (for घात॰) B2 D1.2 transp. घोरं and क्रुद्धं. S क्रुद्धाः (for ॰द्ध) T2 (inf. lin.) G1

धार्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ॥ ११
न हि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन ।
तस्मात्तेषु न कर्तव्या कृपा ते मधुसूदन ॥ १२
साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
मोक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥ १३
तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत ।
त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः ॥ १४
एतत्समर्थं पार्थानां तव चैव यशस्करम् ।
क्रियमाणं भवेत्कृष्ण क्षत्रस्य च सुखावहम् ॥ १५
क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः ।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥ १६
अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात् ।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ १७
यथावध्ये भवेद्दोषो वध्यमाने जनार्दन ।
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः ॥ १८
यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु ।
पाण्डवैः सह दाशार्ह सृञ्जयैश्च ससैनिकैः ॥ १९
पुनरुक्तं च वक्ष्यामि विश्रम्भेण जनार्दन ।
का नु सीमन्तिनी मादृक्पृथिव्यामस्ति केशव ॥ २०
सुता द्रुपदराजस्य वेदिमध्यात्समुत्थिता ।
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ २१
आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः ।
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् ॥ २२
सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः ।
अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः ॥ २३
साहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता ।
पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ २४
जीवत्सु कौरवेयेषु पाञ्चालेष्वथ वृष्णिषु । C. 5. 2695 B. 5. 82. 25 K. 5. 81 25

°समाधितु, Ca d 8 as in text
12 $K_5$ om. (hapl.) from $12^{b}$ up to दानेन in $13^{a}$, $D_4$ om. from स्तेषु up to $18^{d}$ — $^{b}$) S शक्योर्थस्ते कथंचन ($M_2$ °स्तेन्ति कश्चन) — $G_5$ (which om $12^{c}$–$13^{d}$) *repeats* 11 after $12^{ab}$ — $^{cd}$) $D_{8}$ 9 transp तेषु and न $G_4$ कृपा ते (for तेषु न), and न तेषु (for कृपा ते)
13 $D_4$ $G_5$ om 13, $K_5$ om. साम्ना दानेन (cf. v.l 12) — $^{a}$) $K_{1}$ 5 $D_{7}$ 10 वै (for वा) $G_8$ वार्ष्णेय (for वा कृष्ण) — $^{b}$) S ($G_5$ om.) शाम्यते ये न शत्रव — $^{c}$) $K_5$ B (except $B_5$) Dn $D_8$ $D_2$ 3.6 10 (m as in text) योक्त°; S ($G_5$ om ) क्षेप्त° (for मोक्त°)
14 $D_4$ om 14 (cf. v.l. 12) — $^{a}$) $K_2$ $T_1$ महान्, $D_{8}$.9 मद्रा (for महा-) — $^{b}$) $D_7$ मोक्त° (for क्षेप्त°), cf v l. 13 — $^{d}$) $K_4$ $D_8$ 9 पाचालैः (for पाण्डवैः) $B_{1-3}$ transp सह and सृञ्जयैः $K_1$ $D_2$ 7 9 10 M (except $M_2$) च स ; $K_5$ चैव (for सह)
15 $D_4$ om 15 (cf. v.l. 12) — $^{d}$) $K_1$ एव, $G_4$ अपि (for च)
16 $D_4$ om 16 (cf v l 12), $B_2$ om. $16^{ab}$ — $^{b}$) $D_5$ बलम् (for लोभम्) $K_5$ $D_{10}$ आश्रित (for आस्थित ) — $B_2$ om (hapl.) $16^{d}$–$19^{c}$
17 $B_2$ $D_4$ om. 17 (cf v.l. 16, 12) — $^{b}$) $T_1$ $G_4$ सर्वान्पापेषु, Ca सर्व° (as in text) $K_1$ $M_{3}$ 4 अपि स्थितात्, $T_1$ $G_4$ अवस्थितान् $Dn_1$ $D_2$ 8 9 सर्वपापे ष्व($Dn_1$ ष्य)वस्थितात् — $^{c}$) $D_{10}$ (m as in text) $G_4$ °भूताना (for °वर्णाना)
18 $B_2$ $D_4$ om 18 (cf. v l. 16, 12) — $^{ab}$) $K_{1}$ 3 5 $D_1$ 7 10 यश्च, $M_1$ 2 अथ (for यथा) $B_1$ 5 Dn transp भवेद्दोषो and वध्यमाने — $^{d}$) $K_1$ 5 $D_{1.8.9}$ 10 वृत्त°, $K_3$ वेद°, $D_2$ सर्व° (for धर्म°)
19 $B_2$ om $19^{abc}$ (cf v l 16), $K_5$ om. $19^{a}$–$20^{b}$ — $^{a}$) $D_1$ $T_1$ G (except $G_{3}$ 4) $M_{2-5}$ त्वा, $D_2$ एषा, $T_2$ (after corr ) अस्मान्, $M_1$ वो (for त्वा) — $^{b}$) $D_2$ तथा (for दोष ), and हित (for तथा) — $^{c}$) $B_{3.4}$ $Dn_2$ $D_5$ $G_{3}$ 4 दाशार्हैः — $^{d}$) $B_{3}$ 4 $D_2$ सहसैनिकैः; $B_5$ च ससोमकैः, S च महारथैः (for च ससै°)
20 $K_5$ om $20^{ab}$ (cf v.l 19) — $^{b}$) $K_4$ $D_1$ S Ca विस्रम्भेण, $D_{8}$ 4 9 विश्रमाच्च — $^{c}$) $K_{1.2}$ 4 B D (except $D_1$ 3 4 7 10) $G_4$ तु, $K_5$ वा (for नु) $K_5$ $D_1$ M (except $M_2$) तादृक् (for मा°)
21 $^{b}$) Some MSS वेदीमध्यात्, $G_2$ अग्निकुण्डात्. — $^{d}$) $D_{3}$ 4 9 वरा (for प्रिया)
22 $^{a}$) Some MSS अज° — $^{d}$) $Dn_1$ $D_{3}$ 4 7 0 पञ्चानामिन्द्र($D_7$ °ना दीप्त)वर्चसा
23 $^{d}$) S एते; Ca d 8 ते (as in text)
24 $^{a}$) $D_1$ कच° (for केश°) — $^{b}$) Dn $D_5$ $D_7$ $G_{3.4}$ M सभागता, $D_1$ वश गता — $D_6$ om $24^{c}$–$25^{d}$
25 $D_6$ om 25 (cf v l 24) — $^{a}$) $K_1$ $D_{5}$ 7 8 10 पाण्डवेयेषु, $K_{4}$ 5 B Dn $D_5$ $D_{8}$ 4 9 पाण्डुपुत्रेषु (for कौरवे°) — $^{b}$) $K_6$ $B_{3-4}$ $Dn_1$ $D_2$ 7 10 पञ्चालेषु $K_5$ $D_8$ च

C. 5. 2805
B. 5. 82. 25
K. 5. 81. 25

दासीभूतासि पापानां सभामध्ये व्यवस्थिता ॥ २५
निरामर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु ।
त्राहि मामिति गोविन्द मनसा काङ्क्षितोऽसि मे ॥ २६
यत्र मां भगवान्राजा श्वशुरो वाक्यमब्रवीत् ।
वरं वृणीष्व पाञ्चालि वरार्हासि मतासि मे ॥ २७
अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति ।
मयोक्ते यत्र निर्मुक्ता वनवासाय केशव ॥ २८
एवंविधानां दुःखानामभिज्ञोऽसि जनार्दन ।
त्राहि मां पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवाम् ॥ २९
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साहं दासीकृताभवम् ॥ ३०
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ३१
यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि ।
धार्तराष्ट्रेषु वै कोपः सर्वः कृष्ण विधीयताम् ॥ ३२
इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम् ।
सुनीलमसितापाङ्गी पुण्यगन्धाधिवासितम् ॥ ३३
सर्वलक्षणसंपन्नं महाभुजगवर्चसम् ।
केशपक्षं वरारोहा गृह्य सव्येन पाणिना ॥ ३४
पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी ।
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ ३५
अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः ।
स्मर्तव्यः सर्वकालेषु परेषां संधिमिच्छता ॥ ३६
यदि भीमार्जुनौ कृष्ण कृपणौ संधिकामुकौ ।
पिता मे योत्स्यते वृद्धः सह पुत्रैर्महारथैः ॥ ३७
पञ्च चैव महावीर्याः पुत्रा मे मधुसूदन ।

---

(for अथ)

26 $^{a}$) K2 5 B (except B5) Dn2 D8 D1.7 10 M2 5 निरमर्षेषु, Ca d as in text. — $^{b}$) K2 क्षम° (for प्रेक्ष°). — $^{c}$) K2.4 B D (except D1 7.9 10) पाहि (for त्रा°) — $^{d}$) K4 B D (except D1 7 10) चिंतितो (for काङ्क्षितो) T2 (*inf lin* as in text) मया (for ऽसि मे)

27 K2 om. 27 — $^{ab}$) D1 G3 5 M (except M2) मा, D3.4 9 अथ (for मा) Dn1 Ds2 D3 4.7 9 G2 3 5 M1 भगवन् D2 T1 transp भगवान् and श्वशुरो — $^{d}$) K4 B1 3 4 D6 हि; D1 च, T1 G1 स्त्री, M त्व (for the first असि) K1 5 Dn D3 4.7 9 10 मम, G3 4 हि मे (for असि मे)

29 D8 om. 29$^{ab}$ — $^{b}$) K2 पात्रभूतां, K4 D5 6 G2 अभिज्ञास्मि — $^{c}$) K4 5 B D (except D1-4 7-9) त्रायस्व (for त्राहि मां) — $^{d}$) K4 B2 4 Dn D6 8 T2 G4 सभर्तृ(G4 °भ्रातृ)ज्ञातिबाधवान्, K5 T1 G1 5 सभ्रातृज्ञाति° बांधवाम्

30 $^{ab}$) K2 5 Dn1 D7 8 न त्वहं (for नन्वहं) B1 3 भीष्मस्य धृतराष्ट्रस्य नन्वहं कृष्ण चोभयो° — K5 om. 30$^{b}$–31$^{b}$ — $^{d}$) K1 2 4 B D (except D1 2) बलात् (for अभवम्)

31 K5 om 31$^{ab}$ (cf v l. 30) — $^{ab}$) T G M4 धनुष्मत° K2 4 B Dn D3 D5 6 8 10 धिक्पार्थस्य धनुष्मत्तां भीमसेनस्य धिग्बलं — $^{c}$) K2 पाप° (for कृष्ण)

32 $^{b}$) K1 यद्यस्ति मयि ते कृपा — $^{d}$) K1 D1 M Cd विनी°, D2 (before corr ) प्रणी°, Ca 3 विधी° (as in text) — After 32, K4 ins an addl colophon

33 K5 om 33–41. — Before 33, all MSS. except T1 G3 5 ins वैशं° उ° (D1 2 4 8 om. उ°) — $^{a}$) D1 मृदुसभार, Ca d s as in text. — $^{b}$) D2m कुटिला°, Cd s वृजिना° (as in text) — $^{d}$) K4 B D (except D1 10) सर्वं° (for पुण्य°)

34 K5 om. 34 (cf. v l 33) — $^{a}$) Dn1 D2 °सपूर्णं, Ds2 °संयुक्त — $^{c}$) K2 D7 केशपाश, Ca d as in text. — $^{d}$) K2.4 B D (except D2 4 7 9 10) वामेन (for सव्ये°)

35 K5 om 35 (cf v l. 33), D1 om 35$^{cd}$ — $^{c}$) D3.4 9 अश्रुपूर्णेक्षण B2 4 दीना, G4 कृष्ण — $^{d}$) G4 इद (for कृष्णं) T1 G1 5 वाक्यमथ (for वचनम्)

36 K5 om 36 (cf v l 33) — Before 36, K4 T G ins. द्रौपदी (K4 cont उ°) — $^{a}$) K2 मे; K4 D2 (by corr.) 5 7 8 तु (for ते) — $^{b}$) K1.2 Dn D3 D1 7 9 10 M4 °करोद्धुत — $^{cd}$) K2 B Dn D3 D2-5 8 सर्वकार्येषु; K4 संधिकार्येषु, G4 5 सर्वलोकेषु Dn1 Ds2 D2 5 G2 4 इच्छतां D6 स्मरणीय° सदा कृष्ण तत्र तेषु त्वया विभो

37 K5 om 37 (cf v l 33), D6 om 37$^{ab}$. D2 om from संधि° up to मे in 38$^{b}$. — $^{b}$) D3 4 9 संधिकारकौ, T1 G1 5 °काङ्क्षिणौ — $^{c}$) D3 4 9 योत्स्यति मे (for मे योत्स्यते) B4 वीर° (for वृद्ध°) D6 पिता मम महाबाहो, G5 विराट सहपुत्रश्च — $^{d}$) K4 om. (hapl.) from पुत्रैर् up to 38$^{d}$ D3 4 9 महारथ.. T1 G1 5

अभिमन्युं पुरस्कृत्य योत्स्यन्ति कुरुभिः सह ॥ ३८
दुःशासनभुजं श्यामं संछिन्नं पांसुगुण्ठितम् ।
यद्यहं तं न पश्यामि का शान्तिर्हृदयस्य मे ॥ ३९
त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे ।
निधाय हृदये मन्युं प्रदीप्तमिव पावकम् ॥ ४०
विदीर्यते मे हृदयं भीमवाक्शल्यपीडितम् ।
योऽयमद्य महाबाहुर्धर्मं समनुपश्यति ॥ ४१
इत्युक्त्वा बाष्पमन्देन कण्ठेनायतलोचना ।
रुरोद कृष्णा सोत्कम्पं सस्वरं बाष्पगद्गदम् ॥ ४२
स्तनौ पीनायतश्रोणी सहितावभिवर्षती ।
द्रवीभूतमिवात्युष्णमुत्सृजद्वारि नेत्रजम् ॥ ४३
तामुवाच महाबाहुः केशवः परिसान्त्वयन् ।
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ ४४
एवं ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवाः ।
हतमित्रा हतबला येषां क्रुद्धासि भामिनि ॥ ४५
अहं च तत्करिष्यामि भीमार्जुनयमैः सह ।
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ॥ ४६
धार्तराष्ट्राः कालपक्वा न चेच्छृण्वन्ति मे वचः ।
शेष्यन्ते निहता भूमौ श्वसृगालादनीकृताः ॥ ४७
चलेद्धि हिमवाञ्शैलो मेदिनी शतधा भवेत् ।
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ४८
सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्राञ्श्रिया युक्तानचिराद्द्रक्ष्यसे पतीन् ॥ ४९

C. 5. 2939 B. 5. 82. 49 K. 5. 81. 49

इति श्रीमहाभारते उद्योगपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

---

द्रुपद सह पुत्रैः

38 $K_{4.5}$ om 38 (cf v.l. 33), $D_2$ om up to मे in 38^b (cf v.l. 37) — ^a) $D_{10}$ पुत्रे, T $G_{1.2.3}$ इमे (for पुत्र) — ^c) $K_{2.3}$ B Dn $D_5$ $D_2$ (after corr.) $_{3-6.8.9}$ योत्स्यते. $T_1$ $G_{1.3}$ दातु° (for पुर°)

39 $K_5$ om 39 (cf v.l. 33) — ^a) $D_1$ $G_3$ $M_{3-5}$ न्नाय, $T_{1.2}$ (inf. lin.) $G_{2.3}$ सायन्, $G_6$ चापि, $M_{1.2}$ श्यावं (for श्याम) — ^b) Some N MSS पांसु° S (except $G_{3.6}$ $M_{2.5}$) पांसुगुण्ठित — ^c) $D_{6.8.9}$ शु (for त) $K_1$ $D_{3-6.7.8.9.10}$ $G_6$ न प्र (for तं न) — ^d) $D_{3.6.8}$ हृदये मम (for हृदयस्य मे)

40 $K_5$ om 40 (cf. v.l. 33) — ^b) $D_{2.6.9}$ प्रतीक्षन्त्या — $D_2$ om 40^c–41^d — ^c) $B_4$ $Dn_2$ $D_{3-5}$ नि° (for नि°) — ^d) $K_1$ समिद्धम् (for प्रदीप्तम्)

41 $K_5$ $D_6$ om 41 (cf v.l. 33, 40) — ^a) $K_1$ $D_7$ S (except $G_6$ $M_1$) विदीर्येत — ^c) $D_8$ महाबाहो — ^d) $K_{1.2}$ B (except $B_4$) Dn $D_{1.3.7.10}$ पश्यानु° (for समनु°)

42 Before 42, $T_2$ G ins. वैश° — ^a) $K_4$ °छन्देन, $B_3$ $Dn_2$ °स्कन्देन, $D_2$ (before corr.) $_{3.4.9}$ °छन्नेन, $G_3$ °क्लिन्नेन (for °मन्देन) — ^c) $K_1$ $B_3$ $D_{1-4.7.9}$ T $G_{2.3.5}$ $M_1$ सोत्कण्ठ, $K_4$ सापेक्ष, $G_4$ सोत्कण्ठा — ^d) $K_{3.5}$ $D_{3.4.7-10}$ M सुस्वर, $K_2$ $T_2$ सस्वर, $B_3$ $D_3$ सस्वन $K_1$ बाष्पगद्गदा, $K_3$ भीमगद्गदा, $D_8$ बाष्पगद्गदं

43 ^b) $K_{1.5}$ $D_{2-4.7.8.10}$ $T_1$ $G_1$ सहितां, Ca सहितौ (as in text) $K_5$ $D_5$ $D_7$ $G_{2.5}$ $M_3$ अभिवर्षति — ^c) $K_3$ अत्यर्थं, Cs अत्युष्ण (as in text) — ^d) $K_1$ $D_7$ $G_4$ असृजद्, $K_{2.4}$ $B_{1-3.5}$ $Dn_1$ $D_{8.10}$ मुञ्चती; $B_4$ $Dn_2$ $D_5$ $D_{6.9}$ मुञ्चती

44 Before 44^cd, $T_2$ ins श्रीभगवान् — ^c) $D_{4.9}$ नचिराद् (for अचिराद्) $D_7$ भीरु (for कृष्णे) — ^d) $D_{2.6.9}$ $G_3$ रुदतीर् $K_1$ कौरव°, $K_3$ $D_{10}$ S (except $G_3$ $M_{1.2}$) भारत°

45 ^a) $K_{1.4.5}$ $D_{n1}$ $D_7$ ते (for ता) T G $M_{1.2}$ चापि (for भीरु) $M_{3-5}$ च रोत्स्यन्ति (for भीरु रो°) — ^b) $D_3$ निवृत्त° (for निहत°) — ^d) $D_{n2}$ $G_3$ यासां (for येषां) $K_4$ $B_{1-3.5}$ Dn $D_5$ $D_{3-6.8.9}$ भाविनि ($D_{n2}$ $D_8$ °नी), $B_4$ $D_7$ $T_2$ $G_{1.2.4}$ $M_3$ भामिनी

46 ^a) $D_{2.4.9}$ धे (for च) — ^c) $K_1$ S °नियोगाच्च — ^d) $D_1$ विधिचोदितात्

47 ^b) $T_1$ $G_{1.3}$ च (for चेत्) S श्रोष्यति (for शृण्वन्ति) $D_{3.6.9}$ मद् (for मे) — ^c) $K_{3.5}$ $D_{1.7.8}$ $M_{1.2}$ शेष्यति — ^d) Some MSS °सृगाल° $T_2$ $G_{2.5}$ °छादनी° Ca.d cite अदनीकृता (as in text)

48 ^a) $K_{1.5}$ $D_{7.10}$ M चलेत; T G चलेच्च ($G_4$ पतेच्च) (for चलेद्धि) $B_3$ शतधा (for हिमवान्) — ^b) S शकली (for शतधा) $K_1$ B $Dn_2$ $D_5$ $D_{1.10}$ फलेत्, $K_4$ $Dn_1$ $D_{2.4.6}$ भजेत् (for भवेत्) — $K_5$ om (hapl.) from

## ८१

C. 5. 2920
B. 5. 83. 1
K. 5. 82. 1

अर्जुन उवाच ।
कुरूणामद्य सर्वेषां भवान्सुहृदनुत्तमः ।
संबन्धी दयितो नित्यमुभयोः पक्षयोरपि ॥ १
पाण्डवैर्धार्तराष्ट्राणां प्रतिपाद्यमनामयम् ।
समर्थः प्रशमं चैषां कर्तुं त्वमसि केशव ॥ २
त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणम् ।
शान्त्यर्थं भारतं ब्रूया यत्तद्वाच्यममित्रहन् ॥ ३
त्वया धर्मार्थयुक्तं चेदुक्तं शिवमनामयम् ।
हितं नादास्यते बालो दिष्टस्य वशमेष्यति ॥ ४

भगवानुवाच ।
धर्म्यमस्मद्धितं चैव कुरूणां यदनामयम् ।
एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ॥ ५

वैशंपायन उवाच ।
ततो व्यपेते तमसि सूर्ये विमल उद्गते ।
मैत्रे मुहूर्ते संप्राप्ते मृद्वर्चिषि दिवाकरे ॥ ६
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतसस्यसुखे काले कल्यः सत्त्ववतां वरः ॥ ७
मङ्गल्याः पुण्यनिर्घोषा वाचः शृण्वंश्च सूनृताः ।

---

48[d] up to हतामित्रा in 49[c] — After 48, G1 ins

379* द्यौः पतेत्पृथिवी शीर्येद्धिमवाञ्छिथिलीभवेत् ।

G1 cont. T1 G5 ins after 48

380* शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ।

(cf. 48[cd])

49 K5 om. up to °मित्रा (cf. v.l. 48). — [a]) T1 G1.5 च (for ते) — [b]) G3.4 बाष्पं T1 कृष्णे बाष्पाणि गृह्णतां. — [d]) K1.4 M3 नचिराद् (for अचि°)

Colophon missing in K3 — *Sub-parvan* K (K3 missing) B Dn D5 D1.2.5-8.10 M भगवद्यान. — *Adhy. name* T1 द्रौपदीवासुदेवसंवाद°; G1 वासुदेवद्रौपदीसंवाद°; M द्रौपदीवाक्य. — *Adhy no.* (figures, words or both) K1 G1.4 84, D5 79, D6 74, D7 T G2 M2.3.5 83, G3.5 M1 82, M4 80 — *S'loka no.* K5 34, Dn 48, D3 51

## 81

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15).

1 K5 om 1–4 Dn1 D3.4.9 युधिष्ठिर (for अर्जुन) — [a]) D1.2 चैव, S इह (G2 अपि) (for अद्य) — [d]) D1 transp. उभयो and पक्षयो. S (except M2) तथा (for अपि).

2 K5 om. 2 (cf. v.l. 1) — [c]) K4 B Dn D5 D5.6.8 M5 एव (for एषां) — [d]) K4 B D (except D1.2.7.9.10) T G1.2.4 M5 अर्हसि (for त्वमसि)

3 K5 om. 3 (cf. v.l. 1), D7 om 3[a]–4[b]. — [a]) T2 G2 मित्र (for इत). — [b]) T2 G (except G1) दुर्यो° (for सुयो°) — [c]) K4 B D (except D1, D7 om.) G2 M2.5 भ्रातर (for भारत) D1 ब्रूहि, D2.3 T2 ब्रूयाद् (for ब्रूया) — [d]) B3 युक्तमाक्यम् (for यत्तद्वाच्यम्) S यद्वा(G2 मा वा)च्यमिह (M °ति) शत्रुहन्

4 =(var.) 5. 91. 18 — K5 om. 4 (cf. v.l. 1), D7 om 4[ab] (cf. v.l. 3) — [b]) K1 D5 D1 उक्त (for उक्तं). D1 शमम् (for शिवम्) — [c]) G1 आसादयन्, G2 M3-5 आसाद्यते (for आदास्यते).

5 K5 B1.3.4 Dn D1.2.7.10 श्रीभगवानुवाच (D1 om. उ°); K3 कृष्ण उ°, G4 श्रीवासुदेव — [a]) K1.3 Dn2 D7.9 G2 M2 धर्मं, C5 धर्म्यं (as in text) — [c]) T1 G1.5 तत्र (for एष) — [d]) K1.2.5 D2 अभीप्सयन्, C3 as in text.

6 [a]) K5 व्यपेते, B1.3 T1.2 (inf. lin. as in text) G1.2.3 व्यतीते, D51 G4 M3-5 व्यपेत- (for व्यपेते) — [b]) B3 विमल उद्यते, B4 D3.5.6 G2 Cn विमलवद्गते; Dn विमलता गते, D2 विमलमुद्गते, G2 विमल उत्थिते (for विमल उद्गते) — [c]) D3.4.9 पूर्वाह्णे (for संप्राप्ते) — [d]) D7.10 वृद्धार्चिषि, D3 महा°, S ऋद्धा°

7 [a]) K5 कामदे; D3m.7 T2 (inf. lin.) कार्तिके, Ca d s कौमुदे (as in text) Ca ꙮकौमुदे उत्थानैकादशीपूर्वदशम्यामाश्विनकृष्णपष्ठ्यामिति विमलबोधपादाः।ꙮ — [c]) K1 स्फीत° सस्ये° शुभे, K4 B2.3.5 D (except Dn1) स्फीतसस्यसुखे (B3 D10 °स्ये शुभे, D2 °स्यसदा, D7 °स्यशुभे); S स्फीतसस्ये सुखे, Ca d as in text — [d]) N (K3 missing) Ca d कल्प ; G3-5 काल्य (for कल्य°). D1.3.4 सत्य° (for सत्त्व°)

8 [a]) K5 G4.5 मांगल्या° D3.4.9 मांगल्यश्रुतिनिर्घोषा°. — [b]) B2 T1 G1.3 तु (for च).

ब्राह्मणानां प्रतीतानामृषीणामिव वासवः ॥ ८
कृत्वा पौर्वाह्णिकं कृत्यं स्नातः शुचिरलंकृतः ।
उपतस्थे विवस्वन्तं पावकं च जनार्दनः ॥ ९
ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।
अग्निं प्रदक्षिणं कृत्वा पश्यन्कल्याणमग्रतः ॥ १०
तत्प्रतिज्ञाय वचनं पाण्डवस्य जनार्दनः ।
शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिम् ॥ ११
रथ आरोप्यतां शङ्खश्चक्रं च गदया सह ।
उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च ॥ १२
दुर्योधनो हि दुष्टात्मा कर्णश्च सहसौबलः ।
न च शत्रुरवज्ञेयः प्राकृतोऽपि बलीयसा ॥ १३
ततस्तन्मतमाज्ञाय केशवस्य पुरःसराः ।
प्रसस्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः ॥ १४
तं दीप्तमिव कालाग्निमाकाशगमिवाध्वगम् ।
चन्द्रसूर्यप्रकाशाभ्यां चक्राभ्यां समलंकृतम् ॥ १५
अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः समृगपक्षिभिः ।
पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्वशः ॥ १६
तरुणादित्यसंकाशं बृहन्तं चारुदर्शनम् ।
मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् ॥ १७
सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम् ।
यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्धनम् ॥ १८
वाजिभिः सैन्यसुग्रीवमेघपुष्पबलाहकैः ।
स्नातैः संपादयांचक्रुः संपन्नैः सर्वसंपदा ॥ १९
महिमानं तु कृष्णस्य भूय एवाभिवर्धयन् ।

C. 5. 2939
B. 5. 83. 20
K. 5. 82. 20

9 $^{c}$) K1.2 5 B2 D1.2 4 9 पूर्वा° (for पौर्वा°) — D1 om. (hapl.) 9$^{c}$–10$^{d}$.

10 D1 om 10 (cf. v.l 9), D2 om (hapl.) 10$^{a}$–11$^{b}$. — $^{a}$) K3 औक्षसं, D10 वृषभं; T1 आर्षभ, Ca ऋषभ (as in text) K2 G4 पृष्ठम्; T1 G1.2 पुच्छम् (for पृष्ठे) — $^{b}$) D2.4.9 °वद्य (for °वाद्य) — $^{c}$) G1.5 प्रदक्षिणीकृत्य

11 D2 om. 11$^{ab}$ (cf. v.l. 10) — $^{b}$) K3 महात्मन (for जना°)

12 $^{a}$) K3 Ds2 D1.9 S (except G1) रथम् (for रथे) K2 3 G4.5 शंख (for शङ्खः) — $^{c}$) K1 Dn1 D3 M1.2 उपासंगान्, K5 °सगा, D2.4.9 °सगश्च, Ca d as in text K1 शक्तीं°, K2 3 D7 G2 5 M2.4 (sup lin. as in text) 5 शक्तिः, K4 शरा ; Dn1 D3 8 शक्तीन्, D9 शार्ङ्ग , M1.2 शार्ङ्ग (for शक्त्य ) — $^{d}$) D1 2 सर्वोपकरणानि च

13 $^{a}$) Dn T1 G1.2 5 च (for हि) — $^{b}$) K2 कर्णश्चापि ससौबल°, T1 सकर्णश्च ससौ°. — $^{c}$) M (except M2) हि (for च) K4 विश्वसेय (for अवज्ञेय ) — $^{d}$) K4 B D (except D1. 2 7 10) G4 दुर्बलो (for प्राकृतो)

14 $^{b}$) G1.5 दैनेय सत्यविक्रम — $^{c}$) T2 (inf lin as in text) G2 प्रसद्य, Ca d प्रसस्रु (as in text)

15 $^{b}$) D5 Cn आकाशग , Ca.d.s आकाशगं (as in text) D2–5 8 G4 Cnp आकाशमिव च (for °गमिव) B2 4 Dn आशुगं, Ca d.s अध्वगं (as in text) — $^{c}$) K1.2.4 B (except B2) Dn D5 D6 8.8 सूर्यचंद्र° (by transp ) — $^{d}$) G3 चामराभ्यामलकृतं

16 $^{a}$) T1 G1 नक्षत्रैश्चैव, G2 अर्धचंद्रेण (for अर्धचन्द्रैश्च) Ca cites अर्धचन्द्र°, Cd अर्धचन्द्रादय , Cs अर्धचद्रादिभि D2.4.9 मत्स्यै° (for चन्द्र ) — $^{b}$) K3 D1 S च (for स-) D2.4 9 रुचिरं मृग°. — D9 om from 16$^{c}$ up to मणिहेमवि in 17$^{c}$ — $^{c}$) D1–4 G2 3 चित्रै ; D8 चैव (for चित्र) — After 16$^{c}$, T1 G1 ins

381* भूषणैर्विविधैरपि ।
विप्रैश्च विविधैश्चित्रैर्

— $^{d}$) G5 भूषणैर्विविधैरपि (see above)

17 D9 om up to मणिहेमवि- in 17$^{c}$ (cf v.l 16) — $^{b}$) D1 °वर्चस, G1 °तोमर (for °दर्शनम्) — D1 om (hapl.) 17$^{cd}$ — $^{c}$) T1 G1.5 मणिमित्र°, M2 °हेमविचित्राश — $^{d}$) K1.2 5 D10 सध्वजं सपता°

18 18$^{ab}$=(var ) 5 179 10$^{cd}$ — $^{b}$)=5 138 21$^{b}$ K5 D9 T2 G2 °वारिण, D2 °वारक, Ca as in text — $^{d}$) S वधूनां (G4 मित्राणा) (for यदूना) K1 (by corr ) D1.8 यदूना नद°, D2.4 9 यादवानद°

19 $^{ab}$) K4 B D (except D1 7 10) शै(B2 D9 सै)व्यसुग्रीव°. — K4 om from -सुग्रीव up to 20$^{b}$ — $^{c}$) D2.4 7 9 यानं, D5 6 सूतं , T G M1 (inf lin ) सूत° (for स्नातै ) B D (except D7 10) Ca d s संपादयामासु°, T G M1 °यांचक्रे. — $^{d}$) T2 G2 5 सपन्नं (for °न्नै ) D2 4 9 द्रुत (for सर्व-)

20 K4 om 20$^{ab}$ (cf. v l 19) — $^{a}$) D5 D2.4 9 हि, D6–8 G3 M2–4 च (for तु) K5 पुरस्कृत्य (for तु कृष्णस्य) — $^{c}$) K1 D10 सुघोष , K2 5 D2 4.9 G5 °प; D1 सघोष (for सुघोष ) — $^{d}$) K (K2 missing) D2 4.9 G3–5 रथं (for °थ )

C. 5. 2909
B. 5. 83. 20
K. 5. 82. 20

सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ॥ २०
तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनम् ।
आरुरोह रथं शौरिर्विमानमिव पुण्यकृत् ॥ २१
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ।
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् ॥ २२
व्यपोढाभ्रघनः कालः क्षणेन समपद्यत ।
शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ॥ २३
प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः ।
प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ॥ २४
मङ्गल्यार्थपदैः शब्दैरन्ववर्तन्त सर्वशः ।
सारसाः शतपत्राश्च हंसाश्च मधुसूदनम् ॥ २५
मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः ।
प्रदक्षिणशिखो भूत्वा विधूमः समपद्यत ॥ २६
वसिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः ।
शुक्रनारदवाल्मीका मरुतः कुशिको भृगुः ॥ २७
ब्रह्मदेवर्षयश्चैव कृष्णं यदुसुखावहम् ।
प्रदक्षिणमवर्तन्त सहिता वासवानुजम् ॥ २८
एवमेतैर्महाभागैर्महर्षिगणसाधुभिः ।
पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ॥ २९
तं प्रयान्तमनुप्रायात्कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ॥ ३०
चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः ।
द्रुपदः काशिराजश्च शिखण्डी च महारथः ॥ ३१
धृष्टद्युम्नः सपुत्रश्च विराटः केकयैः सह ।
संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ॥ ३२
ततोऽनुव्रज्य गोविन्दं धर्मराजो युधिष्ठिरः ।
राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ॥ ३३
यो नैव कामान्न भयान्न लोभान्नार्थकारणात् ।

---

21 [b]) Many MSS. °निःस्वन — After 21[ab], $T_2$ $G_2$ ins

382* सारथ्यकर्मदक्षेण रक्षित दारुकेण च ।
कृत्वा प्रदक्षिण शौरि· प्रस्थानोचितभूषणः ।

— [c]) $T_2$ $G_2$ श्रीमान् (for शौरिर्) — [d]) $K_4$ B D (except $D_{7\ 10}$) कामग (for पुण्यकृत्)

22 [a]) $D_5$ तत्र (for तत ) — [c]) $D_{8\ 4\ 9}$ om the first च

23 [a]) $K_4$ B D (except $D_{1-4\ 9}$) $T_1$ व्यपोढाभ्रस्तत: काल· — [b]) S समजायत — [c]) $T_2$ $G_2$ °ययौ (for °ववौ)

24 [a]) $K_2$ प्रदिश चानुलोमाश्च — [d]) S अनुनादिन ($T_2$ $G_2$ अमला दिश ) (for अनुयायिन·) $D_7$ मगल्या मृगपक्षिण (=24[b])

25 [a]) $K_2$ $D_{8\ 4\ 9}$ $G_3$ $M_1$ (*inf lin* ) मगलार्थपदै·, B $Dn_2$ $D_{5\ 6}$ Cn मगल्यार्थप्रदै ($B_3$ मगलानुप्रदै ), Cs as in text $D_{8\ 4}$ सर्वैर् (for शब्दैर्) — [b]) B Dn $D_{1\ 5\ 6\ 8}$ G (except $G_3$) अनु° (for अन्व°) $K_{1\ 5}$ $D_{10}$ M सर्वत , $G_4$ सर्वथा

26 [c]) $K_4$ $B_4$ Dn $D_{5\ 6\ 8}$ $G_2$ °मुखो (for °शिखो) — [d]) $Ds_2$ सर्वत (for विधूम ) $T_2$ समजायत.

27 [b]) $K_2$ गय क्रतु ; $K_6$ गयस्तथा, $D_2$ (before corr ) गयो ध्रुव. S °द्युम्नस्तथैव च — [c]) $K_{1\ 2}$ $D_{5\ 8}$ शुक($K_1$ भ)नारदवाल्मीका, T $G_{1\ 2}$ $M_{2-5}$ शुक्रमारुतवा-($M_{2-4}$ °व)ल्मीका ($T_2$ $G_{1\ 2}$ °क·), $G_{3-5}$ $M_1$ शुकमारुतव-($G_{3\ 5}$ °वा)ल्मीका — [d]) B $D_{3-5\ 9}$ $T_1$ $G_{3\ 4}$ M मरुत· $Dn_2$ कुशलो, $D_{10}$ T $G_{1\ 2\ 5}$ कौशिको; $G_4$ कपिलो (for कुशिको) $T_2$ गुरुः (for भृगु·)

28 [a]) $K_4$ $B_{1.2\ 4}$ Dn $D_3$ $D_{5\ 6\ 8}$ देवब्रह्मर्षय° (by transp ) — [c]) $K_{1\ 2\ 5}$ $D_{1\ 7\ 10}$ अकुर्वत (for अवर्तन्त)

29 [b]) $T_1$ $G_5$ °सामभि· — [d]) $T_1$ $G_{1\ 5}$ भवनं (for सदनं) — After 29, $K_4$(marg , om. line 2) S (except $G_4$) ins

383* देवताभ्यो नमस्कृत्य ब्राह्मणान्स्वस्ति वाच्य च ।
प्रययौ पुण्डरीकाक्ष सात्यकेन सहाच्युतः ।

[ (L 1) $G_3$ M देवतास्तु (for °भ्यो) $G_1$ नमस्कृत्वा — (L 2) $M_2$ सात्वतेन; $M_3$ सत्यकेन (for सात्य°) ]
— After the above, $G_5$ reads 31[cd]

30 $K_4$ om 30 — [a]) $K_{1\ 2}$ $Dn_2$ $Ds_1$ $D_7$ त प्रयातम् $D_{8\ 4\ 9}$ अनुप्राप्त — [c]) $K_{1.2\ 5}$ $D_3$ $D_{7.10}$ एव (for उभौ)

31 [b]) $K_2$ सात्यकि· (for चेदिप·) — $G_5$ reads 31[cd] after 383*

32 [a]) $G_4$ च बलवान् (for सपु°) — [b]) Some N MSS कैकयै $K_2$ $D_3$ सह कैकयै· (for केकयै· सह) — [c]) $D_{8\ 4\ 9}$ हि (for प्र-) — [d]) $K_5$ $B_2$ Dn $D_{3-6\ 8}$ क्षत्रियर्षभ; $D_9$ भरतर्षभ

33 [a]) $Ds_1$ °द्रुत्य, $Ds_2$ °घ्रत्य (for °व्रज्य). — [c]) $T_1$ $G_{1\ 5}$ समीपे (for सकाशे) — [d]) $K_{1\ 4}$ (*sup. lin* as in text) $Ds_2$ $T_2$ तथा (for तदा)

अन्यायमनुवर्तेत स्थिरबुद्धिरलोलुपः ॥ ३४
धर्मज्ञो धृतिमान्प्राज्ञः सर्वभूतेषु केशवः ।
ईश्वरः सर्वभूतानां देवदेवः प्रतापवान् ॥ ३५
तं सर्वगुणसंपन्नं श्रीवत्सकृतलक्षणम् ।
संपरिष्वज्य कौन्तेयः संदेष्टुमुपचक्रमे ॥ ३६
या सा बाल्यात्प्रभृत्यस्मान्पर्यवर्धयताबला ।
उपवासतपःशीला सदा स्वस्त्ययने रता ॥ ३७
देवतातिथिपूजासु गुरुशुश्रूषणे रता ।
वत्सला प्रियपुत्रा च प्रियास्माकं जनार्दन ॥ ३८
सुयोधनभयाद्या नोऽत्रायतामित्रकर्शन ।
महतो मृत्युसंबाधादुत्तरन्नौरिवार्णवात् ॥ ३९
असत्कृते च सततं यया दुःखानि माधव ।
अनुभूतान्यदुःखार्हा तां स पृच्छेरनामयम् ॥ ४०
भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम् ।
अभिवाद्य स्वजेथाश्च पाण्डवान्परिकीर्तयन् ॥ ४१
ऊढात्प्रभृति दुःखानि श्वशुराणामरिंदम ।
निकारानतदर्हा च पश्यन्ती दुःखमश्नुते ॥ ४२
अपि जातु स कालः स्यात्कृष्ण दुःखविपर्ययः ।
यदहं मातरं क्लिष्टां सुखे दध्यामरिंदम ॥ ४३
प्रव्रजन्तोऽन्वधावत्सा कृपणा पुत्रगृद्धिनी ।

C. 5. 2863
B. 5. 83. 44
K. 5. 82. 8

34 K5 om. $34^{ab}$ — With $34^{ab}$, cf. 5 49 $15^{ab}$, 89 $24^{ab}$, 178 $11^{ab}$, etc — $^{a}$) K4 B D (except D1 7 10) वै न (for नैव) C5 cites वै K1 कोपात्, C5 कामात् (as in text) G4 यदैव समयकामात् — $^{b}$) K2 4 B1 2. 3 D (except Dn D1) क्रोधात् (for लोभात्) K3 च (for the second न) M (except M1) om. the second न — $^{d}$) G8 नैव चार्थी न लोलुप

35 K5 om. $35^{c}$–$36^{d}$. — $^{c}$) D1 °सत्त्वानां, C5 °भूतानां (as in text) — $^{d}$) K4 B (except B3) D (except D2 4 9 10) सनातन (for प्रताप°)

36 K5 om. 36 (cf. v.l. 35) — $^{b}$) T1 G1 श्रीवत्साचितलक्षण, G5 corrupt — $^{c}$) K1 2 D7 10 T1 G1. 5 परिष्वज्य च, M2 त परिष्वज्य (for सपरि°) — $^{d}$) K2 स्रष्टु, G5 सदेशं, C5 संदेष्टु (as in text)

37 Before 37, all MSS ins युधिष्ठिर उ° — D1 om $37^{ab}$ — $^{a}$) K4 वै; K5 D2 7 असौ (for सा) D3. 4 9 पुत्र (for अस्मान्) — $^{b}$) D3. 4. 9 तर्पयती सदाबला — $^{d}$) S गुरूणां पूजने रता

38 $^{b}$) 1 2 $213^{d}$ K3 तथा (for रता) S भूत्वाना पोषणे तथा (G3 4 रता) — $^{c}$) D2 नृपपुत्री च, D3. 4 9 च प्रियास्माक (for प्रियपुत्रा च) — $^{d}$) S माता° (for प्रिया°) D3 4 9 जनार्दन सदैव हि

39 D1 om. $39^{ab}$ — $^{a}$) K3 D7 G3 दुर्यो° (for सुयो°) T1 G1 5 भीता, G3. 4 M1. 2 या न, M3–5 या च (for या नो) — $^{b}$) S स्यापितामित्र° Ca cites आत्रायतवती, Cd त्रायते स — $^{c}$) K2 Dn1 मृत्युमवंधात्, G1 °सवाधात्, G4 दुःखसंबाधात्, Ca as in text — $^{d}$) K1. 2 5 दुर्दरान्; K4 D5 D2 4 7 9 10 Ca उद्दध्रे, B Dn D1. 2m 5 6 8 उद्धरेन्, G3 दुस्तरान् (for उत्तरन्) Cd cites आहरत् D2 (before corr ) उद्धरन्नौरिवाभयात् — Cf 1 2 102, 5 29 $35^{ef}$, and B 2 72 3

40 $^{b}$) K2 5 D5 यथा, M1 2 (corrupt) याहि (for यया) T2 (inf lin as in text) G2 भारत (for माधव) — $^{c}$) D1 अन्वयुक्त हि (for अनुभूतानि) K1 2 D5 7 T1 G1. 5 M4 अदुःखार्हां, B3 अदुःखातां

41 K5 om $41^{a}$–$43^{b}$ — $^{a}$) K3 D10 (sec m ) G3. 5 आश्वासयस्वैना, Dn1 आश्वासयश्चैनां — $^{b}$) K1 2 4 B3 D (except Dn D2 7 10) °शोकैरभि(D1 °शोकै° परि)प्लुता — $^{c}$) T1 G1 समुत्तीर्णान् (for स्वजेथाश्च) K4 B D (except D1 3 4 7 9) त्व (for च) — $^{d}$) T1 G1 परिकीर्तय; M (except M1) प्रतिकीर्तयन्

42 K5 om 42 (cf. v l. 41) — $^{a}$) K2 बाल्यात्, T G M1 (inf lin ) दाहात्, Ca 8 ऊढात् (as in text) — $^{b}$) K2 T G1–3 स्वसुतानां, G5 तानि सर्वाणि, C5 श्वशुराणां (as in text) — G4 read $42^{c}$–$43^{d}$ after $45^{ab}$ — $^{c}$) K2 सा (for च) K1 निराकारानतदर्हां, D3 4 9 निकारानतदर्हाश्च, T G1 2 5 निराका(G5 °क)रा तदर्हां च, G3 निकारावदनर्हा च, G4 (hypermetric) निराहारा तदनर्हा च, M निराकारा (M3 inf lin निकारान्) अतदर्हां Ca d cite निकारान् (as in text) — $^{d}$) K1 दु खमामुते; M4 D3 4 9 दुर्मनायते

43 K5 om $43^{ab}$ (cf v.l 41) — $^{a}$) D2 स्वकालु स्यात् (for स काल स्यात्) — $^{b}$) K1 2 D1 2 °विपर्ययात S कृष्णाद्द मृ(G3 कृ)शदु खितां — $^{c}$) K1 Dn1 D3 4 9 T1 G1 M1 यदा, K2 5 D7 8 10 यत्र, T2 G2–5 यथा, Ca यत् (as in text) T G1 2 M1 (sup lin as in text) ता, G3 एनां (for अह) — $^{d}$) K4 B D1 सुख B Dn D1 T G5 दद्याम्

C 5. 2963
B. 5 83. 44
K. 5. 83. 8

रुदतीमपहायैनामुपगच्छाम यद्वनम् ॥ ४४
न नूनं म्रियते दुःखैः सा चेज्जीवति केशव ।
तथा पुत्राधिभिर्गाढमार्ता ह्यानर्तसत्कृता ॥ ४५
अभिवाद्या तु सा कृष्ण त्वया मद्वचनाद्विभो ।
धृतराष्ट्रश्च कौरव्यो राजानश्च वयोधिकाः ॥ ४६
भीष्मं द्रोणं कृपं चैव महाराजं च बाह्लिकम् ।
द्रौणिं च सोमदत्तं च सर्वांश्च भरतान्पृथक् ॥ ४७
विदुरं च महाप्राज्ञं कुरूणां मन्त्रधारिणम् ।
अगाधबुद्धिं धर्मज्ञं स्वजेथा मधुसूदन ॥ ४८
इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः ।
अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ॥ ४९
व्रजन्नेव तु बीभत्सुः सखायं पुरुषर्षभम् ।
अब्रवीत्परवीरघ्नं दाशार्हमपराजितम् ॥ ५०
यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये ।
अर्धराज्यस्य गोविन्द विदितं सर्वराजसु ॥ ५१
तच्चेद्दद्यादसङ्गेन सत्कृत्यानवमन्य च ।
प्रियं मे स्यान्महाबाहो मुच्येरन्महतो भयात् ॥ ५२
अतश्चेदन्यथा कर्ता धार्तराष्ट्रोऽनुपायवित् ।
अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्दन ॥ ५३
एवमुक्ते पाण्डवेन पर्यहृष्यद्वृकोदरः ।

---

44 K5 om. 44–48, G4 reads 42ᵉ–43ᵈ after 45ᵃᵇ — ᵃ) K1.2 D7 10 प्रव्राजने K4 B D अनु(D8 4 9 °न्व)धावर्ती (D4 9 °ती) (for अन्वधावत्सा) — ᵇ) = 1 97. 1ᵇ. T1 G1 °गर्धिनी, T2 G2 °गृध्नुर्नी, G3 °गर्द्धिनी K4 B D (except D4) G4 कृपणां °गृद्धिनीं. — ᶜ) S (except G3 4) रुदतीम् B D5 उपहाय, D1 Ca अवहाय (for अपहाय) — ᵈ) T2 G2 3 तद् (for यद्) K4 B Dn D8 D1 2 5 6 8 10 अ(K4 Dn1 आ)गच्छाम वयं वनं (B3 4 Dn2 D1 2 वन वयं), D8 4 9 वय गच्छामहे वनं

45 K5 om 45 (cf v l 44) — ᵃ) D8 S (except T2 G1) सा नून, D9 नून सा (for न नून) K1 2 D7 10 कच्चिन् (for नून) — ᵇ) D8 4 9 न चै (for सा चेज्) B3 4 माधव (for केशव) — ᶜ) T G5 पृथा, T2 (before corr) G1 पृथा, G2 वृद्धा (for तथा) Dn Ds1 D5 8 T2 G1 2 M3 पुत्रादिभिर् G5 ग्लाना, M बाढ (M2 °ढा) (for गाढ) D8 4.9 तथा पुत्रैर्विघटिता — ᵈ) Dn2 Ds1 D10 आर्ता ह्यानर्तसत्कृत; D8 4 9 नात्यार्तानर्त्तसत्कृता, T1 (corrupt) मात्रा चानर्च सत्कृता, T2 G2 5 आर्तामर्चय सत्कृता, G3 आर्ता माना च सत्कृता, M (M1 by corr) आर्तामानर्च्य (M1 orig आर्तामभ्यर्च्य) सत्कृतां

46 K5 om 46 (cf v l 44) — ᵃ) K4 B (except B5) Dn Ds D5 6 8 अथ (for तु) G5 तां (for सा) S कुंती (G5 कुर्ती) (for कृष्ण) — ᵇ) K1 प्रभो (for विभो). S मम वाक्यात्त्वया विभो — After 46ᵃᵇ, M1 2 ins :

384* संक्षाम्याथ नमस्कार्या सर्वेषां वचनादपि ।

— ᶜᵈ) S धृतराष्ट्र च °व्य °नं च °धिकं

47 K5 om 47 (cf v l 44) — ᵃ) M भीष्मद्रोणौ — ᶜ) T2 सपुत्र (for द्रौणिं च). D1 2 T1 G (except G3) सोमदत्तिं, M3-5 सौमदत्तिं — ᵈ) K4 Dn D8 D5 6. 8 भरतान्प्रति, T1 G1 भरतर्षभान् D1 2 भ(D2 भा)रतांश्च पृथक्पृथक्. — After 47, K4 T G ins

385* यथावयो यथास्थानं पूजयस्व जनार्दन ।

[ T1 G5 °साक (for °स्थान). T1 G1 अर्च°, G3 प्राप° (for पूज°) ]

48 K5 om 48 (cf. v l. 44) D2 transp 48ᵃᵇ and 48ᶜᵈ. — ᵃ) B3 Dn2 D8 D5 महाप्रज्ञं. — ᵇ) D8 4.9 °कारक (for °धारिणम्) — ᵈ) M भजेथा (for स्व°) D8 4 9 तमरिंदम (for मधु°) — After 48, G5 M1 ins. an addl colophon (*adhy no* 83).

49 Before 49, K1 4 D2(marg) 8 4 8 9 S ins वैश° उ° (resp वैश°) — ᵃᵇ) D5 माधव (for केशव) T2 G2 इत्युक्त्वा राजमध्ये च केशव स युधि° — ᵈ) D1.2 transp कृष्णं and कृत्वा

50 ᵇ) T1 G4 सहास, T2 G2 सहायं, T3 (*inf lin*) G1. 8 5 सभार्यां (for सखाय) K1 D8 G4 पुरुषर्षभ; K2 भरतर्षभ, K5 D8 G1 भरतर्षभ·

51 ᵃ) D1 यथा° (for यद°) T1 G1 5 पुरा (for विभो) K1 2 5 D7 यदिद धर्मराजस्य — ᵇ) D2 G5 °निर्णये (for °निश्चये) K1 2 5 D7 हृत दुर्द्यूतदेविभि — ᶜ) K1 2 B3 D (except Dn D8 D2) अर्धं राज्यस्य, T2 G2 अर्धराज्येन — ᵈ) T2 G2 सर्वराजसु निश्चित

52 K5 om 52ᵃ–53ᵇ — ᵃ) K4 D1 2 7 10 S दद्युर् (for दद्याद्) — ᵇ) D8 S अनवमत्य च (T1 G3 अनवमच्युत) — After 52ᵃᵇ, K2 ins

386* ददाति गोविन्द परं धर्मराज्ञे सुयोधन ।

53 K5 (cf v l 52) D2 om 53ᵃᵇ. — ᵃ) K1 2 B1 Ds2 D5.4 7 9.10 T G (except G4) अथ (for अतश्) K2 (before corr ) कृत्वा, D1 कुर्याद् (for कर्ता) — ᵇ)

मुहुर्मुहुः क्रोधवशात्प्रावेपत च पाण्डवः ॥ ५४
वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान् ।
धनंजयवचः श्रुत्वा हर्षोत्सिक्तमना भृशम् ॥ ५५
तस्य तं निनदं श्रुत्वा संप्रावेपन्त धन्विनः ।
वाहनानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ॥ ५६
इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयम् ।
अनुज्ञातो निववृते परिष्वज्य जनार्दनम् ॥ ५७
तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः ।
तूर्णमभ्यपतद्धृष्टः सैन्यसुग्रीववाहनः ॥ ५८
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ॥ ५९
अथापश्यन्महाबाहुर्ऋषीनध्वनि केशवः ।
ब्राह्म्या श्रिया दीप्यमानान्स्थितानुभयतः पथि ॥ ६०
सोऽवतीर्य रथात्तूर्णमभिवाद्य जनार्दनः ।
यथावत्तानृषीन्सर्वानभ्यभाषत पूजयन् ॥ ६१
कच्चिल्लोकेषु कुशलं कच्चिद्धर्मः स्वनुष्ठितः ।
ब्राह्मणानां त्रयो वर्णाः कच्चित्तिष्ठन्ति शासने ॥ ६२
तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः ।
भगवन्तः क्व संसिद्धाः का वीथी भवतामिह ॥ ६३
किं वा भगवतां कार्यमहं किं करवाणि वः ।
केनार्थेनोपसंप्राप्ता भगवन्तो महीतलम् ॥ ६४
तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम् ।

C. 5 2984
B. 5. 83. 65
K 5. 83. 84

---

Dn1 G4 अनुपाविशत्, D6 7 अनुपायकृत्
54 K5 om 54-56 Before 54, K1 D2 4 6 9 T2 G2.4 ins वेश° ट° (resp वेश°) — a) G1 5 पांड्वे तु (for °वेन) — b) K4 B1 Dn D5 D6 6 8 G3 ममहृष्यद्, T G1 3 परिष्वज्य, M2-5 पर्यागर्जद् (for पर्य°) — d) S प्रवेपन्निव पां°
55 K5 om 55 (cf v l 54), K2 om 55ab — d) D2 4 9 हर्षंदसमना, D7 क्रोधोत्सिक्त°
56 K5 om 56 (cf v l 54) — a) D5 D1 तन् (for त) — d) K4 B Dn D5 D8 4 9 °मूत्रे (for °मूत्र)
57 b) D1.2 transp च and उक्त्वा D2.4 9 इति (for च) S कृत्वा (for चोक्त्वा)
58 a) K5 राजसु चापि, D7 तथा राजसु (for तेषु रा°) — c) K4 B Dn D8 D1 5 6 8 10 अभ्य(D5 °भ्या)-गमद्, G1 अभ्यद्रवद् (for अभ्यपतद्) G3 कृष्ण (for हृष्ट) D2 4 9 स तूर्णमपतद्धृष्ट — d) K4 B1 3-5 Dn2 D5 D2-6 8 दैत्य°, B2 D9 सैन्य°
59 a) D3 4 9 वाहा (for हया) — c) K1 आविशु, K2 ययु, T1 G1 M1 3 आक्रमन्, M2-5 आक्रमु, Ca d s आचेमु (as in text) K3 अभ्यग्रा, T1 G1 M3-5 तेय, M1.2 तूर्णं (for इव) K4 Dn1 D8 4 9 पथानमीयुर्मुदिता, D2 समुत्पतन सुमृता, D6 पथानमाक्रमेयुस्ते, T2 G3 पथा नमाचक्रमिरे — d) D2 उल्लिखत (for ग्रस°)
60 a) D5 तथा, G3 तत (for अथ) — b) K2 M1 3 मुनीन् (for ऋषीन्) — c) G1 लक्ष्म्या (for श्रिया)
61 a) G4 महाप्राहुर् (for रथात्तूर्णम्) — c) D5 तथावत K1 4 5 B Dn2 D1 7 10 यथावृत्तान् (for °वत्तान्)
62 Before 62, T G (except G5) ins श्रीभगवान् — b) K2 B3 G2 सुनिष्ठित, D8 4 9 प्रति° (for स्वनु°) — After 62, K4 (om lines 8-10) ins 388* On the other hand, S (except G3) ins after 62
387* पितृदेवातिथिभ्यश्च कच्चित्पूजा स्वनुष्ठिता ।
63 a) S तेषा (for तेभ्य) — c) K2 क्व सिद्धार्था, D2.4 9 स्वयसिद्धा, Ca d s as in text — d) K1 5 D2 5 6 8 क्व, S (except G4 M5) को (for का) K4 गतिर्, D8 4 9 कार्यं, S (except G4 M5) विधिर्, Ca d s वीथी (as in text) D8 4 9 अपि, G1 इव (for इह)
64 a) K4 Dn D5 D6 6 8 transp भग° and कार्यं M1 2 4 (inf lin) किं वेह भवतां कार्यं — b) D8 4 9 च (for किं) K4 M3 4 (inf lin as in text) 5 च (for व) — c) Dn1 D8 4 9 इह (for उप) — S ins after 64 K4 (om lines 8-10) ins after 62
388* एवमुक्ता केशवेन मुनय संशितव्रता ।
नारदप्रमुखा सर्वे प्रत्यनन्दन्त केशवम् ।
अध शिरा सर्पमाली महर्षि सत्यदेवल ।
अर्वावसुश्च जानुश्च मैत्रेय शुनको वली ।
वको दाल्भ्य स्थूलशिरा कृष्णद्वैपायनस्तथा । [5]
आयोदधौम्यो धौम्यश्च आणिमाण्डव्यकौशिकौ ।
दामोष्णीषस्त्रिषवण पर्णादो घटजानुक ।
मौञ्जायनो वायुभक्ष पाराशर्योऽथ शारिक ।
शीलवानशनिर्धाता शून्यपालोऽकृतश्रम ।
श्वेतकेतुश्च कहोडा वैदश्चापि हिरण्यद । [10]
[ The MSS differ considerably in the readings of these names ]
65 b) D8 4 9 उत्पत्य (for उपेत्य) — d) K5 सु-

C. 5. 2924
B. 5. 83. 65
K. 5. 83. 34

परिष्वज्य च गोविन्दं पुरा सुचरिते सखा ॥ ६५
देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः ।
राजर्षयश्च दाशार्ह मानयन्तस्तपस्विनः ॥ ६६
देवासुरस्य द्रष्टारः पुराणस्य महाद्युते ।
समेतं पार्थिवं क्षत्रं दिदृक्षन्तश्च सर्वतः ॥ ६७
सभासदश्च राजानस्त्वां च सत्यं जनार्दन ।
एतन्महत्प्रेक्षणीयं द्रष्टुं गच्छाम केशव ॥ ६८
धर्मार्थसहिता वाचः श्रोतुमिच्छाम माधव ।
त्वयोच्यमानाः कुरुषु राजमध्ये परंतप ॥ ६९
भीष्मद्रोणादयश्चैव विदुरश्च महामतिः ।
त्वं च यादवशार्दूल सभायां वै समेष्यथ ॥ ७०
तव वाक्यानि दिव्यानि तत्र तेषां च माधव ।
श्रोतुमिच्छाम गोविन्द सत्यानि च शुभानि च ॥ ७१
आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम् ।
याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतम् ॥ ७२

इति श्रीमहाभारते उद्योगपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

°चरित $K_4$ B D (except $D_1$) सुरा($B_6$ राम, $Dn_1$ पुरा)सुरपते सखा ($D_2$ before corr पुरा सुगतिना हरिं), T G पुराणचरिते ($G_5$ °त.) सखा Ca d cite सुचरिते (as in text).

66 $^c$) $G_4$ ऋषयश्चैव (for राज°). $K_2$ $B_8$ $Ds_2$ $D_{5.7.10}$ $G_1$ दाशार्हं, S मानार्हं ($G_2$ °र्थं, $G_{3.4}$ °र्हा) — $^d$) S मानयंति

67 $^a$) T G °सुराणा, $Ca._S$ as in text. — $^b$) T $G_{1.5}$ पुराणाश्च, Ca d s पुराणस्य (as in text). $K_{2.5}$ $B_3$ $M_{3-5}$ महाद्युते., $K_4$ $B_{2.4}$ Dn Ds $D_{5.6.8}$ °मते — $^c$) $D_{3.4.9}$ समर्थं (for समेत) — $^d$) $G_3$ om from दिदृक्षन्त up to श्च in $68^a$ $K_1$ दिदृक्षते स, $K_{2.5}$ $B_3$ $D_{1.7}$ दिदृक्षत. स $K_1$ $B_5$ Ds $D_{1-4.8.9}$ सर्वश· S द्रष्टुमिच्छन्ति केशव

68 $^a$) $G_3$ om सभासदश्च (cf v.l 67) $K_{1.2.5}$ $D_1$ तथा राज्ञः; $D_2$ तथा राजन् (for च राजान ) — $^b$) Ca cites सभ्य. Dn $D_7$ जनार्दन — $^c$) $K_{1.4}$ $Dn_1$ Ds महा° (for महत्) — $^d$) $B_3$ $T_2$ $G_{1.4.5}$ $M_{2.3.5}$ इच्छामि, $T_1$ $G_{2.3}$ $M_{1.4}$ इच्छाम (for गच्छाम)

69 $G_5$ om. 69, $T_2$ $G_2$ om $69^{ab}$ — $^a$) $T_1$ $G_1$ °सहिता वाचं — $^b$) $B_3$ $Dn_2$ $Ds_2$ $T_1$ $G_3$ इच्छामि $K_2$ $B_5$ केशव (for माधव) — Ds om (hapl ) $69^c$–$71^b$ — $^c$) $T_1$ $G_1$ °मानां — S (except $G_5$) ins after 69 $K_4$, after 64

389* सभाया मधुरा वाच शुश्रूषन्तस्त्वयेरिता ।
कुरूणा प्रतिपत्तिं च श्रोतुमिच्छाम केशव ।

[ (L 2) $G_{1.3.4}$ इच्छामि (for इच्छाम). $G_{2-4}$ $M_4$ माधव (for केशव) ]

70 Ds om 70 (cf v l 69), $G_4$ om $70^{ab}$. — $^b$) $D_{3.4.9}$ महाद्युति. — $^d$) $D_2$ सभामध्ये (for °या वै) $D_{3.4.9}$ समेष्यसि

71 Ds $G_4$ om. $71^{ab}$ (cf v l. 69), $D_7$ om 71 — $^a$) T G ($G_4$ om ) सर्वाणि, M धर्म्याणि (for दिव्यानि) — $^b$) $K_4$ Dn $D_{5.6.8}$ तथा, $D_{3.4}$ तानि, $D_9$ यानि (for तत्र) $D_{3.4.9}$ तानि (for तेषा) $M_{3-5}$ तु (for च) $D_2$ तत्तेषां चैव माधव — $^c$) $K_1$ (before corr ) $B_2$ $Dn_2$ $Ds_2$ $D_1$ $T_2$ $G_{1.3}$ इच्छामि (for इच्छाम) — $^d$) $K_4$ $D_{6.8}$ विहि($K_4$ °दि)तानि; $K_5$ B Dn Ds $D_{1.2.5.10}$ च हितानि (for च शुभानि) — After 71, $M_{1.2}$ ins

390* त्वत्पादस्पर्शसंशुद्धा भूमिर्दुष्टविवर्जिता ।
धर्मवृद्धा शोभमाना प्रीतिं चाधास्यतीह न· ।

72 $K_5$ om. 72. — $^a$) $G_{4.5}$ हि (for ऽसि) — $^b$) $G_4$ वक्ष्या° (for द्रक्ष्या°) — $^c$) $K_4$ $D_{1.5.6.8}$ गोविंद (for वै वीर) — $^d$) $M_{3.4}$ सभां गतं $G_4$ वक्ष्यामि त्वां जनार्दन. — After 72, $K_4$ Dn $D_{2-6.8}$ S ins

391* आसीनमासने दिव्ये बलतेज समाहितम् ।

[ S ज्वलत तेजसाच्युत ($G_4$ °घृत) (for the posterior half) ] — After the above, S reads (*before* the colophon) the first two stanzas of the next adhy

Colophon missing in $K_3$, $K_5$ om it. — *Sub-parvan* $K_{1.2.4}$ B Dn Ds $D_{1.2.5-8.10}$ $T_1$ $G_1$ $M_{1-3.5}$ भगवद्यान — *Adhy. name*· $K_2$ ऋषिदर्शन; $T_1$ $G_1$ ब्रह्मर्षिस($G_1$ om स )दर्शन, $G_2$ ऋष्यागमनप्रसंग·, M भगवन्निर्याण — *Adhy no* (figures, words or both) $D_4$ 80, $D_6$ 75, $D_7$ T $G_{2.5}$ $M_{1-3.5}$ 84, $G_{1.4}$ 85, $G_3$ $M_4$ 83 — *S'loka no.* $Dn_1$ Ds 72, $Dn_2$ 69

# ८२

वैशंपायन उवाच ।
प्रयान्तं देवकीपुत्रं परवीररुजो दश ।
महारथा महाबाहुमन्वयुः शस्त्रपाणयः ॥ १
पदातीनां सहस्रं च सादिनां च परंतप ।
भोज्यं च विपुलं राजन्प्रेष्याश्च शतशोऽपरे ॥ २
जनमेजय उवाच ।
कथं प्रयातो दाशार्हो महात्मा मधुसूदनः ।
कानि वा व्रजतस्तस्य निमित्तानि महौजसः ॥ ३
वैशंपायन उवाच ।
तस्य प्रयाणे यान्यासन्नद्भुतानि महात्मनः ।
तानि मे शृणु दिव्यानि दैवान्यौत्पातिकानि च ॥ ४
अनभ्रेऽशनिनिर्घोषः सविद्युत्समजायत ।
अन्वगेव च पर्जन्यः प्रावर्षद्विघने भृशम् ॥ ५
प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः ।
विपरीता दिशः सर्वा न प्राज्ञायत किंचन ॥ ६
प्राज्वलन्नग्नयो राजन्पृथिवी समकम्पत ।
उदपानाश्च कुम्भाश्च प्रासिञ्चञ्शतशो जलम् ॥ ७
तमःसंवृतमप्यासीत्सर्वं जगदिदं तदा ।
न दिशो नादिशो राजन्प्रज्ञायन्ते स्म रेणुना ॥ ८
प्रादुरासीन्महाञ्शब्दः खे शरीरं न दृश्यते ।
सर्वेषु राजन्देशेषु तदद्भुतमिवाभवत् ॥ ९
प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः ।
आरुजन्गणशो वृक्षान्परुषो भीमनिस्वनः ॥ १०
यत्र यत्र तु वार्ष्णेयो वर्तते पथि भारत ।

C. 5. 3003
B. 5. 84. 11
K. 5. 84. 9

## 82

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15).

1 S reads 1–2 after 391* (cf. v.l. 5. 81. 72). — $^a$) K1.3 Dn Dn1 (by corr.) n2 D2.3.8.9.10 प्रयात, Cn as in text. D1 प्रयाते °पुत्रे. — $^c$) D2.4.9 G1 महारथ.

2 $^a$) B2.4 तु (for च). — $^b$) M2.4 (sup. lin. as in text) पर शतं (for परंतप). — $^c$) D2.4.9 सुविपुलं, G4 च बहुलं. — $^d$) T2 (inf. lin. as in text) तपना (for शतशो). K1.2.3 D1.7.8 T2 परे, G4 नृप (for अपरे).

3 $^b$) D1.2.8 महत्वान्, G2 भगवान् (for महात्मा). — $^c$) K3 D2.4.9 च, T1 G1 प्र (for वा).

4 D2 om. 4$^{ab}$. — $^b$) K4 B D (except D1.2.7.10) निमित्तानि (for अद्भु°). — $^c$) D5 चे (for मे). K4 B D सर्वाणि (for दिव्यानि). — $^d$) D1 दैवाद्, D2.4.7.9.10 दिव्यानि, S (except G2, M4 sup. lin. as in text) भौमा(G4 चैवा)नि, Cs दैवानि (as in text). D1 T2 G2 उत्पात°, Cs as in text. K5 दिव्यानातरिकानि च.

5 $^c$) D2 अंतरे चैव पर्जन्य. — $^d$) D2.4.9 वितत, Ca.d विघने (as in text).

6 $^b$) K5 Dn2 D2.5–7.9.10 M2.4 (inf. lin. as in text) सिंधुसत्तमा, G4 °सगमा. — $^d$) K1.5 D6 S (except T1 G1.4 M2) प्रज्ञायत (M2.4 °यत).

7 D2 om. 7$^{abc}$. — $^a$) D1.2 G2 प्रज्वलन्. D2–5 G1 नाग्नयो (for अग्नयो). — After 7$^{ab}$, T1 G1 read 8$^c$–9$^b$, T2 G2 read 9$^{cd}$, G3 M (M2 om.) read 9$^{cd}$, and finally G4 reads 9$^{ab}$, the MSS. repeating each passage respectively in its proper place. — G4 M2 om. 7$^c$–9$^b$. — $^c$) D1 कूपाश्च, G2 प्रासिंचन् (for कुम्भाश्च). — $^d$) K2 प्रास्रवन्, D2 (after corr.) प्राशुष्यन्, Ca.d as in text. D2 (before corr.) प्राशुष्यत सरोजलं, D8 प्रासिंचत ततो जलं, G4 शतशः शोणितं जलं.

8 G4 M2 om. 8 (cf. v.l. 7). — $^a$) S (G4 M2 om.) एव (for अपि). — $^b$) K2.4 B D (except D2–5.7.9.10) G1.2.3 तथा (for तदा). — For T1 G1 cf. v.l. 7. — $^c$) D6 (sup. lin.) 8 S (G4 M2 om.) विदिशो (for नादिशो). Ca cites आदिश, Cd अदिश. — $^d$) K2.4 D2.4.9 प्राज्ञायते.

9 G4 M2 om. 9$^{ab}$ (cf. v.l. 7). For transposition and repetition in S cf. v.l. 7. — $^a$) K1.5 T G1.2 महाशब्द, D7 महानाद. — $^b$) K5 शंखो भेरी (for खे शरीर). S (G4 M2 om.) अदृश्यत (for न दृश्यते).

10 K5 om. 10–17. — $^a$) K1.2 प्रामयत्, K4 अमथ्नात्, D2 प्रापतत्, D6.8.8 आमथ्नात्, T1 प्रामदत्, T2 G2.6 प्रावहत्, M1.2.4 प्राधमत् (for प्रामथ्नात्). T1 G1.2.5 हस्तिनपुरे (T1 G1 °र). — After 10$^{ab}$, G5 reads 12$^{cd}$, repeating it in its proper place. — $^c$) D2 अरुजन्. K2 D1.2.4.7.9.10 शतशो, S तृणशो (for गणशो). — $^d$) D2.4.9 मारुतो (for परुषो). K4 B D (except D2.4.7

C 5. 3003 B. 5. 84 11 K. 5. 84. 9

तत्र तत्र सुखो वायुः सर्वं चासीत्प्रदक्षिणम् ॥ ११
ववर्ष पुष्पवर्षं च कमलानि च भूरिशः ।
समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः ॥ १२
स गच्छन्ब्राह्मणै राजंस्तत्र तत्र महाभुजः ।
अर्च्यते मधुपर्कैश्च सुमनोभिर्वसुप्रदः ॥ १३
तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः ।
स्त्रियः पथि समागम्य सर्वभूतहिते रतम् ॥ १४
स शालिभवनं रम्यं सर्वसस्यसमाचितम् ।
सुखं परमधर्मिष्ठमत्यगाद्भरतर्षभ ॥ १५
पश्यन्बहुपशून्ग्रामान्रम्यान्हृदयतोषणान् ।
पुराणि च व्यतिक्रामत्राष्ट्राणि विविधानि च ॥ १६
नित्यहृष्टाः सुमनसो भारतैरभिरक्षिताः ।
नोद्विग्नाः परचक्राणामनयानामकोविदाः ॥ १७
उपप्लव्यादथायान्तं जनाः पुरनिवासिनः ।
पथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया ॥ १८
ते तु सर्वे सुनामानमग्निमिद्धमिव प्रभुम् ।
अर्चयामासुरर्च्यं तं देशातिथिमुपस्थितम् ॥ १९
वृकस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये विमले लोहितायति ॥ २०
अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य संध्यामुपविवेश ह ॥ २१
दारुकोऽपि हयान्मुक्त्वा परिचर्य च शास्त्रतः ।

---

9 10) [S]शनिनिस्वन , some MSS °निःस्वनः

11 K5 om 11 (of v l 10). — a) B D (except D1.2 7 10) T1 G1 5 च (for तु) D10 गोविंदो (for वार्ष्णेयो) — c) M1 (inf. lin.) शिवो (for सुखो) — d) T G2 om च

12 K5 om. 12 (of v.l. 10). — c) K1 T1 G1.5 निर्दोषो, D2 निर्दिष्टो (for निर्दुःखो)

13 K5 om 13 (of. v l 10) — a) K1 2 D7 गच्छश्च (K2 °स्तु), K4 B Dn D5 D6 8 10 सस्तुतो, D2 (by corr ) सत्कृतो, D6 सस्कृतो, T1 G1 3 4 सगच्छन् K4 B Dn D5 D1 2.5 6 8 10 गीर्भिस्; D8 4 9 साधं (for राजस्). — b) K4 B D (except D3 4 7.9) सहस्रश (for महाभुज.) — c) K2 G4 अर्चितो D8 4 9 मधुपर्केण — d) K1.2 B3 D1–4 9 10 सुमना च, K4 B1 2 4 5 Dn D5 D5–8 वसुभिश्च (for सुमनोभिर्). G4 च सर्वतः (for वसु°)

14 K5 om. 14 (of v l. 10) — a) B3 तं स्तुवति, S व्यकिरत (for त किरन्ति) — b) D1 दिव्यै (for वन्यै॰) K1 2 D7 10 च माधव (for सुग°) — d) D8 4.9 कृष्ण (for सर्व॰)

15 K5 om 15 (of. v l 10) — b) K4 Dn1 D5 °समन्वित (for °समाचित) — d) K2 अध्यगात्, B Dn D2 5 6 8 अभ्यगात्; D1 अभ्ययात् (for अत्यगात्). K1.2 D7 10 मनुजर्षभ॰ (K1 °भ), S मधुसूदन D8 4 9 गंधाढ्य मनुजर्षभ

16 K5 om 16 (of. v l 10) — ab) B3 D1 3.4 7.9 G4 °विधान् (for °पशून्) D8 4 9 transp ग्रामान् and रम्यान् D1 हृदान् (for रम्यान्) D7 10 °तर्पणान् (for °तोषणान्) K1 2 महा(K2 अह्ना)हृदयतर्पणान्, S सुखान्हृदयहर्षणान् (G2 °हर्षिण ). Cd cites अह्ना. — c) T1 G1 3 व्यतिचक्राम, T2 G2.5 M1 3 4 च व्यतिक्रामत्. — d) S (except T1) नगराणि (for विवि°).

17 K5 om. 17 (of. v l. 10). — a) K4 B D (except D1 7 9 10) G3–5 नित्य (for नित्य॰) — c) S (except G4) °चक्रेभ्य॰ — d) K4 B D (except D1, D2 marg ) व्यसनानामकोविदा., T1 G1 5 M1 ज्ञानयानामको°

18 a) S उपप्लाव्याद् B Dn D5 D1.2 10 अथागस्य, D8 4 9 M3 4 उपायात — b) T1 G1 5 त (G5 ते) जना पुरवासिन॰; M (except M1) कुशस्थलनि°. — c) K (K2 missing) D2 8 9 G4 5 पर्यतिष्ठत, D1 पथि तिष्ठति; G2 प्रत्यतिष्ठत. K5 D7 सहसा (for सहिताः) — d) T2 G2 5 °क्षव॰

19 a) B4 Dn1 D8 4 9 10 समायांतम् (for सुनामानम्) — c) K4 B D (except D1.2 7) G3 अर्चार्हं, K5 अत्यत, T2 G2 अभ्यर्च्य (for अर्च्यं त) — d) D2 यथातिथिम्; G2 देशाधिपम् D8 T2 उपागत (for उपस्थितम्).

20 a) K1.5 D1 वृहत्स्थल, K4 D5 D6 वृकस्थूलं; S कुशस्थल (M1 2 and M4 inf lin as in text) — b) K1 2 5 D1–4 7 9 10 माधव (for केशव ). — d) N (except D1 2, K3 missing) व्योम्नि वै (for विमले).

21 T1 G1 read 21–22 after 24 K4 om $21^{d}$–$22^{e}$

22 K4 om. $22^{ab}$ (of v l 21) — a) K5 मुक्तान् (for मुक्त्वा). — b) T2 (by corr ) G1 M परिचार्य; T2 (before corr ) G2 °गृह्य, G4 °वाह्य (for °चर्य). — c) K1 5 D3 4 9 सर्वान्धर्मज्ञ॰, K2 सर्ववर्मण्य, B Dn सर्वं योक्त्रादि, D5 D2(after corr ) 5–8 10 सर्वं योक्त्रादि; D1

मुमोच सर्वे वर्माणि मुक्त्वा चैनानवासृजत् ॥ २२
अभ्यतीत्य तु तत्सर्वमुवाच मधुसूदनः ।
युधिष्ठिरस्य कार्यार्थमिह वत्स्यामहे क्षपाम् ॥ २३
तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः ।
क्षणेन चान्नपानानि गुणवन्ति समार्जयन् ॥ २४
तस्मिन्ग्रामे प्रधानास्तु य आसन्ब्राह्मणा नृप ।
आर्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः ॥ २५
तेऽभिगम्य महात्मानं हृषीकेशमरिंदमम् ।
पूजां चक्रुर्यथान्यायमाशीर्मङ्गलसंयुताम् ॥ २६
ते पूजयित्वा दाशार्हं सर्वलोकेषु पूजितम् ।
न्यवेदयन्त वेश्मानि रत्नवन्ति महात्मने ॥ २७
तान्प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः ।
अभ्येत्य तेषां वेश्मानि पुनरायात्सहैव तैः ॥ २८
सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः ।
भुक्त्वा च सह तैः सर्वैरवसत्तां क्षपां सुखम् ॥ २९

इति श्रीमहाभारते उद्योगपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## ८३

वैशंपायन उवाच ।
तथा दूतैः समाज्ञाय आयान्तं मधुसूदनम् ।
धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वा महाभुजम् ॥ १
द्रोणं च संजयं चैव विदुरं च महामतिम् ।

C. 5. 3023
B. 5. 83. 2
K. 5. 85. 2

---

सर्वं वर्मांच; D2 (before corr.) मर्वं धर्माण्य, G6 सर्वंमस्त्राणि Ca.d cite वर्मण्य — d) N (except K1, K3 missing) एतान् (for एनान्) T2 (inf. lin. as in text) G2 M4 अपासृजत् G6 रजा चैवानुपाव्रजन्

23 K6 om. 23, G5 om. 23a–24d — a) K1 2 D1 2 अवतीर्य च (D1 तु), D5 D6 अभ्यतीत्य तु, T1 G1 अभ्यतिक्रम्य D2.4 9 10 T2 G2–4 M च (M2 अथ) (for तु) K1.2 D10 (marg. sec. m. as in text) स क्षिप्रं, D1.2 तान्सर्वान् (for तत्सर्वं) — d) B1 3 वत्स्याम्यह (for °महे) D3 4 9 S (G5 om.) वयं (for क्षपाम्)

24 G6 om. 24 (cf. v.l. 23) — b) K1 2 6 D10 जना (for नरा) D3 4.9 चक्रुरावसथानि च — d) D2 स्वादूनि च, S (G5 om.) रसवन्ति (cf. v.l. 27), Ca गुण° (as in text)

25 a) D3 4 9 राष्ट्रे (for ग्रामे) M3 4 ग्रामप्रधानास् — c) D3.4.9 धीमन्त, T1 G1 5 श्री° (for ह्री°) — d) K2 उपाश्रिता, K6 अनुव्रता, D5 D6 उप(D6 °पा)स्थिता, D1 2 समाश्रिता (for अनुष्ठिता)

26 a) D1 अभिवाद्य (for अभिगम्य) — b) D2 4 9 G4 अरिंदम

27 K6 om. 27–28 — b) K1 2 D1 3 4 9 विश्रुत (for पूजितम्) — D3 (hapl.) om. 27d–28c. — d) S गुण(G1 रस)वन्ति महान्ति च

28 K6 om. 28, D3 om. 28abc (cf. v.l. 27) — c) K4 B D (except D10, D3 om.) चैषा (for तेषा)

29 a) K1 T2 समृष्ट G4 पूज° (for भोज°) D1 2 7 M1 तु, D3 4 9 अन्न; T1 G1.5 अथ, G3 M2–5 स (for च) — c) T1 G5 सहितं (for सह तै) D3 4 9 सार्धम् (for सर्वैर्) — d) T2 G2 निशा (for क्षपा)

Colophon missing in K3, D1 om. it — *Sub-parvan* K (K3 missing) B Dn D5 D2 5–8 10 T1 G1 2 M भगवद्यान — *Adhy. name* T1 G1 M कुश(M1 2 वृक)स्थलनिवास, G2 कुशस्थलप्रवेश — *Adhy. no.* (figures, words or both) D5 81, D6 77, D7 T G2 5 M1–3 5 85, G1 4 86, G3 M4 84 — *S'loka no.* K5 71, Dn 29, D3 27

## 83

☞ This adhy. is missing in K3 (cf. v.l. 5. 32. 15)

1 a) T1 G1 5 तदा (for तथा) — b) K4 B Dn D2–6 9 10 प्रयात, D5 D1 8 प्रयात, M2 4 चायात — c) T1 G1 वाक्यम् (for भीष्मम्)

2 ab) D3 4 9 transp. संजय and विदुर — c) K4 B D (except D1 7 10) सहामात्य (for च सा°)

C. 5. 3023 B. 5. 85. 2 K. 5 85. 2

दुर्योधनं च सामात्यं हृष्टरोमाब्रवीदिदम् ॥ २
अद्भुतं महदाश्चर्यं श्रूयते कुरुनन्दन ।
स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ॥ ३
सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः ।
पृथग्वादाश्च वर्तन्ते चत्वरेषु सभासु च ॥ ४
उपयास्यति दाशार्हः पाण्डवार्थे पराक्रमी ।
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ॥ ५
तस्मिन्हि यात्रा लोकस्य भूतानामीश्वरो हि सः ।
तस्मिन्धृतिश्च वीर्यं च प्रज्ञा चौजश्च माधवे ॥ ६
स मान्यतां नरश्रेष्ठः स हि धर्मः सनातनः ।
पूजितो हि सुखाय स्यादसुखः स्यादपूजितः ॥ ७
स चेत्तुष्यति दाशार्ह उपचारैररिंदमः ।
कृत्स्नान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ ८
तस्य पूजार्थमद्यैव संविधत्स्व परंतप ।
सभाः पथि विधीयन्तां सर्वकामसमाहिताः ॥ ९
यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै ।
तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे ॥ १०
ततो भीष्मादयः सर्वे धृतराष्ट्रं जनाधिपम् ।
ऊचुः परममित्येवं पूजयन्तोऽस्य तद्वचः ॥ ११
तेषामनुमतं ज्ञात्वा राजा दुर्योधनस्तदा ।
सभावास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे ॥ १२
ततो देशेषु देशेषु रमणीयेषु भागशः ।
सर्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः ॥ १३
आसनानि विचित्राणि युक्तानि विविधैर्गुणैः ।
स्त्रियो गन्धानलंकारान्सूक्ष्माणि वसनानि च ॥ १४
गुणवन्त्यन्नपानानि भोज्यानि विविधानि च ।
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः ॥ १५
विशेषतश्च वासार्थं सभां ग्रामे वृकस्थले ।

---

3 Before 3, K1 4 D8 4 6 8 9 T2 G2 ins. धृतराष्ट्र उ° (T2 G2 om. उ°) — a) T2 G2 अत्यद्भुत महाश्चर्यं — c) D1 transp बाला and वृद्धा·

4 K6 om 4 — a) Dn1 D8 4 9 सश्रुत्वा (for सत्कृत्य) — b) D7 T1 G1 5 च (for वा) — c) G4 पृथक्पृथक्च वक्ष्यते

5 a) K1.2 (sup lin as in text) B Dn Ds1 D7.10 T2 G2-4 M1 2 उपायास्यति, K6 उपतिष्ठति — d) T2 G2 सर्वं मधुनिषूदन

6 a) D2 हि वृत्तिर्, D8 4 9 प्रीतिर्हि (for हि यात्रा) Ca d cite यात्रा — c) K6 Ds Ca वृत्ति·; T2 G2 हित (for धृति) K6 पूजा, D8 4 9 सत्यं, D7 कीर्ति, Ca वीर्यं (as in text) — d) K2 शौर्यं, K6 तेज·, S पूजा, Ca d प्रज्ञा (as in text) K6 om. the first च K3 Dn1 D8 4 9 G4 तेज, B4 D1 G2.5 Cd शौच; T2 शौर्यं (for चौज).

7 a) K1 2 6 समभ्येति; Dn1 D8 4 9 सता मान्य, Dn2 Ds D1 T2 (orig) G2-4 समान्यता, T1 2 (inf lin) G1 5 स समान्य, M स मान्येत D8 G8 4 M1 2 नरश्रेष्ठ — K6 om 7c-8b — c) Dn1 अय; G6 च (for हि) — d) K2 B8 D3 4 9 T2 (before corr) G2 असुख, M2 असुखे D1 7 T1 2 (after corr.) G1.3 5 असुखायाप्य (D7 °य त्व-, G3 °य ह्य)पूजित

8 K6 om. 8ab (cf v l. 7) — b) D2 जनार्दन, D8-5 8 9 अरिंदम — c) K1.6 B D6 9 कृष्णात् (for कृत्स्नान्). — d) K2 आप्स्याम; K5 प्राप्स्यसे S वय ल(M1 sup lin आ)प्स्यामहे नृपु

9 a) D8 4 9 10 M1 पूजां त्वम् (for पूजार्थम्). — b) G2 संवर्तस्व (for सवि°) — c) Dn1 D8.4 9 S (except G4) प्रति· (for पथि) — d) N (K8 missing) M1 (inf. lin) °समन्विता· (D1.8 4.9 °समाचिता.)

10 a) Dn Ds M4 महाबाहो

11 Before 11, K4 D7 S (except T1) ins वैश° — a) K2 सभासद (for भीष्मा°) — b) D1 नराधिप, D8.4 9 T2 G2-4 जनेश्वरं — c) K1 D1 S (except G1 3.4) एव (for एव) — d) S पूजयति (G3 °ते) स (for पूजयन्तोऽस्य)

12 c) K1 2 5 Dn1 D1 8 (by corr) 3 9 T2 G1.3 M2 सभावस्तूनि, K4 °वेश्मानि, D10 °गृहाणि

13 a) D8 4 तथा (for ततो) T1 G1.5 भृत्याश्च (for the first देशेषु) — b) K1 G4 भारत (for भागश).

14 b) B1 5 D10 युता° (for युक्ता°) D1 बहुभिर् (for विविधैर्) — d) D8 4.9 श्लक्ष्णानि (for सूक्ष्माणि) K6 D2 10 (marg sec m as in text) शयनानि; D8 विविधानि (for वसनानि) K1 2 4 D1 7 श्लक्ष्णानि (D7 भक्ष्याणि) शयनानि च, S वासांसि विविधानि च

15 D8 om 15ab — b) D1 G1 भक्ष्याणि (for भोज्यानि) — G4 (hapl) om 15c-18b — d) D8 4.9

विदधे कौरवो राजा बहुरत्नां मनोरमाम् ॥ १६
एतद्विधाय वै सर्वं देवार्हमतिमानुषम् ।
आचख्यौ धृतराष्ट्राय राजा दुर्योधनस्तदा ॥ १७
ताः सभाः केशवः सर्वा रत्नानि विविधानि च ।
असमीक्ष्यैव दाशार्ह उपायात्कुरुसद्म तत् ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## ८४

धृतराष्ट्र उवाच ।
उपप्लव्यादिह क्षत्तरुपयातो जनार्दनः ।
वृकस्थले निवसति स च प्रातरिहेष्यति ॥ १
आहुकानामधिपतिः पुरोगः सर्वसात्वताम् ।
महामना महावीर्यो महामात्रो जनार्दनः ॥ २
स्फीतस्य वृष्णिवंशस्य भर्ता गोप्ता च माधवः ।
त्रयाणामपि लोकानां भगवान्प्रपितामहः ॥ ३
वृष्ण्यन्धकाः सुमनसो यस्य प्रज्ञामुपासते ।
आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ॥ ४
तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय महात्मने ।
प्रत्यक्षं तव धर्मज्ञ तन्मे कथयतः शृणु ॥ ५
एकवर्णैः सुकृष्णाङ्गैर्बाह्लिजातैर्हयोत्तमैः ।
चतुर्युक्तान्रथांस्तस्मै रौक्मान्दास्यामि षोडश ॥ ६
नित्यप्रभिन्नान्मातङ्गानीषादन्तान्प्रहारिणः ।

C. 5. 3049
B. 5. 86. 7
K. 5. 85. 7

---

G3 M राजन् (for राजा)

16 G4 om 16 (cf. v.l 15) — a) S (G4 om) वासार्थे — b) D4.9 शुभे (for सभा) K5 एका, D2 चक्रे (for ग्रामे) K1 D1 बृहत्स्थले, M1 2 4 (inf lin) कुशस्थले — c) K5 D10 विविधौ, M1 5 विविधे (for विदधे) — d) G1.5 सभां चित्रा (for बहु°) T2 G2 मनोहरा

18 K1 om. 18, G4 om 18ab (cf v l 15) — c) T1 G1 5 अतीत्य माधवो वीर° — d) K2 आययौ, D8 उपामीत्, G4 उपयात् K3 5 G4 कुरुसत्तम (K3 °मं), T1 G1.5 कुरुमंमदं

Colophon missing in K3 — *Sub-parvan* K (K3 missing) B Dn Ds D2 6–7 10 T1 G1 M भगवद्यान — *Adhy name* T1 भगवत सभाकरण, G1 भगवन्त प्रति दुर्योधनेन सभाकरण, M सत्कारसाधनकरण — *Adhy no* (figures, words or both) D6 82, D7 T G2 3 M1–3 5 86, G1.4 87, G3 M4 85 — *S'loka no* K2 16, Dn 18, D8 19

84

☞ This adhy is missing in K3 (cf v l 5 32 15)

1 a) S उपप्लाव्याद् K2 Ds1 D1 3 5 T1 G1 3 M2 4 क्षत्त (for क्षत्तर्) — b) K4 B (except B1) Dn Ds D7 10 (before corr) G2 4 M2–5 उपयातो — K1 D5 om (hapl) 1c–2d — c) K2 वृकस्थल, Ds1 D5 वृकस्थले, D1 बृहत्स्थले, S (except M1 3) कुश° — d) D2 4 9 तु (for च) K2 B D (except D1–4 7 9) T1 इहेष्यति

2 K1 D2 M2 5 om 2 (cf v.l 1) — b) B2 Dn1 (by corr) n2 Ds सर्वसत्वता — d) K4 B D (except D7 10) T1 G1 3 °सत्वो (for °मात्रो) T1 G1 5 महाबल (for जना°)

3 G4 om. 3ab — a) K4 B Dn D1.2 5 6 8 वृष्णि राष्ट्रस्य, D3 °राजस्य, D2 4 9 °चक्रस्य — b) T2 G2 जनार्दन , G3 M च केशव (for च माधव) — d) D2 4 9 स (for प्र)

4 b) D7 ज्ञानम् (for प्रज्ञाम्) T2 G2 4 M समासते (for उपा°) T1 G1.5 यस्याज्ञा समुपासते

5 a) G4 असै पूजा प्रदास्यामि — b) K1 2 3 महा मते, D3 4 9 S (except G4) गताध्वने (for महा°) — K3 om 5cd — d) K1 2 4 B2 4 5 Dn2 Ds D–3 10 ता (for तन्) D1 2 निगदत (for कथ°)

6 a) K1 3 D9 तु कृष्णागैर्, K4 5 T G1 2 5 M सुपुष्टांगैर्, B Dn Ds D2–4 6 7 10 G3 सुवृत्तांगैर् — b) T1 वाह्लिकैश्च, G1 वाह्लिजैश्च, G2 वाह्लीजातैर्, G5 वाह्लीकैश्च — c) T2 G2 चतुर्युजान् B3 G5 चतुर्युक्त रथ तस्मै — d) B3 G5 रौक्मं

7 b) D2 4 इषादन्त°, Ca d s as in text. — d)

C. 5. 3046 B. 5. 86 7 K. 5. 86 7

अष्टानुचरमेकैकमष्टौ दास्यामि केशवे ॥ ७
दासीनामप्रजातानां शुभानां रुक्मवर्चसाम् ।
शतमस्मै प्रदास्यामि दासानामपि तावतः ॥ ८
आविकं बहु सुस्पर्शं पार्वतीयैरुपाहृतम् ।
तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ॥ ९
अजिनानां सहस्राणि चीनदेशोद्भवानि च ।
तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः ॥ १०
दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः ।
तमप्यस्मै प्रदास्यामि तमप्यर्हति केशवः ॥ ११
एकेनापि पतत्यह्ना योजनानि चतुर्दश ।
यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहम् ॥ १२
यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते ।
ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥ १३
मम पुत्राश्च पौत्राश्च सर्वे दुर्योधनादृते ।
प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैरलंकृताः ॥ १४
स्वलंकृताश्च कल्याण्यः पादैरेव सहस्रशः ।
वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् ॥ १५
नगरादपि याः काश्चिद्गमिष्यन्ति जनार्दनम् ।
द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः ॥ १६
सस्त्रीपुरुषबालं हि नगरं मधुसूदनम् ।
उदीक्षते महात्मानं भानुमन्तमिव प्रजाः ॥ १७
महाध्वजपताकाश्च क्रियन्तां सर्वतोदिशम् ।
जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् ॥ १८
दुःशासनस्य च गृहं दुर्योधनगृहाद्वरम् ।

---

K4 B (except B5) D (except D3 4 8 9) कौरव; T2 G2 शार्ङ्गिणे (for केशवे)

8 a) Dn1 D3 4 9 10 अप्रसूतानां, Ca d अप्रजा° (as in text) — b) Dn1 तेजसा, D2 सुख्याना (for शुभाना) B4 चंद्र° (for रुक्म°) — D1 (hapl) om 8d–10c — d) K1. 2 5 D10 T1 G1 दासानपि च (for दासानामपि) B1 केशव; B3. 5 भारत, Dn2 D2 7 G4 M तावतां (for °त)

9 K5 om 9–15, D1 om 9 (of v l 8) — a) G2 4 M2 स° (for सु°) K4 B (except B5) D (except D3 4 7 9, D1 om) आविक च सुरा(D2 5 6 8 सुस)स्पर्शं

10 K5 om 10 (cf v l 9), D1 om. 10abc (of v l. 8) — a) G4 अशुकाना (for अजि°) — b) D3 4 9 मे, T2 G3 5 M द्वे (for च) — c) K2 D2 (by corr) G4 M3. 4 (inf lin as in text) 5 तत्, Dn D3 तान्, T2 G2 तत (for तानि) D3 4 9 अथ (for अपि) — d) K1 तानपि, K2 तदपि, G3 एतद् (for यावद्) D2 तुष्यति (for अर्हति) Dn1 तमर्हति हि केशव, D3 4 9 सहस्राणि दशाष्ट च (= 9d)

11 K5 om 11 (of. v l 9), B1 om. (hapl) 11 — b) T1 G1 4 5 सुजातो (for °तेजा) — K2 om 11cd — c) B1 T2 G4 M3–5 तद् (for तम्) — d) Ds2 D3 4 9 यावद् (for तमपि), of 10d B (B1 om) Dn2 अर्हति हि, Dn1 अर्हयति (for अप्यर्हति)

12 K5 om 12 (of v l 9) — a) B2 Dn D6 7 10 G4 M अभि-, D8 अति (for अपि) T2 (inf lin as in text) G2 वह° (for पत°) — b) M4 चत्वारिंशद्धि योजन — d) K1 2 D7 10 तदपि च (for तस्मै तद्) D1 S तदप्यस्मै ददाम्यह (D1 महद्धय).

13 K5 om 13 (cf. v l 9) — b) S (except G2) वै (for ते) — d) K4 भक्ष्य, D3. 4 9 भोग, T2 सैन्यं (for भोज्य) K1 2 D7 10 मुदा, D1 M3. 5 तदा; D2 T1 तथा (for सदा)

14 K5 om 14 (of v l 9) — c) K2 प्रतिप्रयातु; G2 प्रत्युद्यास्यतु — d) D3. 4 9 रयश्रेष्ठैर् (for रथैर्मृष्टैर्) K1 D7 10 S युक्तै; K2 D1 अश्वै, Ca d मृष्टै° (as in text) K4 B4 5 Dn D3 D5 6 स्वलकृता (D3 °ते), D1 अलकृतैः

15 D1 om (hapl) 15–16, K5 om 15 (cf v l 9) — a) K2 B3 D3 S (except G1 2) अलकृ° D3. 4 9 कल्याणे — b) D3 4 9 यानैर् (for पादैर्) — c) Dn1 D8 महाभाग, G2 महाबाहुं

16 D1 om 16 (of v l 15) — ab) B3 M °पि यः कश्चिद्गमिष्यति ज° — d) D2 G2 अलकृता; Ca d अनावृता. (as in text).

17 a) K4 B D (except D1 7) च (for हि) — K5 om 17cd — c) K1 4 B D (except D1 2 10) उदीक्षता, K2 °तु (for °ते)

18 a) K1 5 D10 °ध्वजा. (for °ध्वज) — b) K4 B Dn1 D3 D5 6 8 G1 4 5 °दिश° (for °दिशम्) — c) G1 जलाभिसिक्तो G5 समृष्ट (for विरजा°) — d) K1 2 D2 6 चानुगान् (for चान्वशात्) K4 D3 4 7 9 पथास्तस्य विधीयता, S पथा° कार्यस्तु सर्वत° (G3. 4 M2 °श°)

19 c) K2 B Dn D3 D5 6 8 G3. 4 तदद्य, T1 G1 6 तस्य तत् (for तदस्य) — d) K4 सुप्रमृष्टम्, M1 सुसमृद्धम्

तदस्य क्रियतां क्षिप्रं सुसंमृष्टमलंकृतम् ॥ १९
एतद्धि रुचिराकारैः प्रासादैरुपशोभितम् ।
शिवं च रमणीयं च सर्वर्तु सुमहाधनम् ॥ २०
सर्वमस्मिन्गृहे रत्नं मम दुर्योधनस्य च ।
यद्यदर्हेत्स वार्ष्णेयस्तत्तद्देयमसंशयम् ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## ८५

विदुर उवाच ।
राजन्बहुमतश्चासि त्रैलोक्यस्यापि सत्तमः ।
संभावितश्च लोकस्य संमतश्चासि भारत ॥ १
यत्त्वमेवंगते ब्रूयाः पश्चिमे वयसि स्थितः ।
शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरः स्थविरो ह्यसि ॥ २
लेखाश्मनीव भाः सूर्ये महोर्मिरिव सागरे ।
धर्मस्त्वयि महाराजन्निति व्यवसिताः प्रजाः ॥ ३
सदैव भावितो लोको गुणौघैस्तव पार्थिव ।
गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ॥ ४
आर्जवं प्रतिपद्यस्व मा बाल्याद्बहुधा नशीः ।
राज्यं पुत्रांश्च पौत्रांश्च सुहृदश्चापि सुप्रियान् ॥ ५
यत्त्वं दित्ससि कृष्णाय राजन्नतिथये बहु ।
एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ॥ ६
न तु त्वं धर्ममुद्दिश्य तस्य वा प्रियकारणात् ।

C. 5. 3067
B. 5. 87. 7
K. 5. 87. 7

---

20 [d]) $K_4$ सुमनोहर, $D_{6.8}$ सुमहावन, $D_{7.10}$ सुम्न साधनं (for सुमहाधनम्) $K_1$ $Dn_1$ $D_5$ $D_{2-4.8.9}$ सर्वर्तुषु ($K_1$ $D_8$ °क) महाधनं; $K_2$ सार्वर्तुकमहावन, $K_5$ सप्तकक्ष महाधन, $D_1$ सर्वं च सुमहद्धनं, S सर्वत्र ($G_2$ °र्वं च) सुमनोहर ($G_1$ °रम)

21 [a]) $D_1$ अस्मद्- (for अस्मिन्) — [c]) $K_{4.5}$ B D (except $D_1$) $T_2$ $G_2$ अर्हति, $G_3$ अर्हेत (for अर्हेत्स) $B_5$ दाशार्ह (for वार्ष्णेय-)

Colophon missing in $K_3$, $K_5$ om it — *Subparvan* $K_{1.2.4}$ B Dn $D_5$ $D_{1.2.6-8.10}$ $T_1$ $G_1$ M भगवद्यान — *Adhy name* $G_1$ M प्रदेयद्रव्य($G_1$ om द्रव्य)कथन — *Adhy no* (figures, words or both) $D_4$ 83, $D_6$ 79, $D_7$ T $G_{2.5}$ $M_{1-3.5}$ 87, $G_{1.4}$ 88, $G_3$ $M_4$ 86 — *S'loka no* $K_5$ 12, Dn $D_8$ 21

## 85

☞ This adhy is missing in $K_3$ (cf. v.l. 5 32 15)

1 [b]) $K_1$ $B_4$ $D_{2-4.7.10}$ M मत्तम, $B_5$ $D_1$ समत — [c]) $K_{1.5}$ $D_5$ $D_2$ T G समावितस्य (for °तश्च) $D_2$ लोकेस्मिन् — [d]) $K_1$ $B_2$ $D_5$ $D_{1.2}$ $M_1$(*inf lin* as in text) $_2$ अपि (for अस्मि)

2 [a]) $D_{8-6.9}$ यस् (for यत्) $T_1$ एवागत, $T_2$ $G_{1.2}$ $M_1$(*inf. lin*) $_{2-6}$ एवगत; $G_6$ $M_1$ एवंविध $K_2$ त्वमेव च गते ब्रूया — [c]) $D_2$ शास्त्राद्वाथ सुतर्काद्वा, S शास्त्रान्वयाद्वा तर्काद्वा ($G_4$ शास्त्राद्वापि महाभाग, $G_5$ °याद्वा सत्कारात्) — [d]) $K_2$ सुस्थित $K_5$ तत्सर्वं त्वयि युज्यते

3 [a]) $Dn_2$ $D_5$ $D_7$ लेखा शशिनि भा, $G_3$ रेखाश्मनीव भा, $G_4$ लेखाश्मनि प्रभा — [b]) $D_{2.7}$ गाम्भीर्यम् (for महोर्मिर्) — [c]) $D_1$ transp धर्म and त्वयि $K_{1.5}$ $D_7$ महाराज, $K_2$ B Dn $D_5$ $D_{1.2.5.6.10}$ तथा राजन्, $K_4$ $D_{3.4.8.9}$ महाराजन्, $T_2$ $G_2$ महाप्रीति — [d]) $T_1$ $G_{1.6}$ नित्य, $G_2$ अद्य (for इति)

4 [a]) $D_{3.4.9}$ भाग्नि° (for भावि°) $D_{1.3.4.9}$ T $G_2$ लोके — [b]) $K_4$ $Ds_2$ $D_{3.4.9}$ गुणौघ°, $B_{1.3}$ गुणैः स्वैः° $T_1$ $G_{1.5}$ भारत (for पार्थिव) — $K_5$ om $4^c$–$16^d$

5 $K_5$ om 5 (cf v.l 4) — [b]) $K_2$ राजन्, $D_3$ बलाद् (for बाल्याद्) $K_2$ $T_2$ (before corr) बहुधा नश ($T_2$ °श), $K_4$ B Dn $D_5$ $D_{2.5-8.10}$ बहु नीनश, $D_{3.4.9}$ बहु भापिया — [c]) $K_4$ B Dn $D_5$ $D_{5.6.8}$ राजन्, $D_9$ राष्ट्र (for राज्य) — [d]) $K_1$ सुदारान् (for सुहृदश्) $K_4$ B Dn $D_5$ $D_{2-6.8.9}$ एव (for अपि) S (for $M_2$ see below) अति- (for सु-) $D_{1.2}$ (before corr) सुहृदश्च प्रियान्प्रति, $M_2$ सुहृदश्चास्य च प्रभो

6 $K_5$ om 6 (cf. v.l 4) — [a]) $K_2$ $G_{1.2.4}$ स त्व (for यत्त्वं) $K_4$ B D (except $D_{7.10}$) इच्छ° (for दित्स°), cf. v.l. 7

7 $K_5$ om 7 (cf v.l 4), $D_6$ om. 7–12 — [c]) $K_2$ $B_4$ $Dn_1$ $D_7$ S दित्स° (for इच्छ°), cf v.l. 6.

C. 5. 3067
B. 5. 87. 7
K. 5. 87. 7

एतदिच्छसि कृष्णाय सत्येनात्मानमालभे ॥ ७
मायैषातत्त्वमेवैतच्छद्मैतद्भूरिदक्षिण ।
जानामि ते मतं राजन्गूढं बाह्येन कर्मणा ॥ ८
पञ्च पञ्चैव लिप्सन्ति ग्रामकान्पाण्डवा नृप ।
न च दित्ससि तेभ्यस्तांस्तच्छमं कः करिष्यति ॥ ९
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि ।
अनेनैवाभ्युपायेन पाण्डवेभ्यो विभित्ससि ॥ १०
न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया ।
अन्यो धनंजयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ११
वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम् ।
अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनंजयम् ॥ १२
अन्यत्कुम्भादपां पूर्णादन्यत्पादावसेचनात् ।
अन्यत्कुशलसंप्रश्नान्नैषिष्यति जनार्दनः ॥ १३
यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः ।
तदस्मै क्रियतां राजन्मानार्हो हि जनार्दनः ॥ १४
आशंसमानः कल्याणं कुरूनभ्येति केशवः ।
येनैव राजन्नर्थेन तदेवास्मा उपाकुरु ॥ १५
शममिच्छति दाशार्हस्तव दुर्योधनस्य च ।
पाण्डवानां च राजेन्द्र तदस्य वचनं कुरु ॥ १६
पितासि राजन्पुत्रास्ते वृद्धस्त्वं शिशवः परे ।
वर्तस्व पितृवत्तेषु वर्तन्ते ते हि पुत्रवत् ॥ १७

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

8 K₅ D₆ om. 8 (cf. v.l. 4, 7) T₁ G₁ transp 8ᵃᵇ and 8ᶜᵈ. — ᵃ) K₁ D₁₀ शाठ्य, K₄ B Dn D₅ D₂₋₅ ₇ ₈ G₄ [अ]सत्य, C₃ अतत्त्व (as in text) K₁ ₂ D₇.₁₀ एतत्ते (for एवैतत्) — ᵇ) B (except B₁) D₅ यथा, Ca छद्म (as in text) T₂ G₂ एषा (for एतद्) D₁ T₂ G₂ M₁ (inf. lin. as in text) ₅ भूरिदक्षिणा — ᶜ) K₄ B D (except D₁.₂.₄ ₇ ₉ ₁₀) त्वन्मत (for ते मतं)

9 K₅ D₆ om. 9 (cf. v.l. 4, 7) — ᵃ) K₂ B Dn₂ D₂ ₈ ₁₀ T₂ G (except G₅) लिप्सति, D₈ D₁ ₉ लिप्सते; D₂ ₄ ₇ लिप्सते — ᶜ) K₁ D₂₋₄ ₉ न चेदिच्छसि तेभ्यस्त्व (D₂ °स्तान्). — ᵈ) Dn तत्समं, S त्वत्(M₁ ₂ त्व)सम° (M₂ °म) B₁ ₄ ₅ Dn D₅ D₆ न, T₂ G₂ M₁ ₂ ₄ (inf. lin. as in text) किं (for कः). B₅ Dn D₅ D₅ M₁ ₂ करिष्यसि

10 K₅ D₆ om. 10 (cf. v.l. 4, 7) — ᵃ) K₂ महाभाग — ᵇ) D₂ ₄ ₉ T₁ G₁ ₄ ₅ च (for त्वं) D₁ तितीर्षसि, S चिकीर्षसि K₂ वार्ष्णेय भर्तुमिच्छसि — ᶜ) K₄ D₆ वा, B₂ ₄ Dn D₅ D₅ च (for एव) K₂ B₁ Dn अपि (for अभि) — ᵈ) K₄ Dn₁ विभेत्ससि; B D₂₋₅ ₇ ₁₀ Cn विभे(B₅ °भि)त्स्यसि, D₅₂ D₉ विभि(D₉ °भे)त्स्यसि, S प्रदीयता, Ca d विभित्ससि (as in text)

11 K₅ D₆ om. 11 (cf. v.l. 4, 7) — ᵃ) K₁ भेद्य, Ca d शक्य (as in text) — ᵇ) K₂ मायया (for गर्ह°) — ᶜ) K₂ शक्यो धनजयाद्भेत्तु, Ca d as in text. — ᵈ) D₁ M₃₋₅ सत्यमेतद्; D₂ ₄ ₉ एतदर्थं; G₃ तत्त्वमेतत् (for एतत्तत्त्व)

12 K₅ D₆ om 12 (cf v.l. 4, 7) — ᵃ) D₁ वेद्मि (for वेद) K₄ D₂ ₄.₉ वेदाहं कृष्णमाहात्म्य — ᵇ) D₁ वेद्म्यस्य, D₂ ₄ ₉ Ca वेदाहं (for वेदास्य) — ᶜ) K₁ पश्या° (for जाना°).

13 K₅ om. 13 (cf. v.l. 4) — ᵃ) M अन्याद; C₃ as in text. T₂ G₂ ₄ transp कुम्भाद् and पूर्णाद् — ᵇ) M₁₋₃ अन्यात् T G₁ (by corr.) ₂ ₃ ₅ अन्यत्पादा चनेजनात् — T₂ om 13ᶜ–15ᵈ — ᶜ) M (except M₅) अन्यात् — ᵈ) K₁ ₂ नाशि°, K₄ नो प्रे°, B₁ Dn₁ Cn नैवेक्ष्यति; D₅ Ca ₈ नैशि°, D₂ ₄ ₉ M न तुष्यति; D₁₀ Cd नेशि°, T₁ G न चेच्छति

14 K₅ D₂ ₄ ₆ ₉ T₂ om 14 (cf v.l 4, 13). — ᶜ) K₂ एव; S (T₂ om.) अस्मिन् (for अस्मै) — ᵈ) K₄ B (except B₅) D (except D₁ ₂ ₁₀) असौ (for हि)

15 K₅ T₂ om. 15 (cf v.l 4, 13) — ᵃ) K₂ आशासत्येष (for °समान). — K₄ om 15ᶜ–17ᵇ. — ᵈ) D₁ ₇ ₉.₁₀ T₁ G₁ ₃ M₁ तमेव; G₄ तथैव K₂ तेनैवाहूय दीयता

17 K₄ om 17ᵃᵇ (cf. v.l 15) — ᵃ) D₁ transp राजन् and पुत्रा — ᵈ) T₁ G₁.₅ च; M अपि (for हि). K₂ ते हि वर्तंति पु°, D₂ ₄ ₉ तेन्ववर्तंतु पु°. — K₄ D₂ ₅.₈ ins after 17 D₁₀, after 5. 86 11ᵃᵇ.

392* निर्वैरान्मत्स्यपाञ्चालान्पाण्डवान्कुरुभि सह।
कृत्वा सुख यथाधर्मं कीर्तिं च समवाप्नुहि ।

[ (L 2) D₁₀ यशो° (for यथा°) K₄ चैवमवाप्स्यसि, D₁₀

## ८६

दुर्योधन उवाच ।
यदाह विदुरः कृष्णे सर्वं तत्सत्यमुच्यते ।
अनुरक्तो ह्यसंहार्यः पार्थान्प्रति जनार्दनः ॥ १
यत्तु सत्कारसंयुक्तं देयं वसु जनार्दने ।
अनेकरूपं राजेन्द्र न तद्देयं कदाचन ॥ २
देशः कालस्तथायुक्तो न हि नार्हति केशवः ।
मंस्यत्यधोक्षजो राजन्भयादर्चति मामिति ॥ ३
अवमानश्च यत्र स्यात्क्षत्रियस्य विशां पते ।
न तत्कुर्याद्बुधः कार्यमिति मे निश्चिता मतिः ॥ ४
स हि पूज्यतमो देवः कृष्णः कमललोचनः ।
त्रयाणामपि लोकानां विदितं मम सर्वथा ॥ ५
न तु तस्मिन्प्रदेयं स्यात्तथा कार्यगतिः प्रभो ।
विग्रहः समुपारब्धो न हि शाम्यत्यविग्रहात् ॥ ६
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः ।
वैचित्रवीर्यं राजानमिदं वचनमब्रवीत् ॥ ७
सत्कृतोऽसत्कृतो वापि न क्रुध्येत जनार्दनः ।
नालमन्यमवज्ञातुमवज्ञातोऽपि केशवः ॥ ८
यत्तु कार्यं महाबाहो मनसा कार्यतां गतम् ।
सर्वोपायैर्न तच्छक्यं केनचित्कर्तुमन्यथा ॥ ९

C. 5. 3060
B. 5. 88. 9
K. 5. 88. 9

---

स्व समवाप्स्यसि ]

Colophon missing in K3, K5 om it — *Sub-parvan* K1.2 4 B Dn Ds D1.2 5–8 10 T1 G1 M भगवद्यान — *Adhy name* T1 G1 M विदुरवाक्य — *Adhy no* (figures, words or both) D5 84, D6 80, D7 T G2 3 M1–3 5 88, G1 4 89, G5 M4 87 — *Sloka no* Dn 17, D8 18

86

☞ This adhy is missing in K3 (cf. v l 5 32 15)

1 $^{b}$) K2 5 B D (except D2–4 9) T1 G5 अच्युते (for उच्यते) — $^{c}$) K4 मानुक्रोशो (for अनुरक्तो) D1 असत्वार्य, G1.6 असमाप्य, Ca d as in text — $^{d}$) K2 transp पार्थान् and प्रति

2 D6 om. 2 — $^{a}$) K4 B (except B2) D (except D1.7 8) G1 3 M5 तत् (for तु) K2 सत्स्कार°, D5 सकारण युक्तं. Ca d cite कारण — $^{b}$) D2 transp देय and वसु D2.4 9 वहु (for वसु) — $^{d}$) S transp न and तत् K1 D1.3 7 10 कथंचन, S जनार्दने (for कदा°)

3 $^{a}$) K4 D3 4 9 देशकालस्तथा(K4 °था)युक्त, G5 देशकालौ तथा तात, Ca.s as in text — $^{b}$) K2 तत्तु, D2.4 9 न हि, G5 युक्तो, Ca d न हि (as in text) — $^{c}$) K1 D1.7.10 (m as in text) ज्ञास्यति, D3 4 9 मन्येत, Cs मस्यति (as in text) — $^{d}$) K2 B2 Dn2 D5–8 8 7 9 10 T2 G2 अर्चति, G4 चरति (for अर्चति) K5 यादवे

स्यतिमानिनि

4 $^{a}$) B2 T1 G1 5 अवमान; Ca d अवमान (as in text) S तु (for च) — $^{d}$) T2 G2 निश्चित मन (for °ता मति)

5 $^{a}$) K4 B D (except D1 2.4 7 9 10) लोके (for देव) — $^{b}$) K4 B D (except D2.4 7 9 10) G3 पृथुल° (for कमल°) — $^{d}$) D2.4 9 किं पुनर् (for विदित). B2 4 सर्वश, G3 सर्वदा

6 $^{a}$) G4 तत्, M1 हि (for तु) K4 B Dn Ds D2–6 8 9 G4 तस्, D1 तस्य (for तस्मिन्) D3 प्रदास्यामि (for प्रदेय स्यात्) — $^{b}$) S (except G4) इति (for तथा) K5 (before corr) D7 कार्यमिति, D8 G3 कार्या गति, D1 कार्यां मति, D2.4 9 कार्यं प्रति (for कार्यगति) — $^{d}$) D6 (m as in text) 6 8 विग्रहात् (for अवि°)

7 K5 om. (hapl.) 7–15 B Dn2 Ds D5 6 T1 G5 om the ref — $^{b}$) K1 D7 10 कुरुवृद्ध पिता°

8 K5 om 8 (cf v l 7) — $^{a}$) S नावमस्यति (T1 अनुमस्यति, G3 नावमुह्यति), Ca d s नालमन्य (as in text) K2 D10 असान, K4 B Dn Ds D6–7 9 एन, D3 (before corr) अप्यन्ति, D3 (after corr) 8 एव, Ca d s अन्य (as in text) T G1.3 5 अवज्ञातुन, M अवज्ञा तां (M2 त), Cs अवज्ञातु (as in text) — $^{d}$) K4 B D (except D1.10, D2 by corr) G3 नावज्ञेयो हि, M2 अवज्ञातोपि (as in text)

9 K5 om 9 (cf. v l. 7) — $^{a}$) K1 S च, D8 4.9 तत् (for तु) — $^{b}$) M1 (*inf lin*) 3 मनस, Ca d as in text

C. 5. 3087 B. 5. 88. 10 K. 5. 88 10

स यद्ब्रूयान्महाबाहुस्तत्कार्यमविशङ्कया ।
वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः ॥ १०
धर्म्यमर्थ्यं स धर्मात्मा ध्रुवं वक्ता जनार्दनः ।
तस्मिन्वाच्याः प्रिया वाचो भवता बान्धवैः सह ॥ ११

दुर्योधन उवाच ।

न पर्यायोऽस्ति यद्राजञ्श्रियं निष्केवलामहम् ।
तैः सहेमामुपाश्नीयां जीवञ्जीवैः पितामह ॥ १२
इदं तु सुमहत्कार्यं शृणु मे यत्समर्थितम् ।
परायणं पाण्डवानां नियंस्यामि जनार्दनम् ॥ १३
तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा ।
पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ॥ १४
अत्रोपायं यथा सम्यङ्ग बुध्येत जनार्दनः ।
न चापायो भवेत्कश्चित्तद्भवान्प्रब्रवीतु मे ॥ १५

वैशंपायन उवाच ।

तस्य तद्वचनं श्रुत्वा घोरं कृष्णाभिसंहितम् ।
धृतराष्ट्रः सहामात्यो व्यथितो विमनाभवत् ॥ १६
ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः ।
मैवं वोचः प्रजापाल नैष धर्मः सनातनः ॥ १७
दूतश्च हि हृषीकेशः संबन्धी च प्रियश्च नः ।
अपापः कौरवेयेषु कथं बन्धनमर्हति ॥ १८

भीष्म उवाच ।

परीतो धृतराष्ट्रायं तव पुत्रः सुमन्दधीः ।
वृणोत्यनर्थं न त्वर्थं याच्यमानः सुहृद्गणैः ॥ १९
इममुत्पथि वर्तन्तं पापं पापानुबन्धिनम् ।
वाक्यानि सुहृदां हित्वा त्वमप्यस्यानुवर्तसे ॥ २०
कृष्णमक्लिष्टकर्माणमासाद्यायं सुदुर्मतिः ।

---

10 K5 om 10 (of v l. 7). — a) D1 यत् (for स) K2 च (for यद्) — b) K1 2 D10 तत्कुर्यास्त्वमशंकया — 10c-5 103 34c — d) D2 (before corr ) पुत्र, S वैर (for क्षिप्र)

11 K5 om 11 (of v l 7) — a) K4 B8 D1 5 6 8 9 T2 G2 8 धर्मम् K1 2 4 B8 D (except D8 D7) T G1-3 5 अर्थं K4 B D (except D2.6 7 10) G8 च (for स) — After 11ab, D10 ins 392* — c) D10 (marg sec m) तस्मिन्वाच्यं प्रिय राजन् — d) T2 G2 बधुभिः (for बान्धवै·)

12 K5 om 12 (of. v l 7) — a) B8 D1 S (except G3.4) पर्याप्त ; Ca d s पर्याय· (as in text) D1 T1 असि, T2 G (except G4) M अस्मि, Ca d अस्ति (as in text) — b) G4 निक्षेपयामि, C8 निष्कैवल्यं, Ca d निष्केवला (as in text) — c) K4 D9 एता (for इमां) — d) K1 2 4 B Dn D8 D2 5-8 10 यावज्जीव, D8 4 9 क्षीय जीवे (for जीवञ्जीवै )

13 K5 om 13 (of v l 7). — b) K2 D4-8 समर्पित, B5 D8 T2 G1 5 M8 4 (inf lin as in text) 5 समुत्थित, D1 विवक्षित; Ca d समर्थितं (as in text) — After 13ab, M1 2 ins

393* न भेदस्यान्तर दातु प्रयाणायास्य वा पुन ।

14 K5 om 14 (of v l 7) — a) T2 G8-5 M4 यस्मिन् (for तस्मिन्) — d) K4 B D (except D1 7 8) T1 इहैष्यति (for इहै°)

15 K5 om 15 (of v l 7) — a) K4 B D (except D7 10) G5 M5 उपायान् (for उपाय) D2 4 9 तस्य (for सम्यङ्) — b) D8 4 9 च बुध्येत् (for बुध्येत) — c) K1 स च, D7 तथा, S यश्च (for न च) Dn1 D1 8 4 7 9 S उपायो (for अपायो) — d) K2 transp तत् and भवान् T1 2 (inf. lin. as in text) G1 M1 2 त, G4 स (for तद्)

16 B D8 D5-6 8 9 om the ref. — b) S कृष्णेमि°, Ca as in text — d) S transp व्यथितो and विमना

17 a) D8 4 9 तत्र (for इद)

18 a) K5 वै, D8 4 9 एव (for हि) — b) B1 दयित· (for च प्रिय ) K1 2 5 D1 7 मे (for न·) — d) K5 D8 स वधम् (for बन्धनम्) K4 B Dn D2 5 6.8 स कथ वध(B8 वद्धु ; Dn2 वध)मर्हति

19 ab) D1 T1 G1 4 M परेत·, T2 G2 3 5 पतित·, Ca d s परीत· (as in text) D2 4 9 transp धृतराष्ट्र and अय, K4 B Dn Ds D2 5 8 transp धृतराष्ट्र and तव पुत्र S सुयोधन (for सुमन्दधी·) — c) K4 B D (except D10) एव, K5 G4 अति (for तु) — d) T1 G1 5 वार्यमाण· (for याच्य°) K4 B D (except D1.3.4 7 9 10) सुहृज्जनैः (for °द्गणै·)

20 a) K1 2 एवम्, D7 एनम् (for इमम्) — b) K1 5 D7 T2 M °बधन; D8 4 9 G2 °वर्तिन, Ca °बंधिन (as in text) — d) T2 G2 अथ (for अपि). K5 D10 S अद्य (T2 G2 अपि) (for अस्य)

तव पुत्रः सहामात्यः क्षणेन न भविष्यति ॥ २१
पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः ।
नोत्सहेऽनर्थसंयुक्तां वाचं श्रोतुं कथंचन ॥ २२

वैशंपायन उवाच ।
इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् ।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## ८७

वैशंपायन उवाच ।
प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ १
तं प्रयान्तं महाबाहुमनुज्ञाप्य ततो नृप ।
पर्यवर्तन्त ते सर्वे वृकस्थलनिवासिनः ॥ २
धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुः स्वलंकृताः ।
दुर्योधनमृते सर्वे भीष्मद्रोणकृपादयः ॥ ३
पौराश्च बहुला राजन्हृषीकेशं दिदृक्षवः ।
यानैर्बहुविधैरन्ये पद्भिरेव तथापरे ॥ ४
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ५
कृष्णसंमाननार्थं च नगरं समलंकृतम् ।

C. 5. 3106
B. 5. 89. 6
K. 5. 92. 7

22 K5 om 22 — b) K2 तव पुत्रस्य दुर्मते — c) K1.2.4 B D (except D3.4.9) °संयुक्ता — d) K1.2 D7.10 वाच (for वाचं) K4 B Dn Ds D1.2.5.6.8 श्रोतु वाचं (for वाचं श्रोतुं)

23 K5 B D (except D3.4.7.9.10) T1 G4 om the ref. — a) K2 स नर° (for भरत°) — b) T2 G2 वृद्ध परमदुर्मना°

Colophon missing in K3. — *Sub-parvan* K (K3 missing) B Dn Ds D1.2.5–8.10 T1 G1 M भगवद्यान — *Adhy name* T1 G1 दुर्योधनासत्प्रलापे भीष्मव्युत्थानं, M दुर्योधनासत्प्रलाप — *Adhy no* (figures, words or both) D5 85, D6 81, D7 T G2.5 M1–3.5 89, G1.4 90, G3 M4 88 — *S'loka no* K5 29, Dn 23, D8 24

## 87

☞ This adhy is missing in K3 (cf v.l 5 32 15)

1 a) T2 G2 च (for तु) — b) T G3–5 पूर्वम्, M पौर्वम् (for सर्वम्) D1 रथमारुह्य वेगवान् — c) T1 G1.5 अपि (for अभि)

2 a) K1 Ds2 D6–8 प्रयात, K5 आयात — b) K4 B Dn Ds D2.5.6.8 महाबल, D3.4.9 परंतप (for ततो नृप) — c) D3.4.9 प्रत्यवर्तत, T2 G2 पर्यावर्तत — d) K1.2 D1 बृहत्स्थल°, T G कुश° (for वृक°) — After 2, T G ins

394* प्रययौ पुण्डरीकाक्ष कुरूणां सदनं प्रति ।
आचक्रमुश्च पन्थानं ग्रसमाना इवाम्बरम् ।
दारुकेण प्रचोदिता हयास्तस्य महात्मन ।
अन्नानि शय्या वासांसि तथा रत्नानि सर्वश ।
दुर्योधनेन कृष्णार्थं पथि संविहितं बहु । [5]
ता सभा पुण्डरीकाक्षो रत्नानि च महायशा ।
नाभ्यनन्दन्महाबाहुरुपायात्कुरुसंसदम् ।

[ Lines 1–3 =(var) 5 81 29cd, 59 — (L 2) T1 आचेमुरिव पथानं, G3.4 पथानमाचेमु(G3 °रु)रिव (for the prior half) — (L 3) G2 प्रमथिता, G3 प्रमुदिता (sic), G5 प्रणुन्नास्ते (for प्रचोदिता) — (L 4) T2 G2 रथा (for तथा) — Lines 6–7 =(var) 5 83 18 ]

3 a) Dn1 Ds2 D3.4.9 T2 G2.4 M2 समायात (for तमा°) — b) K5 प्रतिजग्मु, D3.4.9 प्रत्याजग्मु K2 ततस्तत, T1 G4.5 अतस्तत (for स्वल°) — c) K4 B D (except D1.3.4.7.9.10) T1 G1.5 दुर्योधनाद् (for °धनम्)

4 b) K2 B1.5 D1.7.10 T G1.2.5 M2.4.5 हृषीकेश दिदृक्षव (D1.7 M2 °या) — K5 om. 4c–6b — c) K1.2 रम्यै, Ds2 D1.3.4.8.9 T2 G2.3.5 M3–5 अन्यै, D2 राजन्, G4 द्रष्टुं (for अन्ये) — d) M1.2 अन्ये (for एव) D3 पदातय, M यथार्हत (for तथापरे)

5 K5 om 5 (cf v.l 4) — a) D1.7 G5 सर्वे (for स वै) K1.2 समासाद्य — b) D7 भीष्मेणापि जनार्दन

6 K5 om 6ab (cf. v.l 4) — a) D3.4.9 °नार्थाय, T2 G2.4 °नार्थं हि — cd) Dn D7 °समन्विता (for

C. 5. 3100
B. 5. 89. 6
K. 5. 89. 7

बभूवू राजमार्गाश्च बहुरत्नसमाचिताः ॥ ६
न स कश्चिद्गृहे राजंस्तदासीद्भरतर्षभ ।
न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ॥ ७
राजमार्गे नरा न स्म संभवन्त्यवनिं गताः ।
तथा हि सुमहद्राजन्हृषीकेशप्रवेशने ॥ ८
आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि ।
प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले ॥ ९
तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः ।
प्रनष्टगतयोऽभूवन्राजमार्गे नरैर्वृते ॥ १०
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ११
तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः ।
वैचित्रवीर्यं राजानमभ्यगच्छदरिंदमः ॥ १२
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ १३
कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ १४
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ।
स भीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥ १५
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ।
यथावयः समीयाय राजभिस्तत्र माधवः ॥ १६
अथ द्रोणं सपुत्रं स बाह्लीकं च यशस्विनम् ।
कृपं च सोमदत्तं च समीयाय जनार्दनः ॥ १७
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ।

°समाचिता ) K4 5 B Ds D1-8 बभूव °मार्गश्च °समाचित

7 a) K4 5 B D (except D1) च (for स) — c) D1 घृद्धो न च (for न वृद्धो न)

8 a) K2 नार्यै°; K4 B Dn Ds D2 5-8 10 G3 4 तस्मिन् (for न स्म) D1 राजमार्गेण रामा स्यु°, D2 4 9 °मार्गगता° सर्वे, T2 G2 °मार्गगता न स्म — b) K3 4 B Dn Ds D2 5-8. 10 सस्तुवति (for संभ°) K1 2 5 D7 अवनी°; Bs D2 5 6 8 10 T1 G1 2 अवनीं Ds. 4 9 ततोर्ध्वभवनं गताः — G4 om 8cd. — c) K5 D1 T2 G3 तदा (for तथा). T2 G2 5 [अ]स्मिन्, G3 M1 3-5 स्म; M2. 4 (inf lin) एव (for हि) T1 G1 समभवद्. M1 2 4 (inf. lin) हि सम्भ्रमो (for हि सुमहद्) K4 B Dn Ds D2m 5-8 10 तस्मिन्काले महाराज. — d) B1 °निवेशने, D1 °प्रवेशन

9 a) K1 2 5 D7 10 आचितानि, M3-5 आरूढानि (M4 inf. lin as in text) Ds2 D1 गृहस्त्रीभि°; D2 4 9 तत स्त्रीभि° — 9cd =(var.) 5. 92 25cd. — c) G3. 4 प्रचरंति D1 एव, G4 इह, G5 च (for इव) — d) T G M3-5 तत्र तत्र, M1 2 राजस्तत्र (for दृश्यन्ते स्म) T G1 2 5 विशा पते, G3 4 महीपते

10 a) K5 D10 आशु- (for च) — c) A few MSS प्रणष्ट° T2 G2 राजन्, G5 भूप (for ऽभूवन्) — d) K1 D2 4 7. 9 10 T G1 2 5 जनैर्वृते, B3 4 जनावृते (for नरै°)

11 b) D2. 5 8 om प्र- A few MSS °कर्षण° T2 G2 प्रविवेश चतुर्भुज, M1 2 4 (inf lin as in text) प्राविशत्पूर्वमच्युत° — c) S पाण्डर

12 a) N (K3 missing) कक्षा — b) K1 G4 °वेश्मनि

13 =(var) 5 92. 35 — a) D1 अभिगच्छति, Ds. 4 9 अभ्यागते तु — b) K1 जनेश्वर, K4 B D (except D1 7 10) नराधिप (for नरे°). — c) Ds 4 9 S (except G4) भीष्मद्रोणाभ्यां (by transp) — d) D3 मुदायुत, T1 G1 5 जनेश्वर (for महा°)

14 a) T1 G1 5 शल्य (for कृप) — 14cd=5 92 34cd.

15 a) D9 G4 ततो राजन्समासाद्य — b) B1 3 D1 T2 G2 जनाधिप, Ds. 4 9 जनेश्वरं; D7 G3 मनस्विन (for यश°) — c) T1 G1 3 भीष्मं सपूजयामास, G4 स वार्ष्णेय सुवाग्भिस्त, G5 भीष्म द्रोणं कृप चैव — d) G4 राजान सप्रपूजनं — After 15, S ins

395* ते स्वधर्मानकुर्वन्त सपूज्य मधुसूदनम् ।
[ G4 तेस्य कर्माणि (for ते स्वधर्मान्) ]

16 G3 om 16a-18b — a) D1 तेषां; G5 तेन (for तेषु) Dn1 D2 7 8 G4 °पूर्वां, G5 °पूर्वं (for °पूर्वीं) — b) K1 G4 प्रपूज्य, D1 G5 संपूज्य (for प्रयुज्य). — c) K1 2 5 T2 G1 2 5 M1-4 Ca d समेयाय (Cap समी° as in text) — d) T2 प्रांजलिस् (for राजभिस्) K4 5 B D (except D1-4 7 9 10) सह (for तत्र)

17 G3 om 17 (cf v l 16) — ab) K4 B3 4 Dn Ds D5 6 सबाह्लीकं सपुत्रं (for सपुत्रं स बाह्लीक) B1 3 D1-4 7-10 T2 G2 M2 च, T1 G1 5 त (for स) K1. 2 5 D1 3. 4. 7 9 10 T2 G1 2 बाह्लिकं (for बाह्लीक) — d) K1 2 5 D1. 9 S (G3 om) समेयाय; K4 B (except B3) Ds D2 5 समियाय, cf v l. 16.

शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ १८
अथ गां मधुपर्कं चाप्युदकं च जनार्दने ।
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ १९
कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून् ।
आस्ते संबन्धकं कुर्वन्कुरुभिः परिवारितः ॥ २०
सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निराक्रामदरिंदमः ॥ २१
तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि ।
विदुरावसथं रम्यमुपातिष्ठत माधवः ॥ २२
विदुरः सर्वकल्याणैरभिगम्य जनार्दनम् ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ २३
कृतातिथ्यं तु गोविन्दं विदुरः सर्वधर्मवित् ।
कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् ॥ २४
प्रीयमाणस्य सुहृदो विदुषो बुद्धिसत्तमः ।
धर्मनित्यस्य च तदा गतदोषस्य धीमतः ॥ २५
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम् ।
क्षत्तुराचष्ट दाशार्हः सर्वप्रत्यक्षदर्शिवान् ॥ २६

C. 5. 3127
B. 5. 89. 27
K. 5. 89. 27

इति श्रीमहाभारते उद्योगपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

18 G3 om 18[ab] (cf v.l. 16) — [a]) B3 T1 G1.3 तस्य (for तत्र) D3 असौ (for आसीद्) K1.2 D7 10 मज्जित, D1.2 (before corr) पूजित, S (G2 om.) आजित, Ca ऊर्जित (as in text) K2 D2 (by corr) 5 6 8 सृष्ट, D1 श्रेष्ट, Ca सृष्ट (as in text) — [c]) K1 (marg sec m.) आज्ञया (for शासनाद्) — [d]) T G1.2 5 तद् (for तत्र)

19 [ab]) K2 Dn1 D2 4 9 T1 om अपि K5 सु- (for अपि) K4 D2 4 9 जनार्दन, T2 G4 महात्मने — [c]) K1 2 5 D7 10 उपा(K2 5 °प)निन्युर्, B1.2 5 Ds D1.3 4 T G1 2 5 M2 5 उपाजह्रुर्

20 [a]) T1 G3 5 स (for तु) — [b]) D1 परिसरन्, D10 °चरन्, T1 G1 5 व्यवहरन्, T2 नृपवरान्, G2 उपहरन्, G3 उपचरन्, M1 2 अभिवदन्, M3–5 अपहसन्, Cs परिहसन् (as in text) — [c]) K (K3 missing) B1 Dn D1 3 4 7 9 10 Ca सांबधिक, Cd सांबधक, Cs as in text.

21 K5 om 21[cd] — [d]) K1 4 B Dn2 D6–8 10 निरक्रामद्, D1 परिक्रामद्

22 [b]) K5 कुरुसंसदि माधव·, M वदितु वा पितृष्वसा (M1 sup lin as in text)

23 K2 om 23[c]–24[d] — [d]) D2 4.9 अव° (for उप°) — After 23, B1 Dn ins 417* (cf v l 5 90 28), while D1 ins

396* या प्रीतिः पुण्डरीकाक्ष तवागमनकारणात् ।

24 K2 om 24 (cf v l 23) — [b]) D2.4.9 °कर्म° (for °धर्म°) — [d]) S (except G1 2) पप्रच्छ (for अपृच्छत्)

25 [a]) T2 (by corr) प्रीयमाणस्तु D2 transp 25[b] and 25[d] — [b]) K4 5 B (except B1) D5–6 8 T G M2 विदुरो (for °षो) B2 Dn Ds D7 8 10 वृष्णिसत्तम, D1 बुद्धिमत्तर, M बुद्धिमत्तम — K5 om. 25[c]–26[d] — [c]) T1 G1 5 तु (for च) K2 D2.4 9 10 सदा, D3 तत (for तदा) K4 B Dn Ds D1 5 6 8 धर्मार्थनित्यस्य सत — [d]) K4 B D (except D1 3 4 7 9 10) गतरोषस्य

26 K5 om 26 (cf. v l 25) — [a]) D1 2 तस्मै, Ca तस्य (as in text) B2 D1 सुविस्तार — [c]) Ds सुहु, Ca क्षत्तु (as in text) D7 क्षत्तुर्दाशार्हमाचष्ट — [d]) B1 4 Dn2 D2 4 6–8 10 सर्वं, S यथा- (for सर्व)

Colophon missing in K3, D1 om it — *Sub-parvan* K (K3 missing) B Dn Ds D2 5–8 10 T1 G1 M भगवद्यान — *Adhy name* T1 G1 M हस्तिन(M3–5 om. it)पुरप्रवेश (G1 °वेशन) — *Adhy no* (figures, words or both) D5 86, D6 82, D7 T G2 5 M1–3 5 90, G1 4 91, G3 M4 89 — *S'loka no* Dn 27, D3 26

## 88

☞ This adhy is missing in K3 (cf. v l. 5 32 15)

1 [a]) D5 उपागम्य — K4 om 1[c]–3[b] — [c]) K1 2 5 B Dn Ds D1.2 5–8 10 स पृथां (for गोविन्द) D2 4.9 पितृष्वसुरगाराणि — [d]) D5 अभ्यागच्छत्, S सोऽभ्यगच्छत् D2 4 9 गोविंद सोऽभ्यगच्छत

## ८८

C. 5. 3123
B. 5. 90. 1
K. 5. 90. 1

वैशंपायन उवाच ।

अथोपगम्य विदुरमपराह्णे जनार्दनः ।
पितृष्वसारं गोविन्दः सोऽभ्यगच्छदरिंदमः ॥ १
सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम् ।
कण्ठे गृहीत्वा प्राक्रोशत्पृथा पार्थाननुस्मरन् ॥ २
तेषां सत्त्ववतां मध्ये गोविन्दं सहचारिणम् ।
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ॥ ३
साब्रवीत्कृष्णमासीनं कृतातिथ्यं युधां पतिम् ।
बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ४
ये ते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः ।
परस्परस्य सुहृदः संमताः समचेतसः ॥ ५
निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः ।
विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ॥ ६
त्यक्त्वा प्रियसुखे पार्था रुदन्तीमपहाय माम् ।
अहार्षुश्च वनं यान्तः समूलं हृदयं मम ॥ ७
अतदर्हा महात्मानः कथं केशव पाण्डवाः ।
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ॥ ८
बाला विहीनाः पित्रा ते मया सततलालिताः ।
अपश्यन्तः स्वपितरौ कथमूषुर्महावने ॥ ९
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वैणवैरपि ।
पाण्डवाः समबोध्यन्त बाल्यात्प्रभृति केशव ॥ १०
ये स्म वारणशब्देन हयानां हेषितेन च ।
रथनेमिनिनादैश्च व्यबोध्यन्त सदा गृहे ॥ ११
शङ्खभेरीनिनादेन वेणुवीणानुनादिना ।
पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ॥ १२
वस्त्रै रत्नैरलंकारैः पूजयन्तो द्विजन्मनः ।
गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ॥ १३
अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः ।

---

2 K4 om 2 (cf. v.l. 1) — d) K1.2.5 D10 पृथक (for पृथा). D5 G5 पार्थं, D1 G2 पुत्रान् (for पार्थान्). B Dn D2.5–8 स्मरंती तनयान्पृथा (D2 °यांस्तदा)

3 K4 om 3ab (cf. v.l. 1) — a) K2 D1 सत्य° (for सत्त्व°) — b) D7 पुरुषोत्तम (for सह°) — c) D1 गोविंद (for वार्ष्णेयं) — d) K5 पार्थं (for बाष्प). K2 D1 आहरयत्, K5 आकारयत्. K4 तथा; D8.4.9 तदा (for पृथा)

4 b) K2.5 D7 विशां पते (for युधां पतिम्) — c) D8.4.9 °पूर्णेंदु- (for °पूर्णेन)

5 a) D8.4.9 ये तु, T1 G M8 एते (for ये ते). K5 D10 एव — c) Dn1 D8.4.9 परस्परेण — d) K2 Dn1 D8.4.9 समेता°. D1 G5 समतेजस°

6 K5 om 6ab — a) D8.4.9 ध्वंसितो; D7.10 वञ्चिता (for भ्रंशिता) — b) Dn1 D8.4.9 राज्यार्हा (for जना°). T G1.5 विजन (for निर्जनं) — c) K1.2 विगत°, K5 संत्यक्त°, T1 G1.5 निर्जित° — After 6, D1.3.4.9 read 10cd

7 a) K4 D5.6 मुक्त्वा (for त्यक्त्वा). D8.4.9 सुख-प्रिये (for प्रियसुखे). K1.2.5 D7.8.10 त्यक्तप्रियसुखा° पार्था° — b) K (K3 missing) Dn2 D1.2.5–7.10 G3.5 रुदतीं

8 c) K5 ते वासिता वने तात — d) K (K3 missing) D1.3.4.7.9.10 व्याघ्रसिंहगजा(K4 D1 °समा)कुले, T1 G1.4.5 सिंहव्याघ्रसमा°

9 a) D7 T1 G1 M5 पुत्रा (for पित्रा). D1 च; M5 मे (for ते). K5 ते बलविहीना पुत्रा°. — b) M2 °पालिता — c) K1.5 D7.8 Ca अथ, K2 तु, K4 B Dn D5 D6.8.10 च (for स्व).

10 G4 om 10a–11d — b) K1.2.5 D3.4.7.9.10 M5 पणवैरपि, K4 B Dn D5 D1.2.5.6.8 वेणुनिःस्वनैः — D1.3.4.9 read 10cd after 6 — c) D3.4.9 °बाध्यत, T1 G1.5 °बुध्यत

11 G4 om 11 (cf. v.l. 10) — d) D1 विबुध्यत, D3.4.9 विबो°. K4 B1 D (except Dn1 D1.2.7.10) तदा, B1–3.5 पुरा (for सदा)

12 b) K1.5 D7.10 वीणावेणुनिनादिना; K2 D9 G3 वेणुवीणानिनादिना, G5 °वीणादिनैपुणैः — c) T1 G1.5 °मिश्रैश्च

13 K5 om 13a–16d — a) D1 रत्नवस्त्रैरलं° — b) D1 द्विजास्तथा, D2 द्विजातय, S द्विजोत्तमान् (for द्विज°) — c) D8 गीतैर्, D9 वाग्भिर्. K1.2 D3.4.7.9 मंगल-रूपाभि.

14 K5 om. 14 (cf. v.l. 13). — a) K2 D7.10

समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ २०
मध्ये तिष्ठन्हस्त्यनीकस्य मन्दो
रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतमन्युः
कृत्स्ना मयेयं पृथिवी जितेति ॥ २१
आशंसते धृतराष्ट्रस्य पुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलो नोपलभ्यो
बद्धं सन्तमागतं मन्यतेऽर्थम् ॥ २२
पर्यस्तेयं पृथिवी कालपक्वा
दुर्योधनार्थे पाण्डवान्योद्धुकामाः ।
समागताः सर्वयोधाः पृथिव्यां
राजानश्च क्षितिपालैः समेताः ॥ २३
सर्वे चैते कृतवैराः पुरस्ता-
त्त्वया राजानो हृतसाराश्च कृष्ण ।
तवोद्वेगात्संश्रिता धार्तराष्ट्रा-
न्सुसंहताः सह कर्णेन वीराः ॥ २४
त्यक्तात्मानः सह दुर्योधनेन
सृष्टा योद्धुं पाण्डवान्सर्वयोधाः ।
तेषां मध्ये प्रविशेथा यदि त्वं
न तन्मतं मम दाशार्ह वीर ॥ २५
तेषां समुपविष्टानां बहूनां दुष्टचेतसाम् ।
कथं मध्यं प्रपद्येथाः शत्रूणां शत्रुकर्शन ॥ २६
सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः ।
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ २७
या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव ।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ २८

C. 5. 3306 B. 5. 92. 29 K. 5. 92. 29

इति श्रीमहाभारते उद्योगपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

21 K5 om 21 (cf. v.l. 1) — ab) S हस्तिपूगस्य (for हस्त्य°) K3 transp मंद and मूढ° — c) K3 T1 G1 जातमन्यु, K4 B Dn D2 6 10 वीतभीति, Ca d s वीतमन्यु° (as in text) — d) B3 D2 G (except G1) मम (for मया) K1 विजिता महीति (for पृथिवी जितेति)

22 K5 om 22 (cf v.l 1) — a) K4 B D (except D1.2.5) ins वै after आशंसते K1 °ष्ट्रः सपुत्रो (for °ष्ट्रस्य पुत्रो) — b) G1 महद्राज्यम्, M1 2 माहाराज्यम् (for महाराज्यम्) T1 G1 पृथिव्या — 22cd = (var) 5 26 19cd — c) K3 G5 अस्मिन् (for तस्मिन्) D5 C3 क्षम, Ca d क्षेम (for शम) D1.4 केवले, S (except M2 3) °ल, Ca d s °लो (as in text) — d) K1 लब्ध ममा, D7 लब्ध पुरस्तात्, G2 5 यश्चागत (for बद्ध सन्त) K3 बद्ध स ह्यागत मन्यतेर्थं, K4 B Dn D3 D1 5 6 8 10 Ca d s बद्ध मतं मन्यते (D5 8 लभ्यते) लब्धमर्थं, D2 4 9 पृथ्वीमिमां मन्यते वश्यगा च, T G1 2 यश्चागत मन्यते प्राप्तमर्थं

23 K5 om 23 (cf v.l 1) — c) G1 M3-5 सर्वयोधा K3 Ds2 पृथिव्या — d) K1.2 क्षितिपा वै, D7 Ca s क्षितिपाला, T G M1 2 भूमिपाला (G3 °लान्), M3-5 ये भूमिपाला (for क्षितिपालैः) Cd cites क्षितिपा

24 K5 om 24 (cf. v.l 1) — a) D7 सम° (for पुर°) — b) D7 राजानो वै (for त्वया राजानो) K1 3 4 D2 4 7 9 °रत्ना, T G1 3 °राज्या, G4 M °वैरा, Ca °सारा (as in text) — d) K2 D2 T G2 4 M1 4 5 Ca d सुसहिता, B D4 °हता, G1 °श्रिता, G3 °हितान्, G5 °शिता (for °हता) Cs cites सहता S चैव (for वीरा)

25 K5 om 25 (cf. v.l 1) — a) D5 6 8 युक्ता°, Ca d त्यक्ता° (as in text) — b) K4 B Dn2 D3 D (except D8 4 9) G2 हृष्टा, Ca d s सृष्टा (as in text) G1 M1 2 5 °योधा (for °योधा) — After 25ab, S ins

416* मृत्युंजयो वेति कृतैकभावा
कामात्मानो मन्युवशाविनीता ।

26 K5 om 26 (cf. v.l. 1) — b) D1 पाप° (for दुष्ट°) — c) Ds1 (before corr) D1.8 9 मध्ये (for मध्य)

27 K5 om. 27 (cf. v.l 1) — b) G5 सुदुःसह (for दुरु°) — c) D7 प्रभाव बुद्धिशौर्यं च — d) D7 transp जानामि and तव

28 K5 om. 28 (cf. v.l 1) — b) K1 Dn1 D2 4 7 9 10 भूयसी (for भूयः सा) — After 28, K4 B Dn

# ९१

C. 5 3308
B. 5.93 1
K. 5 99 2

भगवानुवाच ।

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः ।
यथा वाच्यस्त्वद्विधेन सुहृदा मद्विधः सुहृत् ॥ १
धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते ।
तथा वचनमुक्तोऽसि त्वयैतत्पितृमातृवत् ॥ २
सत्यं प्राप्तं च युक्तं चाप्येवमेव यथात्थ माम् ।
शृणुष्वागमने हेतुं विदुरावहितो भव ॥ ३
दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरिताम् ।
सर्वमेतदहं जानन्क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ४
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ॥ ५
धर्मकार्यं यतञ्शक्त्या न चेच्छक्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥ ६
मनसा चिन्तयन्पापं कर्मणा नाभिरोचयन् ।
न प्राप्नोति फलं तस्य एवं धर्मविदो विदुः ॥ ७
सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया ।
कुरूणां सृञ्जयानां च संग्रामे विनशिष्यताम् ॥ ८
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।

---

D8 D9 (marg) 8–9 ins

417* या मे प्रीति पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ।
[In B4 Dn it is a *repetition*! Cf. v.l 5 87 23.]

Colophon missing in K3, K5 om it — *Sub-parvan* K1.2 4 B Dn D8 D1 2 5–8 10 T1 G1 5 M भगवद्यान — *Adhy name* D1 T1 G1 5 विदुरवाक्य, M विदुरमत — *Adhy no* (figures, words or both) D5 88, D6 84, D7 M1–3 5 93, T G2 4 5 94, G1 95, G3 M4 92 — *S'loka no* Dn D8 30

## 91

☞ This adhy is missing in K3 5 (cf v l 5 32 15, 90 1)

Before 1, K4 D8 S (except G1) ins

418* वैशंपायन ।
विदुरस्य वच श्रुत्वा प्रश्रित पुरुषोत्तम ।
इद होवाच वचन भगवान्मधुसूदन ।
[(L 1) G3 प्रश्रित K4 मधुसूदन (for पुरुषो°) — (L 2) D8 T1 G3 प्रोवाच (for होवाच)]

— K2 B3 Dn D1 2 7.10 T G1–3 5 M (except M2) श्रीभगवान्, G4 कृष्ण. — [c]) D8 T G1 2 5 तथा (for यथा) — [d]) K4 B D (except D2 4 7.9 10) भवता (for सुहृदा)

2 [a]) T1 G1 तत्त्व (for तथ्यं) — [b]) D5 यथा (for तथा) — [d]) D2 यथैव, S क्षत्तस्ते (for त्वयैतत्) D8.4 9 पितृवन्मयि, Ca पितृमातृवत् (as in text)

3 [ab]) K1 एव; K2 S सर्वं (for सत्यं) G4 ह्येव (for युक्त) K4 B4 D (except Dn1 D1–4.10) G3 M5 वा, G4 मे (for the second च) K1.2 T2 G2 4 5 om अपि (leaving hiatus!). K1 2 D1 5 6 8 10 एतद् (for एव) T1 G2 5 यदा (for यथा) G4 यदा यत्त्व यदात्थ मा — [c]) S शृणु च (for शृणुष्व) — [d]) S मम (for भव)

4 [a]) K2 D7 S °राष्ट्राणा — K4 om. 4[b]–5[b] — [b]) K1 G5 वैरिणां, B D (except D1) T2 G2 वैरता — [d]) K2 D2 G5 अस्मि (for अद्य)

5 K4 om. 5[ab] (cf v l 4) — [a]) S कृत्स्ना (for सर्वां) — [b]) D8 4 9 सहाश्वरथकुंजरां — [c]) K1 असमोचयन्, K2 प्रमो°, D7 G2 यो मोच° — [d]) K1 2 D7 प्राप्नुयां K2 पुण्यम् (for धर्मम्)

6 [a]) D1 धर्मकार्ये K1 D7 8 धर्मं कुर्वन्यथाशक्त्या; K2 धर्मकार्ये यतेच्छक्त्या, D2 धर्मकामार्थता शक्त्या, D8 4 9 धर्मकामो यथाशक्ति, S धर्म(G5 °र्मे)कार्ये यतमानो — [b]) B Dn D8 D10 नो (for न) N (except D1–4 9, K3 5 missing) M5 प्राप्नोति (for शक्नोति). — [d]) K2 T1 तत्र, D8 4 9 इति (for अत्र)

7 [a]) K2 S (except G4 M2 5) चिंतित (for चिन्तयन्) — [b]) K1 उपपादयेत्, K2 (before corr) उपपद्यते, and (after corr) उपपादित, K4 B2 4 Dn2 अतिरोचयन्, Dn1 D2 4 T2 G2 C8 अभिरोचयेत्, D7 10 उपपादयन्, T1 G1 समाचरेत्, G4 5 करोति य ; Ca अभिरोचयन् (as in text) — [cd]) K1 D7 8 अप्येव; K4 B Dn D8 D1 2 5 6 10 इत्येव (avoiding hiatus!), S इति (for एव)

8 [a]) K1 2 (*sup lin sec. m.* as in text) D8 G5 प्रथम; G2 च शम (for प्रशमं).

9 [a]) K2 आपद्धीय (for सेयमापन्) — [b]) K2 D1

कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ॥ ९
व्यसनैः क्लिश्यमानं हि यो मित्रं नाभिपद्यते ।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ १०
आ केशग्रहणान्मित्रमकार्यात्संनिवर्तयन् ।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ११
तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् ।
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति ॥ १२
हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च ।
पृथिव्या क्षत्रियाणां च यतिष्येऽहममायया ॥ १३
हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि ।
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति ॥ १४
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन मध्यस्थं न तन्मित्रं विदुर्बुधाः ॥ १५
न मां ब्रूयुरधर्मज्ञा मूढा असुहृदस्तथा ।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् ॥ १६
उभयोः साधयन्नर्थमहमागत इत्युत ।
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् ॥ १७
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ १८
अहापयन्पाण्डवार्थं यथाव-
च्छमं कुरूणां यदि चाचरेयम् ।
पुण्यं च मे स्याच्चरितं महार्थं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ १९
अपि वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन्धार्तराष्ट्राः समर्थां
मां च प्राप्तं कुरवः पूजयेयुः ॥ २०
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ २१

वैशंपायन उवाच ।

इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा ।
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥ २२

C. 5. 3329
B. 5. 83. 22
K. 5. 93. 23

इति श्रीमहाभारते उद्योगपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

एवं D5 T1 G1 कुरुष्वेवमुपस्थिता — c) D2-4 9 कर्णदुर्योधनकृपा, S (except G3 4) °कृते — d) T2 दुःशासनकृते स्वय

10 a) K1 B1 2 4 5 D (except D7 10) T1 G1 व्यसने, B3 °नात् (for °नैः) D3.4 9 च (for हि) — b) K1 D7 10 transp यो and मित्र — c) K1 2 D1 7 8 10 अर्थज्ञो हि, K4 B4 D5 6 Cn अनर्थाय (Cnp अनुनीय as in text), B2 D5 अन्वयाय, D2 अर्थं ज्ञात्वा, D3 4 9 अनर्थज्ञ, T G1-3 अन्वानीय, G4 5 अन्वयानि — d) B D2-4 S (except T1 M3) Cn तत् (for त)

11 b) K2 S (except G3) मनिवर्तयेत् — c) Hypermetric! K1 D7 Ca न वाच्य (for अवाच्य) K1 D1 T2 G2 कस्य, Ca d कस्यचित् (as in text)

12 a) K1 2 D7 समीक्ष्य (for समर्थं)

13 a) K2 T1 G1 हित च, B1 2 5 हिताय (for हित हि) — b) S अथो (T2 G2 अथा) हित (for तथैव च) — d) D3 करि° (for यति°)

15 a) K2 D5 T1 G1 च, D2 तु (for हि) — b) D3.4 9 अभिमन्यते (for °पद्यते) — c) K4 Dn2 D1 5 9 माध्यस्थ, B1 3 5 D2 T2 G1 2 मध्यस्थ्य, B2 4 D3 D3 4 6 माध्यस्थ्य

16 a) G5 M मा (for मां) N (except K1 D7, K3 5 missing) M5 अधर्मिष्ठा (D2 °ष्ठ) (for °मज्ञा) — b) K2 4 B Dn D5 D6-8 10 G3 ह्य(K2 कु)सुहृद, D2-4 9 ह्यहृदय (for असुहृद) — c) D3 4 9 transp शक्तो and न D5 D8 न वार°, G4 नोवार° (for नावार°)

17 b) D1 T2 G3 M अथ (for अह) G4 5 महाभाग इतीत्युत — d) S धर्मस्यानृण्यतामिया

18 =(var) 5 81 4 — a) K1 D10 S धर्मार्थसयुक्त, D5 6 °र्थमुक्त हि — c) T2 G2 हि दास्यते, Ca आदा° (as in text)

19 a) K1 अवाप्यार्थं, K2 D3 अवाप्याह, D2 (corrupt) प्रश्नापयन् (m अहापयन्वं), D3 4 अहाप्य वै (for अहापयन्) Dn2 D3 पाडवार्थे S अह यतेय पाडवानां हिता(G3.5 यथा, G4 शामा)र्थं — b) D1 2 अथ (for यदि) K1 2 Dn1 D1-4 9 10 चेच्चरेय, B3 तैश्चरे°, D5 वा चरे° (for चाचरे°) S शाम कुरूणा च सहेह (T1 G1 सह सर्व-, T2 G2 4 च सहैव) राजभि — c) K4 B (except B3) Dn2 D5

# ९२

C. 5 2320
B 5 94 1
K 5 94 1

वैशंपायन उवाच ।
तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा ।
शिवा नक्षत्रसंपन्ना सा व्यतीयाय शर्वरी ॥ १
धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः ।
शृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥ २
कथाभिरनुरूपाभिः कृष्णस्यामिततेजसः ।
अकामस्येव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ३
ततस्तु स्वरसंपन्ना बहवः सूतमागधाः ।
शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ४
तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम् ।
सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ॥ ५
कृतोदकार्यजप्यः स हुताग्निः समलंकृतः ।
तत आदित्यमुद्यन्तमुपातिष्ठत माधवः ॥ ६
अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
संध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ७
आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।

---

महात्मन्, G4 महाफल, Ca महार्थं (as in text) — d) D8 चेत्; D8.4 9 वै (for च) S मुच्येरंश्चेन् (G4 °रन्; G5 °रस्ते) मृत्युपाशाद्धि सर्वे

20 a) S का(G3 5 र)स्या, Ca d काव्यां (as in text) — c) K1 आदेक्ष्यते, T2 G2 आचक्षेरन् (for अवेक्षे°) K1 धार्तराष्ट्र K2 D1 समर्था, K4 B (except B8) Dn D8 D2-10 शमार्थं, T1 G1 समग्रा, T2 G2 समाधौ, G3 समस्ता, G4 5 समस्ता. (for समर्थां) — d) T2 G2 प्रोक्त (for प्राप्त)

21 =5 70 86

22 D8 4 9 T1 G4 om the ref K5 resumes! — a) K1 D8 4 7 9 10 स (for इति) K5 एवमुक्त्वा तु वचन — b) D5 वृषभस; M3 अधिपस D8 4 9 G3 तथा (for तदा) G4 वृष्णिवीर प्रतापवान् — d) N (mostly) शिष्ये K5 भूय (for यदु-)

Colophon missing in K3, K5 om it — *Sub-parvan* K1 2 4 B Dn D8 D1 3 5-8 10 T1 G1 M भगवद्यान — *Adhy name* T1 विदुर प्रति भगवद्वचनं, M वासुदेव(M1 भगवन्)मतं — *Adhy no* (figures, words or both) D5 89 (repeated), D6 85, D7 M1-3 5 94, T G2 4 5 95, G1 96, G3 M4 93 — *S'loka no* Dn1 D8 21, Dn2 22.

## 92

☞ This adhy is missing in K3 (cf. v l 5 32 15)

1 a) D5 S कथा (for तथा) K1 2.5 D (except Dn2 D5 D6 9 10) T2 G2 5 एव — b) D5 D2 G1 4 तथा (Ds2 तत·) (for तदा). — c) K1 नक्षत्रसहिता, Ca d as in text — d)=3d D7 व्यतीता च, D9 °ताय (for °याय) T2 G2 सा व्यतीता विभावरी — After 1, D2 G3 read 4.

2 K4 om 2a-3b, M2 om. (hapl) 2-3 — a) K1 2 5 B4 5 D7.10 धर्मकामार्थवत्य(B4 5 °युक्त)श्च, D1 3 4 9 धर्मार्थकामवत्यस्तु (D1 °श्च), D2 °वद्वाश्च, S (M2 om) धर्म्या रम्याश्चार्थवती· — b) D2 विचित्रा. सुपदाक्षरा

3 K4 om 3ab, K5 M2 (cf v l 2) om 3 — a) D1.2 S (except M5, M2 om) °कूलाभि (for °रूपाभि) — b) K1 2 हृतस्य, D3 नु तस्य; D2 एव हि, T G1 2 रक्तस्य, G3 M (M2 om) रतस्य (for कृष्णस्य) G4 5 क्षतुस्तस्यामितौजसः — c) T G (except G4) एव (for इव) — d)=1d D2 व्यतीता च (for °याय)

4 D2 G3 read 4 after 1 — a) S (except T2 G2) तत. सुस्वरसपन्ना — d) D1 2 समबोधयन्; T2 G2 प्रत्यपूजयन्, M3 5 (inf lin as in text) °घोषयन् (for °बोधयन्) — After 4, K4 S (except G4) ins

419* ब्रह्मादिवसुदेवान्त वश समनुकीर्तयन् ।
तुष्टुवु· केशवं तत्र बहव सूतमागधा ।
[ (L 2) K4 T1 पुण्डरीकाक्ष (for केशव तत्र) ]

5 b) K2 D1 वृषभ — c) G4 तदाह्निक (for आवश्यक) — d) G1 4 °कल्य (for °कार्यं).

6 K5 om. 6-7 — a) K1 D2 M कृतोदकार्थजप्य स (M1 सन्), K2 °काग्निजप्य. स; K4 B Dn D5.6 8 कृतोदका(B3 कृताग्निको)नुजप्य स; D3.4 10 °कातजप्य स, D9 °दको यथान्याय, T G कृतोदक· कृतजप — c) K4 M5 तत्र (for तत) T G transp आदित्य and उद्यन्त B (except B2) Dn1 D8 4 चादित्यम् — d) D1.3 T2 G2.5 उपतिष्ठत D1.2 7 G4 केशव. (for माधव·)

7 K5 om. 7 (cf v l 6). — a) S ततो दुर्योधनः

कुरूंश्च भीष्मप्रमुखान्राज्ञः सर्वांश्च पार्थिवान् ॥ ८
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ९
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परंतपः ॥ १०
विसृष्टवन्तं रत्नानि दाशार्हमपराजितम् ।
तिष्ठन्तमुपसंगम्य ववन्दे सारथिस्तदा ॥ ११
तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः ।
महाभ्रघननिर्घोषं सर्वरत्नविभूषितम् ॥ १२
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ।
कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन् ॥ १३

कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ।
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः ॥ १४
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ।
सर्वप्राणभृतां श्रेष्ठं सर्वधर्मभृतां वरम् ॥ १५
ततो दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
द्वितीयेन रथेनैनमन्वयाता परंतपम् ॥ १६
सात्यकिः कृतवर्मा च वृष्णीनां च महारथाः ।
पृष्ठतोऽनुययुः कृष्णं रथैरश्वैर्गजैरपि ॥ १७
तेषां हेमपरिष्कारा युक्ताः परमवाजिभिः ।
गच्छतां घोषिणश्चित्राश्चारु बभ्राजिरे रथाः ॥ १८
संमृष्टसंसिक्तरजः प्रतिपेदे महापथम् ।

C. 5 3349
B. 5 94 20
K. 5 94 22

---

कर्ण — $^{c}$) K1 B1 2 6 Dn2 Ds1 D1 6–7 अभ्येतां, T1 G1 4 अभ्यायन्, T2 G2 3. 5 M अभ्यायात्, Ca अभ्यैता (for अभ्येत्य) — $^{d}$) D7 अमितौजम (for अपरा°)

8 $^{a}$) K1 D1–4 8 9 च (for तु) K2 ततस्तस्य (for तु कृष्णस्य) S आचख्युस्तेय (T2 °स्ते तु, G2 5 °स्ते च) कृष्णाय Cs cites आचक्षेता (as in text) — $^{b}$) M3. 4 सभा गत — $^{d}$) S चैवाय (for सर्वांश्च)

9 For S see below — $^{a}$) K1 2 5 D1 अर्चय(K5 °य)त, B3 Ds2 अर्थय(Ds2 °य)त, Cs as in text K1 गोविंद — K5 om $9^{b}$–$10^{b}$ — For 9, S (transposing the lines) subst

420* तानभ्यनन्दद्गोविन्द• साम्ना परमवल्गुना ।
तेऽभ्यर्च्य देवकीपुत्र दिवि शक्रमिवामरा ।

10 K5 om. $10^{ab}$ (cf. v l. 9) — $^{b}$) G3 महायशा (for जना°) — $^{c}$) Ds2 D1 9 G4 हिरण्यवासांसि — $^{d}$) K1 Ds2 D8 परतप, D2 जनार्दन K2 गाश्च रत्नानि सर्वश

11 $^{a}$) K4 B2 4 Dn Ds D5 6 8 विसृज्य बहुरत्नानि Ca d cite निसृष्टवन्त — $^{d}$) T1 G1 ववदे कृष्णसारथि॰ — After 11, N (K3 missing, K5 om line 2) ins

421* ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हयोत्तमयुजा शीघ्रमुपातिष्ठत दारुक ।
[ Line 1 = 5 129 $21^{ab}$ ]

On the other hand a passage given in App I (No 5) is ins in S after 11, in K4 after 421*

12 K5 om $12^{ab}$ — $^{b}$) D1 G4 महात्मन (for °मना ) — $^{c}$) S °घनसकाश

13 D7 om $13^{c}$–$14^{d}$ — $^{c}$) D3 4 9 S आवध्य, Ca d आमुच्य (as in text)

14 D7 om 14 (cf v l 13) — $^{a}$) G4 चापि (for कृष्णो) — $^{b}$) T2 G4 अपि सवृत, G2 अपि रक्षित (for अभि°) — $^{c}$) K1 2 प्रातिष्ठत, G2–4 अतिष्ठत — $^{d}$) T2 °वल्लभ

15 $^{b}$) D3 4 9 चैव (for सर्व-) — K5 om $15^{cd}$, D9 om. $15^{c}$–$16^{b}$ — $^{c}$) T2 G1 2 श्रेष्ठ — $^{d}$) K2 सर्वप्राणभृतां, K4 B D (except D7 10, D9 om ) M2 सर्वबुद्धिमता B1 5 T G1 2 4 M1. 2 वर

16 D9 om $16^{ab}$ (cf. v l 15) — $16^{ab}$ = (var ) $7^{ab}$ — $^{a}$) B (except B4) तदा (for ततो) S कर्ण (for कृष्ण) — $^{c}$) Ds D8 T2 G2 एवम्, D2 एव, D9 एतम् (for एनम्) — $^{d}$) D3. 4 9 अन्वयाता, D5 8 अन्वा याता (D8 °त), T1 G1 अन्वयुस्ते, T2 G2–5 M अनु(G3 °भि)याता K5 Dn1 Ds2 D7 परतप, D2 परस्पर, D3 4 9 अरिंदम

17 $^{b}$) K2 4 B D (except D7 10) अपरे रथा (K2 Ds1 तथा) (for महा°) — $^{d}$) K4 5 B D (except D1–4 7 9) transp रथै and गजै D1 2 तथा (for अपि)

18 K5 om 18–26 — $^{a}$) N (except D1, K3 missing, K5 om ) G5 Ca हेमपरिष्कारै (K1. 2 °स्कारा, G5 °ष्कार ) — $^{b}$) D5(m as in text) 6 8 G5 मुक्ता (for युक्ता ) — $^{c}$) K1 2 D1 7 10 प्रयात°, Ds2 गच्छत ; D2 व्रजत , D3 4 9 जयिन , S यास्यता (for गच्छता) T2 G2–4 घोषणाश्च B4 D5 6 8 चित्र (for चित्राश्च) — $^{d}$) K4 B Dn Ds D5 6 8 रथा राजन्विरेजिरे

19 K5 om 19 (cf v l 18) — $^{a}$) K1. 2 D9 10 समृष्टमथ सस्मिक्त, Cap °ससिक्तरज, Ca as in text — $^{b}$) Dn2 Ds2 D9 10 T G2 3 M4 महारथ, Ca as in text

C 5. 3409
B. 5. 94. 20
K 5. 94. 22

राजर्षिचरितं काले कृष्णो धीमाञ्श्रिया ज्वलन् ॥ १९
ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः ।
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥ २०
प्रवीराः सर्वलोकस्य युवानः सिंहविक्रमाः ।
परिवार्य रथं शौरेरगच्छन्त परंतपाः ॥ २१
ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः ।
असिप्रासायुधधराः कृष्णस्यासन्पुरःसराः ॥ २२
गजाः परःशतास्तत्र वराश्चाश्वाः सहस्रशः ।
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् ॥ २३
पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम् ।
सवृद्धबालं सस्त्रीकं रथ्यागतमरिंदमम् ॥ २४
वेदिकापाश्रिताभिश्च समाक्रान्तान्यनेकशः ।
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत ॥ २५
संपूज्यमानः कुरुभिः संशृण्वन्विविधाः कथाः ।
यथार्हं प्रतिसत्कुर्वन्प्रेक्षमाणः शनैर्ययौ ॥ २६
ततः सभां समासाद्य केशवस्यानुयायिनः ।
सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् ॥ २७
ततः सा समितिः सर्वा राज्ञाममिततेजसाम् ।
संप्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ २८
ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः ।
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ २९
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ।

— After 19$^{ab}$, T1 G4 read 24$^{cd}$ — $^{c}$) Dn1 D1.9 G4 राजर्षिचरिते (D9 G4 °त·) काले — $^{d}$) S श्रिया परमया ज्वलन्

20 K5 om 20 (of v l 18) — $^{b}$) K1 प्राचोद्यंत, K2 D1 8 9 T2 G3-5 M6 प्रवाद्यत (G3 5 °ते) T G1 2 4 5 अथ पुष्करा., G3 M च पुष्करा., Ca गुरुपुष्कला , Cd s as in text — $^{c}$) D3-5 8 9 शङ्खाश्च — $^{d}$) T2 (m as in text) वाद्यभांडानि यानि च

21 K5 om. 21 (of v l 18) — $^{b}$) D2 सत्य° (for सिंह°) — $^{d}$) D7 अतिष्ठत (for अगच्छन्त) K1 2 परं शता·, D3 4 9 G5 °तप, G4 °तपं.

22 K5 om 22 (of v l 18) — $^{ab}$) K ततो योधवरा हृष्टा विविधायुधपाणयः — $^{c}$) K2 असिचक्रायुधधरा — After 22, K2 ins.

422* योधा परशुहस्ताश्च शतशोऽथ सहस्रशः ।

After the above, K2 reads 26$^{ab}$, 25, 23$^{cd}$, 24, 23$^{ab}$, 26$^{cd}$, etc

23 K5 om 23 (of v l 18) For sequence of K2 cf v l 22 — $^{a}$) K2 D1 7 G2 4 परशता , K4 B1-3 5 Dn1 D5 6 8 पचशता·, B4 Dn2 D3 D8 4 9 10 पचाशता , M Cd पर शता (for पर·शता ) T2 G2 चात्र (for तत्र) — $^{b}$) K1 T G (except G4) त्व(T1 G5 प)राश्चाश्च, K4 B D रथाश्चासन् (D1 °श्चाश्वा , D10 °श्चैव), M2 पराश्चाश्वा (for वराश्चाश्वा·) D1 2 च सर्वश , G3 (inf lin as in text) पर शता (for सहस्रश ) — $^{c}$) K2 प्रयान्तम्, B (except B1) Dn2 D82 D3 4.9 प्रयांतम्; D4 प्रयातम् K1 2 D1 2 10 T1 G1 M वीरा

24 K5 om 24 (of v l 18) For sequence of K2 cf. v l 22 — $^{a}$) D8 एवं (for पुर) G3 5 सद्रष्टु, M उद्वृत्तं; Ca सस्पृत (for संवृत्त) — $^{b}$) G3 5 यथा° (for द्रष्टु°) — T1 G4 read 24$^{cd}$ after 19$^{ab}$ — $^{c}$) K4 Dn D8 D5 6 8 स(D8 आ)बालवृद्ध (for सवृद्धबाल) K2 D7 सवृन्दबालसस्त्रीक — $^{d}$) K2 4 Dn1 D7 10 G3 5 M1 2 अरिंदम

25 K5 om 25 (of v l 18). For sequence of K2 of v l 22. — $^{a}$) K4 B D (except D1) G2 M1 वेदिकामा(G2 °चक्रा)श्रिताभिश्च, G4 °पाश्रयाभिश्च — 25$^{cd}$ =(var ) 5 87 9$^{cd}$

26 K5 om 26 (of v l 18) For sequence of K2 cf. v l 22 — $^{a}$) B (except B5) Dn2 D5.6 स पूज्यमान G3 सपूज्य· कुरुभि सर्व , G5 माधव. कुरुभि पूज्य — $^{b}$) K1 D3 8 G2 M3 स श्रृण्वन्, K2 श्रृण्वंश्च N (except K2 D1 2, K3 missing, K5 om ) मधुरा (for विविधा ) K2 गिर (for कथा ) — $^{c}$) K2 यथावत् (for यथार्हं) D7 प्रतिकुर्वन्वै — $^{d}$) D8 T M2 प्रेक्षयमाण: K2 यथा, D7 अपि (for ययौ)

27 $^{c}$) S °समिश्र (for °निर्घोष·) — $^{d}$) B4 D2-4 9 G4 सर्वाभ्य(D2 °नु)नादयन्, G5 सर्वा द्दना°

28 K5 om 28$^{c}$-29$^{d}$. — $^{c}$) M (except M6) प्राकंपत प्रहर्षेण

29 K5 om 29 (of v l 28) — $^{a}$) K1 2.4 B (except B4) D6-8 10 अभ्यासगते — $^{b}$) D2 T2 (m as in text) G2 समाहृष्टा (for समहृष्यन्) — $^{c}$) K1 D7.10 अथ (for त).

30 $^{a}$) K2 4 तत· प्राप्य (for आसाद्य तु) M5-8 सभामृद्धाम् (for °द्वारम्) — $^{c}$) K1.5 D7 सोवतीर्य.

अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ३०
नगमेघप्रतीकाशां ज्वलन्तीमिव तेजसा ।
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ३१
पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ।
ज्योतींष्यादित्यवद्राजन्कुरून्प्रच्छादयञ्श्रिया ॥ ३२
अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ ।
वृष्णयः कृतवर्मा च आसन्कृष्णस्य पृष्ठतः ॥ ३३
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ३४
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्महामनाः ।
सहैव भीष्मद्रोणाभ्यामुदतिष्ठन्महायशाः ॥ ३५
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।
तानि राजसहस्राणि समुत्तस्थुः समन्ततः ॥ ३६
आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ।
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥ ३७
स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः ।
अभ्यभाषत धर्मात्मा राज्ञश्चान्यान्यथावयः ॥ ३८
तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ॥ ३९
तत्र तिष्ठन्स दाशार्हो राजमध्ये परंतपः ।
अपश्यदन्तरिक्षस्थानृषीन्परपुरंजयः ॥ ४०
ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ।
अभ्यभाषत दाशार्हो भीष्मं शांतनवं शनैः ॥ ४१
पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप ।

C. 5 3172
B. 5. 94 42
K. 5. 94 54

— $^{d}$) A few N MSS कैलाश°
31 K5 om 31–32 — $^{a}$) K4 B2–4 Dn Ds2 D1 5 7 8 नव° — K1 om. 31$^{bc}$ — $^{d}$) K2 transp सभा and तत
32 K5 om. 32 (cf. v l. 31) — $^{a}$) D2–4 9 पार्श्वे (for पाणौ) — $^{d}$) K4 B D (except D1.7) M3–5 प्रा(Dn1 आ)च्छा°
33 D3 4 9 om 33$^{d}$–34$^{c}$ — $^{cd}$) K (K3 missing) B Dn Ds D1 5–8 10 अप्यासन् (K2 आसीत्), D2 ह्यासन् (for आसन्)
34 D3.4 9 om 34$^{abc}$ (cf. v.l. 33) — $^{b}$) Ds D7 8 10 तया, D1 तु ते; D2 S च ते (for तत ) T2 G2 भीष्मद्रोणकृपास्तत — 34$^{cd}$ = 5 87 14$^{cd}$ (cf. v.l 35)
35 = (var.) 5 87 13 — K5 om. 35 — $^{b}$) K4 B4 Dn Ds D5 6 8 नरेश्वर , B1–3.5 नराधिप (for महामना ) — $^{c}$) K4 B D (except D2–4 8 9) G4 द्रोण-भीष्माभ्यां (by transp ) — $^{d}$) G1 2 4 °मना (for °यशा )
36 $^{a}$) M3.4 महाराज — $^{b}$) D1 नरेश्वरे; D2 महात्मनि (for जने°) — $^{c}$) D2 सर्वं एव समुत्तस्थु° — $^{d}$) K2 D7 सहस्रश (for समन्तत ) D2 राजानो ये समागता
37 $^{a}$) M2 °मृष्ट (for °भद्र) — $^{b}$) G4 सर्वरत्न विभूषित — K5 (which om 38$^{a}$–40$^{b}$) ins after 37

423* दुर्योधन उवाच ।
भीष्मद्रोणौ परित्यज्य त्वया मा मधुसूदन ।
किमर्थं पुण्डरीकाक्ष कृत वृषलभोजनम् ।
भगवानुवाच ।
भक्त पृच्छसि राजेन्द्र आदर किं न पृच्छसि ।
भोजन गतजीर्णं तु आदरमजरामरम् ।
आदरेणोपनीतानि शाकान्यपि फलानि च । [5]
प्रीणन्ति मम गात्राणि नामृत मानवर्जितम् ।
वर हालाहल पीत सद्य प्राणहर च यत् ।
न तु भुक्त धनाढ्यस्य भ्रुवा कुटिलितेयुपे (sic) ।
न जाति कारण तात गुणा कल्याणकारणम् ।
चाण्डालमपि सद्वृत्त त देवा ब्राह्मण विदु । [10]
कैवर्तीगर्भसंभूतो व्यासो नाम महामुनि ।
तपसा ब्राह्मणो जातस्तस्माज्जातिर्न कारणम् ।

38 K5 om 38$^{a}$–40$^{b}$ — $^{a}$) D2–4 9 S च (for तु) — $^{b}$) T2 G2 भीष्मद्रोणौश् — $^{c}$) K2 दाशार्हे (for धर्मात्मा) — $^{d}$) T1 G1 यथार्हत , T2 G4 M यथागतान्, G2 3 5 अथागतान्, M1 (inf lin ) समागतान् (for यथावय )
39 K5 om. 39 (cf v l 38) — $^{a}$) K2 ते तु, D (except Dn D1.2 5 6) G4 तत (for तत्र) — $^{b}$) K1 शुभ (for सभाम्) K2 सभामभ्यगत विभु — $^{c}$) K4 D5 8 प्रहृष्टा , M3 5 राजान K2 सगता (for पार्थिवा )
40 K5 om 40$^{ab}$ (cf v l. 38) — $^{a}$) T1 G1 ततस् (for तत्र) B3 Ds D5–8 10 अतिष्ठत, S तिष्ठस्तु (for तिष्ठन्स) — $^{b}$) Dn1 Ds2 D3 4 परतप
42 $^{c}$) K1 Dn1 Ds2 D1 5 6 8 9 G2 5 निमन्त्र्यताम्, K2 D3 T1 G1 4 निमन्त्र्य तान्, G3 आमन्त्र्यताम् — $^{d}$) K5 सत्कारेणैव (for सत्कारेण च)

C 5. 3372
B 5. 94. 43
K 5. 94. 55

निमन्त्रयन्तामासनैश्च सत्कारेण च भूयसा ॥ ४२
नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् ।
पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् ॥ ४३
ऋषीञ्शांतनवो दृष्ट्वा सभाद्वारमुपस्थितान् ।
त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् ॥ ४४
आसनान्यथ मृष्टानि महान्ति विपुलानि च ।
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः ॥ ४५
तेषु तत्रोपविष्टेषु गृहीतार्घेषु भारत ।
निषसादासने कृष्णो राजानश्च यथासनम् ॥ ४६
दुःशासनः सात्यकये ददावासनमुत्तमम् ।
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे ॥ ४७
अविदूरेऽथ कृष्णस्य कर्णदुर्योधनावुभौ ।
एकासने महात्मानौ निषीदतुरमर्षणौ ॥ ४८
गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः ।
निषसादासने राजा सहपुत्रो विशां पते ॥ ४९
विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे ।
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ॥ ५०
चिरस्य दृष्ट्वा दाशार्हं राजानः सर्वपार्थिवाः ।
अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम् ॥ ५१
अतसीपुष्पसंकाशः पीतवासा जनार्दनः ।
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ५२
ततस्तूष्णीं सर्वमासीद्गोविन्दगतमानसम् ।
न तत्र कश्चित्किंचिद्धि व्याजहार पुमान्क्वचित् ॥ ५३

इति श्रीमहाभारते उद्योगपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

---

44 $^b$) B (except B4) D1–4 9 T G1 2 5 उपागतान् (for उपस्थितान्) — K5 om 44$^e$–53$^d$ — $^c$) D2–4 9 भीष्म (for भृत्यान्) — $^d$) D2–4 9 भृत्यानर्थं, T1 G1 आसनार्थं (for आसनानीति)

45 K5 om 45 (cf v l 44). — $^b$) विमलानि (T2 G2 विविधानि) (for विपुलानि) — $^c$) D4.9 °कांचनरत्नानि — $^d$) K2 जना जह्रुस् (for समा°)

46 K5 om 46 (cf. v l 44) — $^b$) K1 2 4 Dn1 D4 6–9 गृहीतार्थेषु; B (except B4) Ds1 D1 2 S गृहीतार्घ्येषु

47 K5 om 47 (cf v l 44) — $^a$) K1 D8 सात्यकाय, G8 सात्यकिने — Ds1 om 47$^c$–48$^b$

48 K5 D6 om 48 (cf v l. 44), Ds1 om. 48$^{ab}$ (cf v l 47) — $^a$) K4 B D (except Ds2, Ds1 D6 om ) तु (for ऽथ) T1 G1 अविदूरेण, T2 G2 अतिदूरेण (for °दूरेऽथ) — $^d$) K1 D7 T1 Cap निषेदतु, D1 3.4 9 न्य(D1 नि)षीदेतां, Ca निषीदतु' (as in text). D7 S अरिंदमौ (for अमर्षणौ)

49 K5 om. 49 (cf. v.l 44) — $^a$) D4 9 विवेश शकुनिस्तत्र, D8 विवेश तत्र शकुनि — $^b$) K2 अभिपूजित', G8 सर्वतो वृत, M अभिसंवृत (for °रक्षित) — $^c$) K1 D1 3 4 9 शुभ्रे, K2 राजन् (for राजा) — $^d$) K1 D1–4. 7 9 T G (except G5) M2 सह पुत्रैर्, M3–5 सह ताभ्यां (for °पुत्रो).

50 K5 om 50 (cf v l 44) — $^b$) K2.4 Ds2 D5.6 8 T1 G1 शुक्लस्पर्ध्य(T1 G1 °माध्व)जिनोत्तरे

51 K5 om 51 (cf v l 44) — $^{ab}$) K2 transp. दाशार्हं and राजान K4 B D (except D1.2 10) सर्व एव ते (for °पार्थिवा)

52 K5 om 52 (cf v l 44) — $^c$) D8 4 9 सदो° (for सभा°) — $^d$) T G हेम्नी(T2 G2 °म्ने; G8 °म्ना)वोपचितो मणिः.

53 K5 om 53 (cf v l 44) — $^a$) M3 तत्र (for ततस्) D3 4.9 समासीरन् (for सर्वमासीद्) — $^b$) D8.4 9 °गतचेतस'; S °गतचेतनं (G4 °सं) — $^c$) D8 D2 T2 G2 transp कश्चित् and किंचित्. K4 B D (except D1 2 10) वा, G2 4 च (for हि) — $^d$) D7.10 (sup lin as in text) तदा, S मुदा (for पुमान्)

Colophon missing in K3 — *Sub-parvan* K1 4 5 B Dn Ds D3.5–8 10 T1 G1 M भगवद्यान — *Adhy name* D1 कृष्णस्य पुन सभागमनं, T2 भगवत' सभाप्रवेश, G1 M सभाप्रवेशः, G5 कृष्णसभाप्रवेश.. — *Adhy no.* (figures, words or both) D5 90, D6 85 (repeated), D7 M1–3.5 95, T G2 4.5 96, G1 97, G3 M4 94 — *S'loka no* Dn1 D8 53, Dn2 54.

## ९३

वैशंपायन उवाच ।
तेष्वासीनेषु सर्वेषु तूष्णींभूतेषु राजसु ।
वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः ॥ १
जीमूत इव घर्मान्ते सर्वां संश्रावयन्सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ २
कुरूणां पाण्डवानां च शमः स्यादिति भारत ।
अप्रयत्नेन वीराणामेतद्यतितुमागतः ॥ ३
राजन्नान्यत्प्रवक्तव्यं तव निःश्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिंदम ॥ ४
इदमद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥ ५
कृपानुकम्पा कारुण्यमानृशंस्यं च भारत ।
तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ॥ ६
तस्मिन्नेवंविधे राजन्कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ ७
त्वं हि वारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्या प्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ॥ ८
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ९
अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ भरतर्षभ ॥ १०
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ११
शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत ।

C. 5. 3335
B. 5. 95. 12
K. 5. 95. 12

---

**93**

☞ This adhy is missing in K8 (cf. v l. 5 32 15)

1 a) K2 5 T1 G4 5 आसनेषु (for आसी°) — d) T2 G2 देवदुंदुभिनिस्वन , G2 5 सुदंष्ट्रो भीमनिस्वन॰

2 b) D5 सर्वं, D6 G8 M8 सर्वान् (for सर्वां) K2 D1. 2 S (except G4) विश्रा(D1 °द्रा)वयन् (for सश्रा°) — d) K1. 2 समाभाष्य च, T1 समाभाषत (for समभा°) D7 समाभाष्य जनार्दन॰

3 Before 3, K1 4 Dn1 D7 10 श्रीभगवानुवाच, D8 4 5 9 भगवानुवाच (D2. 4 om इ°), T1 G1. 5 श्रीकृष्ण , T2 श्रीगोविंद॰ — c) K2 सुप्रयत्नेन, K4 B D (except D1 2 9) अप्रणाशेन (for अप्रयत्नेन) — d) K1 5 D2–4 9 T2 G2 3 वेदितुम्, B4 D8 याचितुम्, T1 G1 गदितुम्, G5 विदितुम् (for यतितुम्)

4 Before 4, M2–3 ins वासुदेव — a) S अद्य (for नान्यत्) D2–6 8 9 राजन्मयैव वक्तव्य — b) K4 B (except B5) D (except D1–4 9 10) नं श्रे° (for नि श्रे°) — c) B3 D1 7 तत् (for ते)

5 c) N (except D1, K8 missing) द्य (for अद्य) — b) K1. 2 5 B2 D7 10 भारत (for पार्थिव) S पृथिव्या सर्वराजसु — K4 (which om hapl 5c–6d) ins after 5ab

424* त्वन्निमित्त विशेषेण नेह युक्त विशिष्यते ।

6 K5 om 6 (cf v l 5) — c) K2 दानं (for सत्य) S सत्य क्षमा(G4 तितिक्षा चा)र्जव चैव — d) D5 T G1 2 5 एव, D2 एव (for एतद्) D8 4. 9 विभाव्यते, S विशेषत (for विशि°)

8 a) K2 D1 Ca d वारयता, K4 B2 4 Dn D10 धारयिता, G1 M4 पारयिता K5 त्व निवारयता श्रेष्ठ — c) D3 4 प्रचलतां — d) B2 D5 6 S (except G1 3 M1) अभ्यंतरेषु

9 a) B1 8 स्वत् ; B2 5 D5 D5 6 8 तत् (for ते) T1 G1 तव पुत्रास्तु कौरव्य — d) K1 D10 प्रचलंति

10 a) T G1 2 4 हृत° (for गत°) — b) K2 गतचेतस , D9 हृत°; T1 G1 आहृत° K1 B2 लोभोपह(B2 °हृ)तचेतस — d) T1 G8 विद्धि (for वेत्थ) B D (except D8 4 7 9) पुरुष° (for भरत°) G4 त्वमेतद्वेत्थ भारत

11 K5 om. 11–14 — a) M (except M1) सेय (for सेय) — b) K1 2 D1 2 10 भरतान् (K2 भवता, D2 भारतान्) प्रत्युपस्थिता; D3 4 9 T1 G1 4 कुरुष्वेवमुप(G4 °व व्यव)स्थिता, D7 भारतानामुपस्थिता — c) Some MSS उपेक्ष° T2 G1 3 उपेक्ष्यमाण — d) T G1 3 घातयिष्यसि.

12 K5 om 12 (of v l 11) — b) B4 D2 Cn न (Cnp त्व as in text) B4 D2 Cn दित्ससि (Cnp इच्छसि as in text) — c) K1. 2 T2 G1–3 M सुदुष्करो (for न दुष्करो) K1 2 T2 G2 4 M अपि (for हि) G5 दुष्करो॰

C. 5. 3395 B. 5. 95. 12 K. 5. 95. 12

न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥ १२
त्वय्यधीनः शमो राजन्मयि चैव विशां पते ।
पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ १३
आज्ञा तव हि राजेन्द्र कार्या पुत्रैः सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ १४
तव चैव हितं राजन्पाण्डवानामथो हितम् ।
शमे प्रयतमानस्य मम शासनकाङ्क्षिणाम् ॥ १५
स्वयं निष्कलमालक्ष्य संविधत्स्व विशां पते ।
सहभूतास्तु भरतास्तवैव स्युर्जनेश्वर ॥ १६
धर्मार्थयोस्तिष्ठ राजन्पाण्डवैरभिरक्षितः ।
न हि शक्यास्तथाभूता यत्नादपि नराधिप ॥ १७
न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ १८
यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ १९
सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः ।
युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा ॥ २०
सात्यकिश्च महातेजा युयुत्सुश्च महारथः ।
को नु तान्विपरीतात्मा युध्येत भरतर्षभ ॥ २१
लोकस्येश्वरतां भूयः शत्रुभिश्चाप्रधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ २२
तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते ।

---

ष्यत्र न शमो

13 K5 om 13 (cf. v.l. 11) — b) K4 D5 6 8 त्वयि (for मयि) — After 13ab, D7 ins

425* सहभूतास्त्वथैवैते सर्वनाशाय भारत ।

— c) B4 राजेंद्र (for कौरव्य) — d) K2 चापरान् (for अह परान्) — After 13, S (except G3 4) ins.

426* हित हि धार्तराष्ट्राणां पाण्डवानां तथा हितम् ।
शमे प्रयतमानाना तव शासनकाङ्क्षिणाम् ।
[ With line 2, of 5 90 10cd ]

14 K5 om. 14 (of v l 11) — D2-4 9 *repeat* 14ab after 21 — a) S अनुज्ञात (for आज्ञा तव) D5 7 8 transp तव and हि T2 G2 भगवता (for हि राजेन्द्र) D1 कौरव्य; T1 G1 3-5 M1 (*inf lin* ) भवता, M भवत· (for राजेन्द्र) — b) S सर्वै· (for कार्या) B1 3 5 D7 सहानुगैः (D7 °जै ), D3 4 9 सवाधवै — c) D3.4 9 वल यद् (for वलवद्)

15 G4 om 15a–17b. — a) D1 तथैव च (for तव चैव) D3 4 9 हि राजेंद्र (for हित राजन्) — b) K2 तथा, T2 ततो (for अथो) — M5 om 15cd — 15cd = (var ) 5 90 10cd — d) K (K3 om ) D (except D3 4) M2 तव (for मम) N T1 G1 °काङ्क्षिण

16 G4 om. 16 — a) D10 शम, C3 स्वय (as in text) K (K3 missing) B D2 5-8 10 Cap निष्फल (D5 *sup lin sec m* निश्चय), D1 लक्षणं, Ca d s निष्कलं (as in text) D3 4 9 स्वय निष्कलुप क्षत्र; S (G4 om ) तेषा (T2 G °पु) निष्कल्मषं राजन् — b) K1 D3 4 9 त्वं विधत्स्व, C3 सवि° (as in text) — c) K4 B D (except D1 7) सहायभूता , T2 G2 समाहूतास्तु, Ca d s सहभूतास्तु (as in text) Dn1 D5 T2 G2 3 भवता (for भरता.) — D5 om (? hapl ) 16d–17a — d) K1 3 D1 तथा, S सह (for तव) K5 D10 जनेश्वरा·, T1 G3 5 M जनाधिप; T2 G2 जनाधिपा·, G1 नराधिप

17 D5 om 17abc (cf. v l. 16), G4 om. 17ab — c) S °रूपा (for °भूता) D3.4 9 न हि शक्यस्तदा भूय· — d) K5 यमेनापि नराधिप, S युद्धे जेतु जना(T1 G1 2 नरा)धिप

18 a) T1 G5 M त्वा (for त्वां) K2 T1 G1 3 5 M जातु; G4 साधु (for जेतु)

19 a) K2 द्रोणश्च यत्र भीष्मश्च, T2 G2 4 यत्र भीष्म· स्ततो (G4 °था) द्रोण· — b) K5 विशां पते (for विविं°) K2 कर्णो कृपविविंशति — d) K2 D32 D3 4 9 च, G5 अपि (for अथ)

20 b) A few MSS कांभोज — d) S उभौ (for तथा)

21 After 21ab, D3 4 9 ins

427* को नु तान्युधि शत्रुघ्न सहितान्कुरुपाण्डवै· ।

— cd) D5 एतान्, Ca तान् (as in text) D3 4 9 परीतात्मा सुयुध्येत देवोपि भरतर्षभ, S तत्र युध्येत को राजञ्जीवितप्रेप्सुराहवे — After 21, D2-4 9 *repeat* 14ab.

22 K5 om. (hapl ) 22-39 — a) D3 m 4 9 प्राप्य (for भूय·) S गौरव सर्वराज्ञां हि (G3.5 च, M1[*inf lin.*] 2 तु) — b) K1 4 B D (except D3-5 9) T2 G2 M3-5 अप्यधृष्यता (for अप्र°) — cd) D3 4.9 प्राप्स्यसि स्व महाराज लोकेषु सुमहद्यश.

23 K5 om 23 (of v l 22) — a) D3 4 9 वश्यास् (for तस्य) — b) D3 च विशां पते (for पृथिवी°)

श्रेयांसश्चैव राजानः संधास्यन्ते परंतप ॥ २३
स त्वं पुत्रैश्च पौत्रैश्च भ्रातृभिः पितृभिस्तथा ।
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुम् ॥ २४
एतानेव पुरोधाय सत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ २५
एतर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥ २६
तैरेवोपार्जितां भूमिं भोक्ष्यसे च परंतप ।
यदि संपत्स्यसे पुत्रैः सहामात्यैर्नराधिप ॥ २७
संयुगे वै महाराज दृश्यते सुमहान्क्षयः ।
क्षये चोभयतो राजन्कं धर्ममनुपश्यसि ॥ २८
पाण्डवैर्निहतैः संख्ये पुत्रैर्वापि महाबलैः ।
यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ ॥ २९
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान्रक्ष महतो भयात् ॥ ३०
न पश्येम कुरून्सर्वान्पाण्डवांश्चैव संयुगे ।
क्षीणानुभयतः शूरान्रथेभ्यो रथिभिर्हतान् ॥ ३१
समवेताः पृथिव्यां हि राजानो राजसत्तम ।
अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ॥ ३२
त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषं स्यात्कुरुनन्दन ॥ ३३
शुक्ला वदान्या ह्रीमन्त आर्याः पुण्याभिजातयः ।
अन्योन्यसचिवा राजंस्तान्पाहि महतो भयात् ॥ ३४
शिवेनेमे भूमिपालाः समागम्य परस्परम् । — C. 5. 3418 B. 5. 94. 35 K. 5. 94. 35

---

24 K5 om. 24 (cf. v.l. 22) — b) K4 B D (except D7 9) transp भ्रातृभि and पितृभि — d) D1–4 6 प्राप्स्यसि, T2 G2 शक्ष्योसि (for शक्ष्यसि)

25 K5 om. 25 (cf v l 22) — b) T G1 3 M -पुर, G2 3 सुग्र (for पुरा) — c) G4 अनिश (for अखिला). K2 राजन्, D1 चेमा (for सर्वां)

26 K5 om. 26 (cf. v l 22) — a) T1 G1 च (for हि) G4 transp सहित॰ and सर्वै B1 3 Dn2 D2 T2 G2 सहितै — b) K2 पाण्डुपुत्रै॰ (for पाण्डवै स्वै॰) K1 Ds1 D2 7 8 चैव, D3 4 9 T1 G3 तैश्च (for स्वै॰) — c) K1. 2 D7 सर्वान् (for अन्यान्) S वाधिष्यसे (for विजे॰) — d) Dn1 D5 6 8 अर्थिन (for अखिल)

27 K5 om. 27 (cf v l. 22) — a) K1 D7 निर्जिता, D1 चार्जिता, S चार्जित (for उपार्जिता) T1 G5 भुङ्क्ष्व, T2 G2 भुङ्क्ते, G1 भुजे, G3 4 M भुङ्क्षे (for भूमिं) — D7 G3 om 27cd — c) K1 Ds2 D9 संपत्स्यते, D1 G5 सवत्स्यते, D2 सपृच्छसे, M1. 2 सधास्यसे, M3–5 सध-स्यसे, Ca सधित्ससे, Cs as in text S (except T1, G3 om ) राजन् (for पुत्रै ) — d) K1 D2 10 परंतप; B2 जनेश्वर, D3 4 9 अरिंदम (for नराधिप) S (except T1, G3 om ) पाण्डवैश्च परंतप

28 K5 om 28 (cf v l 22) — a) Dn1 D3. 4 9 T2 G2 च, M तु (for वै) G4 अभयोगे महाराज — b) K2 तु महान्, D3 4 9 अत्र महा , T G2 4 M वै महान्, G3 5 च महान् (for सुमहान्) — c) K2 हि जगतो; D1 चोभयतो, D5 6 नोभयतो Cs cites उभयो — d) D3. 4 9 क धर्मं समनुपश्यसि

29 K5 om. 29 (cf. v l 22) — a) D5 विजितै , B3 D1. 4–6 8 9 G4 M1 3 4 निहत॰, D10 हि हतै , Cs विजित (for निहतै ) — b) K1 D7 G3 5 M2 च, Cs वा (as in text)

30 K5 (cf. v.l. 22) T2 G2 om 30 In Dn2, the portion from 30 up to the end of stanza 33 of the next adhy is lost on a missing fol (86) — a) K4 D1 2 एव, G4 अपि (for हि) D6 7 कृतार्था (for कृतास्त्रा ) — b) D2 G4 सर्वे युद्धाभिनन्दिन — d) D3. 4 9 स्वान् (for तान्) S (T2 G2 om.) पाहि (for रक्ष)

31 K5 om 31, Dn2 missing (cf v l. 22, 30), K4 om 31a–32b — d) B1 Dn1 D3 4 9. 10 रथिनो (for रथेभ्यो)

32 K5 om 32, Dn2 missing, K4 om 32ab (cf. v l 22, 30, 31) — a) D4–6 8 पृथिव्या D4 9 नु, T1 वा (for हि)

33 K5 om 33, Dn2 missing (cf. v.l. 22, 30), K1 D1 T1 G3 om (hapl ) 33ab D8 transp 33ab and 33cd — a) Ds2 S (T1 G3 om ) इमान् लोकान् (for इमं लोकं) — d) K2 D3 10 (sup lin.) शम , B3 5 D3 4 7 9 T2 G3–5 शेषं , D6 दोष (for शेषं) K2 कुरुभि सह, D5 D2 T2 G2 कुरुसत्तम

34 K5 om 34, Dn2 missing (cf v.l. 22, 30) — a) B2 शूरा, D2 श्लक्ष्णा, D3 4 8 9 शक्ता (for शुक्ला) — c) D3 m 8 4. 9 पुत्रान्सचिवान्राजन् — d) D2–4. 9 स्व (for तान्)

C. 5. 3418
B. 5. 94 35
K. 5. 94 35

सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ३५
सुवाससः स्रग्विणश्च सत्कृत्य भरतर्षभ ।
अमर्षांश्च निराकृत्य वैराणि च परंतप ॥ ३६
हार्दं यत्पाण्डवेष्वासीत्प्राप्तेऽस्मिन्नायुषः क्षये ।
तदेव ते भवत्वद्य शश्वच्च भरतर्षभ ॥ ३७
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान्पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ३८
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ३९
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च ।
भवतः शासनाद्दुःखमनुभूतं सहानुगैः ॥ ४०
द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः ।
त्रयोदशं तथाज्ञातैः सजने परिवत्सरम् ॥ ४१
स्थाता नः समये तस्मिन्पितेति कृतनिश्चयाः ।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ४२
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं संक्लेशिता राजन्स्वराज्यांशं लभेमहि ॥ ४३
त्वं धर्ममर्थं युञ्जानः सम्यङ्नस्त्रातुमर्हसि ।
गुरुत्वं भवति प्रेक्ष्य बहून्क्लेशांस्तितिक्ष्महे ॥ ४४
स भवान्मातृपितृवदस्मासु प्रतिपद्यताम् ।

---

35 K5 om 35, Dn2 missing (cf. v l 22, 30) — a) K1 D7.10 सात्त्वेन, T1 G1 3-5 M सुखेन; Ca d शिवेन (as in text) T2 G2 सुखेन भूमिपालास्ते — b) S परिष्वज्य (for समा°) — d) K1.2 D1 10 यथागृहान्; T2 G2 यथागत.

36 K5 om 36, Dn2 missing (cf. v l 22, 30) — b) K4 B D (except D1.2, Dn2 missing) सत्कृता· (for सत्कृत्य) — c) K4 B4 D (except D7.10, Dn2 missing) G4 अमर्षं

37 K5 om. 37, Dn2 missing (cf. v.l 22, 30). — b) S नागसाह्वये, Ca d.5 आयुष· क्षये (as in text) — d) K2 D1 3.9 T2 G2 यदाश्च, K4 B2 4.5 Dn1 D5 D3-8 10 संघस्त्व (for शश्वच्च)

38 K5 om. 38, Dn2 missing (cf. v l 22, 30), D1 T1 om (hapl.) 38-39. — a) K1 D7 10 त्वयैव रक्षिता बालाः — b) K2 परिरक्षिता· — d) K2 B (except B2) D5 मनुजेश्वर (for भरत°)

39 K5 D1 T1 om 39, Dn2 missing (cf. v l. 22, 38, 30). — a) K1 2 D2-4 10 अभि· (for हि) S (T1 om ) transp रक्ष्या· and ते — c) K1 D2-4 न (for मा)

40 Dn2 missing (cf v.l 30) — a) G5 M1 3.4 त्वा (for स्वा) — b) K1 प्रणम्य, B2 4 Ds2 °पद्य (for °साद्य) — c) K2 वचनाद् (for शासनाद्) — d) T2 G3-5 सहानुजैः

41 Dn2 missing (cf. v l. 30) — b) T G निरु पितानि (for निर्व्यु°) K1 2 5 D7 10 वने निर्व्युपिता वय, D5 4.9 वने निर्व्युपिताश्चिरं — c) S त्रयोदशास् K1 D2 च सजने, K2 D1 च सजने, D3 4 9 च स्वजनै (for तथाज्ञातै) — d) K1 अज्ञाता, K2 D1.2 अज्ञातैः; D3 4 9 ह्यज्ञाता (for सजने). S उषित परिवत्सर·

42 =(var ) 5 70 10. — Dn2 missing (cf. v l 30). — a) K1.5 D1 2 7 10 स्थिता· स्म, K2 स्थितं च, K4 स्थाता स्म; B3 D3 4 9 स्थाता व·, T G2 4 स्थापिता·; G3.5 स्थातार·, C3 स्थितानां (for स्थाता नः) K2 अस्माभि; D7 नित्य (for तस्मिन्) — b) D2-4 9 पितुस्ते, T G4 5 पित्रेति (for पितेति) — c) D2 9 न जहु·, D3.4 न जहु; T1 G1 तीर्णा. स्म, Ca नाहास्म (as in text) G4 राजन् (for तात)

43 Dn2 missing (cf. v l 30) — a) B3 व, T2 G2 हि (for न ) — T2 G2 om 43c-45b — d) K1 D7 स्वराज्य च; K2 निज राज्यं, D2-4 स्वराज्य स·, G3.5 राज्यांश च (for स्वराज्यांश) — After 43, G4 reads 47c-48b, *repeating* the lines in their proper place

44 Dn2 missing, T2 G2 om 44 (cf v.l 30, 43); G4 om 44ab. — a) G3 5 M तान् (for त्वं) K1 2 D1 युजानान्; K4 B (except B3) Dn1 D5 D5 6 8 10 संजानन् (for युञ्जान.) D3.4 9 त्वं धर्ममय जानासि, T1 G1 धर्ममर्थं च युजान. — b) D5.6 8 सपत्न· स्यातुमर्हसि· — D1 om 44c-45d — c) K1 तव सं·, K2 D7 त्वयि स·, G5 भवत. (for भवति) — d) S (T2 G2 om ) सह्य(T1 G1 क्षमा)महे (for तिति°)

45 Dn2 missing, D1 om. 45, T2 G2 om. 45ab (cf v l 30, 44, 43) — a) B2 पितृमातृवत् (by transp ) — K5 om from 45b up to the end of this adhy. — c) K1.2 D2-4 9 गुरोर्गरीयसीं वृत्तिं — d) T G (except G3) स्यात् (for या) S (except G3) चेत् (for च) K1 2 अव(K2 °नु)तिष्ठस्व भारत, D2-4 9 यावच्छिप्यसि भारत — After 45, K4 B D (except D1, D2 10 both marg , Dn2 missing) ins..

गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ ४५
पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः ।
संस्थापय पथिष्वस्मांस्तिष्ठ राजन्स्ववर्त्मनि ॥ ४६
आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ ।
धर्मज्ञेषु सभासत्सु नेह युक्तमसांप्रतम् ॥ ४७
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ ४८
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ।
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ४९
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ।
ते सत्यमाहुर्धर्मं च न्याय्यं च भरतर्षभ ॥ ५०
शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर ।
ब्रुवन्तु वा महीपालाः सभायां ये समासते ।
धर्मार्थौ संप्रधार्यैव यदि सत्यं ब्रवीम्यहम् ॥ ५१
प्रमुञ्चेमान्मृत्युपाशात्क्षत्रियान्क्षत्रियर्षभ ।
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ॥ ५२
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान्परंतप ॥ ५३
अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा ।
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ॥ ५४
दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ।
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ॥ ५५
स तत्र निवसन्सर्वान्वशमानीय पार्थिवान् ।
त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्तत ॥ ५६
तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता । C. 5 3441 B. 5. 93. 53 K. 5. 93. 53

---

428* धर्मान्नद्दे त्वयि च तां ग्न च वर्तस्व नत्वया ।

46 $K_3$ om. 46, $Dn_2$ missing (cf. v.l. 45, 30) — a) $K_2$ पुत्रा (for पित्रा) — b) $K_1$ S (except $G_1$ $M_2$) स्थिता (for आस्थिता) — c) $D_6$ त्वं ह्यस्मास्तु; $T_2$ $G_2$ प्रतिष्ठा ता (for पथिष्वस्मान्) — d) $K_{2.4}$ B D (except $D_{1.7}$, $Dn_2$ missing) धर्मे (for राजन्) B सुवर्त्मनि, $D_6$ $M_{2.4}$ स्ववेश्मनि

47 $K_3$ om. 47, $Dn_2$ missing (cf. v.l. 45, 30) — a) $D_{2.4.9}$ पुत्रां, S इमा (for इमां) S परिषद°, $C_3$ as in text — $G_4$ reads 47c–48b (for the first time) after 43

48 $K_3$ om. 48, $Dn_2$ missing (cf. v.l. 45, 30) For $G_4$ cf. v.l. 47 — $D_{1.6}$ om. (hapl.) 48b–49a

49 $K_3$ om. 49, $Dn_2$ missing, $D_6$ om. 49a (cf. v.l. 45, 30, 48), $D_{12}$ om. 49 — a) $T_1$ $G_{1.4}$ transp. विद्धो and धर्मो — b) $G_2$ $M_2$ सभा $T_1$ $G_{1.4.5}$ उपपद्यते, $M_2$ प्रवर्तते (for प्रपद्यते) — d) $D_1$ हता° (for विद्धा°)

50 $K_3$ om. 50, $Dn_2$ missing (cf. v.l. 45, 30) — a) $T_2$ $G_2$ अनुपश्यति — c) $K_4$ B $D_{2-4.7.10}$ धर्म्यं, $C_4$ धर्मं (as in text) $K_1$ $D_2$ धर्मज्ञा (for धर्मं च) $Dn_1$ सत्यमाहुश्च धर्मं च — d) $K_{1.2}$ $D_{1.2.9}$ T $G_{2.3}$ $M_1$ न्याय

51 $K_3$ om. 51, $Dn_2$ missing (cf. v.l. 45, 30) — b) $K_2$ $T_1$ $G_{1.4}$ M (except $M_1$) नरे° (for जने°) — c) $T_2$ $G_2$ शृण्वन्तु, $C_3$ ब्रुवन्तु (as in text) $B_4$ $D_{2.10}$ ते (for वा) — d) $K_2$ $D_{1-4.9}$ $G_{3.5}$ समागता° (for समासते) $D_7$ त्वयि (for यदि)

52 $K_3$ om. 52, $Dn_2$ missing (cf. v.l. 45, 30) — a) $D_{2-4.8.9}$ प्रमुच्य (for °मुञ्च) — b) $K_2$ $D_3$ $D_{1-4.8.9}$ $G_3$ भरत°, $K_4$ B $Dn_1$ $D_{5.6}$ पुरुष° (for क्षत्रिय°) — d) $K_2$ $D_{2-4.9}$ मृत्यु° (for मन्यु°)

53 $K_3$ om. 53, $Dn_2$ missing (cf. v.l. 45, 30) — a) $K_2$ प्रदाय स्व (for °यांश) — c) $K_2$ सिद्धार्थो ज्ञातिसहित°

54 $K_3$ om. 54, $Dn_2$ missing (cf. v.l. 45, 30) — d) $T_2$ $G_2$ यो (for या)

55 $K_3$ om. 55, $Dn_2$ missing (cf. v.l. 45, 30) — a) S द्रोहित, $C_{a.d}$ दाहित (as in text) — b) $K_1$ $D_{1.7.10}$ अपाश्रित, $D_{2.4.9}$ उपस्थित; $T_1$ एव श्रित; $T_2$ $G_2$ अद्य श्रित°, $G_{1.3-5}$ M इहाश्रित (for उपाश्रित) $K_2$ स त्वामेवाश्रित पुन — c) $K_2$ $D_2$ S इन्द्रप्रस्थे

56 $K_3$ om. 56, $Dn_2$ missing (cf. v.l. 45, 30) — a) $D_6$ $T_2$ G पुत्र (for तत्र) $B_{1.3}$ $D_3$ विवसन् (for निव°) — b) $D_5$ समानीय च पार्थिवान् — d) T $G_{1.2}$ त्वा, M (except $M_1$) त्वत् (for त्वाम्) $B_{1-3}$ $D_4$ अभ्यवर्तत, $T_1$ $G_{1.3-5}$ $M_1$ मोत्यवर्तत, $T_2$ $G_2$ $M_{2-5}$ स न्यवर्तत; $C_a$ अत्य° (as in text)

57 $K_3$ om. 57, $Dn_2$ missing (cf. v.l. 45, 30) — a) $B_{2.3}$ अस्य (for तस्य) — b) T G जिगीषता (for जिही°) — $D_1$ om. (hapl.) 57d–59a — d) $K_1$ प्रयुक्तवा, $K_2$ प्रयुक्त, $Dn_1$ सयुक्त, $D_5$ प्रमुक्त°; $G_{1.4}$ प्रलुप्त

C. 5. 3442 B. 5. 65. 59 K. 5. 66. 58

राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ॥ ५७
स तामवस्थां संप्राप्य कृष्णां प्रेक्ष्य सभागताम् ।
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ॥ ५८
अहं तु तव तेषां च श्रेय इच्छामि भारत ।
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ॥ ५९
अनर्थमर्थं मन्वाना अर्थं वानर्थमात्मनः ।
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशां पते ॥ ६०
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परंतप ॥ ६१
तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ६२

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## ९४

वैशंपायन उवाच ।
तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन्सर्वे सभासदः ॥ १
कः स्विदुत्तरमेतस्माद्वक्तुमुत्सहते पुमान् ।
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ॥ २
तथा तेषु च सर्वेषु तूष्णींभूतेषु राजसु ।

---

(for प्रयुक्त ) K2 परमे पथि, Dn1 G4 परमोपधि°, D6.7 T2 G2.3 M4 परमो विधि , G1 M2 3 5 परमोवधि , Ca n s परमोपधि (as in text) Cd cites उपधिः

58 K5 D1 om 58, Dn2 missing (cf v.l 45, 57, 30) — a) G3.5 °प्रेक्ष्य (for °प्राप्य) — b) K2 दृष्ट्वा कृष्णा (for कृष्णां प्रेक्ष्य) B3 5 M3-5 सभां गता.

59 K5 om 59, Dn2 missing, D1 om. 59a (cf v.l 45, 30, 57). — a) K1 2 च (for तु), and K2 तु (for च) — d) D3 T G2 नीनशु°, G1.3-5 M (except M1) विनशु°, Ca नीनशः (as in text).

60 K5 om 60, Dn2 missing (cf v.l. 45, 30). — ab) K1 M4 मन्वाना, K4 B D (Dn2 missing) °न (D1 °नान्); T G5 M1.2 5 °नान् (for °ना) K4 B Dn1 D5 D3 5.6 8.10 अप्यर्थं, D2 4.9 ह्यर्थं; T G2 स्वार्थं; G1 3 4 M1 त्वर्थं (for अर्थं) K1 4 B D (except D9 10, Dn2 missing) T2 G2 3 च (for वा) D5 सुखम् (for अनर्थम्) G5 स्वार्थिनोनर्थमात्मन° — c) K1 D5 लोभविप्रसृतान्, K2 D2-4.9 लोभेन प्रसृ°, D5.6 लोभेभिप्र°, T1 G1 लोभातिप्र° — d) D3.4 9 प्रगृह्णस्व, Cs निगृह्णीयात् K2 नराधिप, D1 परतप (for विशां पते)

61 K5 om 61, Dn2 missing (cf v l. 45, 30) — a) T1 पथ्य तु तं, G1 पथ्य मत, G5 पथ्यतर

62 K5 om. 62, Dn2 missing (cf v l 45, 30) — Before 62, Dn1 T2 G2 ins वैश° उ° (resp वैश°) — b) K2 B2 हृदये (for °यै ) — D5 om 62cd. — c) D1 वाच (for कश्चिद्) — d) K2 वाच., D1 कश्चित्, D2-4 9 वाक्य (for वाचं) T1 G1.5 प्राक्रमत; T2 प्रक्रमते, M प्राक्रामत (for प्राक्रामद्). K2 अच्युते (for अग्रत ) — After 62, M3-5 read stanzas 1-2 of the next adhy.

Colophon missing in K3 Dn2, K5 om it. — *Sub-parvan* K1 2 4 B Dn1 D5 D2 5-8 10 G1 M भगवद्यान — *Adhy. name* T G1 2 वासुदेववाक्य, G4 सदेशकथन; M संदेशा(M3 °शता)र्थकथन — *Adhy no.* (figures, words or both) D5 91; D6 88, D7 M1-3.5 96, T G2 4 5 97, G1 98, G3 M4 95. — *S'loka no.* Dn1 63, D3 51

## 94

☞ This adhy is missing in K3 (cf. v l 5 32 15) For the lacuna in Dn2 (which is missing up to st 33 of this adhy ), cf v l 5 93 30, the MS is mostly ignored up to the end of the lacuna

2 For M3-5 of v l 5 93 62 — a) G5 किंस्विद्; M क स्विद् (as in text), the rest कश्चिद् D2 4 9 नोत्तरम् (for उत्तरम्). K4 5 B Dn1 D5 D3-10 T2 G4 एतेषां, D2 T2 (inf lin ) एतस्य (for एतस्माद्). — b) G5 दातुम् (for वक्तुम्). N (except K1. 2 D1, K3 Dn2 missing) नोत्सहते (for उत्सहते).

जामदग्न्य इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ३
इमामेकोपमां राजञ्शृणु सत्यामशङ्कितः ।
तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ॥ ४
राजा दम्भोद्भवो नाम सार्वभौमः पुराभवत् ।
अखिलां बुभुजे सर्वां पृथिवीमिति नः श्रुतम् ॥ ५
स स नित्यं निशापाये प्रातरुत्थाय वीर्यवान् ।
ब्राह्मणान्क्षत्रियांश्चैव पृच्छन्नास्ते महारथः ॥ ६
अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि ।
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वापि शस्त्रभृत् ॥ ७
इति ब्रुवन्नन्वचरत्स राजा पृथिवीमिमाम् ।
दर्पेण महता मत्तः कंचिदन्यमचिन्तयन् ॥ ८
तं स वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः ।
प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ९
प्रतिषिध्यमानोऽप्यसकृत्पृच्छत्येव स वै द्विजान् ।
अभिमानी श्रिया मत्तस्तमूचुर्ब्राह्मणास्तदा ॥ १०
तपस्विनो महात्मानो वेदव्रतसमन्विताः ।
उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ११
अनेकजननं सख्यं ययोः पुरुषसिंहयोः ।
तयोस्त्वं न समो राजन्भवितासि कदाचन ॥ १२
एवमुक्तः स राजा तु पुनः पप्रच्छ तान्द्विजान् ।
क्व तौ वीरौ क्वजन्मानौ किंकर्माणौ च कौ च तौ ॥ १३

ब्राह्मणा ऊचुः ।

नरो नारायणश्चैव तापसाविति नः श्रुतम् ।
आयातौ मानुषे लोके ताभ्यां युध्यस्व पार्थिव ॥ १४ C. 5. 3451 B. 5. 96. 14 K. 5. 95. 14

---

3 a) S तु तेषु (G3-5 कृतेषु) (for तेषु च) K2 तु (for च)

4 Before 4, T2 G1 ins जामदग्न्य (T2 °ग्नि), G2 परशुराम — a) T2 इष्टाम् (for इमाम्) K1 2 5 D1. 2 मेवोपमा, K4 B (except B2) Dn1 Ds D3 4 6–10 मे सोपमां (for एको°) N (except K2, K3 Dn2 missing) T2 (inf. lin.) G2 वाच (for राजन्) — b) K1. 5 D7 राजन्, D2 (by corr.) 4 सम्याम्, T1 G3. 4 सत्यम् (for सत्याम्) K1. 5 D7 न शकित, K2 T2 G3 अशाकितां — c) K1. 5 D1 7 8 T1 G (except G1) आधत्स्व.

5 a) S (mostly) दम्भो° — c) K1 D1 य इमा, K2 सोखिला (for अखिला) K2 राजन् (for सर्वां)

6 a) B3 शाश्वत्, T1 G1. 2 4 स वै (for स स) — c) S (except G4) वैश्यान् (for चैव) — d) K2 परतप, D2 महाभुज

7 a) S (except G2) मद्विशिष्ट (for विशिष्टो वा) — b) S मत्समो (for मद्विधो) B3 Ds G2 वाभवद्. K5 क्वचित् (for युधि)

8 a) G3 5 ब्रुवाण (for ब्रुवन्) B2 D1 2 (by corr.) 5 8 अनुचर(D1 °रा)न् (for अन्वचरत्) — c) T G (except G2) आविष्ट (for मत्त) — d) Ds2 T2 G2 M4 किंचिद् D1 नान्यम् (for अन्यम्) D1 अचिंतयत् K2 नैव चान्यदचिंतयत्, K5 न किंचिदवाचिंतयन्

9 a) K4 B2 4 5 D (except D1 2 7, Dn2 missing) G3 च (for स) B2 5 M2 Ca सुकृपणा, T2 ह्यकृपणा; M2-4 स्वकृपणा — b) K1 अकुतोभया, Ds D5 6 T2 M3-5 सर्वतोभयात्

10 a) Hypermetric! N (except B1. 3 D1, K3 Dn2 missing) M1 नि° (for प्रति°) — b) D1 पुन, T2 G3 सदा (for स वै) D1 पुन (for द्विजान्) — B2 om. (hapl.) 10c–13b — c) K2 अतिमानिनमुन्मत्त, K4 5 B (B2 om.) D (except D1, Dn2 missing) अतिमान श्रिया मत्त

11 B2 om. 11 (cf. v.l. 10) — b) B4 Cn वेदप्रत्ययदर्शिन (Dn1 as in text!), Ds वेदव्रतसमाश्रिता, D2 वेदवेदांगपारगा — After 11, D5 (marg. sec. m.) 8 ins.:

429* तपस्विनौ महात्मानौ वेदप्रत्ययदर्शकौ ।

12 B2 om. 12 (cf. v.l. 10) — a) K4 B (B2 om.) Dn1 D2–6 9 Cap अनेकजयिनौ, T2 G2 °जन्मक, Ca °जननौ, Cd. s °जनन (as in text) K4 B (B2 om.) Dn1 D1. 5 6 9 सख्ये, D2-4 सख्यौ, Cs सख्य (as in text) — b) K4 B (B2 om.) Dn1 D2 (marg. sec. m.) 3–6 9 यौ वै पुरुषसत्तमौ — c) S युद्धे (for राजन्) — d) K5 B3 5 D7 10 कथ° (for कदा°)

13 B2 om. 13ab (cf. v.l. 10) — a) T1 G1 4 वै (for तु) — b) S पृच्छत्येव (T1 G1. 4 प्रत्युवाच) द्विजोत्तमान् — c) T1 G1 4 क्वजननौ (for °जन्मानौ)

14 S transp. 14 and 15 D6 9 ब्राह्मण ऊ°; G2 द्विजा, G4 M3-5 ब्राह्मणा — c) S अजातौ (for आयातौ) K1 2 D1 2 मानुष लोक — d) Ca आभ्या B3 5 Ca भारत (Cap पार्थिव as in text) S ताभ्या विहर सयुगे

महाभोगा महाकायाः पर्वताभोगभोगिनः ॥ ७
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
नागानामेकवंशानां यथाश्रेष्ठांस्तु मे शृणु ॥ ८
वासुकिस्तक्षकश्चैव कर्कोटकधनंजयौ ।
कालीयो नहुषश्चैव कम्बलाश्वतरावुभौ ॥ ९
बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः ।
वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा ॥ १०
आर्यको नन्दकश्चैव तथा कलशपोतकौ ।
कैलासकः पिञ्जरको नागश्चैरावतस्तथा ॥ ११
सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ ।
आप्तः कोटनकश्चैव शिखी निष्ठूरिकस्तथा ॥ १२
तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः ।
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥ १३
करवीरः पीठरकः संवृत्तो वृत्त एव च ।
पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः ॥ १४
दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः । C. 5. 631 B. 5. 103. 15 K. 5. 103. 15

— $^{c}$) K2 D7 transp °भोगा and °काया K5 D10 महाभागा, T1 G1.4 भोगिनो वै, G2 महाबला (for °भोगा) T2 G3.5 M महाकाया महाभागा — $^{d}$) S पन्नगाभोग°, Ca d पताकाभोग°, Cs as in text

8 $^{a}$) K2 T1 G1.4 च, K5 अपि, M2 हि (for इह) — $^{b}$)=1 31 18$^{b}$, 47 23$^{b}$, 52 2$^{b}$, etc — $^{c}$) K1.2.5 D7.10 नै(K2 चै, K5 ए)कमरव्याना, K4 B2.5 D1–4 G3.5 M1.3.4 एकवद्याना, D8 नैकवशाना (for एकव°) — $^{d}$) K2 यथामुख्यान्, K4.5 B D यथाश्रेष्ठ (D1.10 °श्रैष्ट्र), G3.4 यथाश्रेष्ठा D2–4.8.9 च (for तु)

9 $^{b}$)=1 31 5$^{d}$ Some S MSS कार्कोटक° — D6 om 9$^{cd}$, T2 om. 9$^{e}$–16$^{d}$ — $^{e}$) K1.2.4 D5 D6 G3 M कालियो, K5 T1 काल्यो, D1 कालेयो, D2.10 कालिको D7 निमुसश्चैव — D1 G2 om (hapl ) 9$^{d}$–11$^{a}$ — $^{d}$)=(var ) 1 31 10$^{a}$

10 D1 T2 G2 om 10 (cf. v.l 9) — $^{a}$) K1 बाह्यकुमो, K2 बाप्पकुडो, D5 बाह्यदत्तो, D2 (before corr ) °कर्णो, D2m.3.4.9 राजकुंडो, D5.6.8 वाह्यदडो, S (T2 G2 om ) व(T1 G1.4 वा)हुकुंडो T1 G1.4 महानाग — $^{b}$) T1 G1.4 आभूषण (for आपूरण ) D3.4.9 च स (for खग ) K3 resumes! — $^{c}$) K1.5 D6 M4 एव पत्र, G5 M1(inf lin ) 8 एलापत्र G4 पवमानश्चेलपत्र — $^{d}$) K5 कुर्कुट, D2 कुरक, D3.4.9 कुक्कुर, G3 कुकुर, G4 कुकुर, M3.8 कक्कुर (for कुकुर ) K1.5 करण°, K2 G5 M2 करण°, D2 कुक्षिण°, D3.4.9 कुकुण°, D5.8 कुंकुण°; D10 करणि°, T1 G1.4 कुणक°, G3 कुरण° (for कुकुण°)

11 T2 om 11, D1 G2 om 11$^{a}$ (cf v l 9) — $^{b}$) Cf v l 1 31 7$^{d}$ D1.8 कलशपू(D8 °पौ)तकौ, T1 G1.2 M4 (inf lin ) शलकपोतकौ, G3.5 M1.3.5 लदाक°, G4 गलकपोलक, M1 शकलपोतकौ B5 महाकलशपातकौ K5 om. 11$^{e}$–16$^{d}$ — $^{e}$) A few MSS कैलाशक.. K2 D9 पिंढरक, B2 पुज°, B5 G4 पज°, M3 (inf lin ) पिंजलक

12 K5 D9 (hapl.) T2 om. 12 (cf. v.l 11, 9) — $^{a}$)=1 31 8$^{a}$ Hypermetric! K1 ज्वालामुखो, K2 सुमनास्यो, B3 अलामुखो, D5 D1.6 सुमना°, D2.8 शुना°; D5 सुना°, D7.10 सूना°, G1.2 corrupt, G4 M3–5 मनो° — $^{b}$) Cf 1 108 5$^{d}$ — $^{c}$)=1 31 8$^{c}$ K4 B (except B2) Dn2 D2–5.10 (sup lin ) T1 G3 M1.2.4 कोटरक°, D1 कर्कोटक°, D7 काटनख°, D8 कोंटरक°, M3.5 कोटकन° — $^{d}$) D1 शिशि, D8 शिवि (for शिखी) K1 D1.7.8.10 निष्ठुरक°, K3 B1.5 निष्ठुरिक°, K4 Dn D6 निष्ठूरि(D6 °र)क°, B1–3 D5 D2–4 निष्टू(D3 °स्ता, D3.4 °श्रू)रक°, D5 नीष्ठुरक° T1 G शिखंडी निष्ठुर(T1 °ष्ठर, G5 °ष्टन)स्तथा, M शिखंडी निष्क(M3 °ष्टु)रिस्तथा

13 K5 T2 om 13 (cf. v l 11, 9) — $^{a}$) K1 D3.4.7.9.10 तित्तिलिर्, G1.2.5 तित्तिरी K1 D1.2.7.9.10 हस्तभद्र°, K2 भद्रहस्त°, B (except B1) D10 (sup lin ) G5 हरिभद्र° — $^{b}$) T1 G1.4 °पीडक (for °पिण्डक ) — $^{c}$) Cf. 1 31 10$^{d}$ K1 D10m द्विपिंग, K2.3 द्विपिंड (for द्वौ पद्मौ) — $^{d}$) K4 मुद्गरवर्णक, B2.5 मुकुरपर्णक, D2 मुद्गर एव च, D5.6 °जतुक, D7.10 °वर्णिक G2.5 M2–5 पुष्पमुद्गि(G2 M2 °मुद्ग ; G5 °मका)रवर्णक, G3 M1 पुष्पमुद्गरपर्णक

14 K5 T2 om. 14 (cf v l 11, 9) — $^{a}$) K (K5 om ) Dn1 Ds1 D2.6.7.10 T1 पिठरक, D1 पठिरकि, G2 M3.4(inf lin as in text) 5 पीठकर, G5 पीठरत्त — $^{b}$) K3 Dn1 सवृतो, D1 T1 G1.4.5 सुवृत्तो K1 वृत्तकस्तथा, K2.3 दृढ एव च — $^{c}$) K1–3 D1.10 पिंढारो, B3 T1 G1.4 M2 पिंडको, D8 पौंडिरो, G2.3 M1 (inf lin ) पिंडरो; G5 वधको, M1 पिजरो D8 विट्ठपत्र°, S (T2 om ) बिल्वनेत्र° — $^{d}$) A few MS मूषका°

15 K5 T2 om. 15 (cf v.l 11, 9) — $^{a}$) T1 G6 दिलिप, G3.4 M3–4 शिली(G4 M3 °लि)प (for दिलीप ) D7 शश° (for शङ्ख°) — $^{b}$) Cf. 1 31 13$^{a}$ K2.3

C. 5. 3681
B. 5. 103. 15
K. 5. 103. 15

कौरव्यो धृतराष्ट्रश्च कुमारः कुशकस्तथा ॥ १५
विरजा धारणश्चैव सुबाहुर्मुखरो जयः ।
बधिरान्धौ विकुण्डश्च विरसः सुरसस्तथा ॥ १६
एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः ।
मातले पश्य यद्यत्र कश्चित्ते रोचते वरः ॥ १७

कण्व उवाच ।

मातलिस्त्वेकमव्यग्रः सततं संनिरीक्ष्य वै ।
पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् ॥ १८
स्थितो य एष पुरतः कौरव्यस्यार्यकस्य च ।
द्युतिमान्दर्शनीयश्च कस्यैष कुलनन्दनः ॥ १९
कः पिता जननी चास्य कतमस्यैष भोगिनः ।
वंशस्य कस्यैष महान्केतुभूत इव स्थितः ॥ २०
प्रणिधानेन धैर्येण रूपेण वयसा च मे ।
मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः ॥ २१
मातलिं प्रीतमनसं दृष्ट्वा सुमुखदर्शनात् ।
निवेदयामास तदा माहात्म्यं जन्म कर्म च ॥ २२
ऐरावतकुले जातः सुमुखो नाम नागराट् ।
आर्यकस्य मतः पौत्रो दौहित्रो वामनस्य च ॥ २३
एतस्य हि पिता नागश्चिकुरो नाम मातले ।
नचिराद्वैनतेयेन पञ्चत्वमुपपादितः ॥ २४
ततोऽब्रवीत्प्रीतमना मातलिर्नारदं वचः ।
एष मे रुचितस्तात जामाता भुजगोत्तमः ॥ २५
क्रियतामत्र यत्नो हि प्रीतिमानस्म्यनेन वै ।
अस्य नागपतेर्दातुं प्रियां दुहितरं मुने ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

दीतिको, D7 वाह्लीको (for ज्योतिष्को) T1 G1.4 च (for अथ) K3 M3.5 पराजित॰ (for अपरा॰) — c) = 1. 31. 13c — d) K4 B D (except D1) कुह(B4 D6 कुहु॰, D3 कुत)र॰ (for कुमार॰) K1.3.5 D2 (by corr.) 3.4.8–10 कुशय॰, K4 B1.2.5 Dn D5 D6 कृशक॰, D1 कुहर॰, D5 कृशर॰, D7 M कुशिक॰, G3 कुलुश॰ (for कुशक॰).

16 K5 T2 om. 16 (cf. v. l. 11, 9). — a) K1–3 D10 M3 विराजो, T1 G M4.5 विरजो (M4 inf. lin. ॰गो) (for विरजा). K1–3 गरण॰, D1 च रय॰ (for धारण॰). — c) K2 बधिराक्षो, D5 D8.4.7–9 व(D8 रु)धिराधो, D2 विधिरोधो, D6.6 रुधिरार्थो, S (T2 om.) बधिरश्च (for ॰रान्धौ). K3 विकुडि., K4 B2.5 Dn D6 विशुद्धिः; B1.3.4 D3–5.9 वि(D3.4.9 रु)गुंडिः, D5 D8 विगुठि (D8 ॰ढी), D1 च कुष्टी, D2 च कुठि, G3.5 चिकर्णः (for विकुण्ड॰). — d) S (T2 om.) विरथ॰ (G3 विरद॰). T1 G1.2.5 M (except M2) सुरथ॰, G3 सुरद॰.

17 a) T2 इत्यादिनागमुख्याश्च — b) K5 S काश्यपस्या॰.

18 B Dn1 D3 D1.5.6 T1 om. the ref. — a) K4 B Dn D3 D1.5.6 G4 एकम् (as in text), the rest एवम्. K (except K4) D3.4.7–10 उक्तस्तु, D2 अप्यत्र, T1 G1.4 अव्यग्र. — b) D2 G2 पुरत॰, T G1.3.4 M (except M2) प्रतत (for स॰). T1 G1.4 सु (for स), and च (for वै). K (except K4) D3.4.7–10 नागान्वीक्ष्य समतत॰ — d) D1 अपि (for इव). G5 स (for च). B1–3 D10 भारत, D3 अब्रवीत् (for अभवत्). — After 18, K1 ins.:

437* महर्षे शंस मे सर्वं पृच्छतो ज्ञातुमिच्छत. ।
करामलकवत्सर्वं तव ज्ञानं महामुने ।

19 a) K5 D5.6.9 पुरुष. (for पुरत॰). — b) K4 B Dn D3 D5.6.8 तु (for च). — d) T2 G2 ॰नदक॰.

20 a) B2 D5 वा, D3 D7 T1 G1 M का (for च). — b) K5 T2 G2 एव (for एष). — K5 om. 20cd. — c) D3.4.9 यस्य (for कस्य). T2 G2 एव (for एष). D2 कस्यैष वंशे द्युतिमान्. — d) S व्यवस्थित॰ (for इव स्थित॰).

21 c) K1 चेत (for मन॰). — d) M समो (for पतिर्).

22 Before 22, K3.4 B Dn D3 D5.6.8 ins. कण्व उ॰. — K5 om. 22. — a) Dn2 D3 D9 T1 प्रीति॰ (for प्रीत॰).

23 Before 23, K D1–4.7–10 T G (except G3) ins. नारद उ॰ (resp. नारदः). — b) T1 G1.4 भोगि॰ (for नाग॰). — d) S म्ने(T2 G2 मौ)नकस्य (for वामनस्य).

24 a) S (except M2.5) तु (for हि). — b) K (except K4) D3.4.7.9.10 निकुभो; D2 विक्षरो, G2 कुरवो, G5 चुकुरो (for चिकुरो). — c) S अचिराद्वै॰.

25 a) B1–3 Ds2 G4 प्रीति॰ (for प्रीत॰). — b) T2 G2 transp. मातलिर् and नारद. — c) D2.5.7.8 T1 G (except G2) रुचिर॰.

## १०२

नारद उवाच ।
सूतोऽयं मातलिर्नाम शक्रस्य दयितः सुहृत् ।
शुचिः शीलगुणोपेतस्तेजस्वी वीर्यवान्बली ॥ १
शक्रस्यायं सखा चैव मन्त्री सारथिरेव च ।
अल्पान्तरप्रभावश्च वासवेन रणे रणे ॥ २
अयं हरिसहस्रेण युक्तं जैत्रं रथोत्तमम् ।
देवासुरेषु युद्धेषु मनसैव नियच्छति ॥ ३
अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः ।
अनेन प्रहृते पूर्वं बलभित्प्रहरत्युत ॥ ४
अस्य कन्या वरारोहा रूपेणासदृशी भुवि ।
सत्त्वशीलगुणोपेता गुणकेशीति विश्रुता ॥ ५
तस्यास्य यत्नाच्चरतस्त्रैलोक्यममरद्युते ।
सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ॥ ६
यदि ते रोचते सौम्य भुजगोत्तम माचिरम् ।
क्रियतामार्यक क्षिप्रं बुद्धिः कन्याप्रतिग्रहे ॥ ७
यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसोः ।
कुले तव तथैवास्तु गुणकेशी सुमध्यमा ॥ ८
पौत्रस्यार्थे भवांस्तस्माद्गुणकेशीं प्रतीच्छतु ।
सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ॥ ९
पितृहीनमपि ह्येनं गुणतो वरयामहे ।
बहुमानाच्च भवतस्तथैवैरावतस्य च ।
सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः ॥ १०
अभिगम्य स्वयं कन्यामयं दातुं समुद्यतः ।
मातलेस्तस्य संमानं कर्तुमर्हो भवानपि ॥ ११　　C. 5. 3654 B 5. 104 12 K. 5. 104 12

---

26 a) K4 B4.5 Dn T1 वै (for हि) — b) K2 5 D7 9 G5 अस्मि तेन (for अस्त्यनेन) — K5 om 26cd — c) K4 B Dn D5 D2–6 8–10 असौ नागाय वै दातुं, D1 अस्मिन्नागपतौ दातुं

Colophon. — *Sub-parvan* B1.3 D2 T1 G5 भगवद्यान, followed by मातलिवरान्वेषण K B2 4.5 Dn D5 D6–8 10 G1 M (all om. sub-parvan name) mention only मातलिवरान्वेषण — *Adhy name* T1 G1 4 5 सुमुखदर्शनं, M वरदर्शन — *Adhy no* (figures, words or both) D5 99, D7 M1–3 5 104, T G1.2 4 5 105, G3 M4 103 — *S'loka no* Dn D3 26

### 102

Before the ref., S ins

438*　　कण्व॰ ।

मातलेर्वचनं श्रुत्वा नारदो मुनिसत्तम॰ ।
अब्रवीन्नागराजानमार्यकं कुरुनन्दन ।

1 T2 G2 om. the ref. G3 5 कण्व (for नारद उ॰) — b) K1–3 D7 10 मन्त्रा (for सुहृत्) — c) K2 5 सर्व॰ (for शील॰) — d) D3 4 9 तपस्वी; Ca s तेजस्वी (as in text)

2 K4 om. 2cd — c) D7 T G1.2 4 अल्पेतर॰ — d) B3 G1 2 4 समो (for the first रणे)

3 a) D1.2 G3 हय॰ (for हरि॰) — b) D3 4 9 जेतु, T1 चैतद्, T2 M1 3–5 चेम, G1 4 चैंद्र, G2 चैत्र-, G3 चैक, M2 चैंद्र- (for जैत्र) — K5 om. 3cd

4 a) S (except G2 3 M1.2) विजित ह्यश्वैर् — cd) K4 B (except B3) Dn D5 D6 8 8 transp प्रहृते and बलभित् D2m 3 (before corr) 4.9 प्रकृ॰ (for प्रहृ॰) K5 D1 बलिभित्, M1 2 बलभित्, M3–5 ब(M3 *inf lin* व)लमृत्

5 b) T2 G2 5 असदृशा D2 7 10 शुभा (for भुवि) — c) K3 B4.5 Dn G2 सत्य॰, T2 G3 सर्व॰

6 a) K3 च, D2 प्र- (for [अ]स्य) — b) K1 Dn1 D5 D6 6 8 T1 G1 अमरद्युते, G3.5 अमितद्युते (G5 ॰ते)

7 a) D1 याचते (for यदि ते) B2 4 5 Dn D5 D1.5 6 G4 सम्यक् (for सौम्य) — d) K2–4 B D (except D1.3 10) कन्यापरिग्रहे

8 a) G3 च विष्णवे (for विष्णु॰) K5 लक्ष्मीर्यथा विष्णुकुले — b) K1.2 5 D3 10 विभावसौ

9 K5 om. 9a–10d — b) K1–3 D5 T G1 3.4 प्रयच्छतु (for प्रती॰) — c) T1 G1 4 पति॰, Ca d s प्रति॰ (as in text)

10 K5 om. 10abcd (cf v l 9) — e) K3 B3–5 Dn2 D1.6 T2 G2 3 सुमुखश्च (K3 ॰ख म) (for ॰खस्य) K2 5 D10m सुमुख॰ सुगुणश्चैव — f) K3 शौचशील॰ (by transp )

11 b) T2 G2 3 5 M3–5 वय दातु समुद्यता — c) N (except K1) मातलिस्तस्य K (except K4) D9 10 T1

C. 5 3655
B. 5. 104. 12
K. 5. 104. 13

कण्व उवाच ।
स तु दीनः प्रहृष्टश्च प्राह नारदमार्यकः ।
म्रियमाणे तथा पौत्रे पुत्रे च निधनं गते ॥ १२
न मे नैतद्बहुमतं देवर्षे वचनं तव ।
सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत् ॥ १३
कारणस्य तु दौर्बल्याच्चिन्तयामि महामुने ।
अस्य देहकरस्तात मम पुत्रो महाद्युते ।
भक्षितो वैनतेयेन दुःखार्तास्तेन वै वयम् ॥ १४
पुनरेव च तेनोक्तं वैनतेयेन गच्छता ।
मासेनान्येन सुमुखं भक्षयिष्य इति प्रभो ॥ १५
ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयम् ।
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन वै ॥ १६
मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया ।
जामातृभावेन वृतः सुमुखस्तव पुत्रजः ॥ १७
सोऽयं मया च सहितो नारदेन च पन्नगः ।
त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवम् ॥ १८
शेषेणैवास्य कार्येण प्रज्ञास्याम्यहमायुषः ।
सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ १९
सुमुखश्च मया सार्धं देवेशमभिगच्छतु ।
कार्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजंगम ॥ २०
ततस्ते सुमुखं गृह्य सर्व एव महौजसः ।
ददृशुः शक्रमासीनं देवराजं महाद्युतिम् ॥ २१
संगत्या तत्र भगवान्विष्णुरासीच्चतुर्भुजः ।
ततस्तत्सर्वमाचख्यौ नारदो मातलिं प्रति ॥ २२
ततः पुरंदरं विष्णुरुवाच भुवनेश्वरम् ।
अमृतं दीयतामस्मै क्रियताममरैः समः ॥ २३
मातलिर्नारदश्चैव सुमुखश्चैव वासव ।
लभन्तां भवतः कामात्काममेतं यथेप्सितम् ॥ २४
पुरंदरोऽथ संचिन्त्य वैनतेयपराक्रमम् ।
विष्णुमेवाब्रवीदेनं भवानेव ददात्विति ॥ २५

---

G3 सन्मान

12 B3 D1 S (except G5) om the ref — c) K5 Dn1 D1 3 4 9 Ca ध्रिय°, D5 D2 T G म्रीय°, M3-5 स्त्रिय° (for म्रिय°) — After 12, Dn2 D8 ins

439* कथमिच्छामि देवर्षे गुणकेशीं स्नुषां प्रति ।

13 G4 om 13$^a$–14$^b$ Before 13, all MSS ins. आर्यक उ° (resp आर्यक°) — a) K5 D7 न ममै°, T2 G1 न मे चै° (for न मे नै°) — b) K4 D (except D2 7 9 10) G1 2 M2 5 महर्षे G3 M वचनात्तव — c) D2 दयित, D7 10 सखधी, Ca d 5 सयुक्त (as in text)

14 G4 om 14$^{ab}$ (cf v 1 13) — a) D2-4 7 9 G1 च (for तु) — T1 om 14$^{cd}$ — d) K5 D7 10 महाद्युति, T2 G2 3 5 M3-5 °मते, G1 4 M1 2 °मुने (cf 14$^b$) — f) D2 दु'खिता° (for दु'खार्ता°) D1 G3 5 ते (for वै) D5 D6 6 स्वय (for वयम्)

16 a) D2 तदा तद्, S (except T2 G2) तथैव (for तथा तद्) — c) K2 Ds1 T1 G3-5 प्रणष्टो M1 वै (for मे) — d) Ds D5, 6 च, D8 T1 G1 4 M मे (for वै) T2 G2 सुपर्णवचनान्मुने — After 16, T G2 3 5 ins

440* कण्व ।
आर्यकस्य वच श्रुत्वा गरुड प्रति भाषितम् ।

17 Before 17, N (except B5 D1-4) ins कण्व उ° — c) T2 G2 3, M (except M3) °भावे च S (except T2 G4) पुन° (for वृत )

18 c) K4 5 D3 4 9 10 त्रैलोक्येशं M3-5 सुरश्रेष्ठ

19 a) T G कार्यस्य, Ca 5 कार्येण (as in text) — b) B1 3 D2 (by corr ) 3 4 9 om प्रदास्यामि, D1 प्रज्ञास्याम्, T1 G1 4 प्रदद्यात्, T2 G2 3 5 प्राप्त स्यात्, M Cs प्रज्ञा स्यात्; Ca प्रज्ञास्यामि (as in text) S महदायुप° (for अहमा°) — c) K2 3 B3 °तेन (for °ते च) — d) K2 प्रयतिष्याम, B3 प्रतियास्यामि K5 सत्वर°

20 D6 om 20-22 — c) D5 कार्यसंयोधनार्थाय — After 20, K4 D2-4 8 9 S ins

441* आर्यकेणाभ्यनुज्ञातो गम्यतामिति भारत ।

21 D6 om 21 (cf v. 1 20) — b) S गत्वा स्वर्गं (for सर्व एव)

22 D6 om 22 (cf v 1 20) — c) M1 2 तदस्मिन् (for ततस्तत्) S आचष्ट (for आचख्यौ)

23 Before 23, K1 2 5 D1 5 (marg ) 7 10 ins कण्व उ०, K3 4 B Dn Ds D2-6 8 9 वैशंपायन उ° — b) D1 T2 भुवनेश्वर°

24 b) D2 (before corr ) भारत; some MSS. वासव° — c) K2 3 5 Dn1 D2-4 9 10 G3 लभता; T G1 2 5 M लभतु; G4 अह तु (for लभन्तां) Some MSS कामान् — d) K5 ममैन च, D1 काम्यमेत (for काममेत) Ds1 G2 एन, D7 G5 एव (for एत)

विष्णुरुवाच ।
ईशस्त्वमसि लोकानां चराणामचराश्च ये ।
त्वया दत्तमदत्तं कः कर्तुमुत्सहते विभो ॥ २६
कण्व उवाच ।
प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम् ।
न त्वेनममृतप्राशं चकार बलवृत्रहा ॥ २७
लब्ध्वा वरं तु सुमुखः सुमुखः संबभूव ह ।
कृतदारो यथाकामं जगाम च गृहान्प्रति ॥ २८
नारदस्त्वार्यकश्चैव कृतकार्यौ मुदा युतौ ।
प्रतिजग्मतुरभ्यर्च्य देवराजं महाद्युतिम् ॥ २९

इति श्रीमहाभारते उद्योगपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## १०३

कण्व उवाच ।
गरुडस्तत्तु शुश्राव यथावृत्तं महाबलः ।
आयुःप्रदानं शक्रेण कृतं नागस्य भारत ॥ १
पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः ।
सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् ॥ २
गरुड उवाच ।
भगवन्किमवज्ञानात्क्षुधां प्रति भये मम ।
कामकारवरं दत्त्वा पुनश्चलितवानसि ॥ ३
निसर्गात्सर्वभूतानां सर्वभूतेश्वरेण मे ।
आहारो विहितो धात्रा किमर्थं वार्यते त्वया ॥ ४

C. 5. 3677
B. 5. 105. 4
K. 5. 105. 4

25 [a]) S वासवस्त्वय (for पुर°) — [c]) K4 B2 D1 3–5 T1 G1. 4 M1. 3 4 एव, D5 G3 5 M2 देव (for एन) — [d]) B1. 3 T2 इह (for इति)

26 D1 T1 G1 श्रीविष्णु, T2 G2 3 5 श्री(G2 om) भगवान् (for विष्णुरु°) — [a]) K4 B D (except D10) सर्वलोकाना, G1 असि देवाना, G5 असि भूताना — [c]) D2–4. 9 अदातु (for अदत्त) — [d]) K2 अर्हति वै (for उत्सहते) K2 3 पुमान्, K5 D3 प्रभो (for विभो)

27 K (except K3) B D (except D2–4 7–9) T1 om the ref G1. 3–5 M3–5 वैश° (G5 with prefixed श्री) (for कण्व उ°) — [a]) T1 G1. 4 शतक्रतुस् (for शक्रस्ततस्) — [b]) D2 (by corr) 3 4 9 सुरोत्तम° (for आयुरुत्तमम्) — [c]) K2 3 D2–4 9 G1 त, G4 5 स (for न) — [d]) Some S MSS चल° (for बल°)

28 [a]) M5 चायुस् (for वर) K5 D10 च (for तु) — [b]) D3 स (for स) K (except K4) D3 सं(K5 स)बभूव मुदान्वित°, B1. 2 4 सुमुख° प्रत्य(B4 सम)पद्यत; D3. 4 7. 8. 10 बभूव स (D7 10 स च तत्र) मुदान्वित° — [c]) K2 3 D7 10 °काल (for °काम)

29 [a]) B3 D9 T1 G3 5 M1 2 च (for तु) — [b]) D3 4 9 कृतकामौ K2 5 B5 D5 D7 8 10 T1 G (except G2) मुदान्वितौ — [c]) K4 B2 4 Dn अभि, T1 G1 4 प्रति, (for प्रति) — [d]) K2 शतक्रतु (for महा°)

Colophon om in K5 — *Sub-parvan* K2 3 B1. 3 T1 G1. 2 5 M1. 2 भगवद्यान, to it K2 3 B1. 3 G1 add मातलिवरान्वेषण K1 4 B2 4 5 Dn D5 D2 5–8 10 M3–5 (all om sub-parvan name) mention only मातलिवरान्वेषण — *Adhy name* T1 G1. 4 सुमुखविवाह°, G2 5 मातलिवरलाभ°, M वरलाभ° — *Adhy no* (figures, words or both) D5 100, D6 95, D7 M1–3 5 105, T G1. 2 4 5 106, G3 M4 104 — *S'loka no* Dn 28; D8 30

## 103

1 [a]) G3 5 सुपर्णस् (for गरुडस्) K4 B4 Dn D1 7 G2 तत्र, B1. 3 5 तच्च, B2 त्वथ, D2–6 8 9 T1 G1 3 5 त तु (for तत्तु) — [b]) T1 G1. 4 अरिंदम (for महाबल°) — [cd]) K1. 5 D7 10 transp शक्रेण and नागस्य S सुमुखस्य तु (for कृत नागस्य)

2 [a]) K1–3 D2 (before corr) अथ वेगेन, K5 D1 अथ वातेन (for पक्षवातेन) — [d]) S गरुड° (for वासव) D2 M1 (inf lin as in text) समुपागमत्

3 D1 om 3 — [a]) K1 मघ° (for भग°) K5 अवज्ञाते, D7 अनुज्ञात्वा, D10 इव ज्ञानात् (for अव°) — [b]) K1 5 D7 G5 m क्षुध°, K3 D2 G4 क्षुधा (for क्षुधां) K1 5 D7 Ca नये, K2 3 भय, D2 नय (for भये) K4 B Dn D5 D3–6 8–10 वृत्ति प्रतिहता मम — [c]) K B3 Dn1 D3 4 3 (before corr) 9 10 m °वश गत्वा, B5 D5 D6 6 Ca. d °वश दत्वा — After 3, K2 3 read 7[ab]

4 [a]) D2 M2 निसर्गे, T G नि(T1 G5 वि)सर्ग (for निसर्गात्)

C. 5.3678 B 5.105 5 K. 5.105. 5

वृतश्चैष महानागः स्थापितः समयश्च मे ।
अनेन च मया देव भर्तव्यः प्रसवो महान् ॥ ५
एतस्मिंस्त्वन्यथाभूते नान्यं हिंसितुमुत्सहे ।
क्रीडसे कामकारेण देवराज यथेच्छकम् ॥ ६
सोऽहं प्राणान्विमोक्ष्यामि तथा परिजनो मम ।
ये च भृत्या मम गृहे प्रीतिमान्भव वासव ॥ ७
एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन् ।
त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्वमागतः ॥ ८
त्वयि तिष्ठति देवेश न विष्णुः कारणं मम ।
त्रैलोक्यराज राज्यं हि त्वयि वासव शाश्वतम् ॥ ९
ममापि दक्षस्य सुता जननी कश्यपः पिता ।
अहमप्युत्सहे लोकान्समस्तान्वोढुमञ्जसा ॥ १०

असह्यं सर्वभूतानां ममापि विपुलं बलम् ।
मयापि सुमहत्कर्म कृतं दैतेयविग्रहे ॥ ११
श्रुतश्रीः श्रुतसेनश्च विवस्वान्रोचनामुखः ।
प्रसभः कालकाक्षश्च मयापि दितिजा हताः ॥ १२
यत्तु ध्वजस्थानगतो यत्नात्परिचराम्यहम् ।
वहामि चैवानुजं ते तेन मामवमन्यसे ॥ १३
कोऽन्यो भारसहो ह्यस्ति कोऽन्योऽस्ति बलवत्तरः ।
मया योऽहं विशिष्टः सन्वहामीमं सबान्धवम् ॥ १४
अवज्ञाय तु यत्तेऽहं भोजनाद्व्यपरोपितः ।
तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव ॥ १५
अदित्यां य इमे जाता बलविक्रमशालिनः ।
त्वमेषां किल सर्वेषां विशेषाद्बलवत्तरः ॥ १६

---

5 $^{a}$) $K_{1\,5}$ $D_{2\,7\,10}$ तु (for च) $K_4$ $B_{1\,3}$ $D_{3\,4\,9}$ T $G_{1\,2\,4}$ $M_{2\,5}$ एव (for एष) $K_4$ $B_{2\,5}$ $D_3$ $D_{2-5\,8\,9}$ $M_{3\,4}$ मया (for महा) — $^{b}$) $D_2$ transp स्थापित and समय

6 $^{a}$) $K_4$ $B_{1\,3\,4}$ Dn Ds $D_{5\,6\,8}$ तु तथाभूते; $K_5$ त्वन्यथावृत्ते — $K_4$ (which om $6^{c}$–$7^{d}$) ins 442* after $6^{ab}$ — $^{c}$) $K_5$ $D_{10}$m क्रीडामि $K_2$ कामचारेण — $^{d}$) $D_{3\,4\,9}$ $G_2$ यथेप्सित, $T_1$ $G_{1\,4}$ यथेच्छत

7 $K_4$ om 7 (cf v l. 6), $T_2$ om $7^{cd}$ — $K_{2\,3}$ read $7^{ab}$ after 3 — $Dn_1$ $D_{5\,6\,8}$ S ins after 7. $K_4$ (which om $6^{c}$–$7^{d}$), after $6^{ab}$

442* कण्व उवाच ।
श्रुत्वा सुपर्णवचनं सुमुखो दुर्मुखस्तदा ।
त्यक्त्वा रूपं विवर्णस्तु सर्परूपधरोऽभवत् ।
गत्वा विष्णुसमीपं तु पादपीठं समाश्लिषत् ।
इन्द्र उवाच ।
न मया कृतं वैनतेय न मां क्रोद्धुं त्वमर्हसि ।
दत्ताभयः स सुमुखो विष्णुना प्रभविष्णुना । [5]
श्रुत्वा पुरंदरेणोक्तमुवाच विनतासुतः ।

[(L 1) T $G_{1\,2\,5}$ $M_4$ तथा (for तदा) — (L 2) $K_4$ $Dn_1$ $D_{5\,6\,8}$ नव° (for सर्प°) — (L 3) $K_4$ $D_{5\,6\,8}$ तत्तु (for पाद-) $T_1$ $G_5$ अवा°, $G_3$ अथा° (for समा°) — After line 3, $Dn_1$ ins

443* ततः पुरंदरो वाक्यमुवाच गरुडं प्रति ।

— (L 4) $Dn_1$ न मया वैनतेयेह क्रोधं कर्तुं त्व° — (L 5) $T_2$ $G_2$ $M_{2\,5}$ तु (for स) ]

9 $^{a}$) $D_{2-4\,9}$ $T_1$ $G_1$ देवेशो, $G_3$ देवानां (for देवेश) — $G_3$ om (hapl.) $9^{b}$–$11^{a}$

10 $G_3$ om 10 (cf v l 9) — $^{b}$) S (mostly) काश्यपः — $^{d}$) $K_3$ $B_5$ Dn Ds $D_{5\,6\,8}$ $G_4$ समताद्, $B_3$ समग्रान् (for समस्तान्) $K_2$ $D_{3\,4\,9}$ S ($G_3$ om) ओजसा (for अञ्जसा)

11 $G_3$ om $11^{a}$ (cf v l 9) — $^{d}$) $K_5$ $D_{10}$ $T_1$ $G_4$ M °निग्रहे

12 $^{a}$) $K_1$ $D_{5\,8}$ श्रुतधीः — $^{c}$) $K_4$ B (except $B_5$) Dn प्रस्तुतः, Ds $D_{5-8}$ प्रश्रुतः, $D_1$ प्रहसः, T $G_{1-3}$ प्रसहः. $K_{2\,5}$ $B_3$ Ds $D_7$ कालकाख्यश्च, $D_{3\,4\,9}$ °कल्पश्च, S °काक्षश्च. — $^{d}$) $T_1$ $G_{1\,4}$ तु (for [अ]पि)

13 $K_5$ om $13^{ab}$ — $^{a}$) $D_7$ $G_1$ यत्तद् (for यत्तु). — $^{c}$) $K_{2\,3\,5}$ $T_2$ $G_{2\,3\,5}$ (to rectify metre?) वहामि चानुजं तेह ($K_{2\,3}$ येन)

14 $^{a}$) $G_{3\,5}$ M (except $M_1$) भारवहो $M_2$ [ऽ]पि (for हि) — After $14^{ab}$, $K_4$ $D_{1\,5\,6\,8}$ ins

444* सोऽहं पक्षैकदेशेन क्षोभये सागरानपि ।

— $^{c}$) $B_5$ मत्तः (for मया) $K_{2\,3}$ योयं, $D_{2-4\,9}$ ह्यहं, $B_5$ एव, $T_2$ G $M_{2-5}$ यो हि, $M_1$ कोहं (for योऽहं) — $^{d}$) K (except $K_4$) $D_{6-8\,10}$ वहामीशं तवानुजं

15 $^{b}$) $K_1$ $B_2$ Ds $D_{2\,5}$ $G_3$ $M_{1\,2}$ ह्यवरोपितः, $K_{2\,3}$ $Dn_1$ $D_2$m $_{3\,4\,9}$ T $G_{1\,2\,4\,5}$ अपरोपितः — $K_5$ om $15^{c}$–$16^{b}$ — $^{c}$) $D_{1\,3\,4\,9}$ S भ्रष्टं (for नष्टं) — $^{d}$) $K_1$ वृत्तिः (for त्वत्तः) $D_7$ तस्माच्च (for चास्माच्च) $K_{2\,3}$ तव वाक्यात्तु वासव

16 $K_5$ om $16^{ab}$ (cf v l. 15) — $^{a}$) Dn $Ds_1$ $D_7$ T $G_{1\,2\,5}$ $M_1$ आदित्या, $Ds_2$ $D_{1\,5}$ $G_{3\,4}$ अदित्या — $^{d}$) $K_4$

सोऽहं पक्षैकदेशेन वहामि त्वां गतक्लमः ।
विमृश त्वं शनैस्तात को न्वत्र बलवानिति ॥ १७

कण्व उवाच ।

तस्य तद्वचनं श्रुत्वा खगस्योदर्कदारुणम् ।
अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत् ॥ १८
गरुत्मन्मन्यसेऽऽत्मानं बलवन्तं सुदुर्बलम् ।
अलमसत्समक्षं ते स्तोतुमात्मानमण्डज ॥ १९
त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे ।
अहमेवात्मनात्मानं वहामि त्वां च धारये ॥ २०
इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह ।
यद्येनं धारयस्येकं सफलं ते विकत्थितम् ॥ २१
ततः स भगवांस्तस्य स्कन्धे बाहुं समासजत् ।
निपपात स भारार्तो विह्वलो नष्टचेतनः ॥ २२
यावान्हि भारः कृत्स्नायाः पृथिव्याः पर्वतैः सह ।
एकस्या देहशाखायास्तावद्भारममन्यत ॥ २३
न त्वेनं पीडयामास बलेन बलवत्तरः ।
ततो हि जीवितं तस्य न व्यनीनशदच्युतः ॥ २४
विपक्षः स्रस्तकायश्च विचेता विह्वलः खगः ।
मुमोच पत्राणि तदा गुरुभारप्रपीडितः ॥ २५
स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः ।
विचेता विह्वलो दीनः किंचिद्वचनमब्रवीत् ॥ २६
भगवँल्लोकसारस्य सदृशेन वपुष्मता ।
भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महीतले ॥ २७
क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः ।
बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः ॥ २८
न विज्ञातं बलं देव मया ते परमं विभो ।

C. 5. 3702
B. 5. 103. 29
K. 5. 105. 31

---

B D (except $D_{7\,8\,10}$) बलेन (for विशेषाद्), cf $24^{b}$

17 $^{b}$) $D_{5\,2}$ M (except $M_{2}$) त्वा S पराक्रमात् (for गत°) — $^{c}$) $K_{2\,3}$ $B_{5}$ $M_{1.2}$ विमृश(B5 °प)स्व, $B_{2\,3}$ विमृप त्व — $^{d}$) $D_{7\,10}$ ह्यत्र, $G_{1.5}$ [ऽ]न्यत्र (for न्वत्र) $D_{1}$ भवेत् (for इति)

18 K (except $K_{4}$) $B_{5}$ $D_{1\,7\,10}$ S om the ref — $^{a}$) B D (except $D_{3\,4\,7\,9\,10}$) स तस्य (for तस्य तद्) — $^{c}$) $K_{1}$ M अक्षोभ्य क्षो° — $^{d}$) $G_{1.4}$ उवाचाथ स चक्रभृत्

19 Before 19, $K_{4}$ $D_{3\,4\,9}$ $T_{1}$ $G_{1\,4}$ M ins विष्णु, $T_{2}$ $G_{2\,3\,5}$ श्री($G_{2}$ om )भगवान् — $^{b}$) $K_{5}$ $B_{3}$ सुदुर्लभ, $D_{2\,5\,8}$ $G_{5}$ $M_{2}$ सुदुर्बल

20 $^{d}$) K (except $K_{4}$) $D_{7}$ धारयन् (for °ये) — After 20, S ins

445* न त्व वहसि मा दोर्भ्यां मोघ तव विकत्थनम् ।
[ M विकत्थित ]

21 $^{c}$) $K_{5}$ $D_{7}$ transp एन and एक $K_{1}$ $G_{2\,3\,5}$ एत, $B_{2-4}$ $D_{8}$ एव (for एन) — $^{d}$) $D_{1\,3\,4\,9}$ G (except $G_{5}$) विकत्थन, Ca विकन्थित (as in text)

☞ In $D_{5}$ the portion of the text from stanza 22 up to the end of line 9 of passage No 13 of App I of this parvan is lost on missing fol Hereafter the MS is ignored up to the end of the lacuna

22 Before 22, $K_{4}$ $D_{2}$(marg ) $_{3\,4\,9}$ ins कण्व उ° — $^{a}$) S इत्युक्त्वा (for तत स) $D_{1}$ $G_{2}$ $M_{2}$ तत्र (for तस्य) — $^{b}$) $K_{5}$ समर्पयत्, $B_{1-3}$ $D_{8-10}$ समासृजत्, S अवास($T_{1}$ $M_{2\,5}$ °सृ)जत् — After $22^{ab}$, $D_{8}$ ins

446* स्पृष्टमात्रो नखाग्रेण गरुत्मान्कश्यपात्मज ।

$D_{8}$ cont $K_{4}$ $D_{3\,4\,9}$ ins after $22^{ab}$

447* स्वहस्तन्यस्तभारोऽभूद्धयस्य स्नेहकारणात् ।

On the other hand, S ins after $22^{ab}$

448* आरोपित समुद्वोढु भार स नाशकद्बलात् ।
[ $G_{1\,5}$ बाहु (for भार) ]

23 $^{a}$) K (except $K_{4}$) $D_{1\,2}$ (m as in text) यावद्धि (for यावान्हि) — $^{b}$) $D_{3}$ (by transp ) सह पर्वतै, $G_{3}$ सागरै सह — $^{c}$) $D_{7}$ T G बाहु°, Ca देह° (as in text)

24 $^{a}$) $K_{5}$ तथैन, $D_{n1}$ $D_{8}$ न त्वेव (for न त्वेन) — $^{b}$) $T_{2}$ सबल (for बलेन) $K_{1\,5}$ $D_{7\,10}$ बलिना वर, S पुरुषोत्तम — $^{c}$) $K_{5}$ अधिक, $D_{1}$ T G (except $G_{2}$) ततोपि, $D_{7}$ अतो हि (for ततो हि)

25 $^{a}$) $K_{4}$ B D (except $D_{1.7\,8}$) व्यात्तास्य ($D_{2}$ m विपक्ष as in text) $G_{3\,5}$ स्रस्तगात्रश्च — $D_{4}$ om (hapl ) $25^{b}$–$26^{b}$ — $^{b}$) Ca d प्रचेता (for विचेता)! — $^{d}$) $T_{2}$ $G_{2}$ °भारात् (for °भार )

26 $D_{4}$ om $26^{ab}$ (cf v l 25) — $^{b}$) $T_{2}$ $G_{2\,5}$ M विनतानन, $G_{3}$ °त्मज — $^{c}$) $T_{2}$ G विवशो (for विचेता) — $^{d}$) $K_{1.5}$ $D_{7\,10}$ हरिं (for किंचिद्)

27 Before 27, $K_{4}$ $D_{3\,4\,9}$ $G_{1\,4}$ $M_{1}$ ins गरुड उ (resp गरुड) — $^{a}$) $D_{3\,4\,7\,9}$ $M_{3-5}$ लोकभारस्य, $G_{3}$ °नाथस्य, Ca d °सारस्य (as in text)

28 $^{b}$) $K_{4}$ $D_{2}$ °मेधस; $D_{7}$ $T_{2}$ $G_{2\,3}$ °तेजस (for °चेतस )

C 5. 3702 B 5. 105. 29 K. 5. 105. 81

तेन मन्याम्यहं वीर्यमात्मनोऽसदृशं परैः ॥ २९
ततश्चक्रे स भगवान्प्रसादं वै गरुत्मतः ।
मैवं भूय इति स्नेहात्तदा चैनमुवाच ह ॥ ३०
तथा त्वमपि गान्धारे यावत्पाण्डुसुतान्रणे ।
नासादयसि तान्वीरांस्तावज्जीवसि पुत्रक ॥ ३१
भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः ।
धनंजयश्चेन्द्रसुतो न हन्यातां तु कं रणे ॥ ३२
विष्णुर्वायुश्च शक्रश्च धर्मस्तौ चाश्विनावुभौ ।
एते देवास्त्वया केन हेतुना शक्यमीक्षितुम् ॥ ३३
तदलं ते विरोधेन शमं गच्छ नृपात्मज ।
वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ॥ ३४
प्रत्यक्षो ह्यस्य सर्वस्य नारदोऽयं महातपाः ।
माहात्म्यं यत्तदा विष्णोर्योऽयं चक्रगदाधरः ॥ ३५

वैशंपायन उवाच ।

दुर्योधनस्तु तच्छ्रुत्वा निःश्वसन्भृकुटीमुखः ।
राधेयमभिसंप्रेक्ष्य जहास स्वनवत्तदा ॥ ३६
कदर्थीकृत्य तद्वाक्यमृषेः कण्वस्य दुर्मतिः ।
ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ॥ ३७
यथैवेश्वरसृष्टोऽस्मि यद्भावि या च मे गतिः ।
तथा महर्षे वर्तामि किं प्रलापः करिष्यति ॥ ३८

इति श्रीमहाभारते उद्योगपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

29 Ds om 29^ab — ^a) K4 B (except B5) Dn D2-4 6 8 T2 G1 2 हि (for वि) D7 ज्ञात च (for विज्ञात) — ^c) K1 5 D7 10 जानाम्यह०, K2 D6 D9 मन्यामहे, D8 4 9 S मन्ये ह्यह (D8 4 9 G5 त्वह) — ^d) B1 8 आत्मान (for आत्मनो) K4 B D (except D10) न सम (for ऽसदृशं) G. आत्मान सदृश परै

30 ^a) S शनै (for चक्रे) T1 G1 4 तु (for स) — ^b) S प्रसन्नो (for प्रसाद) K6 गरुत्मते, D5 गरुत्मतां D7 प्रसाद गरुडध्वज — ^c) K1 B6 D5 G1 Ca d भूया (for भूय) — After 30, K4 Dn1 D2(marg) 3 4 6 (om line 1) 8 9 S ins

449* पादाङ्गुष्ठेन चिक्षेप सुमुख गरुडोरसि ।--
— तत प्रभृति राजेन्द्र सह सर्पेण वर्तते ।
एव विष्णुबलाक्रान्तो गर्वनाशमुपागमत् ।
गरुडो बलवान्राजन्वैनतेयो महायशा ।

[(L 3) K4 Dn1 D2m 3 4 6 8 9 उपागत (for °गमत्) ]

31 Before 31, K4 B Dn Ds D6 ins. कण्व उ° — ^a) T2 G2 राजेंद्र (for गान्धारे)

32 ^d) D1 युधि (for रणे) K1 D7 विहन्यात्कस्तु तौ रणे, K2 3 यमलौ तत्समौ रणे, K4 G5 न हन्यात्तावक रणे, D8 निहन्यात्क नु तौ रणे, T G1 2 4 नि(T1 G4 न)हन्या त्तावकान्रणे, G3 M न हन्यात्तात क(M1 2 कान्)रणे

33 ^b) Ds1 धर्मिष्ठौ (for धर्मस्तौ) D2 T2 G2 चैवा° (for तौ चा°) Ds2 T1 G1 4 om च — ^d) K4 B2 4 5 D (except D1 2 7) हेतुना वीक्षितु क्षमा

34 ^c) = 5 86 10^c

35 ^a) K4 B D (except D1 2 7) प्रत्यक्षदर्शी, T2 प्रत्यक्षोस च (for प्रत्यक्षो ह्यस्य) — ^c) K4 B Dn2 D8 (before corr ) 4 6 8-10 माहात्म्यस्य (for माहात्म्यं यत्) B2 G3 5 तथा (for तदा) — ^d) K4 B D (except D2 10) सो (for यो)

36 ^b) A few MSS भ्रुकुटी° — ^c) K1 G5 M2 अपि; T1 G1 4 उप (for अभि)

37 ^c) K1 कर (for ऊरु) K1 5 D3 4 7-10 करि° (for गज°)

38 ^a) G5 तथा (for यथा), and [ऽ]ह (for ऽस्मि) — ^b) K5 D1-4 7 9 10 S मम या (for या च मे) K1-3 यद्भावितमयी गति — ^c) G4 तथाहमेव K1 वर्तेह, K5 D7 वर्तेय, G2 वर्तिष्ये — ^d) K2 D1 3 4 transp किं and प्रलाप — After 38, P P S Sastri (Mbh Southern Rec, vol VII, p 608), probably following the Kumbh ed, interpolates a stanza (तत कण्वोऽब्रवीत् etc ) which was not found in *any* of the MSS. collated for this edition!

Colophon D5 missing — *Sub-parvan* K2.3 B1 3 Dn1 D8 10 T1 G1 M भगवद्यान, to it all (except T1) add मातलिवरान्वेषण, K2 3 D10 G1 M cont समाप्त K1 4 5 B2 4 5 Dn2 Ds D2 6 7 G5 (all om sub-parvan name) mention only मातलिवरान्वेषण, followed by समाप्त (except in Dn2 Ds) — *Adhy name* T1 सुमुखप्रसादे गरुडगर्वहरण; G1 M1 सुमुखप्रसाद, G5 गरुडविकत्थनेविष्णुमाहात्म्यकथन — *Adhy no* (figures, words or both) K5 64(!), D7 (by corr ) M1-3 5 106, T G1 2 4 5 107, G3 M4 105 — *S'loka no:* Dn1 40, Dn2 38, D8 45.

## १०४

जनमेजय उवाच ।
अनर्थे जातनिर्बन्धं परार्थे लोभमोहितम् ।
अनार्यकेष्वभिरतं मरणे कृतनिश्चयम् ॥ १
ज्ञातीनां दुःखकर्तारं बन्धूनां शोकवर्धनम् ।
सुहृदां क्लेशदातारं द्विषतां हर्षवर्धनम् ॥ २
कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः ।
सौहृदाद्वा सुहृत्स्निग्धो भगवान्वा पितामहः ॥ ३
वैशंपायन उवाच ।
उक्तं भगवता वाक्यमुक्तं भीष्मेण यत्क्षमम् ।
उक्तं बहुविधं चैव नारदेनापि तच्छृणु ॥ ४
नारद उवाच ।
दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
तिष्ठते हि सुहृद्यत्र न बन्धुस्तत्र तिष्ठति ॥ ५
श्रोतव्यमपि पश्यामि सुहृदां कुरुनन्दन ।
न कर्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुणः ॥ ६
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा निर्बन्धतः प्राप्तो गालवेन पराजयः ॥ ७
विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा ।
अभ्यगच्छत्स्वयं भूत्वा वसिष्ठो भगवानृषिः ॥ ८
सप्तर्षीणामन्यतमं वेषमास्थाय भारत ।
बुभुक्षुः क्षुधितो राजन्नाश्रमं कौशिकस्य ह ॥ ९
विश्वामित्रोऽथ संभ्रान्तः श्रपयामास वै चरुम् ।
परमान्नस्य यत्नेन न च स प्रत्यपालयत् ॥ १०
अन्नं तेन यदा भुक्तमन्यैर्दत्तं तपस्विभिः ।
अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽभ्युपागमत् ॥ ११
भुक्तं मे तिष्ठ तावत्त्वमित्युक्त्वा भगवान्ययौ ।
विश्वामित्रस्ततो राजन्स्थित एव महाद्युतिः ॥ १२
भक्तं प्रगृह्य मूर्ध्ना तद्बाहुभ्यां पार्श्वतोऽगमत् ।
स्थितः स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः ॥ १३
तस्य शुश्रूषणे यत्नमकरोद्गालवो मुनिः ।

C. 5. 3727
B. 5. 106. 14
K. 5. 105. 14

### 104

2 K5 om 2 (along with 1) — b) T1 G1.4 शोककारक — D8 G2 om. (hapl) 2cd — c) T2 क्लेशकर्तार — d) D2 दुर्हृदा (for द्विषता)

3 a) D9 चैन, T2 G6 एन (for नैन) — b) M1 मानवा (for बान्धवा) — c) K2 3 भीष्मो (for स्निग्धो) — d) D7 च, T2 स, Ca d वा (as in text)

4 K6 om 4 — c) S चापि (for चैव)

5 a) M3-5 स्निग्ध (for श्रोता) — b) D9 सु (for च) S transp हित and सुहृत् — c) K1 ह, T1 G1 4 च (for हि) T2 G2 यस्मिन्, Cs यत्र (as in text) — d) T1 G4 स, Cs न (as in text) T1 G1 4 तस्य, Cs तत्र (as in text)

6 a) K1 6 D7 S चापि (for अपि) — c) G3 6 हि (for च) — d) K2 चैव, G3 6 च सु (for हि सु)

7 ab) = 5 35 5ab, 95 11ab, 131 1ab — d) K1.2 6 B3 6 D1-4 7 9 10 Ca पराभव (for °जय)

8 c) K2 G1 Cn 8 अभ्या°, Ca अभ्य° (as in text) B1-3 D3 (m as in text) 4 9 मोक्तु, Ca d भूत्वा (as in text) — d) A few N MSS वशिष्ठो

9 c) D6 8 सर्वतो (for क्षुधितो) — d) K1.4 B1.2 4 Dn Ds D6 8 T2 तु, K2 3 हि, D1 T1 G1 2 च (for ह)

10 a) K2 3 हि (for ऽथ) T2 G2 संप्राप्य, Ca d सभ्रात (as in text) — b) B1 2 5 Dn2 Ds D2 6 8 T G M1 त (for वै) — c) T G परमान्न स (T2 प्र, G2 स्व, G4 च) यत्नेन — d) K4 B D (except D2 7) T2 त, T1 G1 2 4 M1 2 5 सं; G3 6 स्म (for स) D6 प्रत्यपादयत्, T1 G °साधयत्, Ca d s as in text

11 a) K2 सदा; K3 T1 G1 तदा, G2 ततो, G3 6 M यथा, G4 तथा (for यदा) — b) D1 transp अन्यै and दत्त — c) K2 D1 अवगृह्यान्नम्, T2 G2 अयोद्गृ° (for अथ गृह्यान्नम्) K2 3 अप्युष्ण, S (except M3-5) अभ्युष्णं (for अत्युष्ण) — d) B (except B2) D (except D2 9 10) अपि (for अभि-)

12 c) D1 T1 G1.2 तदा, T2 तथा (for ततो) — d) T1 G1.4 °तपा (for °द्युति)

13 a) K2 3 चरु, Ca भक्त (as in text) K2 3 G4 5 M3-5 त, K4 B Dn Ds D6-8 वै, K5 तु, D2-4 9 [अ]थ, T1 G3 ते (for तद्) — b) T1 G3 5 -वहत्, T2 G3 भवत्, G1.4 वहन् (for ऽगमत्) K4 B D (except D1) बाहुभ्या सशि (D3 10 शासि) तव्रत — c) N (mostly) अभ्यासे

C. 5. 3727
B. 5. 103. 14
K. 5. 103. 14

गौरवाद्बहुमानाच्च हार्देन प्रियकाम्यया ॥ १४
अथ वर्षशते पूर्णे धर्मः पुनरुपागमत् ।
वासिष्ठं वेषमास्थाय कौशिकं भोजनेप्सया ॥ १५
स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा ।
तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता ॥ १६
प्रतिगृह्य ततो धर्मस्तथैवोष्णं तथा नवम् ।
भुक्त्वा प्रीतोऽस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः ॥ १७
क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः ।
धर्मस्य वचनात्प्रीतो विश्वामित्रस्तदाभवत् ॥ १८
विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः ।
शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच तम् ।
अनुज्ञातो मया वत्स यथेष्टं गच्छ गालव ॥ १९
इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम् ।
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम् ॥ २०
दक्षिणां कां प्रयच्छामि भवते गुरुकर्मणि ।
दक्षिणाभिरुपेतं हि कर्म सिध्यति मानवम् ॥ २१
दक्षिणानां हि सृष्टानामपवर्गेण भुज्यते ।
स्वर्गे क्रतुफलं सद्भिर्दक्षिणा शान्तिरुच्यते ।
किमाहरामि गुर्वर्थं ब्रवीतु भगवानिति ॥ २२
जानमानस्तु भगवाञ्जितः शुश्रूषणेन च ।
विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत् ॥ २३
असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः ।
किं ददानीति बहुशो गालवः प्रत्यभाषत ॥ २४
निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः ।
किंचिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम् ॥ २५
एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे ।
हयानां चन्द्रशुभ्राणां गच्छ गालव माचिरम् ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

---

14 $^{a}$) T1 G1 4 अस्य (for तस्य) — $^{b}$) B1 2 4 तदा (for मुनि ) — $^{c}$) K1 D7 10 वा (for च)

15 $^{a}$) D6 8 अथ पूर्णे शते वर्षे — $^{b}$) D1 transp धर्म and पुन॰ K8 उपाव्रजत् — $^{c}$) A few MSS वासिष्ट. K1 वासिष्ट रूपम्, K2 Dn1 D2 T1 G2 5 वासिष्टवेशम् — $^{d}$) K2 8 D7 (m as in text) T G1 4 M1 4 भोजनेच्छया

16 $^{b}$) D3 4 9 महात्मना (for महर्षिणा) — K4 om 16$^{c}$–18$^{d}$

17 K4 om 17 (cf v l 16) — $^{a}$) D3 4 9 प्रगृह्य तु (for प्रतिगृह्य) — $^{b}$) D1 तदादानं (for तथा नवम्) — $^{c}$) S (except G4) विप्रेति (for विप्रर्षे) — $^{d}$) D2–4 9 मुक्त्वा च, D10 इत्युक्त्वा (for तमुक्त्वा) K2 8 पुनर् (for मुनिर्)

18 K4 om 18 (cf v l 16) — $^{a}$) K5 उपरतो (for अपगतो) — $^{b}$) B2 D2 T2 G2 ॰गमत् (for ॰गतः) — $^{d}$) K3 5 B4 D (except D7 9 10) G2–4 M2 5 तथा॰, B1–3 5 G5 ततो॰ (for तदा॰)

19 $^{a}$) D3 4 6 8 9 G1 2 च (for तु) — $^{d}$) D1 इत्यचोदयत् (for इत्युवाच तम्) B Dn Ds D2 6 8.10 ह (for तम्) — $^{f}$) K8 B1 यथेच्छं (for यथेष्ट)

20 $^{a}$) D3 4 9 इत्यु॰ (for प्रत्यु॰) S (except G3) एन (for इदं) — $^{b}$) K5 T2 G1 2 M (except M5) ॰सत्तम — $^{d}$) K (except K4) D2 7 10 M1 5 ॰मुनिं (for ॰द्युतिम्)

21 $^{a}$) K4 B (except B2) D (except D2 6) G4 दक्षिणा॰ का॰ प्र॰ — $^{b}$) S (except G4) भवतो (for ॰ते) — $^{c}$) K1.2 5 D10 वै (for हि) — $^{d}$) D8 4.9 कार्यं (for कर्म) B3 5 D5 D7 Ca मानद, Dn1 D1 T2 G (except G4) मानवे, Cnp मानव (as in text).

22 $^{a}$) K1 2 D8 T1 G1 5 M2 विसृष्टाना, K8 प्रसृष्टाना, K4 B Dn Ds D6 7 हि दाता वै, D2 हि दानाद्धि, Ca d s विसृष्टाना (for हि सृष्टानां) — $^{b}$) K4 B D (except D1) युज्यते (for भु॰) — K5 om 22$^{c}$–23$^{b}$ — $^{c}$) Dn Ds तद्धि (for सद्भिर्) — $^{d}$) K4 B D2 (by corr ) 3 4 9 दक्षिणाभिस्तथाप्यते Ca cites शान्तिराप्यते, Cs शान्ति॰ — $^{f}$) T1 G4 5 भगवन्

23 K5 om 23$^{ab}$ (cf v l 22) — $^{a}$) K4 Dn Ds D6 10 Cnp स जानस्तेन, B D3 4 9 स जानन्नेव, D1 जानानस्तेन (for जानमानस्तु) T1 G1.4 च (for तु) Cap जातमान॰, Ca s जानमान॰ (as in text) Cn cites जानान — $^{b}$) S जित्व (for जित॰) K4 B Dn Ds D1 2 6 8 10 वै, D3 4 9 तु (for च) — $^{d}$) K8 5 अनोदयत्, D2 m. 3.4 G3 अचोदत (for अचोदयत्)

## १०५

नारद उवाच ।

एवमुक्तस्तदा तेन विश्वामित्रेण धीमता ।
नास्ते न शेते नाहारं कुरुते गालवस्तदा ॥ १
त्वगस्थिभूतो हरिणश्चिन्ताशोकपरायणः ।
शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना ॥ २
कुतः पुष्टानि मित्राणि कुतोऽर्थाः संचयः कुतः ।
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम ॥ ३
कुतो मे भोजनश्रद्धा सुखश्रद्धा कुतश्च मे ।
श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे ॥ ४
अहं पारं समुद्रस्य पृथिव्या वा परं परात् ।
गत्वात्मानं विमुञ्चामि किं फलं जीवितेन मे ॥ ५
अधनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः ।
ऋणं धारयमाणस्य कुतः सुखमनीहया ॥ ६
सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ।
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ ७
प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।
मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥ ८
न रूपमनृतस्यास्ति नानृतस्यास्ति संततिः ।
नानृतस्याधिपत्यं च कुत एव गतिः शुभा ॥ ९
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ १०
न जीवत्यधनः पापः कुतः पापस्य तन्त्रणम् ।
पापो ध्रुवमवाप्नोति विनाशं नाशयन्कृतम् ॥ ११
सोऽहं पापः कृतघ्नश्च कृपणश्चानृतोऽपि च ।

C. 5. 3757
B. 5. 107 12
K. 5. 107 12

---

24 $^{c}$) K (except K4) Ds2 D6–8 G1. 4 ददामीति

25 $^{a}$) S (except T2 G3–5) निर्वंधित°, Ca as in text

26 26$^{ab}$ = 5 114 5$^{ab}$, etc — $^{a}$) Ds Ca s श्यात्र°, Cap श्याम° (as in text) — $^{b}$) S तु (G3 च, G5 हि) देहि (for ददस्व) K4 B Dn Ds D6 8 हयाना चद्रवर्चसा, see below — $^{c}$) K4 B Dn Ds D6 8 अष्टौ शतानि मे देहि, see above.

Colophon missing in D5, D7 om it — *Sub-parvan* K3 B1–3 Dn D3 4 8 9 T1 G1 M भगवद्यान; to it all (except D3 4 9) add गालवचरित K4 B4. 5 Ds D2 6 10 G2 4 5 (all om. sub-parvan name) mention only गालवचरित (G5 °वोपाख्यान) — *Adhy name* G2 दक्षिणानिर्बन्ध°, G5 गुरुदक्षिणानुवर्णन, M गुरुदक्षिणानिर्बन्ध° — *Adhy no* (figures, words or both) D6 91, T G1 2 4 5 108, G3 M4 106, M1–3 5 107 — *S'loka no* Dn D8 27

### 105

1 D1. 2 वैश° उ°, G5 श्रीनारद° — $^{a}$) K (except K4) Dn2 D7 10 ततस्, G3 तथा (for तदा) — $^{b}$) T2 G2 गालव° (for धीमता), see below — $^{c}$) K1 m न स्नाति (for नाहार). — $^{d}$) G3. 4 तथा (for तदा) K1 नाहार कुरुते सदा; T2 G2 कुरुते मुनिसत्तम

2 $^{a}$) K1 2 5 D2 7 10 °शेषो (for °भूतो) — $^{c}$) K (except K4) D7 10 T1 G1 4 दिवारात्र (for ऽतिमात्र स) T2 G2 3. 5 M (except M3) च (for स) — After 2, Dn1 D2 ins

450* गालवो दुःखितो दुःखाद्विललाप सुयोधन ।

3 $^{b}$) K5 D7 M2–4 कुतोर्थ° G2 5 सचया° — 3$^{c}$ = 5 104 26$^{c}$

4 K4 B (except B3) Dn Ds D2 4 (by corr) 6 8 G4 Ca भोजने श्रद्धा — $^{b}$) K1. 2 5 D7 मम (for च मे)

5 K5 om (hapl) 5 — $^{a}$) N (K5 om) M1 (*inf lin*) पारे (for पार) — $^{b}$) B1–3 परस्पर (B2 °रात्), D10 T G M2–5 परात्पर (by transp), Ca s as in text M1 पृथिव्या° पारमेव वा — $^{d}$) K4 D3 4 9 S जीवितस्य (for °तेन)

6 $^{a}$) K1 2 5 अपा(K5 आढ्य)स्तमानकार्यस्य — $^{d}$) T2 G2 अनीहत°, Ca s अनीहया (as in text)

7 K5 om 7$^{a}$–15$^{b}$

8 K5 om. 8 (cf v l 7) — $^{a}$) K1 2 D1. 7 10 करोमीति, Ca करिष्येति (as in text) — $^{d}$) K3 D2 7 T2 G2 5 विन° (for प्रण°)

9 K5 om. 9 (cf v l 7), D4 om 9$^{b}$–10$^{b}$

10 K5 om 10 (cf. v l 7), D4 om 10$^{ab}$ (cf v l 9) — $^{d}$) D1 निर्वृति (for निष्कृति)

11 K5 om 11 (cf v l 7) — $^{b}$) K4 B1–3 Dn D2–4 6 9 Cnp मन्त्रण, S सा घृणा, Ca n s तन्त्रणं

C. 5. 3753 B. 5. 107. 12 K. 5. 107. 12
गुरोर्यः कृतकार्यः संस्तत्करोमि न भाषितम् ।
सोऽहं प्राणान्विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् ॥ १२
अर्थना न मया काचित्कृतपूर्वा दिवौकसाम् ।
मानयन्ति च मां सर्वे त्रिदशा यज्ञसंस्तरे ॥ १३
अहं तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरम् ।
विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम् ॥ १४
भोगा यस्मात्प्रतिष्ठन्ते व्याप्य सर्वान्सुरासुरान् ।
प्रयतो द्रष्टुमिच्छामि महायोगिनमव्ययम् ॥ १५

एवमुक्ते सखा तस्य गरुडो विनतात्मजः ।
दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया ॥ १६
सुहृद्भवान्मम मतः सुहृदां च मतः सुहृत् ।
ईप्सितेनाभिलापेण योक्तव्यो विभवे सति ॥ १७
विभवश्चास्ति मे विप्र वासवावरजो द्विज ।
पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन मे ॥ १८
स भवानेतु गच्छाव नयिष्ये त्वां यथासुखम् ।
देशं पारं पृथिव्या वा गच्छ गालव माचिरम् ॥ १९

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

(as in text) — $^d$) T2 G2 शतशो (for विनाश)

12 K5 om. 12 (cf. v. l. 7) — $^b$) D2 (by corr.) 3 4 0 कृपणश्च तथानृती — $^c$) S (except G2) यत् (for य°) K4 Dn1 D3 D2–4 9 S °कार्यस्य (for °कार्य सन्). D7 च (for सन्) — $^d$) K1 2 Dn1 D1 स(D1 त)त्करोति (for तत्करोमि). K4 D2–4 0 न करोमि च भा°. — G3 om. (? hapl.) 12$^f$–15$^e$

13 K4 G3 om. 13 (cf. v. l. 7, 12) — $^a$) K4 D2–4 9 M1 2 प्रार्थना, B4 Dn T2 G1 2 4 अर्थिता, Ca अर्थना (as in text) — $^b$) D1 कृता पूर्वं — $^c$) D1 दाप° (for मान°). K1 2 D7 10 T1 G1 4 हि, T2 G2 5 M इह (for च)

14 K5 G3 om. 14 (cf. v. l. 7, 12) — $^a$) K1 2 B3 D3 D1 M3–5 अय तु, D7 10 (m. as in text) अर्चयन् (for अहं तु). Ca cites अय ❀Cn अत्राहमिति पदस्य द्विरावृत्तिर्वक्तुर्वैक्लव्याददोषः।❀ — $^c$) M1 2 जिष्णु (for विष्णु) — 14$^d$ = (var.) 5. 119. 8$^d$

15 K5 om. 15$^{ab}$ (cf. v. l. 7), G3 om. 15$^{abc}$ (cf. v. l. 12) — $^a$) K1 2 D1 T2 G2 यस्मिन् (for यस्मात्). D3 प्रतिष्ठति, D8 S (G3 om.) प्रवर्तंते, Ca s प्रतिष्ठन्ते (as in text) — $^b$) T1 G1 4 दिवौकस° (for सुरासुरान्) — $^c$) K3 4 B D (except D7 8 10) प्रणतो (for °यतो) — $^d$) K4 5 B D (except D7) कृष्ण (for महा°). T2 G2 अच्युत (for अव्ययम्)

16 Before 16, T G1 4 ins. नारद° — $^b$) B3 G3 5 विनतासुत° — $^d$) K1 2 5 D3 4 7 0 10 प्र-; Ds2 स, D2 सु- (for स)

17 Before 17, T2 G2 ins. गरुड — $^a$) S सखा (for मत°) — $^b$) D3 4 0 हि मत., T1 G1 त्वमत° (for च मत°)

18 Before 18, T1 G1 5 ins. गरुड° — $^b$) T1 G2 4 वासुदेव° पर°, Ca s वासवावरज° (as in text) — $^c$) K5 Ds2 M5 Cs तदर्थं, Ca त्वदर्थं (as in text). T2 G2 तु (for च) — $^d$) K1 B1–3 Dn1 D3 D3 0 M1 कृतकाम°, Ca s कृत° काम° (as in text)

19 $^a$) K (except K4) D (except Dn D1 6) गच्छाव — $^b$) D1 G3 5 M1 3 4 त्वा (for त्वां). S यथे प्सित (for यथासुखम्) — $^c$) K4 Dn1 D6 विदित्वा, K5 B2 D1 8 G2 M3–5 पृथिव्या

Colophon missing in D5, K5 om. it. — *Sub-parvan*: K3 B1 3 D3 T1 G1 M भगवद्यान, followed by गावलचरित. K1 2 4 B2 4 5 Dn Ds D2–4 6 7 9 10 G4 (all om. sub-parvan name) mention only गालवचरित (K2 °वाख्यान, G5 °वोपाख्यान) — *Adhy. name*: G5 गरुडागमन, M1 2 पूर्वदिग्वर्णन, M3–5 गरुडसमागम° — *Adhy. no.* (figures, words or both): D6 98, D7 (by corr.) G3 M4 107, T G1 2 4 5 109, M1–3 5 108 — *S'loka no.*: Dn1 19, Dn2 20, D3 18

## 106

1 D7 T2 G2 4 गरुड° (for सुपर्ण उ°) — $^a$) D7 अनुज्ञात°, Cs °शिष्ट° (as in text) — $^b$) K4 D2–4 8 9 T G1 2 4 ज्ञानयोगिना, K5 D1 [अ]ज्ञातयोगिना, B Dn ज्ञानयोनिना, Ca s np अज्ञातयोनिना (as in text) — $^c$) T G1 2 अनुयास्यामि, M1 (inf. lin.) 2 °संयाव, M3–5

## १०६

सुपर्ण उवाच ।

अनुशिष्टोऽस्मि देवेन गालवाज्ञातयोनिना ।
ब्रूहि काममनुसंयामि द्रष्टुं प्रथमतो दिशम् ॥ १
पूर्वां वा दक्षिणां वाहमथ वा पश्चिमां दिशम् ।
उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव ॥ २
यस्यामुदयते पूर्वं सर्वलोकप्रभावनः ।
सविता यत्र संध्यायां साध्यानां वर्तते तपः ॥ ३
यस्यां पूर्वं मतिर्जाता यया व्याप्तमिदं जगत् ।
चक्षुषी यत्र धर्मस्य यत्र चैष प्रतिष्ठितः ॥ ४
हुतं यतोमुखैर्हव्यं सर्पते सर्वतोदिशम् ।
एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाध्वनः ॥ ५
यत्र पूर्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः ।
यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसंभवाः ॥ ६
यतोमूला सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत ।
सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितम् ॥ ७
एतस्मात्कारणाद्ब्रह्मन्पूर्वेत्येषा दिगुच्यते ।
यस्मात्पूर्वतरे काले पूर्वमेषावृता सुरैः ॥ ८
अत एव च पूर्वेषां पूर्वामाशामवेक्षताम् ।
पूर्वकार्याणि कार्याणि दैवानि सुखमीप्सता ॥ ९
अत्र वेदाञ्जगौ पूर्वं भगवाल्लोकभावनः ।

C. 5. 3770
B. 5. 106. 10
K. 5. 108. 10

°मयाम° K3–, B D ब्रूहि काम तु का (K3.4 D6 सं) यामि

2 ^ab) K (except K4) D2–4.9 10 transp दक्षिणा and पश्चिमा K5 चेहम्, B2 D1.2 वापि, T1 G1.3 5 M वेमाम्, T2 चैव, G2 4 चेमाम् (for वाहम्) K1 2 6 D10 अयाह, D1 ह्यथ वा, D2 यथा वा (for अथ वा)

3 In B2, the portion from here up to 5 107 13^e is lost on a missing fol. — ^a) K1.2 6 S (except T G2 M2) यस्माद् (for यस्याम्) — ^b) K D2–4 7 9 10 °प्रदीपक°, D5 °प्रतापन°, D1 °विभावन° — ^c) S साध्या- (M2 सिद्धा)ना (for मध्याया) — ^d) K1 3 साधू°, S (except M2) सिद्धा° (for साध्या°) T1 G1.4 M1–3 वर्ध° (for वर्त°) D3 वर्तते तपस° पर, D10 (marg sec m) नित्यमावर्तते तप°

4 B2 missing (cf v l 3) K5 om. from here up to 5 110 3^cd — ^a) K1 2 गति°, S द्युति°, Ca s मति° (as in text) K2 या वा, K4 B Dn D1 6 याता (for जाता) — ^d) K3 D2–4 9 चैव, D5 S धर्म° (for चैष) K4 Dn D6 8 यत्र वै सुप्रतिष्ठित° (D8 °ता), B4 यत्रवै सुप्रतिष्ठिते (!) ॐCn यत्रवै यत्प्रणायं यत्प्रयतेस्तुमर्ये तवैप्रत्ययो वैदिकस्तकारल्लोपश्च ।ॐ

5 K5 om 5 (cf v l 4) B2 missing (cf. v l 3) — ^a) K1.2 B1.3 5 D5 T2 G2 यतोमुखे (or यतो मुखे), K3 मखे यतो, Dn1 D10 यत्र मुखे, D9 यतो हुतो, G3 यतो मखै°, Ca s यतोमुख (for °मुखैर्) K4 B4 Dn2 D1–4 6–8 कृत यतो हुत हव्य — ^b) K1.2 सर्वतोमुख — ^c) T2 G2 3.5 यत्र (for एतद्) — ^d) D5 D7 त्रिदिवस्य (for दिवसस्य) T2 G2 गताध्वन°

6 K5 om 6 (cf v l 4) B2 missing (cf v l 3) — ^a) K3 4 B (B2 missing) Dn D8 4.6–10 M2 5 अत्र, D5 तत्र (for यत्र) M1 प्रजाता (for प्रसूता) S ता (for वै) — ^b) K1–3 Dn D8 G1 2 दाक्षायिण्य°, Ca n s दाक्षायण्य° (as in text) G3 5 तथा, Ca s प्रजा° (as in text) — ^c) K1.2 B3 D (except Dn D1) अस्यां (for यस्यां) S (except G3.5) प्रवृत्ताश्च (M1 inf lin as in text) — ^d) S (mostly) काश्यपस्य

7 K5 om 7 (cf v l 4) B2 missing (cf. v l. 3) — ^a) K3.4 B D (except D1) अतो- (for यतो) N (except D1, K5 om , B2 D5 missing) G3.4 M4 मूल (for -मूला) T2 m यतो देवासुराणा श्री — ^b) D2–4.9 T2 G2 भि(D2 -भ्य)षिच्यते (for ऽभ्यषिच्यत) — ^d) D1 T2 G2 अपि (for अत्र) K3 D8 T2 G2 तपस्विभि° (for °श्चितम्)

8 K5 om 8 (cf v l 4) B2 missing (cf v l 3) — ^b) K3 D52 G2 पूर्वतमे, D1 पूर्वं कृते (for °तरे) D7 कल्पे (for काले) — ^d) B1 3 4 Dn2 D5 पूर्वमेवा°

9 K5 om 9 (cf v l 4) B2 missing (cf v l 3) — ^a) K1 2 D7 10 T1 G1.4 हि (for च) K3 B4 M3–5 सर्वे° (for पूर्वे°) — ^b) K1.2 अवेक्षता, K4 B (B2 missing) Dn D5 D8 4.6–10 प्रचक्षते, G4 अवेक्षिता, a few MSS अपेक्षता (for अवेक्षताम्) K3 D2 पूर्वं (D2 °र्वा) सा समवेक्षिता°, D1 पूर्वाशां समवेक्ष्यतां — ^c) K1.3.4 B5 Dn2 D5 D1–4.7 8 T G पूर्वं (T1 G4 सर्व-) कार्याणि, B1.4 Dn1 पूर्वं सर्वाणि — ^d) S ईप्सता

10 K5 om 10 (cf. v l 4) B2 missing (cf v.l.

C. 3770 B. 5. 108. 10 K. 5. 108. 10

अत्रैवोक्ता सवित्रासीत्सावित्री ब्रह्मवादिषु ॥ १०
अत्र दत्तानि सूर्येण यजूंषि द्विजसत्तम ।
अत्र लब्धवरैः सोमः सुरैः क्रतुषु पीयते ॥ ११
अत्र तृप्ता हुतवहाः स्वां योनिमुपभुञ्जते ।
अत्र पातालमाश्रित्य वरुणः श्रियमाप च ॥ १२
अत्र पूर्वं वसिष्ठस्य पौराणस्य द्विजर्षभ ।
सूतिश्चैव प्रतिष्ठा च निधनं च प्रकाशते ॥ १३
ॐकारस्यात्र जायन्ते सूतयो दशतीर्दश ।
पिबन्ति मुनयो यत्र हविर्धाने स्म सोमपाः ॥ १४
प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने ।
शक्रेण यत्र भागार्थे दैवतेषु प्रकल्पिताः ॥ १५
अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये ।
उदयंस्तान्हि सर्वान्वै क्रोधाद्धन्ति विभावसुः ॥ १६
एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च ।
एष पूर्वो दिशाभागो विशावैनं यदीच्छसि ॥ १७
प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः ।
ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम् ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

---

3) — [a]) K1-3 D7 10 transp वेदान् and पूर्वं T2 G2 वेद (for वेदान्) — [b]) G3 5 लोकपावन — [c]) K2 सा, D3 4-9 हि (for [आ]सीत्)

11 K5 om 11 (cf v l 4) B2 missing (cf v l 3) — [c]) K1 2 दत्तवरैः, K4 B D (except D2. 10) लब्धवर॰, G3 5 लब्ध. सुरैः — [d]) S सुत (for सुरैः)

12 K5 om 12 (cf v l 4) B2 missing (cf v l 3) — [a]) T1 G1 तप्त्वा (for तृप्ता) — G1 om from 12[c] up to the end of the present adhy — G4 reads 12[c]-15[b] after 18 — [c]) M आपः (for अत्र) — [d]) D3 D7 प्रियम् (for श्रियम्) T2 G2 अश्नुते (for आप च)

13 K5 G1 om 13 (cf v l 4, 12) B2 missing (cf v l 3) For transp in G4, cf v l 12 — [a]) A few MSS वशिष्ठस्य — [cd]) S (G1 om) प्रसूतिश्च (for सूतिश्चैव), and धर्मश्चैव (for निधनं च) Ca cites प्रसूति

14 K5 G1 om. 14 (cf v l 4, 12) B2 missing (cf v l 3) For transp in G4 cf v l 12 — [a]) K3 ओंकारेभ्य॰, G3 ओंकाराद् B1 3 4 D2-4 9 गीयते (for जायन्ते) — [b]) K4 B1 4 5 Dn D2 (before corr ) 3 4 6 9 M2 5 सूतय॰ (D2 by corr श्रुतय॰), B3 मूर्त॰, G4 स्मृत॰, Cs सूत॰ (as in text) — [d]) K4 B (B2 missing) D (except D5 D1 2 8) हविर्धूमं T2 G2 4 M2 अत्र, M5 सु- (for स्म) K4 B (B2 missing) Dn D6 8 धूमपा॰

15 K5 G1 om 15 (cf v l 4, 12) B2 missing (cf v l 3) For sequence in G4 of v l 12 — [a]) T G (G1 om ) येन (for यत्र) — [b]) K1 3 D3 4 7 9 10 transp मृगा॰ and वने — G4 om 15[cd] — [c]) K4 B (B2 missing) Dn D3 D6 7 10 यज्ञ (for यत्र) D3 4 G4 5 भागार्थं, M ॰र्था (for ॰र्थे)

16 K5 G1 om 16 (cf v l 4, 12) B2 missing (cf. v l 3) — [b]) K2 D5 D8 G4 सुरा॰, Cs असुरा॰ (as in text) — [c]) T G2 तु (for हि) D3 4 9 सर्वार्थे॰ (for सर्वान्वै)

17 K5 G1 om 17 (cf v l 4, 12) B2 missing (cf v l 3) — [a]) K3 तु स्वर्ग॰ (for त्रिलोक॰) — [b]) K3 लोक॰, D1 2 पूर्व॰ (for स्वर्ग॰) — [c]) K3 B1. 3 D3 4 7 9 10 G3 M1 3-5 दिशो; K4 B4 5 Dn D5 D1 2 6 8 T1 G4 5 दिशा (for दिशा), cf v l 5 109 23[a] T2 G2 एष पूर्वदिशो भाग — [d]) K3 T G2 3 5 विश च; K4 Dn D5 D6 8 10 विशाव॰, B1 3 D2-4 9 गच्छाव, Cs विशाव (as in text) K1 2 एत, K4 B (B2 missing) D (except D1) अत्र (for एन). K2 D2-4 7-9 G3 4 यद् (for यदि) K1 ईप्ससि (for इच्छसि)

18 K5 G1 om 18 (cf v l 4, 12) B2 missing (of v l 3) For sequence in G4, cf v l 12 — [b]) D3 4 9 अस्ति (for अस्मि) — [d]) K1-3 D5 D7 10 M1 (*inf lin* ) 2 वा (for च) K1-3 D7 10 दक्षिणा (for [अ]प्यपरा)

Colophon missing in B2 D5, K5 G1 4 om it — *Sub-parvan* K3 D5 T1 भगवद्यान, to it K3 D5 add गालवचरित K1 2 4 B1 3-5 Dn D2 6-8 10 G5 M3-5 (all om sub-parvan name) mention only गालवचरित (K1 2 ॰वाख्यान, D10 G5 ॰वोपाख्यान) — *Adhy name* T1 पूर्वदिक्कथन, G5 पूर्वदिक्प्रशंसा, M1 2 गालवपूर्वदिग्वर्णन, M3-5 पूर्वदिग्वर्णन — *Adhy no* (figures, words or both) D6 99, D7 M1-3 5 109, T G2 5 110, G3 M4 108 — *S'loka no* Dn D5 18

## १०७

सुपर्ण उवाच ।
इयं विवस्वता पूर्वं श्रौतेन विधिना किल ।
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यतेऽथ दिक् ॥ १
अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः ।
अत्रोष्मपानां देवानां निवासः श्रूयते द्विज ॥ २
अत्र विश्वे सदा देवाः पितृभिः सार्धमासते ।
इज्यमानाः स्म लोकेषु संप्राप्तास्तुल्यभागताम् ॥ ३
एतद्द्वितीयं धर्मस्य द्वारमाचक्षते द्विज ।
त्रुटिशो लवशश्चात्र गण्यते कालनिश्चयः ॥ ४
अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा ।
तथा राजर्षयः सर्वे निवसन्ति गतव्यथाः ॥ ५
अत्र धर्मश्च सत्यं च कर्म चात्र निशाम्यते ।
गतिरेषा द्विजश्रेष्ठ कर्मणात्मावसादिनः ॥ ६
एषा दिक्सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते ।
वृता त्वनवबोधेन सुखं तेन न गम्यते ॥ ७
नैरृतानां सहस्राणि बहून्यत्र द्विजर्षभ ।
सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ॥ ८
अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च ।
गन्धर्वा गान्ति गाथा वै चित्तबुद्धिहरा द्विज ॥ ९
अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः ।
गतदारो गतामात्यो गतराज्यो वनं गतः ॥ १०
अत्र सावर्णिना चैव यवक्रीतात्मजेन च ।

C. 5. 3789
B. 5. 109. 11
K. 5. 109. 11

### 107

☞ K5 om. this adhy (cf v l 5 106 4)

1 1–13$^{c}$ missing in B2 (cf v l 5 106 3) T2 G2 3 गरुड, G5 श्रीनारद (for सुपर्ण उ°) — $^{b}$) K1 Dn D5 D1. 3. 4. 6 7 9 Ca s np स्रौवेण, D2 सौरेण (for श्रौतेन) — $^{d}$) K4 B D (except D1 2 7 10) T2 च (for ऽथ)

2 B2 missing (cf v l 1) — $^{b}$) D1 °लोक (for °पक्ष) — $^{c}$) K4 B D (except D5 D7 10) G4 ऊष्मपाणा — $^{d}$) D5 विनाश (for निवास)

3 B2 missing (cf v l 1) — $^{c}$) K1 D8 ईड्य°; G5 युज्य° (for इज्य°) Dn1 त्रि, D3. 4 9 च (for स्म) — $^{d}$) D52 स्वल्प°, D7 पुण्य° (for तुल्य ) — After 3, K4 D3 4 9 read 6

4 B2 missing (cf v l 1) Dn1 om 4 — $^{a}$) K4 B1 3 5 Cn देव° (for धर्म°) — $^{b}$) S (except G3 4) द्विजा D8 द्वारमाहुर्विचक्षणा — $^{c}$) D5 कोटिशो, D7 G5 त्रुटितो (for त्रुटिशो) D3 4 9 लवत (for लवश) B5 Dn1 D51 D10 चापि, D2 मात्र, T1 G1 4 चैव (for चात्र) — $^{d}$) D7 कालनिश्चये, Cs प्राणनिश्चय, Ca as in text

5 B2 missing (cf v l 1) — $^{a}$) S दिव्या (for नित्य) — $^{b}$) D2 पितरो ऋषयस्तथा

6 B2 missing (cf v l. 1) K4 D3 4 9 read 6 after 3 — $^{a}$) K4 D3 4 transp धर्म and सत्य — $^{b}$) K4 B D निगद्य(D8 °गच्छ)ते, T2 G2 °यस्य°, M1(inf lin) 3–5 °शस्य°, M2 °गम्य° (for °शाम्य°) — D1 om (hapl ) 6$^{c}$–7$^{b}$, D6 om 6$^{c}$–7$^{d}$, D3 om (hapl.) 6$^{d}$–7$^{a}$ — $^{d}$) K4 Dn1 D3 4 9 कर्म चात्रा(K4 Dn1 °त्मा)वसायिना, B2 4 Dn2 कर्मणामवसायिना, B3 कर्मणोन्त्यावशायिन, D5 धर्म(D52 °र्मे)णात्मावसादिन , D10 कर्मणातावसादिना, M3–5 कर्मणात्मावसादिनां Ca s cite आत्मावसादिन (as in text)

7 B2 missing (cf v l 1) D1 om 7$^{ab}$, D6 om 7, D3 om 7$^{a}$ (cf v l 6) — $^{a}$) K1–3 D2 7 10 transp दिक् and सा B3 सात्विकश्रेष्ठ (for सा द्विज°). — $^{c}$) K1–3 B3 D3 वृतस्तु, Dn1 D2–4 9 कृत्वा तु, D5 कृतत्वे (for वृता तु) D (except Dn2 D1. 2 7, D6 om ) Cnp अनवरोधेन, Ca s अनवबोधेन (as in text) T1 G1 M मृतात्मना वा(T1 G1 M2 -व)बोधेन, T2 G3 4 मृतात्मानावबोधेन (T2 sup lin °तानामवबोधेन), G2 मृतात्मना नावबोधे, G5 मृताननवबोधेन — $^{d}$) D2 T G1 3 4 निगम्यते, G5 M अनु° (for न ग°)

8 B2 missing (cf v l. 1) — $^{c}$) T1 G1 2 दुष्टा°; T2 G3 5 M दृष्टा° (for सृष्टा°)

9 B2 missing (cf v l 1) — $^{a}$) K1–3 यत्र (for अत्र) K1–3 D7 10 G3 मदारकुञ्जेषु, T G1. 2 4 5 M मदरपुञ्जे(G4 °पूर्वे)षु, Cs as in text — $^{b}$) T2 G2 विप्राणा (for विप्रर्षि ) — $^{c}$) K1. 2 4 B3 D2–4 7 9 10 गाथा गायति गधर्वा, B1. 4 5 Dn D5 D1 6 8 गायति गाथा गधर्वा — $^{d}$) D3 4 9 मता (for द्विज)

10 B2 missing (cf v l 1) T2 om 10$^{a}$–18$^{b}$. — $^{a}$) K1 2 अथ, Cs अत्र (as in text)

11 B2 missing (cf v l 1) T2 om 11 (cf v l 10) — $^{c}$) M1(inf lin) 2 पूर्वं (for ब्रह्मन्)

C. 5. 3789
B. 5. 109. 11
K. 5. 109. 11

मर्यादा स्थापिता ब्रह्मन्यां सूर्यो नातिवर्तते ॥ ११
अत्र राक्षसराजेन पौलस्त्येन महात्मना ।
रावणेन तपश्चीर्त्वा सुरेभ्योऽमरता वृता ॥ १२
अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमीयिवान् ।
अत्र सर्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा ॥ १३
अत्र दुष्कृतकर्माणो नराः पच्यन्ति गालव ।
अत्र वैतरणी नाम नदी वितरणैर्वृता ।
अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते ॥ १४
अत्रावृत्तो दिनकरः क्षरते सुरसं पयः ।
काष्ठां चासाद्य धानिष्ठां हिममुत्सृजते पुनः ॥ १५
अत्राहं गालव पुरा क्षुधार्तः परिचिन्तयन् ।
लब्धवान्युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ ॥ १६
अत्र शक्रधनुर्नाम सूर्याज्जातो महानृपिः ।
विदुर्यं कपिलं देवं येनात्ताः सगरात्मजाः ॥ १७
अत्र सिद्धाः शिवा नाम ब्राह्मणा वेदपारगाः ।
अधीत्य सखिलान्वेदानालभन्ते यमक्षयम् ॥ १८
अत्र भोगवती नाम पुरी वासुकिपालिता ।
तक्षकेण च नागेन तथैवैरावतेन च ॥ १९
अत्र निर्याणकालेषु तमः संप्राप्यते महत् ।
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना ॥ २०
एष तस्यापि ते मार्गः परितापस्य गालव ।
ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु वा मम ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

12 B2 missing (cf v l 1) T2 om 12 (cf v l 10), B5 om 12^a–13^b — ^a) G5 M3–5 यत्र (for अत्र) — ^c) K1. 2 D8 कृत्वा, K3 D2–4 9 G3 M1 2 तप्त्वा, Dn1 G2 चर्या, D1 10 चिरवा, T1 G1 4 5 M4 चर्त्वा (for चीर्त्वा) — ^d) G2 [ऽ]वध्यता (for ऽमरता)

13 B2 resumes from 13^d (cf v l 1) B5 D8 om 13^ab (cf v l 12), T2 om 13 (cf v l 10) — ^ab) K1–3 D8 4 7 9 10 अत्र क्रतुशतेनेष्ट्वा शक्र शक्रत्वम् K3 Dn1 D2 7 S (except G3 M5, T2 om ) एयिवान् — ^d) T1 G1 4 यास्यति (for गच्छन्ति)

14 T2 om 14 (cf. v l. 10) D8 transp 14^ab and 14^cd — ^b) K3 D2 T1 G4 5 पश्यति (for पच्यन्ति) — ^d) Dn1 D5 D1 8–10 Ca s वैतरणे॰ (D10 °णे), G1 2 पितृगणै॰, Cn as in text K1 2 D2 नदी वैतरणा (D2 °णी) वृता

15 T2 om 15 (cf v l 10) — ^a) K1 B3 Dn1 D5 D7 8 10 आवृत॰, D2 (by corr) 3 4 9 आदित्य , D6 S (except M2 5, T2 om ) वृत्त॰, Ca n s आवृत्त॰ (as in text) — ^b) K4 B Dn D1 2 6 (by transp ) सुरसं क्षरते, D5 D8 सुरमं रक्षते, D3 4 9 सुरमं किरते — ^c) K1–3 D7 10 om च B1 4 वा निष्ठा, B2 5 D6 निष्ठा हि, B3 D2–4 Cn वासिष्ठीं, Dn D1 9 वासिष्ठा, Ca s धानिष्ठां (as in text)

16 T2 om 16 (cf v l 10) — ^c) K1–3 D1 7 10 तौ (for द्वौ)

17 T2 om. 17 (cf v l 10) — ^a) K4 B D (except D1 10) च(D7 व)क्र॰ (for शक्र॰) — ^b) G3 महाप्राज्ञो (for सूर्या॰) G2 महाद्युति (for °नृपि॰) — ^d) B (except B2) D1 7 G1 M आर्ता॰, D10 T1 G3 5 अस्ता:, Ca अत्ता॰ (as in text)

18 T2 om 18 (cf v l 10) — ^a) B1–3 D (except Dn1 D5 D1) सिद्धा — ^b) B1–3 D2–10 ब्राह्मणी वेदपारगा — ^c) K3 D1 2 चाखिलान्, K4 B Dn D3 4 9 सक॰, D7 S (T2 om ) निखि॰ (for सखि॰) — ^d) K3 नापश्यत, D1 नालभन्वै, G3 5 M अलभत (M2 अभजत) (for आलभन्ते) K4 B1 5 Dn लेभिरे मोक्षमक्षय, B1–3 D5 D2–4 6–10 लेभे स्व देहमक्षय

19 T2 om 19^ab (cf v l 10) — 19^ab = (var ) 5 101 1^ab — After 19^ab, T1 *repeats* 5 101 1^cd (v l पुर॰ for पुरी॰) — ^c) K1 2 D7 10 (marg *sec m* ) नदकेन (for तक्षकेण) — ^d) K1 2 D7 10 च (for एव). G2 ऐरावणेन

20 ^a) K1 2 B3 D7 T1 G1 4 M1 2 °काले तु, K4 °कालेपि, D7 8 °काले हि, Ca °कालेषु (as in text) Cs cites निर्याणकाले — ^b) T2 G2 [ऽ]खिल (for महत्)

21 ^a) D1 तत्र, Cs तस्य (as in text) K3 D7 10 T G एष ते(G3 वै) ख्यापितो मार्ग॰ — ^b) K1–3 परिवापस्य, K4 B2 4 5 Dn D2–4 7 9 10 Cs °चार्यस्य, B1 3 D5 °चीयस्य, D1 (corrupt) °वानप्य, D6 8 °वारस्य; Ca °धार्यस्य — ^c) S ब्रूहि वै (G2 ब्रूयते) (for ब्रूहि मे). — ^d) K3 वाधुना, K4 B1 5 D (except D1 7 10) चापरां, B3 गालव (for वा मम)

Colophon missing in D5, K5 om it — *Sub-parvan* K3 B1 3 D1 G1 M1 2 भगवद्यान, followed by

## १०८

सुपर्ण उवाच ।

इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः ।
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च ॥ १
अत्र पश्चादहः सूर्यो विसर्जयति भाः स्वयम् ।
पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम ॥ २
यादसामत्र राज्येन सलिलस्य च गुप्तये ।
कश्यपो भगवान्देवो वरुणं स्माभ्यषेचयत् ॥ ३
अत्र पीत्वा समस्तान्वै वरुणस्य रसांस्तु षट् ।
जायते तरुणः सोमः शुक्लस्यादौ तमिस्रहा ॥ ४
अत्र पश्चात्कृता दैत्या वायुना संयतास्तदा ।
निःश्वसन्तो महानागैरर्दिताः सुषुपुर्द्विज ॥ ५
अत्र सूर्यं प्रणयिनं प्रतिगृह्णाति पर्वतः ।
अस्तो नाम यतः संध्या पश्चिमा प्रतिसर्पति ॥ ६
अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये ।
जायते जीवलोकस्य हर्तुमर्धमिवायुषः ॥ ७
अत्र देवीं दितिं सुप्तामात्मप्रसवधारिणीम् ।
विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ॥ ८
अत्र मूलं हिमवतो मन्दरं याति शाश्वतम् ।
अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ॥ ९
अत्र काञ्चनशैलस्य काञ्चनाम्बुवहस्य च ।
उदधेस्तीरमासाद्य सुरभिः क्षरते पयः ॥ १०
अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते ।
स्वर्भानोः सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ॥ ११
सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः ।
अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः ॥ १२
अत्र ध्वजवती नाम कुमारी हरिमेधसः ।
आकाशे तिष्ठ तिष्ठेति तस्थौ सूर्यस्य शासनात् ॥ १३
अत्र वायुस्तथा वह्निरापः खं चैव गालव । C. 5. 3814 B. 5. 110. 14 K. 5. 110. 14

---

गाल्वचरित (G1 °त्र) K1. 2 4 B2 4. 5 Dn Ds D2. 6–8 10 T1 G5 (all om sub-parvan name) mention only गालवचरित (K2 °वाग्यान, G. °वोपाख्यान) — *Adhy name* G5 दक्षिणदिक्प्रदशा, M दक्षिणादिग्वर्णन (M2 8 5 °न) — *Adhy no* (figures, words or both) D6 100, D7 G4 M1–3 5 110, T G1 2 6 111, G3 M4 109 — *S'loka no* Dn1 D3 21, Dn2 20

### 108

☞ K5 om. this adhy (cf. v l 5 106 4)

1 T2 G2 गरुड° (for सुपर्ण उ°) — [a]) T1 G1. 4 मा (for दिग्) K3 पश्चिमा (for दयिता) — [b]) D1. 7 वरुणस्य च, M2 °स्नेह

2 [b]) B1 5 Dn D1–4 9 गा, Cs भा (as in text) S भा(M1 भा)स्वजा (for भा स्वयम्) Ca cites भास्वय (= भासु + अय?) — [c]) S अय (T2 G2 च, M1 *inf lin* अभि- as in text)

3 [a]) K1. 2 यत्र (for अत्र) — [c]) S (and a few N MSS) काश्यप K1 D2 7 10 G2 3 6 देव (for देव°) — [d]) K1–3 D2–4. 7–9 च, T1 G1 4 हि (for स्म)

4 [a]) T1 G1. 4 तु (for वै) D3 4 9 अपि पीत्वा पयसान्वै· — [b]) K3 Ca च (for तु) D2 (*sup. lin.* as in text) 3 4 9 स्फुट (for तु षट्) — [c]) B3 Ds D2–4 8 9 T2 G2 वरुण° (for तरुण)

5 [a]) T1 G1 4 अस्य, T2 G2 अय (for अत्र) — [b]) T2 G2 M1. 2 समुता, M1 (*inf lin*) °हता (for °यता) K3 D3. 4 9 T G2 तया (for तदा) — [c]) G3 4 निवसंतो, M2 निश्वयंतो K1–3 यथा नागै, K4 B D (except D2) महावातै — [d]) D3 4. 9 मर्दिता; G3 वर्धिता (for अर्दिता)

6 [a]) S अत्र प्रलयिन (T2 G2 °त) सूर्य — B4 om 6[c]–9[d]

7 B4 om 7 (cf v l 6) — [a]) T2 G2 अत्र (for अतो) — [b]) T1 G1 निःसृता (for निर्गता)

9 K5 om 9[ab] (along with the whole of 8) B4 om 9 (cf v l. 6) — [ab]) T G (except G4) हि मस्तो (for हिमवतो), and याति (for याति) — [d]) D6 °गच्छति (for °गम्यते) D2–4 9 यस्यातो नाधिगम्यते

10 T2 om. (hapl ?) 10–16 — [b]) K1 2 Dn1 D3 (before corr ) °धरस्य, K3 4 B Dn2 D1–4 8 (by corr ) 9 10 G1. 2 4 °रुहस्य, Cs as in text — [c]) K1. 2 तीर्थम् (for तीरम्) — [d]) K1. 2 D10 सुरभी

11 T2 om 11 (cf. v l 10) — [b]) K4 Dn2 D6 8 प्रत्यदृश्यत

12 T2 om. 12 (cf v l 10) — [a]) D6 G6 सुपर्ण-

C. 5. 8314
B. 5. 110. 14
K. 5. 110. 14

आह्निकं चैव नैशं च दुःखस्पर्शं विमुञ्चति ।
अतः प्रभृति सूर्यस्य तिर्यगावर्तते गतिः ॥ १४
अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् ।
अष्टाविंशतिरात्रं च चङ्क्रम्य सह भानुना ।
निष्पतन्ति पुनः सूर्यात्सोमसंयोगयोगतः ॥ १५
अत्र नित्यं स्रवन्तीनां प्रभवः सागरोदयः ।
अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणाश्रयाः ॥ १६
अत्र पन्नगराजस्याप्यनन्तस्य निवेशनम् ।
अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमम् ॥ १७
अत्रानलसखस्यापि पवनस्य निवेशनम् ।
महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् ॥ १८
एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्तितः ।
ब्रूहि गालव गच्छावो बुद्धिः का द्विजसत्तम ॥ १९

इति श्रीमहाभारते उद्योगपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## १०९

सुपर्ण उवाच ।
यस्मादुत्तार्यते पापाद्यस्मान्निःश्रेयसोऽश्नुते ।
तस्मादुत्तारणफलादुत्तरेत्युच्यते बुधैः ॥ १
उत्तरस्य हिरण्यस्य परिवापस्य गालव ।
मार्गः पश्चिमपूर्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः ॥ २
अस्यां दिशि वरिष्ठायामुत्तरायां द्विजर्षभ ।

---

शिरस॰, Ca s as in text — d) T1 G1 4 विपुलध्वनि॰

14 T2 om 14 (cf v l 10) — a) M1 2 transp वायु॰ and वह्नि॰ — b) K3 4 B D चापि (for चैव) — d) K3 Dn1 दुःस्पर्शं च, Dn2 D1 9 G2 दुःख स्पर्शं, Ca s as in text — e) K1 2 तत॰ (for अत॰)

15 T2 om 15 (cf v l 10) — c) G5 °रात्रि च, M1 (inf lin as in text) °रात्रेण — d) Dn1 D2-4 9 संक्रम्य, D6 G1 चक्रम्य, G2 विक्रम्य (for चङ्क्रम्य) — e) T1 G1 तत॰, G2 तथा (for पुन॰) D1 पुन॰ सूर्यान्निष्पतति — f) K1-3 सोमयोगेन योगिन॰, Cs as in text

16 T2 om 16 (cf v l 10) — d) K4 B D (except D1 7) वरुणालये.

17 D9 om (hapl) 17, Dn D1 G2 om (hapl) 17c-18d, D7 om (hapl) 17c-18b

18 Dn D1 G2 om 18, D7 om 18ab (cf v l. 17) — b) D3 4 9 °स्य निकेतन — K3 om. (hapl) 18cd — K1 2 transp 18cd and 19ab. — c) S काश्यपस्य

19 a) K1.2 transp 18cd and 19ab D2 3 भागो (for मार्गो) — b) D1 विस्तरेण (for दिग्द्वा°) — c) M (except M2) गच्छाव — After 19, K4 D2-4 8 9 ins

451* दिक्त्रय ते श्रुत ब्रह्मञ्शृणु चाप्युत्तरा दिशम् ।

Colophon missing in D5, K5 om it — *Sub-parvan* K3 B1 3 Dn T1 M1 2 भगवद्यान, followed by गालवचरित K1 2 4 B2 4 5 D3 D2 6-8 10 G1 5 M3-5 (all om. sub-parvan name) mention only गालवचरित (K1 G5 D10 °चोपाख्यान, K2 °वाख्यान) — *Adhy. name* G5 पश्चिमदिक्प्रशसा, M पश्चिमदिग्वर्णन — *Adhy no* (figures, words or both) D6 101, D7 G4 M1-3 5 111, T G1 2 5 112, G3 M4 110. — *S'loka no* : Dn1 19, Dn2 D3 20

### 109

☞ K5 om this adhy (cf v l 5 106. 4)

1 D1 T2 G2 गरुडः (for सुपर्ण उ°) — After the ref, D7 reads 5-6 — a) K1 D1 8 उत्तीर्यते — b) S (except M3-5) निश्रेयसं. T G चरेत्; M च ते (for अश्नुते) — c) K4 B (except B2) Dn D7 10 अस्माद्; D3 T2 (inf lin as in text) यस्माद् (for तस्माद्). K3 4 B D (except D7) उत्तारणबलात् — d) K4 B D (except D1 2 7 10) द्विज (for बुधै॰)

2 D3 om 2ab — a) K1 2 D7 10 (sup lin as in text) हि रम्यस्य; D2 [अ]भिराम°, T G3 5 M1 (inf lin) हि पुण्य° (for हिरण्य°) Cs cites रम्यस्य — b) K4 D2-4 9 °वर्षस्य, B2 4 °वापश्च, Dn °वार्यस्य, D7 °चार्यस्य, T G2 M1 (inf lin) °पाल्यस्य, G1 3-5 °पालस्य, M3 (inf lin as in text) 4 5 °पाकस्य, Ca s °वापस्य (as in text) Cn cites परिवाप॰

3 a) B2 S (except G1) तस्यां (for अस्या) D3 वरिष्ठायाः, D10 विशिष्टाया — b) K4 D2-4. 9 T G1 2 4 उत्तरस्या (D2 °स्य) — d) K4 B D (except D1 7) T2 G (except G5) °धर्मो (for °धर्म्यो) D3 D6 10 विशते (for

उष्णम्यो नाविधेयात्मा नाधर्म्यो वसते जनः ॥ ३
अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः ।
बदर्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ॥ ४
अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः ।
अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यपिच्यत ॥ ५
अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम् ।
प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम ॥ ६
अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया ।
अत्र कामश्च रोषश्च शैलश्चोमा च संबभुः ॥ ७
अत्र राक्षसयक्षाणां गन्धर्वाणां च गालव ।
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः ॥ ८
अत्र चैत्ररथं रम्यमत्र वैखानसाश्रमः ।
अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ ॥ ९
अत्र सौगन्धिकवनं नैरृतैरभिरक्ष्यते ।
शाड्वलं कदलीस्कन्धमत्र संतानका नगाः ॥ १०
अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम् ।
विमानान्यनुरूपाणि कामभोग्यानि गालव ॥ ११
अत्र ते ऋषयः सप्त देवी चारुन्धती तथा ।
अत्र तिष्ठति वै स्वातिरत्रास्या उदयः स्मृतः ॥ १२
अत्र यज्ञं समारुह्य ध्रुवं स्थाता पितामहः ।
ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः ॥ १३
अत्र गायन्तिकाद्वारं रक्षन्ति द्विजसत्तमाः ।
धामा नाम महात्मानो मुनयः सत्यवादिनः ॥ १४
न तेषां ज्ञायते सूतिर्नाकृतिर्न तपश्चितम् ।

C. 5. 3837
B. 5. 111. 17
K. 5. 111. 17

---

वसते)

4 $^{b}$) D7 8 G2 3 6 M (except M1) विष्णु (for जिष्णु) D1 नरर्षभ (for नरोत्तम) — $^{c}$) T2 G2 यदर्याश्चाश्रमपदे; G5 बदरीकाश्रमपदे — $^{d}$) T2 G1. 2 तौ च (for तथा) D10 [अ]पि (for च) S ब्रह्म (G4 ब्रह्मा) च शाश्वतं

5 D7 reads 5 after the ref (cf v l. 1) — $^{a}$) B1. 8 D2 10 S अत्रैव (for अत्र वै) — After $5^{ab}$, K4 B D (except D1. 7) ins

452* प्रकृत्या पुण्य माधं युगान्ताभिमप्रभ ।
न स दृश्यो मुनिगणैस्तथा देवै सवासवै ।
गन्धर्वयक्षसिद्धैर्वा नरनारायणास्ते ।
अत्र विष्णु सहस्राक्ष सहस्रचरणोऽव्यय ।
सहस्रशिरस श्रीमानेक पश्यति मायया ।

On the other hand after $5^{ab}$, S reads 7 — $^{c}$) D2 अत्र राजा द्विजेन्द्राणा — $^{d}$) D2 T2 G2 4 अभिषिच्यत (G4 °ते).

6 For sequence of D7 cf v l 1 — $^{b}$) B5 D8 9 G2 गगनच्युतां — $^{c}$) D3 4 6 T2 (inf lin as in text) ततो (for ददौ) — $^{d}$) K1 Dn2 D3 D10 T G1 2 ब्रह्मवित्तमः

7 S reads 7 after $5^{ab}$ — $^{b}$) B1. 8 °प्रतीक्षया, D1 °परीच्छया, D2 G4 M2 °परीप्सया — T2 om. $7^{cd}$ — $^{d}$) T1 G1 2 4 शैला Dn1 D6 वशं ययु, G5 च वै वसु (for च संबभु) Ca cites संबभु (as in text)

8 $^{ab}$) S अत्र राक्षसगंधर्वयक्षाणा चैव गा° — $^{c}$) K1 2 D7 अ(K1 आ)धिराज्येन (for आधिपत्येन) Some N MSS कैलाशे — $^{d}$) K1. 2 D7 च (for अपि) D2 T2 G2 अभ्यषिच्यत (for अभिषे°)

9 $^{a}$) D2. 4. 7 9 10 G4 दिव्यम् (for रम्यम्) — $^{b}$) K4 D6 8 अनु (for अत्र) K1. 2 D1. 7 9 10 T2 G5 M3-5 °श्रमा — T2 om. $9^{cd}$. — $^{c}$) K1-3 D7 10 नाम (for चैव)

10 $^{b}$) S दैवतैर् (for नैरृतैर्) G6 M1 (inf lin as in text) 2 °पिच्यते (for °रक्ष्यते) — T2 om $10^{c}$–$12^{d}$. — $^{c}$) K4 B D1-4 6 9 G1 M2 Cn शाड्वल S (except G4, T2 om ) कदलीस्पर्श (G2 °षड) — $^{d}$) B8 संतानका गणा; D8 D3 °कामगा, G3 °कानन

11 T2 om. 11 (cf v l 10) — $^{a}$) S (T2 om.) अत्र संयमस्य निष्ठति — $^{d}$) = $15^{d}$ K1. 2 B1. 8 D1-4. 7-9 M (except M2) °भोज्यानि

12 T2 om. 12 (cf v l 10) — $^{a}$) K2 ते मुनय, T1 G1. 2 देवर्षय (for ते ऋषय) — $^{c}$) T1 M3-5 तिष्ठति S (T2 om ) वैरात्र (M2 °ज्य) (for वै स्वाति) — $^{d}$) K1-3 D1. 2 अ(D2 य)त्रास्योदय उच्यते, T1 G1. 2 4 M न चात्रा(M3-5 चाद्या)प्यवतिष्ठति, G3 5 दिवात्राप्यव(G5 °धि)तिष्ठते

13 $^{a}$) D2-4 9 यज्ञान् K4 B2 D (except D2 7) °माद्य (for °रुह्य) — $^{c}$) S ज्योतींपि चद्रमा सूर्य

14 T2 om. (hapl ) 14–22 — $^{a}$) K4 B2 D2-4 9 Cn गगामहाद्वार, B1. 3-5 Dn D6 10 T1 G M1 (inf lin ) गायति गाधार, Cs np as in text Ca cites गान्धार. — $^{b}$) K4 B D (except D8 10) °सत्तम — $^{c}$) B1 3 4 T1 G धात्रमाना, B2 Dn1 D6 8 कामा नाम (for धामा

C 5 3838
B 5. 111 18
K 5. 111 18

परिवर्तसहस्राणि कामभोग्यानि गालव ॥ १५
यथा यथा प्रविशति तस्मात्परतरं नरः ।
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव ॥ १६
न तत्केनचिदन्येन गतपूर्वं द्विजर्षभ ।
ऋते नारायणं देवं नरं वा जिष्णुमव्ययम् ॥ १७
अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत् ।
अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश ॥ १८
अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम् ।
त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम् ॥ १९
अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम ।
उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः ॥ २०
जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः ।
साक्षाद्धैमवतः पुण्यो विमलः कमलाकरः ॥ २१
ब्राह्मणेषु च यत्कृत्स्नं स्वन्तं कृत्वा धनं महत् ।
वव्रे वनं महर्षिः स जैमूतं तद्वनं ततः ॥ २२
अत्र नित्यं दिशापालाः सायं प्रातर्द्विजर्षभ ।
कस्य कार्यं किमिति वै परिक्रोशन्ति गालव ॥ २३
एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा ।
उत्तरेति परिख्याता सर्वकर्मसु चोत्तरा ॥ २४
एता विस्तरशस्तात तव संकीर्तिता दिशः ।
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि ॥ २५
उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं दिशः ।
पृथिवीं चाखिलां ब्रह्मंस्तस्मादारोह मां द्विज ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

---

नाम)

15 T2 om. 15 (cf v l 14) — a) D7 M1 जायते (for ज्ञायते) K1 2 भूति, K3 4 B (except B2) D (except Dn1 D5 D6) Cn मूर्ति (for सूति) — b) K1 2 Dn1 D5 D6 7 10 Cs ap कृति, B3 G2 कृत, D1 क्षति, Ca चिति; Cn आकृति (as in text) K1-3 D6 8 तपस्विनां, T1 G (except G5) तु (G2 च) पश्चिम (for तपश्रितम्) — c) K3 B (except B5) Dn1 D2-4 G3 4 Cn परिवर्त सहस्राणि — d) =11d K3 B Dn1 D1-4 6 M3-5 Cn °भोज्यानि, G2 °भोगानि

16 T2 om 16 (cf v l 14) — a) D2-4 6 वै (for प्र) — d) D2 मानव (for गालव).

17 T2 om 17 (cf v l 14) — a) K4 B2 4 5 D (except D1-4 6) एतत्, M तु (for तत) — d) B1 3 वरद (for नर वा) B1 3 S (T2 om) विष्णुम् (for जिष्णुम्) K4 D3 4 6 अच्युत (for अव्ययम्)

18 T2 om 18 (cf v l 14). — a) K1 2 4 D1 कैलास, a few N MSS कैलाश — b) B1 2 D2 S (T2 om) च (for तत्) D7 स्थान रुद्रस्य शाश्वतं

19 T2 om 19 (cf v l 14) — b) B Dn D5 D1 6 क्रामता, M6 ऋतुना — c) K1-3 D7 10 G3 5 त्रैलोक्यविक्रमे, B3 5 त्रिलोकविक्रम

20 T2 om 20 (cf v l 14) — a) A few MSS मरतेन — b) G2 ईजे (for इष्ट) K1 2 D1 7 नगोत्तमे (for द्विजो°). — c) K1 2 °बीज, Ca.s as in text K1 2 D3 4 9 ब्रह्मर्षे.

21 T2 om 21 (cf v l 14) — a) M1 2 च (for [अ]त्र) D3 4.6 देवर्षेर् (for विप्रर्षेर्) — b) G3 M1 3 (inf lin) उपस्थान, G5 अवस्थानं (for उपतस्थे) — c) K1-3 D5 D7 G3 हिमवत, Cs as in text — d) K1-3 B2 4 5 D (except Dn1 D10) Cn 5 कनका° (D1 कानना°) (for कमला°)

22 T2 om 22 (cf v l 14) — a) K1 2 B5 D3 4 7 9 तत् (for यत्) — b) K4 D2-4 6 10 स्वर्ण, D3 स्वर्णी; D9 स्वस्ती; Ca 3 स्वन्त (as in text) — c) N (except D7, K6 om) धन (for वन). D2 (by corr) 3 4 6 तत् (for स) — d) K1 2 D1 G3 4 जीमूत K1 2 B D (except Dn1 D5 D6) G1 धन (for वन) G3 M1 (inf lin) गत (for तत)

23 a) K3 4 B Dn2 D5 D1 6 8 10 दिशां, D2-4 6 दिशा (for दिशा), cf v l 5 106. 17c

24 a) T1 G1 2 M1 एषा, T2 एतद् (for एषा) — b) K1 2 D7 10 दिव्यैर् (for अन्यैर्) — d) D1 सर्वकामसुखोत्तरा.

25 a) D5 G5 M1 2 विस्तरतस् — d) D7 10 दिशं, T2 G2 एभ्यो (for आशा) B4 D2 T2 G2 अर्हसि (for इच्छ°)

26 b) M3 4 (inf lin as in text) 5 संदर्शितु (for दर्शयितु) S जगत् (for दिश°).

Colophon missing in D5, K6 om it. — *Subparvan* K3 B1 3 D5 D8 T1 G1 M भगवद्यान, followed

# ११०

गालव उवाच ।
गरुत्मन्भुजगेन्द्रारे सुपर्ण विनतात्मज ।
नय मां तार्क्ष्य पूर्वेण यत्र धर्मस्य चक्षुषी ॥ १
पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्तिता ।
दैवतानां हि सांनिध्यमत्र कीर्तितवानसि ॥ २
अत्र सत्यं च धर्मश्च त्वया सम्यक्प्रकीर्तितः ।
इच्छेयं तु समागन्तुं समस्तैर्दैवतैरहम् ।
भूयश्च तान्सुरान्द्रष्टुमिच्छेयमरुणानुज ॥ ३
नारद उवाच ।
तमाह विनतासूनुरारोहस्वेति वै द्विजम् ।
आरुरोहाथ स मुनिर्गरुडं गालवस्तदा ॥ ४
गालव उवाच ।
क्रममाणस्य ते रूपं दृश्यते पन्नगाशन ।
भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ॥ ५
पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम् ।
प्रस्थितानामिव समं पश्यामीह गतिं खग ॥ ६
ससागरवनामुर्वीं सशैलवनकाननाम् ।
आकर्षन्निव चाभासि पक्षवातेन खेचर ॥ ७
समीननागनक्रं च खमिवारोप्यते जलम् ।
वायुना चैव महता पक्षवातेन चानिशम् ॥ ८
तुल्यरूपाननान्मत्स्यांस्तिमिमत्स्यांस्तिमिंगिलान् ।
नागांश्च नरवक्त्रांश्च पश्याम्युन्मथितानिव ॥ ९
महार्णवस्य च रवैः श्रोत्रे मे बधिरीकृते ।
न शृणोमि न पश्यामि नात्मनो वेद्मि कारणम् ॥ १०
शनैः साधु भवान्यातु ब्रह्महत्यामनुस्मरन् ।
न दृश्यते रविस्तात न दिशो न च खं खग ॥ ११

C 5 3861
B 5. 112. 11
K 5 112. 11

---

hr गालवचरित K1-4 B1-4 Dn D1 2 6 7 10 G3 (all om sub-parvan name) mention only गालव चरित — *Adhy name* D1 M उत्तरा(D1 M1 °र)-न्विवर्ण, T1 G1 दिग्विभाग, G3 उत्तरदिक्प्रशंसा — *Adhy no* (figures, words or both) D3 2 (=102), D1 G1 M1-3 112, T G2 3 113, G3 M4 111 — *S'loka no* Dn 28

## 110

1 K6 om $1^{a}$–$3^{d}$ (cf v l 5 106 1)

2 K6 om 2 (cf v l 1) — $^{a}$) B3 Dn D1 8 9 S (except T2 G3 M3) पूर्वम् S गत्र (for एतां) — $^{b}$) D7 T2 G2 °वर्णिता (for °कीर्तिता) D5 om (hapl) $2^{c}$–$3^{b}$ — $^{c}$) Dn* D3 D2-4 8 T1 G M2-5 दैवताना (as in text), the rest दे° K1 2 च (for हि) T2 सदैवताना सांनिध्य

3 K6 om $3^{abcd}$ (cf v l 1), D9 om $3^{ab}$ (cf v l 2) — $^{a}$) T1 G1 4 M1 2 transp सत्य and धर्म — $^{b}$) K2 D1 2 6 7 10 प्रकीर्तित, B1 2 D3 4 T G1 3 5 M °तौ (M1 °त); Dn2 D8 G2 3 °ता — $^{c}$) K1 2 B D2-4 7 8 10 च, T2 G1 2 तै (for तु) — B2 om $3^{d}$–$5^{c}$

4 B2 om 4 (cf v l 3), K6 om $4^{bcd}$ — $^{b}$) T1 G1 4 स (for वै) K1 D1 7 8 G3 5 M3 5 द्विज — $^{d}$) T2 G (except G2) तत्र (for तदा)

5 B2 om $5^{abc}$ (cf v l 3) — $^{a}$) T1 G1 4 वै (for ते)

6 D5 om $6^{ab}$, D1 om $6^{c}$–$7^{d}$ — $^{c}$) T1 G1 4 स्वा वै (for समं) — $^{d}$) T1 G1 4 संपश्यामि (for पश्यामीह) K4 D2-4 9 गतीः (for गतिं)

7 D1 om 7 (cf v l 6) — $^{b}$) = 1 58 $11^{d}$. K1 2 5 D8 10 °पत्तना

8 K6 om $8^{ab}$ — $^{a}$) Dn1 D10 °नागचक्र च (D10 तु) — $^{d}$) K1 वा, D2-4 8 9 ते (for च) T1 G1 4 वै भृश (for चानिशम्)

9 $^{a}$) K1-3 6 D1 7 10 शैलरूपानना(D7 °पाश्च ता)न्मत्स्यान्, K4 B5 D2-4 9 तुल्यरूपानिमा(B6 °पधरा)न्मत्स्यान् — $^{b}$) D1 तिमिरूपान् (for °मत्स्यान्) K4 B (except B5) Dn D4 D6 8 10 T1 तथा तिमितिमिंगिलान् — $^{c}$) G5 मीनाश्च K1 2 Dn1 नगवक्त्राश्च, T2 G2 5 नरच(G5 °न)क्राश्च K3 4 B D1-4 6 10 G1 4 नागाश्वनर(D2-4 °तर, D10 °नत)वक्त्राश्च K6 D7 नागाश्वतरच(D7 °न)क्राश्च; D5 D8 नागाश्वरथ(D8 °नर)चक्राश्च

10 $^{b}$) B6 श्रोत्र मे, S कर्णौ मे B6 S बधिरीकृतौ (B5 °त), Dn D1 बधिरे कृते

11 $^{a}$) N (except K1 2 D8) G3 4 स तु (for साधु) — $^{b}$) K4 B D (except D1 2 7 10) Cs ब्रह्मवध्याम् D3 4 9 अतिस्मरन्, Cs as in text

12 K6 om (hapl) $12^{d}$–$13^{c}$. ❀Cn मणी चेति

C. 5. 3862
B. 5. 112. 12
K. 5. 112. 12

तम एव तु पश्यामि शरीरं ते न लक्षये ।
मणीव जात्यौ पश्यामि चक्षुषी तेऽहमण्डज ॥ १२
शरीरे तु न पश्यामि तव चैवात्मनश्च ह ।
पदे पदे तु पश्यामि सलिलादग्निमुत्थितम् ॥ १३
स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः ।
तन्निवर्त महान्कालो गच्छतो विनतात्मज ॥ १४
न मे प्रयोजनं किंचिद्गमने पन्नगाशन ।
संनिवर्त महावेग न वेगं विषहामि ते ॥ १५
गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनाम् ।
एकतःश्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् ॥ १६
तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज ।
ततोऽयं जीवितत्यागे दृष्टो मार्गो मयात्मनः ॥ १७
नैव मेऽस्ति धनं किंचिन्न धनेनान्वितः सुहृत् ।
न चार्थेनापि महता शक्यमेतद्व्यपोहितुम् ॥ १८

नारद उवाच ।

एवं बहु च दीनं च ब्रुवाणं गालवं तदा ।
प्रत्युवाच व्रजन्नेव प्रहसन्विनतात्मजः ॥ १९
नातिप्रज्ञोऽसि विप्रर्षे योऽऽत्मानं त्यक्तुमिच्छसि ।
न चापि कृत्रिमः कालः कालो हि परमेश्वरः ॥ २०
किमहं पूर्वमेवेह भवता नाभिचोदितः ।
उपायोऽत्र महानस्ति येनैतदुपपद्यते ॥ २१
तदेष ऋषभो नाम पर्वतः सागरोरसि ।
अत्र विश्रम्य भुक्त्वा च निवर्तिष्याव गालव ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

इवार्थे वशब्द॰ ।⁂

13 K5 om 13^abc (cf v l 12) — ^a) K3 4 B1 2 4 D (except D3 D10) शरीर B2 M4 transp. तु and न — D7 om (hapl) 13^bc — ^c) D8 S च (for तु) — ^d) K4 Dn D6 शरीरा॰ (for सलिला॰)

14 ^c) K4 5 B D (except D1) तन्नियच्छ (K5 ॰वर्त) महावेग — K5 om 14^d. — ^d) K4 B D गमने (D1 व्रजतो) (for गच्छतो).

15 ^c) K1 2 5 G5 M4 तन्निवर्त, K3 Dn D10 निवर्तस्व, Cn as in text K3-5 B Dn Ds D2-5 8-10 महाभाग, D1 ॰बाहो, D7 T2 G2 3. 5 ॰वेग — ^d) K5 ममैषा विहिता मति

16 ^a) B3 गुरौ प्रतिश्रुतानीह; B4 गुरवे प्रतिश्रुतानीह (hypermetric!), T G (except G5) गुरोर्मया श्रुतानीह — ^b) K1 2 D10 T1 G1 4 च (for हि)

17 ^a) T1 G4 एषा (for तेषा) D1 om च — ^c) K5 D2-4 7 9 मे (for ऽय) — ^d) K5 Ds1 D1 7-9 [ऽ]यम्, D2-4 मम (for मया) S (except G3) द्विज (for [आ]त्मन ).

18 ^a) K1 2 D10 च; Dn2 वै (for एव) — ^b) K1 2 5 गमने पन्नगाशन

19 B Ds D1 2 3 G3 om the ref — ^a) K D (except Dn2 Ds D1) एवं बहुविध दीन — ^b) T2 G3 4 तथा (for तदा) — ^d) T1 G1 4 प्रसभ D7 S (except G3-5) विनतासुत

20 ^a) K5 M2 नातिप्राज्ञो. — ^b) K5 G2 आत्मानं (for योऽऽत्मान) — ^d) K4 G2 [ऽ]पि (for हि)

21 ^a) K1 2 5 D7 9 इद (for अह) K5 D7 अह, Dn1 इद (for इह) — ^b) D8 च; G4 वा (for न) K3 5 D8 [अ]भिनोदित॰, B2 [अ]तिचोदित॰; D3 4 9 प्रचो॰, T G1 2 4 [अ]पि चो॰, Cs as in text. — ^c) D3 4 9 T2 G2 transp अत्र and अस्ति

22 ^a) D3 4 9 अत्र (for तद्) B3 D2 एव, G1 एतद् (for एष) T1 G5 वृषभो — ^b) K3 सागरांभसि; K4 B Dn Ds D3-6 8-10 ॰रान्तिके, D1 ॰रोपरि — ^c) T2 G2 M3-5 विश्राम्य — ^d) K5 D7 निवर्तिष्याम

Colophon missing in D5 — *Sub-parvan* K3 B1 3 Dn1 T2 M1 2 भगवद्यान, to it all except T2 add गालवचरित K1 2 4 5 B2 4 5 Dn2 Ds D1-4 6-10 G1 5 (all om sub-parvan name) mention only गालव॰ चरित — *Adhy name* G5 वृषभदर्शन, M गालवविश्रम॰ — *Adhy no.* (figures, words or both) D6 3 (=103), D7 T2 G4 M1-3 5 113, T1 G1 2 6 114, G3 M4 112 — *S'loka no* K5 28, Dn 22, D8 23.

**111**

1 ^a) K4 B (except B5) Dn Ds D6 10 M2 शृग (for शृङ्गे)

2 ^a) K3 M1 च (for तु) — ^b) K5 D6 G3 अभि॰ पूजिता; Ds अभिवाद्य तां — ^d) D3 4 9 T G5 ॰निषेदतुः

## १११

नारद उवाच ।
ऋषभस्य ततः शृङ्गे निपत्य द्विजपक्षिणौ ।
शाण्डिलीं ब्राह्मणीं तत्र ददृशाते तपोन्विताम् ॥ १
अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम् ।
तया च स्वागतेनोक्तौ विष्टरे संनिषीदतुः ॥ २
सिद्धमन्नं तया क्षिप्रं बलिमन्त्रोपबृंहितम् ।
भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावन्नमोहितौ ॥ ३
मुहूर्तात्प्रतिबुद्धस्तु सुपर्णो गमनेप्सया ।
अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः ॥ ४
मांसपिण्डोपमोऽभूत्स मुखपादान्वितः खगः ।
गालवस्तं तथा दृष्ट्वा विषण्णः पर्यपृच्छत ॥ ५
किमिदं भवता प्राप्तमिहागमनजं फलम् ।
वासोऽयमिह कालं तु कियन्तं नौ भविष्यति ॥ ६
किं नु ते मनसा ध्यातमशुभं धर्मदूषणम् ।
न ह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति ॥ ७
सुपर्णोऽथाब्रवीद्विप्रं प्रध्यातं वै मया द्विज ।
इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः ॥ ८
यत्र देवो महादेवो यत्र विष्णुः सनातनः ।
यत्र धर्मश्च यज्ञश्च तत्रेयं निवसेदिति ॥ ९
सोऽहं भगवतीं याचे प्रणतः प्रियकाम्यया ।
मयैतन्नाम प्रध्यातं मनसा शोचता किल ॥ १०
तदेवं बहुमानात्ते मयेहानीप्सितं कृतम् ।
सुकृतं दुष्कृतं वा त्वं माहात्म्यात्क्षन्तुमर्हसि ॥ ११
सा तौ तदाब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ ।
न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज संभ्रमम् ॥ १२
निन्दितास्मि त्वया वत्स न च निन्दां क्षमाम्यहम् ।
लोकेभ्यः स परिभ्रश्येद्यो मां निन्देत पापकृत् ॥ १३
हीनयालक्षणैः सर्वैस्तथानिन्दितया मया ।
आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा ॥ १४
आचाराल्लभते धर्ममाचाराल्लभते धनम् ।
आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥ १५
तदायुष्मन्खगपते यथेष्टं गम्यतामितः ।

C 5. 3933
B 5. 113. 15
K. 5. 113. 17

---

3 [a]) $K_4$ B D (except $D_{1.2.10}$) दत्त (for क्षिप्रं) — [b]) $M_{1.2}$ दद° — [cd]) $T_1$ $G_{1.4}$ बुभुजाते दनौ भूमौ $D_2$ transp भूमौ and सुप्तौ $K_4$ B Dn सुप्तौ तावनु-मोहितौ, $D_{1.4}$ प्रसुप्तौ च मनाहितौ, S सुप्तौ चैव मनाहितौ

4 [b]) $D_{2.4.5}$ $T_1$ $G_{1.4}$ $M_2$ गमनेच्छया — After $4^{ab}$, $K_1$ (marg.) ins.

453* तां दृष्ट्वा चान्वर्वाङ्गीं तापसीं ब्रह्मचारिणीम् ।
प्रहीनु हि मनश्चक्रे रूपान्माक्षादिव श्रियम् ।

— $K_2$ om. from $4^{cd}$ up to the end of the present adhy.

5 $K_2$ om. 5 (cf. v.l. 4) — [a]) S transp अभूत् and स $K_3$ सोत्र (for अभूत्स) $K_4$ $B_{1.2}$ $D_{2-4.5}$ वा (for स) — [c]) $K_3$ $D_2$ तु (for त) $K_{1-3}$ $D_1$ T $G_{1-3}$ $M_1$ (inf. lin. as in text) तदा (for तथा) — [d]) $B_1$ $D_1$ $M_2$ (inf. lin.) विमना, $D_{3.5}$ $D_7$ विपर्ण° (for विषण्ण)

6 $K_2$ om. 6 (cf. v.l. 4) — [c]) M नु (for तु) — [d]) $B_{1.2}$ $T_1$ $G_{1.2}$ नो, $D_2$ नु, Ca नौ (as in text)

7 $K_2$ om. 7 (cf. v.l. 4) — $7^{cd}$ = (var.) 5. 119. $4^{cd}$ — [a]) $K_{1.2}$ $D_{1.6.7.8}$ तु (for नु) — [b]) $D_5$ कर्मदूषण, S पतता वर (for धर्म°) — [c]) $T_2$ $G_2$ नेहाय (for न ह्यय)

8 $K_2$ om. 8 (cf. v.l. 4) — [a]) $D_3$ वाक्य (for विप्रं) — [d]) $D_3$ S transp. तत्र and यत्र $K_3$ पितामह° (for प्रजा°)

9 $K_2$ om. 9 (cf. v.l. 4) — [b]) $T_2$ $G_2$ देव°, $G_{3.5}$ कृष्ण° (for विष्णु°)

10 $K_2$ om. 10 (cf. v.l. 4) — [d]) $K_{1.2}$ $D_{1.6-8.10}$ अनघात् (for मनसा)

11 $K_2$ om. 11 (cf. v.l. 4) — [a]) $D_1$ S (except $G_4$) एतद् (for एव) S (except $G_4$ $M_{1.2}$) °मान (for °मानात्)

13 $K_2$ om. 13 (cf. v.l. 4) — [b]) $D_{2.8}$ तव (for न च) $D_{2.4.9}$ न निंदा क्षमयाम्यह — [c]) $K_3$ B (except $B_1$) $D_{1.6}$ $G_3$ सपदि, $T_1$ $G_1$ M मपरि (for स परि)

15 $K_2$ om. 15 (cf. v.l. 4) — [a]) $D_3$ आचार° (for आचारात्) $K_4$ B Dn $D_5$ $D_{6.10}$ m आचार° फलते धर्मं, S आचारलक्षणो धर्मः — [b]) $D_3$ आचार°, S ह्याचारात् $K_{3.4}$ B Dn $D_5$ $D_6$ आचार° फलते धन (cf. $15^a$) — [d]) = 5. 39. $32^d$ — $K_4$ $D_{3.4.9}$ (to avoid hiatus!) ह्याचारो (for आचारो)

C. 5. 3888 B. 5. 113 16 K. 5. 113. 17

न च ते गर्हणीयापि गर्हितव्याः स्त्रियः क्वचित् ॥ १६
भवितासि यथापूर्वं बलवीर्यसमन्वितः ।
बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ ॥ १७
अनुज्ञातश्च शाण्डिल्या यथागतमुपागमत् ।
नैव चासादयामास तथारूपांस्तुरंगमान् ॥ १८
विश्वामित्रोऽथ तं दृष्ट्वा गालवं चाध्वनि स्थितम् ।
उवाच वदतां श्रेष्ठो वैनतेयस्य संनिधौ ॥ १९
यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मम द्विज ।
तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान् ॥ २०
प्रतीक्षिष्याम्यहं कालमेतावन्तं तथा परम् ।
यथा संसिध्यते विप्र स मार्गस्तु निशम्यताम् ॥ २१
सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितम् ।
प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान् ॥ २२
तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव ।
नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयासितुम् ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

## ११२

नारद उवाच ।
अथाह गालवं दीनं सुपर्णः पततां वरः ।
निर्मितं वह्निना भूमौ वायुना वैधितं तथा ।
यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ॥ १
धत्ते धारयते चेदमेतस्मात्कारणाद्धनम् ।
तदेतत्त्रिषु लोकेषु धनं तिष्ठति शाश्वतम् ॥ २

---

16 K5 om 16 (cf v l 4) — [b]) K4 T1 G1 4 M इति (for इत') — D7 om. (hapl) 16[c]–17[b] — [c]) K1 2 Dn1 D1–4 8 9 °या हि, K3 B2 5 Dn2 D6 °याह, K4 B1 3 4 T G1 2 4 5 °यास्मि (for °यापि) — [d]) G3 5 गर्हणीया (for गर्हि°) T1 G1. 4 transp स्त्रिय and क्वचित् — After 16, D8 ins

454* यदि त्वमात्मनो ह्यर्थमां चैवादातुमिच्छसि ।
तदैव नष्टदेहस्तु यद्वै त्वं पन्नगाशन ।
तस्यैव हि प्रसादेन देवदेवस्य चिन्तनात् ।
त्वं तु साङ्गस्तु संजातः पुनरेव भविष्यसि ।

17 K5 om 17 (cf v l 4), D7 10 om. 17[ab] (for D7 cf v l 16). — Before 17[cd], K (K5 om) D2–4 7–10 T G (except G3) ins नारद उ° (resp नारद°)

18 K5 om 18 (cf v l 4) — [a]) K4 B D (except D2 7 10) तु (for च) — [c]) D8 transp एव and च

19 K5 om 19 (cf v l 4) — [a]) D8 4 9 अपि (for अथ) — [b]) K1 2 G4 वि-; D2–4 9 T G1–3 5 M हि (for च) K4 B2 4 5 Dn2 D6 8 10 स्थित'

20 K5 om 20 (cf v l 4). — [d]) T2 G2 कथं, G3 यदि (for यथा)

21 K5 om 21 (cf v l 4) — [b]) K1 यथापर, D7 तथा-पुन', T2 G2 3 5 M2 4 तवापर, M3 5 तवाचर (for तथा परम्) — [c]) K4 ससिध्येत — [d]) K1 2 D2 9 तु निशाम्यता, B5 त्वधिगम्य°, T G1 2 4 प्रविमृश्य°, G3 परिमृश्य°, G5 परिमृग्य°, M1 2 5 प्रतिगृह्य°, M3 4 प्रतिमृग्य° (M4 *inf lin* प्रतिगम्य°)

22 K5 om 22 (cf v l 4) — [a]) K1 2 4 D1. 3 4 7 9 10 एनं (for दीन) — [c]) T2 G2 ते (for मे)

23 K5 om 23 (cf v l 4) — [a]) D1 T1 G3 तथा गच्छ (for तदा°) — [b]) K3 (*sup lin* as in text) Ds2 D7 मन्त्रयिष्यामि — [d]) K1 2 तत्स° (for कृत्स्न°) —

Colophon missing in D5, K5 om it — *Sub-parvan* K1–3 B1. 3 Ds1 D7 10 M1 भगवद्यान, followed by गालवचरित K4 B2 4 5 Dn Ds2 D1 2 6 8 T1 G1 5 M2–5 (all om sub-parvan name) mention only गालवचरित (G5 °वोपाख्यान) — *Adhy. name* G5 विश्वामित्रदर्शन, M शाण्डि(M5 °ण्ड्र)लीदर्शन — *Adhy no* (figures, words or both) D6 4 (=104), D7 T2 G4 M1–3 5 114, T1 G1 2 5 115, G3 M4 113. — *S'loka no* Dn 23, D8 26

## 112

1 [c]) B5 पूर्वं (for भूमौ) — [d]) K1. 2 M1 वेधितं, K3 G1 चेधित; K4 5 B2 3 D2–4 9 Cn शोधित, B1. 4 5 Dn Ds D7, 8 10 Cs ap np वर्धित, D1 Ca बोधित, D6 वर्तित; T1 M3 चैधित, T2 G2 वेदित (for वैधित) K5 B2 3 D7 यथा, D10 पुरा (for तथा). — [e]) B2 D1 T1 G3–5 Ca तस्माद् (for यस्माद्) M (M1 *inf lin* as in text) पूर्वं

नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा ।
मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्जितं धनम् ॥ ३
अजैकपादहिर्बुध्न्यै रक्ष्यते धनदेन च ।
एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ ॥ ४
ऋते च धनमश्वानां नावाप्तिर्विद्यते तव ।
अयं याचाव राजानं कंचिद्राजर्षिवंशजम् ।
अपीड्य राजा पौरान्हि यो नौ कुर्यात्कृतार्थिनौ ॥ ५
अस्ति सोमान्ववाये मे जातः कश्चिन्नृपः सखा ।
अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि ॥ ६
ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः ।
स दास्यति मया चोक्तो भवता चार्थितः स्वयम् ॥ ७
विभवश्चास्य सुमहानासीद्धनपतेरिव ।
एवं स तु धनं विद्वान्दानेनैव व्यशोधयत् ॥ ८
तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमम् ।
प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ॥ ९
प्रतिगृह्य च सत्कारमर्घादिं भोजनं वरम् ।
पृष्टश्चागमने हेतुमुवाच विनतासुतः ॥ १०
अयं मे नाहुष सखा गालवस्तपसो निधिः ।
विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप ॥ ११
सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विजः ।
तमाह भगवान्कां ते ददानि गुरुदक्षिणाम् ॥ १२
असकृत्तेन चोक्तेन किंचिदागतमन्युना ।
अयमुक्तः प्रयच्छेति जानता विभवं लघु ॥ १३
एकतःश्यामकर्णानां शुभ्राणां शुद्धजन्मनाम् ।

C. 5. 3910
B. 5. 114. 14
K. 5. 114. 14

(for मर्त्यं) — $^{f}$) T2 उच्यते, G4 चोद्यते (for चोच्यते)

2 $^{a}$) K. G2.3 वा (for च) — $^{c}$) K1–2.3 (inf lin as in text) D1.2.7.10 यद् (for तद्)

3 $^{a}$) K (except K1) Ds2 D2.4.6.7.9 प्रोष्ट°, Cs प्रौष्टपद्योः (?), Ca.d प्रोष्ट° (as in text) — $^{b}$) K1.3 शक्रे, Ca.s शुक्रे (as in text) — $^{c}$) B3 G2.3 समावत्ते, B5 Dn समाधा(Dn1 °दा)त्तु, D6 T2 G2 सदादत्ते — $^{d}$) K1.2 (by corr.) Dn2 वित्तार्जित, B2.3 D7.8 T G1.2.3 Ca चित्ता°, D2–4.6 चित्तार्पितं, Cn as in text. Cd cites चिन्ता.

4 $^{a}$) B5 °बुध्नो, S (except G2.3) °बुध्न्यो — $^{b}$) A few S MSS रक्षते. — $^{c}$) T2 G1.2 यावत्, M1 (inf lin as in text) एतं, M2 एतत (for एव) T2 G2 वधुर् (for लब्धुम्) — K5 om. 4$^{d}$–6$^{b}$ — $^{d}$) G4 अलब्ध यद्, T1 G1.4 द्विजोत्तम

5 K5 om. 5 (cf. v.l. 4) — $^{b}$) T G1.2.4 om. न G2.3 क्वचित (for तव) — D1 om. 5$^{cd}$ — $^{c}$) K3.4 B D (except D2.7, D1 om.) स त्वं (for अयं) K1.2.4 T G1.2.4 याचस्व, D2 M याचतु (for याचाव) G2.3 अयं याचाव(G. °म)हे विप्र — B3 om. 5$^{ef}$ — $^{e}$) K1.2 D1.7.8.10 अपीडयित्वा (for अपीड्य राजा) D1.2 G2.3 M पौरर्द्धिं (for पौरान्हि) K1.2 D2.4.7–9 वै (for हि) T G1.2.4 धार्मिकं पृथिवीपालं

6 K5 om. 6$^{ab}$ (cf. v.l. 4) — Before 6, T1 G1.4 ins. गालव ! — $^{a}$) K1.2 D2–4.7–9 सोमान्वये यो मे, K4 सोमान्ववायो मे, T G1.2.4 सोमान्वये जात° Ca d cite अन्ववाये. — $^{b}$) T G1.2.4 कश्चिन्मे नृपतिः सखा — $^{d}$) D8 यस्य (for तस्य) K5 D7 प्रभो° (for भुवि)

7 $^{d}$) K5 D5 D7 याचित, D2 प्रार्थि° (for चार्थि°)

8 D6 om. 8$^{a}$–9$^{b}$ — $^{a}$) K5 D7 तस्य (for चास्य), and तु (for सु) — $^{c}$) K1.2 पर (for एव) K3 Ds2 गुरु-(for स तु) B1.3 D2 G3 विद्वन् (for विद्वान्) K4 B2.4.5 Dn Ds1 D3.4.8–10 एव गुरु धन विद्वन् — $^{d}$) K4 B2.4.5 Dn Ds D8.10 विशोधय, D1 विशोधयेत्

9 D6 om. 9$^{ab}$ (cf. v.l. 8) — $^{a}$) T1 G (except G3) transp. तौ and च B3 तयोर्मौ, T2 तथा च (for तथा तौ) D2.7 T2 तु (for च) — $^{b}$) D2 चिंतयानौ N (except B5 Dn2, D6 om.) तद् (for यत्) — $^{d}$) D1 समुपस्थितौ, D10 पर्युप°

10 B5 om. 10–11 — $^{a}$) K4 D8.10 प्रतिपूज्य K3.4 B1.2.4-Dn Ds D2.7.8.10 सत्कारं, Ca d as in text — $^{b}$) K1–3 D7 अर्घाद्य, K5 समर्थं, D1 G. अर्घ्यादिं, T G1–4 अर्घ्यादीन् K1.2 D1 भोजनादरं, K5 D7 भोजना वरम्, T G1.2.4 भोजनान्परं, G3.5 भोजनं परं K4 B (except B5) Dn Ds D2–4.6.8.9 अर्घ्यपाद्यादिकं वरं — $^{d}$) Ds प्रोवाच K4 B1.2.4 D3.4.9 विनतात्मजः

11 B5 om. 11 (cf. v.l. 10) — $^{b}$) B3 D1 T2 तपसां निधिः, G1.4 तु तपोनिधिः, G3.5 तपसान्वितः

12 $^{a}$) T1 G1.3.4 अयं (for सोऽयं) — $^{c}$) T1 G1.4.5 भगवन् (for °वान्) N (except K2) काले, G3.5 किं ते (for कां ते) — $^{d}$) K1.3.5 D6 G1.3.4 ददामि

13 $^{a}$) D3.4.9 चोक्ते तु (for चोक्तेन) — K4 om. 13$^{c}$–14$^{b}$ — $^{d}$) K5 D1 वैभव (for विभवं) K1.2 Ds2 लघुं

14 K4 om. 14$^{ab}$ (cf. v.l. 13), D1 om. 14$^{bc}$ — $^{b}$) B2 T1 चन्द्रवर्चसां (cf. $^{d}$), G1 शुद्धवर्चसां — $^{d}$)

C. 5. 3610
B. 5. 114. 14
K. 5. 114. 14

अष्टौ शतानि मे देहि हयानां चन्द्रवर्चसाम् ॥ १४
गुर्वर्थो दीयतामेष यदि गालव मन्यसे ।
इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः ॥ १५
सोऽयं शोकेन महता तप्यमानो द्विजर्षभः ।
अशक्तः प्रतिकर्तुं तद्भवन्तं शरणं गतः ॥ १६
प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः ।
कृत्वापवर्गं गुरवे चरिष्यति महत्तपः ॥ १७
तपसः संविभागेन भवन्तमपि योक्ष्यते ।
स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति ॥ १८
यावन्ति रोमाणि हये भवन्ति हि नरेश्वर ।
तावतो वाजिदा लोकान्प्राप्नुवन्ति महीपते ॥ १९
पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान् ।
शङ्खे क्षीरमिवासक्तं भवत्वेतत्तथोपमम् ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

## ११३

नारद उवाच ।
एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमम् ।
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः ॥ १
यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः ।
ययातिर्वत्सकाशीश इदं वचनमब्रवीत् ॥ २
दृष्ट्वा प्रियसखं तार्क्ष्यं गालवं च द्विजर्षभम् ।
निदर्शनं च तपसो भिक्षां श्लाघ्यां च कीर्तिताम् ॥ ३
अतीत्य च नृपानन्यानादित्यकुलसंभवान् ।
मत्सकाशमनुप्राप्तावेतौ बुद्धिमवेक्ष्य च ॥ ४
अद्य मे सफलं जन्म तारितं चाद्य मे कुलम् ।

---

T1 वातरंहसा (for चन्द्र°).

15 a) Ds2 T1 G1. 4. 5 गुर्वर्थे K5 मेद्य (for एष). — c) D2 स क्रुद्ध°, G2. 5 स क्रोधात्. — d) Ds महातपा°, D1 तपोनिधि. (for तपोधन°).

16 b) T1 G4 द्विजोत्तम (for द्विज°). — c) K1. 2. 5 D7. 10 °पत्तु (for °कर्तुं). Ds1 D2. 7 S (except G8) त (for तद्).

17 c) B8. 5 T1 G1 °वर्गौ. — d) K (except K4) D2-4. 7. 9. 10 G5 M2 करिष्यति, T1 G1. 4 भविष्यति. T1 G1. 5 महातपा°.

18 a) K1 D9 स (for सं). — b) Dn1 G8 अपि मोक्ष्यते, D10 उपयो°, M1. 2 अभियो°. — D8 om. (hapl.) 18c-19d. — c) D8 राजर्षे स्वेन तपसा. — d) K4 T1 G8 त्वा.

19 D8 om. 19 (cf. v.l. 18). — b) K3. 4 B Dn Ds D2-4. 9 G5 [द्वि]ह (for हि). — c) G4 तावन्ते, some MSS. तावन्तो. K3 B1. 4 Dn Ds D2. 10 m T2 G1-3. 5 वाजिनो, K5 B5 D7 वाजिना, T1 G4 जीविनो. — d) K1 (before corr.) D1 G2 महीतले.

20 Ds om. 20ab. — b) T2 G2 दानपात्र (for दातु पात्र). D3. 4. 9 भवानपि (for तथा भवान्). — c) M2. 4. 5 °वासिक्त. — d) T1 G1. 4 भवतोस्तु, T2 भवत्त्वेव, G2 भवत्सेव (for भवत्वेतत्). D2 तथोत्तम, Ca. d. तथोपम (as in text).

Colophon missing in D5, D1 om. it. — *Sub-parvan*: K1-3. 5 B1. 8 M1 भगवद्यान; to it all (except K1. 2) add गालवचरित. K4 B2. 4. 5 Dn1 Ds D2-4. 6-10 T1 G1. 5 M2-5 (all om. sub-parvan name) mention only गालवचरित. — *Adhy. name*: G5 M ययातिदर्शन. — *Adhy. no.* (figures, words or both): D6 5 (=105), D7 T2 G4 M1-3. 5 115, T1 G1. 2. 5 116, G8 M4 114. — *S'loka no.*: Dn D7 21, D8 20.

**113**

1 b) K1. 2 तदा, B8 तथा (for तथ्य). — K5 om. 1cd. — c) A few N MSS. विमृश्य. Ds भूत्वा (for राजा). — d) M1. 2 विनिश्चित्य (for निश्चित्य च).

2 b) G2 M1 (inf. lin.) तथा, T2 तदा (for दाता). T2 G2 नर° (for दान°). — c) K4 D9. 8 पत्रिणामीश, B Dn Ds D10 T2 G2 सर्वकाशीश, D2-4. 9 M1. 8 सूर्यसंकाश, Ca. d. वत्सकाशीश (as in text).

3 b) G8. 5 तपोनिधिं (for द्विजर्षभम्). — d) K4 D8 शाश्वतीं (for कीर्तिताम्).

4 d) K4 B D (except D1. 2. 7. 10) एता, K5 चेतौ (for एतौ).

5 b) D3. 4. 9 पवित्र (for तारित). Dn2 अद्य मे तारितं कुल°. — c) S पावितो (for तारितो). — d) K1. 2. 5 D2. 7 भौम°; G8. 5 M1 (inf. lin.) सखे; M सह (for मम).

अद्यायं तारितो देशो मम तार्क्ष्य त्वयानघ ॥ ५
वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा ।
न तथा वित्तवानस्मि क्षीणं वित्तं हि मे सखे ॥ ६
न च शक्तोऽस्मि ते कर्तुं मोघमागमनं खग ।
न चाशामस्य विप्रर्षेर्वितथां कर्तुमुत्सहे ॥ ७
तत्तु दास्यामि यत्कार्यमिदं संपादयिष्यति ।
अभिगम्य हताशो हि निवृत्तो दहते कुलम् ॥ ८
नातः परं वैनतेय किंचित्पापिष्ठमुच्यते ।
यथाशानाशनं लोके देहि नास्तीति वा वचः ॥ ९
हताशो ह्यकृतार्थः सन्हतः संभावितो नरः ।
हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतोऽर्थिनाम् ॥ १०
तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम ।
इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ॥ ११
सदा देवमनुष्याणामसुराणां च गालव ।
काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् ॥ १२
अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम् ।
किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते ॥ १३
स भवान्प्रतिगृह्णातु ममेमां माधवीं सुताम् ।
अहं दौहित्रवान्स्यां वै वर एष मम प्रभो ॥ १४
प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा ।
पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया ॥ १५
उपलब्धमिदं द्वारमश्वानामिति चाण्डजः ।
उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकम् ॥ १६
गते पतगराजे तु गालवः सह कन्यया ।

C. 5. 3933
B. 5. 115. 17
K. 5. 115. 17

6 K5 om. 6ab — a) K1.2 D5 D2.4.7 8.10 G5 च (for तु) — b) S मे (for मा) — d) S द्रव्य (for वित्तं) K4 B2 4.5 Dn D1 च (for हि)

7 K5 om. 7a–12b — a) D1-4 9 तु (for च) D2.4.8.10 M2 शक्नोमि (for शक्तोऽस्मि) D2.4.9 अहं (for ते) — b) D2.4.8 9 तत्र (for खग) — c) G5 च कामं च (for चाशामस्य) S विप्रस्य (for विप्रर्षेः) — d) B Dn1 वितथी (for °था)

8 K5 om. 8 (cf. v.l. 7) — a) T G1.4.5 पुत्रीं, T2 (before corr.) G2 3 M अत्र (for तत्तु) — b) T2 G1 इय (for इद) — c) K4 D3 G5 नताशो (for ह°)

9 K. om 9 (cf. v.l. 7) — c) D1 G5 यद्, Cs यथा (as in text) K4 B Dn Ds D1.6.8 10 Ca.d.s °नाशनाद्, D2.4.5 °नाशकृत् — d) D3.4.9 transp देहि and नास्ति K1.2 8 D10 यद्, Ca.d वा (as in text)

10 K om. 10 (cf. v.l. 7) — a) G4 वृथाशो (for ह°) — b) K1.2 D1 हत समावित नर, S हतसंभावनो नर Ca cites संभावित, Cd समावित — c) D7 हिनस्ति सुकृतं पुत्रान् — d) D10 वशा (for पौत्रान्) K1-3 D1 T G2 [S]र्थिता, K4 B Dn Ds D2-4.6 8 5 हित (for ऽर्थिनाम्) — After 10, G2 (irrelevantly) reads the portion of the text from 5c to the end of adhy 121 together with Stanzas 1–38 of adhy 122, followed by a *repetition* of Stanzas 22–23 of adhy. 111 and 1–5 of adhy 112!

11 K5 om. 11 (cf. v.l. 7) — a) D1 तत (for तस्मात्) K4 B2 Ds D2-4.6 9 वर्णाना, D6(*sup lin*) 8 वर्णाना, Cs वशाना (as in text) — After 11ab, K4 Ds D3.4.6.9 S ins

455* माधवी नाम तार्क्ष्येय सर्वधर्मप्रवादिनी ।
[T G1.2.5 °प्रचारिणी (for °प्रवादिनी)]

— c) K1 Ds सुरसुताप्रख्या, T1 G1 सुरतरु° — d) K4m °धर्मोपचारिणी, B D2-4.9 °चारिणी, G4 °धर्मार्थशायिनी, M2 °धर्मप्रवादिनी Ca.d s cite अपचायिनी

12 K5 om. 12ab (cf. v.l. 7) — a) K1.2 D3 4.7 8 तथा, D2 मा च (for सदा) — d) S कन्या (for सुता)

13 d) T2 G2 अश्वाना (for हयाना)

14 a) T2 G2 M भगवान् (for स भवान्) — b) K2.4 B (except B.) Dn2 Ds D3 4.6 8-10 G4 एता; Dn1 T1 एतां (for इमा) — cd) S अह दौहित्रपूत स्यामेष मे स्याद्वर प्रभो — After 14, D2.4.8 9 S ins

456* तस्य तद्वचन श्रुत्वा ब्राह्मणः संशितव्रतः ।
[D2 स तस्य (for तस्य तद्) D2.4.8 9 गालव (for ब्राह्मणः) MSS (as usual) संश्रित°, शसित°, संश्रित° etc.]

15 a) S तु (M1.2 सु-) (for च) — b) D2 संशित व्रत, G5 सह पत्रिगा (for सह पक्षिणा) — D3 om. 15c–16b — c) T2 G2 द्रक्ष्याम (for °व)

16 D2 om 16ab (cf. v.l. 15), K3 om 16, Dn2 D6 om. (hapl.) 16a–17b — c) D2-4.9 G5 आमन्त्र्य (for आपृच्छ्य) — d) B1.2.4 स्वगृहान्, D2.4.6 सदन (for भवन) D3.4.9 S प्रति (for स्वकम्)

17 Dn2 D6 om 17ab (cf. v.l. 16) — a) G2 4.5 M1.5 पतग° — c) K5 विचिंतयन्, Cs चिंतयान (as in

निन्यधानः श्रमं दानं राज्ञां चै शुल्कतोऽगमत् ॥ १७
सोऽभ्यगच्छन्नरपतिं हर्यश्वं रघुसत्तमम् ।
अयोध्यायां महावीर्यं चतुरङ्गबलान्वितम् ॥ १८
कोशधान्यबलोपेतं प्रियपौरं द्विजप्रियम् ।
प्रजाभिकामं शाम्यन्तं कुर्वाणं तप उत्तमम् ॥ १९
तमुपागम्य विप्रः स हर्यश्वं गालवोऽब्रवीत् ।
कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी ॥ २०
इयं शुल्केन भार्यार्थे हर्यश्व प्रतिगृह्यताम् ।
शुल्कं ते कीर्तयिष्यामि तच्छ्रुत्वा संप्रधार्यताम् ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## ११४

नारद उवाच ।
हर्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः ।
दीर्घमुष्णं च निःश्वस्य प्रजाहेतोर्नृपोत्तमः ॥ १
उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु ।
गम्भीरा त्रिषु गम्भीरेष्वियं रक्ता च पञ्चसु ॥ २
बहुदेवासुरालोका बहुगन्धर्वदर्शना ।
बहुलक्षणसंपन्ना बहुप्रसवधारिणी ॥ ३
समर्थेयं जनयितुं चक्रवर्तिनमात्मजम् ।
ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥ ४

गालव उवाच ।
एकतःश्यामकर्णानां शतान्यष्टौ ददस्व मे ।
हयानां चन्द्रशुभ्राणां देशजानां वपुष्मताम् ॥ ५
ततस्तव भवित्रीयं पुत्राणां जननी शुभा ।
अरणीव हुताशानां योनिरायतलोचना ॥ ६

---

[illegible]) — [d]) S राज्ञाम (for राज्ञां चै) K[4] D[1] [illegible] ([illegible])

18 [a]) T[2] G[3] [illegible] [illegible]रात् (G[1] °क)

19 [a]) A few N MSS पौर° — [b]) D[1] [illegible] S [illegible] (for द्विजप्रियम्) — [c]) D[2-4] [illegible], G. [illegible], C[3] [illegible] (as in text)

20 [a]) K D[1] [illegible], D[4] [illegible] (for विप्र स) — [c]) D[1] [illegible] (for हर्यश्व) — [d]) K (except K[3]) D[1] D[3-4] T[1] G[2] [illegible] M[1] [illegible] D[5] [illegible]वर्धनी

21 [a]) [illegible] भार्यार्थे and हर्यश्व K[3] D[1] D[2] भार्यार्थे ([illegible])

[illegible] — Sub-[illegible] K[1-3] [illegible] D[1] D[2] T[1] G[1] M[1] [illegible], followed by [illegible] [illegible] (as om [illegible]) [illegible] — [illegible] G[2] M[1] [illegible] — [illegible] ([illegible]) D[1] 6 (=105), D T[1] G[1] M[1] [illegible] 115, T[2] [illegible] 117, G[3] M[4] 115 — [illegible] K[1] 11, D[1] D[3] 12, D[2] 23

### 114

1 [a]) [illegible] नारद [illegible] — [c]) T[1] G[1] [illegible] (for °मुष्णं) B[3] S विनिश्वस्य (for च नि°) — [d]) K[1] [illegible] D[3] D[7] T[1] नृपोत्तम; B[1] [illegible] नरोत्तम

2 [b]) K[3] D[1] S पञ्चसु, B[3] च त्रिषु; C[a] d s सप्तसु (as in text) — [d]) K[2] D[5] D[7] G[3] M[1] सु- (for च) D[2] सप्त°, C[a] d s पञ्च° (as in text) T[2] G[1] [illegible] पञ्चसु — After 2, T G[1] [illegible] ins

457* श्रोण्यौ ललाटमक्षी च घ्राणं चेति षडुन्नतम् ।
सूक्ष्माण्यङ्गुलिपर्वाणि [illegible] ।
[illegible] सत्त्व च नाभिश्च त्रिगम्भीरं प्रचक्षते ।
पाणिपादतले [illegible] नेत्रान्तावनखानि च ।,

which is no doubt a gloss! — K[3] (which om 3[cd] and 4) reads 5 after 2 On the other hand D[1] ins after 2 a passage given in App I (No 6)

3 K[3] om 3[ab]. — [a]) K[1] [illegible] °काम, K[2] D[1] [illegible] T[1] G[1] M C[3] °लूता, T[2] G[2] [illegible], C[a] °लोका (as in text) — [d]) D[2] [illegible] °कल्याणधारिणी, S °कल्याणधारिणी

5 5[ab] = 5 104 25[ab] — K[3] reads 5 after 2 — [b]) K[3] D[1] [illegible] T[1] G[1] च देहि, K[4] B D[n] D[1] D[3] [illegible] G[2] [illegible]; T[2] G[3] M[1] [illegible] तु देहि, M[1] ददाहि (for ददस्व) — K[3] om 5[cd]

7 [a]) K[1-3] P[1] D[n1] D[3] D[2] [illegible] स [illegible]; D[2] [illegible] (for [illegible]) G[3] M[1] [illegible] (for यथो) — [c]) D[2] [illegible] (for [illegible]) — [d]) K[3] D[2] [illegible] G[1] मुनिसत्तम; D[1] [illegible]

नारद उवाच ।

एतच्छ्रुत्वा वचो राजा हर्यश्वः काममोहितः ।
उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमम् ॥ ७
द्वे मे गते संनिहिते हयानां यद्विधास्तव ।
एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ ८
सोऽहमेकमपत्यं वै जनयिष्यामि गालव ।
अस्यामेतं भवान्कामं संपादयतु मे वरम् ॥ ९
एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत् ।
मम दत्तो वरः कश्चित्केनचिद्ब्रह्मवादिना ॥ १०
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि ।
स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान् ॥ ११
नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि वै ।
भविष्यन्ति तथा पुत्रा मम चत्वार एव च ॥ १२
क्रियतां मम संहारो गुर्वर्थं द्विजसत्तम ।
एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज ॥ १३
एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा ।
हर्यश्वं पृथिवीपालमिदं वचनमब्रवीत् ॥ १४
इयं कन्या नरश्रेष्ठ हर्यश्व प्रतिगृह्यताम् ।
चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् ॥ १५
प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च ।
समये देशकाले च लब्धवान्सुतमीप्सितम् ॥ १६
ततो वसुमना नाम वसुभ्यो वसुमत्तरः ।
वसुप्रख्यो नरपतिः स बभूव वसुप्रदः ॥ १७
अथ काले पुनर्धीमान्गालवः प्रत्युपस्थितः ।
उपसंगम्य चोवाच हर्यश्वं प्रीतमानसम् ॥ १८
जातो नृप सुतस्तेऽयं बालभास्करसंनिभः ।
कालो गन्तुं नरश्रेष्ठ भिक्षार्थमपरं नृपम् ॥ १९
हर्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे ।
दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥ २०
माधवी च पुनर्दीप्तां परित्यज्य नृपश्रियम् ।
कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात् ॥ २१
त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान्द्विजः ।
प्रययौ कन्यया सार्धं दिवोदासं प्रजेश्वरम् ॥ २२　C. 5. 3953 B. 5. 116. 22 K. 5. 115. 23

इति श्रीमहाभारते उद्योगपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

सत्तम (for ऋषि°) T1 G4 राजा राजर्षिनत्तम

8 b) K2 च द्विजोत्तम (for यद्विधा°) Ca d cite यद्विधा — c) D2-4.5 विविधा, Ca एष्टव्या (as in text) K4 B3 D2 बहव; Ca d शतश (as in text) D5 M1.2 च (for तु) — d) D2-4.5 भवति (for चरन्ति)

9 c) T2 G2 ते (for वै) — c) K2 एत; G2.5 M2 एवं (for एत) — d) K (except K4) D2-4.5 T2 G2 पर (for वरम्) M1.2 संपादयितुमर्हसि

11 b) = 1 57. 63d T2 G4 कन्येव; G5 कन्यका S इति प्रभो (for भवि°) — After 11ab, S reads 12cd — c) K5 प्रदाय (for ददस्व) M1.2 मा D5.2 M2 राज्ञ T2 G2 स त्वं दत्वा महाराजे

12 c) K5 D5 D7 अपि; D5 तु (for हि) D2.4.9 तु (for ते) — b) K2.4 B1.2 Dn D2.8.9 ते, K5 D7 च, D2.4 ते (for वै) — S reads 12cd after 11ab

13 a) G5 गृह्यतां (for क्रियतां) K3 अत्र सं°, K4 B Dn D5 D5-8 10 Ca उपसं°, D1 तत्र सं°, D2 उपसंसार; D2.4.6 न(D3 अ)त्रसंसार; T1 M मधुसंहार, T2 G1.2 धर्मसं°, G2-5 अथ सं° (for मम संहार°) Cd cites संहार (as in text) — d) K8 D2.4.9 मन्यते द्विज (K8 भवान्) T2 G2 मन्यसे द्विज गालव

14 Before 14, K4 D5.4.6 S ins नारद उ° (resp नारद) — c) G2.5 सुमति (for स मुनि)

15 c) K3 D3.4.5 वर° (for नर°) — d) D2 पुत्रक (for आत्मजम्)

16 b) B1.2.4 प्रतिपूज्य च, B3 °लभ्य च, M1 °नदयन् — d) G1 सुतम् (for सुतम्)

17 a) S जातो (for ततो) — b) D5 D7 वसुसंभव; S °मत्तम, Ca d °मचर (as in text) — c) K1.2 D5 D3.4.9.10 Ca d °प्रभो (for °प्रख्यो) — d) K1.2 B (except B4) D2.3 सं (for स) S सर्वभूतवर(T1 G4 °वसु)प्रदः

18 a) G4.5 चरन् (for पुनर्) — d) K1 (before corr) B2 Dn2 D5.2 D3 प्रीतिमानस, T2 G2 प्रीतिमानिदं

19 b) K1 सले, K2.4 B Dn D5 D2.8-10 बालो (for बाल-) — c) B1.2.4 D2.4.9 नृप° (for नर°) — d) S शुल्कार्थम् (for भिक्षार्थम्)

20 Before 20, S ins नारद — a) T1 G2 तस्य वचन

## ११५

C 5. 3960
B 5 117 1
K 5. 117 1

गालव उवाच ।
महावीर्यो महीपालः काशीनामीश्वरः प्रभुः ।
दिवोदास इति ख्यातो भैमसेनिर्नराधिपः ॥ १
तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः ।
धार्मिकः संयमे युक्तः सत्यश्चैव जनेश्वरः ॥ २
नारद उवाच ।
तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः ।
गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत् ॥ ३
दिवोदास उवाच ।
श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज ।
काङ्क्षितो हि मयैषोऽर्थः श्रुत्वैतद्द्विजसत्तम ॥ ४
एतच्च मे बहुमतं यदुत्सृज्य नराधिपान् ।
मामेवमुपयातोऽसि भावि चैतदसंशयम् ॥ ५
स एव विभवोऽस्माकमश्वानामपि गालव ।
अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ॥ ६
नारद उवाच ।
तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात्कन्यां महीपतेः ।
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान् ॥ ७
रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः ।
स्वाहायां च यथा वह्निर्यथा शच्यां स वासवः ॥ ८
यथा चन्द्रश्च रोहिण्यां यथा धूमोर्णया यमः ।
वरुणश्च यथा गौर्यां यथा चर्ध्यां धनेश्वरः ॥ ९
यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधिः ।
यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः ॥ १०

---

(for सत्यवचने) — b) T2 G2 स्थित्वा सत्ये (for स्थित स्थित्वा) T1 G1 M1 2 तु (for च)

21 a) S तु (for च) D6 दीप्ता, D10 दत्ता (for दीप्ता) — c) S (except G4) कुमारिका ततो (for कुमारी कामतो)

22 a) T1 G4 मम (for तावत्) — d) K1 जने°; K5 D7 10 नरे° (for प्रजे°)

Colophon missing in D5, K6 om it — *Sub-parvan* K2 3 B1 3 Dn1 D5 D7 10 M3-5 भगवद्यान, to it all except M3-5 add गालवचरित K1,4 B2 4 5 Dn2 D1-4 6 9 T1 G1 5 M1 2 (all om sub-parvan name) mention only गालवचरित — *Adhy name* G5 माधवीप्रथमप्रदान — *Adhy no* (figures, words or both) D6 7 (=107), D7 T2 G4 M1-3 5 117, T1 G1 2 5 118, G3 M4 116 — *S'loka no* Dn 22

### 115

1 K5 G3 4 om the ref T1 G1 5 M नारद (for गालव उ°) — a) S (by transp ) महीपालो महावीर्य (G3 °प्राज्ञ°)

2 c) K1 5 D2-4 7 9 शमयुक्तश्च, K2 सत्ययुक्तश्च, D10 संयमयुत , T2 G2 5 M सशमे युक्त° K3 स ते रूपसमो भर्ता — d) K3 सत्यवाक्सु K4 B Dn D5 D6 8 सत्ये चैव, D10 सत्यवक्ता (for सत्यश्चैव) ‸ K1 2 5 D1 3 4 7 9 धनेश्वर°, D5 नरे°

3 K (except K4) D7 S (except T2 G2) om the ref — b) T1 G1 4 गालव (for न्यायत°) — c) T2 G2 प्रसवस्यार्थं — d) K1 2 B1 3 5 D1-4 9 G3 M4 पर्यचोदयत्, K3 पर्यनोद°, K5 D7 प्रत्यनोद°.

4 a) G3 5 M सर्वं (for पूर्वं) — c) K1 2 5 B2 D7-9 T2 G1 4 5 मम (for मया) S एव (for एष°). — d) K3 4 B D (except D3 4 9) एव (for एतद्)

5 K5 om 5ab — c) D10 अन्यान्माम् (for मामेवम्) K5 D7 प्रतियातो (for उपयातो)

6 K5 om 6ab — b) K4 D2-4 7 9 अस्ति (for अपि) B1 2 4 अश्वाना द्विजसत्तम — c) K1 2 5 D1 2 7 8 एतस्या (for एवास्या)

7 K3 4 B D (except D7 8) om the ref — cd) K3 B2 4,5 D1 9 G3 M3 विधिपूर्वां K5 D5 D10 G5 transp राजा and कन्यां

8 a) K1 2 D1 7 8 10 T1 G1 4 तस्या स (by transp ), K5 G5 च तस्या, D5 तस्या च D3 4 9 रेमे तस्या कुरुश्रेष्ठ — K5 om 8d-17d — d) D1 शतक्रतु (for स वासव°).

9 K5 om 9 (cf v l 8) — a) D10 हि चन्द्रो (for चन्द्रश्च) — b) B1 3 5 D7 धूमोर्णाया, M धूम्रोर्णया, K4 Dn1 D2-4 8 9 ऊर्मिला(K4 श्यामला)या यथा यम°, G3 5 धूमोर्णायां यथा य° — d) D3 4 9 om च Dn2 D7 10 वृध्या, T G corrupt (for चर्ध्यां)

10 K5 om 10 (cf v l 8) — a) D1 transp यथा and नारायणो — G5 om 10b-12a — After 10ab, G4 ins. 460*. — d) T1 G1 4 सरस्वत्यां, T2 G2

अदृश्यन्त्यां च वासिष्ठो वसिष्ठश्चाक्षमालया ।
च्यवनश्च सुकन्यायां पुलस्त्यः संध्यया यथा ॥ ११
अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान्यथा ।
यथा भृगुः पुलोमायामदित्यां कश्यपो यथा ॥ १२
रेणुकायां यथार्चीको हैमवत्यां च कौशिकः ।
बृहस्पतिश्च तारायां शुक्रश्च शतपर्वया ॥ १३
यथा भूम्यां भूमिपतिरुर्वश्यां च पुरूरवाः ।
ऋचीकः सत्यवत्यां च सरस्वत्यां यथा मनुः ॥ १४

तथा तु रममाणस्य दिवोदासस्य भूपतेः ।
माधवी जनयामास पुत्रमेकं प्रतर्दनम् ॥ १५
अथाजगाम भगवान्दिवोदासं स गालवः ।
समये समनुप्राप्ते वचनं चेदमब्रवीत् ॥ १६
निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः ।
यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते ॥ १७
दिवोदासोऽथ धर्मात्मा समये गालवस्य ताम् ।
कन्यां निर्यातयामास स्थितः सत्ये महीपतिः ॥ १८ C. 5. 3930 B. 5. 117. 21 K. 5. 117. 21

इति श्रीमहाभारते उद्योगपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

---

यथा वाण्या (for यथा वेद्या)

11 K₅ G₅ om. 11 (cf. v.l. 8, 10) — a) K₂ Dn₁ D₇ ₈ अदृश्यत्या, D₅ D₁₀ अदृश्याया, D₁ अरुंधत्यां, D₂ असूयत्या D₁ वसिष्ठश्च (for च वासिष्ठो) G₃ वसिष्ठश्चा प्यरुंधत्यां — b) D₁ वासिष्ठ॰ (for वसिष्ठ॰) G₃ वासिष्ठ॰ श्चाप्यकपया — d) K₃ सह संध्यया, D₇ संध्यया सह (for संध्यया यथा)

12 K₅ om. 12 (cf. v.l. 8), G₅ om. 12a (cf. v.l. 10) — a) D₁₀ यथागस्त्यश्च वैदर्भ्यां — b) Ds₁ D₃. ₄ ₆ G₂ ₄ सावित्र्या (for ॰त्र्या) — G₅ (which om. 12c–13d) ins. 460* after 12ab — d) S काश्यप॰ G₃ ऋष्यशृंगश्च शांतया — After 12, G₃ ins.

458* हिमवांश्चैव मेनाया गन्धवत्या पराशरः ।

13 K₅ G₅ om. 13 (cf. v.l. 8, 12), D₅ om. 13a–14b. G₂ om. 13ab — b) K₂ ₃ G₃ M (except M₂) हैमवत्यां — After 13ab, G₃ ins.

459* मौद्गल्यश्चन्द्रसेनायामदित्या काश्यपो यथा ।

— d) D₅ D₁₀ शतपर्वणा, D₁ ₆ शतवर्चया G₃ शुक्रश्चापि यथार्चया

14 K₅ om. 14 (cf. v.l. 8), D₅ om. 14ab (cf. v.l. 13), G₂ om. 14–17 — a) D₂ (before corr.) ₃ ₄ ₉ यथा भूत्या, G₃ ₆ भूम्या यथा (by transp.) D₃. ₄. ₉ भूत॰ (for भूमि॰) — c) G₃ दधीच॰, G₆ दधीचि (for ऋचीक॰) G₃ ₆ सत्यवत्यां — d) K₃ च नारद॰ (for यथा मनुः) — N (K₃ om. lines 1 and 2, D₁₀ om. line 4) G₂ (om. line 6) ins. after 14 G₄, after 10ab G₆ (om. line 6), after 12ab.

460* शकुन्तलायां दुष्यन्तो धृत्या धर्मश्च शाश्वतः ।
दमयन्त्या नलश्चैव सत्यवत्यां च नारदः ।
जरत्कारुर्जरत्कार्वां पुलस्त्यश्च प्रतीच्यया ।
मेनकाया यथोर्णायुस्तुम्बुरश्चैव रम्भया ।
वासुकिः शतशीर्षाया कुमार्यां च धनंजयः ।
वैदेह्या च यथा रामो रुक्मिण्या च जनार्दनः ।

[ (L. 1) MSS दुष्कत, दुष्खन, दुष्पंत etc. G₄. ₆ पुलहश्च भरद्वाजा (for the prior half) G₃ शिवायामनिलो यथा (for the posterior half) — (L. 2) G₃–₆ भार्गव॰ (for नारद॰) — (L. 3) K₁ G₃–₅ रत्यां (G₄ रत्या) च (K₁ वा) मदनो यथा, K₂ ₃ D₂–₄ ₇–₉ यथा चाश्वपतिर्जया (K₂ ₃ ॰विंशा) (for the posterior half) — After line 3, G₃ ins.

461* पुलस्त्यश्च भरद्वाज्या वृत्यां धर्मश्च शाश्वतः ।

— (L. 4) MSS तुबर॰, तुरुष्क॰, तुंबुर॰ also (for तुम्बुर॰) — (L. 5) K₁. ₂ D₂–₄ ₇–₉ शतशीर्षाया, D₆ शतशीलाया, G₃ सप्तशिष्या च, G₄ सप्तशीर्षाया, G₆ सप्तशीर्ष्या च (for शत॰) Ds₂ द्रौपद्या चैव पाञ्चाल्या (for the prior half) B₃ सुभद्राया (for कुमार्यां च) — D₆ om. from the posterior half of line 5 up to 15a ]

15 D₆ om. 15a (cf. v.l. 14) — a) D₃ ₄. ₉ तया (for तथा) T₂ G₂ च (for तु)

16 a) K₅ M₃–₅ अथ जगाम — b) D₇ T₂ G₂ च (for स) — d) G₃ ₆ M समय (for वचन)

17 Before 17, G₃. ₅ ins. गालव॰ — b) D₃ ₄ ₉ G₃ ₆ त्वयि (for भवान्) — d) D₃ ₄ ₉ ॰पतिं (for ॰पते)

18 a) K₃ B T₂ G₂ ॰दासस्तु, K₄ T₁ G₁. ₄ ॰दासोपि, D₃ ₄ ₉ ॰दासश्च

Colophon missing in D₅, D₁ om. it — *Sub-parvan* K₁–₃ B₁. ₃ Dn₂ D₇ G₁ भगवद्यान, followed by गालवचरित B₂ ₄. ₆ Dn₁ D₅ D₂–₄ ₆ ₈–₁₀ T₁ G₅ M (all om. sub-parvan name) mention only गालव

## ११६

C. 5. 3981
B. 5. 118. 1
K. 5. 118. 1

नारद उवाच ।

तथैव सा श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी ।
माधवी गालवं विप्रमन्वयात्सत्यसंगरा ॥ १
गालवो विमृशन्नेव स्वकार्यगतमानसः ।
जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् ॥ २
तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमम् ।
इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ॥ ३
अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च ।
सोमार्कप्रतिसंकाशौ जनयित्वा सुतौ नृप ॥ ४
शुल्कं तु सर्वधर्मज्ञ हयानां चन्द्रवर्चसाम् ।
एकतःश्यामकर्णानां देयं मह्यं चतुःशतम् ॥ ५
गुर्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे ।
यदि शक्यं महाराज क्रियतां मा विचार्यताम् ॥ ६
अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव ।
पितॄन्पुत्रप्लवेन त्वमात्मानं चैव तारय ॥ ७
न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः ।
न याति नरकं घोरं यत्र गच्छन्त्यनात्मजाः ॥ ८
एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम् ।
उशीनरः प्रतिवचो ददौ तस्य नराधिपः ॥ ९
श्रुतवानस्मि ते वाक्यं यथा वदसि गालव ।
विधिस्तु बलवान्ब्रह्मन्प्रवणं हि मनो मम ॥ १०
शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम ।
इतरेषां सहस्राणि सुबहूनि चरन्ति मे ॥ ११
अहमप्येकमेवास्यां जनयिष्यामि गालव ।
पुत्रं द्विज गतं मार्गं गमिष्यामि परैरहम् ॥ १२
मूल्येनापि समं कुर्यां तवाहं द्विजसत्तम ।

---

चरित — *Adhy name* G5 M माधवीद्वितीयप्रदान — *Adhy no* (figures, words or both) D6 8 (=108), D7 T2 G4 M1-3 5 118, T1 G1 2 5 119, G3 M4 117 — *S'loka no* K5 33, Dn1 19, Dn2 20, D8 21

### 116

1 a) B Dn D5 D3 4 6 8-10 तां, D2 [अ]सौ (for सा) — d) K3 B अभ्ययात्, D3 4 9 M5 अन्वगात् (for अन्वयात्) K (except K4) G3 सत्यसंगता, D2 (before corr) सत्यसंगत, D10 सत्यसंग्रहा, Ca as in text

2 a) K1 D8 -एवं (for एव) — c) K1 2 5 D7. 10 °नगरे — d) B2 D10 उशीनर (for औशी°) D2 द्रष्टु नृपमुशीनर

3 a) T1 G1 4 स (for अथ) T2 G2 M [अ]भिगत्वा, G3 [अ]भिगम्या (for [अ]थ गत्वा) G5 संगम्य (for गत्वा स) D3 4 0 M2 च, T1 G1 4 तु, G3 अथ (for स) — b) D1 G3 5 M1 भूपति, D7 नृपं त, T G1 2 4 M1 (*sup lin*) 2 3 5 भूपते S (except G3 4 M1) सत्य-विक्रम — Before 3cd, G3 5 ins गालव° — d) T2 G2 पार्थिव

5 K5 om 5 (along with 4bcd) — a) K1-3 D2. 7 शुल्केन; D3 4. 0 शुल्कानां (for शुल्कं तु) — d) D1 transp. देय and मह्य K2 S देहि (for देय)

6 b) K1 2 5 D7 हि ते (for हयै°) — c) D3. 4 0 यदि दास्यसि मे राजन् — d) Dn D5 D1 6 7 अविचारित; T G1 3-5 M मा निचारणा, G2 अविचारणा (for मा विचार्यताम्)

7 b) B3 D2 G4 पार्थिवौ — c) D3 4 9 तेन (for पितॄन्) T2 G2 तेन पुत्रप्लवस्त्वेन — d) T2 G2 ह्यात्मान (for आत्मान).

8 a) D3 4 9 प्रजा° (for पुत्र°) — d) K3 B2 4 5 D (except D2-4 9) M1 3 यथा (for यत्र) D1 अपुत्रका° (for अनात्मजाः) K1 2 D3 यत्र गच्छत्यनात्मज°

9 d) K5 द्विजस्य च (for नराधिप°)

10 a) K1 2 कार्यं, K5 D7 काम (for वाक्य) — K5 om 10c-15d, G2 om. 10cd — c) K2 विप्र (for ब्रह्मन्) — d) K4 D2 प्रमाण, D6 प्रबलं, M2 प्रपन्न (for प्रवण). D6 8 बल (for मनो) B1 2 4 मनो हि प्रवणं मम

11 K5 om 11 (cf v l 10), G2 om 11cd — d) cf 5 114 8 K2 S transp सुबहूनि and चरन्ति B2 बहूनि च (for सुबहूनि) K1 (before corr) वसंति, B3 D3 4 0 च संति (for चरन्ति) T1 G4 अपि (for मे)

12 K5 om 12 (cf v l 10) — c) D2-4 पुत्रवद्भिर्, T2 G1 2 द्विज पुत्र (by transp) — d) D1 चरिष्यामि प°

13 K5 om 13 (cf. v l 10) — a) D3 4 9 मौल्ये° (for मूल्ये°) — c) K1 2 D7 °पदार्थे — d) K1. 2 D8 समर्थौ (for ममार्थौ) D1 ममार्थौ नार्थतो गत°, S ममार्थो

पौरजानपदार्थं तु ममार्थो नात्मभोगतः ॥ १३
कामतो हि धनं राजा पारक्यं यः प्रयच्छति ।
न स धर्मेण धर्मात्मन्युज्यते यशसा न च ॥ १४
सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवान्मम ।
कुमारीं देवगर्भामामेकपुत्रभवाय मे ॥ १५
तथा तु बहु कल्याणमुक्तवन्तं नराधिपम् ।
उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् ॥ १६
उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम् ।
रेमे स तां समासाद्य कृतपुण्य इव श्रियम् ॥ १७
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
उद्यानेषु विचित्रेषु वनेषूपवनेषु च ॥ १८
हर्म्येषु रमणीयेषु प्रासादशिखरेषु च ।
वातायनविमानेषु तथा गर्भगृहेषु च ॥ १९
ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः ।
शिबिर्नाम्नाभिविख्यातो यः स पार्थिवसत्तमः ॥ २०
उपस्थाय स तं विप्रो गालवः प्रतिगृह्य च ।
कन्यां प्रयातस्तां राजन्दृष्टवान्विनतात्मजम् ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## ११७

नारद उवाच ।
गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत् ।
दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज ॥ १
गालवस्तु वचः श्रुत्वा वैनतेयेन भाषितम् ।

C. 5 4003
B. 5. 119. 2
K. 5. 117. 2

(G3 4 °स्मा) नात्मभोगिनः

14 K2 om 14 (cf. v.l. 10) — $^{a}$) D1 कामात्मा (for कामतो) — $^{b}$) D1 कामतो, D- कामात्स्व (for पारक्यं) — $^{c}$) D2.4 5 (by transp ) स न, T2 G2 स च K1.2 D1.2 1 धर्मज्ञ (for धर्मात्मन्) — $^{d}$) T G3 4 श्रेय°, G2.5 मन° (for यश°) - D13 S [अ]पि (for न) D13 G2.5 M3-5 वा (for च)

15 K2 om. 15 (cf. v.l. 10) — $^{b}$) K3 4 B2 M पुत्र (for पुत्रं) — T2 om $15^{c}$–$17^{b}$, G2 om. $15^{c}$–$17^{b}$

16 T2 G2 om. 16 (cf. v l 15) — $^{a}$) D13 इति (for तु) K3 Dn D1 बहुधा कन्यां (for बहु कल्याण) — $^{c}$) D2 उशीनरं B4 D5 G3 नरश्रेष्ठ, D2 द्विजश्रेष्ठ — D2 om. $16^{d}$–$17^{a}$ — $^{d}$) D2 गालवं

17 G2 om. 17, T2 om. $17^{ab}$, D2 om $17^{b}$ (cf v l. 15, 16) — $^{a}$) K2 D- उशीनरे प्रदायैनां — $^{b}$) M1.2 °गम्य (for °साद्य)

18 K2 om $18^{c}$–$19^{d}$, D2 om $18^{cd}$ — $^{c}$) G2 5 च, M2 [अ]पि (for वि)

20 D1 om. $20^{a}$–$21^{b}$ (along with $19^{cd}$) — $^{a}$) D- 2 अन्या (for अस्य) — $^{c}$) K2 D2 S (except G4) नामाभि(G5 °य)विख्यातो, K4 नामेति वि°, B2 नाम्नाति°, B2 नाम तु वि°, B. D2 4.6 नाम (B2 °म्ना) भुवि ख्यातो — $^{d}$) Dn D5 पार्थिवस्य (Dn2 °व द)त्तम K2 स्तवान्य स पार्थिव

21 D1 om $21^{ab}$ (cf v.l. 20) — $^{a}$) Dn1 S (except T2 G2) च (for स) K2 तां (for तं) — $^{b}$) S वा (for च) — $^{c}$) S प्रायाच्च त (G3 प्रायच्छ ता, M2 प्रायात्स ता) (for प्रयातस्ता) — $^{d}$) T G1.2 विनतासुत (for °त्मजम्) D6 गरुड पतगेश्वर

Colophon missing in D2, K5 D3 4.6 om it — *Sub-parvan* K1.3 B3 D1 G1 भगवद्यान, to it all except K1 add गालवचरित K2 4 B1.2 4.5 Dn D3 D1.2.8-10 T1 G. M (all om. sub-parvan name) mention only गालवचरित — *Adhy name* G5 M माधवीतृतीय(G5 adds here प्र)दानं — *Adhy no* (figures, words or both) K3 107, D1 T2 G4 M1-2 5 119, T1 G1.2 3 120, G3 M4 118 — *S'loka no* Dn D2 21

## 117

1 D2 om. $1^{ab}$ — $^{cd}$) K2 transp कृतार्थं and भवन्त

2 $^{b}$) K2 D1 वैनतेयस्य — $^{c}$) D1 तु, M4 स (for वद्) — $^{d}$) K2 D1 एव (for अस्य) K2 S (except G2 M1.2) हं, D2 4 6 तु (for हि).

C. 5. 4003
B. 5. 119. 2
K. 5. 119. 2

चतुर्भागावशिष्टं तदाचख्यौ कार्यमस्य हि ॥ २
सुपर्णस्त्वब्रवीदेनं गालवं पततां वरः ।
प्रयत्नस्ते न कर्तव्यो नैष संपत्स्यते तव ॥ ३
पुरा हि कन्यकुब्जे वै गाधेः सत्यवतीं सुताम् ।
भार्यार्थेऽवरयत्कन्यामृचीकस्तेन भाषितः ॥ ४
एकतःश्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
भगवन्दीयतां मह्यं सहस्रमिति गालव ॥ ५
ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः ।
अश्वतीर्थे हयाँल्लब्ध्वा दत्तवान्पार्थिवाय वै ॥ ६
इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु ।
तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्तास्ते पार्थिवैस्तदा ॥ ७
अपराण्यपि चत्वारि शतानि द्विजसत्तम ।
नीयमानानि संतारे हृतान्यासन्वितस्तया ।
एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् ॥ ८
इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय ।
विश्वामित्राय धर्मात्मन्षड्भिरश्वशतैः सह ।
ततोऽसि गतसंमोहः कृतकृत्यो द्विजर्षभ ॥ ९

गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः ।
आदायाश्वांश्च कन्यां च विश्वामित्रमुपागमत् ॥ १०

गालव उवाच ।

अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै ।
शतद्वयेन कन्येयं भवता प्रतिगृह्यताम् ॥ ११
अस्यां राजर्षिभिः पुत्रा जाता वै धार्मिकास्त्रयः ।
चतुर्थं जनयत्वेकं भवानपि नरोत्तम ॥ १२
पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते ।
भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् ॥ १३

नारद उवाच ।

विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा ।
कन्यां च तां वरारोहामिदमित्यब्रवीद्वचः ॥ १४
किमियं पूर्वमेवेह न दत्ता मम गालव ।
पुत्रा ममैव चत्वारो भवेयुः कुलभावनाः ॥ १५
प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै ।
अश्वाश्चाश्रममासाद्य तिष्ठन्तु मम सर्वशः ॥ १६
स तया रममाणोऽथ विश्वामित्रो महाद्युतिः ।

---

3 $^{b}$) K3 4 B D (except D7–9) T2 G1 वदतां (for पततां) B3 D2 वर — $^{d}$) K1 2 D8 4. 8 9 एव (or एष)
4 $^{a}$) B T2 G1 कान्यकुब्जे, D8 G3–5 M कन्या°. — $^{c}$) K5 Dn1 Ds2 भार्यार्थं K5 Ds2 वरयत्, Dn1 रमयत्, D3 4 9 T2 G2 वरयन् (for ऽवरयत्). K4 भावार्थं वरयामास
7 $^{a}$) D10 S पौंडरीकेण, Ca as in text — $^{c}$) K3 4 D2 दत्वा, S कृत्वा (T2 हृत्वा) (for क्रीत्वा) — $^{d}$) K1–3 5 B3 5 Ds D2–4 7 9 प्राप्तास्ते°, K4 Dn D6 प्राप्ते ते° (for प्राप्तास्ते) K3 पार्थिवोत्तमै° (for °वैस्तदा) B5 Dn D6 8 G3 4 सदा, D10 त्रिभि° (for तदा)
8 $^{d}$) K4 T2 G2 5 ततस्तत, D2–4 9 G3 हृतस्तथा; D7 10 T1 G1 हृतस्तत (for वितस्तया) — $^{f}$) K5 D7 केन° (for कर्हि°)
9 $^{b}$) M1 (*inf lin* as in text) 3–5 अस्मै (for तस्मै). — T2 G2 om 9$^{e}$–10$^{b}$ — $^{e}$) D2–4 9 10 G3 5 M1 2 ततो विगत° — $^{f}$) K3–5 B Dn D8 D1–4 6–9 द्विजोत्तम, D10 भवानपि, M1 2 द्विजर्षभ
10 T2 G2 om 10$^{ab}$ — $^{a}$) K1 2 5 B5 D1 T1 G3–5 तु (for त) — $^{b}$) K1 D2–4 8 9 T1 तदा, G3 तथा (for तत)
11 Most MSS om the ref — $^{b}$) K1 D1 2 G5 ते, K2 च, T G1–4 मे (for वै) — $^{c}$) D3 4 9 शतद्वयकृते कन्या
12 $^{c}$) K1 2 जनयस्वैकं, Ds1 D9 10 यत्वेवं, T2 G2 °यित्वैक — $^{d}$) K1 (before corr) 4 B D (except D3. 4. 7 9) T2 G2 M2 3 नरोत्तम
13 $^{a}$) K1 B3 Dn2 D1 2 9 T2 G1 2 4 एव, D3 4 9 इह (for एव) — $^{b}$) K2 Dn2 तुरगाणा K5 D3 D10 मे (for ते)
14 All MSS om the ref 1 — $^{b}$) D3 4 9 transp. सह and पक्षिणा — $^{d}$) D1 इद वचनमब्रवीद् Ca d s cite इदमिति (as in text)
15 K2 om 15 — $^{a}$) G3 5 किमर्थं — $^{b}$) D3 4 9 transp न and मम — $^{d}$) S (except M2) भवेरन् K5 कुलसाधना, D3 4 7 9 G2 °पावना°.
16 $^{b}$) K4 B °पुत्रभवाय, G5 °पुत्रोद्भवाय — $^{d}$) N (except K1. 2) चरतु (for तिष्ठन्तु)
17 $^{b}$) B3 °मति; D2 °मुनि (for °द्युति°) — K3 om (hapl) 17$^{c}$–18$^{b}$ — $^{c}$) D3 4 9 G3 आत्मार्थं (for

आत्मजं जनयामास माधवीपुत्रमष्टकम् ॥ १७
जातमात्रं सुतं तं च विश्वामित्रो महाद्युतिः ।
संयोज्यार्थैस्तथा धर्मैरश्वैस्तैः समयोजयत् ॥ १८
अथाष्टकः पुरं प्रायात्तदा सोमपुरप्रभम् ।
निर्यात्य कन्यां शिष्याय कौशिकोऽपि वनं ययौ ॥ १९
गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम् ।
मनसाभिप्रतीतेन कन्यामिदमुवाच ह ॥ २०
जातो दानपतिः पुत्रस्त्वया शूरस्तथापरः ।
सत्यधर्मरतश्चान्यो यज्वा चापि तथापरः ॥ २१
तदागच्छ वरारोहे तारितस्ते पिता सुतैः ।
चत्वारश्चैव राजानस्तथाहं च सुमध्यमे ॥ २२
गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम् ।
पितुर्निर्यात्य तां कन्यां प्रययौ वनमेव ह ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

# ११८

नारद उवाच ।
स तु राजा पुनस्तस्याः कर्तुकामः स्वयंवरम् ।
उपगम्याश्रमपदं गङ्गायमुनसंगमे ॥ १
गृहीतमाल्यदामां तां रथमारोप्य माधवीम् ।
पूरुयदुश्च भगिनीमाश्रमे पर्यधावताम् ॥ २
नागयक्षमनुष्याणां पतत्रिमृगपक्षिणाम् ।
शैलद्रुमवनौकानामासीत्तत्र समागमः ॥ ३
नानापुरुपदेशानामीश्वरैश्च समाकुलम् ।

C. 5. 4029
B. 5. 120. 4
K. 5. 120. 4

---

आत्मजं) — d) D2-4. 9 G3 माधव्यां पुत्रमष्टक, T1 G1. 4 पुत्रमष्टकनामकं, T2 G2 माधव्यामेकपुत्रकं.

18 K2 om 18ab (cf. v.l 17) — b) K3 B (except B.) Dn Ds D2 6 8 10 °मुनि° (for °द्युति°) — c) T G1. 2 4 कामै° (for धर्मै°) — d) K4. 5 D2-4 7 transp अश्वै° and तै°

19 b) D9 G3 M (M1 inf lin as in text) तथा (for तदा)

20 c) B Dn D1. 3 4 9 10 [अ]तिप्रतीतेन, D2 हि प्रती°, T2 G3-5 M [अ]भिप्रणी°, G2 [अ]पि प्रणी°, Ca d as in text — d) T G1 2 4 तां (for ह)

21 b) K1. 2 M2-5 तथा, K5 D7 भूय°, D10 T G M1 तव (for त्वया) K1. 2 तव (for तथा) D3. 4. 9 तथारूप स्त्वयापरः — c) K1. 2 धर्ममत्यरत°, K4 धर्ममत्यपर°, G3 सत्यधर्मपर°, Ca as in text — d) D10 मद्रे (for चापि) K5 तव, Ca तथा (as in text)

22 a) K1. 5 T2 G3 5 तथा°, K2 अथा° (for तदा°) — c) G3 5 M भर्तार° (for चत्वार°) — d) B3-5 Dn D1. 7 transp अहं and च

☞ In Dn2, the portion of the text from st 23 up to st 14 of adhy 120 is lost on a missing fol (96)

23 b) K1 M (except M1) पन्नगाशिन — After 23ab, D2-4 9 ins

462* गालव प्रययौ शीघ्र ययातिं नहुषात्मजम् ।

— c) K3 पितुर्निवेद्य, D2-4 9 तस्मै समर्प्य Dn1 D3 transp तां and कन्यां — d) K3 D3 4 9 च, K4. 5 D7 8 G3 हि (for ह) D10 प्रययौ तपसे वन

Colophon missing in Dn2 D5 — *Sub-parvan* K3 5 B1. 3 Dn1 भगवद्यान, followed by गालवचरित K1 2 4 B2 4 5 Ds D2-4 6-10 T1 G1. 2 5 M (all om sub-parvan name) mention only गालवचरित K5 D3 4. 7 9 cont समाप्त — *Adhy name* K1 2 अष्टकोत्पत्ति, G5 M ऋणनिर्यातन — *Adhy no* (figures, words or both) K3 G3 M4 119, D6 9(=109), D7 T2 G4 M1-3 5 120, T1 G1 2 5 121 — *S'loka no* K5 36, Dn1 D3 24

## 118

☞ This adhy is missing in Dn2 (cf v.l 5 117 23)

1 c) K1 G3 उपागम्य, Cs उपगम्य (as in text) — d) K1. 2 5 D7 गागयामुन°

2 c) K4 D3 4 6 8 9 पूरोर्यदो° (for पूरुर्यदु°) — d) D3 4 9 पर्यधावत

3 b) K4 B Dn1 Ds D1 6 8 गंधर्वमृग°, D3 4 9 सिद्धाना स दिवौकसा

C 5 4029
B. 5. 120. 4
K. 5. 120. 4

ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनम् ॥ ४
निर्दिश्यमानेषु तु सा वरेषु वरवर्णिनी ।
वरानुत्क्रम्य सर्वांस्तान्वनं वृतवती वरम् ॥ ५
अवतीर्य रथात्कन्या नमस्कृत्वा च बन्धुषु ।
उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ॥ ६
उपवासैश्च विविधैर्दीक्षाभिर्नियमैस्तथा ।
आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ॥ ७
वैडूर्याङ्कुरकल्पानि मृदूनि हरितानि च ।
चरन्ती शष्पमुख्यानि तिक्तानि मधुराणि च ॥ ८
स्रवन्तीनां च पुण्यानां सुरसानि शुचीनि च ।
पिबन्ती वारिमुख्यानि शीतानि विमलानि च ॥ ९
वनेषु मृगराजेषु सिंहविप्रोषितेषु च ।
दावाग्निविप्रमुक्तेषु शून्येषु गहनेषु च ॥ १०
चरन्ती हरिणैः सार्धं मृगीव वनचारिणी ।
चचार विपुलं धर्मं ब्रह्मचर्येण संवृता ॥ ११
ययातिरपि पूर्वेषां राज्ञां वृत्तमनुष्ठितः ।
बहुवर्षसहस्रायुरयुजत्कालधर्मणा ॥ १२
पूरुर्यदुश्च द्वौ वंशौ वर्धमानौ नरोत्तमौ ।
ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः ॥ १३
महीयते नरपतिर्ययातिः स्वर्गमास्थितः ।
महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः ॥ १४
बहुवर्षसहस्राख्ये काले बहुगुणे गते ।
राजर्षिषु निषण्णेषु महीयःसु महर्षिषु ॥ १५
अवमेने नरान्सर्वान्देवानृषिगणांस्तथा ।

---

4 K5 om $4^a$–$5^b$ — $^{ab}$) N (mostly) °देश्याना D10 तदा सुरूपैर्देवैश्च दानवैश्च तपस्विभि° — After $4^{ab}$, D3 4 9 *repeat* $1^{cd}$ — $^c$) S ऋषिभिश्च महाभागै° — $^d$) D2 सकुल, T G आकुल (for आवृत)

5 K5 om $5^{ab}$ (cf v l 4) — $^a$) K1 2 B3 T2 G2 च सा, D2 (by corr ) 3 4 9 10 G3 4 तदा; G5 तथा (for तु सा) — $^d$) K2 3 B4 Dn2 D6 8 transp वन and वर

6 $^b$) N (Dn2 missing) T2 G2 M1 2 नमस्कृत्य — $^c$) K (except K4) D7 दिव्यं (for पुण्य)

7 $^c$) D3 4 दत्वा (for कृत्वा) — $^d$) Ds2 वनचारिणी, D8 लघु°, D10 व्रत°.

8 K5 T2 om (hapl ) $8^a$–$11^b$ — $^a$) K1–3 D2 वैडूर्योकर°, B D3 4 9 10 T1 G1 वैडूर्यांकुर°. — $^c$) K1 2 D1 श्लक्ष्णमुख्यानि, K3 B (except B3) Dn1 D3 4 6 8–10 श्लक्ष्णशष्पाणि, D8 D7 श्लक्ष्णसस्यानि; D2 श्लक्ष्णपुण्यानि, M तृणमुख्यानि Cd cites श्लक्ष्ण — $^d$) T1 G1 2 4 स्निग्धा° (for तिक्ता°)

9 K5 T2 om 9 (cf v l 8) — $^a$) K4 पूज्याना, B5 G3 5 मुख्या° (for पुण्या°) — $^b$) D10 सुश्लक्ष्णानि (for सुरसा°) K1 2 D7 शुभानि, S (T2 om ) लघू° (for शुची°) — G5 om (hapl ) $9^{cd}$ — $^d$) D8 G2 विविधानि (for विम°)

10 K5 T2 om 10 (cf v l 8) — $^a$) B3 °वासेषु, D10 °युक्तेषु, Ca d °राजेषु (as in text) Cs cites मृगराज S (T2 om ) वनेष्वमृतकल्पेषु — $^b$) K4 B D3 4 6 9 व्याघ्र°, S (T5 om ) सिहविक्रोशितेषु Ca d s cite सिंहविप्रोषितेषु — G5 om (hapl ) $10^{cd}$. — $^c$) K3 4 B (except B2) °विप्रयुक्तेषु; S (T2 G5 om ) दवाग्नि° Ca cites विप्रयुक्तेषु, Cd विप्रमुक्तेषु

11 K5 T2 om $11^{ab}$ (cf v l 8) — $^c$) T2 G2 विपुलान्धर्मान्

12 $^a$) K4 G3 सर्वे° (for पूर्वे°) — $^b$) K1 B3 S (except T2 G2) वृत्तिम् (for वृत्तम्) — $^c$) Dn1 D6 8 °सहस्रांते, G3 5 °सहस्राणि — $^d$) K1–4 D2–4 6 9 अयुज्य(K2 °ष्य)त्, K5 D7 संयुक्तः, B Dn1 D6 युयुजे

13 $^a$) K4 D8 transp द्वौ and वशौ K2 वश्यौ, K3 Dn1 D5 D2–4 9 10 °शे, T2 G2 °श (for °शौ) — $^b$) K2 5 T G2 M1 वर्धयानौ, K4 °यतौ, M3–5 °येतौ — $^c$) D8 T1 2 (by corr ) G (except G2) प्रतिष्ठिते — $^d$) K3 D3 4 7 8 10 परलोकेषु, T1 2 (by corr ) G1. 3 4 M (except M4) नर(M1 *sup lin* सुर)लोके च

14 $^a$) K3 4 B (except B5) Dn1 D2–4 6 T2 G1 3 4 महीपते, K5 D7 न हीयते, G3 विसार्यते, Ca d as in text. — $^c$) K (except K4) D3 4 7–9 राजर्षि° (for नृपति°) — $^d$) K5 स्वर्गस्य फल°

15 $^a$) S अथ (for बहु ) — $^b$) K1 5 D7 G3 4 5 °गणे; K2 °तिथे (for °गुणे) — $^c$) T1 देवर्षि° (for निषण्णे°) K5 स राजर्षिषु निविष्टेषु (hypermetric) — $^d$) Ds2 D2 T G (except G4) M2 महीयस्सु K4 B Dn1 D1 6 10 महर्धिषु

16 $^a$) D2–4 9 नृपान् (for नरान्) — $^b$) K5 (*sup lin* ) G2 4 तदा (for तथा)

17 D1 8 om (hapl ) $17^{ab}$ — $^b$) K4 B1. 3 4 D6

ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः ॥ १६
ततस्तं बुबुधे देवः शक्रो बलनिषूदनः ।
ते च राजर्षयः सर्वे धिग्धिगित्येवमब्रुवन् ॥ १७
विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजम् ।
को न्वयं कस्य वा राज्ञः कथं वा स्वर्गमागतः ॥ १८
कर्मणा केन सिद्धोऽयं क वानेन तपश्चितम् ।
कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ॥ १९
एवं विचारयन्तस्ते राजानः स्वर्गवासिनः ।
दृष्ट्वा पप्रच्छुरन्योन्यं ययातिं नृपतिं प्रति ॥ २०
विमानपालाः शतशः स्वर्गद्वाराभिरक्षिणः ।
पृष्टा आसनपालाश्च न जानीमेत्यथाब्रुवन् ॥ २१
सर्वे ते ह्यावृतज्ञाना नाभ्यजानन्त तं नृपम् ।
स मुहूर्तादथ नृपो हतौजा अभवत्तदा ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## ११९

नारद उवाच ।
अथ प्रचलितः स्थानादासनाच्च परिच्युतः ।
कम्पितेनैव मनसा धर्षितः शोकवह्निना ॥ १
म्लानस्रग्भ्रष्टविज्ञानः प्रभ्रष्टमुकुटाङ्गदः ।
विघूर्णन्स्रस्तसर्वाङ्गः प्रभ्रष्टाभरणाम्बरः ॥ २
अदृश्यमानस्तान्पश्यन्नपश्यंश्च पुनः पुनः ।

C. 5. 4050
B. 5. 121. 3
K. 5. 121. 3

---

बलनिसूदन॰, G. M बलनिसू(G. °पू)दन॰ — $^{d}$) K2. 4 D7. 10 एनम्; D3. 4. 9 एव च (for एवम्) K5 धिगितेन-मयाब्रुवन्

18 $^{cd}$) D3. 4. 9 वै (for वा), and आस्थित (for आगत॰)

19 $^{b}$) K1. 2 B3 D7. 10 T2 G2. 3. 5 चानेन, K5 वा तेन (for वानेन) — $^{c}$) D10 केन (for कथ) S वि (for वा) — $^{d}$) K1. 2. 5 D7 लोके, D10 कथ (for केन) K3 B1. 3 D5 D3. 4. 6. 8. 9 ज्ञायतेन्युत, K4 युज्यतेन्युत (for ज्ञायतेऽप्युत) D2 पुन॰, D10 [ऽ]पि च, M (except M1) [ऽ]च्युत (for ऽप्युत)

20 $^{b}$) K3. 4 B Dn1 D5 D1. 2. 6–8 G3 राजान — $^{d}$) T1 G1. 4 नाहुष (for नृपतिं)

21 $^{c}$) K5 D2–4. 9 T1 G1 पृष्टा आ(D2–4. 9 पृष्टाश्चा)-सन्नपालाश्च — $^{d}$) D10 ते (for अथ) D3. 4. 9 न विद्म इति तेब्रुवन्, S न जानीम इति ब्रु॰

22 D6 om 22 — $^{a}$) K5 तद्, D10 [ऽ]पि (for ते) D3. 4. 9 च (for हि) M (except M2) सर्वे ह्यावृत विज्ञाना॰ — $^{b}$) D1 नाभ्यजानस्तथा नृप, S ययातिं नृपतिं प्रति (=20$^{d}$) — $^{c}$) B (except B2) G5 M1. 4 सु- (for स) T1 G1. 4 अपि, T2 G2 इव (for अथ) — $^{d}$) T1 G1. 4 M हृतौजा॰ (for ह॰) K1–3. 5 D2. 7 M3. 4 स्वभवद्, K4 B Dn1 D5 D6. 8. 10 M5 चाभवद्, D1. 3. 4. 9 G3. 5 M1. 2 सोभवद (for अभवद्) T2 G2. 4 हततेजा-भवत्तदा

Colophon missing in Dn2 D. — *Sub-parvan* K3. 5 B1. 3 D7. 8 भगवद्यान, to it K3. 5 D7 add ययातिपतन, B1. 3. 8 गालवचरित B2. 4. 5 Dn1 D5 D2. 6. 10 T1 G1. 5 M (all om sub-parvan name) mention only गालवचरित, which in D5 D10 is followed by ययातिपतन, in G5 by उत्तरयायात K1. 2 (likewise om sub-parvan name) mention only ययातिपतन, D3. 4. 9 mention only यायात — *Adhy name* T1 G1 ययाति-तपोविचारण, M ययातिमाधवीतपश्चरण — *Adhy no* (figures, words or both) D6 10 (=110), D7 T2 G4 M1–3. 5 121, T1 G1. 2. 5 122, G3 M4 120 — *S'loka no* K5 17, Dn1 D8 22

## 119

☞ This adhy is missing in Dn2 (cf v.l. 5 117 23)

1 $^{a}$) D5 D7–9 G5 M1–4 प्रचलित॰ (for °त॰) — $^{c}$) K3 B (except B4) D5 D2. 6–8 इव (for एव) — $^{d}$) B1. 2. 4 प्रपतिग्यन्महीतल (=3$^{d}$)

2 $^{a}$) K4 म्लानश्च भ्रष्टविज्ञान॰, K5 म्लानस्रग्भ्रष्ट॰, D5 म्लानस्रग्भ्रष्ट॰, T1 G1. 4 म्लान॰ प्रणष्ट॰, T2 G2 म्लान॰ प्रहृष्ट॰, M3–5 म्लान(M3 °न॰)प्रभ्रष्ट॰ — $^{b}$) D6. 8 प्रभ्रष्टसुदृढाङ्गद॰, D9 प्रनष्ट॰, T1 G1. 4 प्रणष्ट॰, T2 G2 प्रहृष्ट॰ S (mostly) °मकुटा॰ — $^{c}$) K2 विघूर्णन्भ्रस्त॰, K5 D52 D2–4. 8–10 T1 G3 M1. 4 विघूर्णस्रस्त॰, D7 T2 G1. 5 M3 विघूर्ण॰ स्रस्त॰

C 5 4070
B 5 121 3
K 5 121 3

शून्यः शून्येन मनसा प्रपतिष्यन्महीतलम् ॥ ३
किं मया मनसा ध्यातमशुभं धर्मदूषणम् ।
येनाहं चलितः स्थानादिति राजा व्यचिन्तयत् ॥ ४
ते तु तत्रैव राजानः सिद्धाश्चाप्सरसस्तथा ।
अपश्यन्त निरालम्बं ययातिं तं परिच्युतम् ॥ ५
अथैत्य पुरुषः कश्चित्क्षीणपुण्यनिपातकः ।
ययातिमब्रवीद्राजन्देवराजस्य शासनात् ॥ ६
अतीव मदमत्तस्त्वं न कंचिन्नावमन्यसे ।
मानेन भ्रष्टः स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज ।
न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् ॥ ७
पतेयं सत्स्विति वचस्त्रिरुक्त्वा नहुषात्मजः ।
पतिष्यंश्चिन्तयामास गतिं गतिमतां वरः ॥ ८
एतस्मिन्नेव काले तु नैमिषे पार्थिवर्षभान् ।
चतुरोऽपश्यत नृपस्तेषां मध्ये पपात सः ॥ ९
प्रतर्दनो वसुमनाः शिबिरौशीनरोऽष्टकः ।
वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् ॥ १०
तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितम् ।
ययातिरुपजिघ्रन्वै निपपात महीं प्रति ॥ ११
भूमौ स्वर्गे च संबद्धां नदीं धूममयीं नृपः ।
स गङ्गामिव गच्छन्तीमालम्ब्य जगतीपतिः ॥ १२
श्रीमत्स्ववभृथाग्र्येषु चतुर्षु प्रतिबन्धुषु ।
मध्ये निपतितो राजा लोकपालोपमेषु च ॥ १३
चतुर्षु हुतकल्पेषु राजसिंहमहाग्निषु ।
पपात मध्ये राजर्षिर्ययातिः पुण्यसंक्षये ॥ १४
तमाहुः पार्थिवाः सर्वे प्रतिमानमिव श्रियः ।
को भवान्कस्य वा बन्धुर्देशस्य नगरस्य वा ॥ १५
यक्षो वाप्यथ वा देवो गन्धर्वो राक्षसोऽपि वा ।
न हि मानुषरूपोऽसि को वार्थः काङ्क्षितस्त्वया ॥ १६

## ययातिरुवाच ।

ययातिरस्मि राजर्षिः क्षीणपुण्यश्च्युतो दिवः ।
पतेयं सत्स्विति ध्यायन्भवत्सु पतितस्ततः ॥ १७

---

— K5 om $2^{d}$–$3^{b}$ — $^{d}$) D3 4 6 °वरणावर.

3 K5 om $3^{ab}$ (cf v l 2) — $^{b}$) T G1 2 4 अदृश्य°, G3 न पश्यन्, M (except M2) अदृश्यन् (for अपश्यन्) — $^{d}$) K5 [अ]पतिष्यत, S प्रापतत्स (for प्रपतिष्यन्) K1 2 5 D7 G3 5 महीतले

4 $4^{ab}$ = (var) 5 111 $7^{ab}$ — $^{b}$) D3 4 8 6 कर्म-दूषण, S स्वर्ग° — $^{d}$) T1 G1 3 4 ह्य°, T2 G2 M [अ]भ्य°, G6 [अ]प्य° (for व्य°)

5 $^{a}$) D1 तत्र (for ते तु) K5 D3 4 7 6 T2 G2 राजान (for °न) — $^{d}$) Dn1 D5 D6 8 transp ययातिं and तं K5 ययातिं परितश्च्युत

6 $^{a}$) K5 G3 5 अभ्येत्य, B3 तत्रेत्य, D2 अथान्य°, a few MSS अथेत्य (for अथैत्य) — $^{b}$) K1 5 °पुण्य विपाकत, K2 °पुण्य निपातक, D6 °पुण्य विपातक°, K4 D2 S °पुण्य (D2 °पुण्य) निपातित — $^{d}$) D3 4, 6 शासन (for °नात्)

7 K5 om 7 — $^{b}$) K1 2 Dn1 D6 7 6 T1 G4 किंचित्, Ca कच्चित् (as in text) D2 अभिमन्यसे, D7 इव म°, Ca अवम° (as in text) — $^{c}$) G4 transp भ्रष्ट° and स्वर्ग D3 4 6 नष्ट° (for भ्रष्ट) K1 2 स्वर्गाद्धि (for स्वर्गस्ते) — $^{f}$) K1 G4 5 M4 तपस्व (for पतस्व). D7 एवम् (for तम्)

9 $^{b}$) S नैमिशे (for नैमिषे) — $^{d}$) B D (except D3 4 6, Dn2 missing) T1 G3–5 ह (for स°)

10 B2 om 10–12 — $^{c}$) M1 वाजिमेधेन

12 B2 om 12 (cf v l 10) — $^{a}$) D3 सनद्धा, T G2 °बाधा, G1 M1 (*inf lin* as in text) 4 °बधा (for °बद्धां) — $^{b}$) D10 नाव (for नदीं) D1 धूमयतीं, G3 5 मूलमयीं K (except K5) B D (except D1 2 7; Dn2 missing) इव, T2 नृप — $^{c}$) K1 2 B2 गगामिव; K3 4 Dn1 D5 D1–4 6–8 गगां गाम्, K5 B1 4 5 गगे गाम्, D10 गगायाम् (for स गङ्गाम्) K1 2 B2 च (for इव)

13 $^{a}$) K4 D2 3 T G2 M4 (*inf lin*) Ca अवभृथा-ग्रेषु, G4 °ख्येषु, M3–5 °क्तेषु — $^{b}$) G1 4 प्रीतबन्धुषु, G3 5 M1 (*inf lin* as in text) 2–5 प्रिय°, G2 प्रीति°, all comm as in text — $^{d}$) K2 5 B D (except D3 4 6 6, Dn2 missing) M3 4 सः (for च) M1 2 लोकपालसमेषु च

14 $^{a}$) K4 हुतकालेषु, K5 ब्रह्मकल्पेषु

15 $^{b}$) K3–5 B D (except D7, Dn2 missing) दीप्यमानमिव श्रिया (K5 °यः) Ca d cite प्रतिमान (as in text) — $^{d}$) K D2–4 6 8 G5 च (for वा)

16 $^{a}$) K1 2, 4 D3 4 6 यदि (for [अ]प्यथ) D7 यक्षोसि यदि वा देव°, S यक्षो विद्याधरो देवः. — $^{d}$) K3 4

राजान ऊचुः ।
सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ ।
सर्वेषां नः क्रतुफलं धर्मश्च प्रतिगृह्यताम् ॥ १८
ययातिरुवाच ।
नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियो ह्यहम् ।
न च मे प्रवणा बुद्धिः परपुण्यविनाशने ॥ १९
नारद उवाच ।
एतस्मिन्नेव काले तु मृगचर्याक्रमागताम् ।
माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन् ॥ २०
किमागमनकृत्यं ते किं कुर्मः शासनं तव ।
आज्ञाप्या हि वयं सर्वे तव पुत्रास्तपोधने ॥ २१
तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा ।
पितरं समुपागच्छद्ययातिं सा ववन्द च ॥ २२
दृष्ट्वा मूर्ध्ना नतान्पुत्रांस्तापसी वाक्यमब्रवीत् ।
दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः ।
इमे त्वां तारयिष्यन्ति दिष्टमेतत्पुरातनम् ॥ २३
अहं ते दुहिता राजन्माधवी मृगचारिणी ।
मयाप्युपचितो धर्मस्ततोऽर्धं प्रतिगृह्यताम् ॥ २४
यस्माद्राजन्नराः सर्वे अपत्यफलभागिनः ।
तस्मादिच्छन्ति दौहित्रान्यथा त्वं वसुधाधिप ॥ २५
ततस्ते पार्थिवाः सर्वे शिरसा जननीं तदा ।
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् ॥ २६
उच्चैरनुपमैः स्निग्धैः स्वरैरापूर्य मेदिनीम् ।
मातामहं नृपतयस्तारयन्तो दिवश्च्युतम् ॥ २७
अथ तस्मादुपगतो गालवोऽप्याह पार्थिवम् ।
तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् ॥ २८

C. 5. 4077
B. 5. 121. 29
K. 5. 121. 29

इति श्रीमहाभारते उद्योगपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

B D (except D7 8, Dn2 missing) काङ्क्षते (for काङ्क्षित).

17 T2 om (hapl.) 17–18 — [b]) K D1–4 7–9 T1 transp च्युत and दिव — [d]) D8 4 9 स्वत, G5 स्वह (for तत)

18 T2 om 18 (cf v.l. 17) D2 राजर्षय (for राजान ऊ°) — [b]) K5 D7 भरत° (for पुरुष°)

19 [b]) D10 [ऽ]स्मि (for हि) — [c]) K2 6 D8 4. 9 तु (for च) — [d]) K1. 2 °निवाम्नने

20 A few MSS om the ref — [b]) D2 °समागतां, D3 4 9 °क्रियागता, D10 स्वेच्छया व्यक्रिमागता — [c]) K2 4 D5 D10 M2 प्राप्य (for प्रेक्ष्य) — [d]) G1. 4 om. ते G3 5 एवम् (for इदम्)

21 [b]) M2–5 शासनात् (for °न) — [c]) K4 आज्ञापय, D2 आज्ञा देहि, G8 वृणीमहि (for आज्ञाप्या हि)

22 [a]) D3 4 9 वचनं (for भाषितं) — [c]) D2 °गम्य (for °गच्छत्). — [d]) D2 पार्थिवोत्तम, T2 G2 अभिवाद्य च (for सा ववन्द च)

23 [a]) K4 B1. 3 4 Dn1 D5 D6 10 स्पृष्ट्वा (for दृष्ट्वा) K3 4 6 B1. 3 4 Dn1 D5 D6 10 मूर्धनि तान्, D1 सर्वोन्नतान्, D2–4 T2 G1 2 मूर्धानतान् (for मूर्ध्ना नतान्) G8 तास्तु (for पुत्रान्) — [d]) D2 तपस्विन, S Ca न ते परे, Cd न ते परा (as in text) — [f]) K2–4 B Dn1 D5 D2–4 6 G1. 2 3 M1 (inf lin as in text) 5 इष्टम् (for दिष्टम्) K1–4 B2 4 5 D5 D2–4 6 8 9 (and all comm ) पुरातने; Dn1 D1 पुरातनै

24 [d]) T2 G2 3 M तदर्धं G1 मम° (for प्रति°)

25 [a]) K4 तात (for राजन्) — [b]) B3 °भागिनश्च ये, D2 °फलहेतव, G1 ह्यपत्यफल°

27 [a]) D2 °पद्मै (for °पमै) — [b]) D8 4 9 स्वरैरमर संनिभ — [d]) T2 G2 6 नभ° (for दिव°) — After 27, T G read 5 120 18, *repeating* it in its proper place (G8 reads it here only!)

28 [a]) D3 4. 9 T2 G1. 2 4 [अ]कस्मात्, T1 G8 6 कस्मात् (for तस्मात्) — [c]) D5 [ऽ]पि (for मे) Ds2 अर्ध°, Ca d s अष्ट° (as in text) D1 तपसोष्टविभागेन — [d]) T G2 3 आरोहतात् (for °हतां)

Colophon missing in Dn2 D5 — *Sub-parvan* B1 3 Dn1 D1 M1. 2 भगवद्यान, to it B1. 3 Dn1 M1. 2 add गालवचरित, D1 ययातिपतन K4 B2 4 5 D5 D2 6 10 T1 G1. 5 (all om. sub-parvan name) mention only गालवचरित, which in D5 D10 is followed by ययातिपतन K1. 3 (likewise om. sub-parvan name) mention only ययातिपतन, D3 4 9 mention only याग्रात, D8 only ययातिपातन — *Adhy name* G2 5 M ययातिस्वर्गपतन — *Adhy no* (figures, words or both) D6 11 (=111), D7 T2 G4 M1–3 5 122, T1 G1 2 5 123, G3 M4 121 — *S'loka no* Dn1 29, D3 30, D10 27

# १२०

C. 5. 4078
B 5. 122. 1
K 5. 122. 1

नारद उवाच ।

प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुंगवः ।
ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः ॥ १
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत्पदा ॥ २
ततो वसुमनाः पूर्वमुच्चैरुच्चारयन्वचः ।
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा ॥ ३
प्राप्तवानसि यल्लोके सर्ववर्णेष्वगर्हया ।
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् ॥ ४
यत्फलं दानशीलस्य क्षमाशीलस्य यत्फलम् ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ॥ ५
ततः प्रतर्दनोऽप्याह वाक्यं क्षत्रियपुंगवः ।
यथा धर्मरतिर्नित्यं नित्यं युद्धपरायणः ॥ ६
प्राप्तवानसि यल्लोके क्षत्रधर्मोद्भवं यशः ।
वीरशब्दफलं चैव तेन संयुज्यतां भवान् ॥ ७
शिबिरौशीनरो धीमानुवाच मधुरां गिरम् ।
यथा बालेषु नारीषु वैहार्येषु तथैव च ॥ ८
संगरेषु निपातेषु तथापद्व्यसनेषु च ।
अनृतं नोक्तपूर्वं मे तेन सत्येन खं व्रज ॥ ९
यथा प्राणांश्च राज्यं च राजन्कर्म सुखानि च ।

---

## 120

☞ In Dn2, st 1–14 are missing (cf v l 5 117 23)

1 $^{b}$) S (except G3) सर्वै॰ (for सद्भि॰). Dn1 T2 G1 2 ॰पुगवैः — D3 4 8 9 G3 M (see below) ins after $1^{ab}$ T G1 2 4 5, after $1^{cd}$

463* समारुरोह नृपतिरस्पृशन्वसुधातलम् ।

— K2 om $1^{c}$–$2^{b}$, G3 M om $1^{cd}$ — $^{c}$) K5 ॰संस्थानात्, D10 (by corr.) ॰संस्थाने — After 1, D2 ins

464* नारद उवाच ।
प्रत्युज्जगाम तं स्थान देवलोक नराधिप॰ ।
अव्याप्य दिव्यसंस्थान बभूव विगतज्वर॰ ।

2 K2 om $2^{ab}$ (cf v l 1) — D1 दिव्यमालाम्बरधर॰, S दिव्यांबरधरो दिव्य — $^{b}$) =(var ) 1 26 $45^{b}$, 76. $5^{d}$ — $^{c}$) S ॰स्रजोपेत॰ — $^{d}$) K1 D1 7 तदा (for पदा) D2–4 9 S पृथिवीमस्पृशन्निव (D2–4 9 G4 ॰स्पृपः)

3 K5 om 3–14 — $^{ab}$) D2m 3 4 9 चोच्चैर् (for पूर्वम्), and पूर्वम् (for उच्चैर्) T1 G1 4 उच्चावच (for उच्चारयन्) — $^{d}$) B3 D8 D10 M5 नृप॰, D2 वचः (for नृप)

4 K5 om 4 (cf v l 3) — $^{a}$) =$7^{a}$ D3 4 9 G2 य (for यत्) — $^{b}$) K4 अगर्हित (for अगर्हया) D10 सर्ववर्णसमर्हणात — $^{c}$) G3 दानानि, M2 तथापि (for तदपि) D8 अह ते (for अथ च) D10 तदन्यदपि दास्यामि, T G1 2 5 तथाप्यह प्रदास्यामि, G4 तदप्यह प्रदास्यामि, M1 तथाह ते च दास्यामि — $^{d}$) =$5^{d}$, $7^{d}$.

5 K5 Dn1 (hapl ) om 5 (cf v.l 3); D1 om. (hapl ) 5–7 D2 reads 5 after 7. — $^{c}$) K1. 2 D8 तत् (for यत्) K1 2 D8 G3 आदाय (for आधाने) — $^{d}$)=$4^{d}$, $7^{d}$ — After 5, T2 ins 465*

6 K5 D1 om 6 (cf v l 3, 5) — $^{c}$) K1 2 यथा धर्मपतिर्, K4 अथ धर्मरतो, D2–4 9 G2 क्षत्रधर्मरतिर्, T1 G1 3–5 M क्षत्रधर्मरतो, T2 धर्मक्षत्ररतिर् T2 G2 5 om, $6^{d}$–$7^{a}$ — $^{d}$) K2 B1 3 D7 यथा (for नित्य) K2 B1. 3 धर्मे॰, D2–4 9 यज्ञ॰ (for युद्ध॰)

7 K5 D1 om 7 (cf v l 3, 5), T2 G2 5 om. $7^{a}$ (cf v l 6) — $7^{a}$=$4^{a}$ — $^{b}$) B2 4 5 Dn1 D8 D9 8 10 क्ष(D10 क्षा)त्रयशोद्भव — $^{c}$) D3 4 9 ॰पर (for ॰फल). — $^{d}$)=$4^{d}$, $5^{d}$ — After 7, D2 reads 5 D3 4 8 9 S ins after 7 (T2, after 5)

465* यथा धर्मरतिर्नित्य तेन सत्येन खं व्रज ।

[cf. $9^{cd}$ — D3 4 8 तथा धर्मरतिर्, D9 तथा धर्मे रतिर् G5 नीता (for नित्य) D3 4 8 9 संग्रहम्, G3–5 ख व्रजे (for ख व्रज)] — Thereafter G1 reads 11

8 K5 om 8 (cf v l 3) T2 reads 8–9 after 12 — $^{a}$) K1 2 D7 T G1 2 5 [अ]पीमाम्, D3 4 9 वीर (for धीमान्) — $^{c}$) T1 transp बालेषु and नारीषु G2 नारीणा (for ॰षु) — $^{d}$) T2 G1 2 5 चैवाक्षेषु, all comm. as in text D3 4 9 रथे(D9 ॰ते)षु (for तथैव) D10 वैहार्य समयेषु च

9 K5 om 9 (cf. v l 3) For transp. in T2 cf v l 8 — $^{b}$) B3 D8 M4 यथा (for तथा) D2–4 8 9 G3–5 M च व्यसनेषु, T G1 2 [अ]तिव्यस॰ (for [आ]पद्व्य॰) — $^{d}$)=$10^{d}$, $11^{d}$, $14^{d}$

10 K5 om 10 (cf v l 3) For transp in T2 cf v l. 8 — $^{a}$) D2 (by corr ) 3 4 9 अथ (for यथा).

त्यजेयं न पुनः सत्यं तेन सत्येन खं व्रज ॥ १०
यथा सत्येन मे धर्मो यथा सत्येन पावकः ।
प्रीतः शक्रश्च सत्येन तेन सत्येन खं व्रज ॥ ११
अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः ।
अनेकशतयज्वानं वचनं प्राह धर्मवित् ॥ १२
शतशः पुण्डरीका मे गोसवाश्च चिताः प्रभो ।
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि ॥ १३
न मे रत्नानि न धनं न तथान्ये परिच्छदाः ।
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज ॥ १४
यथा यथा हि जल्पन्ति दौहित्रास्तं नराधिपम् ।
तथा तथा वसुमतीं त्यक्त्वा राजा दिवं ययौ ॥ १५
एवं सर्वे समस्तास्ते राजानः सुकृतैस्तदा ।
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा ॥ १६
दौहित्राः स्वेन धर्मेण यज्ञदानकृतेन वै ।
चतुर्षु राजवंशेषु संभूताः कुलवर्धनाः ।
मातामहं महाप्राज्ञं दिवमारोपयन्त ते ॥ १७

राजान ऊचुः ।

राजधर्मगुणोपेताः सर्वधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिव ॥ १८

C. 5. 4099
B. 5. 122. 13
K. 5. 122. 13

इति श्रीमहाभारते उद्योगपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

D8 4 9 वा (for the second च) — $^{b}$) K1. 2 D1. 8 4 7 9 राज्यकर्म, K8 B8 D2 M राजकर्म, K4 B1 5 राजन्काम°; B1. 2 राजन्धर्म; T1 G1 2 4 5 राजधर्म°; G5 यथा धर्म° — $^{c}$) S त्वह (for पुन°) — $^{d}$) = $9^{d}$, $11^{d}$, $14^{d}$

11 K5 om 11 (cf v. l 3), D6 G3 om (hapl ) 11, T1 om (hapl ) 11–14 G1 reads 11 (with v l.) after 465*, and *repeats* it here — $^{ab}$) S (T1 G3 om.) धर्मोय (for मे-धर्मो), and मे यम° (for पावक°) — $^{c}$) B Dn1 D5 D1. 10 प्रीत° शतक्रतुश्चैव; D8 प्रीत° क्रतुशतैनैव — $^{d}$) = $9^{d}$, $10^{d}$, $14^{d}$ D2–4 9 ततो (D2 °था) राजन्दिव व्रज

12 K5 T1 om 12 (cf v l 3, 11) — $^{c}$) B5 °यज्वा च, D10 °मख°, T2 G1 M °यज्वा त — $^{d}$) B2 4 Dn1 D5 D6–8 10 नाहुप (for वचन) B2 4 Dn1 D6 8 प्राप्य (for प्राह) — After 12, T2 reads 8–9

13 K5 T1 om 13 (cf v l 3, 11) — $^{a}$) S (except M5, T1 om ) पौंदरीका — $^{b}$) K4 B Dn1 D5 D1 6 8 10 G1 M1 चरिता°, D7 च कृता°, G5 रचिता° (for च चिता°) K1–3 B3 विभो, D5 मम, D10 मया (for प्रभो) D2–4 9 अश्वमेधा ह्यनेकशः — $^{c}$) K4 वाजिमेधाश्च, D10 वाजपेयाद्या°

14 K5 T1 om 14 (cf v l 3, 11) — $^{d}$) = $9^{d}$, $10^{d}$, $11^{d}$ — After 14, D2 ins

466* यदि सत्यं ब्रवीम्येतत्तेन सत्येन वै व्रज ।

15 Dn2 *resumes*! — $^{a}$) G3 6 M च (for हि) D10 यथा यथाददज्योति° — $^{cd}$) K1 ययौ (for गत ) D2 तथा वसुमतीं त्यक्त्वा राजा स्वर्गं गतस्तु वै

16 $^{a}$) K4 B1 8 D8 G8 समस्ते°, D1 समाना°; D10 समेता°, Ca d समस्ता° (as in text) — $^{b}$) D10 दौहित्रा° (for राजान°)

17 D10 om 17–18 — $^{a}$) K5 D1–4 7 9 T2 G2 8 5 M दौहित्रास्तेन S पुण्येन (for धर्मेण) — $^{b}$) K (except K4) D2–4 7 9 दानयज्ञकृतेन वै (K5 D7 च) — $^{d}$) D1 कुलनंदना° — K5 om. $17^{ef}$ — $^{e}$) B5 °प्राज्ञा° (for °प्राज्ञं) — $^{f}$) K8 B1–3 T G M4 °मारोपयति ते, K4 °मारोपयस्तदा

18 D2 10 om 18 (cf v l 17) T G read 18 (for the first time) after 5 119 27, and *repeat* it here (in G3 only there is no repetition) — $^{b}$) S सत्यधर्मगुणान्विता° (T1 G1. 4 °परायणा°) — $^{d}$) B1 2 4 आरोहता भवान् (for आरोह पार्थिव)

Colophon missing in D6, K5 om it — *Sub-parvan* B1 8 Dn D7 8 G5 भगवद्यान; to it B1 8 Dn G5 add गालवचरित, D7 ययातिपतन, D8 गालवचरिते ययातिपतन K4 B2 4 5 D5 D1. 2 6 10 T1 G1 M (all om sub-parvan name) mention only गालवचरित K1–8 (likewise om sub-parvan name) mention only ययातिपतन, D8 4 9 only यायात — *Adhy name* D1 ययातिस्वर्गारोहण; T1 G1 M ययातिदौहित्रप्रशंसन, G5 ययातिपुनःस्वर्गारोहणं — *Adhy no* (figures, words or both) D6 12 (= 112), D7 T2 G4 M1–8 5 123, T1 G1 2 5 124, G3 M4 122 — *S'loka no* Dn 18, D8 19

## १२१

C. 5. 4097
B. 5. 123. 1
K. 5. 123. 1

नारद उवाच ।

सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः ।
अभ्यनुज्ञाय दौहित्रान्ययातिर्दिवमास्थितः ॥ १
अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना ।
परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना ॥ २
अचलं स्थानमारुह्य दौहित्रफलनिर्जितम् ।
कर्मभिः स्वैरुपचितो जज्वाल परया श्रिया ॥ ३
उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः ।
प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिस्वनैः ॥ ४
अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः ।
अर्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ॥ ५
प्राप्तः स्वर्गफलं चैव तमुवाच पितामहः ।
निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ॥ ६
चतुष्पादस्त्वया धर्मश्चितो लोक्येन कर्मणा ।
अक्षयस्तव लोकोऽयं कीर्तिश्चैवाक्षया दिवि ।
पुनस्तवाद्य राजर्षे सुकृतेनेह कर्मणा ॥ ७
आवृतं तमसा चेतः सर्वेषां स्वर्गवासिनाम् ।
येन त्वां नाभिजानन्ति ततोऽज्ञात्वासि पातितः ॥ ८
प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः ।
स्थानं च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम् ।
अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययम् ॥ ९

ययातिरुवाच ।

भगवन्संशयो मेऽस्ति कश्चित्तं छेत्तुमर्हसि ।
न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह ॥ १०
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैरर्जितं मे महत्फलम् ॥ ११
कथं तदल्पकालेन क्षीणं येनास्मि पातितः ।
भगवन्वेत्थ लोकांश्च शाश्वतान्मम निर्जितान् ॥ १२

---

**121**

1 $^{a}$) $D_{10}$ आरोहित. (for आरोपित) $K_{5}$ स पुरा च्यावित. स्वर्गात् — $^{b}$) $G_{5}$ $M_{2}$ पार्थिवो (for °वैर्)

2 $K_{5}$ om 2 $K_{3}$ $M_{3-5}$ om (hapl) $2^{cd}$. — $^{d}$) T G च सुगधिना; $M_{1\ 2}$ सुसुगधिना (for पुण्य°)

3 $^{a}$) B $Dn_{1}$ $D_{5}$ $D_{2-4.6.8}$ आसाद्य (for आरुह्य) — $^{c}$) $D_{8}$ S तैर् (for स्वैर्) $K_{5}$ $D_{7}$ उपावृत्तो; S उपचितैर् (for उपचितो)

4 $^{a}$) $B_{1-3}$ $Dn_{1}$ °नृत्यश्च, $B_{4\ 5}$ °नृत्तैश्च — $^{c}$) $T_{1}$ $G_{4}$ प्रीत K (except $K_{3}$) $D_{2-4\ 7-10}$ परिगृहीतश्च — $^{d}$) $D_{2-4.9}$ स्वर्ग- (for स्वर्गे)

5 $K_{5}$ om. 5. — $^{b}$) $D_{3\ 4\ 9}$ देवराज इवामरै° — $^{c}$) Some MSS spell अर्घ्येण $D_{3\ 4\ 9}$ अर्चितश्चात्र माल्येन.

6 $^{a}$) $D_{10}$ $M_{5}$ प्रास (for प्राप्तः) $D_{10}$ एन (for एव) — $^{c}$) $K_{1\ 2\ 5}$ $B_{3}$ $D_{2-4,7-9}$ $G_{2}$ निवृत्तं, $T_{1}$ $G_{1.4}$ नृपति $K_{4}$ शांतमासीन

7 $Dn_{2}$ om 7 — $^{b}$) $K_{1-3}$ $B_{2\ 3}$ $Dn_{1}$ $D_{3\ 4\ 6\ 9\ 10}$ S (except $T_{1}$ $G_{1}$) लौक्येन, $K_{5}$ लोकेन, Ca d. s लोक्येन (as in text) — $K_{5}$ om $7^{c}$–$9^{d}$, $D_{7\ 9}$ $T_{2}$ $G_{2}$ om. (hapl) $7^{cdef}$. — $^{d}$) $D_{1}$ (sup lin. as in text) तव (for दिवि) — $^{e}$) $T_{1}$ $G_{3.4}$ पूत° (for पुन°) $K_{3}$ B $Dn_{1}$ $D_{5}$ $D_{1\ 6\ 8\ 10}$ त्वयैव; $K_{4}$ $G_{5}$ $M_{3-5}$ त्वयाद्य; $D_{3.4}$ त्वयाथ, $T_{1}$ $G_{1.3\ 4}$ त्वमद्य (for तवाद्य). — $^{f}$) $Dn_{1}$ S (except $G_{5}$, $T_{2}$ $G_{2}$ om.) स्वकृतेन, $D_{10}$ सुकृत तत् (for सुकृतेन) $D_{3\ 4}$ $T_{1}$ $G_{1\ 4}$ एव (for इह) B $Dn_{1}$ $D_{5}$ $D_{6\ 10}$ विघातित (for इह कर्मणा)

8 $K_{5}$ om 8 (cf. v.l. 7) — $^{c}$) $K_{3\ 8}$ $D_{9}$ ये च (for येन) $D_{10}$ नाभ्यजानस — $^{d}$) $K_{3}$ B $Dn_{1}$ $D_{5}$ $D_{2-4\ 6-9}$ Cn अज्ञातोसि; $D_{10}$ शक्रेण, Cd अज्ञात्वासि (as in text) $G_{4}$ ततोज्ञात्वा निपातित

9 $K_{5}$ om $9^{abcd}$. — $^{a}$) $B_{1\ 2\ 4}$ अद्यैव; $B_{3}$ प्रीत्या च; $T_{1}$ $G_{1\ 4}$ धार्मिकै° (for प्रीत्यैव) $B_{3}$ [ए]वापि, $D_{10}$ चापि, $T_{2}$ $G_{2}$ चापि (for चासि) $D_{10}$ पुण्यैर्वचोभिर्दौहित्रै° — $^{c}$) $D_{10}$ स्वस्थान (for स्थान च) — $^{e}$) $K_{5}$ $D_{7}$ कर्म (for पुण्यम्) — $^{f}$) $D_{10}$ दिष्ट्यैतद् (for उत्तम) $K_{5}$ पुण्यमत्यतमव्यय; $D_{7}$ पुण्यमुत्तममव्यय

10 $^{b}$) $K_{5}$ $D_{7}$ त्वं (for त) $G_{2}$ वक्तुम् (for छेत्तुम्) — $^{c}$) $K_{4}$ अन्यतमम्, $Ds_{2}$ $M_{1\ 3}$ अन्यमर्हेम् (for अन्यमहम्) — $^{d}$) $T_{1}$ $G_{1\ 4}$ °पितामहात्

11 $11^{abc}$ = $13^{abc}$ — $^{a}$) $K_{5}$ °सहस्राणि, S सहस्र तु — $^{d}$) $D_{7}$ (sup lin) सु- (for मे). $K_{5}$ S यन्मयोपार्जित फल.

12 $K_{5}$ om (hapl) $12^{a}$–$13^{d}$, $G_{4}$ om $12^{ab}$ — $^{a}$) $T_{2}$ °दोषेण (for °कालेन) $B_{3}$ $D_{5}$ $D_{10}$ तदनेनैव दोषेण (= $14^{a}$), $T_{1}$ $G_{2}$ तदेकेनैव दोषेण $G_{5}$ om. (hapl.) $12^{c}$–$14^{b}$. — $^{c}$) $D_{3\ 10}$ T $G_{3}$ $M_{2}$ भगवान् (for भगवन्).

पितामह उवाच ।

बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैर्यत्त्वयोपार्जितं फलम् ॥ १३
तदनेनैव दोषेण क्षीणं येनासि पातितः ।
अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः ॥ १४
नायं मानेन राजर्षे न बलेन न हिंसया ।
न शाठ्येन न मायाभिर्लोको भवति शाश्वतः ॥ १५
नावमान्यास्त्वया राजन्नवरोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति समः क्वचित् ॥ १६
पतनारोहणमिदं कथयिष्यन्ति ये नराः ।
विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः ॥ १७

नारद उवाच ।

एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना ।
निर्बन्धतश्चातिमात्रं गालवेन महीपते ॥ १८
श्रोतव्यं हितकामानां सुहृदां भूतिमिच्छताम् ।
न कर्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयोदयः ॥ १९
तस्मात्त्वमपि गान्धारे मानं क्रोधं च वर्जय ।
संधत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव ॥ २०
ददाति यत्पार्थिव यत्करोति
यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापकर्षो
नान्यस्तदश्नाति स एव कर्ता ॥ २१
इदं महाख्यानमनुत्तमं मतं
बहुश्रुतानां गतरोषरागिणाम् ।
समीक्ष्य लोके बहुधा प्रधाविता
त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते ॥ २२

C. 5. 4120
B. 5. 123. 23
K. 5. 123. 24

इति श्रीमहाभारते उद्योगपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

$D_{10}$ वेद लोकान्, $T_1$ (corrupt) आत्तधानाश्च, $T_2$ $M_1$ आरथ लोकाश्च, $G_1$ अर्थलोकाश्च, $G_3$ अर्धलोकाश्च, $G_4$ आर्थिलोका°, $M_2$ आर्थलोकां°, $M_3$ अथ लोकाश्च, $M_4$ नागलोकाश्च (for वेग्य लोकाश्च) Ca d cite आरथ — $^d$) $K_1$ Dn $M_1$ निर्मितान्, $D_{2-4\ 9}$ चार्चितान्, $D_{6\ 8}$ चार्जितान् (for निर्जितान्) — After 12, $K_4$ B D ins

467* कथ नु मम तत्सर्वं विप्रनष्ट महाद्युते ।

13 $13^{abc}=11^{abc}$ — $K_5$ G. om 13 (cf v.l. 12), $G_2$ om $13^a$–$14^b$ — $D_{1-4\ 6\ 8\ 9}$ $G_{4.5}$ ब्रह्मोवाच (resp ब्रह्मा) (for पितामह उ°) — $^a$) $T_2$ $G_{3\ 4}$ °सहस्रं तु — $^d$) $B_{1.2\ 4}$ $D_2$ अर्जित ते महत्फलं

14 $G_{2\ 5}$ om $14^{ab}$ (cf v l 13, 12) — $^a$) $K_5$ तदा तेनैव, $D_7$ तदल्पेनै°, $T_1$ $G_{1\ 3\ 4}$ $M_{1\ 2}$ तदेकेनै°, $M_{4.5}$ तदनेनैक° — $14^b$=(var) $12^b$ — $^c$) $K_{1.2}$ $G_7$ $G_3$ अतिमानेन, K. पत°, $D_{2-4.9}$ $G_5$ अत्र° (for अभि°)

16 $^{ab}$) $K_3$ B Dn $D_8$ $D_{6\ 8\ 10}$ राजन्नधमो°, $D_{2-4\ 9}$ °न्नधरो°, $D_7$ $G_2$ °न्नावरो°, $T_2$ °न्नापरो° — $K_5$ om $16^{cd}$ — $^c$) $K_{1.2}$ न हि मानप्रदुष्टाना, $T_1$ $G_{1\ 4}$ नाभिमानप्रदग्धाना — $^d$) $K_{2\ 3}$ $B_{3-5}$ Dn $D_{1-4\ 6\ 8\ 9}$ शम° (for सम°) — $K_5$ ins after $16^{ab}$ $D_7$, after 16

468* ययातेश्चैव राजर्षे सुहृदा भूतिमिच्छताम् ।

(cf $19^{ab}$)

18 $^a$) $K_{1.2\ 5}$ $T_1$ $G_{1.3\ 4}$ [ऽ]तिमानेन, $D_{2-4}$ हि मानेन, $T_2$ $G_{2\ 5}$ [ऽ]तिमानस्य, M [ऽ]भिमानस्य (for ऽभिमानेन) — $^c$) $K_4$ निर्बंधादतिमात्र च, $B_{1\ 2\ 4\ 5}$ Dn $D_8$ $D_{1\ 6}$ निर्बंन्धवातिमात्र च, $B_3$ निर्बंधतोतिमात्रेण, S निर्बंधनाच्चातिमात्र

19 $^b$) $K_{3\ 4}$ $B_{3\ 5}$ Dn $D_8$ $D_{1.6\ 8\ 10}$ हितम् (for भूतिम्) — $^d$) S क्षयावह° (for क्षयो°)

20 $^b$) $D_{3\ 4\ 9}$ S (by transp) क्रोध मान $K_{3\ 5}$ $D_7$ विसर्जय, $K_4$ $D_{2-4.9}$ च वर्जयन् — $^c$) $T_1$ $G_{1.4}$ वीरे, $T_2$ नित्य, $G_2$ साधं (for वीर) — After 20, T G (except $G_3$) ins

469* स भवान्सुहृदो वश्य वचो गृह्णातु मानृतम् ।
समर्थैर्विग्रह कृत्वा विषमस्थो भविष्यसि ।

T $G_2$ cont

470* वैशपायन ।
एवमुक्तो नृपश्रेष्ट नारदेन सुयोधन ।
नातिष्टद्वचने तस्मिस्ततोन्वमस्य तादृश ।

21 $K_5$ om 21–22, G. om $21^{ab}$ — $^a$) $K_4$ $D_{1\ 2}$ ददाति यत्कर्म करोति किंचित् — $^d$) $D_9$ आप्नोति (for अश्नाति)

22 $K_5$ (cf v l 21) $Dn_1$ om 22 — $^a$) $K_3$ $D_{2-4\ 9}$ शुभ, $B_5$ $Dn_2$ हित, $D_7$ महत् (for मत) — $^b$) $K_{1\ 2}$ गतरोषदोषिणा, $K_4$ गतदोषरागिणा, $D_8$ $D_{10}$ गतरोग°, $D_3$ °मानिना, $G_4$ गतकोपरागिणा, Ca as in text — $^c$) $K_{1\ 2}$ $D_8$ प्रधावित, $K_3$ $B_4$ $Dn_2$ $D_{1-4\ 9}$ प्रधारित, $B_{1-3}$. प्रधारिता, $D_7$ T G $M_1$ (*inf lin*) प्रधावता ($G_3$ प्रयाति),

# १२२

C. 5. 4121
B 5. 124 1
K 5. 124 1

धृतराष्ट्र उवाच ।
भगवन्नेवमेवैतद्यथा वदसि नारद ।
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम् ॥ १
वैशंपायन उवाच ।
एवमुक्त्वा ततः कृष्णमभ्यभाषत भारत ।
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव ॥ २
न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम् ।
अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम ॥ ३
अनुनेतुं महाबाहो यतस्व पुरुषोत्तम ।
सुहृत्कार्यं तु सुमहत्कृतं ते स्याज्जनार्दन ॥ ४
ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम् ।
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् ॥ ५
दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
समर्थं ते विशेषेण सानुबन्धस्य भारत ॥ ६
महाप्राज्ञ कुले जातः साध्वेतत्कर्तुमर्हसि ।
श्रुतवृत्तोपसंपन्नः सर्वैः समुदितो गुणैः ॥ ७

---

Cn प्रधारित Cd cites प्रधारित — $^{d}$) T G M1 (orig) पृथिवी तदाश्रिता, M (M1 inf lin) °वीतलाश्रिता — After 22, D8 ins

471* एतत्पुण्यतमं राजन्ययातेश्चरितं महत् ।
यच्छ्रुत्वा श्रावयित्वा च स्वर्गं यान्ति ह मानवाः ।

Colophon missing in D5 — *Sub-parvan* K3 5 B1 3 Dn D8 D2 7 10 T1 G1 5 M1 भगवद्यान, followed in all these MSS by गालवचरित, except in K3 5 D7 which have instead ययातिपतन, the same MSS except Dn1 cont समाप्त B2 4 5 D6 8 M2-5 (all om sub-parvan name) mention only गालवचरित, likewise K1 2 mention only ययातिपतन, all the above MSS except B5 cont समाप्त — *Adhy name* G5 ययातिस्वर्गपतनारोहणनिबन्धे प्रश्नोत्तर, M1 ययातिपतनारोहण, M2-5 पतनारोहणं — *Adhy no* (figures, words or both) D6 13 (=113), D7 T2 G4 M1-3 5 124, T1 G1 2 5 125, G3 (by corr) 115, G3 (before corr) M4 123 — *S'loka no* Dn2 22, D8 25

## 122

1 $^{b}$) K2 यथा वदति नारद — $^{c}$) K1 2 T2 G3 5 M अप्येतत्, K5 D7 अद्यैव (D7 °व) (for अप्येव) — $^{d}$) K5 D10 अनीशो (for न त्वीशो)

2 $^{b}$) N कौरव (for भारत) — $^{c}$) K4 5 D2 7 G3 5 M (except M5) लौक्य, T2 G2 मोक्ष (for लोक्य) — $^{d}$) T2 धर्ममार्यं, G5 धर्मकार्यं (for धर्म्यं न्याय्य)

3 $^{a}$) D6 न चाह, G2 5 न त्वय — After 3$^{ab}$, T G ins.

472* न मस्यन्ते दुरात्मानः पुत्रा मम जनार्दन ।
[ T1 G4 मन्यते (for मस्यन्ते) ]

— $^{c}$) K4 D8 अमु, D2 अथ, D2 (sec m), 3 4 9 लुब्ध; Cn d अग (as in text). — $^{d}$) D6 8 (by corr.) मत्र- (for मन्द) G3 मद मे शासनातिगं

4 After 4$^{ab}$, K4 B D (except D1, D2 marg. sec m) ins

473* न शृणोति महाबाहो वचनं साधु भाषितम् ।
गान्धार्याश्च हृषीकेश विदुरस्य च धीमतः ।
अन्येषां चैव सुहृदां भीष्मादीनां हितैषिणाम् ।
स त्वं पापमतिं क्रूरं पापचित्तमचेतनम् ।
अनुशाधि दुरात्मानं स्वयं दुर्योधनं नृपम् ।

[ (L 4) Dn D8 पापमतिक्रूर, D2-4 9 °मतिं ह्रीब° — (L 5) D2-4 9 त्वं शाधि ]
— $^{c}$) K1 4 5 B5 D2-4 7 9 च, K2 हि (for तु) — $^{d}$) K3 5 तत् (for ते)

5 Before 5, T1 G (except G2) ins वैश° — $^{a}$) K1 2 5 (before corr) D1 9 व्याहृत्य, D5 [अ]त्यावृत्य; D7 T1 G1 5 M1 (inf lin) व्यावृत्य, T2 M2 ह्यावृत्य, Cn अभ्यावृत्य (as in text) — $^{b}$)=1 2 178$^{d}$, 5 123 1$^{b}$, 126 21$^{b}$. — $^{c}$) K4 B2 D2 S मधुर वाक्य. — $^{d}$) K1 सूक्ष्मा, K2 श्लक्ष्णा, S (except G4) सूक्ष्म (for सर्व).

6 Before 6, D3 4 8 9 T2 ins कृष्ण उ° (T2 om उ°), D6 (marg) T1 G1 4 M1 श्रीभगवान् — G3 om 6-7. — $^{b}$) K D2 7 कुरुनंदन — $^{c}$) K3 यत्समर्थं, K4 त्वत्समक्ष, K5 B3 5 Dn D3 4 शमार्थं ते (K5 च), D5 D10 शमार्थं तु (D10 ते), T2 G2 5 M (by transp) ते समर्थं Cn cites समर्थं

7 G3 om 7 (cf v l 6) — $^{a}$) K4 B2 4 5 Dn Dn1 D6 8 (by corr) T2 °प्रज्ञ, K5 D7 °प्राज्ञे, D10 °प्रज्ञ (for °प्राज्ञ) K B1 3 D2 (sec m as in text) 7 जन्म (for जात) — 7$^{d}$=1. 1 85$^{b}$.

8 K5 om. 8 — $^{a}$) T1 G1 °चारा (for °त्मानो)

दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः ।
त एतदीदृशं कुर्युर्यथा त्वं तात मन्यसे ॥ ८
धर्मार्थयुक्ता लोकेऽस्मिन्प्रवृत्तिर्लक्ष्यते सताम् ।
असतां विपरीता तु लक्ष्यते भरतर्षभ ॥ ९
विपरीता त्वियं वृत्तिरसकृल्लक्ष्यते त्वयि ।
अधर्मश्चानुबन्धोऽत्र घोरः प्राणहरो महान् ॥ १०
अनेकशस्त्वनिमित्तमयशस्यं च भारत ।
तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि ॥ ११
भ्रातॄणामथ भृत्यानां मित्राणां च परंतप ।
अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे ॥ १२
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः ।
संधत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ॥ १३
तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः ।
पितामहस्य द्रोणस्य विदुरस्य महामतेः ॥ १४
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
अश्वत्थाम्नो विकर्णस्य संजयस्य विशां पते ॥ १५
ज्ञातीनां चैव भूयिष्ठं मित्राणां च परंतप ।
शमे शर्म भवेत्तात सर्वस्य जगतस्तथा ॥ १६
ह्रीमानसि कुले जातः श्रुतवाननृशंसवान् ।
तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ ॥ १७
एतच्छ्रेयो हि मन्यन्ते पिता यच्छास्ति भारत ।
उत्तमापद्गतः सर्वः पितुः स्मरति शासनम् ॥ १८
रोचते ते पितुस्तात पाण्डवैः सह संगमः ।
सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यं तात रोचताम् ॥ १९
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम् ॥ २०
यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते ।
स दीर्घसूत्रो हीनार्थः पश्चात्तापेन युज्यते ॥ २१
यस्तु निःश्रेयसं श्रुत्वा प्राप्तमेवाभिपद्यते ।
आत्मनो मतमुत्सृज्य स लोके सुखमेधते ॥ २२

C. 5. 4145
B. 5. 124. 24
K. 5. 124. 24

— [c]) D3 4.9 तद्, T G1.2 4.5 क (for ते) Dn1 D2 8 G4 M एतदीदृशक कुर्यु — [d]) S तात वर्तमे (T2 G2 वर्तसे तथा) (for तात मन्यसे)

10 [b]) T1 G1.4 लक्ष्यते स्वमकृत्त्वयि — [c]) S अनर्थ° (for अधर्म°) D10 सानु° (for चानु°)

11 K5 B5 om. 11[ab] — [a]) K1.2 D2 अनेकस्त्वं तन्नि(D2 स्वनि)मित्त, K3 अनेकाना त्वं निमित्त, B (B5 om.) Dn Ds D3 4 6 8–10 अनिष्टश्चानिमित्तश्च (B2 अनर्थस्य निमित्तस्तु), D7 अनिष्ट चानिमित्त च, G5 अनेकास्त्वं यन्निमित्त — [b]) B (B5 om.) Dn Ds D3 4.6 8–10 न च शक्यश्च (B2 अयशस्यमपि) भारत — [c]) D6 तमर्थं तु परित्यज्य — [d]) D5 तमनर्थं (for आत्मश्रेय°) K5 D7 स्वात्मश्रेय° करिष्यति

12 [ab]) G3 अपि (for अथ) T2 G5 transp भृत्याना and मित्राणा T2 G2 चैव भारत (for च परतप) — [c]) K5 Dn1 Ds2 D2–4.9 M3–5 अधर्माद् G. अयशस्काच्च — [d]) D6 8 वि-; G3 न (for प्र)

13 [b]) K1.2 G2.5 M आत्मविद्भिर्, T1 G1.4 कृतज्ञैश्च — [c]) K D2–4.7 9 10 T G (except G3) M1 °व्याघ्रै° (for °व्याघ्र) — [d]) D3 4 9 तव रोचता, T2 G2 पुरुषर्षभ (for भरतर्षभ)

14 K5 om. (hapl.) 14[a]–51[b] — [d]) D3.4.9 G1 च धीमत, T1 महौजस; T2 G2–5 M महामन (for महामते°)

15 K5 om. 15 (cf v l 14) — [b]) A few MSS बाह्लिकस्य — [d]) B2 4.5 Dn Ds D3 10 विविंशते° (for विशा पते)

18 K5 om 18 (cf. v l. 14) — [a]) K4 D2 10 [S]भि- (for हि) S हि ते (G2 हित) मन्ये (for हि मन्यन्ते) — [c]) M5 उत्तमापद्गत D2–4 सर्वं, T1 G4 कुर्वन्, T2 G1–3 M पूर्वं, G5 पूर्व° (for सर्व°) — [d]) S (except G3) स्मरसि

19 K5 om 19 (cf v l 14) — [b])=42[b] K1.2 D10 G3 संगत, T2 G2 5 °गति° (for °गम°) — [d]) D7 तत्र ते (for तत्तुभ्य)

20 K5 om. 20 (cf. v l 14) — [b]) D2 8.9 न मर्त्य° (by transp ) — [c]) M1.2 विपाके तु S हिनस्त्येनं

21 K5 D4 om 21 (cf v l. 14), D3 reads it in marg *sec m* D1 om. (hapl.) 21[c]–22[b]

22 K5 om. 22 (cf. v.l. 14), D1 om. 22[ab] (cf. v l 21) — [a]) D3 4 9 कृत्वा (for श्रुत्वा) — [b]) K4 B Dn Ds D6–8 10 प्राप्तदेवाभिपद्यते — [c]) K1.2 4 D2–4.7 9 मानम् (for मतम्) — [d]) T1 G1.4 लोकेषु (for स लोके)

23 K5 om. 23 (cf v l 14) — [a]) D7 य कामस्य वशं गत्वा — [b]) D7 तुष्यति (for तृप्यते) — [c]) K1.2

C. 5 4146
B. 5. 124. 25
K. 5. 124. 25

योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां वशमेति सः ॥ २३
सतां मतमतिक्रम्य योऽसतां वर्तते मते ।
शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥ २४
मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते ।
स घोरामापदं प्राप्य नोत्तारमधिगच्छति ॥ २५
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सदा ।
परान्वृणीते स्वान्द्वेष्टि तं गौः शपति भारत ॥ २६
स त्वं विरुध्य तैर्वीरैरन्येभ्यस्त्राणमिच्छसि ।
अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ ॥ २७
को हि शक्रसमाञ्ज्ञातीनतिक्रम्य महारथान् ।
अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः ॥ २८
जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया ।
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः ॥ २९
मिथ्याप्रचरितास्तात जन्मप्रभृति पाण्डवाः ।
त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः ॥ ३०
त्वयापि प्रतिपत्तव्यं तथैव भरतर्षभ ।
स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ॥ ३१
त्रिवर्गयुक्ता प्राज्ञानामारम्भा भरतर्षभ ।
धर्मार्थावनुरुध्यन्ते त्रिवर्गासंभवे नराः ॥ ३२
पृथक्तु विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुध्यते ॥ ३३
इन्द्रियैः प्रसृतो लोभाद्धर्मं विप्रजहाति यः ।
कामार्थावनुपायेन लिप्समानो विनश्यति ॥ ३४
कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वापि कदाचन ॥ ३५

---

D7 स (K2 सु) दीर्घसूत्रो हीनार्थो (=21c) — d) T1 G4 मार्गम् (for वशम्) T2 G1 2 5 वश(G5 °ध)मेष्यति

24 K6 om 24 (cf v l 14) — a) Dn2 D5 T1 G3 4 M मतिम् (for मतम्) — b) K1 2 मन, G3 M3-5 मतौ, G5 वशे (for मते) — c) K2 B3 D5 D7 10 शोचति D2 व्यसनात्, D3 4 9 व्यसन

25 K6 om 25 (cf v l 14) — b) K4 अति-, B1 2 D7 S वि, D1 Dn2 हि (for the first नि) — c) B2 D2-4 9 सुघोराम् — d) D3 4 9 सोधिगच्छति, G4 5 M3-5 अभिग° (M4 inf lin as in text)

26 K6 om 26 (cf v l 14) — a) K1 2 मृषाचारो; D1 वृथा मानी (for वृथाचारो) — b) B1 2 4 5 Dn D5 D2 6 8 10 T1 G1 सता, B3 D7 G3 4 वच, D1 अपि (for सदा) — c) M3 5 पर (for परान्) M5 स्व (for स्वान्) — d) D2-4 9 भृश, T G1 3-5 भृस्त, G2 M भृत (for त गौ°) Ca d cite गौ° B (except B3) Dn D5 D6 6.8 10 त्यज°, D2-4 9 तप° (for शप°)

27 K6 om 27 (cf v l. 14) — a) K4 D7 8 विरुध्यसे (for °ध्य तैर्)

29 K6 om 29 (cf v l 14) — c) B5 नैव (for न च) S कुप्यते — d) D7 धर्मवतो (for धर्मात्मानो)

30 K6 om 30 (cf v l 14) D5 D1 om (hapl) 30ab, D3 4 9 S read it after 31ab — a) K3 4 B Dn D6 8 10 मिथ्योपचरितास्, D3 4 9 मिथ्याप्रचलितास् — b) K4 B3 5 D8 बांधवा° (for पाण्डवा) — D6 om 30c-32d — c) D1 तव, T1 G4 यत्तु (for त्वयि) D3 4 9 T2 G2 M3-5 साम्य, T1 G1 3 4 सत्य (for सम्यङ्) K4 D8 महात्मान°, G1 5 °भागा°

31 K6 D6 om 31 (cf v l 14, 30) — a) K4 D6 7 9 10 वि, G5 M (except M2) हि (for [अ]पि) — After 31ab, D3 4 9 S read 30ab — d) K1 2 अभ्यगा° (for अन्वगा°)

32 K6 D6 om 32 (cf v l 14, 30) — ab) K3 4 B Dn D5 D2-4 8-10 °युक्त° (for °युक्ताः), and आरभः (for आरम्भा°) — c) D5 D10 °रुधति, D2 (before corr) °तप्यते, D7 °रुध्यति, G3 °वर्तते K4 D10 धर्मार्थौ न विरुध्येत

33 K6 om 33 (cf v l 14) — a) K1 3 B Dn D5 D2 (before corr) 3 4 6 10 T2 (before corr) पृथक्च, K4 D8 पृथक्त्वे (for पृथक्तु) D7 पृथक्पृथग्विनष्टाना, T2 (by corr) पृथक्त्वेन निवि°. — b) D2 °भूयते (m as in text), D10 °रुधते (for °रुध्यते) — D5 D7 G3 om. (hapl) 33cd — c) M4 5 अर्थ (for अर्थं) T1 G1 M कलिर् — d) D10 °रुधते (for °रुध्यते)

34 K6 om 34 (cf v l 14) — a) S इन्द्रिय. K3 B Dn Ds1 D1 6 8 10 प्राकृतो, D2 प्रकृतो, Ds2 D3 4 7 9 प्रसृतैर् (for प्रसृतो) K4 S बालो (for लोभाद्) — K4 om. 34bc — b) T G स. (for य°) — D7 om. (hapl) 34d-37a

35 K6 D7 om 35 (cf v l 14, 34) — b) D5 कुरु (for चरेत्) — c) D2 T2 G2 ऋतेपि (for अपैति)

36 K6 D7 om. 36 (cf v l. 14, 34), D6 om 36cd.

उपायं धर्ममेवाहुस्त्रिवर्गस्य विशां पते ।
लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्धते ॥ ३६
स त्वं तातानुपायेन लिप्ससे भरतर्षभ ।
आधिराज्यं महद्दीप्तं प्रथितं सर्वराजसु ॥ ३७
आत्मानं तक्षति ह्येष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु मिथ्या राजन्प्रवर्तते ॥ ३८
न तस्य हि मतिं छिन्द्याद्यस्य नेच्छेत्पराभवम् ।
अविच्छिन्नस्य धीरस्य कल्याणे धीयते मतिः ॥ ३९
त्यक्तात्मानं न बाधेत त्रिषु लोकेषु भारत ।
अप्यन्यं प्राकृतं किंचित्किमु तान्पाण्डवर्षभान् ॥ ४०
अमर्षवशमापन्नो न किंचिद्बुध्यते नरः ।
छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ॥ ४१
श्रेयस्ते दुर्जनात्तात पाण्डवैः सह संगमः ।
तैर्हि संप्रीयमाणस्त्वं सर्वान्कामानवाप्स्यसि ॥ ४२
पाण्डवैर्निर्जितां भूमिं भुञ्जानो राजसत्तम ।
पाण्डवान्पृष्ठतः कृत्वा त्राणमाशंससेऽन्यतः ॥ ४३
दुःशासने दुर्विषहे कर्णे चापि ससौबले ।
एतेष्वैश्वर्यमाधाय भूतिमिच्छसि भारत ॥ ४४
न चैते तव पर्याप्ता ज्ञाने धर्मार्थयोस्तथा ।
विक्रमे चाप्यपर्याप्ताः पाण्डवान्प्रति भारत ॥ ४५
न हीमे सर्वराजानः पर्याप्ताः सहितास्त्वया ।
क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे ॥ ४६
इदं संनिहितं तात समग्रं पार्थिवं बलम् ।
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः ॥ ४७
भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः ।
अशक्ताः सर्व एवैते प्रतियोद्धुं धनंजयम् ॥ ४८

C. 5. 4171
B. 5. 124. 50
K. 5. 124. 50

— $^c$) K4 °मानस्तु, D2 (by corr.) 3 4 °माने हि, D5 °मानस्य (for °मानो हि).

37 K5 om. 37, D7 om. 37$^a$ (cf. v.l. 14, 34) — $^a$) K4 D2 (by corr.) 3 4.9 तम्, T2 G2 तया (for तात). — $^c$) Dn Ds1 D7 10 अवि° (for आधि°).

38 K5 om. 38 (cf. v.l. 14). — $^a$) D2 (by corr.) 3 4 9 कृंत° (for तक्ष°). — $^d$) D2 श्रिया राजन्, S स्वेषु मिथ्या (for मिथ्या राजन्). — After 38, T G ins.:

474* अमित्रो नातिकर्तव्यो नातिदेय: कदाचन ।
जीवित ह्यपि दुःखार्तो न त्यजन्ति कदाचन ।
[(L. 2) T G1.2 संत्यजति, G3 सत्यज्यंते (for न त्यजन्ति).]

39 K5 om. 39 (cf. v.l. 14). — $^a$) Dn2 transp. तस्य and हि. B2 D3 4 9 मत (for मतिं). K1–3 न सापत्नमतिं (K1 °मभि-) छिंद्यात्, S न संपन्नम(T1 G4 M5 °मि)तिछिंद्यात्. — $^b$) = 5. 34. 4$^d$. T G1–3 5 M य: स (M1 2 यस्तु) (for यस्य). K1 2 चेच्छेत्, T2 G1.2 नच्छेत्, G4 गच्छेत् (for नेच्छेत्). — $^c$) B Dn Ds D6 10 अविच्छिन्नमतेरस्य, S अति(G4 M2 अधि)च्छिन्नस्य धी°. — $^d$) T1 G4 कल्याणी. T1 G1.4 जायते, G2 वर्त° (for धीय°). D3 4 कल्याणे जीविते सति.

40 K5 om. 40 (cf. v.l. 14). — $^a$) K3 B Dn Ds D3 4.6–10 आत्मवाश्चावमन्येत. — G5 om. (hapl.) 40$^c$–41$^d$. — $^c$) K4 B1.2 D2–4 7 8 (by corr.) 10 T1 G3 M कंचित्, G4 कश्चित् (for किंचित्).

41 K5 G5 om. 41 (cf. v.l. 14, 40). — $^b$) Dn जन: (for नर:)! — $^c$) D3 4 विद्य°, T1 G1.3 4 M3–5 भिद्य° (for छिद्य°). D2 [ऽ]स्यातत, D3 4 9 घातन, T1 G1 [ऽ]भ्यागत, G4 [ऽ]भ्यातत, M1.2 [ऽ]त्यातत (for ह्याततं).

42 K4 5 om. 42 (cf. v.l. 14). — $^a$) B2 Dn1 D3 वर्जनात्, D1.2 10 T G1.2 4 दुर्जयै:, G5 दुर्जनै:, Ca d n दुर्जनात् (as in text). — $^b$) = 19$^b$. N (except D1, K4 5 om., D5 missing) सगत (for °म:). D3 4.9 om. 42$^c$–43$^b$. — $^c$) S तै: सह (for तैर्हि सं-). T2 G2 5 तु (for स्त्व). — $^d$) D5 सर्वकामान्.

43 K5 om. 43, D3 4 9 om. 43$^{ab}$ (cf. v.l. 14, 42). — $^a$) K1.2 D5 विजितां, B3 D2 Cn निर्मितां (for निर्जितां). — $^c$) B1.2 4 पाडवैर्विग्रह कृत्वा.

44 K5 om. 44 (cf. v.l. 14). — $^a$) S दुष्पहे च (for दुर्विषहे). — $^b$) B2 [ऽ]थापि स, D5 D1 [ऽ]थापि च, Dn1 दुष्टे च (for चापि स-). S सकर्णे चा(T G1.2 4 वा)पि सौबले.

45 K5 om. 45 (cf. v.l. 14). — $^a$) D7 सर्वेते न च प°. — D1 om. (hapl.) 45$^{bc}$, K4 om. 45$^c$–46$^b$. — $^c$) T1 G1.4 विक्रमैश्च. K2 न, Dn1 वा (for च). K1 2 D3 4 9 G5 पर्याप्ता (for अपर्याप्ता:). — $^d$) G3 *repeats* 45$^b$ (for 45$^d$).

47 K5 om. 47 (cf. v.l. 14), D3 4 9 om. 47$^{ab}$. — $^d$) K2 D5 कृपस्तथा (by transp.).

48 K5 (cf. v.l. 14) D1 om. 48. — $^a$) Dn2 D2 10 S (except M1 2) सोमदत्ति (T2 G3–5 °त्तो) (for सौम°).

49 K5 om. 49 (cf. v.l. 14). —$^a$) K4 B4 Dn Ds D6 8 10 सत्ये, G2 श्रीमान् (for क्रुद्ध). — $^b$) K1 2 D7

C. 5. 4172
B. 5. 124 50
K. 5. 124 50

अजेयो ह्यर्जुनः क्रुद्धः सर्वैरपि सुरासुरैः ।
मानुषैरपि गन्धर्वैर्मा युद्धे चेत आधिथाः ॥ ४९
दृश्यतां वा पुमान्कश्चित्समग्रे पार्थिवे बले ।
योऽर्जुनं समरे प्राप्य स्वस्तिमानाव्रजेद्गृहान् ॥ ५०
किं ते जनक्षयेणेह कृतेन भरतर्षभ ।
यस्मिञ्जिते जितं ते स्यात्पुमानेकः स दृश्यताम् ॥ ५१
यः स देवान्सगन्धर्वान्सयक्षासुरपन्नगान् ।
अजयत्खाण्डवप्रस्थे कस्तं युध्येत मानवः ॥ ५२
तथा विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ५३
तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतम् ।
आशंससीह समरे वीरमर्जुनमूर्जितम् ॥ ५४
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति ।
युद्धे प्रतीपमायान्तमपि साक्षात्पुरंदरः ॥ ५५
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ५६
पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन्संबन्धिनस्तथा ।
त्वत्कृते न विनश्येयुरेते भरतसत्तम ॥ ५७
अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम् ।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ॥ ५८
त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः ।
महाराज्ये च पितरं धृतराष्ट्रं जनेश्वरम् ॥ ५९
मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्स्यसि ॥ ६०
पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः ।
संप्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ६१

इति श्रीमहाभारते उद्योगपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

---

सैंद्रैरपि, D10 क्रुद्धः सेंद्रैः, G1 क्रुद्धैरपि. — $^{c}$) K1 2 D1 अथ (for अपि). — $^{d}$) = 5 127 39$^{d}$ K2 आभ्रिथा°; D7 आदथा°, S आदधा°; Cd आधेयाः; Ca as in text. D1 मा च युद्धे मनः कृथा°, D2 (by corr.) 3 4 5 मा युद्धे मानसं कुरु.

50 K5 om. 50 (cf. v.l. 14). — $^{b}$) K4 समये, D3 4 5 G3 संग्रामे (for समग्रे). D7 कुले (for बले). — $^{d}$) D2 T2 G2 गृह (for गृहान्).

51 K5 om. 51$^{ab}$ (cf. v.l. 14). — $^{a}$) T1 G1 4 बल°, Ca d जन° (as in text). — $^{c}$) K5 B (except B2) Dn2 D1 तत्, Cn ते (as in text).

52 $^{b}$) S °यक्षोरग° (for °यक्षासुर°). — $^{c}$) K5 अर्जुनः (for अजयत्). — $^{d}$) K1 2 5 कथ (for कस्त) T1 G1 4 पांडव (for मानवः).

53 = (var.) 5 58 26, = (var.) 63 15. — $^{a}$) S यथा (for तथा). — After 53, K4 Dn D3 4 6 8 9 ins.:

475* युद्धे येन महादेवः साक्षात्संतोषितः शिवः ।

— $^{d}$) = 5 58 26$^{d}$, 63 15$^{d}$, 136 8$^{d}$.

54 $^{a}$) T G (except G3) तमजय्य. — $^{b}$) T1 G1 4 अजित (for विजेतु). K1.5 B1-3 D5 D1 7 T G1 5 M1 2 अव्यय (for अच्युतम्). — $^{c}$) S °शमने ह (T1 G1 4 5 हि).

55 = (var.) 5 58. 23. — K5 om. 55$^{ab}$. — $^{a}$) K1 2 D5 सद्वि°, T G अद्वि° (for मद्वि°). — $^{c}$) K5 D7 G4 युधि (for युद्धे). T2 G2 प्रदीप्तम् (for प्रतीपम्).

56 = (var.) 5 58 24. — $^{a}$) B (except B2) Dn D5 D1 3 4 6 9 10 उद्वहेद् (for उद्धरेद्). — $^{c}$) G3.4 M3 त्रिदिवान्; G5 दिवि वा (for त्रिदिवाद्).

57 $^{b}$) K4 S ज्ञाति(T1 °तीन्)संबधिबांधवान्. — $^{c}$) D5 D7 8 10 विनशिष्येयु° (for न विनश्येयु°). — $^{d}$) K5 एतद्, B Dn D5 D3 4 6 8-10 इमे. K1 5 B Dn D5 D6 8 10 भारतसत्तमा°.

58 $^{a}$) T1 G3 शेष° (for शेषं). — $^{c}$) K5 D7 नो भूयात् (for नोच्येथा).

59 $^{b}$) G4 महारथ. — $^{c}$) K3 B1 Dn D5 D1 6.8 10 [ऽ]पि, D3 4 9 [ऽ]थ (for च).

60 $^{b}$) T1 G4 मावमस्थाः (for अव°). — $^{d}$) K Dn D7 10 आप्नुहि (for आप्स्यसि).

61 $^{a}$) K3 च शम, K4 D6 T G संगम, K5 D7 शमनं; D5 D2-4 8-10 सगंत (for संशम). G3 M1-3 गत्वा (for कृत्वा). — $^{b}$) K5 सुहृदां च वचस्तथा. — $^{c}$) D3 4 9 °माणः पुत्रैश्च; T1 G1 4 °माणो मित्राणि. — $^{d}$) G3 5 श्रिय (for चिरं). T2 G2 3 5 भद्रम् (for भद्राणि).

Colophon missing in D5, D1 om. it. — *Sub-parvan*: K B1 3 5 Dn D5 D3 10 T1 G1 4 5 M भगवद्यान. — *Adhy. name*: K1 2 Dn D7 भगवद्वाक्य; T1 भगवतः हितोपदेशवाक्य, T2 श्रीवासुदेववाक्य, G1.4 M हितोपदेशवाक्य. — *Adhy. no.* (figures, words or

# १२३

वैशंपायन उवाच ।

ततः शांतनवो भीष्मो दुर्योधनममर्षणम् ।
केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ ॥ १
कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता ।
अनुपश्यस्व तत्तात मा मन्युवशमन्वगाः ॥ २
अकृत्वा वचनं तात केशवस्य महात्मनः ।
श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥ ३
धर्म्यमर्थं महाबाहुराह त्वां तात केशवः ।
तमर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ॥ ४
इमां श्रियं प्रज्वलितां भारतीं सर्वराजसु ।
जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ॥ ५
आत्मानं च सहामात्यं सपुत्रपशुबान्धवम् ।
सहमित्रमसद्बुद्ध्या जीविताद्भ्रंशयिष्यसि ॥ ६
अतिक्रामन्केशवस्य तथ्यं वचनमर्थवत् ।
पितुश्च भरतश्रेष्ठ विदुरस्य च धीमतः ॥ ७
मा कुलघ्नोऽन्तपुरुषो दुर्मतिः कापथं गमः ।
पितरं मातरं चैव वृद्धौ शोकाय मा दद‍ः ॥ ८
अथ द्रोणोऽब्रवीत्तत्र दुर्योधनमिदं वचः ।
अमर्षवशमापन्नं निःश्वसन्तं पुनः पुनः ॥ ९
धर्मार्थयुक्तं वचनमाह त्वां तात केशवः ।
तथा भीष्मः शांतनवस्तज्जुषस्व नराधिप ॥ १०
प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ ।
आहतुस्त्वां हितं वाक्यं तदादत्स्व परंतप ॥ ११
अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः ।

C. 5. 4197
B. 5. 123. 12
K. 5 123. 12

---

both) $D_6$ 14 (=114), $D_7$ $T_2$ $G_4$ $M_{1-3.5}$ 125, $T_1$ $G_{1.2.5}$ 126, $G_3$ $M_4$ 124 — *S'loka no* $K_6$ 20, $Dn_1$ 63, $Dn_2$ 62, $D_3$ 65

## 123

1 $^b$) = 5 122 $5^b$, 126 $21^b$ T $G_{1.2.4.5}$ M अरिंदम ($G_2$ $M_{3-5}$ °म, $G_4$ °म) (for अमर्षणम्)

2 Before 2, $D_{2-4.8-10}$ $T_1$ $G_{1.4}$ $M_1$ ins भीष्म उ° (resp भीष्म·) — $^b$) K (except $K_3$) $D_{8.10}$ $G_5$ $M_5$ सुहृदा $D_{3.4.9}$ हितम् (for शमम्) — $^c$) $K_{1-3.5}$ $B_2$ $D_{2-5.7.9}$ अनुमन्यस्व, $K_4$ $B_{1.3-5}$ Dn Ds $D_{1.6.8.10}$ अन्वपद्यस्व (for अनुपश्यस्व) $D_6$ T G (except $G_3$) M. त (for तत्) — $^d$) = 5 122 $31^d$

3 $^a$) $K_{1.2.5}$ $D_{8.4.7.9}$ transp वचनं and तात $K_4$ द्दस्य, S तस्य (for तात)

4 $D_8$ om (hapl.) 4–6 — $^a$) $K_4$ $B_3$ $Dn_2$ $D_{2-4.6.9.10}$ $T_2$ $G_3$ $M_5$ धर्मम् $K_6$ B (except $B_3$) $Dn_1$ $Ds_1$ $D_{1.7}$ $T_1$ $G_{1.2.5}$ M (except $M_5$) अर्थ्यं, $D_{10}$ धार्य्यं — $^b$) $G_3$ ते, M त्वा (for त्वां) — $^c$) $K_3$ $B_{1.3.4}$ Dn $D_{1-4.6}$ $T_1$ G. तदर्थम् $K_4$ $B_3$ प्रतिपद्यस्व — $^d$) $T_1$ $G_1$ नीनशु·, $G_{3-5}$ विनशु, M व्यनश· ($M_1$ *inf lin* as in text)

5 $D_8$ om 5 (cf v l. 4) — $^a$) B Dn Ds $D_{6.10}$ ज्वलिता त्वमिमा लक्ष्मीं — $^c$) $K_5$ $D_7$ ध्रुवतो (for जी°) — $^d$) $K_5$ ध्वम° (for भ्रश°)

6 $D_8$ (cf v l 4) $G_4$ (hapl ) om. 6 — $^a$) $T_2$ $G_{2.6}$ चैव सामात्य (for च सहामात्य) — $^b$) K $D_{1-4.7.9.10}$ °ज्ञाति°, B Dn Ds $D_6$ °भ्रातृ° (for °पशु°) — $G_3$ om $6^c$–$8^b$ — $^c$) $K_4$ $B_{1.2.4}$ Dn Ds $D_{6.10}$ अहमित्यनया बुध्या

7 $G_3$ om 7 (cf v l 6) — $^b$) $K_{1.2.5}$ $D_7$ पथ्यं, $D_2$ (by corr ) $_{3.4.9}$ सत्य (for तथ्य) — $K_5$ om $7^c$–$8^b$ — $^c$) $B_{1.3.4}$ $Dn_2$ $T_1$ $G_{1.4}$ भारतश्रेष्ठ

8 $K_5$ $G_3$ om $8^{ab}$ (cf v l 6, 7) — $^a$) $K_{3.4}$ B D (except $D_1$) कु· ($D_7$ [अ]ध) (for [अ]न्त) $G_1$ मा भूत्कुलघ्न· पु°, $G_{2.5}$ मा भूस्त्व तात पु° — $^b$) $D_2$ (by corr ) $_{3.4.7.9}$ कुपथ, Ca d कापथ (as in text) $B_2$ $D_{1.9}$ S ($G_3$ om ) गत· (for गम) — $^c$) N (except $B_5$ $D_1$) transp पितर and मातर $K_{1.3}$ चैव, $K_2$ चेम (for चैव) — $^d$) $G_2$ दुःखाय (for शोकाय) $K_{1-3}$ $D_2$ (before corr ) अनुमन्यस्व भारत, $K_4$ वृद्धौ तौ मा व्यनीनश·, $K_6$ $D_7$ मावमन्यस्व भारत, B Dn Ds $D_2$ (by corr ) $_{3.4.6.8-10}$ मा मज्जी· शोकसागरे, $D_1$ ह्यनुमन्यस्व पार्थिव

10 $^b$) Ds प्राह (for आह) — $^d$) $D_{3.4.9}$ तदादत्स्व परतप ($D_9$ नराधिप) (cf $11^d$) Ca cites जुपस्व

11 $^a$) $D_2$ चैकमतौ (for मेधाविनौ) — $^b$) $K_5$ $D_7$ कर्तुकामौ, $D_{3.4.9}$ वृद्धिकामौ, $G_1$ अर्थशौच (for अर्थकामौ) — $^c$) S (except $T_2$ $G_2$) तौ (for त्वां) — $^d$) $D_1$ तदाधत्स्व $D_2$ नराधिप (for परतप) B Dn Ds $D_{6.8.10}$

C. 5 4197
B 5. 123. 12
K 5 123. 12

मा वचो लघुबुद्धीनां समास्थास्त्वं परंतप ॥ १२
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् ।
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ १३
मा कुरूञ्जीघनः सर्वान्पुत्रान्भ्रातृंस्तथैव च ।
वासुदेवार्जुनौ यत्र विद्ध्यजेयं बलं हि तत् ॥ १४
एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः ।
यदि नादास्यसे तात पश्चात्तप्स्यसि भारत ॥ १५
यथोक्तं जामदग्न्येन भूयानेव ततोऽर्जुनः ।
कृष्णो हि देवकीपुत्रो देवैरपि दुरुत्सहः ॥ १६
किं ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ ।
एतत्ते सर्वमाख्यातं यथेच्छसि तथा कुरु ।
न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम ॥ १७
तस्मिन्वाक्यान्तरे वाक्यं क्षत्तापि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ १८
दुर्योधन न शोचामि त्वामहं भरतर्षभ ।
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते ॥ १९
यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा ।
हतमित्रौ हतामात्यौ लूनपक्षाविव द्विजौ ॥ २०
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ।
कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषम् ॥ २१
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
आसीनं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ २२
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना ।
आदत्स्व शिवमत्यन्तं योगक्षेमवदव्ययम् ॥ २३
अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा ।
इष्टान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ २४

---

तज्जुपस्व नराधिप (= 10ᵈ)

12 ᵇ) T1 G1 4 भीष्मकृष्णौ (by transp) K5 बहुश्रुतौ (for यदूत्तम°). — K5 om. 12ᶜ–16ᵇ — ᶜᵈ) K1 2 मा चैव लुब्धबुद्धीनां समं स्थास्व परतप; K3 4 B Dn Ds D2–4 6 8–10 माधव बुद्धिमोहेन मावमस्था' पर°, D7 मा मैव लुब्धबुद्धीना मते स्थातु पर°

13 K5 om 13 (cf v l. 12) — ᵃ) T1 M1 2 त्वा (for त्वां) K1 2 4 D2 7 एव, D1 S अन्ये (for एते) — ᶜ) M2 (inf. lin) आवार्ये (for ग्रीवायां) — ᵈ) K1 2 D7 प्रतियोक्ष्यति

14 K5 om 14 (cf. v l. 12) — ᵃ) K1 transp मा and कुरून् D2 कुल (for कुरून्) D8 4 6 T1 G3 4 जहि न', T2 G2 5 जहि तान् (for जीघन) K4 B (except B3) Dn Ds D6 8 10 M1 मा जीघन (B6 5 नीनश') प्रजा सर्वाः Cn cites मा नीनशः — ᵇ) K8 B2 D2 पौत्रान् (for भ्रातॄन्) — ᵈ) B2 4 महत् (for हि तत्) D3 4 6 विघ्नजेयान्नराधिपान्, D6 M2 विद्ध्यजेयानल हि तान्

15 K5 om 15 (cf v l 12) — ᵇ) T1 G4 सुहृदा (for °दो') — ᶜ) Ds2 D7.9 T2 G (except G8) नादास्यते; M3. 4 नासाद्यते

16 K5 om 16ᵃᵇ (cf v l. 12) — ᵇ) K4 भूयश्चैव, B Dn Ds D2–4 6 9 10 भूयानेष — ᶜ) K (except K8) D1–4 7 9 कृष्णोपि, S कृष्णश्च — ᵈ) K1 2 D6 दुरासद', K3 4 B1 Dn Ds D6 8 10 सुदु'सहः (for दुरुत्सह')

17 K5 om 17ᵃᵇ — ᵃ) K2 Dn1 Ds D6 8 S सुख (G8 दु'ख)प्रियेण, D7 शत्रु°; Cn सुख° (as in text) D2 किं तेप्यविनयेनेह — ᵇ) K1 2.4 D2 7 कृते°, S श्रुते° (for प्रोक्ते°) G8 पुरुषर्षभ — ᶜ) K4 तथ्यम्, B5 तत्त्वम् (for सर्वम्)

18 Before 18, K4 B1 5 Dn Ds D3 4 6 8–10 T1 G1 4 M1 ins वैश° उ° (resp वैश') — ᵃ) K4 तस्मात्; G1 तस्य (for तस्मिन्) M1 2 तत्र (for वाक्य) — ᵇ) T1 G1 त क्षत्ता, T2 G2 5 क्षत्ता च (for क्षत्तापि) G8 क्षत्ता तथ्यमिद ब्रुवन् — K8 5 D6 om 18ᶜᵈ

19 Before 19, K1 2 D3 4 7–10 G3 ins विदुर उ° (resp विदुर') — ᵇ) D5 पुरुषर्षभ — ᶜᵈ) Dn1 वृद्धौ शोचामि गाधारीं पितरौ तु तथोच्यते

20 ᵃ) K5 यदि, D7 यद् (for यौ) T1 2 (by corr) G1 4 5 भविष्येते, T2 (before corr) G3 M च भाष्येते (for चरि°) — ᶜ) K5 D7 G8 °पुत्रौ (for °मित्रौ) — ᵈ) B (except B5) Dn Ds D1 6 8 10 T2 G2 5 [अ]ण्डजौ; Cn द्विजौ (as in text)

21 ᵈ) K2 D2 G2 तु पूरुष, K3 च पौरुष, T2 G1.4 अतिपू(G4 °पौ)रुष, T2 G3 M अतपूरुष, G5 च पूरुष.

22 ᵈ) K5 बधुभिः परित नृप

23 ᵇ) K5 D7 शिव आ(D7 °मा)त्यत्यो (for शिवम त्यन्त) — ᵈ) K2 °क्षेमदम् (for °क्षेमवत्) K4 B3.5 Ds1 D1 6.8 अत्यय (for अव्ययम्)

24 ᵈ) K5 D7 प्राप्स्यसे (for प्राप्स्याम').

25 ᵃ) K1.4 B5 Dn2 D1–4.6.9 10 G4 Cn सुसंहत ;

सुसंहितः केशवेन गच्छ तात युधिष्ठिरम् ।
चर स्वस्त्ययनं कृत्स्नं भारतानामनामयम् ॥ २५
वासुदेवेन तीर्थेन तात गच्छस्व संगमम् ।
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः ॥ २६
शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## १२४

वैशंपायन उवाच ।
धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समर्थ्य तौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ १
यावत्कृष्णावसंनद्धौ यावत्तिष्ठति गाण्डिवम् ।
यावद्धौम्यो न सेनाग्नौ जुहोतीह द्विषद्बलम् ॥ २
यावन्न प्रेक्षते क्रुद्धः सेनां तव युधिष्ठिरः ।
ह्रीनिषेधो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ३
यावन्न दृश्यते पार्थः स्वेष्वनीकेष्ववस्थितः ।
भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ४
यावन्न चरते मार्गान्पृतनामभिहर्षयन् ।

C. 5. 4218
B. 5. 126. 5
K. 5. 126. 5

K5 D7 सुसंहित, D5 सम हित (D51 °त), T1 सुसयुत, G1 सुसयत, M2 स्व सहित (for सुसंहित) G3 सहित केशवेनाथ Ca d cite सहित, Cap सहित — b) K3 B (except B3) Dn Ds D1 6 transp गच्छ and तात D3 10 तात गच्छस्व सशमः — K5 D1 om. 25cd — c) K1. 2 D3 चरन्, G4 कुरु, M3–5 पर (for चर) — d) K1 3 4 B (except B3) Dn1 Ds D2–4 6 8–10 G4 M1 भरतानां T G1. 2 4 5 M2–5 अय प्रभु (M3–5 भुव)

26 D1 om 26ab — a) = 5 86 10c, 103 34c — b) D3 4 9 ततो (for तात) K4 B1. 2 4 5 Dn2 D3 4 6 8 10 सशम, D9 सगम, T G1 2 4 5 M1 2 4 सगति, M3 5 सहित (for संगमम्) B3 गच्छ तात युधिष्ठिर (= 25b), Dn2 D2 तात गच्छ स्वय शम — c) T2 G2 5 अह, Ca इद (as in text) — d) D1 अत्र (for त्व) B3 Dn1 Ds D8 9 अतिग, T2 M अत्यगा (M4. 5 °ग), Ca अतिगा (as in text) — G2 त्व दुर्योधन मातिगा

27 a) T1 G1. 4 चैवोच्यमान (T1 °न) (for चेद्याचमान) — c) G5 तमर्थम् (for त्वदर्थम्) K4 Dn2 D9 T2 G2 M2 अपि (for अभि) — d) D8 तत् (for न) T G तात चास्ति (T2 न तवास्ते, G3 न तस्यास्ति) (for न तवास्ति) K3 D8 T G पराभव, Ca d अपराभव (as in text)

—

Colophon missing in D5, K4 D2 om it — *Subparvan* K (K4 om) B Dn Ds D1 3 4 6–10 T1 G1. 3 M1 2 भगवद्यान — *Adhy name* G4 भगवद्वाक्य, M भगवद्वाक्यानुमोदन — *Adhy no* (figures, words or both) D6 15 (= 115), D7 T2 G4 M1–3. 5 126, T1 G1 2 5 127, G3 M4 125 — *S'loka no* K5 21, Dn1 28, Dn2 D3 27

**124**

1 b) K1. 2 समर्थवत्, K3 B4 5 Dn Ds D6 8 10 G4 M4 समन्वयौ, K4 महाबलौ, K5 D7 समर्थ्य तत्, B1. 3 D2 समन्वितौ, D3 4 9 T G1–3 5 समेत्य तौ (for समर्थ्य तौ as in B2 D1 M1–3 5) Ca cites समर्थ्य (= स्वीकृत्य) as in text Cs has सामर्थ्यं समभूयालोच्य (which is unintelligible)

2 a) K1. 2 T2 G2 5 न सं (for अस°) — c) D9 T G (except G3) M1 धौम्येन (for धौम्यो न) K3 B Dn Ds D6 8 10 Cs मेधाग्नौ (for सेनाग्नौ). K5 D7 यावद्धौम्य समिद्धा(D7 °द्धे)ग्नौ — d) K5 जुहोति ह, D1 लेप, T1 G1. 4 °तीद, G5 न जुहोति (for जुहोतीह)

3 K5 om from 3 up to 5 125 1ab — c) K3 4 B Dn Ds D6 10 G4 ह्रीनिषेवो K1 2 D2 7 महोत्साह, K4 B1 3 S महाबाहु — d) = 4d, 6d, 8d, 9d, 11d

4 K5 D7 om (hapl) 4 (cf v l. 3) — b) B3 5 Dn2 D1 स्वेष्वनीके व्यवस्थित, G4 स्वेष्वधर्मप्रतिष्ठित, G5 स्वेष्वनीके व्यदृश्यत — c) K1 2 4 G4 महाबाहु, D9 महेष्वास — 4d = 6d, 8d, 9d, 11d — After 4, G4 ins 476* — After 4, G3 reads 8ab (omitting it in its proper place)

5 K5 om 5 (cf v l 3), M2 om (hapl) 5–6 — a) K1 2 रस°, D3 रोच° (for चर°) K3 पार्थ°, D9 मार्गात् D2 यावदायाति पार्थ स — b) B2 D6 8 अति- (for अभि) K4 D2 -कर्ष°, B (except B2) Dn Ds D6–8 10 -धर्ष° (for -हर्ष°) — B Dn Ds D6–8 10 ins after 5ab G4, after 4

476* भीमसेनो गदापाणिस्तावन्मंशाम्य पाण्डवै ।

[ G4 महेष्वास (for गदापाणि) D3 G4 तावच्छाम्यतु वैशसं

C. 5. 4219
B. 5. 125. 6
K. 5. 125. 6

यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् ॥ ५
गदया वीरघातिन्या फलानीव वनस्पतेः ।
कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ॥ ६
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः ॥ ७
यावन्न प्रविशन्त्येते नक्रा इव महार्णवम् ।
कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसम् ॥ ८
यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् ।
गार्ध्रपत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसम् ॥ ९
चन्दनागरुदिग्धेषु हारनिष्कधरेषु च ।
नोरःसु यावद्योधानां महेष्वासैर्महेषवः ॥ १०
कृतास्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ।
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ॥ ११
अभिवादयमानं त्वां शिरसा राजकुञ्जरः ।
पाणिभ्यां प्रतिगृह्णातु धर्मराजो युधिष्ठिरः ॥ १२
ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः ।
स्कन्धे निक्षिपतां बाहुं शान्तये भरतर्षभ ॥ १३
रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च ।
उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु ॥ १४
शालस्कन्धो महाबाहुस्त्वां स्वजानो वृकोदरः ।
साम्नाभिवदतां चापि शान्तये भरतर्षभ ॥ १५
अर्जुनेन यमाभ्यां च त्रिभिस्तैरभिवादितः ।
मूर्ध्नि तान्समुपाघ्राय प्रेम्णाभिवद पार्थिव ॥ १६
दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह संगतम् ।
यावदानन्दजाश्रूणि प्रमुञ्चन्तु नराधिपाः ॥ १७
घुष्यतां राजधानीषु सर्वसंपन्महीक्षिताम् ।
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

(for the posterior half) ]
— $^{c}$) $T_1$ $G_1$ पात° (for शात°)

7 $K_5$ om. 7 (cf v l 3) — $^{d}$) $D_{1\ 9}$ $T_2$ G दशित, some S MSS दष्नि°

8 $K_5$ om 8 (cf v l 3) $G_3$ reads $8^{ab}$ after 4 — $^{c}$) $G_3$ लब्धस्त्रा° $D_{s2}$ क्षिप्रमस्यति — $D_8$ ins after 8 $D_9$, after 9 $D_{2\ 8}$, after 11

477* यावन्न निशिता बाणाः शरीरेषु महीक्षिताम् ।
यावन्न प्रविशन्त्येते तावच्छाम्यतु वैशसम् ।

[ (L 1) Posterior half $= 9^{b}$ — (L 2) Prior half $= 8^{a}$ $D_{2\ 8\ 9}$ गृध्रपक्षा पतत्युग्रा (for the prior half, cf $9^{c}$) Posterior half is repeated in many stanzas ]

9 $K_5$ (cf v l 3) $D_7$ (hapl) om 9 — $^{c}$) $D_1$ गार्ध्रपक्षा, S गृध्रपक्षाः (M °त्रा) — After 9, $D_9$ ins 477*

10 $K_5$ om 10 (cf v l 3) — $^{a}$) $K_4$ B Dn $D_{s2}$ $D_{1-4\ 6\ 9}$ T $G_{1\ 2\ 5}$ चदनागुरु° — $^{c}$) $M_{2\ 8}$ यौधाना

11 $K_5$ om 11 (cf v l 3) — $^{b}$) $K_{1\ 2}$ दूरापातिभिर् $D_2$ (by corr) आशुगा., $D_{3.4\ 9}$ आशुगैः (for आयसाः) — $^{c}$) S (except $G_3$ $M_{2\ 5}$) Ca d अति-; Cs अभि- (as in text) Some MSS -लक्षैः — After 11, $D_{2\ 8}$ ins 477*.

12 $K_5$ om 12 (cf v l 3) — $^{d}$) S महामति° ($T_1$ $G_{1\ 4}$ महीपति°, $G_5$ महाद्युति°)

13 $K_5$ om 13 (cf. v l 3) — $^{b}$) $D_7$ वै (for ते) $G_{1\ 4}$ $M_{3.5}$ सुदक्षिण — $^{d}$) $= 15^{d}$

14 $K_5$ om 15 (cf v l 3), $T_2$ om (hapl.) 14–15 — $^{a}$) $K_{1\ 2}$ °समानेन, $K_4$ $D_2$ °समूहेन, $Dn_1$ °सम तेन, $D_1$ °समाकीर्णः; $G_{1\ 4}$ अर्जुनेन यमाभ्यां च ($= 16^{a}$), Cnp रत्नौघसमेतेन — $^{b}$) $M_{1.4}$ रक्ताङ्गुलि° — $^{d}$) $D_{1\ 3\ 4\ 8}$ S °मार्जता

15 $K_5$ om 15 (cf v l 3) — $^{b}$) $K_4$ $Dn_1$ $D_{8\ 10}$ सजातो, $B_3$ स्वजेत, $T_1$ $G_{1\ 2\ 4\ 5}$ सुजातो ($G_{1\ 2}$ °नो), $G_3$ M स्वजेता, Cn स्वजानः (as in text) — $^{c}$) $G_3$ $M_{4\ 5}$ हि (for अभि) $D_8$ चाभिवद (for अभिवदता) $D_{10}$ वाचा (for चापि) — $^{d}$) $= 13^{d}$

16 $K_5$ om 16 (cf v l 3) — $^{b}$) $D_{10}$ त्वम् (for तैर्) T G (except $G_3$) अभिवदितः — $^{c}$) $K_{1\ 2\ 4}$ $D_7$ त्वम् (for सम्) — $^{d}$) $G_3$ $M_{3.5}$ हि (for [अ]भि)

17 $K_5$ om 17 (cf v l. 3) — $^{ab}$) $G_4$ $M_{3-5}$ त्वां दृष्ट्वा (by transp) $K_3$ पार्थिवैर् (for पाण्डवैर्) $G_5$ transp पाण्डवैः and भ्रातृभिः — $^{c}$) $T_1$ $G_{1\ 4\ 5}$ तावद् (for यावद्)

18 $K_5$ om 18 (cf v l 3) — $^{a}$) $K_2$ जुष्यतां; $K_3$ $Dn_2$ $D_8$ पु°, $G_4$ तु° (for घु°). $D_2$ परमानद (for

# १२५

वैशंपायन उवाच ।
श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ १
प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥ २
भक्तिवादेन पार्थानामकस्मान्मधुसूदन ।
भवान्गर्हयते नित्यं किं समीक्ष्य बलाबलम् ॥ ३
भवान्क्षत्ता च राजा च आचार्यो वा पितामहः ।
मामेव परिगर्हन्ते नान्यं कंचन पार्थिवम् ॥ ४
न चाहं लक्षये कंचिद्व्यभिचारमिहात्मनः ।
अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः ॥ ५
न चाहं कंचिदत्यर्थमपराधमरिंदम ।
विचिन्तयन्प्रपश्यामि सुसूक्ष्ममपि केशव ॥ ६
प्रियाभ्युपगते द्यूते पाण्डवा मधुसूदन ।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ७
यत्पुनर्द्रविणं किंचित्तत्राजीयन्त पाण्डवाः ।
तेभ्य एवाभ्यनुज्ञातं तत्तदा मधुसूदन ॥ ८
अपराधो न चास्माकं यत्ते ह्यक्षपराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ॥ ९
केन चाप्यपवादेन विरुध्यन्तेऽरिभिः सह ।

C. 5. 4242
B. 5. 127. 10
K. 5. 127. 10

---

गतधार्तीषु) — c) D. ३ °भूता (for °त्रिगान्) — d) B. भुवना विनवज्वर

Colophon missing in D., K. om it — *Sub-parvan* K (K. om) B Dn Ds D1. 2 6-8 10 T1 G1 4 6 M भगवद्यान — *Adhy name* G3 M भीष्मद्रोणवचन — *Adhy no* (figures, words or both) D3 16 (= 116), D7 T2 G1 M1-3 6 127, T1 G1 . . 128, G3 M4 126 — *S'loka no* Dn 18

## 125

1 K6 om 1ab (cf v l 5 124 3) — b) T G हेतुमत, M1 2 सुन्दा, M3-5 अप्रीत (for अप्रिय) — K3 resumes from 1cd — c) K. भीमसेनो (for प्रत्युवाच) K3 महाबाहु — D5 om 1d-3a. — d) D9 T2 G2 3 5 जनार्दन (for यशस्विनम्)

2 D5 om 2 (cf v l 1) Before 2, T G1 4 ins दुर्योधन — a) D1 वासुदेव (for प्रसमीक्ष्य) K2 D7 एव (for एतद्) — G2 om (hapl) 2c-6d — c) K2 D7 आह, S (except M2, G3 om) तु (for हि) — d) K1-3 B1 4 T G2 परिगर्हसि, D3 °ते M1 परिभाष्य विगर्हसे

3 D5 om 3a (cf v l 1), G3 om 3 (cf v l 2) — a) K2 D7 °भावेन (for °वादेन) — b) Dn1 D6 8 स यस्मात्, D5 D8 m अस्मात् (for अस्मात्) — c) T1 G1 स भवान्गर्हते नित्य

4 G3 om 4 (cf v l 2) — a) B1 2 4 Dn D1 6 7 वा (for the second च) — b) K1. 2 6 B (except B3) Dn Ds D1 6-8 10 [अ]प्याचार्यो, S (G3 om) आ(M ह्या) चार्यो (for आचार्यो) K (except K4) D2-4 7 9 [अ]थ, B3 [अ]पि, S (G3 om) च (for वा) — c) K5 D7 °गर्हति — d) D5 2 D2 पार्थिव

5 G3 om 5 (cf v l 2) — a) K1 2 4 B5 Dn1 Ds2 D1 3 9 G1 M4 5 किंचित — K5 om (hapl) from व्यभि° (in 5b) up to कचिद् (in 6a) — c) D1 यत (for अथ) — d) K1 2 विभिन्दति, K3 D2 विभाषति, K4 विभाषते, D7 धर्षयति; D9 विभीषति, T1 G1 4 5 विगर्हते, T2 भजते हि, G2 भवति हि, M विभजति

6 G3 om 6 (cf v l 2) K. om up to कचिद् (cf v l 5) — a) K4 B1. 2 D1 T G2 4 6 किंचिद् K1 2 S (G3 om) अभ्यर्थं — b) S (except T, G3 om) अपराद्धम्

7 a) D7 T2 G2 4 . °भ्युपगमे, Ca °भ्युपगते (as in text) — c) M1 2 जित (for जिता°) D2 राज्यात्, G6 राजन् (for राज्य) — d) K1 2 6 D7 तत° (for तत्र)

8 b) D2 तत्र दीव्यत, T G तत्र (T2 यत्र also) जीवति (G3 तत्राजीयत), M. तत्रादीयति (for तत्राजीयन्त) Ca cites अजीयत — c) D8 एभ्य (for तेभ्य) — d) G (except G2) तथा (for तदा)

9 b) K4 B3 5 D1 ह्यक्षै°, B1 2 4 D8 10 द्यूते, Dn Ds T1 ह्यक्षे, T2 G2 5 [ऽ]प्यक्ष; G1 ह्यर्थे (for ह्यक्ष) D5 यत्तेऽनेते परा° — d) K1 6 Dn D3 4 9 10 M प्रव्र(M1 °व्रा also)जिता

10 a) T G3-5 तेन (for केन) K3-5 B Dn Ds D1 2 6 7 10 वा (for च) K3-5 B2 5 D3 4 7 9 अपराधेन, S अवमानेन (for अपवादेन) — b) K3 4 B D (except

C. 4242 B. 5. 127 10 K. 5. 127 10

अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत् ॥ १०
किमस्माभिः कृतं तेषां कस्मिन्वा पुनरागसि ।
धार्तराष्ट्राञ्जिघांसन्ति पाण्डवाः सृञ्जयैः सह ॥ ११
न चापि वयमुग्रेण कर्मणा वचनेन वा ।
वित्रस्ताः प्रणमामेह भयादपि शतक्रतोः ॥ १२
न च तं कृष्ण पश्यामि क्षत्रधर्ममनुष्ठितम् ।
उत्सहेत युधा जेतुं यो नः शत्रुनिबर्हण ॥ १३
न हि भीष्मकृपद्रोणाः सगणा मधुसूदन ।
देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः ॥ १४
स्वधर्ममनुतिष्ठन्तो यदि माधव संयुगे ।
शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत् ॥ १५
मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन ।
यच्छयीमहि संग्रामे शरतल्पगता वयम् ॥ १६
ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे ।
अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव ॥ १७
कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन् ।
भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्यचित् ॥ १८
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥ १९
इति मातङ्गवचनं परीप्सन्ति हितेप्सवः ।
धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः ॥ २०
अचिन्तयन्कंचिदन्यं यावज्जीवं तथाचरेत् ।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा ॥ २१
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ २२
यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन ।

---

D7 8, D5 missing) विरुध्यति
11 d) S सह सृजयै° (by transp)
12 b) K1 5 D1-4 5 च (for वा) — c) K8 B5 Dn D1 6 8 प्रभ्रष्टाः, D5 विभ्रष्टा°, D10 प्रमृष्टा (for वित्रस्ता) B2 Dn D5 D8 10 प्रणमेम K5 D7 एव (for इह) — d) B (except B5) Dn D5 D6 8 10 शतक्रतु
13 D1 om 13a–14b — a) T2 G2 5 हि प्रप° (for कृष्ण प°) — b) D2 क्षत्रधर्मरतान्सदा, D8 4 6 °धर्मेष्वनुष्ठितान् — K5 om (hapl) 13d–14c) — d) K1 T2 G (except G4) M (except M1 2) °वर्हण, D2-4 6 °वर्हणान्
14 D1 om 14ab, K5 om 14abc (cf v l 13) — a) D2 न हि भीष्म कृप द्रोण — b) B Dn D5 D8 4 6-10 T2 G2 M2 सकर्णा, D2 सकर्णान्, G8 सगणान्, G5 सगता (for सगणा) — d) T1 G4 अशक्या° किमु पाडवै°; Ca as in text
15 a) K8 B Dn D5 D1 8 4 6 8-10 °पश्यतो (for °तिष्ठन्तो) D2 स्वधर्मे यतमानाना — c) K1 3 4 B (except B2) Dn D5 D6 8 10 अस्त्रेण (for शस्त्रेण) — d) K4 गच्छेम (for प्राप्स्याम) K8 सर्वम्, B D10 Ca स्वर्ग्यम् (for स्वर्गम्)
16 c) S शेष्यामो (M2 5 °म) हि, Ca शयीमहि (as in text) — d) M1 2 °तल्पे हता (for °तल्पगता)
17 b) K1 2 4 B1 4 D2-4 6 T2 G2 5 M8-5 प्राप्स्याम — d) K1 ततस्तप्स्यसि, K5 नैव स्वप्स्यति, D2 (by corr) 2 4 6 न तत्तप्स्यति, D4 न नस्तप्स्यति, T1 न तत्तप्स्यसि, T2 G1 नातस्तप्स्याम (T2 °मि also), G2 5 नातस्तप्स्यसि (G5 °ति), G8 न न तप्यति, M नातस्तप्स्येति (for न नस्तप्स्यति) Ca cites नस्तप्स्यति K1 2 5 D1 7 कृष्ण तत् (for माधव)
18 = (var) 5 132 37 — D7 transp 18 and 19 — a) K3 D8 T2 G5 कश्चित्, D10 को नु (for कश्च) — b) K8 क्षत्रिय. (for वर्तयन्) — c) K3. 4 D8 समीक्ष्यैव, D2 °क्षेत, D7 °क्ष्येह K1 2 भयाद्वृत्तिसमीक्ष्यो वा, K5 भिक्षावृत्तिं समीक्ष्येह, S भयाद्वा वृत्तिहेतोर्वा Cs cites वृत्तिसमीक्षोऽपि — d) B2 Dn D6 कर्हिचित्, cf 19d
19 = 5 132 38 — K1 D2 6 om (hapl) 19, K5 om 19a–21b D7 transp 18 and 19. — b) K2 उद्यमे B1-3 D7 T2 G2 8 ह्येष (for ह्येव) — d) B2 Dn कर्हिचित्, cf 18d
20 K5 om 20 (cf v l 19) — b) K4 कीर्तयति D6 हितेप्सया, G8 हितेच्छव — c) D8 4 8 9 धर्मार्थायैव, D10 धर्माय पित्रे — d) D3 4 6 ब्राह्मणाश्चैव K3 हि (for च) T2 G2 माधव (for मद्विध°)
21 K5 om 21ab (cf v l 19) — a) K1 4 D52 D5 T1 G2 4 M3-5 किंचिद् (for कंचिद्) G2 अपि (for अन्य) — b) K1 2 D2 S (except T1 G3 4) यावज्जीवेद् — d) K1 2 5 Dn2 D3 4 7 9 च सर्वदा, K4 सता सदा (for च मे सदा)
22 a) K1 G3 M अपि; Ca अभि° (as in text) — b) T2 G3 5 M2 हि (for मे)
23 K5 om 23-24, D1 om 23 — a) K2-4 B5 D2-4 6 S तु (for च) D7 transp च and राजा

न्यस्तशस्त्रा वयं ते वाप्युपजीवाम माधव ॥ २३
यद्यदेयं पुरा दत्तं राज्यं परवतो मम ।
अज्ञानाद्वा भयाद्वापि मयि बाले जनार्दन ॥ २४
न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन ।
ध्रियमाणे महाबाहो मयि संप्रति केशव ॥ २५
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण माधव ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

## १२६

वैशंपायन उवाच ।
ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ १
लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।
स्थिरो भव सहामात्यो विमर्दो भविता महान् ॥ २
यच्चैवं मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पाण्डवेष्विति तत्सर्वं निबोधत नराधिपाः ॥ ३
श्रिया संतप्यमानेन पाण्डवानां महात्मनाम् ।
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ॥ ४
कथं च ज्ञातयस्तात श्रेयांसः साधुसंमताः ।
तथान्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः ॥ ५
अक्षद्यूतं महाप्राज्ञ सतामरतिनाशनम् ।
असतां तत्र जायन्ते भेदाश्च व्यसनानि च ॥ ६
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम् ।

C. 5. 4253
B. 5. 123. 7
K. 5. 128. 7

---

S (except G.) ध्रि(G1 4 ध्र्य)ते, Ca ध्रियते (as in text) — D6 om (hapl) 23^c–24^d, T2 reads the lines in marg (sec m) — ^cd) K1. 2 4 D3 4 8 9 T1 G2 3 M1 च (for वा) D2 हि (for [अ]पि) D7 G2 om अपि (leaving hiatus) S भारत (for माधव)

24 K2 D6 om 24 (cf v l. 23), Dn2 om 24^ab — ^a) K3 B Dn1 Ds D8 10 अप्रदेय, T2 यत्वदेय — ^b) D3 4 9 परवशे मयि Ca cites परवत

25 ^c) K1. 2 B (except B5) Dn Ds D1 6 8 महाबाहौ

26 =(var) 5 57 18 — ^a) G3 तीक्ष्णाग्रे (for तीक्ष्णाया) B D (except D2 7, D5 missing) यावद्धि तीक्ष्णया सूच्या — ^b) T1 G1. 2 5 भिंद्याद्, T2 M3 भिद्याद्, G4 भिद्युर्, M1. 2 4 5 भिंद्येद् (for विध्येद्) K D2–4 7 9 T G अग्र (K1 D3 4 G5 °ग्रे, T2 °ग्राज्) जनार्दन, B3 5 Dn D8 अग्रेण केशव

Colophon missing in D5, K5 om it — *Sub-parvan* K (K5 om) B Dn Ds D1 2 6–8 10 T1 G1 4 5 M भगवद्यान — *Adhy name* G1 M दुर्योधनप्रत्याख्यान, G5 दुर्योधनवचन — *Adhy no* (figures, words or both) D6 17 (=117), D7 T2 G4 M1–3 5 128, T1 G1. 2 5 129, G3 M4 127 — *S'loka no* Dn1 D8 26, Dn2 25

### 126

1 ^a) K3 B5 Dn2 Cn प्रशम्य, D3 4 9 निशम्य (for प्रहस्य) — ^d) D3 4 9 कुरुनदन

2 Before 2, T2 M1 ins श्रीभगवान् — ^b) K1. 2 एतम्, K5 Ds2 D7 एनम्, D2 एवम् (for एतद्)

3 ^a) K4 5 G2 3 यश्चैव, D3 4 9 यस्त्वेव, G1 M (except M5) यच्चैव D3 4 9 पूर्वं (for मूढ) — ^b) K2 ते (for मे) — ^d) D3 4 9 निबोध त्वं Ds D3 4 9 नराधिप

4 T2 om 4–5, G2 reads them in marg (sec m) K5 has lacuna for 4^d

5 For T2 G2 cf v l 4 — ^ab) T1 G1. 4 कथंचित् (for कथं च), and °सत्तमा (for °संमता) — ^c) K3 B Dn Ds D1. 6–8 10 अथ, K5 अत्र, G5 M3–5 यथा (for तथा) G3 M4 अनार्यम्, G5 M2 अन्यायम् (for अन्याय्यम्) — ^d) S (T2 om.) °कारिण

6 ^a) B1. 3. 4 Dn2 D2–4 6 °प्रज्ञ, D9 °प्रज्ञा, G1. 4 °राज (for °प्राज्ञ) — ^b) K1 2 D7 अरतिभावन, K3 B4 मतिविनाशन, K5 च रतिभावन, Dn1 D3. 4. 8 9 अरतिकारक, Dn2 D10 भवति नाशन, Ds अवनिनाशन, T1 G1 M5 (inf lin) चारतिनाशन, G3 अरतिशासन, G4 चारित्रनाशन, G5 रतिविनाशन; Ca as in text

7 ^a) K1. 2 यदिद (for त°) — ^b) T1 G1. 4 द्यूतमुखात्, G3 द्यूतमिद — ^c) K1. 2 5 D2 8 प्रसमीक्ष्य K1 2

C. 5. 4288
B. 5. 126. 7
K. 5. 128. 7

असमीक्ष्य सदाचारैः सार्धं पापानुबन्धनैः ॥ ७
कश्चान्यो ज्ञातिभार्यां वै विप्रकर्तुं तथार्हति ।
आनीय च सभां वक्तुं यथोक्ता द्रौपदी त्वया ॥ ८
कुलीना शीलसंपन्ना प्राणेभ्योऽपि गरीयसी ।
महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया ॥ ९
जानन्ति कुरवः सर्वे यथोक्ताः कुरुसंसदि ।
दुःशासनेन कौन्तेयाः प्रव्रजन्तः परंतपाः ॥ १०
सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु ।
स्वेषु बन्धुषु कः साधुश्चरेदेवमसांप्रतम् ॥ ११
नृशंसानामनार्याणां परुषाणां च भाषणम् ।
कर्णदुःशासनाभ्यां च त्वया च बहुशः कृतम् ॥ १२
सह मात्रा प्रदग्धुं तान्बालकान्वारणावते ।
आस्थितः परमं यत्नं न समृद्धं च तत्तव ॥ १३
ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥ १४
विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव ॥ १५
एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान् ।
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु ॥ १६
कृत्वा बहून्यकार्याणि पाण्डवेषु नृशंसवत् ।
मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे ॥ १७
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोऽसि न च शाम्यसि पार्थिव ॥ १८
शमे हि सुमहानर्थस्तव पार्थस्य चोभयोः ।

---

D8 [अ]सदाचारैः, T G सदाचारान्, M (except M4) स(M8 त)दाचार

8 $^{a}$) S कथ च (T1 G1 4 त्व) (for कश्चान्यो) K3 4 B (except B1) Dn D1.6 भ्रातृभार्यां, S ज्ञातिदारान् (for ज्ञातिभार्यां) — $^{b}$) S तथार्हसि — $^{c}$) B2 4 5 सभा व्यक्त, D2 सभाया हि (for सभा वक्तु)

9 $^{a}$) K5 D7 रूप°, D3 4 9 सर्व° (for शील°) — $^{b}$) S प्राणैरपि

11 $^{b}$) D3 4 0 ब्रह्म° (for धर्म°) — $^{c}$) G1 M3 तेषु (for स्वेषु) — $^{d}$) M1 वदेद्, M4 कुर्याद् (M1 4 both *inf lin* चरेद् as in text) D8 इदम् (for एवम्)

12 D1 om 12$^{ab}$ — $^{b}$) K3-5 B Dn1 Ds D2 6 7.9 10 G8 पुरुषाणां (for पर°) S (for G3 see above) तथा परुषभाषणं (G1 °भाषिण, G4 M1 both *inf. lin.* °भाषिणा) — D2 reads 12$^{cd}$ after 13

13 $^{c}$) S परमो यत्नो — $^{d}$) = 15$^{d}$ K1 2 D8 न सद्वृत्त, K5 D7 असमृद्ध, D2 अप्रसिद्ध, D3 4 9 न च सिद्ध, T G1 2 5 M4 (*inf. lin* as in text) न समृद्ध°, Ca न समृद्ध (as in text) D3 4 9 तु (for च) K5 यत्त्वया, D7 तत्तथा (for तत्तव) M4 (*inf lin* as in text) परतप (for च तत्तव) — After 13, D2 reads 12$^{cd}$

14 D2 om 14$^{ab}$ — $^{a}$) K5 D7 उषित्वा च चिर काल — $^{b}$) D8 प्रपन्ना°, T2 प्रच्छन्नं K1 2 B1.3 D3 4 7 9 T G (except G5) तथा (for तदा)

15 $^{a}$) K2 D7 सर्पैर्बद्धा°; B1-3 Dn2 D8 D2 10 G8 सर्पैर्बंधै° B5 सर्पवृक्षै°, D1 T G1 2 4 5 M बंधै° सर्पै° (for सर्पबन्धै°) — $^{b}$) K4 T G2 4 5 M1-3 5 पातिता°, K5 D8 4 7 9 G1 घाति°, G3 यत्रि°, M4 (*inf lin.* as in text) खादि° (for यति°) D9 G8 तथा (for त्वया). — $^{d}$) = 13$^{d}$. K1 2 D3 4 9 संसिद्ध, D2 तत्सिद्ध, T G (except G8) समृद्ध° (for समृद्ध) K5 न समृद्ध भवेत्तत°, D7 समृद्ध च भवेत्तव — After 15, T G ins ,

478* एववृत्त कथ राज्ये स्थातुमर्हसि पापकृत् ।
स राज्याद्य सुखाच्चैव ह्रास्यसे कुलपासन ।

16 $^{a}$) G3.4 °वृत्त , Ca °बुद्धि (as in text) D2 प्रयतेषु (for पाण्डवेषु) — $^{b}$) S (except G5) °वृत्त° (for °वृत्ति°). — $^{c}$) K1 तु, K2 नु (for ते) K1 2 ते (for [अ]स्ति) — After 16, N T1 G3 5 ins

479* यद्येभ्यो याचमानेभ्य° पित्र्यमश न दित्ससि ।
तद्य पाप प्रदातासि अष्टैश्वर्यो निपातित ।

[ (L 1) K3 यद्येभ्यो, K4 D2 यत्ते°, K5 पार्थै°; B3 पार्थे°, G3 भक्ते° (for यद्ये°) B3 यच्छसि, D2 चेच्छसि (for दित्ससि) — After line 1, G3 *repeats* 16$^{cd}$ — (L 2) K5 तदा, D3 9 तत्त (for तद्य) D6 8 °श्वर्यान् (for °श्वर्यो) ]

17 $^{a}$) Dn2 D2 G3 बहूनि कार्याणि — K5 om 17$^{c}$–20$^{d}$, D7 om 17$^{c}$–18$^{b}$ — $^{c}$) K4 त्व (for सन्) — $^{d}$) D1 G3 नाद्यापि, G4 अत्र वि° (for अद्य वि) Ca cites विप्रतिपद्यसे (as in text)

18 K5 om 18, D7 om 18$^{ab}$ (cf v l 17). — $^{c}$) K1 2 G3 बहु, D8 D1 पुनर् (for मुहुर्) — $^{d}$) D9 शाम्यसि च (by transp )

19 K5 om 19 (cf v l 17) — $^{a}$) B2 4 5 Dn D8 D6 8 10 लाभ (for अर्थ ) — $^{b}$) K1 2 पार्थिव, Ca पार्थस्य (as in text) — $^{c}$) S (except G3) तवे न रोचते

न च रोचयसे राजन्किमन्यद्बुद्धिलाघवात् ॥ १९
न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया ॥ २०
एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुःशासन इदं वाक्यमब्रवीत्कुरुसंसदि ॥ २१
न चेत्संधास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥ २२
वैकर्तनं त्वां च मां च त्रीनेतान्मनुजर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥ २३
भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥ २४
विदुरं धृतराष्ट्रं च महाराजं च बाह्लिकम् ।
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् ॥ २५
सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः ।
अशिष्टवदमर्यादो मानी मान्यावमानिता ॥ २६
तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ।
अनुजग्मुः सहामात्या राजानश्चापि सर्वशः ॥ २७
सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह ।
दुर्योधनमभिप्रेक्ष्य भीष्मः शांतनवोऽब्रवीत् ॥ २८
धर्मार्थावभिसंत्यज्य संरम्भं योऽनुमन्यते ।
हसन्ति व्यसने तस्य दुर्हृदो नचिरादिव ॥ २९
दुरात्मा राजपुत्रोऽयं धार्तराष्ट्रोऽनुपायवित् ।
मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः ॥ ३०
कालपक्वमिदं मन्ये सर्वक्षत्रं जनार्दन ।
सर्वे ह्यनुसृता मोहात्पार्थिवाः सह मन्त्रिभिः ॥ ३१
भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः ।
भीष्मद्रोणमुखान्सर्वानभ्यभाषत वीर्यवान् ॥ ३२
सर्वेषां कुरुवृद्धानां महानयमतिक्रमः ।

C. 5. 4292
B. 5. 128. 2-
K. 5. 129. 23

राजन् — $G_3$ om. (hapl.) $19^d$–$20^a$

20 $K_5$ om 20 (cf v l. 17), $G_3$ om $20^a$ (cf. v l. 19) — $^a$) $K_{1-3}$ $B_3$ $D_2$ M शम, $D_{s2}$ शाम्य, $D_9$ सम (for शर्म) — $^b$) $K_4$ $D_8$ उत्कृत्य, $D_{3.4}$ निकृप्य, $D_9$ त्रिकृप्य, Ca d उत्क्रम्य (as in text)

21 Before 21, all MSS ins वैश° उ° (resp वैश°) — $^a$) $K_5$ $D_7$ इति (for एव) — $^b$)=5 122 $5^b$, 123 $1^b$

22 In $D_{n2}$ the portion of the text from here up to 5 128 49 is lost on two missing fol (100–101) — $^b$) $K_{1.2}$ तेन (स्वेन)

23 $D_{n2}$ missing (cf v.l. 22) — $^a$) $T_2$ $G_2$ च मा चैव (for त्वा च मा च) — $^b$) S भरत° (for मनुज°) — $^d$) T $G_{1.4.5}$ भीष्मद्रोणौ $K_{1.2}$ च मे, S तव (for च ते)

24 $D_{n2}$ missing (cf. v l. 22) Before 24, N (except $B_2$ $D_{n1}$, $D_{n2}$ missing) $T_2$ $G_{1.4}$ ins वैश° उ° (resp वैश°) — After 24, K $D_{1.2}$ read 27

25 $D_{n2}$ missing (cf v l. 22) — $^d$) $K_4$ $D_{6.7}$ $G_5$ भीष्मद्रोणजनार्दनान् ($K_4$ °न), T $G_{1.2.4}$ M भीष्मद्रोणौ जनार्दन

26 $D_{n2}$ missing (cf v l. 22) — $^b$) K (except $K_3$) $D_{1-4.7.9}$ प्रातिष्ठत सुदुर्मति

27 $D_{n2}$ missing (cf v.l. 22) K $D_{1.2}$ read 27 after 24 — $^a$) $D_{10}$ अनु- (for अभि-) — $^b$) $K_3$ $B_{3.5}$ मनुजर्षभ, S भरतर्षभ — $^{cd}$) $K_5$ om. $27^{cd}$ S अन्वगच्छन्सहा° °श्चैव पार्थिवा

28 $D_{n2}$ missing (cf v.l. 22) — $^a$) K $D_{1.2.7}$ सहसैवोत्थित क्रुद्ध-

29 $D_{n2}$ missing (cf v l. 22) — $^a$) $K_2$ अवि-; $K_5$ $D_7$ अनु-; $T_1$ $G_1$ अथ, $M_{1.2}$ अपि (for अभि) $K_{1.2}$ गन्चित्य (for संत्यज्य) — $^b$) $K_5$ $D_7$ संरभाद् $T_1$ $G_{1.4}$ °वर्त°, $T_2$ $G_{2.3.5}$ M °पश्य° (for °मन्य°) — $^c$) T G (except $G_3$) शोचन्ति (for हसन्ति) — $^d$) $K_5$ $D_{10}$ T G (except $G_3$) सुहृदो (for दुर्हृदो) $D_{2.6}$ अपि (for इव)

30 $D_{n2}$ missing (cf. v l. 22) — $^b$) $K_5$ °वान्, $B_{4.5}$ $D_{1.6.8}$ °कृत् (for °वित्)

31 $D_{n2}$ missing (cf. v l. 22) — $^a$) Cf 5 130 $3^a$ $K_5$ $D_7$ °ग्रासम् (for °पक्वम्) — $^b$) B $D_{2-4}$ $T_1$ $G_{1.2}$ सर्वं क्षत्र

32 $D_{n2}$ missing (cf v l. 22) Before 32, $K_{1.2}$ $B_{3.5}$ $D_{3.4.8.9}$ $T_1$ $G_{1.3.4}$ $M_1$ ins वैश° उ° (resp वैश°) — $^a$) $K_4$ एतद्, $D_{3.4.9}$ तु, $G_3$ च (for अथ) $G_5$ भीष्मस्य वचन श्रुत्वा — $^b$) $K_{1.2.5}$ $D_7$ कमलेक्षण, $T_1$ $G_{1.4}$ पुरुषोत्तम

33 $D_{n2}$ missing (cf v l. 22). Before 33, $T_2$ ins श्रीभगवान् — $^c$) $T_1$ $G_1$ M विसृज्य, $T_2$ $G_2$ प्रसृज्य, $G_3$ प्रसज्य, $G_4$ विन्यस्य (for प्रमह्य) — $^d$) $K_{1.2.5}$ T G

C. 5. 4292
B. 5. 128. 24
K. 5. 128. 25

प्रसह्य मन्दमैश्वर्ये न नियच्छत यन्नृपम् ॥ ३३
तत्र कार्यमहं मन्ये प्राप्तकालमरिंदमाः ।
क्रियमाणे भवेच्छ्रेयस्तत्सर्वं शृणुतानघाः ॥ ३४
प्रत्यक्षमेतद्भवतां यद्वक्ष्यामि हितं वचः ।
भवतामानुकूल्येन यदि रोचेत भारताः ॥ ३५
भोजराजस्य वृद्धस्य दुराचारो ह्यनात्मवान् ।
जीवतः पितुरैश्वर्यं हृत्वा मन्युवशं गतः ॥ ३६
उग्रसेनसुतः कंसः परित्यक्तः स बान्धवैः ।
ज्ञातीनां हितकामेन मया शस्तो महामृधे ॥ ३७
आहुकः पुनरस्माभिर्ज्ञातिभिश्चापि सत्कृतः ।
उग्रसेनः कृतो राजा भोजराजन्यवर्धनः ॥ ३८
कंसमेकं परित्यज्य कुलार्थे सर्वयादवाः ।
संभूय सुखमेधन्ते भारतान्धकवृष्णयः ॥ ३९
अपि चाप्यवदद्राजन्परमेष्ठी प्रजापतिः ।
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ॥ ४०
द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत ।
अब्रवीत्सृष्टिमान्देवो भगवाँल्लोकभावनः ॥ ४१
पराभविष्यन्त्यसुरा दैतेया दानवैः सह ।
आदित्या वसवो रुद्रा भविष्यन्ति दिवौकसः ॥ ४२
देवासुरमनुष्याश्च गन्धर्वोरगराक्षसाः ।
अस्मिन्युद्धे सुसंयत्ता हनिष्यन्ति परस्परम् ॥ ४३
इति मत्वाब्रवीद्धर्मं परमेष्ठी प्रजापतिः ।
वरुणाय प्रयच्छैतान्बद्ध्वा दैतेयदानवान् ॥ ४४
एवमुक्तस्ततो धर्मो नियोगात्परमेष्ठिनः ।
वरुणाय ददौ सर्वान्बद्ध्वा दैतेयदानवान् ॥ ४५
तान्बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः ।
वरुणः सागरे यत्तो नित्यं रक्षति दानवान् ॥ ४६
तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम् ।

नियच्छति, D2 °च्छन्, D7 °च्छति, M व्यायच्छंत, Ca नियच्छथ (for °च्छत) K3 D1 3 य, K5 ये; D2 तदा (for यन्).

34 Dn2 missing (cf v l. 22) — b) K1 3 B Dn1 D1 3 4 6 8 10 काल(D6 °ले)प्राप्तम् (for प्राप्तकालम्)

35 Dn2 missing (cf v l 22) — a) S (except G3) एव (for एतद्) — b) T1 G1 4 transp यद् and हितं D10 ब्रवीमि (for वक्ष्यामि) — d) D3 4 6 S (except G3) रोचते यदि भा° —

36 Dn2 missing (cf v l 22) — a) K3 अग्रतो भोजराजस्य — d) K4 5 B D (except D6; Dn2 missing) T1 M5 मृत्यु° (for मन्यु°).

37 Dn2 missing (cf v l 22). — d) D3 4 6 °हवे (for °मृधे)

38 Dn2 missing (cf v l, 22) — b) K1 2 D2 7 T1 G1 M3-5 अभि-; K5 अति- (for अपि) — d) K5 D7 °राजविवर्धन°, B3 Dn1 D3 6 T1 M2 °राज(Dn1 °ज्य)स्य वर्धनः.

39 Dn2 missing (cf v l 22) — b) K5 D7 °पार्थिवा. (for °यादवा°) — d) K5 D7 G3 यादवाधक°

40 Dn2 missing (cf v l 22) — a) K5 D7 इदं, D1 2 अथ (for the first अपि) K1m 2 G3 अभि (for the second अपि) D3 4 6 अब्रवीद्, S अभवद् (for अवदद्) D10 पुरैवमवदद्राजन् — b) B2 पितामह° (for प्रजा°) — d) K1 [ऽ]भ्युदितेषु, S (except T1 G1) द्यु(G5 उ)द्यतेषु (for ऽभ्युद्यतेषु) D3 4 6 °युधेष्वपि

41 Dn2 missing (cf. v l 22) K5 om 41bcd — b) D3 D10 S (except G3) विनदिष्यत्सु भा°. — c) K1 2 4 B3 Dn1 D7 8 10 दृष्टिमान्, S तु तदा (for सृष्टिमान्) D7 देवान्

43 Dn2 missing (cf v l 22) — c) D3 S (except T1) तस्मिन् (for अस्मिन्) K3 B Dn1 D3 D1 3 4 6-10 °क्रुद्धा, K5 °वृत्ता, T1 G1-3 °युक्ता, T2 °यता, G4 °युक्ते (for °यत्ता) — d) T G भवि° (for हनि°) — After 43, T G ins

480* वर्तमानं जगत्सर्वं मुहूर्तान्न भविष्यति ।
अन्यनाशेन जगतो लोकस्य च परंतप ।

[ (L 2) T1 अस्य नाशेन, T2 G अन्यनाशो न, G3 अल नाशेन ]

44 Dn2 missing (cf v l 22) — b) D1 G5 पितामहः; T2 जनेश्वर (for प्रजापति ) K5 om (hapl ) from प्रयच्छ (in 44c) up to वरुणाय (in 45c) — 44cd =(var ) 45cd

46 Dn2 missing (cf v l 22) B3 om (hapl ) 46 — a) K1-3 G5 M1 तान्बद्धान्, G3 (by transp ) बद्ध्वा तान् — b) K1 2 5 D7 स्वपाशैश्च, D10 स्वीयपाशैर्, G2 पाशै° स्वैश्च, G3 4 तैश्च पाशैर् — c) D3 4 6 यत्नान् (for यत्तो)

47 Dn2 missing (cf. v l 22) — b) D3 4 6 T1

बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत ॥ ४७
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ४८
राजन्दुर्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः ।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ ॥ ४९

इति श्रीमहाभारते उद्योगपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

## १२७

वैशंपायन उवाच ।
कृष्णस्य वचनं श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत ॥ १
गच्छ तात महाप्राज्ञां गान्धारीं दीर्घदर्शिनीम् ।
आनयेह तया सार्धमनुनेष्यामि दुर्मतिम् ॥ २
यदि सापि दुरात्मानं शमयेद्दुष्टचेतसम् ।
अपि कृष्णस्य सुहृदस्तिष्ठेम वचने वयम् ॥ ३
अपि लोभाभिभूतस्य पन्थानमनुदर्शयेत् ।
दुर्बुद्धेर्दुःसहायस्य समर्थं ब्रुवती वचः ॥ ४
अपि नो व्यसनं घोरं दुर्योधनकृतं महत् ।
शमयेच्चिररात्राय योगक्षेमवदव्ययम् ॥ ५
राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम् ।
आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ॥ ६
धृतराष्ट्र उवाच ।
एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः ।
ऐश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति ॥ ७
अशिष्टवदमर्यादः पापैः सह दुरात्मभिः ।
सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः ॥ ८
वैशंपायन उवाच ।
सा भर्तुर्वचनं श्रुत्वा राजपुत्री यशस्विनी ।

C. 5.4317
B 5. 129. 9
K 5. 1.9. 9

---

G1.4 चैव (for चापि) — c) K4 D3.4.9 S चैव (for चापि) — d) D1–4.8 T1 G1.4.6 M5 प्रयच्छथ
48 = 5 37 16 (q v for other references) Dn2 missing (cf. v l 22) — a) D3.4 कुलार्थे K1.2 5 D5 D7 8 10 त्यजेदेक कुलस्यार्थे Ca cites त्यजेत्कुलार्थे (as in text)
49 Dn2 missing (cf v l 22) — a) T G तस्माद् (for राजन्) — b) K5 प्रशम्य (for °शाम्य) — c) B1 3 D3 (m as in text) 4 9 T2 G1.2 5 तत्; G3 यत् (for त्वत्) — d) K3 5 G. M2 क्षत्रियर्षभा

Colophon missing in Dn2 D5 — *Sub-parvan* K1–3.5 B Dn1 D5 D2 6–8 10 T1 G1.5 M भगवद्यान — *Adhy name* D1 दुर्योधनस्य सभातो निर्गमन, G1 दुर्योधननिर्गमन M दुर्योधनसभानिर्गमन — *Adhy no* (figures, words or both) D6 18 (=118), D7 T2 G4 M1–3 5 129, T1 G1 2 5 130, G3 M4 128 — *S'loka no* K5 65, Dn1 50

### 127

☞ This adhy is missing in Dn2 (cf. v l 5 126 22)

1 a) K3 B2 4 5 Dn1 D5 D6 8 10 तु वच (for वचन)
2 a) K2 4.5 D2 7 8 T2 G2 3 5 महाप्राज्ञ, D5 D9 10 °प्रज्ञा — b) D8 दीर्घदर्शिनां
3 a) T1 G1.5 सा न, G4 सा तु (for सापि) — b) K5 D7 शाम° (for शम°) — c) K5 D1 7 अथ (for अपि)
4 a) K3 5 D1.7 T1 G4 अति- (for अपि) M3 4 अवलेपाभि° — d) K4 S समक्ष, K6 सामर्थ्यं, B4 D5 D1.6–8 10 शमार्थं (for समर्थं)
5 b) D7 9 °कृते (for °कृत) — c) D5 शमाय, D2 शमभ्य (for शमयेत्) — d) Ds2 D1 °क्षेमकृद् (for °क्षेमवद्) D2 °क्षेम यदाम्यह
8 K5 om from स्मवान् (in b) up to श्रुत्वा रा (in 9b) — b) B Dn1 D5 D3 4 6 8–10 दुरात्मवान् — c) Ds2 D3 G4 M (except M1) सभाया (for °या) G4 मूढै — d) T2 G2 5 ह्यति°, G1 अति° (for व्यति°)
9 K5 om up to श्रुत्वा रा (cf v l 8) — a) K4 B (except B2) D10 भर्तृ- (for भर्तुर्) — c) K1.2 D1 M ह यत्, K4 ह सा, B3 G3 4 महा (for महत्)

C 5 4317
B 5 1.9 9
K 5 129.9

अनिच्छन्ती महच्छ्रेयो गान्धारी वाक्यमब्रवीत् ॥ ९
आनयेह सुतं क्षिप्रं राज्यकामुकमातुरम् ।
न हि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना ॥ १०
त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रियः ।
यो जानन्पापतामस्य तत्प्रज्ञामनुवर्तसे ॥ ११
स एष काममन्युभ्यां प्रलब्धो मोहमास्थितः ।
अशक्योऽद्य त्वया राजन्विनिवर्तयितुं बलात् ॥ १२
राज्यप्रदाने मूढस्य बालिशस्य दुरात्मनः ।
दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् ॥ १३
कथं हि स्वजने भेदमुपेक्षेत महामतिः ।
भिन्नं हि स्वजनेन त्वां प्रसहिष्यन्ति शत्रवः ॥ १४
या हि शक्या महाराज साम्ना दानेन वा पुनः ।
निस्तर्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् ॥ १५
शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम् ।
मातुश्च वचनात्क्षत्ता सभां प्रावेशयत्पुनः ॥ १६
स मातुर्वचनाकाङ्क्षी प्रविवेश सभां पुनः ।
अभिताम्रेक्षणः क्रोधान्निःश्वसन्निव पन्नगः ॥ १७
तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम् ।
विगर्हमाणा गान्धारी समर्थं वाक्यमब्रवीत् ॥ १८
दुर्योधन निबोधेदं वचनं मम पुत्रक ।
हितं ते सानुबन्धस्य तथायत्यां सुखोदयम् ॥ १९
भीष्मस्य तु पितुश्चैव मम चापचितिः कृता ।
भवेद्द्रोणमुखानां च सुहृदां शाम्यता त्वया ॥ २०
न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते ।
अवाप्तुं रक्षितुं वापि भोक्तुं वा भरतर्षभ ॥ २१
न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम् ।

---

10 Before 10, all MSS (except T1, Dn2 D6 missing) ins गाधार्युवाच (resp गाधारी) — [a]) K1 2 4 D2 T2 G2 5 आनयस्व, K3 5 B D6 7 10 आनायय, Dn1 आनीय च, D8 आनय त्व, T1 G1 4 आनयैन (for आनयेह) G5 चिर, M (M1 inf. lin ) तु त (for सुत) T2 G2 क्रुद्ध, G5 पुत्र, M पाप (for क्षिप्र) D8 आनाययस्व त क्षिप्र — [d]) K4 धर्मविरोधिना; D7 धर्मार्थलोभिना — After 10, K3 B Dn1 Ds D3 4 6 8–10 T1 G5 ins

481 आसुमास तथापीदमविनीतेन सर्वथा ।

11 [a]) D1 3 4 9 10 G4 om हि — [b]) Dn1 D2 T2 G1-2 M2–4 सुतप्रिय — [c]) K4 M3 4 (inf lin as in text) 5 पापकामस्य —

12 [a]) Ds D3 4 M3 4 ((inf lin as in text) 5 स एव — [b]) K1. 2 प्रलुसो, K4 B1–3 D3 4 8 9 T2 G2 3 M1 °लुब्धो, K5 D7 सुलुसो, D1 T1 G4 प्रवृद्धो, G1 °वद्धो (for °लब्धो) B4 5 Dn1 D2 G3 लोभ° (for मोह°) — [c]) B1 4 5 न शक्यो K4 D3 4 यत्, K5 D7 य (for ऽद्य) — [d]) K5 °वर्तय तद्बलात्

13 [a]) K1 B3–5 Dn1 D1. 6 8 राष्ट्रप्रदाने, K2 राज्यदानेन, K3 4 B2 Ds D2 9 10 राज्य(Ds D10 °ष्ट्र)प्रदान; K5 D7 राज्य प्रधान — [b]) S (except T2 G2. 5) हताशस्य (for बालि°) — [c]) S (except G1) दुर्योधनस्य लु°. — [d]) K4 T2 G1 2 धृतराष्ट्रास्तु ते फल, T1 M धृतराष्ट्राश्नुपे फल.

14 [a]) K5 एव (for कथ) K1 2 स्वजनैर्भेदं — [b]) K3 B3 D (except D9, Dn2 missing) T1 G3. 5 महीपति (for महा°). — [c]) D1 भिन्ने हि स्वजने च त्वां — [d]) K B2 D (Dn2 missing) T1 G4 M1 प्रहसिष्यन्ति, M1 (inf lin ) Ca as in text

15 [a]) K2 4 B3 Dn1 D3 4 6 8–10 G3 5 यो हि शक्यो (B3 D10 °क्तो), Ds या हि शक्य — [b]) N (except K1, Dn2 missing) T2 G1 2 भेदेन (for दानेन) — [c]) K1 यादवश्रेष्ठ, K2 D3. 4 8 9 आपदस्तेषु, T G (except G3) आपदार्येषु — [d]) D2 M3–5 धार° (for पात°)

17 K5 om 17[b] — [b]) K3 B2. 4 5 Dn1 Ds D6 8 10 पुन सभा (by transp ) — [c]) Ds1 D1. 3 4 8–10 T1 G1 4 अति- (for अभि-)

18 [b]) T2 G2. 5 आश्रित (for आस्थितम्) — [d]) B (except B2) Dn1 Ds D2–4 6 8–10 G1 शमार्थं (for समर्थं)

19 Before 19, K4 D1. 8 T G1 3 4 M1 ins. गाधार्युवाच (resp गाधारी) — After 19, N (Dn2 missing) T1 G5 ins

482* दुर्योधन यदाह त्वा पिता भरतसत्तम ।
भीष्मो द्रोण कृप क्षत्ता सुहृदा कुरु तद्वच ।

[ (L 1) Dn1 Ds D7 10 °सत्तम (for °सत्तम) — K5 om (hapl ) from कृप up to द्रोण (in 20[c]) ]

20 K5 om up to द्रोण (cf v l 19) — [a]) K1–3 B5 D1 2 7 हि, K4 D9 10 S (except G3) च (for तु) — [d]) B1–3 D2 T2 G1–3 M1 (sup lin as in text) शाम्यता

21 [c]) K5 सुप्राप्त, D7 सुप्राप्तु (for अवाप्तु) — [d]) K3 4 B (except B3) Dn1 Ds D6. 8 10 G4 भोक्तु

विजितात्मा तु मेधावी स राज्यमभिपालयेत् ॥ २२
कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः ।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥ २३
लोकेश्वरप्रभुत्वं हि महदेतद्दुरात्मभिः ।
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥ २४
इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः ।
इन्द्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेन्धनैः ॥ २५
अविधेयानि हीमानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ २६
अविजित्य य आत्मानममात्यान्विजिगीषते ।
अजितात्माजितामात्यः सोऽवशः परिहीयते ॥ २७
आत्मानमेव प्रथमं देशरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ २८
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ २९
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥ ३०
याभ्यां हि देवाः स्वर्यातुः स्वर्गस्यापिदधुर्मुखम् ।
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥ ३१
कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः ।
सम्यग्विजेतुं यो वेद स महीमभिजायते ॥ ३२
सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः ।

C. 5. 4343
B. 5. 129. 34
K. 5. 128. 24

---

भगवद्वचन

22 $^{c}$) T1 G1.2 स्वाराज्य; T2 G2-5 M1.2.4 (inf lin) स्वराज्यं K1 अपि; K2 T1 G1.4 अपि; G. M4 (inf lin) अनु (for अभि) K2 जायते (for पालयेत्) D1 स राजेन्द्रनिर्धार्यते

23 $^{b}$) K2 D- व्यवकर्षत — $^{c}$) K2 च, S (except G2) हि (for तु) — $^{d}$) K2 राजर्षिर्जीयते महीं

24 $^{a}$) D2.4.5 लोकत्रय°, D2 m °प्रयुक्त, T1 G3-5 M लोकेश्वरानि(G5 °ति, M °नु)सृत, T2 G1.2 लोककामा(G2 °सर्वा)निसृतः (G1 °त)

25 $^{a}$)K2 महा; D- 2 पति; Ca.d महत (as in text) — $^{b}$) K (except K4) D2 °कामयो (for °धर्मयो) — $^{c}$) B2 D2 निर्जितैर् (for नियतैर्)

26 =(-2-) 5 34 58 — $^{a}$) G2 M2.4 (inf lin as in text) : Ca d सीमानि; T2 (in addition to the text reading) G2 दुष्टं (for हीमानि) — $^{d}$) K4 B1-2 D2 D1.2 S पथिषु मार्गयं

27 =(var) 5 34 54 — K2 om 27-37 — $^{a}$) D- 4 : अविनिर्जित्य चात्मानं — D1 om. (hapl.) 27$^{c}$-28$^{d}$ — $^{c}$) K2 4 Dn1 D5 D. c 2 10 अमित्रात्मावितामात्य (D5 °मित्र), D2.4 : अमित्रांश्चाजिता° — $^{d}$) K1 m (as in text) 4 °नूयते (for °हीयते)

28 =5 34 55 — K2 D1 om. 28 (cf. v.l. 27) — $^{b}$) K4 °कालेन, B Dn D2 4 10 द्रेष्य°; D2 द्वेष°; D2 दश°, Ca. d.s देशरूपेण (as in text) — $^{d}$) T2 G2 नरोत्य (for न मोघं) D5 विजिगीषति

29 =5 34 56 K2 om. 29 (cf. v.l. 27) — $^{a}$) K1 D2 T1 G1.2.4 जितात्मानं — $^{c}$) Dn1 D5 D1-4.2-10 वीरम्, M1 (inf lin) 4 दान्तम् (for धीरम्) — $^{d}$) K2 B2.4 . Dn1 D5 D1.c 2 10 अत्यर्थं (for अत्यन्त)

30 =(var) 5 34. 63 K2 om. 30 (cf. v.l 27) — $^{b}$) B3 मत्स्यौ (for झषौ) G1.5 इव (for अपि-) D5 दल (for दशौ) — $^{d}$) K4 प्रज्ञामेतौ, D7 (by transp) तौ प्रज्ञानं

31 K2 om. 31 (cf. v.l. 27) — $^{a}$) B1.3 S स्वर्यांता (G3 स्वर्गस्य), Ca s स्वर्यातु (as in text) K4 याभ्या देवा स्वर्गयातु — $^{b}$) G3 द्वारा हि (for स्वर्गस्य) K3 B (except B2) Dn1 Ds1 D1.c T1 G4 M1.2.4 Cs पिदधु, Ca d अपिदधु (as in text) — G3 om 31$^{cd}$ — $^{c}$) K4 D1 Ca.d बिभ्रतो, M (M1 inf lin as in text) बिभ्यतो (for बिभ्यतो) K1-3 अभिभवाद्राजन, D3 अनु-पराक्रम्य (for अनुपरागस्य) — $^{d}$) D2 स विद्धि तौ, D7 विवर्धितौ, T1 G1.4 सुवर्धितौ (for स्म व°) Ca d.s cite वर्धितौ (as in text) T2 G2 °क्रोधावुवर्धितौ

32 K. om. 32 (cf v l. 27) — $^{b}$) K2 D1.2 r दर्पं दम्भं (by transp), Dn1 दंभं दर्पं S (mostly) दम्भं K1 B2 S (except T2 M2) भूमिप — $^{c}$) T G1.2 4 5 निग्रहीतुं, G3 M4 (inf lin as in text) 5 विद्या° (for विजे°) — $^{d}$) D2 महान, Cs महीम् (as in text) Dn1 अतिजीयते, D1.10 अभिजीयते, G2 अपि जायते, G3 अभि-रक्षति, G4 अभिरक्षयेत, G5 अविजायते, Ca.d s as in text

33 K2 om 33 (cf. v.l. 27) — $^{b}$) K1.2 Dn1 D1.2 T1 G1.2.4 भवेन्नृप, K3 सुयोधन — $^{c}$) D3 4.9 ईप्सितार्थं च D2 4 धर्मं च

34 K2 om. 34 (cf. v.l 27) — $^{c}$) D1

C. 5.4343 B. 5. 129 34 K. 5. 129 34

ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ॥ ३३
कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते ।
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥ ३४
एकीभूतैर्महाप्राज्ञैः शूरैररिनिबर्हणैः ।
पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी ॥ ३५
यथा भीष्मः शांतनवो द्रोणश्चापि महारथः ।
आहतुस्तात तत्सत्यमजेयौ कृष्णपाण्डवौ ॥ ३६
प्रपद्यस्व महाबाहुं कृष्णमक्लिष्टकारिणम् ।
प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ॥ ३७
सुहृदामर्थकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥ ३८
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥ ३९
भीष्मेण हि महाप्राज्ञ पित्रा ते बाह्लिकेन च ।
दत्तोंऽशः पाण्डुपुत्राणां भेदाद्भीतैररिंदम ॥ ४०
तस्य चैतत्प्रदानस्य फलमद्यानुपश्यसि ।
यद्भुङ्क्षे पृथिवीं सर्वां शूरैर्निहतकण्टकाम् ॥ ४१
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिंदम ।
यदीच्छसि सहामात्यो भोक्तुमर्धं महीक्षिताम् ॥ ४२
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवनम् ।
सुहृदां वचने तिष्ठन्यशः प्राप्स्यसि भारत ॥ ४३
श्रीमद्भिरात्मवद्भिर्हि बुद्धिमद्भिर्जितेन्द्रियैः ।
पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ॥ ४४
निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम् ।
स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय भरतर्षभ ॥ ४५
अलमह्ना निकारोऽयं त्रयोदश समाः कृतः ।
शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ॥ ४६
न चैष शक्तः पार्थानां यस्त्वदर्थमभीप्सति ।

---

क्रोधात्मा (for °द्वा) — $^{b}$) K4 मोहात् (for मिथ्या) — $^{c}$) B2 Ds S वा (for च) — $^{d}$) K1 सहाया न (by transp ). D8 4 9 G8 M न सहायो (D8 4 °या) भवन्त्युत

35 K5 om 35 (cf v l 27) — $^{a}$) K1 Dn1 एकीभूते, S एकीभूतो Dn1 Ds D2 10 महाप्रज्ञ, D8 °प्राज्ञ, M (except M8) °प्राज्ञ — $^{b}$) S (except G1) शत्रु° (for अरि°) — $^{cd}$) G4 M (except M1) पृथिवी, and भोक्ष्यते T1 G4 M3-5 तत्र (for तात) G4 सुख (for सुखी)

36 K5 om 36 (cf v l 27) — $^{a}$) D8 4 9 तथा (for यथा) T1 G4 शातनवो भीष्मो (by transp ) — $^{b}$) K8 °वल° (sup lin as in text), S (except G8) °यशा° (for °रथ°) — $^{c}$) T2 G2 5 आहतुस्त्वा तथा सत्य — $^{d}$) D10 अजययौ

37 K5 om 37 (cf v l 27) — $^{a}$) S °स्मान (for °बाहु) — $^{c}$) G4 5 प्रपन्नो, M4 5 °सन्ने (for °सन्नो) — $^{d}$) B5 T1 G1 3 4 अपि (for एव)

38 $^{b}$) K4 तिष्ठेत, D8 4 9 तिष्ठसि (for तिष्ठति). — $^{d}$) K4 स नश्येत्कुरुनदन

39 $^{c}$) S युद्धे (G8 नित्यो) (for नित्य) — $^{d}$)=5 122 49$^{d}$ K5 D2 7 चित्त (for चेतः) B3 5 च मन° कृथा°, D8.4 9 मानसं कुरु (for चेत आधिथा°) K1 आद्रिथा°, K2 3 D8 अध्रि°, K5 D7 आद°, S आदधा (for आधि°)

40 $^{a}$) G3 4 च (for हि) Ds1 D10 M5 महाप्रज्ञ — $^{b}$) K1 त्वत्पित्रा (for पित्रा ते) — $^{d}$) D1 2 यथोचितम् (cf 42$^{b}$), G5 M8 4 (inf lin as in text) 5 भेदभीतेर्

41 $^{a}$) Ds वा (for च) — $^{b}$) K5 अप्यनु; D7 अप्यय (for अद्यानु ) — $^{c}$) K4 B1-3 Ds D1 भुक्ते (Ds2 भुक्तो) (for भुङ्क्षे) K2 4 5 D1 7 S सर्वां (for कृत्स्नां)

42 42$^{ab}$=5 57 3$^{cd}$. — $^{d}$) K2 5 अर्थं, D2 एव (for अर्धं) K5 महीभृता, B4 Dn1 प्रदीयता (for महीक्षिताम्) K4 D8 4 7-10 भोक्तुमर्धं (K4 D7 °र्धां, D9 10 °र्धं-) महीमिमा, D1 भोक्तुमेतां वसुधरा, S भोक्तुमित्य (G2 3 °मर्धं, G5 °मर्थं) महीमिमा (G8 °पते)

43 43$^{ab}$=(var ) 5 57 3$^{ab}$. — $^{b}$) D2-4 9 जीवितु, S जीवने (G8 जीवित) (for जीवनम्) — $^{c}$) K4 D2 G5 तिष्ठ (for तिष्ठन्) — $^{d}$) K1 2 5 D7 पार्थिव (for भारत)

44 $^{a}$) K1 4 5 Ds D7-9 T G (except G3) M4 आत्मविद्भि° K8 4 B (except B3) Dn1 D6 8 10 G3 तै° (for हि) — $^{d}$) D7 भ्रशयेत महत्सु°.

45 K5 om 45 — $^{d}$) D2 किल भारत, D10 T2 G5 M पुरुषर्षभ

46 $^{a}$) K4 D8 4 8 9 अलमेषा, K5 D7 अलमर्धं, B Dn1 Ds D1 6 10 C8 अलमंग (B2 अमगल), D2 अलमत्र, T G1.2 5 अलं महान्, G8 4 M1 (inf lin ) अल महा (for अलमह्ना) Ca cites अल and अह्ना — $^{b}$) Ds पुन , Ca d s कृत° (as in text). — $^{c}$) B5 Ds D10

सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते ॥ ४७
भीष्मे द्रोणे कृपे कर्णे भीमसेने धनंजये ।
धृष्टद्युम्ने च संक्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम् ॥ ४८
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः ।
सर्वा हि पृथिवी स्पृष्टा त्वत्पाण्डवकृते वधम् ॥ ४९
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः ।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ५०
समं हि राज्यं प्रीतिश्च स्थानं च विजितात्मनाम् ।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥ ५१
राजपिण्डभयादेते यदि हास्यन्ति जीवितम् ।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ५२
न लोभादर्थसंपत्तिर्नराणामिह दृश्यते ।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ५३

इति श्रीमहाभारते उद्योगपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

## १२८

वैशंपायन उवाच ।
तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम् ।
पुनः प्रतस्थे संरम्भात्सकाशमकृतात्मनाम् ॥ १
ततः सभाया निर्गम्य मन्त्रयामास कौरवः ।

C. 5. 4335
B. 5. 130. 2
K. 5. 130. 2

---

महाप्राज्ञ — $^{d}$) G3 °समन्वितं

47 K5 om 47–50 — $^{a}$) K4 B (except B4) Dn1 Ds D1. 2 10 चैव, D5 स्वेष, G5 [मु]चैष (for चैष) D2 पापात्मा (for पार्थाना) — $^{b}$) Dn1 D2 यत् (for य°) K4 B Ds D1. 2 4 6 8 10 T2 G1–4 M5 Cn त्वमयं, Dn1 D2 त्वमयं; T1 त्वधर्म (for त्वदयं) K2 4 B. Dn1 Ds D1 2 4 6 8–10 T1 M2. 5 अमीष्मम्मि

48 K5 om 48 (cf. v.l. 47) — $^{a}$) K1. 2 द्रोणे भीष्मे (by transp) — $^{d}$) Ds सुन्न (for ध्रुवम्) D2 न न स्यु सर्वश प्रजा

49 K1. 5 om 49 (cf. v l 47) — $^{b}$) T1 G (except G2) नीनशः, Ca जीवन (as in text) T2 कुरुस्तात जिवास्मि — $^{c}$) K3 B D (except D2 7, Dn2 missing) एषा हि K2 पृथिवी स्पृष्टा, K3 B Dn1 Ds D6–8 10 °वी कृत्स्ना, D1. 2 T2 G2 M °वी सृष्टा (for M4 see below also), D2 4. 9 कृत्स्ना पृथिवी, T1 G5 °वी नष्टा, G1 M4 (inf lin) °वी दृष्टा, G3 °वी हृष्टा, G4 °वी नद्धा, only K1 as in text! — $^{d}$) T G1. 2 4 5 M1 (inf lin) वधे (for वधम्). K3 B Dn1 Ds D2 4 6–10 मा गमत्त्व(D10 °स्त्व)त्कृते वधं, G3 त्वत्पाडववधे कृते Cd cites त्वत्कृते पाण्डवकृते

50 K5 om. 50 (cf v.l 47) — $^{b}$) K4 S °कृपा (T2 G2–5 °कृपान्) परान् — $^{c}$) D2–4 9 S (except T1 G2. 4) योत्स्यति T2 G2 5 M निज° (for सर्व°) — $^{d}$) G2 त्वयि (for अद्य)

51 $^{b}$) K3 B1. 2 3 Dn1 Ds D2 8 10 हि (for च) K3 B Dn1 Ds D3 4. 6 8–10 T1 G2–5 C5 विदितात्मना — $^{d}$) G3 4 च (for तु) K5 D7 G3 अपि (for अभि-) B2 3 तथा (for तत) D1 धर्मस्त्वदधिकस्तत

52 Before 52, G1. 4 ins धृतराष्ट्र — $^{d}$) K1 धर्मराजम् (for युधिष्ठिरम्)

53 $^{a}$) D2 °प्रातिश्च (for °संपत्ति) — $^{d}$) D8 4. 9 प्रमाद्य (for °शाम्य)

Colophon missing in Dn2 Ds — *Sub-parvan* K1. 2 4 5 B Dn1 Ds D2 6–8 10 T1 G1. 5 M1. 2 भगवद्यान — *Adhy name* K3 G5 M5 गान्धारीवाक्य, G4 भगवद्वाक्य, M1–4 गान्धारीवचन — *Adhy no* (figures, words or both) D6 19 (=119), D7 T2 G4 M1–3. 5 130, T1 G1. 2 5 131, G3 M4 129 — *S'loka no* K5 34, Dn1 54

## 128

☞ Stanzas 1–49 are missing in Dn2 (cf. v.l. 5 126 22) The MS is mostly ignord up to the end of the lacuna

1 $^{c}$) K5 G3 तत (for पुन) — $^{d}$) D3 4 9 M2 3 4 (inf lin as in text) अनृतात्मना, Ca as in text

2 $^{a}$) T2 G M1–4 सभा(M3 °हा)या (M4 inf lin as in text) K4. 5 D1. 7 G3 M2 निर्गत्य — $^{d}$) K2 D3 राजा, M1 (by corr) राजन् (for राज्ञा) — After 2, T G (except G3) ins

483* दुर्योधन धार्तराष्ट्र कर्ण दुःशासनोऽब्रवीत् ।
नो चेन्यधास्त्वमे राजन्स्तेन कामेन पाण्डवैः ।

C. 5. 4365
B. 5. 130. 2
K. 5. 130. 2

सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ २
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ॥ ३
पुरायमस्मान्गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शांतनवेन च ॥ ४
वयमेव हृषीकेशं निगृह्णीम बलादिव ।
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥ ५
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥ ६
अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च ।
अस्मिन्गृहीते वरदे ऋषभे सर्वसात्वताम् ।
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ॥ ७
तस्माद्वयमिहैवैनं केशवं क्षिप्रकारिणम् ।
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ॥ ८
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ।
इङ्गितज्ञः कविः क्षिप्रमन्वबुध्यत सात्यकिः ॥ ९
तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ।
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् ॥ १०
व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ।
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकर्मणे ॥ ११
स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ।
आचष्ट तमभिप्रायं केशवाय महात्मने ॥ १२
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ।
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव ॥ १३
धर्मादपेतमर्थाच्च कर्म साधुविगर्हितम् ।
मन्दाः कर्तुमिहेच्छन्ति न चावाप्यं कथंचन ॥ १४
पुरा विकुर्वते मूढाः पापात्मानः समागताः ।
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः ॥ १५

---

बद्ध्वैव त्वा प्रदास्यन्ति पाण्डुपुत्राय भारत ।
वैकर्तन त्वा च मां च त्रीनेतान्भरतर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मद्रोणौ पिता च ते । [5]
दुःशासनस्य तद्वाक्यं निशम्य भरतर्षभ ।
दुर्योधनो धार्तराष्ट्रो निःश्वस्य प्रहसन्निव ।
एकान्तमुपसंगम्य मन्त्र पुनरमन्त्रयत् ।

[ Lines 2–5 = (var ) 5 126 22–23 — (L 7) G2 5 निश्वासै (for निःश्वस्य) T2 प्रहृष्टन्निव — (L 8) G2 5 °सन्नेह (for °संगम्य) — After line 8, T G2 5 *repeat* 2cd ! ]

3 b) K5 सौबलस्य महात्मन' — d) D3 दुरात्मनां (for विचेष्टितम्)

4 a) K1 T1 G1 पुरा ह्य(K1 य)स्मान्निगृह्णाति

5 a) K4 5 D2 7 एनं (for एव) — b) K (except K3) D3 4 7 9 M1 निगृह्णीमो K1 2 D1–4 9 बलादित', K5 D7 °न्वित, T1 G1 4 M3–5 °दिह

6 b) K1 2 5 D7 दीन°, M1. 2 हृत° (for हत°)

7 b) D3 4 9 °पा सर्वकर्मसु Ca cites शर्म (as in text) — c) D3 4. 9 दाशार्हे, T G1 2 4 वार्ष्णेये (for वरदे) — d) K4 D1 3 4 9 10 G5 वृषभे, Ca ऋषभे (as in text) — D1 om 7c–9b — f) K3 पाण्डवैः सह सोमकाः

8 D1 om 8 (cf v l 7) — a) K1 2 5 D7 अथ (for इह) S (except T1 G3 4) एक (for एन) — d) K1 D3 परान् (for रिपून्)

9 Before 9, D5 T1 G1 M1 ins वैश° — D1 om. 9ab (cf v l 7) K5 om (hapl ) from प्राय (in 9a) up to °मभि (in 10a) — d) D3 अनु°, M3 4 (*inf lin* as in text) अव° (for अन्व°)

10 K5 om तदर्थमभि- (cf v l 9) — a) K1. 2 D3 T G1 2 M3–5 ह्यभि- (for अभि ) — b) D3 हार्दिकेन K1 2 5 D7 G3 4 समास्थित ; D3 4 9 सहोत्थित'; T G1 5 M सह स्थित.

11 b) K4 D3 उपतिष्ठस्व Some S MSS दंसितः — c) B1 3 S चैव, Ds2 चैव (for चैतत्) — d) K4 D3 कृष्णस्य (for कृष्णाय) B Dn1 D3 D2 6 G4 °कारिणे, K4 D3 °कर्मण'

13 ab) D3 4 9 चाभ्यभाषत, S (for G3 see below) चात्मभाविनं (M1 2 °वितं, M3–5 °पित) Dn1 धृतराष्ट्रं च गांगेयमाचार्यं विदुरं तथा, G3 अथापि धृतराष्ट्र च भीष्म चैवाभ्यभाषत — c) T1 G4 एषाम् K1 2 5 D7 एतद्, K4 D3 एवम् (for एतम्) G5 एतेषां तमभिप्राय

14 a) B2 4 5 Dn1 Ds D3 4 6 9 10 धर्मादर्थाच्च कामाच्च — b) B3 5 कर्मणा सुवि°. — d) T1 G1 4 5 न च वाच्य, T2 G2 न च वाक्य, Ca d न चावाप्य (as in text) K5 D7 हि (for च) S कदा° (for कथ°)

15 b) T1 G3 5 सभागता' — c) D1 कर्पिता'; G1 दर्पिता (for धर्षिता')

16 a) T2 G2 5 पुरुषव्याघ्र (for पुण्ड°) — b) K4 °मेधस्य (for °चेतस') — c) K2 4 पादेन, Ds G3 पदेन;

इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ॥ १६
सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ।
धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि ॥ १७
राजन्परीतकालास्ते पुत्राः सर्वे परंतप ।
अयशस्यमशक्यं च कर्म कर्तुं समुद्यताः ॥ १८
इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च ।
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् ॥ १९
इमं पुरुषशार्दूलमप्रधृष्यं दुरासदम् ।
आसाद्य न भविष्यन्ति पतंगा इव पावकम् ॥ २०
अयमिच्छन्हि तान्सर्वान्यतमानाञ्जनार्दनः ।
सिंहो मृगानिव क्रुद्धो गमयेद्यमसादनम् ॥ २१
न त्वयं निन्दितं कर्म कुर्यात्कृष्णः कथंचन ।
न च धर्मादपक्रामेदच्युतः पुरुषोत्तमः ॥ २२
विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः ॥ २३
राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ।
एते वा मामहं वैनाननुजानीहि पार्थिव ॥ २४
एतान्हि सर्वान्संरब्धान्नियन्तुमहमुत्सहे ।
न त्वहं निन्दितं कर्म कुर्यां पापं कथंचन ॥ २५
पाण्डवार्थे हि लुभ्यन्तः स्वार्थाद्धास्यन्ति ते सुताः ।
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः ॥ २६
अद्यैव ह्यहमेतांश्च ये चैताननु भारत ।
निगृह्य राजन्पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् ॥ २७ C. 5. 4371 B. 5. 130. 23 K. 5. 130. 33

---

T $G_{1.4}$ वने च, $G_{2.5}$ वनेन (for पटेन) — [d]) $G_4$ $M_3$ (inf. lin.) जना (for जडा)

17 Before 17, $K_{1.2}$ T $G_{1.4}$ $M_1$ ins. वैश° — [a]) S तु (T $G_{1.2.5}$ च) (for तद्) — [c]) K $B_5$ $D_{2-4.7.8}$ $G_1$ °राजम् (for °बाहुम्) — After 17, T G ins. a passage of 16 lines given in App. I (No. 7).

18 [b]) $B_{1.2.5}$ महौजस (for परंतप) — $B_5$ is missing from 18[c] up to 49[d] — [c]) = (var.) 35[a] $K_4$ B $D_{n1}$ $D_5$ $D_{8.9.10}$ $G_4$ $M_2$ अशक्य(K4 अस्वर्ग्यं; G4 यशस्य)मयशस्य च (by transp.) — [d]) $K_5$ B ($B_5$ missing) $D_{n1}$ $D_5$ $D_{1.6-8.10}$ कर्तुं कर्म (by transp.)

19 $B_5$ missing (cf. v.l. 18) — [a]) $K_2$ च इमं (for इमं हि) — $D_8$ om. 19[c]–22[b] — [c]) $K_5$ $D_7$ गृहीतुं ते (for निग्रहीतुं) — [d]) $K_5$ सहितं, $T_1$ $G_{1.4.5}$ सहसा (for सहिता).

20 $B_5$ missing (cf. v.l. 18) $D_8$ om. 20 (cf. v.l. 19) — [b]) = 36[b] — [c]) $M_1$ विनशिष्यति (for न भवि°) — After 20, T G ins.:

484* एते न शक्ताः सर्वे हि साहसात्कर्तुमुद्यताः ।

[ $G_2$ अपि (for हि), and सहिताः सर्वे (for साहसात्कर्तुं) ]

21 $B_5$ missing (cf. v.l. 18) $D_8$ om. 21 (cf. v.l. 19) — [b]) $K_{2.4}$ $B_{1.2.4}$ $D_{n1}$ $D_5$ $D_{1.2.4.6-9.10}$ $G_{4.5}$ युध्यमानान्, $K_5$ जितमानान्, $B_2$ युद्धकामान्, $D_2$ मनुष्यागा (for यतमानान्) — [c]) $K_3$ $B_{1.2.4}$ D (except $D_7$, $D_8$ om., $D_{n2}$ missing) $T_2$ $G_{1.2}$ नागान् (for मृगान्) $K_1$ क्षुद्रान् (for क्रुद्धो)

22 $B_5$ missing (cf. v.l. 18) $D_8$ om. 22[ab] (cf. v.l. 19) — [ab]) Cf. 25[cd] $G_4$ स (for न). $B_{2.4}$ $D_{n1}$ $D_5$ $D_{5.10}$ पापं (for कृष्ण°) $T_2$ $G_{2.5}$ M (except $M_2$) कदा° (for कथ°) — $T_1$ om. (hapl.) 22[c]–25[d]

24 $B_5$ missing (cf. v.l. 18) $T_1$ om. 24 (cf. v.l. 22) — Before 24, $T_2$ G (except $G_5$) ins. श्रीभगवान् — [b]) $D_{1.6}$ भजसा (for ओज°) $K_5$ मा गृह्णीयुरयोजसा — [c]) $K_{2.3.5}$ $D_7$ चैतान्, $D_8$ चैनान् (for वैनान्) $D_{3.4.9}$ एतानह निगृह्णीया, $G_3$ एते मामहमेवैतान्

25 $B_5$ missing (cf. v.l. 18) $T_1$ om. 25 (cf. v.l. 22) — [a]) $D_{3.4.9}$ सरयान्, $G_{1.4}$ समरे (for संरब्धान्) $K_5$ $D_7$ $T_2$ $G_{2.3}$ $M_{1.2.4}$ एतान्सर्वान् सुसंरब्धान् ($G_3$ समारंभात्) — [b]) $D_{3.4.9}$ S (except $G_1$, $T_1$ om.) निहन्तुम् — [cd]) Cf. 22[ab]

26 $B_5$ missing (cf. v.l. 18) — [a]) $D_{3.4}$ पांडवार्थं $D_1$ लभ्यते, $D_2$ लब्धाश्च, $T_2$ $G_{2.3}$ लुभ्यते, $G_5$ लभ्यता (for लुभ्यन्त°) $K_4$ पाडवार्थं विलुपत — [b]) $K_{3.5}$ B ($B_5$ missing) $D_5$ $D_{1.6-10}$ $G_3$ $M_{3.5}$ स्वार्थान्. $K_4$ $D_{3.4}$ S भ्रश्यति, $D_2$ नश्यति (for हास्यन्ति) — After 26[c], $G_3$ ins.:

485* सामात्याः सह बन्धुभिः ।
अद्यैव कृतकृत्यस्तु

— [d]) $G_3$ धर्मराजो (for कृतकार्यो)

27 $B_5$ missing (cf. v.l. 18) — [a]) T $G_{2.4.5}$ M चाहम्, $G_3$ राजन् (for ह्यहम्) $K_{3.4}$ B ($B_5$ missing) $D_{n1}$ $D_5$ $D_{1.6.8}$ एनांश्च $K_5$ $D_7$ अद्यैवाह समेत($D_7$ °ता)श्च — [b]) $K_{1-3}$ B ($B_5$ missing) $D_5$ $D_{1.6}$ $T_1$ $G_{1.2.5}$ चैनान्, $D_{n1}$ वै तान्, $T_2$ चैनान् (for चैतान्) — After

C. 5. 4391
B. 5. 130. 28
K. 5. 130. 42

इदं तु न प्रवर्तेयं निन्दितं कर्म भारत ।
संनिधौ ते महाराज क्रोधजं पापबुद्धिजम् ॥ २८
एष दुर्योधनो राजन्यथेच्छति तथास्तु तत् ।
अहं तु सर्वान्समयाननुजानामि भारत ॥ २९
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ॥ ३०
सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ।
शक्नुयां यदि पन्थानमवतारयितुं पुनः ॥ ३१
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम् ।
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ३२
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्यां च राजभिश्चाभिसंवृतम् ॥ ३३

नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि ॥ ३४
अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम् ।
यथा त्वादृशको मूढो व्यवस्येत्कुलपांसनः ॥ ३५
त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ।
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि ॥ ३६
यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः ।
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ॥ ३७
देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तं न बुध्यसि केशवम् ॥ ३८
दुर्ग्रहः पाणिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात् ॥ ३९

---

$27^{ab}$, T G ins.:

486* निगृह्य राज्ये राजानं स्थापयिष्यामि पाण्डवम् ।
एष मे निश्चयो राजन्यद्येषोऽस्य विनिश्चयः ।
नर्दन्तु सहिताः शङ्खाः पणवानकनिस्वनैः ।
अनायासेन पार्थानां वर्तता च शिव महत् ।

— B8 om. $27^{cd}$. — c) K1 2 5 D7 सर्वान्, D8 4 9 T2 G2 राज्य (for राजन्). — d) T G चेत्, M यत् (for किं). D8 4 8 9 दुष्कर, T G (except G2) सुकृतं (T2 दुष्कृत also as in text).

28 B5 missing (cf. v.l. 18). — ab) K5 प्रवृत्तं यत्, D2 प्रवर्तेत (for प्रवर्तेय). S इद तु निदित कर्म न प्रवर्तेत भारत. — d) S पापचेतसां (G4 वचन मम).

29 B5 missing (cf. v.l. 18). — a) G3 M3–5 राजा (for राजन्). — c) D3 4 9 च (for तु). K1 2 सर्व- (for सर्वान्). K3 4 B (B5 missing) D (except D7, Dn2 missing) तनयान्, M4 5 समयात् (M4 inf. lin. समयान् as in text). — d) D3 ननु, D9 उत (for अनु-). B (B5 missing) Dn1 Ds D3 4 6. 8–10 ते नृप (for भारत).

31 B5 missing (cf. v.l. 18). — b) K1 2 D7 ससौदर्यं. D7 सहानुज.

32 B5 missing (cf. v.l. 18). — c) K5 D7 मन्त्रिभि साधं, B1 2 4 सह कर्णेन (for भ्रातृभि. सार्धं).

33 B5 missing (cf. v.l. 18). — d) K5 B (B5 missing) D3 4 7 9 T2 G2 3 M4 चापि सवृत; Dn1 सह संवृत, D10 (m. as in text) परिवारित (for चाभिसं°).

34 B5 missing (cf. v.l. 18). — a) B1 3 D3 °भूयिष्ठ. K3 नृशसः पापभूयिष्ट, T G (except G1) नृशसमापद्भूयिष्ट (G4 °ष्ट), M4 5 नृशम्यं पापभूयिष्ट. — b) K5 °कर्णे°, T2 G2 °सहानुज. — c) = $36^{c}$. D7 G5 संगत्य; T G1 2 4 सामात्यै, G3 M सामात्य (for संहत्य). — d) K1 Ds2 D10 T2 G2 4 M5 पापकर्म.

35 B5 missing (cf. v.l. 18). — a) = (var.) $18^{c}$. K4 अस्वर्ग्यम् (for अशक्यम्). — c) K4 यथैव त्वादृशो मूढो, G4 यथा त्वमीदृशो मूढो. Ca. cites त्वादृशक. — d) K1 2 कुलपांसन, T G (except G3) कर्म गर्हित; Ca. as in text.

36 B5 missing (cf. v.l. 18). — a) M4 तम् (for त्वम्). K4 सुरेश चैव वै कृष्ण. — b) = $20^{b}$. — c) = $34^{c}$. G5 संगत्य (for संहत्य). — d) D3 D7 किम्, D8. 4 यथा (for किल).

37 B5 missing (cf. v.l. 18). — a) K2 (sup. lin. sec. m.) वशे कर्तुं, K5 D3 4 7 9 T1 G1. 4 बलाद्धर्तुं. — b) G4 सहामरै (for सवासवैः). — c) Dn1 D3 G3. 4 M4 तत् (for त). K2 T2 G2 5 मूढ (for मन्द).

38 B5 missing (cf. v.l. 18). — b) G3 M1–4 उरगैरसुरै. (by transp.). G4. 5 स° (for य.). M5 उरगैर-सुरेश्वरैः.

39 B5 missing (cf. v.l. 18). — a) K3 अग्राह्य, K4 B (B5 missing) D (except D7, Dn2 missing) G1 4 दुर्ग्राह्य (for दुर्ग्रह°). K4 मुष्टि° (for पाणि°). — b) D2 10 दुर्ग्राह्य (for दु.स्पर्श°). K1 शिखी (for शशी). — d) K3 4 B (B5 missing) D (except D7, Dn2 missing) T2 G1 2 4 दुर्ग्राह्य (for दुर्ग्रह°). G5 बली (for बलात्).

40 B5 missing (cf. v.l. 18). — b) D10 तदानीं

इत्युक्ते धृतराष्ट्रेण क्षत्तापि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ ४०
सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ।
शिलावर्षेण महता छादयामास केशवम् ॥ ४१
ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम् ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ४२
निर्मोचने षट्सहस्राः पाशैर्बद्धा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ॥ ४३
प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ४४

अनेन हि हता बाल्ये पूतना शिशुना तथा ।
गोवर्धनो धारितश्च गवार्थे भरतर्षभ ॥ ४५
अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः ।
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ॥ ४६
जरासंधश्च वक्रश्च शिशुपालश्च वीर्यवान् ।
बाणश्च निहतः संख्ये राजानश्च निषूदिताः ॥ ४७
वरुणो निर्जितो राजा पावकश्चामितौजसा ।
पारिजातं च हरता जितः साक्षाच्छचीपतिः ॥ ४८
एकार्णवे शयानेन हतौ तौ मधुकैटभौ ।
जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः ॥ ४९

C. 5. 44
B. 5. 130.
K. 5. 130.

---

(for क्षत्तापि) T1 G1.4 वै, T2 G2.5 च (for [अ]पि) — $^{c}$) = 5 123 $18^{c}$, 126 $28^{c}$

41 B5 missing (cf. v l 18) Before 41, K (except K3) D1.2.4.7–10 T2 ins विदुर उ° (resp विदुर), which in K1 D1.3.4.8.9 is followed by

487* दुर्योधन निबोधेद वचन मम साम्प्रतम् ।

— $^{a}$) K1 वने प्रेक्ष्य, K2 वने ऍन्द्रो, T2 G2.3 M दानवेन्द्रो (for वानरेन्द्रो) — $^{b}$) D1 द्विविधो, M विविदो K3 वानर°, D10 वीर्यवान् (for नामत°)

42 B5 missing (cf v l 18) — G3 om $42^{bc}$. — $^{b}$) G5 स यत्नेन महाबल — $42^{cd}$ = $44^{cd}$ (cf $43^{cd}$) — $^{c}$) K3 B2 Dn1 Ds2 D3.4.6 S (except G5, G3 om) °चैन (for तत्र) — $^{d}$) = $43^{d}$, $44^{d}$ Dn1 M5 तत् (for त)

43 B (B5 missing) om. 43 (cf v l 18), K5 D1.2 G2.3 om 43–44 Dn1 transp 43 and 44 — $^{a}$) T1 G1 पट्सहस्र T2 निर्मोचनं पट्सहस्रं — $^{b}$) K1.2 बद्ध, K3 D7.8 T2 G1.4 M1 बद्धा, K4 Dn1 Ds D3.4.6.9.10 बद्धु, M3 बद्धां (for बद्धा) — $^{c}$) Dn1 D6.8 T2 नाशकं चैनं, T1 G1.4 नाशकत्तत्र — $^{d}$) = $42^{d}$, $44^{d}$ D9 G4 तत् (for त)

44 B5 missing (cf v l 18) K5 D1.2.9 G2.3 om 44. — $44^{cd}$ = $42^{cd}$ (cf $43^{cd}$) — After 44, D8 ins

488* अनेकयुगवर्षायुर्निहत्य नरक मृधे ।
नीत्वा कन्यासहस्राणि उपयेमे यथाविधि ।

(a stanza absorbed by many of the earlier printed ed, such as the Bombay edition, Kumbhakonam, Chitrashala etc !)

45 B5 missing (cf v l. 18) — $^{a}$) K5 हिंसिता, D2–4.9 S (except G3) निहता (for हि हता) S तात (G3 तत्र) (for बाल्ये) — $^{b}$) K3.4 B (B5 missing) Dn1 Ds D1–4.6.9 शकुनी (B3 D3.4.9 °निस्) तथा; K5 शकलीकृता, D10 बालघातिनी, G3 शिशुघातिनी, G1 निस्वना तदा (for शिशुना तथा) — $^{c}$) S °नो धृतश्चैव — M4 om (hapl.) $45^{d}$–$46^{a}$ — $^{d}$) S (M4 om) गवामर्थे नराधिप (T G1.2.4 °न भारत)

46 B5 missing (cf v.l. 18) M4 om. $46^{a}$ (cf. v l 45), K5 om $46^{b}$–$47^{a}$ — $^{b}$) D8 S महात्मना — $^{d}$) D2 केशी (for कंस°) K1–3 D7.8.10 T2 G2 अनिष्टम् (for अरिष्टम्)

47 B5 missing (cf v.l. 18) K5 om $47^{a}$ (cf v l 46) — $^{a}$) K1 Ds D10 वभ्रु°, K2.3 B (B5 missing) Dn1 D1.3.4.6.8.9 T1 G4 M1 वक्त्र° (for वक्र°) D7 जरासंधो वक्रश्चैव, G5 M1 (inf lin) °संधो दंतवक्र° — $^{b}$) S भारत (for वीर्यवान्) — $^{c}$) K1 अनेन (for बाणश्च) Ca cites बाण° (as in text) — $^{d}$) A few MSS निसूदिता°

48 B5 missing (cf v l 18) — $^{a}$) K (except K3) B1.3 D2–4.8.9 G2 राजन् (for राजा) — $^{b}$) G3 पावकोमिततेजसा — $^{c}$) K5 °जातश्च हरितो, Ds D10 °जातश्च (D10 °जातस्य) हरणे

49 B5 missing (cf v l 18) — $^{a}$) K3 D1–4.9 च शयता, K4.5 हि शयने, B (B5 missing) Dn1 D6.8.10 च स्वपता (for शयानेन) Ds एकार्णवेषु पत(Ds2 °ति)ता Ca cites स्वपता — $^{b}$) K4.5 B (B5 missing) D (except D9, Dn2 missing) निहतौ, T2 G2.5 जितौ तौ (for हतौ तौ) — After $49^{ab}$, D8 ins

489* जन्मान्तरमुपागम्य हतवान्वालिन तथा ।
अन्ये च भ्रातरस्तस्य कुम्भकर्णादयो मृधे ।
विभीषण तु संस्थाप्य सीता चादाय मैथिलीम् ।

B. 5. 130. 51 K. 5. 130. 65 अयं कर्ता न क्रियते कारणं चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः ॥ ५०
तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम् ।
आशीविषमिव क्रुद्धं तेजोराशिमनिर्जितम् ॥ ५१
प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम् ।
पतंगोऽग्निमिवासाद्य सामात्यो न भविष्यसि ॥ ५२

इति श्रीमहाभारते उद्योगपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

## १२९

वैशंपायन उवाच ।
विदुरेणैवमुक्ते तु केशवः शत्रुपूगहा ।
दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् ॥ १
एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन ।
परिभूय च दुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ २
इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः ।
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ॥ ३
एवमुक्त्वा जहासोच्चैः केशवः परवीरहा ।
तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः ।
अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्चिषः ॥ ४
तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ।
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ॥ ५

---

पालयामास विधिवद्राज्यं निहतकण्टकम् ।

50 B6 Dn2 resume! — a) D5 स्वयं (for अयं) — d) K8 अतन्द्रित (for अयत्नत)

51 a) K1 बुध्यसे तेन गो°; K2 6 D1 बुध्यसे तं न गो° — d) K4 B Dn Ds D2 4 6 8-10 अनिंदित (for अनिर्जितम्)

52 a) K1 2 प्रधयन्; T2 त्रिलोकेश; G2 अमृष्यं (for प्रधर्षयन्) K4 महात्मान — After 52, D10 (in marg.) ins.

490* ततोऽनादृत्य वाक्यानि दुःशासनपुरोगमाः ।
नियन्तुमनसो दुष्टाः कृष्णं मत्वा सुयोधनम् ।
यवन्तु पाशजालेन देवमायाविमोहिताः ।
आक्रोशन्त च राजानं प्रतिमुच्य सविस्मयाः ।
कथमासीदिदमिति तदद्भुतमिवाभवत् ।
इत्यधिकं क्वचित्पुस्तके दृष्टं तदसंबद्धं प्रतीयते ।

Colophon missing in D6 — *Sub-parvan* K B Dn Ds D2 6-8 10 T1 G1 2 4 6 M1-4 भगवद्यान — *Adhy. name*: T1 G1 2 4 M दुर्योधनभर्त्सनं, G6 सुयोधनदुर्मन्त्रित — *Adhy. no.* (figures, words or both) D8 20 (=120), D7 T2 G1 M1-3 6 131, T1 G1 2 5 132, G3 M4 130 — *S'loka no.* K6 49, Dn 51

129

1 a) K B3 6 Dn Ds2 D2 5 6 8 M1 3 4 उक्त: (for उक्ते) — b) K1 2 6 D7 T G (except G4) परवीरहा, Dn1 शत्रुभगहा, D3 4 0 शत्रुसूदन, M3-5) प(M6 च)रपूगहा, Ca as in text — d) K4 भारत (for वीर्यवान्) — After 1, D3 ins.

491* यदा यदा पश्यसि वानरध्वजं
धनुर्धरं पाण्डवमध्यमं रणे ।
गदामदग्नं भ्रमतं वृकोदरं
तदा तदा दास्यसि सर्वमेदिनीम् ॥

2 Before 2, T2 G2 ins. श्रीभगवान् — a) D1 3 G1 M (M4 sup. lin. as in text) अयम् (for अहम्) — c) K8 4 B (except B2) Dn D4 D2 4 6 8 10 सु- (for च)

3 b) K6 D7 तथा च; D2 इहैव, D10 तथेह (for तथैव) — d) K8 Dn D2 8 10 T1 G1 6 M सहर्षिभि, D3 4 9 महर्षय

4 Before 4, K1 2 D8 ins. वैश° उ° — c) K1 2 च; K5 चै; K6 B2 Ds2 D7 10 स (for तं) — d) D4 4 0 महाबला, D8 शरीरजा, M महार्चिष (for महात्मन) — After 4cd, D3 4 8 9 S ins.

492* युगपच्च विनिष्पेतु सहिताः सर्वदेवताः ।
[ T1 G1 3 6 M3-5 सह सर्वा स्म (G2 च, M3 4 न; M5 तु) देवता, T2 G2 सह सर्वश्च दैवतैः, G1 साक्षात्सर्वाश्च देवता, M1 2 सहसा सर्वदेवता (for the posterior half) ]

— c) K6 °रूपा (for °मात्रा) K4 पुरषा (for त्रिदशा)

5 a) K6 4 B Dn Ds D6 अस्य (for तस्य) — b) G1 चक्षुषि (for वक्षसि) D6 8 भारत (for चाभवत्). — c) D5 भुजे आसन् — d) D3 4 0 आस्यादग्निरजायत — After 5, D3 4 8 9 ins.

493* उग्रायुधधरा सर्वे दिव्येन वपुषान्विता ।

6 a) Dn1 T2 वसवो (for साध्याश्च). — b) = 1. 1

आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ।
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च ।
बभूवुश्चैव रूपाणि यक्षगन्धर्वरक्षसाम् ॥ ६
प्रादुरास्तां तथा दोर्भ्यां संकर्षणधनंजयौ ।
दक्षिणेऽथार्जुनो धन्वी हली रामश्च सव्यतः ॥ ७
भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः ।
अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ॥ ८
अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः ।
शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ॥ ९
अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ।
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः ॥ १०
नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्यां च समन्ततः ।
प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः ।
रोमकूपेषु च तथा सूर्यस्येव मरीचयः ॥ ११
तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ।
न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ॥ १२
ऋते द्रोणं च भीष्मं च विदुरं च महामतिम् ।
संजयं च महाभागमृषींश्चैव तपोधनान् ।
प्रादात्तेषां स भगवान्दिव्यं चक्षुर्जनार्दनः ॥ १३
तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले ।

C. 5. 4433
B. 5. 131. 16
K. 5. 131. 25

---

32$^{d}$ K5 च, D10 अष्ट (for अथ) Dn1 मर्वाद्यायश्वि नावपि, T2 साध्याश्च वसवोश्विना — $^{e}$) B3 D5 T2 G2 M2 महेन्द्रेण (for स°) — $^{d}$) D10 विश्वेदेवगणास्तथा — $^{e}$) B1 3 4 Dn D6 8 9 T2 G1 2 . रूप (for एव) T G1 2 यक्षाश्च (for रूपाणि) G3 बभूवुर्दानवाश्चैव — G3 om (hapl) 6$^{f}$–8$^{a}$ — $^{f}$) K (except K4) D1 7 9 देव (for यक्ष) T G1 2 4 गन्धर्वोरगराक्षसाः

7 G3 om 7 (cf v l 6) — $^{a}$) K3 प्रादुरासन् K3 D3 4 T G1 2 5 M1 2 ततो, D1 महा (for तथा) — $^{c}$) K1 2 . D1. 7 दक्षिणे चा°, D2–4 S (G3 om) दक्षिणेना° — $^{d}$) K. D7 वामत, D1 गंगं°, T1 G5 सर्व° (for सव्य°)

8 G3 om 8$^{a}$ (cf v l 6) — $^{d}$) K (except K1) D3 5 7 9 T G1 2 5 तथा (K2 *sup lin sec m* as in text), D2 स्त्रियः (for तत)

9 $^{a}$) K (except K4) आविर्; D5 8 9 अग्रे, G4 सृदुर् (for अग्रे) D1 2 S (for G4 see above) अचिन्त्य भूतन् ईगस्य — K. om (hapl) 9$^{b}$–10$^{c}$ — $^{b}$) D5 °वरा° (for °महा°) — $^{cd}$) B2 transp शक्ति and शार्ङ्ग

10 K5 om 10$^{abc}$ (cf v l 9) — $^{c}$) S दृश्यते (for कृष्णस्य)

11 $^{a}$) K1 चैव नमश्च, D3 4 9 S (except M2) नासिकाभ्या च (M3–. नासतश्चैव) (for नस्ततश्चैव) Ca cites नमन — $^{c}$) D7 सर्वेषु, G3 4 च तदा (for च तथा) — After 11, D5 ins

494* सहस्रचरण श्रीमान्शतबाहु सहस्रदृक् ।
तस्मिन नागलोकश्च गुह्यको दृदृशे तदा ।
चन्द्रसूर्यौ तथा नेत्रे ग्रहा वै सर्वत स्थिता ।
ऊर्ध्वलोकाश्च मंगेऽपि कुक्षौ तस्य व्यवस्थिता ।
सरित सागराश्चैव स्वेदस्तस्य महात्मन ।          [5]

अस्थीनि पर्वता सर्व वृक्षा रोमाणि तस्य हि ।
निमेषण रात्र्यहनि जिह्वाया शारदा तथा ।

12 $^{a}$) Dn1 S ते दृष्ट्वा S परमात्मान — $^{d}$) K5 D1 दुस्तचेतस, T1 G1 हततेजस, G3 त्रस्ततेजस, G4. 5 हतचेतस

13 $^{a}$) K5 transp द्रोण and भीष्म — $^{c}$) T G (except G3) सजय धृतराष्ट्र च — $^{d}$) K3 तपोन्वितान्, B1 2 4 °रतान् (for °धनान्) D5 S ऋषींस्ताश्च समागतान् — $^{e}$) D1 9 T2 G2 च (for स) — After 13, D5 ins a passage given in App I (No 8) — T G M1. 2 ins after 13 (G3 2 *repeating* the lines after 496*) Dn D3 4 8 9 M3–5 ins after 496*

495* तत्राद्भुतमभूद्राजन्धृतराष्ट्र स्वचक्षुषी ।
लब्धवान्वासुदेवस्य विश्वरूपदिदृक्षया ।
लब्धचक्षुषमासीन धृतराष्ट्र नराधिपा ।
विस्मिता ऋषिभि साधं तुष्टुवुर्मधुसूदनम् ।

[(L 1) T1 G1 4 5 आश्चर्यम् (for अद्भुतम्) Dn D3 4 8 9 महाराज (for अभूद्राजन्) Dn D8 T2 °राष्ट्रश्च, D3 4 9 °राष्ट्रस्तु, T2 G2 5 M3–. °राष्ट्रस्य (for °राष्ट्र स) — (L 2) Dn1 D3 4 8 9 वासुदेवाच — (L 3) D8 4 9 ईशान (for आसीन) D3 4 8 9 G3 जना° (for नरा°) — After line 4, T2 G2 *repeat* 14$^{cd}$ ! ]

14 T1 G1 4 5 om 14$^{ab}$ — $^{a}$) K1 5 Dn1 Ds2 D1 6–8 G2 M1 4 (*inf lin*) त (for तद्) — $^{b}$) T2 G2 केशवस्य (for माध°) — $^{d}$) T2 G1 2 पुष्पवृष्टिं B2 बभूव ह K6 Ds2 D1 T2 G1 2 4 ह (for च) G3 पुष्प वृष्टिश्च साच्युता — After 14, Dn D8 4. 8 9 S ins

496* त्वमेव पुण्डरीकाक्ष सर्वस्य जगत प्रभु ।
तस्मान्मे यादवश्रेष्ठ प्रसाद कर्तुमर्हसि ।
भगवन्मम नेत्राणामन्तर्धानं वृणे पुन ।
भवन्त दृष्टवानस्मि नान्य द्रष्टुमिहोत्सहे ।

C. 5. 4433 B. 5. 131. 15 K. 5. 131. 25 देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ १४
चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे ।
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ ॥ १५
ततः स पुरुषव्याघ्रः संजहार वपुः स्वकम् ।
तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिंदमः ॥ १६
ततः सात्यकिमादाय पाणौ हार्दिक्यमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ १७
ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः ।
तस्मिन्कोलाहले वृत्ते तदद्भुतमभूत्तदा ॥ १८
तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ १९
अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् ।
निश्चक्राम ततः शौरिः सधूम इव पावकः ॥ २०
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हेमजालविचित्रेण लघुना मेघनादिना ॥ २१
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
सैन्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ २२
तथैव रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां संमतो वीरो हार्दिक्यः प्रत्यदृश्यत ॥ २३
उपस्थितरथं शौरिं प्रयास्यन्तमरिंदमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ २४
यावद्बलं मे पुत्रेषु पश्यस्येतज्जनार्दन ।
प्रत्यक्षं ते न ते किंचित्परोक्षं शत्रुकर्शन ॥ २५
कुरूणां शममिच्छन्तं यतमानं च केशव ।
विदित्वैतामवस्थां मे नातिशङ्कितुमर्हसि ॥ २६
न मे पापोऽस्त्यभिप्रायः पाण्डवान्प्रति केशव ।

---

वैशंपायन उवाच ।
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः । [5]
अदृश्यमाने नेत्रे द्वे भवेतां कुरुनन्दन ।

[ (L 1) Dn D3 4 8 0 हित (for प्रभु) — (L 2) Dn D0 त्व, D3 4 8 च (for मे) T1 G1 4 सर्वलोकेश्वर प्रभो (for the posterior half) — (L 3) T1 G4 5 नेत्राभ्यां — (L 4) Dn द्रष्टुमिच्छामि (for दृष्टवानसि), obviously one of Nīlakaṇṭha's own emendations ! — (L 5) T1 G1 4 5 जनेश्वर, G3 जनाधिप (for जनार्दन.) ]

Thereafter, G3 5 *repeat* and Dn D3 4 8.0 M3-5 ins 495*

15 $^a$) D3 4 0 सर्वा (for कृत्स्ना) — $^b$) S (except G5) चैव (for चापि) K D7 8 सागराश्चापि चुक्षुभुः — $^c$) D3 4 0 प्राप्ता (for जग्मु) — After 15, T1 ins

497* दुर्योधनोऽथ दुर्बुद्धिः कर्णाद्यैर्दुर्जनैः सह ।
माधवस्य वपुर्दृष्ट्वा बभूव त्रस्तचेतनः ।

16 $^b$) Ds2 स्वयं (for स्वकम्) S गजहार पुनः (M2 5 वपुः) स्व(G4 त्व)यं — $^{cd}$) T2 G2 transp दिव्याम् and चित्राम्, and read °युक्ताम् (for °मत्ताम्) K5 D2-4 8 0 G4 अरिंदम — After 16, T2 ins

498* सर्वलोकेश्वरः शौरिः सर्वदेवाभिवन्दितः ।

17 $^b$) S (except M3-5) विदुरम् (for हार्दिक्यम्) — $^c$) D3 4 0 G4 चाप्यनु°, T G1-3 5 M त्वभ्यनु° (for तैरनु°) — $^d$) K5 D7 निर्गतो मधु°, T2 G2 प्रतस्थे यदुनंदन

18 $^d$) B2 4 Dn Ds D6 8 10 T2 G2 तदद्भुतमिवाभवत्

(= 1 1 77, 201 9 4 52 15, 53. 29, etc.)

19 $^c$) D3 0 °व्याघ्र, M °व्याघ्राः

20 $^d$) T G वि° (for स°)

21 T1 om 21$^{ab}$ — $^{ab}$) = 34$^{ab}$ (of v l 5 92 11)

22 D7 om 22$^{ab}$ — $^a$) K1 2 Dn1 D8 सूपस्कारेण, K5 D2-4 0 सोपस्करेण, D1 अवस्करेण, T1 ततो रथेन, T2 G2 M स्ववस्करेण, Ca as in text G3 ततः सोपस्करेणैव — $^c$) K3 4 B D (except D1 7) शै(B2 सै)व्य° — $^d$) T2 सारथिप्रवदारुकः (in addition to the text reading !)

23 $^c$) G5 सगतो (for °मतो) D3 4.0 देवो (for वीरो) — $^d$) B3 4 Dn D5 D1 6 8 10 सम° (for प्रत्य°).

24 $^c$) K1 महाबाहुः, K2 3 5 Dn1 D1 8-10 G5 M °राज, G3 °तेजा

25 $^b$) K1-4 B3 D2 0 8 G3 पश्यसे तत् (K4 त्व); B5 Dn1 °तस्ते, D1 पश्य मे तव, T1 G1 4 5 °स्तैतत्; T2 °सि त्व, M2 5 °स्तेत — Dn2 om 25$^{cd}$ and *repeats* 22$^{cd}$ in its stead — $^c$) D3 4 0 चैव (for ते न) G1 4 5 मे (for the second ते) D3 4 0 नोक्त (for किंचित्) — $^d$) D3 4.0 दुरुक्त. B1 3 4 D1 3 शत्रुकर्षण, D3 4 0 मधुसूदन, S शत्रुसूदन

$^c$) K5 विदिता ताम्, G4 विद्धि त्वेताम् (for विदित्वैताम्) — $^d$) B D (except D1 7) नाभि° (for नाति°) — After 26, D8 ins

499* निर्गुणैरपि गोविन्द पुत्रैरुपहृतं मम ।
त्रैलोक्यनाथ पादौ ते यदयत्नान्नमस्कृतौ ।

27 $^a$) Ds2 D3 4 0 [ऽ]स्तु, G5 हि (for ऽस्ति)

ज्ञातमेव हि ते वाक्यं यन्मयोक्तः सुयोधनः ॥ २७
जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः ।
शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ २८
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनेश्वरम् ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ॥ २९
प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मन्दो रोषादसकृदुत्थितः ॥ ३०
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतः सर्वान्गमिष्यामि युधिष्ठिरम् ॥ ३१
आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभम् ।
अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ॥ ३२
भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः ।
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ॥ ३३
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
कुरूणां पश्यतां प्रायात्पृथां द्रष्टुं पितृष्वसाम् ॥ ३४

इति श्रीमहाभारते उद्योगपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## १३०

वैशंपायन उवाच ।
प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च ।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ १

वासुदेव उवाच ।
उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् ।
ऋषिभिश्च मया चैव न चासौ तद्गृहीतवान् ॥ २

C. 5. 4460
B. 5. 132. 2
K. 5. 132. 2

— D5 om 27^cd — c) K2 6 B (except B2) Dn1 D10 हित (for हि ते) S कार्यं (for वाक्यं) — d) K1 2 यथा प्रोक्तः (for यन्मयोक्तः) D7 यन्मयोक्त °धने
28 c) K1 2 सर्वे (for शमे) — After 28, D1 ins an addl colophon (विश्वरूपदर्शन)
29 Before 29, all MSS except K3 ins वैशं° उ° (resp वैश°) — a) D5 T1 G1 4 5 M (except M1) °बाहु, Ca °बाहु (as in text) — b) K (except K3) Dn D7 T2 G2 M1 जनार्दनं (for जनेश्वरम्) — c) G3 द्रोण भीष्म महाबाहु — d) D2 4 6 विदुर (for क्षत्तार) K5 D1 2 4 6 G1 नृपं (for कृपम्)
30 c) K1 ना°, K2 Dn1 Ds1 T2 G2 M (M4 *inf lin* as in text) वा°, K6 D7 च° (for चा°) — d) B (except B3) Dn Ds रोषादथ समुत्थित
31 a) T1 G2-5 M1 (*inf lin*) 2 4 (*inf lin* as in text) 6 अनिशम् (for अनीशम्) — c) K5 D7 पार्थिवान् (for भवत°) — d) D6 8 समे° (for गमि°)
32 b) K4 B3 D10 पुरुषर्षभ, D1 पुरुषोत्तम — d) K1-3 D2 7 T1 G (except G2) भरतर्षभ, M1 (*inf lin*) पुरुषर्षभा
33 a) T2 G2 द्रोण कृपोथ क्षत्ता च — b) G1 4 6 च (for [अ]थ) — d) K6 Ds2 D8 महारथा°.
34 34^ab = 21^ab (cf v l 5 92 11) — a) G8 कृष्णो (for ततो) — c) B Dn Ds D6 8 10 द्रष्टु (for प्रायात्) — d) D1 कुन्तीं (for पृथां) K1 2 6 D7 पादौ द्रष्टु पितृष्वसु°, B Dn Ds D6 8 10 स्वसार स्व(B स)पितुर्ययौ

Colophon missing in D5, K5 om it — *Sub-parvan* K1.2 4 B Dn Ds D2 6-8 10 T1 G1 4 5 M भगवद्यान — *Adhy name* K1-4 Dn D7 8 T G1.2 4 5 M विश्वरूपद(G. °प्रद)र्शन (K1 2 4 D7 °न) — *Adhy no* (figures, words or both) D6 21 (=121), D7 T2 G4 M1-3 5 132, T1 G1 2 5 133, G3 130, M4 131 — *S'loka no* Dn 41, Ds 54

### 130

1 K4 om 1 — a) D10 कुल्या° (for तस्या) — d) =5 129 30^b
2 a) D1 2 उक्त तद्दृष्ट्वा चैव — D1 om 2^bc — b) K6 T1 G1 4 5 स्पृहणीय M सहेतुमत् (M1 *inf lin* as in text) K4 हित चैव यथार्थवत्, D2 हित वचनमर्थवत् — c) B1 2 4 Dn Ds D8 10 ऋषिभिश्चैव च मया, D2 °श्च महाभागैः
3 a) Cf 5 126 31^a T G मन्ये (T2 G2 इह)

C. 5. 4461
B. 5. 132. 3
K. 5. 132. 3

कालपक्कमिदं सर्वं दुर्योधनवशानुगम् ।
आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति ॥ ३
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया ।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ४

कुन्त्युवाच ।

ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ५
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ६
अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा ।
उरस्तः क्षत्रियः सृष्टो बाहुवीर्योपजीविता ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥ ७
शृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया ।
मुचुकुन्दस्य राजर्षेरददात्पृथिवीमिमाम् ।
पुरा वैश्रवणः प्रीतो न चासौ तां गृहीतवान् ॥ ८
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ।
ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ॥ ९
मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुंधराम् ।
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः ॥ १०
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भारत विन्दति ॥ ११
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ १२
दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥ १३
दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ १४
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।

---

(for मवं) — $^{b}$) K4 6 B D T2 G1 2 सुयोधन°. — After 3$^{ab}$, D3 4 8 9 S ins

500* मवं क्षत्रं क्षणेनैव दह्यते पार्थवह्निना ।

[ D3 4 8 9 ण्केन तु, M2 4 सर्वक्षत्र (for सर्वं क्षत्र) M4 (*inf lin*) रणे देवि (for क्षणेनैव) ]

— $^{c}$) T G2 5 आपृच्छ्य

4 $^{a}$) K1 2 6 D7 पाडवाम्तत्र — $^{c}$) B (except B6) Dn2 D6 °प्रज्ञे; Ds D2–4 9 10 °भागे (for °प्राज्ञे)

6 $^{a}$) K5 धर्मो (for राजन्) — $^{c}$) K6 अनवाकगृहिता, B3 अर्थवाक्यहता, D7 अनुवाकहिता Ca s cite अनुवाक° — $^{d}$) D1 पश्यते, D7 M4 ईक्षसे K4 M3 4 (*inf lin*) 6 धर्मं वै कथमीक्षसे

7 $^{a}$) T1 G1 4 5 °वेक्ष स्वक धर्मं — $^{b}$) K1 2 वृत्त, K6 B2 D1 6 7 M -सृष्ट, G3 दृष्ट, G4 सृष्टि (for सृष्ट°) — $^{c}$) B1 D8 m बाहुभ्या, D3 4 उरग°, D6 उरसा, S दुष्कर°, Ca उरस्त (as in text) K4 क्षत्रिया सृष्टा, Ds क्षत्रियः सूतो Dn2 D6 8 बाहुभ्यां क्षत्रिया सृष्टा — $^{d}$) = 29$^{d}$. K2 3 T2 G2 °जीवित°, K4 B3 Dn2 D2 6 8 G1 4 °जीविन°, Ds °जीविका, T1 G5 °जीवन° — $^{ef}$) = 5 133 11$^{cd}$

8 $^{d}$) K3 4 B D (except D1 3) G3 M6 अददत्, G4 अदधात — K3 5 D2 om (hapl) 8$^{f}$—9$^{c}$ — $^{f}$) K4 B Dn Ds D1 6 8 G3 तत (for तां)

9 K3. 5 D2 om 9$^{abc}$ (cf v l 8), K4 om 9$^{c}$–11$^{d}$. — $^{d}$) D3 4 9 विस्मय (for विस्मितः) B3 संबभूव ह (for सम°).

10 K4 om 10 (cf v l 9) — $^{b}$) D2 ततोन्वशासद्वसुधां — $^{c}$) K2 B3 Ds2 D1 9 G3 4 °वीर्याजित; M (except M2) °वीर्यजितां — $^{d}$) K (K4 om) B (except B3) D3 4 9 °व्रत (for °व्रत°).

11 K4 om 11 (cf v l 9) — $^{c}$) D10 तुर्यांश (for चतुर्थं) K (K4 om) B3 5 D1–4 7 9 पुण्य° (for धर्म°) — $^{d}$) S माधव (for भारत) K (K4 om) D1–4 7 9 राजा भागमुपा(K3 °मवा)श्नुते, Dn Ds D6 8 10 राजा विंदेत (D10 विंदति) भारत

12 $^{a}$) T2 G3 वै (for चेद्) — $^{d}$) B3 5 T1 G2 कल्पते (for गच्छति)

13 B1 D1 om (hapl) 13, G4 om. 13$^{ab}$ — $^{a}$) K1–3 T1 G6 च, D6 सु- (for स्व-) Cn cites धर्मेभ्य (which is *not* found in any MS!) — $^{b}$) K6 D7 चतुर्वर्णान्, M4 5 चातुर्वर्ण्यान् — $^{c}$) T1 G1 4 5 अयुक्त स्वामिन (for प्रयुक्ता स्वामिना) D2 सद्य (for सम्यक्) — $^{d}$) K4 नियच्छति, B2 प्रय°, Dn2 D6 च ग° (for च य°) K1 धर्मेभ्यश्च प्रयच्छति, K5 धर्मेभ्य स्वयम्°, D3 4 8 9 धर्मेभ्यश्च निय°, D7 10 S अधर्मे(D10 °र्मि)भ्यो (M1 *inf lin* °च्छां) निय°

14 $^{a}$) B3 D1 3 4 9 S (except T1 G5) °नीत्या — $^{b}$) G3 कार्ये तु (for कार्त्स्न्येन) D3 4 9 सम्यक्काय प्रवर्तते — $^{d}$) K1 4 5 Dn D8 9 G3 4 M2. 3 6 कालश्रेष्ठ (K5 °ष्ठ) T1 G1 प्रजायते

17 $^{a}$) B Dn1 Ds D1–4 6–10 T2 G1 2 करणात्,

# १३४

मातोवाच ।

नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ १
दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतिम् ॥ २
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्वेके प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ३
य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव ।
शोचन्तमनुशोचन्ति प्रतीतानिव बान्धवान् ॥ ४
अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ।
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।
मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥ ५
प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।

C. 5. 4523
B. 5. 135. 7
K. 5 136. 7

---

Cs घन (as in text)

36 a) T2 G2 स्यतीतार्थं; Cs स्वस्तितार्थं (as in text) K4 B (B2 damaged) Dn Ds D1 c 8 10 तानि (for तात) — b) K4 B (B2 damaged) Dn Ds D1.c 8 10 G2 6 च, D7 [ए]व, M1 [इ]ह (for [अ]पि) — c) D1 अन्यस्मिन्, D2 अयास्मिन्, S न ह्यस्मिन् (for अप्यस्मिन्) K (K5 missing) B3 Dn3 D1-4 c 9 Cn आश्रयंते (D2 °ति) (for आश्रयन्ते) B1.2 4 स्त (for च) — d) K (K5 missing) B2 2 6 Dn D3 4 c-9 T1 जुगुप्संते G1 तदा सृश (for च तादृशम्) Ca d cite तादृश (as in text)

37 b) T1 अभि; G1.3 अधि; Cs उप (as in text) — c) T1 न न, T2 G1 2 5 M2-5 स न, G3 स न°, M1 2 तत्र (for अत°) K1 2 D9 असंमान्य, Ca d s संमान्य (as in text) — d) S प्राप्नुयान्महत् (G3 °यामहे), Cs as in text

Colophon missing in K5 D5 — *Sub-parvan* K3 B1 2 4 Dn D7 10 T1 G1 4 5 M भगवद्यान (G1 °वद्यतियान), to it K3 adds विदुरोपाख्यान, B1 2 4 Dn D10 विदुलापुत्रानुशासन, and M1 2 विदुरापुत्रसंवाद K1 2 4 B3 5 Ds D1.2 c 8 9 (all om the sub-parvan name) mention only विदुला (K1.2 D1 2 °रा; D9 °र)पुत्रानुशासन — *Adhy name* G2 6 धनप्रशासन — *Adhy no* (figures, words or both) Dc 25 (=125), D7 T2 M1-3 5 136, T1 G2 4 5 137, G1 138, G3 134, M4 135 — *S'loka no* Dn 42, Ds 40

## 134

☞ This adhy is missing in K5 (cf v l 5 131 1) The MS is mostly ignored here

1 M1.2 विदुरा (for माता) — c) K1 (m as in text) G1 M2 जीर्ण, G8 चीर्ण°, Ca d n s दीर्ण° (as in text) — d) D7 न च (for नैव) G8 चीर्ण° (for दीर्ण°)

2 a) G1 दीन (for दीर्णं) D3 4 दृष्ट्वा तु, D7 दृष्ट्वा हि, D9 तु दृष्ट्वा (for हि दृष्ट्वा) — c) G1 M8 5 अमात्यश्च — d) K4 B2 3 5 Dn D3 4 c 8 Cnp मर्ही, B1 मता , B4 Ds D1.2 10 मती° (for मतिम्)

3 a) K1.2 4 D9 शत्रुमेके G3 प्रमृष्यते — b) A few MSS प्रजहति T1 G1.2 4 तथा (for पुन°) — c) K1.2 D7 9 त स्वेके, K3 4 B Dn Ds D2-4 6 8 10 अन्ये तु, D1 G2 अन्ये के (for अन्वेके) D2 प्रजहर्षंति, D7 विजिहीं°, T2 G2 प्रतिभीपति G5 अन्ये केचित्प्रपद्यते — d) Ds असमानिता° B2 पुरस्ताद्वि वि°, D7 पुरस्ताद्याव°

4 a) D7 वै च, D8 चैव (for एव) — b) D7 8 चैन (for एन) — c) S अशक्ता ये D8 4 अशक्ता स्वस्तिकामा ये — d) K8 B Dn Ds D3 4.c 8 (by corr ) 10 Ca इला, T G1 2 6 M1 जळा, G8 जडा, G4 जळी, M2-5 इळा D7 इवानला (for इडा इव) — f) K1 T2 (in addition to text reading) G (except G8) Ca d प्रमि(G2 4 °मी)तान्, K4 B3 5 Dn D6 10 पतितान्, B1.2 4 प्रतीता°, D2 प्रति तान्, D3 4 प्रतीत, Cs प्रतीतान् (as in text) K1 2 4 B1.2 4 D2-4 9 T1 G1.4 5 बाधवा° (for °वान्)

5 a) Ds सर्वा°, D1 सर्व; D3 4 S सर्वे (for पूर्वं) — c) T1 G4 राज्य, Ca d s राष्ट्र (as in text) D1 अभिवर्तंते, D3 4 अनुमन्यते, D7 S अभिपद्यते, Ca s as in text — d) K3 Ds D7 10 एयुष (for ईयुष°) S राज्ञि (T1 °ज्ञे, G5 °ज्य°) व्यसनमीयुषि (T °मीयुषे, G5 M2 6 °मेयुषि) — e) D3 4 दीदरन्, Ca d दीदर° (as in text) K1.2 D9 M1.3 5 स्व (for त्व) D8 च दीर्यस्व, G8 M2 दीदरस्व (for दीदरस्त्व) — f) D9 T1 G4 6 मा त्वा, T2 G2 मत्वा, G8 मा वा, M न त्वा (for मा त्वा) K2 8 D1.7 9 दीर्णा , G3 जीर्णा° (for दीर्णं)

C. 5.4528 B. 5. 137.7 K. 5. 138.7

उद्धपन्त्या समाश्वासं बलवानिव दुर्बलम् ॥ ६
यद्येतत्संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वासौम्यमिवात्मानं जयायोत्तिष्ठ संजय ॥ ७
अस्ति नः कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥ ८
सन्ति नैकशता भूयः सुहृदस्तव संजय ।
सुखदुःखसहा वीर शतार्हा अनिवर्तिनः ॥ ९
तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
ईषदुज्जिहतः किंचित्सचिवाः शत्रुकर्शनाः ॥ १०

पुत्र उवाच ।

कस्य त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः ।
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम् ॥ ११
उदके भूरियं धार्या सर्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी ॥ १२
अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किंचित्किंचित्प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥ १३
अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमाय जयाय च ॥ १४

---

6 c) K3 B Dn Ds D6 8 10 विदधत्या, K4 प्रलपत्या, D2 उत्तरत्या, D3 4 विदहत्या K1-3 D1-4 7 9 समाश्वास., T2 G2 6 समाश्वास्य — d) K1-3 D1 2 7 9 कृतस्ते बलवत्तर', K4 D3 4 उक्तस्तेभिविवृद्धये, B Dn Ds D6 8 10 उक्त तेजोवि- (D6 8 °मि)वृद्धये

7 a) K3 B3 6 D2 6 यद् (for यदि) T2 G2 प्रवि°, G3 स्व वि°, G5 सप्र° (for संवि°) — d) T उत्सृज, G2 उत्सह (for उत्तिष्ठ) S (mostly) सृजय

8 D6 M5 om (hapl) $8^{a}$–$9^{b}$ D9 reads 8 after $10^{ab}$, T1 G1 after 10, and G4 after 11 — a) A few N MSS कोष°. — b) B1 6 D3 4 हि विदितस् (for अवि°) — c) D1.3 4 G1 3 4 M1.3 4 तद् (for the first तम्) K1.2 4 D1.2 7-9 वै, M1 2 तद् (for the second तम्) — d) K1 2 4 D1 2 7-9 तच्च (for उप-)

9 D6 M5 om $9^{ab}$ (cf v l. 8) — a) D1 2 अस्ति (for सन्ति) K4 [अ]नेक-; B3 D1-4 चैक-; Ca 8 नैक- (as in text) K3 B (except B2) Dn D2 -तमा', Ca d s -शता (as in text) — b) S (M5 om) सृजय (for स°) — c) T2 G2 6 °समा K1.2 D9 धीरा', D1 8 G1 वीरा', T2 G2 भूय', G6 शूरा — d) K1 2 B6 Dn D3 4 6 8 संग्रामाद्, Ca d s शतार्हा (as in text) B1 2 4 D5 ह्यनि°, D9 अरि° (for अनि°)

10 a) K1.2 D7 9 स्यु (for वै) — D9 om $10^{cd}$, and reads 8 after $10^{ab}$. — c) K3 4 B Dn Ds D2-4 6 10 इष्ट (for ईषद्) K1.2 D3 T1 G1 6 उज्जीहत, K3 4 B Dn Ds D2-4 6 10 जिहीर्षत', T2 G2 ऊर्जे हृत', Cd s उज्जिहत' (as in text) Ca cites उच्छ्रयत'. D3 4 G3 केचित — d) K3 4 B Dn Ds1 D2-4 4 8 10 M1 °कर्शन (B1 4 D3 4 8 °कर्षण), D7 °कर्शिता'. — After 10, T1 G1 read 8

11 K4 B Dn Ds D6 8.10 om. the ref. T1 G1.4 संजय' (for पुत्र') — a) K4 B Dn2 Ds D6 8 10 तस्या (for कस्य) K2 D9 त्वादेश(D9 °शि)कं, D3 4 न त्वीदृश; T2 G2 वा त्वीदृश (for त्वीदृशक) Dn1 न तस्यास्त्वीदृशं वाक्य — b) K1.2 अति-; M3 4 (inf lin as in text) 5 हि, Ca अपि (as in text) K1 2 4 D1.9 T2 Ca स्वल्पतेजसः, T1 D1 3-5 त्वल्पचेतस' G2 शक्त श्रुत्वाल्पतेजस . — c) T1 G2 व्युप-; G1 4 ह्युप-; G5 [अ]प्युप-; M5 [अ]प्यव- (for व्यप) K4 B Dn Ds D6 8 10 तमस्त्वपा(B2 °स्य-; Dn1 °प)गमत्तस्य, D1 G3 M3 4 तमो न व्य(M3 4 नाप्य)- पहंस्येतत्, D2-4 मनो न व्यतिहस्येतत् — d) D1 T G1 2 4 चिचित्रार्थ°, Ca as in text — After 11, G4 reads 8

12 Before 12, K4 B Dn Ds D6 8 10 ins पुत्र उ° D6 om. $12^{ab}$ — a) Dn1 D9 उदर्के; D3 4 उदर्को; Ca d n.8 उदके (as in text) K1 3 4 B1 D1-4 Cn भू°, Ca d s np धू' (as in text) D8 10 उदके (D10 °र्के) धुरि सधार्य, T2 G2m उदके सूर्यवद्यस्मिन् G2 8 corrupt — b) K4 B1.2.4 Dn D2-4 8 10 मर्तव्य, B3 T1 G3 स्मर्त°, D1 मत°, T2 G4 वर्त°, G5 धर्त°, Ca d सर्त° (as in text) — c) D3 4 माता, D6 मत्री, Cs नेत्री (as in text) — d) B D2 10 °ज्ञूति°.

13 a) K1 2 D9 च (for हि), and तच्च (for त्वत्त:) — b) M2 शुश्रूषन् K1-3 Dn1 Ds D1 6-8.10 T1 G1.5 M1-4 अपरावरं, D3 4 परम पर, D9 अपरंपर, G3 °रापर; G4 अपरे जय (sup lin अपरावर), Cs अवरावर, Cn अपरापर (as in text) — c) K1.2 B3 D7 9 S प्रतिपदन्, D1 प्रतिब्रुव , Ca d s as in text

14 b) K1 Dn1 D1 10 G3 4 M2-4 Cnp बाधवान्; B (except B6) दे(B2 दै)वत', D7 मातृत , Ca d.n.s बान्धवात् (as in text). — d) K4 B1 2 4 D3 D6.8.10 G4 Cn नियमार्थं G2 जयाय नियमाय च

15 a) K3 Dn Ds D2.7 8 संक्षिप्त' (D2 °प्त); S स

कुन्त्युवाच ।
सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥ १५
इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥ १६
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति ॥ १७
इदं पुंसवनं चैव वीराजननमेव च ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥ १८
विद्याशूरं तपःशूरं दमशूरं तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं साधुवादेन संमतम् ॥ १९
अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृष्टवन्तमनाधृष्यं जेतारमपराजितम् ॥ २०
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
तदर्थं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## १३५

कुन्त्युवाच ।
अर्जुनं केशव ब्रूयास्त्वयि जाते स सूतके ।
उपोपविष्टा नारीभिराश्रमे परिवारिता ॥ १
अथान्तरिक्षे वागासीद्दिव्यरूपा मनोरमा ।

C. 5. 4545
B. 5. 137 2
K. 5. 137 2

---

(G3 च, M4 य) क्षिप्र — [b]) K4 प्रभिन्नो, T1 M1.2 4 (*inf lin*) प्रतुन्नो, M3-5 वितुन्नो (for प्रणुन्नो) — K5 om. from वाक्य° up to श्रावयेन् (in 16[c]) D7 S °तोमरैः (for °सायकैः) — [c]) D2-4 यथा, G4 तदा (for तथा) — [d]) = 5 133 21[f] T1 G3 4 यथा तदनुशासन

16 K4 om up to श्रावयेन् (cf v l. 15) — [a]) T2 G1 5 M उद्धरण (for उद्धर्षण) B3 M3 भीष्म (for भीम) — [c]) K4 तत्र, G4 मन्त्रं (for मन्त्री) — [d]) G4 शत्रुविक्षत

17 = (var ) 1 56 19 In Dn2 the portion of the text from here up to 5 136 25 is lost on a missing fol — [d]) G4 शत्रु (for शत्रून्) K1.2 D5 प्र; D1 च्य-; D2 स (for च)

18 Dn2 missing (cf v l 17) — [d]) D3 4 सुत वीर, D7 वीरपुत्रं (for ध्रुव वीर) K4 प्रपद्यते, G3 प्रसूयते

19 Dn2 missing (cf. v l 17) — [a]) D8 दान°, G2 दम° (for तप°) — [b]) K3 4 B1 Dn1 D6 7 दानशूर, D8 G2 तप°, G3 धर्म° D7 सुविक्रम — [c]) D3 4 तेजं° (for दीप्य°) — [d]) K4 °वादेव, B Ds D3 4 6 7 10 °वादे च, Dn1 °वदेव D8 संमित, D10 सम्भव

20 Dn2 missing (cf v l. 17) — [c]) K1.2 D9 धार्ष्ट्यवतम्; K3 4 B Dn1 Ds D1-4 6-8 10 धृतिमतम्, Ca धृष्यवन्त (for धृष्टवन्तम्) Cd cites धार्ष्ट्यं — [d]) T1 जितारिम् (for जेतारम्)

21 Dn2 missing (cf v l. 17) — [b]) B3 G4 M1 °चारिण — [c]) Cf. 5 135 9[c] K4 B Dn1 Ds D3 4 6-8 10 ईदृश, M यदर्थं (for तदर्थं) — After 21, Ds D1 8 ins

514* इति श्रुत्वा वचो मातु संजय शत्रुभि सह ।
कृतवान्सयुग कृष्ण जय च प्राप्तवान्ध्रुवम् ।
[ (L 1) D1.8 मन्त्रिभि (for शत्रुभि ) ]

Colophon missing in K5 Dn2 D5 — *Sub-parvan* K1-3 B1.2 4 Ds D7 10 T1 G1.4 5 M भगवद्यान (T1 G1 4 °वत्प्रयान), to it K1-3 B1 2 4 Ds D10 add विदुला(K1 2 °रा)पुत्रानुशासन, D7 विदुलानुशासन, G5 M1.2 विदुरापुत्रसंवाद K4 B3 5 Dn1 D2-4 6 8 9 (all om sub-parvan name) mention only विदुला(K4 D2 °रा; D6°र)पुत्रानुशासन (as upākhyāna name) K1-4 B2 4 D3 4 6-10 G5 M1.2 add समाप्त — *Adhy name* T1 G1.4 विदुरा(G4 °र)सजयसवाद°, G2 M3-5 विदुरापुत्रानुशासनं, M1 पुत्रानुशासन — *Adhy no* (figures, words or both) D7 T2 M1-3 5 137, T1 G2 4 5 138, G1 139, G3 135, M4 136 — *S'loka no* Dn1 22, D8 23

### 135

☞ This adhy is missing in Dn2 (cf. v l 5 134 17) The MS is mostly ignored here Many stanzas in this adhy are *repeated* (sometimes with v l ) from adhy 88

1 [d]) D1 परिवर्धिता, D7 °पालिता

2 [b]) K1 D1 °हरा (for °रमा)

C. 5. 4645
B. 5. 137 2
K. 5. 137 2

सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः ॥ २
एष जेष्यति संग्रामे कुरून्सर्वान्समागतान् ।
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ॥ ३
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवस्पृशम् ।
हत्वा कुरून्ग्रामजन्ये वासुदेवसहायवान् ॥ ४
पित्र्यमंशं प्रनष्टं च पुनरप्युद्धरिष्यति ।
भ्रातृभिः सहितः श्रीमांस्त्रीन्मेधानाहरिष्यति ॥ ५
तं सत्यसंधं बीभत्सुं सव्यसाचिनमच्युत ।
यथाहमेवं जानामि बलवन्तं दुरासदम् ।
तथा तदस्तु दाशार्ह यथा वागभ्यभाषत ॥ ६
धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ।
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ॥ ७
नाहं तदभ्यसूयामि यथा वागभ्यभाषत ।
नमो धर्माय महते धर्मो धारयति प्रजाः ॥ ८
एतद्धनंजयो वाच्यो नित्योद्युक्तो वृकोदरः ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ।
न हि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ॥ ९
विदिता ते सदा बुद्धिर्भीमस्य न स शाम्यति ।
यावदन्तं न कुरुते शत्रूणां शत्रुकर्शनः ॥ १०
सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः ।
ब्रूया माधव कल्याणीं कृष्णां कृष्ण यशस्विनीम् ॥ ११
युक्तमेतन्महाभागे कुले जाते यशस्विनि ।
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः ॥ १२
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ ।

---

3 $^{a}$) D8 4 विजेष्यते च संग्रामे — $^{d}$) D2-4 S लोकान् (for लोकम्)

4 =(var.) 5 88 64$^{c}$-65$^{b}$ — $^{a}$) K1 Dn1 Ds1 D8 9 पृथिवीजेता. — $^{b}$) K5 D7 यशसापि K1 2 G3 दिविस्पृशं, K5 दिव स्पृशन्, B8 5 Dn1 D1 6-8 T G4 5 दिव स्पृशेत्, D2 दिव' स्पृशन् — $^{c}$) K1 2 असौ जन्ये, K3 4 B Dn1 Ds D1-4 6 8 10 T2 G2 M3-5 च संग्रामे, K5 D7 कुरुक्षेत्र, D9 असौ युद्धे, G1 5 महाजन्ये; Ca d s ग्रामजन्ये (as in text)

5 $^{a}$) Some MSS प्रणष्ट — $^{b}$) Om. in K5. K2 D1 2 7 9 अभि- (for अपि) — 5$^{cd}$ =(var.) 5 88 65$^{cd}$ — $^{c}$) M1 2 transp भ्रातृभि' and सहित — After 5, T G (except G3) ins.

515* तथा चरेस्त्व श्वेताश्च यथा वागभ्यभाषत ।
[ G4 परे' (for चरे') T2 G2 तु (for त्व) ]

6 B5 om (hapl.) 6$^{a}$-7$^{b}$, T1 om 6$^{a}$-8$^{b}$ — $^{a}$) D1 G3.4 M स (for त) K3 B (B5 om.) Dn1 Ds D3 4 6 8.10 स सत्यसंधो बीभत्सु' (K3 'त्सु), K5 D7 सत्यसंध च बीभत्सु — $^{b}$) K D1 2 7 9 G1 अच्युत (K4 अस्तुवन्) (for अच्युत) B (B5 om.) Dn1 Ds D3 4 6 8 10 सव्यसाची यथाच्युत (Ds2 'च्युत', D6 8 श्रुत) — $^{c}$) K1 2 तथा (for यथा) K1 2 D9 एत, D1 8 एन, D2 एव (for एव). K3 B (B5 om.) Dn1 Ds D3 4 10 त(B1-4 य)था त्वमेव जानामि — T2 om 6$^{de}$ — $^{e}$) G1 2 4 5 वदेस्त्वं; G3 वद त्वं, M वदेस्तु (for तदस्तु) — $^{f}$) = 8$^{b}$

7 =5 88 67 — B5 om. 7$^{ab}$, T1 om 7 (cf v.l. 6), T2 om (hapl.) 7$^{a}$-8$^{b}$ — $^{a}$) D7 स्विद् (for चेद्) — $^{c}$) G5 त चापि त्व (for त्वं चापि तत्)

8 =(var.) 5 88 66 — T om 8$^{ab}$ (cf v.l. 6, 7) — $^{a}$) B3 G3 तदप्यसूयामि — $^{b}$) = 6$^{f}$. — $^{d}$) K5 B3 D7 T1 धारयते

9 9$^{abcd}$ =(var.) 5 88 74, and 9$^{ef}$ =(var.) 5 88 83$^{ab}$ — $^{a}$) B3 वचनतो, T1 G1 4 तदग्रजो (for धनजयो) — $^{b}$) K1 (before corr.) 2 5 D1 नित्योक्तो हि, D2-4 इत्युक्तो हि, D9 नित्ययुक्तो, Ca d नित्योद्युक्तो (as in text) — $^{cd}$) = 5 157 7$^{a}$ and 5$^{d}$ — $^{e}$) S भारं, Ca d वैरं (as in text) D1 G2 M Ca d समासज्य

10 Cf 5 88 83$^{cdef}$. — $^{a}$) K5 D7 S मे (for ते) — $^{b}$) B3 प्र; S हि, Ca स (as in text) — $^{c}$) B1 एतन् (for अन्तं) T1 G1 4 च (for न) — $^{d}$) K3 4 B3 5 D9 G3 4 'कर्शन; B1 2 D1 2 6 8 'कर्पण', B1 'कर्पेग — G3 M ins. after 10 T G1 2 4 5, after 15 (cf v.l. 11)

516* तावदेव महाबाहुर्निशासु न सुखं लभेत् ।

11 T G1 2 4 5 read 11-12 after 516* (cf. v.l. 10) — $^{c}$) K5 पांचाली (for कल्याणीं) — K5 om 11$^{d}$-15$^{c}$ — $^{d}$) B1 2 4 Dn1 Ds D6 8 10 कृष्ण कृष्णा (by transp.), G2 5 कृष्णा चैव

12 K5 om 12 (cf v.l. 11), T1 om 12$^{ab}$. For sequence of T G1 2 4 5, cf v.l. 11 — $^{b}$) K1.2 Dn1 D1.7-9 T2 G1 4 M3 जाता (for जाते) K1 (m as in text) B3 5 मनस्विनि, Dn1 Ds2 D3 T2 G1 2 5 M3 5 यशस्विनी — $^{c}$) G2 धर्मे' (for सर्वे') — $^{d}$) K1 2 D1 T2 G1 2 5 यथातत्त्वम् G2 5 M अवर्तथा G3 4 यथा त्वमनुवर्ति(G3 'तें)था'

13 =(var.) 5 88 77. — K5 om 13 (cf. v.l.

विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ॥ १३
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ १४
यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनी ।
पाञ्चाली परुषाण्युक्ता को नु तत्क्षन्तुमर्हति ॥ १५
न राज्यहरणं दुःखं द्यूते चापि पराजयः ।
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ १६
यत्तु सा बृहती श्यामा सभायां रुदती तदा ।
अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं मतम् ॥ १७
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती ॥ १८
तं वै ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीं चर ॥ १९
विदितौ हि तवात्यन्तं क्रुद्धाविव यमान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥ २०
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभागता ।
दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत ।
पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः ॥ २१
पाण्डवान्कुशलं पृच्छेः सपुत्रान्कृष्णया सह ।
मां च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन ।
अरिष्टं गच्छ पन्थानं पुत्रान्मे परिपालय ॥ २२

**वैशंपायन उवाच ।**

अभिवाद्याथ तां कृष्णः कृत्वा चाभिप्रदक्षिणम् ।
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः ॥ २३

C. 5. 4568
B. 5. 137. 25
K. 5. 137. 25

---

11) — After $13^{ab}$, Ds2 ins
517* विक्रमाधिगता ह्यर्था क्षत्रधर्मरतावुभौ ।
— $^{c}$) T1 G1.3 जितान् (for [अ]र्जितान्) T1 G1 4 लोकान् (for भोगान्) — K4 om. (hapl.) from अर्जितान् (in $13^{c}$) up to °धर्मेण (in $14^{b}$) — $^{d}$) B8 वृणीहि, Dn1 D8 G4 M4 (inf lin) वृणीता, D8 4 वृणुध्वं, D9 G2.5 M वृणीध्व (M4 °तु)

14 = 5 88 78 — K5 om 14 (cf v l 11) K4 om up to °धर्मेण (cf v.l. 13) — $^{d}$) G2 3 पुरुषोत्तमौ

15 K5 om. $15^{abc}$ (cf. v.l. 11) — $^{a}$) Some N MSS प्रेक्ष्य° (for प्रेक्ष°) — $^{b}$) K1 D2-4 6 8 M3-5 °धर्मोपचायिनी, K8 B4 Cn °धर्मोपचायिना, D5 °कर्मोपचायिनी — After 15, T G1.2 4 5 ins 516*

16 =(var) 5 88 84 — $^{b}$) B3 Ds2 D10 चापि, D3 4 चासम; S वा मे (for चापि) — $^{c}$) K1 2 B8 च (for वा) — After 16, M1 (inf lin) ins
518* सर्वधर्मविशेषज्ञा कुले जाता यशस्विनीम् ।
[Cf 11]

17 =(var) 5 88 85 — $^{a}$) K4 B (except B3) Dn1 D5 D2-4 6 8 10 G1 यत्र सा, D1 यथा सा, G3 यस्तुषा, G4 यत्ते सा (for यत्तु सा) — $^{b}$) K5 T G1.2 3 सदा; B2 तथा (for तदा) — $^{c}$) D2 परुषा वाच — $^{d}$) D2 नो (for मे) B Dn1 D5 D8 4 6 8 10 G3 4 महत्, D1 M2 पर (for मतम्) K8 तन्मे मर्माणि कृन्तति, D9 तन्मे दुःखतरं मम

18 =(var) 5 88 86 — $^{c}$) T1 नाल्य°, T2 G (except G3) नाम्य° (for नाध्य°) T G3 4 M2 तथा (for तदा) — $^{d}$) T1 G3 तथा, T2 G1 2 4 तदा, G5 सदा (inf lin सती as in text)

19 =(var) 5 88 79 — $^{a}$) T1 G1 त्व (for त) S (except G4) च (for वै) K5 D7 transp वै and ब्रूहि — $^{c}$) K5 Dn1 D10 °व्याघ्र, B1 3 5 D3 4.8 G4 M °श्रेष्ठ, T G1-3 5 °श्रेष्ठ.

20 =(var) 5 88 80 — $^{a}$) B2 D2-4 G1 3 विदित K8 वा (for हि) D2-4 G5 तथा (for तव) B3 5 अत्यर्थं (for अत्यन्त) — $^{b}$) S यथान्तकौ — $^{d}$) S पराभव, Ca परा गतिम् (as in text)

21 $21^{abcd}$=(var) 5 88 81, and $21^{e}$=(var) $82^{e}$ — $^{a}$) B3.5 D3 4 Ca °ज्ञात, G4 °ज्ञाता (for °ज्ञान) S (for G4 see above) तयोश्चैव तदा ज्ञात — $^{b}$) K2 T1 G1.4 transp सा and कृष्णा K B2 5 D5 D1 6-10 T G2 5 M1 2 सभा गता — $^{d}$) T2 G2 5 कटुवाक्यमभाषत — $^{f}$) K1 2 D9 संपादये पुन, D2 ससारयेत्पुन, D3 4 संसारयाच्युत

22 K5 om $22^{abcd}$ — $^{b}$) G3 सह कृष्णया (by transp) — $^{c}$) K1 2 D7 3 T G1 2 4 5 वै, D2 G3 M चेत् (for च) — $^{e}$)=(var) 1 24 $9^{c}$ K1.2 अभीष्ट, Ca.d 8 अरिष्ट (as in text) B1 8 व्रज (for गच्छ) — $^{f}$) B2 4 Dn1 D5 D8 4 6 10 प्रति- (for परि) D2 न स्युस्ते परिपथिन (in addition to text reading)

23 For $23^{ab}$, cf 1 209 $12^{ab}$ — $^{a}$) K4 D2 पृथा, B3 5 T2 G2 च ता, G5 तदा (for [अ]थ ता). — $^{b}$) =(var) 5 89 $1^{b}$. K4 B1 5 D2-4 T G M1 चापि

C. 5. 4669
B. 5. 137 26
K. 5. 137 26

ततो विसर्जयामास भीष्मादीन्कुरुपुंगवान् ।
आरोप्य च रथे कर्णं प्रायात्सात्यकिना सह ॥ २४
ततः प्रयाते दाशार्हे कुरवः संगता मिथः ।
जजल्पुर्महदाश्चर्यं केशवे परमाद्भुतम् ॥ २५
प्रमूढा पृथिवी सर्वा मृत्युपाशसिता कृता ।
दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ॥ २६
ततो निर्याय नगरात्प्रययौ पुरुषोत्तमः ।
मन्त्रयामास च तदा कर्णेन सुचिरं सह ॥ २७
विसर्जयित्वा राधेयं सर्वयादवनन्दनः ।
ततो जवेन महता तूर्णमश्वानचोदयत् ॥ २८
ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः ।
हया जग्मुर्महावेगा मनोमारुतरंहसः ॥ २९
ते व्यतीत्य तमध्वानं क्षिप्रं श्येना इवाशुगाः ।
उच्चैःसूर्यमुपप्लव्यं शार्ङ्गधन्वानमावहन् ॥ ३०

इति श्रीमहाभारते उद्योगपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

## १३६

वैशंपायन उवाच ।
कुन्त्यास्तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ १
श्रुतं ते पुरुषव्याघ्र कुन्त्याः कृष्णस्य संनिधौ ।
वाक्यमर्थवदव्यग्रमुक्तं धर्म्यमनुत्तमम् ॥ २
तत्करिष्यन्ति कौन्तेया वासुदेवस्य संमतम् ।
न हि ते जातु शाम्येरन्नृते राज्येन कौरव ॥ ३
क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा ।

---

(for चाभि-) — c) T1 G1 4 °बुद्धि (for °बाहु°) — d) K2 4 G5 तदा, T2 G2 तथा (for तत )

24 b) S कुरुसत्तमान् — c) B Dn1 D5 D6–8 10 [अ]थ (for च)

26 b) K1–3 D1 2 7 9 °सिता स्थिता, K4 B Dn1 D3 D8 4 6 8 10 G4 M3 4 (inf lin ) 5 °वशीकृता, K5 °गता स्थिता, T1 °वश गता, T2 G2 °वशाधृता. — c) D2 दुर्योधनश्च कर्णश्च

27 c) D2 T1 G3 5 M स तदा, D3 4 कर्णेन, G1 4 सहसा (for च तदा) D10 समन्त्रयामास तदा — d) D3 4 माधव° (for सुचिर) K3 हरि°, D2 T1 बहु (for सह)

28 b) D10 कर्णं (for सर्व ) — After 28ab, S ins

519* अश्वत्थामानमाहूय मन्त्रयित्वा पुन पुन° ।

— c) D10 गतु (for ततो) T1 रथेन (for जवे°) — d) K1 5 D7 अनोदयत् (for अचो°)

29 b) K1 3 प्रणोदिता° — K5 om 29c–30d (with colophon).

30 K5 om. 30 (cf v l 29) — a) K1 2 तद्°, K3 4 B D (Dn2 missing) T2 G2 M4 महा (for तम्) — c) K3, 4 B D (except D1 2, Dn2 missing) जग्मुर् (B3 ययुर्) (for सूर्यम्) S उपप्लाव्यं

Colophon missing in Dn2 D5, K5 om it — *Sub-parvan*. K1–3 B Dn1 D1, 2, 6–9 G5 M भगवद्यान; D10 °यदागमन, T1 G1 4 °वत्प्रतियान — *Adhy name* D1 कुन्तीवाक्य, G5 वासुदेवनिवर्तन; M1 वासुदेवकर्णमन्त्र — *Adhy no* (figures, words or both) D1 M4 137, D6 27 (=127), D7 T2 M1–3 5 138, T1 G2 4 5 139, G1 140, G3 136 — *S'loka no*. Dn1 32

### 136

☞ Stanzas 1–25 are missing in Dn2 (cf. v l 5 134 17). The MS is mostly ignored in this adhy.

1 a) K1 तद्, K5 च (for तु)

2 D1 om 2a–3b — b) K4 5 Dn1 D5 D2 7 8 10 T1 M4 (by corr ) कुत्या (for कुन्त्या°) — c) K4 B D5 D2 6 10 अत्युग्रम्, D3 4 अत्यतम् (for अव्यग्रम्) — d) B3 D3 4 युक्त, D2 सूक्त (for उक्त) K4 D3 4 क(K4 ध)र्मं विदुत्तम, K5 Dn1 Ds2 D2 9 धर्ममनु°

3 D1 om 3ab (cf v l 2) — b) B1 3 D2–4 संमते, B2 4 D5 D10 समता. — d) D3 4 राज्य च (for राज्येन) K3 कौरवा°, D1 पाण्डवा° (for कौरव)

4 b) D6 8 °पाशाश्रिता°, G3 °पाशस्थिता°; G4 °पाशे नता°, Ca as in text K1 2 5 D1 6–8 सदा, B5 G2, 4 तथा (for तदा) — c) D10 क्लिष्टा, C3 चैव (as in text) — d) K4 तदा (for तव)

5 a) B4 G3 कृतार्थं (for कृतास्त्रं) D10 om हि

सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ॥ ४

कृतास्त्रं ह्यर्जुनं प्राप्य भीमं च कृतनिश्रमम् ।
गाण्डीवं चेषुधी चैव रथं च ध्वजमेव च ।
सहायं वासुदेवं च न क्षंस्यति युधिष्ठिरः ॥ ५
प्रत्यक्षं ते महाबाहो यथा पार्थेन धीमता ।
विराटनगरे पूर्वं सर्वे स्म युधि निर्जिताः ॥ ६
दानवान्घोरकर्माणो निवातकवचान्युधि ।
रौद्रमस्त्रं समाधाय दग्धवानस्त्रवह्निना ॥ ७
कर्णप्रभृतयश्चेमे त्वं चापि कवची रथी ।
मोक्षिता घोषयात्रायां पर्याप्तं तन्निदर्शनम् ॥ ८
प्रशाम्य भरतश्रेष्ठ भ्रातृभिः सह पाण्डवैः ।
रक्षेमां पृथिवीं सर्वां मृत्योर्दंष्ट्रान्तरं गताम् ॥ ९
ज्येष्ठो भ्राता धर्मशीलो वत्सलः श्लक्ष्णवाक्शुचिः ।
तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषम् ॥ १०
दृष्टश्चेत्त्वं पाण्डवेन व्यपनीतशरासनः ।
प्रसन्नभ्रुकुटिः श्रीमान्कृता शान्तिः कुलस्य नः ॥ ११
तमभ्येत्य सहामात्यः परिष्वज्य नृपात्मजम् ।
अभिवादय राजानं यथापूर्वमरिंदम ॥ १२
अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः ।
प्रतिगृह्णातु सौहार्दात्कुन्तीपुत्रो युधिष्ठिरः ॥ १३
सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः ।
परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः ॥ १४
सिंहग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः ।
अभिवादयतां पार्थः कुन्तीपुत्रो धनंजयः ॥ १५
आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि ।
तौ च त्वां गुरुवत्प्रेम्णा पूजया प्रत्युदीयताम् ॥ १६ C. 5. 4692 B. 5. 138. 17 K. 5. 138. 17

---

— $^{b}$) K4 B D (except D6 8, Dn2 missing) G1 °निश्चय (for °निश्रमम्) — $^{c}$) D3.4 वीर (for चैव) S रौद्रमस्त्रं च गाण्डीवं (G5 M1–3 5 गाण्डि[or °डी]वं च) — $^{d}$) B3 ध्वजं च रथमेव च, D10 रथं वानरकेतनं — After $5^{cd}$, K4 B Dn1 Ds D3 4 7–10 ins

520* नकुलं सहदेवं च बलवीर्यसमन्वितौ ।
[K4 D8 °वीर्यवतां वरौ, D3 4 °वीर्यमतीव च, D10 °वीर्यनदोद्धतौ]

— $^{f}$) K1 D2–4 T1 G1.4 क्षाम्यति, K4 T2 G2 5 शाम्य°, G3 क्षम्य°, M क्षास्य° (for क्षंस्य°)

6 $^{a}$) T2 G2 °तेजा (for °बाहो) — $^{d}$) Ds सर्वे युधि विनि°.

7 $^{ab}$) K3 4 B Dn1 Ds D1–4 6 7 10 दानवा°, and °कवचा° D3 4 क्रूर° (for घोर°) — $^{c}$) K3 4 B Dn1 Ds D1–4 10 T G3 5 M1 (inf lin) समादाय — $^{d}$) K3 4 B Dn1 Ds D7 10 दग्धा वानरकेतुना

8 $^{a}$) T2 G2.5 एते (for इमे) — $^{b}$) D2.4 शरी (for रथी) — $^{c}$) K3.5 B D (except D1, Dn2 missing) मोक्षितो, K4 T1 G1 4 मोचितो (for मोक्षिता) — $^{d}$) = 5 63 $15^{d}$.

9 $^{a}$) G1.4 भारतश्रेष्ठ. — $^{b}$) D1 निशाम्य सह पा°, G3 संधिं कृत्वा तु पा°. — K5 om from $9^{c}$–$18^{d}$ — $^{d}$) D3 4 S दंष्ट्रान्तरे (T1 G1 3 5 °र) स्थिता

10 K5 om 10 (cf v l 9) — $^{a}$) S राजा (for भ्राता) — $^{b}$) D8 सत्य° (for श्लक्ष्ण°) B2 5 Dn1 Ds कवि° (for शुचि°) — $^{c}$) B1.2 T2 G3 M (except M4) °व्याघ्र — $^{d}$) B3 5 °य तु (for °येह)

11 K5 om 11 (cf v l 9) — $^{a}$) N (K5 om, Dn2 missing) G4 च (for चेत्) — $^{c}$) Dn1 Ds D2–4 10 प्रशान्तभ्रुकुटि° (some MSS °भ्रू° and °टी), T G2 4 5 प्रसन्नो भ्रातृभि° — $^{d}$) K1.2 D1 G4 कृतशान्ति° D2 च°, D3 4 S च (for नः)

12 K5 om 12 (cf. v l 9) — $^{a}$) B1–3 Dn1 Ds D1–4 10 M3–5 सहामात्य, M2 °त्य — $^{b}$) B2 5 Ds D1 2 M1 नृपात्मजं — D6 om. (? hapl.) $12^{c}$–$13^{b}$ — $^{c}$) D3 4 राजेंद्र (for राजानं) — $^{d}$) D9 T1 G1 4 अरिंदम

13 K5 om 13 (cf v l. 9), D6 om $13^{ab}$ (cf v l 12). — $^{c}$) D3 4 परि° (for प्रति°)

14 K5 om 14 (cf v l 9) — $^{a}$) K4 च, M3–5 त्वा (for त्वां) B1 2 4 °बाहुभ्यां, D2 8 T G M2 सिंह° (D2 भीम)स्कन्धो महाबाहु° (M2 °वीर्यो) — $^{b}$) G2 3 पीनायत° — $^{c}$) T1 G4 M1.2 पाणि° (for बाहु°)

15 K5 om 15 (cf v l 9) — $^{a}$) K3 B Dn1 Ds D6 10 Ca कम्बुग्रीवो, D9 हयग्रीवो, S सिंहस्कन्धो K1 2 4 D1 2 7 9 महेष्वास°, T1 G1.4 महाबाहु°, Ca गुडाकेश (as in text) — $^{b}$) M त्वा (for त्वां) — $^{c}$) S (except G3 4) प्राज्ञ° (for पार्थ°)

16 K5 om 16 (cf v.l. 9) — $^{a}$) K4 Ds G4 अश्विनेयौ D3 4 महाभागौ — $^{c}$) G5 M त्वा (for त्वां) — $^{d}$) T2 G2 प्रतिगृह्णतां, G3–5 प्रत्युदीर्यतां

17 K5 om. 17 (cf v l. 9) — $^{b}$) G3 °प्रवरा

C. 5. 4693
B. 5. 138. 18
K. 5. 138. 18

मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः ।
संगच्छ भ्रातृभिः सार्धं मानं संत्यज्य पार्थिव ॥ १७
प्रशाधि पृथिवीं कृत्स्नां ततस्त्वं भ्रातृभिः सह ।
समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् ॥ १८
अलं युद्धेन राजेन्द्र सुहृदां शृणु कारणम् ।
ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते ॥ १९
ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः ।
उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ॥ २०
विशेषत इहास्माकं निमित्तानि विनाशने ।
उल्काभिर्हि प्रदीप्ताभिर्वध्यते पृतना तव ॥ २१
वाहनान्यप्रहृष्टानि रुदन्तीव विशां पते ।
गृध्रास्ते पर्युपासन्ते सैन्यानि च समन्ततः ॥ २२
नगरं न यथापूर्वं तथा राजनिवेशनम् ।
शिवाश्चाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशम् ॥ २३
कुरु वाक्यं पितुर्मातुरस्माकं च हितैषिणाम् ।
त्वय्यायत्तो महाबाहो शमो व्यायाम एव च ॥ २४
न चेत्करिष्यसि वचः सुहृदामरिकर्शन ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ॥ २५
भीमस्य च महानादं नदतः शुष्मिणो रणे ।
श्रुत्वा स्मर्तासि मे वाक्यं गाण्डीवस्य च निस्वनम् ।
यद्येतदपसव्यं ते भविष्यति वचो मम ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

T G1 2 4 नरा. (for नृपा) — d) K2 G3 °त्यज (for °त्यज्य)

18 K5 om 18 (cf v l 9), D1 om 18ab — a) D7 T1 G1 2 4 M सर्वां (for कृत्स्नां) — d) T2 G2 कृपया तु (for नृपा यान्तु)

19 b) K3 D3 4 T G भारत, B Dn1 वारण, M भाषित (for कारणम्) — cd) T1 G4 ध्रुवो K5 ध्रुव विनाश क्षत्रियाणा युद्धेस्मिन्हि प्रद° (hypermetric!)

20 a) T2 G2 5 प्र(G5 [अ]प्र)तिरूपाणि — T2 G2 om 20cd. — c) D2 बहुधा (for विविधा) — d) K4 वीर° (for क्षत्र°)

21 K5 om 21–22 — a) K1 2 D8 D7 0 इव (for इह) — b) N (except K4 D1 8, K5 om, Dn2 missing) Ca निवेशने — c) D7 च, G4 तु (for हि) D1 क्षिप्र (for हि प्र) — d) K1 2 D5 D8 0 वध्यते, K3 4 B Dn1 D1–4 6 7 बाध्य°, T1 व्यथ°, T2 G2 5 मथ्य°, G4 विद्ध° (for वध्य°)

22 K5 om 22 (cf v.l 21) — b) D2 [इ]ह, D3 4 8 T G1.2 5 च (for [इ]व) — c) D3 4 च (for ते)

23 a) K1 3 तथा° (for यथा°) — b) B2 D5 D2 7 राजन्निवेशनं. — d) D3 4 दीप्ता°, Ca d s दीप्ता (as in text) D3 4 G2 4 दिशः (for दिशम्) D2 दीप्तायां निशि भाषत

24 b) D3 4 हितार्थिना (for हितै°)

25 K5 om 25–26 — b) A few MSS °कर्षण — D2 om from दृष्ट्वा up to च नि (in 26d) — d) T1 G1 4 °बाणाभिपी°.

26 K5 om. 26, D2 om up to च नि (cf. v l 25) Dn2 resumes! — a) K1 2 4 B2 D3 4 7–9 T2 G2 महानादान् — b) D3 4 श्रोष्यसे, Ca d शुष्मिण (as in text). — cd) Some MSS निःस्वन D3 4 निर्घातसदृश तस्य गदया भीमवेगया — D3 4 om 26ef — e) D5 यदे° (for यद्ये°) Cnp यदि निर्घातसदृश (cf D3 4 above) — f) K3 Dn D5 D10 वचो मम भविष्यति (by transp)

Colophon missing in Dt. — *Sub-parvan* K1 3–5 B1, Dn D5 D2–4 6–9 G5 M1 2 भगवद्यान, D10 भगवदागमन, T1 G1 4 भगवत्प्रतियान — *Adhy name* T1 G1 4 दुर्योधन प्रति भीष्मद्रोणवाक्य, M पाण्डवपराक्रमस्म(M1 °स्मा)रण — *Adhy no.* (figures, words or both) D6 28 (=128), D7 T2 M 139 (M4 138), T1 G2 4 5 140, G1 141; G3 137. — *S'loka no* Dn 28.

# १३७

वैशंपायन उवाच ।
एवमुक्तस्तु विमनास्तिर्यग्दृष्टिरधोमुखः ।
संहत्य च भ्रुवोर्मध्यं न किंचिद्व्याजहार ह ॥ १
तं वै विमनसं दृष्ट्वा संप्रेक्ष्यान्योन्यमन्तिकात् ।
पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ ॥ २
भीष्म उवाच ।
शुश्रूषुमनसूयं च ब्रह्मण्यं सत्यसंगरम् ।
प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किम् ॥ ३
द्रोण उवाच ।
अश्वत्थाम्नि यथा पुत्रे भूयो मम धनंजये ।
बहुमानः परो राजन्संनतिश्च कपिध्वजे ॥ ४
तं चेत्पुत्रात्प्रियतरं प्रतियोत्स्ये धनंजयम् ।
क्षत्रधर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् ॥ ५
यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः ।
मत्प्रसादात्स बीभत्सुः श्रेयानन्यैर्धनुर्धरैः ॥ ६
मित्रध्रुग्दुष्टभावश्च नास्तिकोऽथानृजुः शठः ।
न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ॥ ७
वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ।
चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ॥ ८
मिथ्योपचरिता ह्येते वर्तमाना ह्यनु प्रिये ।
अहितत्वाय कल्पन्ते दोषा भरतसत्तम ॥ ९
त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च ।
वासुदेवेन च तथा श्रेयो नैवाभिपद्यसे ॥ १०
अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि ।
सग्राहनक्रमकरं गङ्गावेगमिवोष्णगे ॥ ११
वास एव यथा हि त्वं प्रावृण्वानोऽद्य मन्यसे ।

C. 5. 4715
B. 5. 139. 12
K. 5. 139. 12

### 137

1 c) D2 3 9 संहृत्य, G3 °गत्य (for °हत्य) S मध्ये (for मध्य) — d) K4 स°, G2 च, M4 तं (for ह)

2 a) D1 च (for वै) — c) K (except K3) D1–4 8 9 तु तद्, S ऊचतुर् (for उत्तर)

3 a) K1 D5 D10 M अनसूयु D7 त (for च) K5 शुश्रूषंतमसूयत — b) B2 4 5 Dn Ds D1.8 10 सत्य वादिनं

4 D1 om. (hapl.) 4c–5b — c) D2.4 ततो (for परो)

5 D1 om 5ab (cf v.l. 4) — a) N (except D2.4 9, D1 om.) G4 च (for चेत्) B2 4 Dn Ds D10 °तम (for °तर) — c) K4 B Dn D10 G4 क्षात्र (for क्षत्र-) D2 °प्राप्ते, D3.4 °ज्ञाय (for °ष्ठाय) — d) D2 क्षात्रजीविका, G4 क्षत्रजीवित, M2 °जीविता

6 a) K1.2 5 D1 6 7 9 transp लोके and नास्ति — c) D3.4 S मम प्रसादाद् (for मत्प्रसादात्स) K4 D2 च (for स) — d) D2 श्रेय°, D8 श्रेष्ट° (for श्रेयान्) K3 नान्य°; K5 D7 9 अन्य°; B1.2 नान्यद्, D2–4 नान्यो, D6 नान्ये, D3 चैव (for अन्यैर्) D3.4 धनुर्धर°, D6 °धरा°

7 Dn2 transp 7 and 8 — b) G2 क्रोधनो (for नास्तिको) K6 वा, D6 8 9 [ऽ]पि (for ऽथ) K6 च वा, D7 च य° (for शठ°)

8 Dn2 transp 7 and 8 — a) D3.4 हि (for ऽपि) — b) T G1.2 4 ऋच्छति (for इच्छति) — G3 om (hapl.) 8cd — c) K1.5 D6–9 नोद्य° (for चोद्य°) — d) T1 ऋच्छति (for इच्छति)

9 K5 om 9–22 (with colophon) — a) Dn1 D9 अप°; Cn उप- (as in text) T1 G1 4 ह्येव, T2 G5 एव, G2 एव, G3 M (except M4) ह्येव (for ह्येते) — b) B D5 वर्तमाने B D5 D10 [अ]प्यनु, T1 G1 4 (with hiatus) अपि (for ह्यनु) Ca d s cite अनु प्रिये — c) T2 G2 5 अहीनत्वाय — d) K4 दोषैर्, S (except T2 G3) दोषाद्, Cs as in text. D7 तु भरतोत्तम, G4 भारतसत्तम

10 K5 om. 10 (cf v.l. 9) — a) B3 तदुक्त, G2 विमुक्तः (for त्वमुक्तः) — d) B Dn2 Ds D1–4 10 °मन्यसे, G3 °पद्यमि

11 K5 om 11 (cf. v.l. 9) — a) B3 M3 एव (for एव) — b) T1 G3 5 M साहसाद् D10 कस्तितीर्षति — c) K4 D3.4 प्रदुष्ट°, D2 °मीनमकर, T2 G2 5 °मीनम-स्युग्र — d) Dn D3.4 6–9 गगावेग, T1 गाग वेगम् K1 (before corr.) Dn D3 4 6 8 9 अर्णव, K4 अध्वग°, D2 आप्लुवे, D10 प्लव°, Ca d n s उष्णगे (as in text)

12 K5 om 12 (cf. v.l. 9) — a) D2 G2 5 वासवेय, D3.4 7 M3–5 वाससेव, T1 G1 3 वाससेव, T2

C. 5. 4715
B. 5. 139. 12
K. 5. 129. 12

स्रजं त्यक्तामिव प्राप्य लोभाद्यौधिष्ठिरीं श्रियम् ॥ १२
द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम् ।
वनस्थमपि राज्यस्थः पाण्डवं कोऽतिजीवति ॥ १३
निदेशे यस्य राजानः सर्वे तिष्ठन्ति किंकराः ।
तमैलविलमासाद्य धर्मराजो व्यराजत ॥ १४
कुबेरसदनं प्राप्य ततो रत्नान्यवाप्य च ।
स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः ॥ १५
दत्तं हुतमधीतं च ब्राह्मणास्तर्पिता धनैः ।
आवयोर्गतमायुश्च कृतकृत्यौ च विद्धि नौ ॥ १६
त्वं तु हित्वा सुखं राज्यं मित्राणि च धनानि च ।
विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि ॥ १७
द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी ।
तपोघोरव्रता देवी न त्वं जेष्यसि पाण्डवम् ॥ १८
मन्त्री जनार्दनो यस्य भ्राता यस्य धनंजयः ।
सर्वशस्त्रभृतां श्रेष्ठं कथं जेष्यसि पाण्डवम् ॥ १९
सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः ।
तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् ॥ २०
पुनरुक्तं च वक्ष्यामि यत्कार्यं भूतिमिच्छता ।
सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे ॥ २१
अलं युद्धेन तैर्वीरैः शाम्य त्वं कुरुवृद्धये ।
मा गमः ससुतामात्यः सबलश्च पराभवम् ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ समाप्तं भगवद्यानपर्व ॥

---

चासवे वै, $G_4$ वासवेह, Cnp वास एव (as in text) Ca d s cite वास° (as in text) $K_4$ $D_6$ यथा हित्वा, B $D_5$ $D_{10}$ यथा त्यक्त, $D_1$ हिताय त्व, $D_3$ M (except $M_1$) यथा हि त्वा, $D_{8\ 4\ 7}$ त($D_7$ य)थासि त्व, $T_2$ यथाग्य त्व (for यथा हि त्व). Ca. d cite यथा, Cs यथा त्व, Cnp त्यक्त. — $^b$) $Dn_1$ Cs आवृण्वान°, S प्रवृ°, Ca d प्रावृ° (as in text) $B_{8\ 6}$ $D_1$ [अ]भि-; Dn $D_{8\ 4\ 6}$ [अ]र-; $D_5$ $D_{8\ 10}$ $T_2$ न, $G_2$ [अ]नु-; Ca d अद्य (as in text) — $^c$) $D_3$ त्यक्त्वा श्रिय, Ca त्यक्तामिव (as in text) — $^d$) $T_2$ $G_2$ यौधिष्ठिरश्रिय, Ca d s as in text

13 $K_5$ om 13 (cf v l 9) — $^b$) $D_2$ $G_2$ स्वायुध. — $^c$) $D_8$ इव (for अपि) $K_1$ $D_8$ $M_{1\ 2}$ राज्यस्थं, $K_4$ राजान — $^d$) $K_4$ $D_7$ $G_{2\ 5}$ $M_{1\ 2\ 4}$ (inf lin) जिगीषति, B Dn $D_5$ $D_{10}$ विजेष्यति ($B_6$ °ते), $D_{1\ 6\ 8\ 9}$ $G_4$ [ऽ]नुजीवति, $D_2$ जिजीषति, $D_{3\ 4}$ [ऽ]नुजेष्यति, $G_1$ गिजीर्षति, $M_{3-5}$ हि जीवति (for ऽतिजीवति as in $K_{1-3}$ T $G_3$)

14 $K_5$ om. 14 (cf v l 9) — $^c$) $K_{1\ 2}$ $D_{7\ 9}$ ऐडविडम्, $D_1$ ऐडमिडम्, $D_5$ धनजयम्, S ऐळि($T_2$ $G_3$ °ळ)विळिम् ($T_1$ °वळिम्, $G_5$ °त्रिळम्) (for ऐलविलम्) — $^d$) $K_{1\ 2}$ $D_9$ व्यजायत, $K_3$ $G_3$ व्यरोचत, $B_6$ [ऽ]भ्यराजत, $D_2$ विराजते, $T_1$ $G_{1\ 4\ 5}$ $M_1$(sup lin) $_2$ व्यरोचत; $T_2$ $G_2$ $M_{1\ 3-5}$ [ऽ]भ्यरोचत, Cs व्यराजत (as in text)

15 $K_5$ om 15 (cf. v.l. 9) — $^c$) $G_5$ स्थितम् (for स्फीतम्) $D_5$ $D_8$ $G_3$ आक्रमते (for आक्रम्य ते)

16 $K_5$ om 16 (cf. v.l. 9). — $^a$) $K_4$ $D_{8\ 4}$ $G_5$ इष्ट (for दत्तं) T G (except $G_3$) भुक्तम् (for हुतम्) — $^d$) $K_{1\ 2}$ $Dn_1$ $D_{7-9}$ हि (for च)

17 $K_5$ om 17 (cf v l. 9) — $^a$) $D_7$ न हित्वा च (for त्वं तु हित्वा) $D_{7-9}$ transp हित्वा and राज्य — $^d$) $B_{1\ 3}$ आसवान् (for आप्स्यसि) $G_3$ महद्भयमवाप्स्यसि

18 $K_5$ om 18 (cf v l 9) — $^a$) $D_{8\ 4}$ यत्र (for यस्य) — $^c$) $K_{1-3}$ $D_9$ तपो घोर रता, $D_7$ तपो घोरव्रता, S (except $G_{3\ 4}$) तथा घोर° — $^d$) B Dn $D_5$ $D_{10}$ कथं; $D_{3.4}$ त्वं न (for न त्वं)

19 $K_5$ om 19 (cf v l 9), $D_2$ om (hapl) 19 $K_1$ $G_4$ transp 19 and 20 — $^b$) $G_3$ योद्धा (for भ्राता) — $^c$) $K_3$ S (except $G_4$) सर्वधर्म° $K_4$ $Dn_1$ श्रेष्ठ, B (except $B_2$) $D_5$ $D_{8\ 4\ 6\ 10}$ श्रेष्ठ° — $^d$) = $20^d$ $K_4$ $D_7$ S न त्वं (for कथं); cf $18^d$ $K_4$ जयसि (for जेष्यसि)

21 $K_5$ om 20 (cf v l 9) — $^b$) $G_1$ सत्य (for कार्यं).

22 $K_5$ om 22 (cf v.l 9), — $^a$) $K_{1.2}$ $B_1$ $D_{2\ 7-9}$ ते (for तैर्) — $^b$) S शाम्यस्व (for शाम्य त्वं). $B_{1\ 2\ 6}$ $D_{2-4\ 7}$ S कुल° — $^{cd}$) $D_{3\ 4}$ transp सुत and -बल-, and read यमक्षय (for पराभवम्) $D_2$ त्वं (for च) S समित्रश्च यमक्षय (for $^d$)

Colophon missing in $D_5$, $K_5$ om. it — *Sub-parvan* K ($K_5$ om) B Dn $D_5$ $D_{1\ 2\ 6-9}$ $G_{1,4}$ M

# १३८

धृतराष्ट्र उवाच ।
राजपुत्रैः परिवृतस्तथामात्यैश्च संजय ।
उपारोप्य रथे कर्णं निर्यातो मधुसूदनः ॥ १
किमब्रवीद्रथोपस्थे राधेयं परवीरहा ।
कानि सान्त्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान् ॥ २
ओघमेघस्वनः काले यत्कृष्णः कर्णमब्रवीत् ।
मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व संजय ॥ ३
संजय उवाच ।
आनुपूर्व्येण वाक्यानि श्लक्ष्णानि च मृदूनि च ।
प्रियाणि धर्मयुक्तानि सत्यानि च हितानि च ॥ ४
हृदयग्रहणीयानि राधेयं मधुसूदनः ।
यान्यब्रवीदमेयात्मा तानि मे शृणु भारत ॥ ५
वासुदेव उवाच ।
उपासितास्ते राधेय ब्राह्मणा वेदपारगाः ।
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ॥ ६
त्वमेव कर्ण जानासि वेदवादान्सनातनान् ।
त्वं ह्येव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ॥ ७
कानीनश्च सहोढश्च कन्यायां यश्च जायते ।

C. 5. 4733
B. 5. 140. 8
K. 5. 140. 3

मगवद्यान, D10 °वद्यागमन, T1 G2 °वद्मतियान° to it K1-4 B1. 2 4 Dn Ds D1 2 6-9 add समाप्त — *Adhy name* G5 M भीष्मद्रोणवाक्य (M4 °द्रोणवचन) — *Adhy no* (figures, words or both) D6 29(=129), D7 T2 M 140 (M4 139), T1 G2 4 5 141, G1 142, G3 138 — *S'loka no* Dn1 22

☞ Although a few MSS regard the following section (adhy 138–148) as a continuation of मगवद्यान (a practice which is followed by all old printed ed except that of P P S Sastri), most of our MSS indicate the end of this sub-parvan at adhy 137 The name of the following sub-parvan appears to be given as कर्णविवाद in the Parvasamgraha summary of the Ādiparvan (1 2 52), which may be a form (like निर्याण) shortened, *metri causa*, or misunderstood, for कर्णोपनिवाद, given by most of our MSS, while the S form कर्णोपजाप may have been a paraphrase The Parvasamgraha does not authorize a further division of this section into a कर्णकुन्तीसमागम given by some of our MSS

## 138

1 T G M1 (by corr) जनमेजय° (for धृतराष्ट्र उ°) — $^b$) T G सह (for तथा) K3 B (except B5) Dn Ds D2-4. 10 भृत्यै° (for [अ]मात्यै°) T G M1 (*inf lin*) सत्तम (T2 °म°) (for संजय) — $^c$) D2 तथा°, G4 तदा°, M1 (*sup lin* as in text) समा° (for उपा°) D8 S रथं (for रथे) — $^d$) D8 4 S निर्ययौ (for °र्यातो)

2 $^a$) Dn Ds D10 अमेयात्मा, Ca रथोपस्थे (as in text) — K5 om 2$^c$–3$^d$ — $^c$) D2-4 सूक्तानि (for सान्त्वानि) — $^d$) K1. 2 D7-9 [ऽ]भियुक्तवान्, D8 4 समाचरत् (for प्रयुक्°)

3 K5 om 3 (cf. v l. 2) — $^a$) K (K5 om) B4 D उद्यन्°(D2 अन्य°), G4 दीर्घ°; Ca ओव (as in text) — $^b$) K4 B1 2 4 Dn Ds D2-4. 10 कृष्ण° कर्णमथाब्रवीत् — $^d$) T G सर्वशः (G3 सत्तम), M1 (by corr) पृच्छत (for संजय)

4 T G M1 (by corr) वैशंपायन° (for संजय उ°) — $^a$) Some MSS आनुपूर्वेण B3 Ds D10 वक्ष्यामि (for वाक्यानि) — $^b$) K3 B Dn2 D1. 6 7 10 Ca तीक्ष्णानि, Cs श्ल° (as in text) — D8 4 om. (hapl.) 4$^{cd}$ — $^d$) K1 D6 8 9 शास्त्रा° (for सत्या°)

5 $^a$) D1 G4 °ग्राहणीयानि, D8 4 °ग्रहणार्थानि, Ca as in text — $^c$) D8 4 अदीनात्मा (for अमेया°) — $^d$) D8 4 बुध्यस्व (for मे शृणु)

6 D8 4 कृष्ण उ°, T G श्रीभगवान् (for वासुदेव उ°) — $^c$) D1 तत्त्वार्था°, D2 तत्त्वार्थ, G3 तथा ते, G5 तत्मार्थं (for तत्त्वार्थं) Ds D1. 2 Cap परिदृष्टा (D2 °ष्ट°), Ca as in text — $^d$) D1. 2 T1 G1. 5 नियमेन K1 2 D2 7-9 T2 G5 M अन(*or* अनु)सूयता, D8 4 °सूयका°

7 $^b$) D2 वेदशास्त्रानुशासनान्, D8 4 वेदधर्मान्सना°, S वेदवेदागमहिता (T1 G1. 4 °त, G5 ता) — $^c$) B (except B3) Dn Ds D1-4. 9 10 G2 om हि (cf $^a$) B3 सर्वं° (for धर्म°) — $^d$) D2 कृत्स्नेषु K1. 2 D7 9 परिनिश्चित°

8 $^a$) G1 सहोढो य° — $^b$) B3. 5 स्वैरिण्यां, T2 (by

C. 5. 4733
B. 5. 140. 8
K. 5. 140. 8

वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ८
सोऽसि कर्ण तथा जातः पाण्डोः पुत्रोऽसि धर्मतः ।
निग्रहाद्धर्मशास्त्राणामेहि राजा भविष्यसि ॥ ९
पितृपक्षे हि ते पार्था मातृपक्षे च वृष्णयः ।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ १०
मया सार्धमितो यातमद्य त्वां तात पाण्डवाः ।
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ॥ ११
पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः ।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ॥ १२
राजानो राजपुत्राश्च पाण्डवार्थे समागताः ।
पादौ तव ग्रहीष्यन्ति सर्वे चान्धकवृष्णयः ॥ १३
हिरण्मयांश्च ते कुम्भाव्राजतान्पार्थिवांस्तथा ।
ओषध्यः सर्वबीजानि सर्वरत्नानि वीरुधः ॥ १४
राजन्या राजकन्याश्चाप्यानयन्त्वभिषेचनम् ।
षष्ठे च त्वां तथा काले द्रौपद्युपगमिष्यति ॥ १५
अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः ।
पुरोहितः पाण्डवानां व्याघ्रचर्मण्यवस्थितम् ॥ १६
तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः ।
द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा ॥ १७
अहं च त्वाभिषेक्ष्यामि राजानं पृथिवीपतिम् ।
युवराजोऽस्तु ते राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १८
गृहीत्वा व्यजनं श्वेतं धर्मात्मा संशितव्रतः ।
उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः ॥ १९
छत्रं च ते महच्छ्वेतं भीमसेनो महाबलः ।

---

corr ) M8 4 (*inf lin* as in text) 5 जारिण्यां; Ca 8 कन्याया (as in text) D1 2 प्र-; Ca 8 च (as in text)

9 a) K1 2 5 Dn1 D6-9 पृथा-; Ca तया (as in text) — b) Cf 5 139 2b and 4b K1 2 D8 4 9 पांडु-; Ca 8 पाण्डो (as in text) — c) = 5 139 2c S (except G1) निश्चयात्, Ca 8 निग्रहात् (as in text) — d) G1 इह, Ca एहि (as in text)

10 a) K4 D1 2 °पक्षेण, B (except B3) Dn Ds D8 4 6 10 T G1 4 °पक्षे च (for °पक्षे हि) D8 4 कर्ण (for पार्था°) — b) B5 D9 °पक्षे हि; D1 2 °पक्षेण (for °पक्षे च) — c) D8 4 इह (for अभि-) — d) K4 5 D7 T2 G2 5 भरत° (for पुरुष°)

11 a) K5 D7 M8 4 (*inf lin* as in text) 5 यातम् (for यातम्) — b) T1 G8 4 M त्वा

12 a) = 13c D1 ते प्र- (for तव) — G5 om. (hapl ) 12b–13c

13 G5 om 13abc (cf v l 12) — b) D2 पार्थिवाश्च; T G1 3 4 पाडवैश्च; G2 M पाड(M4 याध)वाश्च (for पाण्डवार्थे). — K4 om 13c–14b — c) = 12a K1 2 5 D1 2 7 9 transp पादौ and तव — d) = 23d

14 K4 om 14ab (cf. v l 13) — cd) K2 D8 4 T G2 5 ओषधी. (for °ध्यः) T1 G1 4 transp °बीजानि and °रत्नानि

15 a) T1 G1 4 राजानो (for राजन्या) K1 3 5 D9 M1 (*inf lin* ) °पुत्रा°, K2 °पुत्र° (for °कन्या°) — b) T1 G1 4 5 स्नानयतु, T2 स्वानयतु, G2 साधयतु (for [अ]प्यानयन्तु) K1.4 5 B Dn2 D1-4 6 आभिषेचन. — D6 om 15cd. — c) B1-3 Dn Ds D1 3 4 8 त्वां च (by transp ) K1 2 5 D7 9 सद्य, K3 तत्र (for तथा) D10 षष्ठे यथावस्थां काले — d) D2 अपि, T1 G1 4 अभि- (for उप ) — After 15, B Dn Ds D2-3 10 ins. :

521* अग्निं जुहोतु वै धौम्यः संशितात्मा द्विजोत्तमः ।

[ D2 6 8 ते (for वै) A few MSS शंसितात्मा D6 8 जितेन्द्रिय (for द्विजो°) ]

16 a) D8 अभिषेक्ष्यतु — b) Dn1 D9 G (except G1) °वैद्या , D3.4 °मंत्रे , D6 8 10 °विद्या; Ca °वैद्या (as in text) — K3 om 16c–17d — c) D3-4 पुरोहिता — d) B3 अवस्थित°, T G2 5 M8-5 उपस्थित (for अव°) K4 B1 3 Dn D6 8 मल्लकर्मण्यवस्थित° (B1 5 D6 °त ); B8 व्याघ्रचर्मपरिस्थित; D2-4 व्याघ्रचर्मण्यवस्थित

17 K3 om 17 (cf v.l 16) — ab) D3 4 अद्य त्वामभिषिंचतु भ्रातरः पंच पाडवा — c) S च पंचैव (for तथा पञ्च) — d) Some MSS पंचाला°

18 a) D1 3 4 अहं त्वामभिषिंचामि Ca cites त्वा (as in text) — c) Dn1 G3-5 M4 युवराजस्तु ते; D1 °राजो ततो (sic) K1 2 5 D7 9 राज्ये (for राजा) — d) = 19d K3 4 B Dn Ds D1 2 6 8 10 धर्म° (for कुन्ती°)

19 K5 D8 4 om (hapl ) 19, Dn1 reads it in marg — b) K1 2 D7 8 10 शंसित° — c) K1 2 अभि- (for अनु ) S आरोहतु रथं तेद्य — d) = 18d

20 a) K2 ते सु ; G4 ते च (by transp ) K3 5 B (except B3) Dn Ds D1 3 4 6 8 9 M2 महाश्वेतं; D3 महद्दिव्य, D10 विमलश्वेत (for महच्छ्वेत) — c) K3 4 B Dn Ds1 D1 3 4 6 8 10 M8 कौंतेयो, T1 G1 4 ते मूर्ध्नि (for कौन्तेय) — d) K3 B Dn Ds D1 6 8 10 M8 धारयिष्यति मूर्धनि; K4 D3 4 धारयिष्यति वीर्यवान्

अभिषिक्तस्य कौन्तेय कौन्तेयो धारयिष्यति ॥ २०
किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणम् ।
रथं श्वेतहयैर्युक्तमर्जुनो वाहयिष्यति ॥ २१
अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति ।
नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये ॥ २२
पाञ्चालास्त्वानुयास्यन्ति शिखण्डी च महारथः ।
अहं च त्वानुयास्यामि सर्वे चान्धकवृष्णयः ।
दाशार्हाः परिवारास्ते दाशार्णाश्च विशां पते ॥ २३
भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः ।
जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः ॥ २४
पुरोगमाश्च ते सन्तु द्रविडाः सह कुन्तलैः ।
आन्ध्रास्तालचराश्चैव चूचुपा वेणुपास्तथा ॥ २५
स्तुवन्तु त्वाद्य बहुशः स्तुतिभिः सूतमागधाः ।
विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः ॥ २६
स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः ।
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय ॥ २७
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः ॥ २८

C. 5. 4734
B. 5. 140. 29
K. 5. 140. 29

इति श्रीमहाभारते उद्योगपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

---

21 K5 om 21-28 — b) = 5 81 18b, 179 10d D1 T2 G2 5 M3 4 (inf lin as in text) 5 °वारित, M2 °चारण

22 K5 om 22 (cf v.l 21), D3.4 G3 4 om. (hapl.) 22cd — d) D3 4 ते, S वै (for ये)

23 K5 om. 23 (cf v l. 21) — a) Some MSS पचाला K3 4 B (except B5) Dn Ds D2-4 6 8 10 G5 चानु°, T2 G2-4 M3-5 त्वनु° (for त्वानु°) — b) K1-3 D7 महानल°, D8 °रथा — c) K1 2 D7 9 त्वा च (for च त्वा) — d) = 13d — e) K1 D9 परिवारस्ते, T1 सपरिवाराश्च (hypermetric!), G1.4 सपरीवारा (for परिवारास्ते) — f) Dn1 D2-4 7 G1.2 M दशार्णा°, G4 दशार्हा

24 K5 om. 24 (cf v l. 21) — b) = 28d Ds2 D3.4 transp सह and पाण्डवैः — After 24ab, K4 Dn1 D8 ins

522* आरोह तु रथं पार्थैर्भ्रातृभिः सह पाण्डवैः ।

— c) D8 10 जप्यैर्, G5 जप K (K5 om) B1.4 D2-4 7 9 T G (except G3) प्रयुक्त- — d) K (K5 om.) D1. 2 7 9 पृथक्पृथक्

25 K5 om. 25 (cf v l. 21) — a) G3 पुरेचरा°, G5 पुरःसरा, M1 (inf lin as in text) पुरोभवा°, M2-5 पुरोजवा°, Ca as in text — b) D1 द्रविमा, D3 4 9 द्राविडा, S द्रमिला (T1 °डा, G3 °का) — c) K1 2 B2 Dn1 Ds D1.7 9 M अथा° Ca cites आन्ध्रादय K1 D2 7 9 तालघरा°, K2 तलघरा°, B2 5 D3 4 तालवना°, B3 तालवला°, D1 M5 तलचरा°; T G1 2 4 तालवरा°, G3 तारपरा°, G5 M2 तालपरा°, M1 तल्वरा°, M3 4 तल्परा° — d) K1 D9 भूनूपा, K2 भूनूपा, K4 स्तुतपा; Dn1 चुचूपा, Ds चुचुपा, D2 10 चुचुपा, D3 4 चूचुपा; D7 धानुष्का, D8 भूमिपा, G3 चुचुपा, G4 चुचपा, M2 चूचवा! K1.2 D7 9 वेत्रपा°, K4 वेणपा°, Dn1 Ds रेणुपा°; D1 वणपा°, D2 वर्णपा°, T1 G1.4 वेणुका°, T2 G2 5 M3 वैणवा°, M5 वैणुना°

26 K5 om 26 (cf. v l 21) — a) K3 4 B1.3.4 Dn Ds D1.6 त्वा च, D3 4 त्वा सु (for त्वाद्य) K3 4 B1 3 4 Dn Ds D3.4.6 8 बहुभिः (for °शः) D10 त्वा मस्तुवतु स्तुतिभिः — b) D10 बहु° (for स्तुति°) — c) K3 D7 8 10 G1.5 च सुषेणस्य, D3 4 ते सुषे°, T2 G2 वै सुषे°, Ca वसुषे° (as in text) — d) S घोषयिष्यति पाढवा

28 K5 om 28 (cf. v l 21) — a) K1.2 Ds D7 9 च (for ते) — b) K1.2 D9 व्यथता — c) D3 4 चापि, D10 कर्ण (for चैव) K1 ते चास्तु — d) = 24d D6 8 सह बाधवैः, S (except T2 G3) पाढवैः सह (by transp )

Colophon. D5 missing — *Sub-parvan* K1.2 D9 कर्णोपत्तिवाद, K3 5 B Dn Ds D1.2 6 7 10 कर्णोपनिवाद (D2 °निपद), D3 4 M भगवद्यान, T1 G1 4 °वध्यतियान to it T1 G1 M add कर्णोपजाप — *Adhy name* G5 कर्णजन्मकथन, M भगवद्वाक्य — *Adhy no* (figures, words or both) D6 30 (= 130), D7 T2 M 141 (M4 140), T1 G2 4.5 142, G1 143, G3 139. — *S'loka no* Dn2 29

# १३९

C. 5. 4755
B. 5. 141. 1
K. 5. 141. 1

कर्ण उवाच ।

असंशयं सौहृदान्मे प्रणयाच्चात्थ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ १
सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः ।
निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे ॥ २
कन्या गर्भं समाधत्त भास्करान्मां जनार्दन ।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥ ३
सोऽस्मि कृष्ण तथा जातः पाण्डोः पुत्रोऽस्मि धर्मतः ।
कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा ॥ ४
सूतो हि मामधिरथो दृष्ट्वैव *अनयद्गृहान् ।
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ॥ ५
मत्स्नेहाच्चैव राधायाः सद्यः क्षीरमवातरत् ।
सा मे मूत्रं पुरीषं च प्रतिजग्राह माधव ॥ ६
तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम् ।
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ॥ ७
तथा मामभिजानाति सूतश्चाधिरथः सुतम् ।
पितरं चाभिजानामि तमहं सौहृदात्सदा ॥ ८
स हि मे जातकर्मादि कारयामास माधव ।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ९
नाम मे वसुषेणेति कारयामास वै द्विजैः ।
भार्याश्चोढा मम प्राप्ते यौवने तेन केशव ॥ १०
तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन ।

---

## 139

1 $^{a}$) T1 G1 M1–3 5 सौहृदान्मा, T2 G3 5 °दान्मा, G2 M4 °दात्मा — $^{b}$) K1 2 5 D7 om च. K4 D2 चाह, D3 4 8 चापि, D6 चानु, D9 G4 वाथ (for चात्थ) — $^{c}$) Ds2 सत्येन चैव, D10 सुसखित्वेन. — $^{d}$) K1 3 Dn Ds2 D1–4 6 8 9 T1 G3 4 श्रेयस्कामस्तथैव च, K2 °स्कामेन चैव हि, K5 °सा मा तथैव च, T2 G1 °स्कामितयैव च, G2 5 °स्कामी तथैव च

2 $^{a}$) D10 एतद्धि, M4 6 चैव वि- (for चैवाभि-) — $^{b}$) = $4^{b}$ Cf 5 138 $9^{b}$ — D9 om (hapl) $2^{c}$–$4^{b}$. — $^{c}$) = 5 138 $9^{c}$ K3 D3 4 T G (except G3) M1 निश्रयात्, Ca निग्रहात् (as in text)

3 D9 om 3 (cf v l. 2) — $^{a}$) T2 G2 समादत्ते — $^{b}$) T1 G3 4 M1 2 4 मा (for मां) D10 पृथा हरे (for जनार्दन) — $^{c}$) K5 D7 चैव, D10 एव (for चैव) — $^{d}$) M (except M2) मा (for मां) D6 8 जातमात्रं व्यसर्जयत्

4 D3 4 9 om $4^{ab}$ (for D9 cf. v l. 2) With $4^{ab}$ cf. 5 138 $9^{ab}$ — $^{a}$) T2 G2 तदा, Ca तथा (as in text) — $^{b}$) = $2^{b}$ — $^{c}$) T G (except G3) अवाकीर्ण , Ca s as in text. — $^{d}$) T G M1. 2 कुलजस्, Ca s कुशल (as in text)

5 $^{a}$) S (except G3 M1) [ऽ]पि (for हि) K3 नाम (for माम्) T G (except G3) अतिरथ° — $^{b}$) K1 2 B3 Dn Ds D7 9 10 [अ]भ्यनयत्, K3 T2 G2 5 M4 [अ]प्यन°, K4 D8 त्वन°, K5 B1 2 4 5 D1–4 T1 M1 [अ]भ्यान°, D6 स्वान°, G3 ह्यन°, M2 3 5 [अ]प्यान° (for *अनयद्) G1 4 दृष्ट्वाभसि मा (G1 वा) सुत — $^{c}$) D10 स तु (for चैव) S राधायै स च मा प्रा°

6 $^{a}$) D10 om च B2 4 Dn2 Ds D10 T1 राधाया — $^{b}$) S (except G3) अवापत(G2 °सर)त् (for अवातरत्) — $^{c}$) D3 4 पुरीषं मूत्रं च (by transp) — $^{d}$) D3 4 S केशव (for माधव)

7 $^{a}$) D5 तस्य (for तस्याः) — $^{d}$) D2 सततं श्रवणे (by transp)

8 $^{a}$) G4 ततो (for तथा) — $^{b}$) T1 G3 5 अति° (for अधि°) — $^{c}$) S च वि- (for चाभि) — $^{d}$) D1 T G1 2 4 5 M तथा, D6 7 G3 तदा (for सदा)

9 $^{a}$) D3 4 °कर्माणि — $^{b}$) K3 केशव, D3 4 S धर्मतः (for माधव) — D1 om (?hapl) $9^{c}$–$10^{d}$

10 D1 om 10 (cf v l 9), G2 om (hapl) $10^{a}$–$11^{b}$ — $^{a}$) K3 4 B Dn2 Ds D6 T2 G4 वै, K5 [ए]व (for मे). Dn1 D7 8 T1 नाम चैव सुषेणेति, D10 मम नाम सुषेणेति — $^{b}$) K1 2 5 D7 9 स द्विजैः, K3 च द्विजैः, T2 धर्मतः — $^{c}$) G4 भार्याश्चाद्धा, M भार्यां वोढा K2 3 B1 3 4 D3 4 6 8 10 मया, D2 पुनः (for मम) — $^{d}$) K1–3 5 D2 7 9 माधव (for केशव) K4 B Dn Ds D3 4 6 8 10 यौवने त(D3 4 स)त्परिग्रहात्

11 G2 om $11^{ab}$ (cf v l 10) In Dn2 stanzas 11 to 55 are lost on a missing fol — $^{a}$) K5 मे जाता , D3 (m as in text) 4 दयिता , T G2 5 पुत्र्यश्च (for पौत्राश्च) — $^{b}$) K5 blank.

12 Dn2 missing (cf v l 11) — $^{d}$) N (Dn2

तासु मे हृदयं कृष्ण संजातं कामबन्धनम् ॥ ११
न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
हर्षाद्भयाद्वा गोविन्द अनृतं वक्तुमुत्सहे ॥ १२
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् ।
मया त्रयोदश समा भुक्तं राज्यमकण्टकम् ॥ १३
इष्टं च बहुभिर्यज्ञैः सह सूतैर्मयासकृत् ।
आवाहाश्च विवाहाश्च सह सूतैः कृता मया ॥ १४
मां च कृष्ण समाश्रित्य कृतः शस्त्रसमुद्यमः ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ॥ १५
तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत ।
वृतवान्परमं हृष्टः प्रतीपं सव्यसाचिनः ॥ १६
वधाद्बन्धाद्भयाद्वापि लोभाद्वापि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥ १७

यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना ।
अकीर्तिः स्याद्धृषीकेश मम पार्थस्य चोभयोः ॥ १८
असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन ।
सर्वे च पाण्डवाः कुर्युस्त्वद्वशित्वान्न संशयः ॥ १९
मन्त्रस्य नियमं कुर्यास्त्वमत्र पुरुषोत्तम ।
एतदत्र हितं मन्ये सर्वयादवनन्दन ॥ २०
यदि जानाति मां राजा धर्मात्मा संशितव्रतः ।
कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति ॥ २१
प्राप्य चापि महद्राज्यं तदहं मधुसूदन ।
स्फीतं दुर्योधनायैव संप्रदद्यामरिंदम ॥ २२
स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः ।
नेता यस्य हृषीकेशो योद्धा यस्य धनंजयः ॥ २३
पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथः ।

C. 5. 4778
B. 5. 141. 24
K. 5. 141. 24

---

missing) मिथ्याकर्तुं तदु(Dn1 D9 तमु; D3 4 समु)त्सहे

14 Dn2 missing (cf. v l 11) — a) S विविधैर् (for बहुभिर्) — b) Ds D10 पुत्रै॰ (for सूतै॰) — c) K1. 2 D9 आवाहा अतिवाहाश्च, B5 आहाराश्च विहाराश्च, G4 M2 आवाहश्च विवाहश्च Ca s cite आवाहा॰ (as in text), Cnp आवापा — d) S सार्धं (for सह) K5 B Dn1 Ds D1. 6 8 10 T1 मया कृता (by transp )

15 Dn2 missing (cf v l 11) — a) K3 B Dn1 Ds D1. 6 8 10 समासाद्य, D9 समासृत्य, S व्यपाश्रित्य (for समाश्रित्य) — d) D1 T1 G3 4 चैव (for चापि)

16 Dn2 missing (cf v.l. 11) K5 om 16 — a) D3. 4 द्वैरथेन, G3 M (except M1) द्वैरथे मा — b) D1 M1 अच्युत, D7 अप्युत (for अच्युत) D3 4 प्रत्युद्याता धनजय॰ — c) K1. 2 घृत॰, B2 Dn1 D2–4 6 8 9 कृत॰ (for वृत॰) T1 G1. 4 M समरे (for परम) B D (except D2 7, Dn2 missing) कृष्ण (for हृष्ट॰) T2 G2 5 वृतवान्धार्तराष्ट्रेसौ, G3 वृतवान्स ह सहृष्ट॰ — d) B5 M Ca प्रतिघ, Ds D10 परिघ, D2 प्रतिज्ञा D1 M4 सव्यसाचिना

17 Dn2 missing (cf v l 11) — a) K4 लोभाद्भयाद्वधाद्वापि, S भयाद्वधा(G3 M वधाद्भया)द्वा वधाद्वा — b) K4 S त्रैलोक्याद्वा (for लोभाद्वापि) — c) G1 4 5 M2 वक्तु (for कर्तुं), cf $12^{d}$

18 Dn2 missing (cf v l 11) K5 om $18^{ab}$ — a) D10 त्वद्य, S ह्यह (G5 ॰य) (for ह्यद्य) — b) D8 9 द्वैरथ्य

19 Dn2 missing (cf v l 11) K5 om $19^{ab}$ — a) K1–3 Ds D3 4. 7 8 हितार्थी यत्, G5 हि पार्थाय (for हितार्थाय) — b) D3 4 हि जनार्दन (for मधुसूदन) D6 om. (? hapl ) $19^{c}$–$20^{d}$ — c) K5 समर्थं (for सर्वं च) — d) B3 तत्र सिद्धा, D2 त्वद्धित च, Ca त्वद्वशित्वात् (as in text) S त्वद्वशा ह्यद्य पाण्डवा॰ (M1 by corr माधव)

20 Dn2 missing (cf v l 11) D6 om. 20 (cf v l. 19) — a) D3 4 मन्त्रे च, Ca मन्त्रस्य (as in text) K5 कुर्यात् (for कुर्यास्) — b) K3 D3. 4 त्वमस्य, K5 स्वमत्र, Dn1 स्वमत्र, T1 G1. 4 M1(*inf lin* ) 2 4 (*inf lin* ) स्वमद्य (for त्वमत्र) K1–3. 5 D1–4 7 9 पुरुषर्षभ, K4 B Dn1 Ds D8 10 मधुसूदन — D8 om (hapl ) $20^{cd}$ — c) K1–3 5 D3 4 7 9 एव (for अत्र) — d) K5 B Ds1 D1–4 10 T2 G2 M1 2 4 सर्वं (for सर्व-)

21 Dn2 missing (cf v l 11) K5 om 21–51 — a) Dn1 D6 M मा (for मां) — b) K4 विजितेन्द्रिय॰, B Ds D6 8 10 संयतेन्द्रिय॰, Dn1 संजितेन्द्रिय॰, D2 सर्वधर्मविद् (for संशित॰) — c) T G गर्भं (for पुत्रं) D3. 4 कुन्त्याश्च प्रथम पुत्र — d) D3 4 न च, G3 स न (by transp )

22 Dn2 missing (cf. v l 11) K5 *om* 22 (cf v l 21) — c) D3. 4 कृत्स्न, G4 स्थित (for स्फीत)

24 Dn2 missing (cf. v l 11) K5 om 24 (cf v l. 21) — a) B1. 2 4 D6 8 G1 राज्यं (for राष्ट्र). — b) D3. 4 भीमो यस्य (by transp ), S भीमसेनो.

C. 5. 4778 B. 5. 141. 24 K. 5. 141. 24

नकुलः सहदेवश्च द्रौपदेयाश्च माधव ॥ २४
उत्तमौजा युधामन्युः सत्यधर्मा च सोमकिः ।
चैद्यश्च चेकितानश्च शिखण्डी चापराजितः ॥ २५
इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा ।
इन्द्रायुधसवर्णश्च कुन्तिभोजो महारथः ॥ २६
मातुलो भीमसेनस्य सेनजिच्च महारथः ।
शङ्खः पुत्रो विराटस्य निधिस्त्वं च जनार्दन ॥ २७
महानयं कृष्ण कृतः क्षत्रस्य समुदानयः ।
राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु ॥ २८
धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति ।
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन ।
आध्वर्यवं च ते कृष्ण क्रतावस्मिन्भविष्यति ॥ २९
होता चैवात्र बीभत्सुः संनद्धः स कपिध्वजः ।
गाण्डीवं स्रुक्तथाज्यं च वीर्यं पुंसां भविष्यति ॥ ३०
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव ।
मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ॥ ३१
अनुयातश्च पितरमधिको वा पराक्रमे ।
ग्रावस्तोत्रं स सौभद्रः सम्यक्तत्र करिष्यति ॥ ३२
उद्गातात्र पुनर्भीमः प्रस्तोता सुमहाबलः ।
विनदन्स नरव्याघ्रो नागानीकान्तकृद्रणे ॥ ३३

---

D1 8 4 महाबल — d) G4 द्रौपदेया महारथा° — After 24, N (K5 om., Dn2 missing) ins

523* धृष्टद्युम्नश्च पाञ्चाल्यः सात्यकिश्च महारथ° ।

25 Dn2 missing (cf v.l 11) K5 om 25 (cf v.l 21), G4 om (hapl.) $25^a$–$27^b$ — b) K3 सर्वधर्मा, D2 9 सत्यवर्मा, D8 4 सत्यधर्म°, T2 G2 5 अभिमन्यु (for सत्यधर्मा) K2–4 B Dn1 Ds1 D3 4 6–8 सौमकि°, Ds2 S सोमकः, D9 कौशिक° — d) D1.9 शिखण्डी च महारथ

26 Dn2 missing (cf v.l 11) K5 om 26 (cf. v.l 21) G4 om 26 (cf v.l 25) — a) K1.2 °वर्णाभा°, K3 B1 5 D10 S (G4 om.) °वर्णाश्चा (T2 °वर्णाश्च also), Dn1 Ds D6 इन्द्रपावकव° — b) A few N MSS कैकया K1.2 4 D3 4 7 9 भ्रातर पञ्च कैकया° — c) K1–3 Ds2 D2–4 7–9 G3 °स(K1 °सु)वर्णाश्च, B (except B2) Ds1 D10 M2 °सवर्णाश्च°, T G1 2.5 M1(inf lin.) 3–5 °सवर्णाश्चा (T2 as in text also) — d) K4 B1 2 4 Dn1 Ds D6 8 10 °मना, B3 5 °बल, T G (G4 om.) M1 (inf lin. as in text) °रथा° (for °रथ°)

27 Dn2 missing (cf v.l 11) K5 om 27 (cf v.l 21), G4 om $27^{ab}$ (cf v.l 25) D1 *repeats* $26^{cd}$ for $27^{ab}$ — b) K2–4 B Dn1 Ds D1.6–10 श्येनजित्, T1 G3 M सेना° D7 तु (for च). K1–3 B (except B5) D2–4 7 9 महाबल° — c) Dn1 Ds2 D8 9 T1 G3 4 शङ्खपुत्रो D2 7 T2 G2–4 M4 विराटश्च — d) K1 विधिंवु (sic) च, K2 3 शिनिस्त्व च, D7 T1 G1.4 M1 (inf. lin.) विद्धि त्व च, D0 M विधिस्त्व (M1 2 °त्व) च, T2 G2 3 5 हैडिंबश्च (for निधिस्त्वं च)

28 Dn2 missing (cf v.l 11) K5 om 28 (cf v.l. 21) — a) D7 कृत° कृष्ण, T2 G2 5 कृष्ण हृत°; G3 कृष्ण तत° — b) K1 D0 क्षयश्च (for क्षत्रस्य) K1.2 D3 समुदायत°, D1 समुपानय°, D3 4 10m समुदालयः, D7 समुपागत, D9 सुहृदां यत, S समुदागम° (T2 G2 °हृत°), Ca 3 as in text — c) B3 राज्ञा प्राप्त, D3 4 G3 M प्राप्य राज्य, T G1 2 5 प्राप्तं राज्य (by transp) D3 4 महत् (for इद)

29 Dn2 missing (cf v.l. 11) — K5 om 29 (cf v.l 21) — a) K2 राजेंद्र (for वार्ष्णेय) — b) D3 4 क्षत्र° (for शस्त्र°) D2 om $29^{cd}$ — c) K1–3 यस्य (for अस्य) Dn1 D6 8 कर्ता, D7 9 10 नेता, T1 G1 3 4 हेतु, C3 वेत्ता (as in text) — e) K1 2 D9 अध्वर्युत्व, Ca आध्वर्यव (as in text)

30 Dn2 missing (cf v.l 11) K5 om 29 (cf. v.l 21) — a) D10 स्यादत्र (for चैवात्र) — c) G4 तदा (for तथा). K4 B2 3 5 Dn1 Ds D1.6.8 10 चाज्य, T1 M (M1 inf lin. as in text) स्रुक्स्य च (for [आ]ज्यं च) D3 4 गांडीव तु स्रुगाज्य च; D10 गाडीव स्रुक् च हव्य च — d) D9 transp वीर्यं and पुंसां

31 Dn2 missing (cf v.l 11) K5 om 31 (cf v.l. 21) — a) K2 D3.4 7 G3 ब्राह्मय (for ब्राह्म) — c) M3–5 तस्य (for तत्र) — d) D3 प्रयुक्ता°

32 Dn2 missing (cf v.l 11) K5 om 32 (cf v.l 21) — a) B1 Ds D2–4 6 7 10 T G1–3 5 M1 3–5 C3 °जात, D3 G4 M2 °ज्ञात°, Ca °यात (as in text) — c) K1 गीतिस्तोत्र, K2 4 B1 5 D1.2 7 Cn.3 गीतं स्तोत्रं, K3 गीत°, B1–3 Dn1 Ds D6 8–10 गाता स्तोत्र D2 7 च (for स) D3 4 आग्नीध्रस्तत्र सौभद्रः — d) B (except B2) D (except D7 9, Dn2 missing) G2 3 Cn 3 भवि° (for करि°)

33 Dn2 missing (cf v.l. 11). K5 om. 33 (cf. v.l. 21). — a) B2 D7 उद्गाता च, S उद्गातृत्व;

स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः ।
जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति ॥ ३४
शङ्खशब्दाः समुरजा भेर्यश्च मधुसूदन ।
उत्कृष्टसिंहनादाश्च सुब्रह्मण्यो भविष्यति ॥ ३५
नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ ।
शामित्रं तौ महावीर्यौ सम्यक्तत्र करिष्यतः ॥ ३६
कल्माषदण्डा गोविन्द विमला रथशक्तयः ।
यूपाः समुपकल्पन्तामस्मिन्यज्ञे जनार्दन ॥ ३७
कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः ।
तोमराः सोमकलशाः पवित्राणि धनूंषि च ॥ ३८
असयोऽत्र कपालानि पुरोडाशाः शिरांसि च ।
हविस्तु रुधिरं कृष्ण अस्मिन्यज्ञे भविष्यति ॥ ३९
इध्माः परिधयश्चैव शक्त्योऽथ विमला गदाः ।
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ ४०
इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ ४१
प्रातिप्रस्थानिकं कर्म सात्यकिः स करिष्यति ।
दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ॥ ४२ C. 5. 4737 B. 5. 141 42 K. 5. 141 42

---

Cs as in text Ca cites उद्गाता (as in text) — [b]) D2.4 तु, D8 T1 G1.4 च (for तु) D3 4 भविष्यति (for -महाबल). — [c]) D8 4 M1.2 विनर्दन्, T1 G1.4 M3-5 विमर्दन्, G- विनदन् (for विनदन्) D2 च (for स) — [d]) K3 नागानामवकृन्तने, T1 G3 4 M1.4 (inf lin) नागा(T1 °ना)नीकान्स(M1 °केम्प)कृन्तने, M3-5 नागानीकानहत्रणे

34 Dn2 missing (cf v.l. 11) K- D4 om. 34 (for K5 cf. v.l. 21), D8 reads it in marg — [a]) D10 स्वय तु (for स चैव) — [b]) G5 सम्यक् (for शश्वत्)

35 Dn2 missing (cf. v l. 11) K5 om 35 (cf v l 21) — [a]) D2 T1 G1.4 च (for स) S -पटहा (for -मुरजा) D1 शास्त्र शब्दा भेर्यश्च — [b]) D1 मुरजा (for भेर्यश्च) — [c]) K3 4 B1.2.4 D5 Dc-8 10 T G1.2 उत्कृष्ट°, B3 D1-4 G4 उत्कृष्टा, B- उत्कुष्टा, G3 5 उद्घुष्ट (G5 °ष्ट-) (for उत्कृष्ट) K4 B (except B3) Dn1 D5 D1.6 8 10 T1 G3 -सिंहनाद°, G4 सिंहनादान् — [d]) K1-3 D1.2 7 9 सुब्रह्मण्य, Ca s as in text

36 Dn2 missing (cf. v l. 11) K5 om 36 (cf. v.l. 21) — [a]) D7 आर्चिक्य, Ca शामित्रं (as in text) D2 च (for तौ) D10 शामित्राग्न्य S महामानौ — [d]) B (except B5) Ds2 T2 M3-- भवि° (for करि°) — After 36, D8 ins

524* रथध्वजाश्च कल्पन्ते यूपाश्च वितते क्रतौ ।

On the other hand S ins after 36

525* मैत्रावरुण आग्नीध्रौ महावीर्यौ भविष्यत॰ ।

37 Dn2 missing (cf v l 11) K5 om 37 (cf. v l. 21) — [a]) Ds2 D8 कल्माषदण्डो, Dc चित्रा सुदंडा, D9 कल्पा प्रदष्ट्रा; G4 कल्मापपाटो; Ca s as in text D9 समिध°, G4 धर्मात्मा (for गोविन्द) — [b]) S विपुला (T1 G1 विविधा) K1.2 4 B D (except D1.2, Dn2 missing) G3 Ca रथपंक्तय° — [c]) T G (except G4) M2 4 5 समनु (for समुप) B5 Dn1 Ds1 T1 G3 5 M -कल्प्यता — [d]) K4 D3 4 यथाविधि (for जनार्दन)

38 Dn2 missing (cf v l. 11) K5 om. 38 (cf. v.l 21) — [b]) K4 B3 5 D5 D1.3 4 7 10 °बृंहिता°, S वत्सदन्ताश्च बर्हिण°, Ca as in text — [d]) B स्रोत्राणि च, Ca d पवित्राणि (as in text)

39 Dn2 missing (cf v l. 11) K5 om. 39 (cf. v l. 21) — [a]) K1 D7 8 असवो (for असयो) — [d]) N (K5 om., Dn2 missing) तस्मिन् (for अस्मिन्)

40 Dn2 missing (cf v l 11) K5 om. 40 (cf v l. 21) — [b]) K4 B D (except D9, Dn2 missing) शक्त्यो (for शक्त्योऽथ) T1 विपुला (for विमला)

41 Dn2 missing (cf. v l. 11) K5 om 41 (cf v l 21) — [a]) K4 D3 4 इषवस्तु, D2 इषुधीश्च (for इषवोऽत्र) — [b]) T2 G1.2 गाडीवधन्विना — [c]) D5 °प्रमुक्ताश्च — [d]) D7 8 °प्रणोदिता°

42 Dn2 missing (cf. v.l. 11) K5 om 42 (cf v l 21) — [a]) K1.2 G4 M1 (inf lin) प्रातिप्र-(K1 °प्रा)स्थातृक, K4 B3 D2 8 G2 प्रतिप्रस्थानिक, B1.2 4.5 Dn1 D1 3 4 6 7 10 Ca प्रतिप्रास्थानिक, Ds1 G3 M4 प्रातिप्रास्थानिक, D9 प्रातिप्रस्थानिय, T1 प्रातिप्रस्थाकृत, G1.5 प्रतिप्रस्थातृक, M3.5 प्रातिप्रस्थानिक°, Cs प्रतिप्रास्थातृकं Cd cites प्रस्थानिकं. T2 प्रतिप्रस्थानि कर्माणि — M2 om (hapl.) from कर्म up to वैताने (in 44[c]) — [b]) K1 2 D2 7 9 G4 च, K3 4 B Dn1 D5 D1.3 4 6 8 10 G3 तु (for स) — [c]) M3-5 धर्मराजो (for धार्तराष्ट्रो) B5 D7 9 अथ, D3.4 G3 च (for अत्र) — [d]) T G अत्र (for अस्य)

43 Dn2 missing (cf. v l. 11) K5 M2 om. 43

C. 5. 4796
B. 5. 141. 43
K. 5. 141. 43

घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ ४३
दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् ।
वैताने कर्मणि तते जातो यः कृष्ण पावकात् ॥ ४४
यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान् ।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्येऽद्य कर्मणा ॥ ४५
यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ।
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥ ४६
दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः ।
आनर्दं नर्दतः सम्यक्तदा सुत्यं भविष्यति ॥ ४७
यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः ।
तदा यज्ञावसानं तद्भविष्यति जनार्दन ॥ ४८
दुर्योधनं यदा हन्ता भीमसेनो महाबलः ।
तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव ॥ ४९
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य संगताः ।
हतेश्वरा हतसुता हतनाथाश्च केशव ॥ ५०
गान्धार्या सह रोदन्त्यः श्वगृध्रकुरराकुले ।
स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ॥ ५१
विद्यावृद्धा वयोवृद्धाः क्षत्रियाः क्षत्रियर्षभ ।
वृथामृत्युं न कुर्वीरंस्त्वत्कृते मधुसूदन ॥ ५२
शस्त्रेण निधनं गच्छेत्समृद्धं क्षत्रमण्डलम् ।
कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ॥ ५३

(cf. v.l. 21, 42) — ᵇ) T1 G1.4 °रथ (for °बल°). — ᵈ) T1 विदिते, G4 गुतत्ते; Ca वितते (as in text)

44 Dn2 missing (cf. v.l. 11). K5 om. 44 (cf. v.l. 21), M2 om. up to वैताने (in ᶜ) (cf. v.l. 42). — ᵃ) D5.4 G4 दक्षिणास्‍ K3 D3.4.8 G4 तस्य (for त्वस्य). — ᵇ) D5(m as in text).4 धृतराष्ट्र° (for धृष्टद्युम्न). — ᶜ) = 1. 57. 91ᶜ. B3-5 Dn1 D5 D8.4.10 वैतानिके कर्मसुरे, D1 G3 वैताने कर्मवितते. — ᵈ) K4 B1 Ds3 G4 यत्, B2.5 अय (for य).

45 Dn2 missing (cf. v.l. 11). K5 om. 45 (cf. v.l. 21). — ᵃ) K3 M1.2 अमव! — G4 om. (hapl.) 45ᵇ-46ᵃ. — ᶜ) S (G4 om.) धार्तराष्ट्राणा — ᵈ) S (except M1.2, G4 om.) तप्स्ये (for तप्ये). B छकर्मणा, Dn1 [ऽ]घ कर्मणि (for ऽद्य कर्मणा). D9 तेन तापाय कर्मणे.

46 Dn2 missing (cf. v.l. 11). K5 om. 46 (cf. v.l. 21), G4 om. 46ᵃ (cf. v.l. 45). — ᵃ) B1.2.4 द्रष्टासि (for द्रक्ष्य°). — ᶜ) K3.4 B (except B3) Dn1 D1.6.8.10 T1 G4.5 पुन(D6.8 °र)श्चित्ति., Ca. d. s as in text. T2 G2 तथा (for तदा). K1 D2 वास्य, D3.4.6.8 तस्य (for चास्य). — ᵈ) K4 D7 G3 अस्य, T1 G1 स, M1-3.5 हि (for [अ]थ). T2 G2.5 M4 यज्ञस्तस्य भ°

47 Dn2 missing (cf. v.l. 11). K5 D9.7 (both latter hapl.) om. 47 (for K5 cf. v.l. 21), K3 reads 47 in marg. — ᵃ) K (K5 om.) D5 आनदान्नदत.; D3.4 विमर्दं रदत°, D9 आनदान्निर्वृत; T1 G1 आनर्दंन्नुद्यत° (T1 °ते), T2 आनंदन्नृद्यतः, G2 आमदन्नुद्यत°, G3 आनर्दं नृद्यत°, G4.5 आनर्दं नुद्यत°; M3.4 आनर्दं नदतः. B1.3.4 D3.4 तस्य, D2 तत्र (for सम्यक्). — ᵈ) K1.2 D3.9 सौम्य, K3.4 Dn1 D2 M3-5 सत्य, B1.3-5 शून्य, B2 Cn सूय; D5 Cs सूत्य, D3.4 शुद्ध, T G M1 (inf. lin. as in text) सुत्या, Ca. d. np. सुत्यं (as in text).

48 Dn2 missing (cf. v.l. 11). K5 om. 48 (cf. v.l. 21). — ᵇ) K1-3 B3 D2.7.9 घात° (for पात°). — ᶜ) D3.4 चै (for तत्).

49 Dn2 missing (cf. v.l. 11). K5 om. 49 (cf. v.l. 21). — ᶜ) B3 D7 S (except G1 M5) समाप्यते (for °प्स्यते).

50 Dn2 missing (cf. v.l. 11). K5 om. 50 (cf. v.l. 21). — ᵃᵇ) K4 चापि (for चैव). D3.4 transp. प्रस्नुषाश्चैव and धृतराष्ट्रस्य. D3.9 संमता° (for °गता°). — ᶜ) K2 D9 हतसुखा°, B3.5 Ds2 हतपुत्रा°, Dn1 Ds1 D1.6.8.10 नष्टपुत्रा (for हतसुता°). — ᵈ) Ds2 नष्टनाथा; D10 हतभोगा; S हतपौ(T1 G1.3.4 °पु)त्रा°, Ca. हतनाथा° (as in text).

51 Dn2 missing (cf. v.l. 11). K5 om. 51 (cf. v.l. 21). — ᵃ) D3.4 G3 रोदति; T1 तावत्य (for रोदन्त्य). B Dn1 D5 D6.10 रुदत्यः (D6 रोदती°) सह गांधार्या. — ᵇ) D3.4 स्वैरैर्बहुभिराकुलैः, T1 G1.4 °शकुनाकुले, T2 G2.5 M °नकुलावृते, G3 °नकुलायुते. — ᶜ) D3.4 यज्ञे च (for स यज्ञे).

52 Dn2 missing (cf. v.l. 11). K5 resumes! — ᵃ) K1 D9 तपो° (for वयो°). — ᵇ) K1.2.5 B3.5 D3.4.9 G3.4 °र्षभा (for °र्षभ). — ᶜ) D5 मिथ्या; Ca. d. s वृथा (as in text). — ᵈ) D3.4 तथा कुरु जनार्दन. Ca. d. cite त्वत्कृते (as in text).

53 Dn2 missing (cf. v.l. 11). — ᵇ) D10 S (except T1 G5) समग्र (for समृद्ध). — ᵈ) D3.4 माधव

तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम् ।
यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात् ॥ ५४
यावत्स्थास्यन्ति गिरयः सरितश्च जनार्दन ।
तावत्कीर्तिभवः शब्दः शाश्वतोऽयं भविष्यति ॥ ५५
ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम् ।
समागमेषु वार्ष्णेय क्षत्रियाणां यशोधरम् ॥ ५६
समुपानय कौन्तेयं युद्धाय मम केशव ।
मन्त्रसंवरणं कुर्वन्नित्यमेव परंतप ॥ ५७

इति श्रीमहाभारते उद्योगपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

## १४०

संजय उवाच ।
कर्णस्य वचनं श्रुत्वा केशवः परवीरहा ।
उवाच प्रहसन्वाक्यं स्मितपूर्वमिदं तदा ॥ १
अपि त्वां न तपेत्कर्ण राज्यलाभोपपादना ।
मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि ॥ २
ध्रुवो जयः पाण्डवानामितीदं

C. 5. 4615
B. 5. 142. 3
K. 5. 142. 3

(for केशव)

54 Dn2 missing (cf v l 11) — a) K2 तथापि, D1 तथा तु, D2 तथाय, D3 4 तन्मवं (for तदत्र) — b) K2 (m as in text) S यदनतर, D2 ममभीप्सित — c) G1 यातु (for यथा) K. transp कार्त्स्न्येन and वार्ष्णेय — d) D7 न क्षत्र स्वर्गमाप्नुयात, T2 G2 3 क्षत्रस्वर्गमनुत्तमं

55 Dn2 missing (cf. v l. 11) — a) D3 4 स्थास्यंति यावद् (by transp ) — c) T2 (as in text also) G2 तावत्कीर्तिर्भवेच्छित्ये, G1 तावत्कीर्तिभवा शब्दा Ca d cite कीर्तिभव — d) K. अन्य, D7 अय (for अयं)

56 Dn2 resumes ! — a) D3 कथयन्ति स्म (for °यिष्यन्ति) — c) K1 D5 °गतेषु, D1 °गताना (for °गमेषु) — d) K1 . B D (except D5) T1 G1 3 4 यशोधन, T2 G2 . समागम (for यशोधरम्) — After 56, D3 (marg ) 8 ins

526* तेषामायुश्च पुत्राश्च धन चैव भविष्यति ।
शृण्वता चापि मर्त्याना स्वर्गस्थान भविष्यति ।

57 a) D. 8 स त्वं पालय, S (except M1) समुदानय D3 4 कौतेयान् — b) D3 4 °य मधुसूदन — c) D5 कुर्याद् (for कुर्वन्)

Colophon. D5 missing — *Sub-parvan* K1-3 . B Dn D5 D1.2 6-8 10 कर्णोपनिवाद, K4 D2 कर्णपरिवाद, D3.4 कर्णोपयान, T1 G1.4 5 M भगवद्यान (T1 G1.4 °वद्यातियान), to which T1 G1 5 M add कर्णोपजाप — *Adhy name* M कर्णवाक्यं — *Adhy no* (figures words or both) D5 31 (=131), D7 T2 M 142 (M4 141), T1 G2 4 5 143, G1 144, G3 140 — *S'loka no* K5 23, Dn1 52, Dn2 57

### 140

1 T2 om the ref T1 G M1 वैश° (for संजय उ°) — a) D3 4 S (except T2 G3 5) तु वच° (for वचन)

2 Before 2, all MSS ins श्री (some om. श्री) भगवानुवाच (or भगवान्) — a) K5 D7 न त्वा, D1 त्वा तु, T1 G5 M त्वा न (for त्वा न) Ca d cite अपि त्वा, C8 अपि त्वा (as in text) K3 भवेद्, K4 B Dn D5 D3 4 6 8 लभेद्, D2 नयेद्, Ca d s तपेद् (as in text) D10 अपि त्वा लभते कर्ण — b) K1 5 D7 °भोगोपपादना, K3 B1.3.4 Dn D1 6 8 T1 G. °लम्भोपपादनं, B2 5 D5 D2-4 10 °लम्भोपपादना, D9 °भगोपपादिता, T2 G1-3 M °ला(M1 inf lin °लं)भोपपादनं, G4 °लोभावपातनं Ca d s cite उपपादना (as in text) — c) M2 हि दत्ता (by transp ) — d) M1.2 अर्हसि (for इच्छसि)

3 ab) K1 2 4 D2 ध्रुव (for ध्रुवो) B3 अतीव (for इतीदं) T1 इदय° (for मिद°) The MSS K3 5 D7 9 T2 G2-4 M2-5 keep ध्रुवो (or ध्रुव) जय° पाण्डवाना (as in text) and try to change, in different ways, the remaining portion of 3ab to Anustubh rhythm thus K3 D9 ध्रुवो (D9 ध्रुव) जय पाडवानामितीद नात्र (in K3 orig न is changed sec m into नात्र) संशय [।], K5 ध्रुवो etc °मितीद न संशय [।] कश्चिन्न विद्यते योत्र यो रक्षति रणे मृधान् [॥], D7 ध्रुव जय पाडवानामत्र कर्ण न संशय [।] कश्चिन्न विद्यते क्षत्र यो रक्षति etc (as in K5), T2 G2 ध्रुवो etc °मितीद नात्र संशय [।] कश्चिन्न विद्यते तत्र (see below), G3 ध्रुव राज्य पाडवानामिति यत्तत्स संशय [।], G4 (corrupt) ध्रुवो etc °मितीदस्मिन्न संशय [।], M2-5 ध्रुवो etc °मितीद नात्र संशय [।], followed regularly by 3b — c) T2 G2 °ध्वजोपदृश्यते — d) B5 समुच्छ्रितो.

C. 5. 4815
B. 5. 142. 3
K. 5. 142. 3

न संशयः कश्चन विद्यतेऽत्र ।
जयध्वजो दृश्यते पाण्डवस्य
समुच्छ्रितो वानरराज उग्रः ॥ ३
दिव्या माया विहिता भौवनेन
समुच्छ्रिता इन्द्रकेतुप्रकाशा ।
दिव्यानि भूतानि भयावहानि
दृश्यन्ति चैवात्र भयानकानि ॥ ४
न सज्जते शैलवनस्पतिभ्य
ऊर्ध्वं तिर्यग्योजनमात्ररूपः ।
श्रीमान्ध्वजः कर्ण धनंजयस्य
समुच्छ्रितः पावकतुल्यरूपः ॥ ५
यदा द्रक्ष्यसि संग्रामे श्वेताश्वं कृष्णसारथिम् ।
ऐन्द्रमस्त्रं विकुर्वाणमुभे चैवाग्निमारुते ॥ ६
गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ७
यदा द्रक्ष्यसि संग्रामे कुन्तीपुत्रं युधिष्ठिरम् ।
जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूम् ॥ ८
आदित्यमिव दुर्धर्षं तपन्तं शत्रुवाहिनीम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ९
यदा द्रक्ष्यसि संग्रामे भीमसेनं महाबलम् ।
दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ॥ १०
प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ११
यदा द्रक्ष्यसि संग्रामे माद्रीपुत्रौ महारथौ ।
वाहिनीं धार्तराष्ट्राणां क्षोभयन्तौ गजाविव ॥ १२
विगाढे शस्त्रसंपाते परवीररथारुजौ ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ १३
यदा द्रक्ष्यसि संग्रामे द्रोणं शांतनवं कृपम् ।
सुयोधनं च राजानं सैन्धवं च जयद्रथम् ॥ १४
युद्धायापततस्तूर्णं वारितान्सव्यसाचिना ।

---

K (except K3) B Dn1 D3 4 7-9 °केतुर् (for °राज)

4 G2 om $4^{ab}$ — $^{a}$) K4 B Dn Ds D2-4 6-8 Ca भौमनेन), G3 corrupt, G4 भीमसेन; (for भौवनेन) — $^{b}$) D7 10 समुत्थिता K1 5 D9 चन्द्रकेतु°, K2 3 चैंद्रकेतु°; D3 चैंद्रकल्प°, G3 हॅंद्रकेतु°, G5 ह्रींद्रकेतु°; M1 2 4 सैंद्रकेतु° — $^{c}$) K4 B Dn Ds D1.3 4 6.8 10 G4 जयावहानि, D2 महायलानि, Ca d 8 भयावहानि (as in text). — $^{d}$) K1 2 5 D7 9 दृश्यत एवात्र, D3 दृश्यति चैवानि, T2 G1 2 दृश्यति वै चात्र S महाप्रभाणि; Ca d 8 भयानकानि (as in text) B3 प्रदृश्यंते राष्ट्रविनाशनानि

5 $^{a}$) Ds2 G4 स (for न) K5 D7 संस्पृशेत्, G3 सज्यते (for सज्जते) — $^{b}$) B3 5 °रूपमात्र, S °मात्र उग्र (for °मात्ररूप) — $^{c}$) G1 रथ॰ (for ध्वज॰) — $^{d}$) K3 समुत्सृत॰, B5 D3 4 8 10 °स्थितः (for °च्छ्रित॰) D2 °तेज॰ (for °रूप॰)

6 D1 6 om. (hapl.) $6^{b}$–$8^{a}$, G4 om. (hapl.) $6^{b}$–$10^{a}$ — $^{c}$) B3 G3 5 प्र- (for वि-) — $^{d}$) B2 3 उभौ (for उभे) B (except B3) Dn Ds D10 चापि (for चैव) B4 5 D3 4 °मारुतौ (for °मारुते)

8 D1 6 om $8^{a}$, G4 om 8 (cf v.l. 6); D9 om (hapl.) 8–9, T2 G2 om (hapl.) 8–11 — $^{b}$) D3 धर्म° (for कुन्ती°) — $^{c}$) D3 4 जपैर्होमैः सदा युक्तं — $^{d}$) T1 G1 स- (for स्वां)

10 G4 om $10^{a}$ (cf v.l. 6), T2 G2 om. 10 (cf v.l. 8), K5 om 10–19, M3 om. (hapl.) 10–11. — $^{b}$) K3 कुंतीपुत्र युधिष्ठिर (corr marg *sec m* to वृकोदरं)

11 K5 T2 G2 M3 om 11 (cf v.l. 8, 10) — $^{cd}$) = $7^{cd}$, $9^{cd}$, $13^{cd}$, $15^{cd}$ — After 11, D3 ins. (irrelevantly) what looks like a conundrum

527* न यात्यशून्य एकोऽपि न च शून्य प्रतिष्ठितम् ।
न लोकपालास्तिष्ठन्ति न च ते द्विगुणाः स्मृताः ।
नैव सप्त तथान्ये वै नव संख्या न विद्यते ।
एतद्द्वादशपदं तत्र भविष्यति कथचन ।

12 K5 B1.2 om 12 (for K5 cf. v.l. 10) B (except B2) Dn Ds D6 8 10 G3 read 12–13 after 15 B3 G3 om (hapl.) 12–13 — $^{b}$) B4 Dn Ds D6 8–10 °बलौ (for °रथौ) — $^{d}$) T2 G2 5 ग्रहा° (for गजा°)

13 K2 5 B3 G3 om 13 (cf v.l. 10, 12) — $^{a}$) K3 M2 शत्रुसंबाधे, D3 4 शत्रुसंपाते, T2 G2 5 M1 3–5 शस्त्रसंबाधे — $^{b}$) D3 T G (G3 om) °रुजे — $^{cd}$) = $7^{cd}$, $9^{cd}$, $11^{cd}$, $15^{cd}$

14 K5 om. 14 (cf v.l. 10) For transposition in B (except B2) Dn Ds D6 8 10 G3 cf. v.l. 12. — K2 repeats $13^{a}$ for $14^{a}$ — $^{b}$) = $16^{b}$ — G5 om. (hapl.) $14^{c}$–$16^{b}$. — $^{c}$) K2 3 Ds D7 9 दुर्यो° (for

न तदा भविता त्रेता न कृतं द्वापरं न च ॥ १५
ब्रूयाः कर्ण इतो गत्वा द्रोणं शांतनवं कृपम् ।
सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः ॥ १६
पक्वौषधिवनस्फीतः फलवानल्पमक्षिकः ।
निष्पङ्को रसवत्तोयो नात्युष्णशिशिरः सुखः ॥ १७
सप्तमाच्चापि दिवसादमावास्या भविष्यति ।
संग्रामं योजयेत्तत्र तां ह्याहुः शक्रदेवताम् ॥ १८
तथा राज्ञो वदेः सर्वान्ये युद्धायाभ्युपागताः ।
यद्वो मनीषितं तद्वै सर्वं संपादयामि वः ॥ १९
राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमाम् ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

# १४१

संजय उवाच ।
केशवस्य तु तद्वाक्यं कर्णः श्रुत्वा हितं शुभम् ।
अब्रवीदभिसंपूज्य कृष्णं मधुनिषूदनम् ।
जानन्मां किं महाबाहो संमोहयितुमिच्छसि ॥ १
योऽयं पृथिव्याः कार्त्स्न्येन विनाशः समुपस्थितः ।
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा ।
दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् ॥ २
असंशयमिदं कृष्ण महद्युद्धमुपस्थितम् ।

C. 5. 4830
B. 5. 143. 4
K. 5. 143. 4

---

सुयो°) — $^{d}$) D1 चाह्निक (for सैन्धव)

15 K. G5 om 15 (cf v l 10, 14), G1 om $15^{a}$–$16^{b}$. — $^{b}$) T2 G. पानितान् (for चानितान्) — $^{c}$) B3 तत्र (for तथा) — $^{cd}$) = $7^{cd}$, $9^{cd}$, $11^{cd}$, $13^{cd}$

16 K om 16 (cf v l 10), G1 . om $16^{ab}$ (cf v l 14, 15) D1 also om $16^{ab}$, K1 reads it in marg — $16^{b}$ = $14^{b}$ — After $16^{ab}$, G1 *repeats* $14^{cd}$ — $^{d}$) K1–3 D2 8 सुप्राप्य°, S समृद्ध°

17 K om 17 (cf v l 10) — $^{a}$) B Dn Ds D2 4 6 8–10 सर्वौषधि°, T2 G. °रस° — $^{c}$) S निष्पङ्को (G1 निष्पङ्का) स्वर्णपत्रो — $^{d}$) K1–3 Dn1 Ds2 D7–9 G2 ° नात्युष्ण (for नात्युष्ण)

18 K. om 18 (cf v l 10) — $^{a}$) D1 सत्र (for चापि) — $^{c}$) K1 D1 T1 G1 2 . M (except M2) योजयेम (for योजयेत) D. 4 तस्या, D1 सूत, G3 अत्र (for तत्र) B Dn Ds D. 8 10 संग्रामो (Dn1 °मे) युज्यता तस्या, D3 °मो मिथला तत्र — $^{d}$) K2 त, B या (for ता) B1 2 Dn D2 6 8 10 T2 G (except G1) आहु° K1 2 °दैवत, K2 B2 6 D2–4 7 °दैवता, Ds2 °देवत D9 राहु° शक्राग्नि दैवतं

19 K5 om 19 (cf v l 10) — $^{a}$) D6 8 M (except M1) तथा (for तथा) — $^{b}$) K3 T1 [अ]पि, G5 हि (for [अ]भि) — $^{c}$) K3 D3 युद्धे, Dn1 यद्वै (for यद्वो) S कृष्ण (T1 G1 4 क्षिप्र) (for तद्वै) — $^{d}$) D3 4 तथा (for सर्वं) K4 B D (except D3 4 9) [अ]ह (for च).

Colophon om in K3 D. missing — *Sub-parvan* K1 3 B Dn Ds D2 6–10 कर्णोपनिवाद (D2 कर्णोप*द, D3 कर्णनिवाद), K2 कर्णोपजाप, D3 4 T1 G3 4 5 M भगवद्यान (T1 °वत्प्रतियान, G1 4 ° वत्प्रतियाने कर्ण [G4 °र्णो]पर्वण), to which G5 M add कर्णोपजाप (M3 5 °जापन) — *Adhy name* G5 भगवद्वचन, M भगवद्वाक्य — *Adhy no* (figures, words or both) D6 32 (= 132), D1 T2 M 143 (M4 142), T1 G2 4 5 144, G1 145, G3 141 — *Sloka no* Dn1 19, Dn2 20

## 141

1 T G (G2 om) M1 वैश° (for संजय उ°) — $^{a}$) G3 जनार्दनस्य (for केशवस्य तु) K5 D2 4 M3 च (for तु) — $^{b}$) K3 T2 G2 शुभं हितं (by transp), Cn आहितं शुभं — $^{c}$) K1 2 D9 इह, D1 G1 M5 अपि (for अभि-) — $^{d}$) B Dn Ds D8 10 कृष्णं तं (D8 D10 तन्) मधुसूदनं — $^{e}$) K1 2 5 D3 4 7–10 किं मां (by transp), T1 M मां किं — $^{f}$) T1 G1 4 प्रलोभयितुम् (for संमोह°) M1 2 अर्हसि (for इच्छसि) Cn cites विजानन्, and मां मोहयितुमिच्छसि (for $^{ef}$)

2 $^{b}$) B2 D8 प्रत्यु° (for समु°) — $^{c}$) T1 G1 4 अत्र (for तत्र) — $^{f}$) T2 G2 भवेत् (for ऽभवत्)

3 G5 om $3^{c}$–$4^{d}$ — $^{d}$) S (G5 om) महद् (for

C. 5. 4830 B 5. 143. 4 K. 5 143. 4

पाण्डवानां कुरूणां च घोरं रुधिरकर्दमम् ॥ ३
राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनम् ॥ ४
स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः ॥ ५
पराजयं धार्तराष्ट्रे विजयं च युधिष्ठिरे ।
शंसन्त इव वार्ष्णेय विविधा लोमहर्षणाः ॥ ६
प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।
शनैश्चरः पीडयति पीडयन्प्राणिनोऽधिकम् ॥ ७
कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन ।
अनुराधां प्रार्थयते मैत्रं संशमयन्निव ॥ ८
नूनं महद्भयं कृष्ण कुरूणां समुपस्थितम् ।
विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ॥ ९
सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपेष्यति ।
दिवश्चोल्काः पतन्त्येताः सनिर्घाताः सकम्पनाः ॥ १०
निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
पानीयं यवसं चापि नाभिनन्दन्ति माधव ॥ ११
प्रादुर्भूतेषु चैतेषु भयमाहुरुपस्थितम् ।
निमित्तेषु महाबाहो दारुणं प्राणिनाशनम् ॥ १२
अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते ।
वाजिनां वारणानां च मनुष्याणां च केशव ॥ १३
धार्तराष्ट्रस्य सैन्येषु सर्वेषु मधुसूदन ।
पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः ॥ १४
प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते ।
प्रदक्षिणा मृगाश्चैव तत्तेषां जयलक्षणम् ॥ १५
अपसव्या मृगाः सर्वे धार्तराष्ट्रस्य केशव ।
वाचश्चाप्यशरीरिण्यस्तत्पराभवलक्षणम् ॥ १६
मयूराः पुष्पशकुना हंसाः सारसचातकाः ।

---

घोर)

5 $^{d}$) K1.2 D9 च (for सु-)

6 $^{d}$) K1.2 लोक° (K2 m as in text), S रोम° (for लोम°)

7 K5 om 7–10 — $^{c}$) K3 पूज° (marg sec m पीड° as in text) — $^{d}$) K3 भीष° (for पीड°) K3 T1 G1 भृश (for ऽधिकम्)

8 K5 om 8 (cf v l 7) — $^{a}$) G2.3 वक्र॰ (for वक्रं) — $^{b}$) K1.2 ज्येष्ठाया D3.4 S गदपूर्वज (for मधु°) — $^{c}$) Dn1 D6 अनु(D6 °नू)राधा, T G6 M अनूराधा, Ca d as in text — $^{d}$) Ds1 C3 मित्र, M1.2 मैत्रीं, Ca d मैत्र (as in text) K3.4 B4 Dn2 D8 Cn सगमयन्, T2 G2 वै संश्रयन्, Ca d s संशमयन् (as in text)

9 K5 om 9 (cf v l 7) — $^{b}$) D3.4 प्रजाना (for कुरूणा) — D6 om (hapl) $9^{c}$–$12^{b}$ — $^{d}$) Dn1 M3.5 (hypermetric!) विचित्रा (for चित्रा) D2 प्रार्थयते; S (except G3) पीडयति D3.4 योधानामपलायिना Ca d s cite ग्रह॰

10 K5 D6 om 10 (cf. v l 7, 9) — $^{a}$) D7 वा वृत्त, D9 आवृत्य, G4 प्रावृत्त; Ca d व्यावृत्त (as in text) — $^{b}$) S अर्कं (G4 मुक्त) राहुर् (for राहुरर्कम्) K3 D2 G4 M2.3.5 उपेक्ष्य(D2 °क्ष)ति, K4 B Dn Ds D1 7–10 उपैति च (for उपेष्यति) — $^{c}$) M3.5 दिश° (for दिव°) D9 उग्रा (for एता) D3.4 दिवोल्का प्रपतन्त्येता॰ — $^{d}$) G3 सुदारुणा॰ (for सकम्पना॰)

11 D6 om 11 (cf v l 9) — $^{a}$) K1.2 D8.9 G3 नि (or नि)स्वनति, K3 निष्पतति, D3.4 निश्वसति, T2 G2 निनदति, Ca निष्टनति (as in text) K5 स्वनति च मातगा इव (hypermetric!) — D3.4 om $11^{cd}$ — $^{c}$) K1 वापि, D1 चैव (for चापि) — $^{d}$) B वाजिन॰ (for माधव).

12 K5 om 12–18, D6 om $12^{ab}$ (cf. v l. 9) — $^{d}$) D3.4 कुरूणा K4 D2–4 प्राण°, D6 प्रति°, G6 °पीडन

13 K5 om 13 (cf v l 12) — $^{ab}$) D9 transp पुरीष and प्रभूत D3.4 S (except T1) इव (for इह) D7 जायते (for दृश्यते)

14 K5 om 14 (cf. v l 12) — $^{d}$) K3 D3 S (except M5) चाहुर् (for प्राहुर्)

15 K5 om 15 (cf v l 12) — $^{a}$) D6.8 प्रकृष्ट — $^{b}$) B (except B5) D3.4 °दृश्य° (for °चक्ष°)

16 K5 om 16 (cf v l 12) — G3 reads 16 after $19^{ab}$ — $^{b}$) K4 D3.4 शिवाश्चैव खरस्वना॰ — After $16^{ab}$, D3.4 read $20^{cd}$ (for the first time), *repeating* it in its proper place — $^{d}$) = $20^{d}$, $22^{f}$ $23^{d}$, $24^{d}$ — After 16, D3.4 ins

528* जनस्यास्वस्थकारिण्यस्तत्पराभवलक्षणम् ।

17 K5 om 17 (cf v l 12) — $^{a}$) K1–3 D9 पत्र°, K4 B3–5 Dn Ds D2–4 6–8 10 पुण्य°, D1 पत्रि°, C3 np

जीवंजीवकसंघाश्चाप्यनुगच्छन्ति पाण्डवान् ॥ १७
गृध्राः काका वडाः श्येना यातुधानाः शलावृकाः ।
मक्षिकाणां च संघाता अनुगच्छन्ति कौरवान् ॥ १८
धार्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निस्वनः ।
अनाहताः पाण्डवानां नदन्ति पटहाः किल ॥ १९
उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा ।
धार्तराष्ट्रस्य सैन्येषु तत्पराभवलक्षणम् ॥ २०
मांसशोणितवर्षं च वृष्टं देवेन माधव ।
तथा गन्धर्वनगरं भानुमन्तमुपस्थितम् ।
सप्राकारं सपरिखं सवप्रं चारुतोरणम् ॥ २१
कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति ।
उदयास्तमये संध्ये वेदयानो महद्भयम् ।
एका सृग्वाशते घोरं तत्पराभवलक्षणम् ॥ २२
कृष्णग्रीवाश्च शकुना लम्बमाना भयानकाः ।
संध्यामभिमुखा यान्ति तत्पराभवलक्षणम् ॥ २३
ब्राह्मणान्प्रथमं द्वेष्टि गुरूंश्च मधुसूदन ।
भृत्यान्भक्तिमतश्चापि तत्पराभवलक्षणम् ॥ २४
पूर्वा दिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा । C. 5. 4860 B. 5. 143. 23 K. 5. 143. 23

पुष्प° (as in text) — $^{b}$) K4 B D (except D9) M1.2 हम (for हंसा) B1 D3.4.6.8.10 चातकस्सारसा, M1.2 सारसशारिका — $^{c}$) K3 जीवा, Dn2 D6-8 G5 M2.4.8 जीव-; Cn जीव- (as in text) — $^{d}$) K4 D3.4 पुण्या, G5 अनु (for [अ]प्यनु)

18 K5 om. 18 (cf v l 12) — $^{a}$) K2.4 B D (except D9) M1 कंका, T G M3-5 श्येना (for काका) K3 गिद्दा, K4 वृका, B D (except D9) Cs बका, T1 G5 वला, T2 मिता, G1.3.4 M वला, G2 वशा, Ca np वला, Cd वडा (as in text) T1 G1.3.4 कका, T2 G2.8 M3-5 काका (for श्येना) — $^{b}$) K4 मल्लास्ता, D1 S मला(T2 °ना, G3 °रा)वृका, B Dn Ds D3.4.6.8.10 तथा (B3 दिशा) वृका — After 18$^{ab}$, D8 reads 19$^{cd}$ — $^{d}$) K4 B D (except D2.4.7.9) अनुयान्ति, S ह्यनु (G8 सानु; G4 [अ]प्याशु)गच्छति

19 $^{a}$)=20$^{c}$, 38$^{e}$ D3.4 °राष्ट्रेषु — D6 om (hapl) 19$^{b}$-20$^{c}$ — $^{b}$) D8.4 S (except G2) तूर्याणां (for भेरी°) Some MSS निस्स्वनः — After 19$^{ab}$, G3 reads 16 D8 reads 19$^{cd}$ after 18$^{ab}$ — $^{d}$) D5 D10 नदते, D2-4 नदति (for नदन्ति)

20 D6 om. 20$^{abc}$ (cf v l 19), K5 om 20 — $^{a}$) B2 उपद्रोगाश्च, D3.4 Ca d उदपानानि Ds2 D1 नदति, T G1 M नर्दते (for नर्दन्ति) — D3.4 reads 20$^{cd}$ (for the first time) after 16$^{ab}$, *repeating* it here (with v l) — $^{c}$)=19$^{a}$, 38$^{e}$ D3.4 (first time) कटके and (second time) सैन्येस्मिन् (for सैन्येषु) — $^{d}$) =16$^{d}$, 22$^{f}$, 23$^{d}$, 24$^{d}$

21 K2 om 21-23, B2 D1 om 21-22 — $^{a}$) G5 °वृष्टिं (for °वर्षं) — $^{b}$) G5 देवो वर्षति मा° — $^{d}$) K3.4 B (B2 om) D (except D7.9, D1 om) भानुमन्तमुप स्थित — $^{e}$) G4 न — न (for स — स) Dn2 D2-4 T2 G2 °परिघ (for °परिख) — $^{f}$) D7 सर्वप्राकारतोरण. Ca d cito सवप्र, Cs वप्र

22 K2 B2 D1 om 22 (cf v l 21) — $^{a}$) G8 कृष्णश्च च (for कृष्णश्च) T1 G4.5 परिधि°, Ca d परिघ° (as in text) — $^{c}$) K3.5 B (B2 om) Dn Ds D6.8.10 T1 G5 °स्तमने, D3.4 °स्तमुखे (for °स्तमये) D8 नित्य, G8 दिव्ये (for संध्ये) — $^{d}$) K3 वेदमाना, K4 °यतो, K5 °मघ्या, B1.3.4 Dn Ds D6.8.10 °यती, B5 °यता — D3.4 S (om line 2) ins after 22$^{cd}$ Dn2, after 22

529* एकपक्षाक्षिचरणा नर्तका घोरदर्शना ।
पक्षिणो व्यसृजन्घोर तत्पराभवलक्षणम् ।

[(L 1) T1 G1 °पादा° (for °पक्षा°) D3.4 नर्तत्तो, M1.8 नर्तुका Dn2 पक्षिणो मधुसूदन (for posterior half) — Dn2 उत्सृजति महाघोरं (for prior half) ]

— $^{e}$) K1 एकदग्, K4 B (B2 om) Dn Ds D3.4.6.8-10 दिवा च, S पक्षिणो (M3-5 °णी), Ca d s एका सृग् (as in text) K1.8 B3 Ds D3.4.6.7.9.10 Cs वामते, T1 मीशते, G8 निशते (for वाशते) D2.7 घोरा (for घोर) — $^{f}$)=16$^{d}$, 20$^{d}$, 23$^{d}$, 24$^{d}$

23 K2 M4 (hapl) om 23 (for K2 cf v l 21), D9 om (hapl) 23-24 D2 transp 23 and 24 S (M4 om) reads 23 after 530* — $^{b}$) K4 B Dn Ds D1.6.8.10 G4 रक्तपादा; D3.4 नीलपादा (for लम्ब°) D3.4 भयकरा (for भया°) — $^{d}$)=16$^{d}$, 20$^{d}$, 22$^{f}$, 24$^{d}$

24 D1.6.9 om (hapl) 24 (for D9 cf v.l 23) D2 transp 23 and 24 — $^{a}$)=5 33 75$^{c}$ G2 माह्मणान्प्रवरान् द्वेष्टि, G3 प्रथम ब्राह्मण द्वे°. — $^{b}$) Dn Ds D10 T1 गुरु च — $^{c}$) K3 S चैव (for चापि) — $^{d}$) =16$^{d}$, 20$^{d}$, 22$^{f}$, 23$^{d}$

25 M4 om 25 — $^{a}$) T2 G2 हि (for दिग्) — $^{b}$) T2 G2.5 तु (for च) — $^{c}$) K8 ताम्र°, T2 G2

C. 5. 4860 B 5. 143. 28 K. 5. 143. 28 आमपात्रप्रतीकाशा पश्चिमा मधुसूदन ॥ २५
प्रदीप्ताश्च दिशः सर्वा धार्तराष्ट्रस्य माधव ।
महद्भयं वेदयन्ति तस्मिन्नुत्पातलक्षणे ॥ २६
सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः ।
अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ॥ २७
श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते शुक्लवाससः ।
आसनानि च शुभ्राणि सर्वेषामुपलक्षये ॥ २८
तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला ।
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ॥ २९
अस्थिसंचयमारूढश्चामितौजा युधिष्ठिरः ।
सुवर्णपात्र्यां संहृष्टो भुक्तवान्घृतपायसम् ॥ ३०
युधिष्ठिरो मया दृष्टो ग्रसमानो वसुंधराम् ।
त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुंधराम् ॥ ३१
उच्चं पर्वतमारूढो भीमकर्मा वृकोदरः ।
गदापाणिर्नरव्याघ्रो वीक्षन्निव महीमिमाम् ॥ ३२
क्षपयिष्यति नः सर्वान्स सुव्यक्तं महारणे ।
विदितं मे हृषीकेश यतो धर्मस्ततो जयः ॥ ३३
पाण्डुरं गजमारूढो गाण्डीवी स धनंजयः ।
त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ॥ ३४
यूयं सर्वान्वधिष्यध्वं तत्र मे नास्ति संशयः ।
पार्थिवान्समरे कृष्ण दुर्योधनपुरोगमान् ॥ ३५
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
शुद्धकेयूरकण्ठत्राः शुक्लमाल्याम्बरावृताः ॥ ३६
अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम् ।

---

अनु° (for आम°) Ca d cite आम — After 25, S (except M4) ins :

530* उत्तरा शङ्खवर्णाभा दिशां वर्णा उदाहृता ।

[ M1 3 °वर्णा च (for °वर्णाभा) T2 M1 दिशा वर्ण उदाहृत, M3 तत्पराभवलक्षण ]

— After the above, S (M4 om ) reads 23

26 $^{d}$) K1 2 D5 G3 °लक्षण, Dn D5 D3 4 6 8 10 °दर्शने B2 तत्पराभवलक्षण (=16$^{d}$, 20$^{d}$ etc.)

27 $^{b}$) B3 5 स्वप्नांतेषु, D3 4 T1 G1 4 °ते तु, D8 °ते च, T2 G2 °ते स — G3 om (? hapl ) 27$^{d}$–29$^{c}$ — $^{d}$) K2 Dn1 D8 9 अच्युत

28 G3 om 28 (cf v l 27) — $^{b}$) B3–5 Dn2 D1 वै (for ते) Dn1 सर्वे ते वै सुवासस — $^{c}$) T2 G2 5 तु (for च)

29 G3 om 29$^{abc}$ (cf v l 27) — $^{a}$) B3 D3 4 स्व चा(B3 वा)पि च (for तव चापि) D3 4 दृष्ट (for कृष्ण) — $^{b}$) B3 रुधिराकुला, T1 मदिराविला — $^{c}$) K1 Dn D2–4 8 10 T2 G2 5 M Ca आन्त्रेण (as in text), T1 G1 4 आ(T1 अ)न्त्रैश्च, the rest अन्त्रेण. Cd cites आन्त्र — $^{d}$) B3 °क्षिप्ता (for °क्षिप्ता)

30 $^{a}$) M4 (*inf lin* ) हस्ति° (for अस्थि°) G5 आसन च समारूढ — K1 D4 om 30$^{cd}$ — $^{c}$) K5 M °पात्रे D6 सुहृष्टो, D9 सदृष्टो, G4 सपूर्णो

31 D1 om 31$^{a}$–32$^{b}$. — $^{ab}$) K5 ग्रसमानो मया दृष्टो धर्मराजो वसुधरा — D2 6 om (hapl.) 31$^{cd}$ — $^{d}$) Dn1 G3 स्व ; G2 च (for स)

32 D1 om 32$^{ab}$ (cf v l 31) — $^{a}$) B3 5 Dn1 D3 4 8 10 उच्च; T1 उग्रं — $^{d}$) N (except K1 4 5 D2 9, D1 om ) ग्रस° (for वीक्ष°) D1 महातल (for महीमिमाम्)

33 $^{b}$) K5 D2–4 S (for G5 see below) सुव्यक्त स (D3 4 सु; G3 न) D6 जनार्दन (for महारणे) G5 सुव्यक्त सहसा रणे — D6 om (hapl ) 33$^{cd}$ — $^{c}$) K1–3 D6 9 ते (for मे) S महाबाहो (for हृषी°) — $^{d}$)=5 30 7$^{d}$; 146 16$^{d}$.

34 B3 om (hapl ) 34$^{ab}$. — $^{a}$) S (except T2) पाडर — $^{b}$) T2 G2 5 गाडीवेन धन° — $^{c}$) D3 4 महाबाहो (for हृषी°), cf v l 33 — $^{d}$) D6 यतो धर्मस्ततो जय (=33$^{d}$)

35 D6 om (hapl ) 35$^{ab}$ — $^{a}$) K1–3 5 B Dn D5 D1 2 7–10 सर्वे, G3 सर्व (for सर्वान्) D3 4 हनि° (for वधि°) — $^{b}$) K5 D3 4 T2 G (except G5) M2 3.5 अत्र (for तत्र) — $^{c}$) K5 समेतान्पार्थिवान्कृष्ण — $^{d}$) D1 S °वशानुगान्

36 $^{a}$) B (except B2) D3 4 T1 Cs शुक्ल (for शुद्ध-). K1–3 D7 9 -सोष्णीषा, K4 Dn1 D8 -कटका, K5 -कठाश्च, B -कवचा (B3 -कंठश्री°), D5 D6 कठाभ्रा°, D2–4 -कठाता, D10 -कठभ्रा., T G कर्णत्रा (G5 हाराश्च), Cs -कठभ्रा, Cn -कठत्रा (as in text) Ca d cite कठत्र — $^{d}$) G5 शुद्ध- (for शुक्ल ) K5 °माल्यावरान्विता, M3–5 °वरस्रज°

37 T2 G2 5 om 37$^{ab}$ — $^{a}$) T1 G1 M2.4 °व्याघ्र (for °व्याघ्रा°) — $^{b}$) D3 4 हय°, Ca नर° (as in text). — $^{c}$) D3 4 एत एव (for त्रय एते) B Dn D5 D3.4 6 8 10 मया दृष्टा, T2 G2 5 नरव्याघ्रा° (for महामात्रा ) — $^{d}$) T G2–4 M पाडरच्छत्र°, G5 पाडवाश्चित्र°

38 $^{b}$) K4 B (except B2) D (except D2.7 9) एते

त्रय एते महामात्राः पाण्डुरच्छत्रवाससः ॥ ३७
श्वेतोष्णीषाश्च दृश्यन्ते त्रय एव जनार्दन ।
धार्तराष्ट्रस्य सैन्येषु तान्विजानीहि केशव ॥ ३८
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ॥ ३९
उष्ट्रयुक्तं समारूढौ भीष्मद्रोणौ जनार्दन ।
मया सार्धं महाबाहो धार्तराष्ट्रेण चाभिभो ॥ ४०
अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्दन ।
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ॥ ४१
अहं चान्ये च राजानो यच्च तत्क्षत्रमण्डलम् ।
गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥ ४२
कृष्ण उवाच ।
उपस्थितविनाशेयं नूनमद्य वसुंधरा ।
तथा हि मे वचः कर्ण नोपैति हृदयं तव ॥ ४३
सर्वेषां तात भूतानां विनाशे समुपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ४४
कर्ण उवाच ।
अपि त्वा कृष्ण पश्याम जीवन्तोऽस्मान्महारणात् ।
समुत्तीर्णा महाबाहो वीरक्षयविनाशनात् ॥ ४५
अथ वा संगमः कृष्ण स्वर्गे नो भविता ध्रुवम् ।
तत्रेदानीं समेष्यामः पुनः सार्धं त्वयानघ ॥ ४६
संजय उवाच ।
इत्युक्त्वा माधवं कर्णः परिष्वज्य च पीडितम् ।
विसर्जितः केशवेन रथोपस्थादवातरत् ॥ ४७
ततः स्वरथमास्थाय जाम्बूनदविभूषितम् ।
सहास्माभिर्निववृते राधेयो दीनमानसः ॥ ४८
ततः शीघ्रतरं प्रायात्केशवः सहसात्यकिः ।
पुनरुच्चारयन्वाणीं याहि याहीति सारथिम् ॥ ४९ C. 5 4884 B. 5. 143. 52 K. 5. 143. 52

इति श्रीमहाभारते उद्योगपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

(for एव) D7 महारथा (for जना°) T2 G1 3 5 सर्वे माधव पाडवा — c) = 19a, 20c K3 4 B Dn2 Ds D1 6 8 °राष्ट्रेषु — d) D3 4 S माधव (for केशव)

39 a) D10 कृपाचार्य (for कृपश्चैव) — d) S कौरवा (for पार्थि°)

40 a) M3-5 उष्ट्रद् (for उष्ट्र) K3 °यान समा°, K4 B Dn Ds D2-4 6 10 °प्रयुक्तमा°, D7 °युग्य समा°, G4 °युक्ता समा° (for °युक्तं समा°) Ca cites उष्ट्रप्रयुक्त — b) K3 B2 4 Dn D6 8 महारथौ, Ds D10 महारथ (for जनार्दन) — K4 om 40cd — d) K3 B Dn Ds D1 2 6 9 10 Ca वा विभो, D3 4 वै विभो, T2 वाभिभो, G2 तानुभौ

41 a) K1 D9 °शाता, S °काता (for °शास्ता) K3 अगस्त्याचरितामाशा, D2 अगस्त्याश्रममाशा च — b) K3 D3 4 प्रयातौ, Dn2 D6-10 M प्रयाता B2 D7-10 स्मो, D3 4 वां, T1 च (for स्म) — D2 om from स्म up to संशय° (in 42d), K4 om 41cd — d) Ds मधुसूदन (for यम°)

42 D2 om 42 (cf v l 41) — a) Dn वा ये, M3-5 अन्ये (for चान्ये) — b) D3 4 10 यच्चैतत्, S यच्चेद (G3 यत्रेद, G4 यच्छेष) (for यच्च तत्) G4 क्षत्रिय यत्र (for क्षत्र°) — c) Some MSS गाजीवा° or गाण्डिवा° K5 D8 प्रवेक्ष्याम°, T2 G2 °क्ष्यामि, M1 2 °क्ष्यति

43 K1-3 D1 7 9 वासुदेव°, K4 D2-4 T2 G2 3 5 श्रीभगवान् (for कृष्ण) — c) K4 B Dn Ds D1.6 8 10 M2 यथा (for तथा) K2 D9 G2 [अ]पि (for हि) — d) K (except K4) B1 2 4 Ds D1 6-10 Cs नावैति, Dn2 G3 Cn नापैति (for नोपैति)

44 b) N (except B3) प्रत्यु° (for समु)

45 a) N (except D6) त्वा K D1.2 7 9 तात (for कृष्ण) K1-3 5 D1 2 7 9 पश्येम, K4 B3 Dn1 D6 8 10 पश्याम°, D3 4 पश्येय, S पश्यामि — b) D3.4 S जीवन्त (T2 G2 °न्त)स्माव् D3 4 °हवात् (for °रणात्) — c) D5 समुत्तीर्णान्, D2 °त्तीर्णान्, S °त्तीर्णौ (M1 inf lin °र्णं) — d) K3-5 B Dn D5 D1.3 4 6 8-10 वीरक्षत्र°, D7 वरवीर°, S वीरक्षयमहाह्रदात् (T1 G1 4 °र्णवात्) Ca d cite वीरक्षय°

46 b) D7 10 S (except G3-5) नौ (for नो) — c) T G (except G3) तत्र वास K2 D3 4 समेष्याव°, S समे (G4 गमि)ष्यामि

47 K4 5 B4 5 D2-4 6 T2 G2 5 om the ref T1 G1 4 M1 वैश° (for संजय उ°) — b) T G1 4 5 पीड्य त, M3-5 पीडित, Ca d पीडित (as in text) M1 (sup lin) परिष्वज्याभिवाद्य च

# १४२

C. 5. 4885
B. 5. 144. 1
K. 5. 144. 1

वैशंपायन उवाच ।
असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान्गते ।
अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् ॥ १
जानासि मे जीवपुत्रे भावं नित्यमनुग्रहे ।
क्रोशतो न च गृह्णीते वचनं मे सुयोधनः ॥ २
उपपन्नो ह्यसौ राजा चेदिपाञ्चालकेकयैः ।
भीमार्जुनाभ्यां कृष्णेन युयुधानयमैरपि ॥ ३
उपप्लव्ये निविष्टोऽपि धर्ममेव युधिष्ठिरः ।
काङ्क्षते ज्ञातिसौहार्दाद्बलवान्दुर्बलो यथा ॥ ४
राजा तु धृतराष्ट्रोऽयं वयोवृद्धो न शाम्यति ।
मत्तः पुत्रमदेनैव विधर्मे पथि वर्तते ॥ ५
जयद्रथस्य कर्णस्य तथा दुःशासनस्य च ।
सौबलस्य च दुर्बुद्ध्या मिथोभेदः प्रवर्तते ॥ ६
अधर्मेण हि धर्मिष्ठं हृतं वै राज्यमीदृशम् ।
येषां तेषामयं धर्मः सानुबन्धो भविष्यति ॥ ७
ह्रियमाणे बलाद्धर्मे कुरुभिः को न संज्वरेत् ।
असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः ॥ ८
ततः कुरूणामनयो भविता वीरनाशनः ।

---

48 Before 48, K5 D3.4 ins संजय उ° — a) M1 (inf lin) 2 पुन (for तत) G5 M1 (inf lin) 2 स्व (for स्व) — c) T G M1 महात्मा वै, M2 स महात्मा, M3–5 महामना (M3 inf lin महामाभि-) (for सहा-सामिर्)

49 c) K5 D3.4 S (except G3) मुहुर् (for पुनर्) — d) M4 सात्यकिं (for सारथिम्)

Colophon D5 missing — *Sub-parvan* K B Dn Ds D2 6–8 10 कर्णोपनिवाद (K2 कर्णोपवाद, K4 कर्णपरिवाद), to which all (except B5) add समाप्त, T1 G1.4 भगवत्प्रतियान, to which G1.4 add कर्णा (G4 °र्ण)कर्षण, M1.2.4 भगवद्यान, followed by कर्णोपजाप (M1.2 add समाप्त) D3.4 G5 M3.5 (all om. the sub-parvan name) mention only कर्णोपजाप, to which D3.4 add समाप्त — *Adhy name* G1.4 कर्णप्रत्याख्यान, M निमित्तकथन — *Adhy no* (figures, words or both) D6 33 (=133), D7 T2 M1–3.5 144, T1 G2.4.5 145, G1 146, G3 142, M4 134 (inf lin 144) — *S'loka no* K5 50, Dn 51

## 142

1 b) M3–5 निवृत्ते (for कुरुभ्य°) — c) K3 अधिगम्य, D6 अभिगत्य, D9 समागम्य (for अभिगम्य)

2 a) B Dn Ds1 D6.10 °पुत्रि, Ds2 D8 °पुत्री (for °पुत्रे) — b) Ds corrupt N G3.4 अविग्रहे (for अनुग्रहे) — c) T2 G2.5 क्रोधि (G5 °ध)तो (for क्रोशतो) K1.2 न तु, K5 S च न (by transp), D2 नाव; D3.4 मे न G3 गृह्णाति — d) D3.4 स (for मे)

3 a) D8 [S]प्यसौ (for ह्यसौ) — b) Some MSS. spell कैकयै° — d) D3.4 युधामन्यु° (for युयुधान°)

4 a) S (mostly) उपप्लाव्ये D3.4 वै (for ऽपि). — b) S धर्मराजो (for °मेव) — c) K1–3 D7.9 भ्रातृसौहार्दाद्; D3.4 योतिसौ°, S ज्ञातिभि° संधिं — d) D9 सुहृत्तो, M3–5 दुर्बली (for दुर्बलो)

5 c) K1–3 B4 D8 D2.7 एष, K4.5 इह, G5 एवं (for एव) M मत्तो मदेनैव पथि — d) K D1.2.9 धर्म्ये (K3–5 D2 °र्मे) पथि निरामये, T1 G1.3 पथि धर्मे (G1 °र्म्ये) न तिष्ठति, T2 G2.5 न (G5 अ-) धर्ममधितिष्ठति, G4 बुद्धिर्धर्मे न तिष्ठति, M स धर्म्ये (M1.2 °र्मे) नाधि (M1.2 °व-, M1 inf lin °ति)तिष्ठति Ca d cite निरामय° (cf K D1.2.9 above)

6 c) D3.4 हि, T2 G2 M2.3.5 सु- (for च) D9 सौबलेयस्य दुर्बुध्या — d) K1–3.5 प्रवर्त्स्यते (K2 °ति); B Dn Ds D2.6.8–10 प्रपत्स्यते, D3.4 प्रदृश्यते

7 a) B2 एव, T1 G1.4 च (for हि). K B4 Dn1 Ds D2–4.6.10 धर्मिष्टं, Ca d धर्मिष्ठ — b) K4 B (except B5) D (except D1.7.9) कृत, Ca d हृत (as in text) K (except K4) D7.9 Ca d न° (for वै) S ह्रि (or ह्री)यते (for हृत वै) K4 B1.3.4 D (except Ds D7.9) कार्यं, Ca d राज्य (as in text) — c) K4 यश्च, Cs येषा (as in text) G5 अधर्मश्च (for अय धर्म) — d) M3.4 (inf lin as in text) 5 नशि° (for भवि°)

8 a) K3 B Dn2 D6 क्रिय°, Dn1 Ds2 D8.9 T G1.2 M2 ह्रीय°, G4 श्रूय° (for ह्रिय°). D1 तु वा (for बलाद्). D9 राज्ये (for धर्मे) — b) D3.4 S रिपुभि° (for कुरुभि°) K3 D8 M3.5 को नु — d) K3 सम्यग्योक्ष्यति, K4 D2–4 समुद्योत्स्यति; S °देष्यति.

चिन्तयन्न लभे निद्रामहःसु च निशासु च ॥ ९
श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितम् ।
अनिष्टनन्ती दुःखार्ता मनसा विममर्श ह ॥ १०
धिगस्त्वर्थं यत्कृतेऽयं महाञ्ज्ञातिवधे क्षयः ।
वर्त्स्यते सुहृदां ह्येषां युद्धेऽस्मिन्वै पराभवः ॥ ११
पाण्डवाश्चेदिपाञ्चाला यादवाश्च समागताः ।
भारतैर्यदि योत्स्यन्ति किं नु दुःखमतः परम् ॥ १२
पश्ये दोषं ध्रुवं युद्धे तथा युद्धे पराभवम् ।
अधनस्य मृतं श्रेयो न हि ज्ञातिक्षये जयः ॥ १३
पितामहः शांतनव आचार्यश्च युधां पतिः ।
कर्णश्च धार्तराष्ट्रार्थं वर्धयन्ति भयं मम ॥ १४
नाचार्यः कामवाञ्शिष्यैर्द्रोणो युध्येत जातुचित् ।
पाण्डवेषु कथं हार्दं कुर्यान्न च पितामहः ॥ १५
अयं त्वेको वृथादृष्टिर्धार्तराष्ट्रस्य दुर्मतेः ।
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान् ॥ १६
महत्यनर्थे निर्बन्धी बलवांश्च विशेषतः ।
कर्णः सदा पाण्डवानां तन्मे दहति सांप्रतम् ॥ १७
आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान्प्रति ।
प्रसादयितुमासाद्य दर्शयन्ती यथातथम् ॥ १८
तोषितो भगवान्यत्र दुर्वासा मे वरं ददौ ।
आह्वानं देवसंयुक्तं वसन्त्याः पितृवेश्मनि ॥ १९
साहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता ।
चिन्तयन्ती बहुविधं हृदयेन विदूयता ॥ २०
बलाबलं च मन्त्राणां ब्राह्मणस्य च वाग्बलम् ।
स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनः पुनः ॥ २१
धात्र्या विश्रब्धया गुप्ता सखीजनवृता तदा ।

C. 5. 4906
B. 5. 144. 22
K. 5. 144 22

---

9 [b]) D3 4 भविष्यति सुदारुण — [d]) D3.4 अह शोचन्निशासु च

10 Before 10, K1 2 D1 9 ins वैश° उ° — [a]) K1 कुती तु (by transp), K2 D9 कुत्ती च — [c]) K1.2 सुनिश्वसती, K3 सुनिष्टनंती, K4 5 B1-4 Dn Ds D1-4 6 8 सा निःश्वसती, B5 D7 सा निष्टनती, D9 सुनिस्वनती, D10 विनिश्वसती, G3 निष्टनती तु, G6 विनिष्टनती (for अनिष्टनन्ती) — [d]) T2 G2 च, M1.2 [अ]भि (for वि-) Many N MSS ममर्प K4 D3 4 तत्; T2 G2 सा (for ह)

11 [a]) D3 4 वै, D9 स (for ऽय) — [b]) Ds D10 (m as in text) मया, D6 महा (for महान्) K4 ज्ञातिक्षय° कृत°, K5 °वध° क्षय°, B Dn Ds D2-4 6 8 10 °वध° कृत, D1 °वधोयम°, D7 °वधो वृथा S सुमहान् ज्ञातिमक्षय° — [c]) S वर्तते, Ca d वत्स्यते (as in text) K4 चैषां, B Dn Ds D6 8 10 चैव, D1 तेषां, T1 G1.4 येषां (for ह्येषां) D2 वर्त्स्यते सुहृदो ह्येषां, D3 4 प्रवर्तते चिरं ह्येषां, D7 धिग्राज्यं धिक्सुखं — [d]) K (except K4) D1-4 7 9 विषमा ह्यर्थ(D7 °माश्चार्थ)मपद°

12 [a]) A few MSS °पञ्चाला — [c]) K4 B D (except D1 2 4 7 9) सह (for यदि) K1.2 5 Ds1 D2 9 योत्स्यते, K3 B5 योत्स्यति

13 [a]) B5 Dn Ds D10 T2 G2 5 M3-5 Cs पश्य, G3 4 पश्येद्, Cn पश्ये (as in text) — [b]) D3 यथा, T2 G2 4 तदा (for तथा) — [c]) G3-5 अथ तस्य (for अधनस्य) G6 मृति ; M3 4 (inf lin as in text) 5 मृतिं (for मृत) — [d]) D3 4 M1 तु (for हि) K1 °वधे, B D (except D1 2 7 9) G1 4 °क्षयो, G6 °क्षयात् (for °क्षये) G2 सहज° क्षत्रियक्षय — After 13, B Dn Ds D6-8 10 ins

531* इति मे चिन्तयन्त्या वै हृदि दुःखं प्रवर्तते ।

14 [c]) K1 2 D3 4 7 9 धृत(D7 धार्त)राष्ट्रश्च, K5 M1.2 धार्त(K5 धृत)राष्ट्रार्थे, D10 G1 धार्तराष्ट्राश्च

15 [a]) T2 G3 M3-5 om न K1 2 D1.3.4 T G (except G5) शिष्ये (for शिष्यैः) — [b]) K3 G5 M3-5 जातु चेत्, K6 जातु वै — [d]) Ds न च कुर्यात् (by transp)

16 [a]) K1-3 D1 9 अय चै(D1 त्वे)को (for अयं त्वेको) — [b]) D2 °राष्ट्रश्च दुर्मतिः — [d]) K3 T2 पापाद्, G2 पापान्, G3 स हि, G5 मोहाद् (for पापो) T2 G2 याधवान् (T2 पाडवान् also as in text)

17 [d]) K4 तन्मां, D1 स वै, T2 G2 तस्मिन् (for तन्मे) B Dn Ds G6 8 10 सप्रति (for साप्रतम्)

18 [a]) S (except G4 M1) त्वस्य (for त्वद्य) — [d]) D6-8 G2 तथा (for -तथम्)

19 [a]) B3 पूर्वं (for यत्र) — [c]) B2 4 5 Dn Ds D1.6 8 10 मत्र°, D2 दैव° (for देव°) — [d]) K B3-5 Dn Ds2 D1.2 6-9 G3 4 वसत्या

20 [b]) B3 Ds2 D6 8 G3 M5 कुती° (for कुन्ति°) K1 D9 10 कुतिभोजस्य सत्कृता (D10 सयता), K6 कुती° भोजेन सत्कृता

21 [b]) D3.4 वचो बल (for च वाग्बलम्)

22 [a]) M1 दास्या (for धात्र्या) G5 विश्वस्तया, some

C. 5. 4907 B. 5. 144. 23 K. 5. 144. 22 दोषं परिहरन्ती च पितुश्चारित्ररक्षिणी ॥ २२
कथं नु सुकृतं मे स्यान्नापराधवती कथम् ।
भवेयमिति संचिन्त्य ब्राह्मणं तं नमस्य च ॥ २३
कौतूहलात्तु तं लब्ध्वा बालिश्यादाचरं तदा ।
कन्या सती देवमर्कमासादयमहं ततः ॥ २४
योऽसौ कानीनगर्भो मे पुत्रवत्परिवर्तितः ।
कस्मान्न कुर्याद्वचनं पथ्यं भ्रातृहितं तथा ॥ २५
इति कुन्ती विनिश्चित्य कार्यं निश्चितमुत्तमम् ।
कार्यार्थमभिनिर्याय ययौ भागीरथीं प्रति ॥ २६
आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः ।
गङ्गातीरे पृथाशृण्वदुपाध्ययननिस्वनम् ॥ २७
प्राङ्मुखस्योर्ध्वबाहोः सा पर्यतिष्ठत पृष्ठतः ।
जप्यावसानं कार्यार्थं प्रतीक्षन्ती तपस्विनी ॥ २८
अतिष्ठत्सूर्यतापार्ता कर्णस्योत्तरवाससि ।
कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती ॥ २९
आ पृष्ठतापाज्जप्त्वा स परिवृत्य यतव्रतः ।
दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलिः ।
यथान्यायं महातेजा मानी धर्मभृतां वरः ॥ ३०

इति श्रीमहाभारते उद्योगपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

---

N MSS विस्रब्धया — $^{b}$) D1 सदा, T G2 तथा (for तदा) — $^{c}$) S (except G4) दोषान् (for दोष) — $^{d}$) B Dn Ds2 D2–4 6 8 G5 चारित्र्य- (for चारित्र) K1 Ds2 D7 9 G1 M3–5 -रक्षणी, K3 -रक्षणा, K4 -रक्षण, D1 G4 -रक्षणे (for -रक्षिणी)

24 $^{a}$) K1.2 कुतूहलात्, D3 4 कौतूहलं K1 2 4 D1 9 च (for तु) D3 4 T2 G2 तत् (for त) — $^{b}$) K1 2 D9 च वर, K4 B2 Ds D1 3 4 7 10 अचर, K5 अवर (for आचर) — $^{c}$) = 1 104 8$^{c}$ T2 तमादित्यम् (for देवमर्कम्) — $^{d}$) K5 आसमादाहमतरा, S आसाद्याह पितुर्गृहे

25 $^{a}$) S (except G4) यो (for यो) D7 जात सुत परित्यक्त — $^{b}$) D7 मोन्येन (for पुत्रवत्) K D1 9 परिवर्धित, B Dn Ds D3 4 6–8 10 °रक्षित, G1.4 5 °कीर्तित C3 np काम च परिवामित — $^{c}$) S मतिमान् (for वचन) — $^{d}$) K5 B1 4 S (except G5) पश्यन्; D3 4 यथा (for पथ्य) S वच (for तथा)

26 Before 26, K1 2 D9 ins वैश° उ° — $^{b}$) K4 B Dn Ds D6–8 10 कार्यनिश्चयमुत्तम (Ds2 कार्ये नियममु°), D3.4-मनसा मतमु° — $^{c}$) K1–3 5 D7 9 अभिगचिन्त्य, K4 B Dn Ds D2 6 8 10 °निश्चित्य, D1 इति निश्चित्य, D3 4 अनुस्मचित्य G3 4 अभिनिर्धार्य — $^{d}$) K2 गता (for ययौ)

27 $^{b}$) K4 धर्मभीरुण, K5 D1 2 S धर्मसगिन (G3 °सेविन); Ds सत्यसादिन, D3 4 धर्मसगिन, D10 सत्यवादिन, Ca as in text — After 27$^{ab}$, K4 ins.

532* गङ्गातीरे पृथापश्यदुपस्थानगत घृणम् ।

— $^{c}$) K4 °तीर्थे, S °कूले (for °तीरे) B1 2 4 तदा (for पृथा) B Dn Ds D6–8 10 अश्रौपीत्, D2–4 S अपश्यत (for अशृण्वत्) — $^{d}$) K4 B3 Dn1 D2–4 6–8 10 वेदाध्ययननिस्वन, B1 2 4 पृथाध्ययननि°, B5 Dn2 Ds C3 तदा (B5 Ca °द) ध्ययननि°, T1 G1 3 5 जपस्थानमनुत्तम; T2 G2 जीवस्थानमनुत्तमं, G4 M जपा (G4 M4 °प) ध्यायिन- (M1 °ध्ययन-, M4 inf lin °ध्यायित) मुत्तम Cd cites उपाध्ययन (as in text)

28 $^{a}$) Ds D9 च; D3 4 तु (for सा) — $^{b}$) Ds मायातिष्ठति, G3 पर्यातिष्ठत D3 4 पृष्ठे सा पर्यतिष्ठत — $^{c}$) K4 B2 Ds D1 2 9 10 S जप्या (G2 तस्या) वसाने; D8 अथावगमान

29 $^{a}$) T1 उत्तिष्ठन्, T2 G2 आतिष्ठन् — $^{b}$) S उत्तर- (T1 G1 4 अतर; M1 2 उत्तार) वासिनी (M1 [inf lin] 2 काङ्क्षिणी), Ca d s उत्तरवाससि (as in text)

30 $^{a}$) S (except G3) [अ] सौ (for स) — $^{b}$) B5 परिवृत्योत्स्मयन्वृष — $^{c}$) K1.2 G4 यथान्याय्य — After 30, K B2 Dn1 D2 7–9 ins

533* उत्स्मयन्प्रणत प्राह कुन्तीं वैकर्तनो वृषः ।
[ D8 निसयन्, Cn उत्स्मयन् (as above) ]

Colophon om in D2 D5 missing — *Sub-parvan* K1–3 D1 8 10 कर्णकुन्तीसमागम, K4 5 B1.2 4 Dn Ds D3 4 6 G5 कुन्तीकर्ण (K4 D3 4 °पुत्र) समागम, B3 5 कुन्तीकर्णसंवाद, D7 9 M3–5 कुन्तीसमागम, T1 G1 भगवद्यानपर्व and कुन्तीकर्ण (G1 कर्णकुन्ती) सवाद, G4 भगवद्यान and कर्णकुन्तीसवाद, M1 2 भगवद्यान and कुन्तीसमागम — *Adhy name* M कर्णदर्शन — *Adhy no* (figures, words or both) D6 34 (=134), D7 T2 M 145 (M4 144), T1 G2 4 5 146, G1 147, G3 143 — *S'loka no* K5 Dn1 31, Dn2 30

## १४३

कर्ण उवाच ।

राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये ।
प्राप्ता किमर्थं भवती ब्रूहि किं करवाणि ते ॥ १

कुन्त्युवाच ।

कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता ।
नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ २
कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः ।
कुन्तिभोजस्य भवने पार्थस्त्वमसि पुत्रक ॥ ३
प्रकाशकर्मा तपनो योऽयं देवो विरोचनः ।
अजीजनत्त्वां मय्येष कर्ण शस्त्रभृतां वरम् ॥ ४
कुण्डली बद्धकवचो देवगर्भः श्रिया वृतः ।
जातस्त्वमसि दुर्धर्ष मया पुत्र पितुर्गृहे ॥ ५
स त्वं भ्रातॄनसंबुद्ध्वा मोहाद्यदुपसेवसे ।
धार्तराष्ट्रान्न तद्युक्तं त्वयि पुत्र विशेषतः ॥ ६
एतद्धर्मफलं पुत्र नराणां धर्मनिश्चये ।
यत्तुष्यन्त्यस्य पितरो माता चाप्येकदर्शिनी ॥ ७
अर्जुनेनार्जितां पूर्वं हृतां लोभादसाधुभिः ।
आच्छिद्य धार्तराष्ट्रेभ्यो भुङ्क्ष्व यौधिष्ठिरीं श्रियम् ॥ ८
अद्य पश्यन्तु कुरवः कर्णार्जुनसमागमम् ।
सौभ्रात्रेण तदालक्ष्य संनमन्तामसाधवः ॥ ९
कर्णार्जुनौ वै भवतां यथा रामजनार्दनौ ।
असाध्यं किं नु लोके स्याद्युवयोः सहितात्मनोः ॥ १०
कर्ण शोभिष्यसे नूनं पञ्चभिर्भ्रातृभिर्वृतः ।
वेदैः परिवृतो ब्रह्मा यथा वेदाङ्गपञ्चमैः ॥ ११
उपपन्नो गुणैः श्रेष्ठो ज्येष्ठः श्रेष्ठेषु बन्धुषु ।
सूतपुत्रेति मा शब्दः पार्थस्त्वमसि वीर्यवान् ॥ १२ C. 5. 4928 B. 5. 145. 12 K. 5. 145. 12

इति श्रीमहाभारते उद्योगपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

---

### 143

1 [a]) S (except $G_3$) राधेयनामा (for राधेयोऽहम्) $D_{8, 9}$ $G_3$ आधिरथ°, T $G_{1, 2, 4, 5}$ अतिरथ° (for आधिरथि°)

2 In $Dn_2$, the portion of the text from here up to 5 160 27 is lost on a missing folio — [b]) $K_4$ $B_2$ Ds $D_{2-4, 10}$ अधिरथि°, T G अतिरथ° (for अधिरथ°) — [c]) $K_6$ $D_2$ नापि (for नासि) — [d]) $K_4$ $D_{8, 4}$ [ए]तद् (for तद्)

3 $Dn_2$ missing (cf v l 2) — [a]) $D_8$ तात (for जात°) — [c]) N (except $D_9$, $Dn_2$ missing) कुतिराजस्य

4 $Dn_2$ missing (cf. v l. 2) — $4^a$=1 104 $10^a$ — [c]) $K_8$ Ds $M_{4, 5}$ स्वा (for त्वा) $K_4$ अप्येव, $D_9$ मय्येव (for मय्येष) — [d]) $K_3$ $D_{7, 9}$ कर्ण $K_{4, 5}$ $B_5$ $D_8$ S वर (for वरम्)

5 $Dn_2$ missing (cf v l 2) — [a]) $K_4$ $G_4$ °कवची — [b]) $Dn_1$ M (except $M_1$) देवगर्भ-. $B_{3, 4}$ $G_5$ कृत°, $T_2$ $G_2$ [अ]न्वित° (for वृत ) — [c]) $Dn_1$ पार्थस् (for जातस्) $G_1$ अपि (for असि) — [d]) $K_6$ मम, S मयि (for मया) $T_2$ $G_2$ जात° (for पुत्र)

6 $Dn_2$ missing (cf v l 2) — [a]) $T_2$ $G_2$ स्वय (for स त्व) $K_{3-5}$ B D (except $D_{9, 10}$, $Dn_2$ missing) T G (except $G_3$) °बुध्य (for °बुद्ध्वा) — [b]) T $G_2$ अद्यो° (for यदु°) — [c]) $T_2$ $G_2$ $M_2$ °राष्ट्र न — In $B_2$, the portion of the text from $6^d$ up to the end of adhy 144 is lost on a missing folio — [d]) $K_6$ तव (for त्वयि)

7 $B_2$ $Dn_2$ missing (cf v l 6, 2) — [a]) $G_3$ $M_3$ एव (for एतद्) $D_{3, 4}$ कर्म° (for धर्म°) — [b]) $T_2$ $G_{2, 5}$ ब्रह्म° (for धर्म°) — [c]) $D_{3, 4}$ पितरो यत्र तुष्यति — [d]) S (except $G_{1, 2}$) वा (for च) $T_2$ $G_2$ प्रियदर्शिनी, $D_9$ Cs एकदर्शनी, Ca as in text $K_6$ मा करोत्येकदर्शनी

8 $B_2$ $Dn_2$ missing (cf. v l 6, 2) — [a]) $K_5$ $D_{3, 4}$ S भ्रातृभिर्निर्जिता पूर्वं — [b]) K (except $K_4$) दम्भाद् (for लोभाद्) $D_9$ असाधुना (for °भि°) $D_{3, 4}$ S भीमार्जुनयमादिभि°

9 $B_2$ $Dn_2$ missing (cf v l 6, 2) — [a]) $B_{1, 5}$ $D_1$ $G_{3, 4}$ पश्यति — [c]) $K_4$ सौहार्देन (for सौभ्रात्रेण) $K_4$ B ($B_2$ missing) $Dn_1$ Ds $D_{6, 8, 10}$ समा°, $D_1$ तथा°, $D_7$ महा° (for तदा°) $D_{3, 4}$ सौहार्दमेव सलक्ष्य, S सौभ्रात्रमेतदा° — [d]) $K_5$ अरातय° (for असाधव°)

10 $B_2$ $Dn_2$ missing (cf v.l. 6, 2) — [a]) B $Dn_1$ $D_{2-4, 7}$ $G_5$ $M_4$ भवेता (for भवता) — [b]) $K_6$ तथा (for

# १४४

C. 5. 4929
B. 5. 146. 1
K. 5. 146. 1

वैशंपायन उवाच।

ततः सूर्यान्निश्चरितां कर्णः शुश्राव भारतीम्।
दुरत्ययां प्रणयिनीं पितृवद्भास्करेरिताम् ॥ १
सत्यमाह पृथा वाक्यं कर्ण मातृवचः कुरु।
श्रेयस्ते स्यान्नरव्याघ्र सर्वमाचरतस्तथा ॥ २
एवमुक्तस्य मात्रा च स्वयं पित्रा च भानुना।
चचाल नैव कर्णस्य मतिः सत्यधृतेस्तदा ॥ ३

कर्ण उवाच।

न ते न श्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया।
धर्मद्वारं ममैतत्स्यान्नियोगकरणं तव ॥ ४
अकरोन्मयि यत्पापं भवती सुमहात्ययम्।
अवकीर्णोऽस्मि ते तेन तद्यशःकीर्तिनाशनम् ॥ ५
अहं च क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियाम्।
त्वत्कृते किं नु पापीयः शत्रुः कुर्यान्ममाहितम् ॥ ६

---

यथा) — c) K2 D6 किं तु, D3 4 न तु, D9 किं दि (for कि नु) S असत्य किल (T1 G1 कि नु) लोकेस्मिन् — d) S उभयो. (for युवयो) B1 3 5 Dn1 D8 D1 6 8 10 M2 सहिताग्मनो

11 B2 Dn2 missing (cf v l 6, 2) — b) T1 G1 4 पाण्डवैः (for पञ्चभि) T1 G1 पञ्चभिर् (for भ्रातृभिर्) D3 4 G5 सह (for वृत) — c) N (except D3 D6, B2 Dn2 missing) T1 G5 देवै. (for वेदै॰) G4 परीवृतो भवेद्रत्ना — d) N (B2 Dn2 missing) वेद्यासिव (K1 यथा वेद्या) महाध्वरे

12 B2 Dn2 missing (cf v l 6, 2) — a) K1 2 D1 2 9 T G1 श्रेष्ठे, K4 श्रेष्ठे, B (B2 missing) Dn1 D8 D3 4 6–8 10 सर्वे., G2 4 5 श्रेष्ट (for श्रेष्ट) — b) K1 2 3 D7 T2 G5 श्रेष्ट (for ज्येष्ट॰) B3 श्रेष्ठश्च; D1 T2 G5 ज्येष्ठेषु (for श्रेष्ठेषु) — c) K (except K4) Ds1 D1 7 9 Cd शब्द, Ca शब्द॰ (as in text). — d) S कर्ण क्षत्रिय ईदृश (M1 2 ॰शे)

Colophon. B2 Dn2 D6 missing — *Sub-parvan* K1 D7 9 कुन्तीसमागम, K2–4 D1 8 कर्णकुन्तीसमागम, K5 B1 3–5 Dn1 D8 D2–4 6 10 G5 कुन्तीकर्णसमागम (B3 ॰कर्णसवाद), T1 G4 भगवद्यातियान, G1 भगवद्यान, M1 2 भगवद्यान and कुन्तीसमागम. — *Adhy name* T1 कर्णं प्रति कुन्तीवाक्य, G1 4 मातृकर्णसवादन (G4 ॰वाद), M1 2 मातृवचन — *Adhy no* (figures, words or both) D9 35 (=135), D7 T2 M 146 (M4 145), T1 G2 4 5 147, G1 148, G3 144. — *S'loka no* K5 Dn1 12

## 144

☞ This adhy is missing in B2 Dn2 (cf. v.l 5. 143 6, 2). The MSS. are mostly ignored here

1 a) K1 G1–3 नि॰सरतीं, K3 (*sup lin*) 5 नि॰सरिता; K4 D3 4 उच्चरितां, Ds2 D9 T2 G5 M निश्चरतीं, Ca d निश्चरितां (as in text) — c) T1 G1 4 प्रार्थयतीं, M प्रथयतीं, Cn प्रणयिनीं (as in text) — d) Dn1 भास्करो दिता; S गौरवेरितां (T1 ॰वोदिता)

2 Before 2, K4 D2 4 ins सूर्य उ॰ — a) M1 2 सम्यग् (for सत्यम्) — b) K5 S शृणु (for कुरु) — d) G3 5 तदा (for तथा)

3 Before 3, N (except K5, B2 Dn2 missing) ins वैश॰ उ॰ (resp वैश॰) — a) K1 (before corr) 2 5 Ds2 D3 4 7 उक्तस्तु, G1 उक्तश्च, G2.4 उक्तः स (for उक्तस्य) K B1 D1 7 तु (K3 वै) (for च) D9 एवमुक्तस्तया मात्रा — b) D3 4 भारत (for भानुना) — c) K2 D3 4 न च (for नैव) — d) K1 2 D9 S (except M1 2) मन॰ (for मति॰) B3 ॰धृतिस् (for ॰धृतेस्) K1 3 B3 तथा, D9 नृप (for तदा)

4 D9 G2 M3–5 om the ref — a) K1 3 B5 D1 9 चैव, K3 वै तत्, K4 5 B1 3 4 Dn1 D8 D2–4 6–8 10 चैतत् (for ते न) — c) K5 न मे तत् (for ममैतत्) — d) D7 8 तथा (for तव).

5 ab) K1 2 5 D9 तत्पूर्वं, K3 D3 4 7 तत्पाप (for यत्पाप) G2 चरती (for भवती) D3 4 सुमहत्तदा, S सुमहानयं, Ca 8 ॰हात्ययम् (as in text) D1 अकरोद्भवती पाप मयि यत्सुमहा॰ — c) K5 B1 3 4 Dn1 D8 D6–10 T1 Ca अपा॰, B5 अवा॰ (for अव॰) K4 D3.4 वै तेन, B (B2 missing) Dn1 D8 D6–10 यन्मात (for ते तेन) — d) K (except K4) D1 2 स्वयशःकीर्तिनाशन (K1 2 ॰शिना); D3 4 तद्य ते कीर्ति॰.

6 a) N (except K4 D3 4, B2 Dn2 missing) चेत् (for च) — b) K5 प्राप (for प्राप्त) D9 T G2 क्षत्रसत्क्रिया D3 4 नाप्त॰ क्षत्रियसत्कृति Ca cites क्षत्रस त्क्रिया — c) Dn1 G3 तत्कृते; D2 यत्कृते, T G1 2 4 5

क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम ।
हीनसंस्कारसमयमद्य मां समचूचुदः ॥ ७
न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया ।
सा मां संबोधयस्यद्य केवलात्महितैषिणी ॥ ८
कृष्णेन सहितात्को वै न व्यथेत धनंजयात् ।
कोऽद्य भीतं न मां विद्यात्पार्थानां समितिं गतम् ॥ ९
अभ्राता विदितः पूर्वं युद्धकाले प्रकाशितः ।
पाण्डवान्यदि गच्छामि किं मां क्षत्रं वदिष्यति ॥ १०
सर्वकामैः संविभक्तः पूजितश्च सदा भृशम् ।
अहं वै धार्तराष्ट्राणां कुर्यां तदफलं कथम् ॥ ११
उपनह्य परैर्वैरं ये मां नित्यमुपासते ।
नमस्कुर्वन्ति च सदा वसवो वासवं यथा ॥ १२
मम प्राणेन ये शत्रूञ्शक्ताः प्रतिसमासितुम् ।
मन्यन्तेऽद्य कथं तेषामहं भिन्द्यां मनोरथम् ॥ १३
मया प्लवेन संग्रामं तितीर्षन्ति दुरत्ययम् ।
अपारे पारकामा ये त्यजेयं तानहं कथम् ॥ १४
अयं हि कालः संप्राप्तो धार्तराष्ट्रोपजीविनाम् ।
निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता ॥ १५
कृतार्थाः सुभृता ये हि कृत्यकाल उपस्थिते ।
अनवेक्ष्य कृतं पापा विकुर्वन्त्यनवस्थिताः ॥ १६
राजकिल्बिषिणां तेषां भर्तृपिण्डापहारिणाम् ।
नैवायं न परो लोको विद्यते पापकर्मणाम् ॥ १७
धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः ।
बलं च शक्तिं चास्थाय न वै त्वय्यनृतं वदे ॥ १८
आनृशंस्यमथो वृत्तं रक्षन्सत्पुरुषोचितम् ।
अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ १९
न तु तेऽयं समारम्भो मयि मोघो भविष्यति ।
वध्यान्विषह्यान्संग्रामे न हनिष्यामि ते सुतान् ।

C. 5. 4948
B. 5. 146. 23
K. 5. 146. 23

---

स्वहृते, Ca s त्वन्कृते (as in text) K1.3 D2 9 G3 तु, T2 G2 न, Ca तु (as in text) D3.4 तत्वन्कृते तु पापीय° — d) K1 D5 D1.7 9 ममाहित, T2 G2 महाहित; G4 समापित, Ca s ममाहित (as in text)

7 a) D3.4 °काल (for °काले) D3 4 ह्यनु°, G5 अनु° (for त्वनु°) — b) M4 5 तम् (for त्वम्) — c) S सुस (G3 नून)गृहीत°. — d) K D7 9 ममनूनुद°

8 a) K4 D5 नैव (for न वै) — c) K3 °मोह° (for °बोध°) D3 मा मा मचोदयस्याद्य, S सोह सचोदयाम्य° (T1 G- °यस्य)द्य — d) S °हितैषिणीं

9 b) D3 4 कपेत, Ca व्यथेत (as in text) — c) K2 3 विंद्यात्, D3.4.6 8 निंद्यात् (for विद्यात्) — d) D2 समता, Ca ममिर्ति (as in text)

10 b) T G (except G3) प्रदर्शित° (for प्रका°) — c) D3 4 G4 युधि (for यदि) — d) D52 M (except M2) मा, D3 4 वा (for मा)

11 b) K5 नृश तदा, B (B2 missing) Dn D5 D6 8 10 यथासुख, M2 तथा भृश (for सदा भृशम्) — d) T2 G2 5 कुर्यां न हि वि(G2 अथ वि , G5 तदपि)ल्घन

12 D1 om. $12^{ab}$ — a) T G1.4.5 उत्पाद्य तु (T2 त्र), M3-5 उपलभ्य, Ca उपनह्य (as in text)

13 ab) B5 D8 ये शत्रु, D7 शत्रूणा (for ये शत्रून्) K3 G2 transp शत्रून् and शक्ता G3 4 °समाधितु, Ca as in text — c) K4.5 B (B2 missing) Dn1 D5 D1.6 10 ते (for ऽद्य) — d) B (B2 missing) Dn1 D5 D6 8 10 G4 छिंद्या, D7 विद्या, G3 वित्स्या (for भिन्द्या)

14 G3 om. $14^{ab}$, D2 om. $14^{c}$ and त्यजेय (in d) — c) D3 4 अपार (for अपारे)

15 a) D3 4 S स (for हि) — c) B3 D7 निर्वोढव्य; T2 G2 8 निर्देष्टव्य, Ca n s निर्वेष्टव्य (as in text)

16 a) K3 (*sup lin* as in text) G3 M3-5 सुकृता, D3 4 हि भृता, D7 सभृता, T G1.2 4 5 सुहृदा (T2 G2 °द°) (for सुभृता) D3 4 वै, G4 वा (for हि) — b) K (except K2) B (B2 missing) Dn1 D5 D1.6-10 °काले ह्युप° — c) D3 4 फल (for कृत) G5 पाप (for पापा°) D7 अनिवेद्य निज देहं — d) K1 2 D9 °स्थित (for °स्थिता°) S कुर्वंति प्रियमात्मन°

17 b) K3 D9 T2 G2 M3 4 (before corr ) 5 °पिंडोप° — d) K1.3 °कर्मिणा, K5 °कारिणां

18 a) S धार्त(T2 G1 2 घृत)राष्ट्रस्य चैवाह — b) Dn1 G3 4 मयं (for अर्थे) — c) K5 D9 10 S om. the second च — d) B3 5 न चैव त्वनृत वदे, D3 4 न चैतद-नृत वदे

19 a) K1.2 D9 G3 अनृशस (G3 °स्य) — b) K5 D1 सु (for सत्-) — c) D3 4 अप्यर्थकरमप्यत्र — d) B1.4 5 D5 D7 10 T1 G3 4 अव, D3 4 एप (for अद्य)

20 a) B (B2 missing) D (except D1.2 9, Dn2 missing) च ते, G5 कृते (for तु ते) — c) D2 9 Ca s

C. 5. 4910 B. 5. 140. 21 K. 5. 140. 21 युधिष्ठिरं च भीमं च यमौ चैवार्जुनादृते ॥ २०
अर्जुनेन समं युद्धं मम यौधिष्ठिरे बले ।
अर्जुनं हि निहत्याजौ संप्राप्तं स्यात्फलं मया ।
यशसा चापि युज्येयं निहतः सव्यसाचिना ॥ २१
न ते जातु नशिष्यन्ति पुत्राः पञ्च यशस्विनि ।
निरर्जुनाः सकर्णा वा सार्जुना वा हते मयि ॥ २२
वैशंपायन उवाच ।
इति कर्णवचः श्रुत्वा कुन्ती दुःखात्प्रवेपती ।
उवाच पुत्रमाश्लिष्य कर्णं धैर्यादकम्पितम् ॥ २३
एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः ।
यथा त्वं भाषसे कर्ण दैवं तु बलवत्तरम् ॥ २४
त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्शन ।
दत्तं तत्प्रतिजानीहि संगरप्रतिमोचनम् ॥ २५
अनामयं स्वस्ति चेति पृथाथो कर्णमब्रवीत् ।
तां कर्णोऽभ्यवदत्प्रीतस्ततस्तौ जग्मतुः पृथक् ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

## १४५

वैशंपायन उवाच ।
आगम्य हास्तिनपुरादुपप्लव्यमरिंदमः ।
पाण्डवानां यथावृत्तं केशवः सर्वमुक्तवान् ॥ १
संभाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः ।

---

विपल (for विपश्चान्)
21 [a]) D8 4 अर्जुनेन तु युद्ध स्यात् — [b]) K4 B (B2 missing) Dn1 Ds D6 अपि, D1 अयि (for मम) — [c]) K1 2 6 Ds D7 9 10 वि (for हि). — [d]) D7 मया फल (by transp ), T1 G1 4 फल मम, T2 G2 6 M फल यथा, G3 यथा फल — [e]) K1.2 D6 [अ]पि हि; B6 या नि-; D2 वापि (for चापि) D8 4 S यशसा वा न मुच्येय
22 K1 2 D6 om 22[ab] — [a]) K8 ते न (for न ते) D3 4 विनक्ष्यति (for नशिष्यन्ति) D10 न जातु विनशिष्यति — D8 om 22[cd] — [c]) K6 सकर्णा वा हते पार्थे
23 K4 B (B2 missing) Dn1 Ds D1 2 6 10 T G2 om the ref — [b]) D3 4 T1 पुत्रात् (for दुःखात्) T1 G1 प्रवेपिता G4 कुती दु खाश्रुवेपिता — [c]) K3 D2 S कर्णम्, D3.4 तूर्णम् (for पुत्रम्) — [d]) S पर (for कर्णं) K1 B (B2 missing) Dn1 Ds D6 6–10 अकपन, D3 4 अकपिनं, G6 अकपिना (for अकम्पितम्) K4 कर्णं धैर्य निकेतन, D1 2 7 कर्णं धैर्या(D2 °र्यं)विकपि(D2 °प)न
24 [a]) S तु (for वै) — [b]) T1 G1 4 गच्छतु, T2 G2 6 M गच्छति (for यास्यन्ति) — [d]) K6 D10 G2 हि (for तु)
25 [b]) A few MSS शत्रुकर्षण — [c]) D1 कृत, S (except G3) उक्त (for दत्त)
26 [a]) D7 तेस्तु (for चेति) — [b]) S पृथा कर्णमथाब्रवीत् — [c]) D2 G4 [ऽ]पि, G3 हि (for ऽभि-). K4 B1 4 Dn1 Ds D6 8 10 तां कर्णोथ (D10 °पि) तथेत्युक्त्वा, M6 ता कर्णोभ्यपतत्प्रीत — [d]) S सुत (M6 गृह) (for पृथक्)

Colophon B2 Dn2 D5 missing — *Sub-parvan* K1–4 D1 2 9 10 कर्णकुन्तीसमागम, K6 B1 3–5 Dn1 Ds D3 4 6 8 G5 कुन्तीकर्णसमागम (B3 °कर्णसवाद), D7 M1 4 6 कुन्तीसमागम, T1 G1 4 भगवद्यानप्रतियान and कुन्तीकर्णसमागम (T1 °सवाद), M2 भगवद्यान and कुन्तीसमागम, to it G1 4 add कर्णा(G4 °र्ण)कर्षण K1 6 B1 5 D2 7 9 10 M1 2 cont समाप्त — *Adhy name* T1 G1 4 कर्णप्रत्याख्यान, M पृथानुनयवैफल्य — *Adhy no* (figures, words or both) D6 35 (=135), D7 T2 M 147 (M4 146), T1 G2 4 5 148, G1 149, G3 145 — *S'loka no* K6 Dn1 27

### 145

☞ This adhy is missing in Dn2 (of v l 5 143 2) The MS is mostly ignored here
1 [a]) D3 4 स गत्वा, G3 आगत्य, Ca as in text T G2 6 हस्तिनपुरात् — [b]) S उपप्लाव्यम् K1 2 5 Ds D3 4 7 M4 अरिदम — [c]) D6 °तत्त्व (for °वृत्त) — [d]) T G M5 पूर्वम् (for सर्वम्)
2 [a]) K3 D1 6 8 9 सभाज्य (for °ष्य) — [c]) B1 4 Dn1 Ds D6 8 10 भवन (for [आ]वसथं) — [d]) D1 7

स्वमेवावसथं शौरिर्विश्रामार्थं जगाम ह ॥ २
विसृज्य सर्वान्नृपतीन्विराटप्रमुखांस्तदा ।
पाण्डवा भ्रातरः पञ्च भानावस्तंगते सति ॥ ३
संध्यामुपास्य ध्यायन्तस्तमेव गतमानसाः ।
आनाय्य कृष्णं दाशार्हं पुनर्मन्त्रममन्त्रयन् ॥ ४

युधिष्ठिर उवाच ।

त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।
किमुक्तः पुण्डरीकाक्ष तन्नः शंसितुमर्हसि ॥ ५

वासुदेव उवाच ।

मया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।
तथ्यं पथ्यं हितं चोक्तो न च गृह्णाति दुर्मतिः ॥ ६

युधिष्ठिर उवाच ।

तस्मिन्नुत्पथमापन्ने कुरुवृद्धः पितामहः ।
किमुक्तवान्हृषीकेश दुर्योधनममर्षणम् ।
आचार्यो वा महाबाहो भारद्वाजः किमब्रवीत् ॥ ७
पिता यवीयानस्माकं क्षत्ता धर्मभृतां वरः ।
पुत्रशोकाभिसंतप्तः किमाह धृतराष्ट्रजम् ॥ ८
किं च सर्वे नृपतयः सभायां ये समासते ।
उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्दन ॥ ९
उक्तवान्हि भवान्सर्वं वचनं कुरुमुख्ययोः ।
कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः ॥ १०
अप्रियं हृदये मह्यं तन्न तिष्ठति केशव ।
तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो ॥ ११
यथा च नाभिपद्येत कालस्तात तथा कुरु ।
भवान्हि नो गतिः कृष्ण भवान्नाथो भवान्गुरुः ॥ १२

वासुदेव उवाच ।

शृणु राजन्यथा वाक्यमुक्तो राजा सुयोधनः ।
मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे ॥ १३

C. 5.4970
B. 5.147 14
K. 5.147 14

M1.5 विश्रमार्थं, D6 विमना च

3 $^{a}$) K1–3 T2 विसर्ज्य (for °सृज्य) G3 transp सर्वान् and नृपतीन् — $^{b}$) K1.3 B3 D5 D1.7 9 T G (except G3) तथा, K2 तत (for तदा)

4 $^{a}$) S संध्यामुपास्यंतस्ते Ca cites ध्यायंत (as in text)

6 K4 6 T1 G श्रीभगवान् (for वासुदेव) — $6^{ab}$ =(var) $5^{ab}$ — $^{c}$) B. पथ्य तथ्य (by transp) K2 प्रोक्तो (for चोक्तो)

7 $^{b}$) K6 D2–4 T2 G2.5 M5 कुरु° (for कुर°) — $^{c}$) T1 G1.4 महाबाहो (for हृषी°) — $^{e}$) K4 B1.2 4 Dn1 °भाग, B2 6 D5 D2 4 6 8 10 °भागो; D1 T1 G1.4 °बाहुर् (for °बाहो) — $^{f}$) K. G3 उक्तवान् (for अब्रवीत्) D3 4 द्रोण किं तमथाब्रवीत् — After 7, N (except B5 D7, Dn2 D6 missing) ins

534* पिता वा धृतराष्ट्रस्ते गान्धारी वा किमब्रवीत् ।

[ B (except B.) Dn1 पितरौ (for पिता वा) K3 तु, D5 च, D3 4 वै (for ते) K3 D6 वाक्यम् (for वा किम्) ]

8 $^{a}$) T2 G2 6 अद्भ्य (for अस्माक) — $^{b}$) B2 3 5 Dn1 D5 D1.6 10 T G2 5 °विदा, G3 °कृता (for °भृता) — D1 om. $8^{c}$–$10^{b}$

9 D1 om. 9 (cf. v l. 8) — $^{a}$) D3 4 वा (for च) — $^{b}$) K2 D9 ते, G5 वै (for ये) K1–3 D7 9 T2 G2 6 M5 समागता (for °सते) — $^{c}$) K5 M1.2 °वत्त्वं, D7 10 °तथ्यं (for °तत्त्व) — $^{d}$) K5 D3 4 तत्प्रभूहि, S तत्तद्ब्रूहि (for तद्ब्रूहि त्व) K5 S नरोत्तम (for जना°)

10 D1 om $10^{ab}$ (cf. v l. 8) — $^{a}$) D3 4 भगवान् (for हि भवान्) Cs cites भवान् (as in text) K6 वाक्य (for सर्वं) — $^{b}$) K5 हित वै (for वचन) — After $10^{ab}$, B Dn1 D5 D3 4.6–8 10 ins

535* धार्तराष्ट्रस्य तेषां हि वचनं कुलसंमदि ।

On the other hand, S (except G5) ins after $10^{ab}$

536* प्रतिकूलमयुक्त च हृदयं नोपसर्पति ।

[ G4 M5 अप्रिय (for अयुक्त) G1.3 4 M (except M1) हृदयात् (for हृदय) ]

— D9 om. $10^{c}$–$11^{b}$ — $^{c}$) D5 °भोगा° (for °लोभा°) — $^{d}$) K1–3 D7 8 मदप्रज्ञस्य मानिन

11 D9 om. $11^{ab}$ (cf v l 10) — $^{a}$) K D1.2 7 सर्वं (K5 सत्य), S तस्य (T2 यस्य) (for मह्यं) — $^{b}$) K (except K4) न तत्, D7 न तु (for तन्न) K. किंचन, B5 माधव (for केशव) — $^{c}$) D2 वाक्य तु (for वाक्यानि) T2 G2.5 सर्वेषां (for गोविन्द) — $^{d}$) T G M5 (*inf lin* as in text) प्रभो (for विभो)

12 $^{a}$) K3 5 D7 S (except G3) नाति (M1 *inf lin* °भि)पद्येत (T2 G2 °वर्तेत), Ca as in text — D2 9 om $12^{cd}$ — $^{c}$) K2 transp हि and नो K5 S (except G2) बल (for गति) — $^{d}$) K5 S गति; D1 शुभ (for गुरुः)

13 K6 T2 G2 3.5 श्रीभगवान् (for वासुदेव) — $^{a}$) T2 G2 शृणु वाक्यथा राजन् — $^{c}$) D3 4 सर्वेषां

C. 5. 4971
B. 5. 147. 15
K. 5. 147. 15

मया वै श्राविते वाक्ये जहास धृतराष्ट्रजः ।
अथ भीष्मः सुसंक्रुद्ध इदं वचनमब्रवीत् ॥ १४
दुर्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते ।
तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु ॥ १५
मम तात पिता राजञ्शंतनुर्लोकविश्रुतः ।
तस्याहमेक एवासं पुत्रः पुत्रवतां वरः ॥ १६
तस्य बुद्धिः समुत्पन्ना द्वितीयः स्यात्कथं सुतः ।
एकपुत्रमपुत्रं वै प्रवदन्ति मनीषिणः ॥ १७
न चोच्छेदं कुलं यायाद्विस्तीर्येत कथं यशः ।
तस्याहमीप्सितं बुद्ध्वा कालीं मातरमावहम् ॥ १८
प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च ।
अराजा चोर्ध्वरेताश्च यथा सुविदितं तव ।
प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् ॥ १९
तस्यां जज्ञे महाबाहुः श्रीमान्कुरुकुलोद्वहः ।
विचित्रवीर्यो धर्मात्मा कनीयान्मम पार्थिवः ॥ २०
स्वर्यातेऽहं पितरि तं स्वराज्ये संन्यवेशयम् ।
विचित्रवीर्यं राजानं भृत्यो भूत्वा ह्यधश्चरः ॥ २१
तस्याहं सदृशान्दारान्राजेन्द्र समुदावहम् ।
जित्वा पार्थिवसंघातमपि ते बहुशः श्रुतम् ॥ २२
ततो रामेण समरे द्वन्द्वयुद्धमुपागमम् ।
स हि रामभयादेभिर्नागरैर्विप्रवासितः ।
दारेष्वतिप्रसक्तश्च यक्ष्माणं समपद्यत ॥ २३
यदा त्वराजके राष्ट्रे न ववर्ष सुरेश्वरः ।
तदाभ्यधावन्मामेव प्रजाः क्षुद्भयपीडिताः ॥ २४

प्रजा ऊचुः ।

उपक्षीणाः प्रजाः सर्वा राजा भव भवाय नः ।
ईतयो नुद भद्रं ते शंतनोः कुलवर्धन ॥ २५
पीड्यन्ते ते प्रजाः सर्वा व्याधिभिर्भृशदारुणैः ।
अल्पावशिष्टा गाङ्गेय ताः परित्रातुमर्हसि ॥ २६
व्याधीन्प्रणुद्य वीर त्वं प्रजा धर्मेण पालय ।
त्वयि जीवति मा राष्ट्रं विनाशमुपगच्छतु ॥ २७

---

(for राजेन्द्र)

14 a) K1–3 B Dn1 D6 7 9 वि- (for वै) — c) K5 D9 तु (for सु-)

15 c) S कुरु° (for राज°)

16 a) K3 D1 राजा (for राजन्) — b) K1 4 B Dn1 D5 D2–4 6 9 शांतनुर् — d) G5 M (except M2) वर (for वर°)

17 c) K3–5 B D (except D2–4 9, Dn2 missing) T1 G1. 2 5 M6 एक पुत्रम्

18 a) B3 Dn1 D6 न चोच्छेद, D3 4 नोच्छेदं च (for न चोच्छेदं) — b) K4 B Dn1 D5 D1 2 6–8 10 विस्तीर्येच — c) M3 इच्छित (for ईप्सितं) K2 मत्वा (for बुद्ध्वा) — d) D3 4 Ca आहर (for आवहम्)

19 b) D6 8 10 (m as in text) पितुरात्मकुल°. Ca cites पितुरर्थे (as in text) — c) T1 G1. 3 4 °रेता[ ]स्वां, T2 G2 5 °रेतास्तु, M °रेताम — f) K4 D7 परि°, D3 4 प्रति° (for अनु°)

20 a) K4 Ds2 G3 तस्या°, D3 4 T2 G2 5 तस्य (for तस्यां) D3 4 राज्ञो (for जज्ञे) — d) K3 4 B Dn1 Ds1 D2 6 7 9 G1 पार्थिव

21 b) K3 5 D1. 7 8 T2 G (except G5) M1 (inf. lin. as in text) मनिवे°, Dn1 समवे°. — d) D3 4 ह्यधश्चरन्

22 b) K4 B Dn1 D5 D6 8 10 समुपाहर, K5 °पावह — c) D3 4 °सवातान् — d) D7 तवापि, T2 मयापि (for अपि ते) G2 अपि लोके बहुश्रुत

23 a) K3 तात (for ततो) T G2 5 सहितो (for समरे) — b) K3 ततो (for द्वन्द्व-) D3 4 द्वैरथ युद्धमागत — e) K3 4 B Dn1 D5 D2 6 8 10 दारेष्वप्यतिसक्तश्च, D7 दारेषु प्रतिसक्त मन्, T1 G1 4 कामभोगप्रसक्तश्च — f) K3 दिष्टात, M1. 3 4 यक्ष्मणा

24 a) K3 4 D3 4 राज्ये (for राष्ट्रे) K यदा त्वराजकेनेह — b) D7 बलाहक (for सुरेश्वर°) — c) B3 [अ]भ्यधावन्, D1 व्यधावन्, D7 ह्याधावन्; T1 G1 4 [अ]भ्ययाचन्, G3 [अ]न्वधावन्

25 D5 G1 5 M3–5 om the ref — c) K4 B1 3 4 5 Dn1 D5 D6 8 10 ईती प्रणुद भद्र ते, B3 ईतयोत्र च वर्तते Ca 3 cite ईतय° (as in text) — d) K1 4 B D (except D1 7–9, Dn2 missing) M3 शातनो° K1 2 4 °नदन, K5 Dn1 D7 T2 G2 °वर्धन, D2 °नदन.

26 a) K5 D5 S हि, D3 4 च (for ते) — b) B1 आधिभिर्, D7 उत्पातैर् D3 4 भय°

27 a) D1 प्रणुद्य व्याधीन् (by transp.) K (except K3) B (except B3) Dn1 D2–4 प्रणुद (for प्रणुद्य) D1

भीष्म उवाच ।

प्रजानां क्रोशतीनां वै नैवाक्षुभ्यत मे मनः ।
प्रतिज्ञां रक्षमाणस्य सद्वृत्तं स्मरतस्तथा ॥ २८
ततः पौरा महाराज माता काली च मे शुभा ।
भृत्याः पुरोहिताचार्या ब्राह्मणाश्च बहुश्रुताः ।
मामूचुर्भृशसंतप्ता भव राजेति संततम् ॥ २९
प्रतीपरक्षितं राष्ट्रं त्वां प्राप्य विनशिष्यति ।
स त्वमस्मद्धितार्थं वै राजा भव महामते ॥ ३०
इत्युक्तः प्राञ्जलिर्भूत्वा दुःखितो भृशमातुरः ।
तेभ्यो न्यवेदयं पुत्र प्रतिज्ञां पितृगौरवात् ।
ऊर्ध्वरेता ह्यराजा च कुलस्यार्थे पुनः पुनः ॥ ३१
ततोऽहं प्राञ्जलिर्भूत्वा मातरं संप्रसादयम् ।
नाम्ब शंतनुना जातः कौरवं वंशमुद्वहन् ।
प्रतिज्ञां वितथां कुर्यामिति राजन्पुनः पुनः ॥ ३२
विशेषतस्त्वदर्थं च धुरि मा मां नियोजय ।
अहं प्रेष्यश्च दासश्च तवाम्ब सुतवत्सले ॥ ३३
एवं तामनुनीयाहं मातरं जनमेव च ।
अयाचं भ्रातृदारेषु तदा व्यासं महामुनिम् ॥ ३४
सह मात्रा महाराज प्रसाद्य तमृषिं तदा ।
अपत्यार्थमयाचं वै प्रसादं कृतवांश्च सः ।
त्रीन्स पुत्रानजनयत्तदा भरतसत्तम ॥ ३५
अन्धः करणहीनेति न वै राजा पिता तव ।
राजा तु पाण्डुरभवन्महात्मा लोकविश्रुतः ॥ ३६
स राजा तस्य ते पुत्राः पितुर्दायाद्यहारिणः ।
मा तात कलहं कार्षी राज्यस्यार्धं प्रदीयताम् ॥ ३७
मयि जीवति राज्यं कः संप्रशासेत्पुमानिह ।
मावमंस्था वचो मह्यं शममिच्छामि वः सदा ॥ ३८

C. 5. 4999
B. 5. 147 41
K. 5. 147 41

त्व धीर, D2-4 धीर त्व (for वीर त्व)

28 D3 4 7 T2 G2 5 om the ref — a) K (except K3) D2 7 9 क्रोशमानानां, D5 क्षुभ्यतीना वै D7 तु, T G च (for वै) — d) B (except B3) T2 G (except G4) तदा (for तथा)

29 b) T2 G2 5 काली माता (by transp) — c) G2 °हिताश्चान्ये — e) B3 त ऊचुर्, D3.4 बभूवुर् (for मामूचुर्) — f) D3 4.7 सत्तम, Ca सतत (as in text)

30 a) K1.2 D9 भ्रात्रा ते, K3 5 D5 प्रातिप (for प्रतीप-) D3 4 T2 G2 राज्य (for राष्ट्र) — b) S त्वा प्राप्य न विनश्यतु (M3-5 त्वामप्राप्य विनश्यति) — c) K1.2 स नृप, T2 G2 सर्वम् (for स त्वम्) D9 नृपास्माक हितार्थं वै — d) K3 T1 G1.4 °श्रुते (for °मते)

31 K4 om (hapl) 31b-32a — c) D7 चाकथय (for न्यवेदय) B D (except D1.2, Dn2 missing) G3 तत्र (for पुत्र) — d) B3 प्रति (for पितृ) G3 M (M1 inf lin as in text) प्रतिज्ञा प्रति गौरव — After 31, B1 Dn1 read (with v l) 33ab (for the first time) *repeating* it in its proper place

32 K4 om. 32a (cf v l 31) B3 D3 G5 om. (hapl) 32, K1 reads it in marg *sec m* — b) K4 D3 D9 सम्प्रसादयन् G4 दुःखितो भृशमातुर (=31b) also — c) K4 D3 4 T G (G5 om) नाह, D2 नास्मि, D8 नाद्य, D9 न वै (for नाम्ब) K4 B (B3 om) Dn D5 D1-4 M3 शांतनुना — d) K1-3 पौरव (for कौरव)

33 For B1 Dn1 cf v l 31 — a) M1 2 त्वदर्थे K3 वै, D9 तत् (for च) — b) T1 G1.4 त्व (for मा) N (Dn2 missing) प्रतिज्ञा कृतवानह (Dn1 first time as in text!) — d) K2 D9 तवास्मि, K4 B1.3 4 Dn1 D2-4.6 8 तवाद्य, D7 भवत्या, T2 तवापि (for तवाम्ब) D10 पितृगौरवात् (for सुत°)

34 a) D7 सान्त्वयित्वा (for अनुनीय) — b) D3 4.6 8 जनसंनिधौ, T2 G5 °समदि (for °मेव च) — c) S (except G3) अहं च (for अयाच)

35 c) K4 B Dn1 D5 D1 2 6-8 महाराज, D3 4 अवोच वै, D9 अह चैव, D10 मुनिवर, G1.4 अयाच व° (for अयाच वै) K1-3 °त्यार्थं मया चैव (corrupt) — d) K1 2 D9 तु (for च) — e) Dn1 त्रीन्सु, D5 त्रीन्वा, D1 S स त्रीन् (by transp) D7 उत्पाद्य स पुत्रास्त्रीन् (catalectic) — f) K2 5 तदा भारत°, T1 G1.3 4 तदा वै कुरु°, T2 G2 5 स तदा कुरु°

36 a) K1 2 D2 7 G2 °हीनोय, K4 B Dn1 D5 D1.6 8 10 M1 2 °हीनत्वात्, D3 4 °हीनस्तु, D9 °हीनो वै — b) D9 नायं (for न वै)

37 c) S (except M3-5) साहस (for कलह)

38 a) K5 S (except G4) को राज्य (by transp) — b) D1 T1 G4 इति (for इह) — d) D10 पाण्डवै°, M1 2 कौरव (for व° सदा)

C. 5. 4990 B. 5. 107 42 K. 5. 147 42 न विशेषोऽस्ति मे पुत्र त्वयि तेषु च पार्थिव ।
मतमेतत्पितुस्तुभ्यं गान्धार्या विदुरस्य च ॥ ३९
श्रोतव्यं यदि वृद्धानां मातिशङ्कीर्वचो मम ।
नाशयिष्यसि मा सर्वमात्मानं पृथिवीं तथा ॥ ४०

इति श्रीमहाभारते उद्योगपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

## १४६

वासुदेव उवाच ।
भीष्मेणोक्ते ततो द्रोणो दुर्योधनमभाषत ।
मध्ये नृपाणां भद्रं ते वचनं वचनक्षमः ॥ १
प्रातीपः शतनुस्तात कुलस्यार्थे यथोत्थितः ।
तथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत् ॥ २
ततः पाण्डुर्नरपतिः सत्यसंधो जितेन्द्रियः ।
राजा कुरूणां धर्मात्मा सुव्रतः सुसमाहितः ॥ ३
ज्येष्ठाय राज्यमददाद्धृतराष्ट्राय धीमते ।
यवीयसस्तथा क्षत्तुः कुरुवंशविवर्धनः ॥ ४
ततः सिंहासने राजन्स्थापयित्वैनमच्युतम् ।
वनं जगाम कौरव्यो भार्याभ्यां सहितोऽनघ ॥ ५
नीचैः स्थित्वा तु विदुर उपास्ते स्म विनीतवत् ।

---

39 ᵃ) K3 तात, K5 कश्चित् (for पुत्र) — ᶜ) K1 5 D6 तुल्य (for तुभ्य). K3 मतमेतत्तु वै मम — ᵈ) D3 4 ह (for च)

40 ᵃ) K4 B Dn1 D5 D6–8 10 G4 खलु (for यदि) — ᵇ) K4 D7 G3 मा विशङ्की , B Dn1 D5 D1 6 8 नाभि°, D3 4 मा च श°, D10 माभि° (for माति°) K4 त्वमेव च (for वचो मम) K1 2 D6 मातिशङ्कस्व मे वचः — ᶜ) K4 5 D5 D3 4 7 8 सर्वान् (for सर्वम्) K1–3 D6 नाशयिष्यन्निम सर्वं — ᵈ) S पृथिवीपते (for °वीं तथा).

Colophon. Dn2 D5 missing — *Sub-parvan* D3.4 युद्धनिर्यात्रा, T1 G1 4 भगवत्प्रतियान, M भगवद्यान — *Adhy name* K1 2 D6 वासुदेववाक्य, B5 D3 भीष्मवाक्य; G1 4 पाण्डवसमागमे सभावृत्तान्तकथन, G5 M भीष्मवाक्यकथन — *Adhy no* (figures, words or both) D6 37 (=137), D7 T2 M 148 (M4 147), T1 G2 4 5 149, G1 150, G3 146 — *S'loka no* K5 Dn1 43

### 146

☞ This adhy is missing in Dn2 (cf v l 5 143 2), tho MS is mostly ignored here

1 K4 D2 T G (except G1) श्रीभगवान्, K5 D7 श्रीकृष्ण (for वासुदेव.) — ᵃ) D3 4 T2 G2 5 तथा, M2 तदा (for ततो) — ᵇ) K1 इदं वच (for अभाषत) — ᶜ) K5 कुरूणा (for नृपा°) K1 उवाच राजमध्ये वै — ᵈ) S (except G3 M1) °क्षम

2 Before 2, D3 4 G5 ins द्रोण उ° (G5 om उ°) — ᵃ) K2 (by corr ) S (except G2) प्रातिपि° K4 B D5 D2–4 शातनुस् — ᵇ) B1 2 4 D5 D6 8 कुलस्यार्थं K3 यथोच्छ्रित°, B1 2 4 Dn1 D5 D3 10 समुत्थित°, B5 D5 यथा स्थित°, D6 समुच्छ्रित°, T G यथोचित° (G3 स्थितोभवत्) — G3 om 2ᶜᵈ — ᶜ) B D (except D7–9, Dn2 missing) यथा (for तथा) — ᵈ) K3 यथाभवत्, G2 यथोचित (for स्थितोऽभवत्)

3 D4 om 3ᵃ–4ᵇ — ᵃ) D5 D6 8 यथा (for तत°) — ᶜ) S भद्र ते (for धर्मात्मा) — ᵈ) T1 G1 4 सुवृत्त , G3 °प्रीत° (for °व्रतः)

4 D4 om 4ᵃᵇ (cf v l 3) — ᵃ) K3–5 B D (Dn2 missing, D4 om ) अददत्, Cn s अददात् (as in text) — ᶜ) B Dn1 D5 D6 10 यवीयसे तथा; D3 4 तथा यवीयस° B Dn1 D5 D6 10 Ca क्षत्त्रे; G3 4 क्षत्त° — ᵈ) K4 B (except B3) Dn1 D5 D6 3 10 कुरूणा वंशवर्धन° — After 4, T2 G2 3 5 read stanzas 5–12 in the following order 7, 10, 11, 6, 9, 8, 5, 12,

5 For sequence of T2 G2.3 5, cf v l 4. — ᵃ) T1 G1.4 M5 राज्ये, M2 राजा (for राजन्) — ᵇ) K2 इम, T1 G1 एत, G4 5 एव, Ca एन (as in text) K2 अच्युत, K5 D2–4 7 8 T1 G1 4 अच्युतः — ᵈ) K2 B3 D6 T2 G2 3 5 M1 2 [ऽ]नघ°, B1 2 4 Dn1 D5 D1.6–8 10 T1 G4 नृप°, G1 नृप (for ऽनघ)

6 For sequence of T2 G2 3.5, cf v l 4 — ᵇ) K3 तमुपास्ते, G2 पार्श्वे तस्य (for उपास्ते स्म). K1 4 D6 स, B3 च; G3 सु° (for स्म) — ᵈ) G2 उद्वहन्, G3 4 M1 5

प्रेष्यवत्पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ॥ ६
ततः सर्वाः प्रजास्तात धृतराष्ट्रं जनेश्वरम् ।
अन्वपद्यन्त विधिवद्यथा पाण्डुं नराधिपम् ॥ ७
विसृज्य धृतराष्ट्राय राज्यं स विदुराय च ।
चचार पृथिवीं पाण्डुः सर्वां परपुरंजयः ॥ ८
कोशसंजनने दाने भृत्यानां चान्ववेक्षणे ।
भरणे चैव सर्वस्य विदुरः सत्यसंगरः ॥ ९
संधिविग्रहसंयुक्तो राज्ञः संवाहनक्रियाः ।
अवैक्षत महातेजा भीष्मः परपुरंजयः ॥ १०
सिंहासनस्थो नृपतिर्धृतराष्ट्रो महाबलः ।
अन्वास्यमानः सततं विदुरेण महात्मना ॥ ११
कथं तस्य कुले जातः कुलभेदं व्यवस्यसि ।
संभूय भ्रातृभिः सार्धं भुङ्क्ष्व भोगाञ्जनाधिप ॥ १२
ब्रवीम्यहं न कार्पण्यान्नार्थहेतोः कथंचन ।
भीष्मेण दत्तमश्नामि न त्वया राजसत्तम ॥ १३
नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप ।
यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत्कुरु ॥ १४
दीयतां पाण्डुपुत्रेभ्यो राज्यार्धमरिकर्शन ।
सममाचार्यकं तात तव तेषां च मे सदा ॥ १५
अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ १६
एवमुक्ते महाराज द्रोणेनामिततेजसा ।
व्याजहार ततो वाक्यं विदुरः सत्यसंगरः ।
पितुर्वदनमन्वीक्ष्य परिवृत्य च धर्मवित् ॥ १७
देवव्रत निबोधेदं वचनं मम भाषतः ।
प्रनष्टः कौरवो वंशस्त्वयायं पुनरुद्धृतः ॥ १८
तन्मे विलपमानस्य वचनं समुपेक्षसे ।
कोऽयं दुर्योधनो नाम कुलेऽस्मिन्कुलपांसनः ॥ १९ C. 5. 5021 B. 5. 142. 19 K. 5. 148. 19

---

उत्क्षिपन्.

7 For sequence of T2 G2 2 5, cf v l. 4 — b) D6 8 10 जनाधिप, D9 G5 नरेश्वर (for जनेश्वरम्) — c) M3-5 अन्वपद्यन्नमधिप (M4 *inf lin* as in text) — d) K3-5 B Dn1 D5 D2 8 G5 जनाधिप, D3 4 जनाधिप

8 For sequence of T2 G2 2 5, cf. v.l 4 — b) D3 4 च (for स) — c) G4 पृथिवीं पालयामास — d) G4 पाडु (for सर्वां)

9 For sequence of T2 G2 2.5, cf. v l. 4 — a) A few N MSS कोप- K1 D9 -संवनने, Dn1 संवलने, S -सयमने, Ca -सवरणे (for -सजनने) Cn cites सवननं, Cs सवलन — b) K5 B4 D3.4 6 8 9 S om. च D5 D10 अनुर॰ (for चान्वे॰)

10 For sequence of T2 G2 2 5, cf. v l. 4 G3 om 10 — a) K ॰संयुक्ता, D2 ॰सयुक्ता, T1 G1.4 M1 ॰तत्त्वज्ञो — b) K2 B D5 D1.9 10 T2 G2 राज्ञा (for राज्ञ॰) K1.2 D7 संवेदनक्रिया॰, K3 सजनन॰, K4 सगमना क्रि॰, K5 संवदन॰, D2 सधाननक्रिया, D3 4 8 स(*or* स)मुदिता क्रि॰, S (G3 om.) वैवाहिक(G4 M2-5 ॰कीं)क्रिया, Cn as in text — c) D3 4 अवैक्षेत, G4 M2-5 अवेक्षत — d) S (G3 om ) भीष्म कुरुपितामह

11 For sequence of T2 G2 2 5, cf v l 4 — b) T G2 5 महामति , G3 महीपति (for महाबल॰) — c) G3 अन्वास्यते च

12 a) M (except M5) त्वस्य (for तस्य) — b) S करिष्यसि (for व्यव॰)

13 D8 om (hapl ) 13c–14b — b) D3 नार्थ॰ (for नार्थं॰) — c) B1 5 Dn1 D6 9 इच्छामि (for अश्नामि)

14 D8 om 14ab (cf v l 13) — b) G3 M4 म्रत्यु॰, G4 मृत्यु॰ (for वृत्त्यु॰) — G4 om. 14c–15d — d) T1 प्राह (for त्वाह)

15 G4 om 15 (cf v l 14). — b) A few N MSS ॰कर्षण (for ॰कर्शन) — d) S (G4 om ) पार्थिव (for मे सदा)

16 c) K1 2 D2 प्रलप्तेन (for प्रलापेन) — d)=5 39 7d, 41 33d

17 b) K1 ॰बुद्धिना (for ॰तेजसा) — c) D3 4 तदा (for ततो) — c) B. D5 D2-4 S वचनम् (for वदनम्) K (except K4) D7 9 उद्वीक्ष्य (for अन्वीक्ष्य)

18 Before 18, B Dn1 D5 D1 3 4 6 8 10 ins विदुर उ॰ — b) B3 D9 भारत, D5 M3-5 भाषित (for भाषत॰) — G3 transp 18cd and 19ab — c) Some MSS प्रणष्ट — d) K5 हि, D3.4 [प्र]व, S च (for [अ]य)

19 G3 transp 18cd and 19ab — a) K3 S (for G. see below) त्व मे (for तन्मे) K3 प्र॰ (for वि॰) G3 त्वमेव लिप्समानस्य — b) K1 2 5 D7 9 T G (except

C. 5. 5022
B. 5. 148. 20
K. 5. 148. 20

यस्य लोभाभिभूतस्य मतिं समनुवर्तसे ।
अनार्यस्याकृतज्ञस्य लोभोपहतचेतसः ।
अतिक्रामति यः शास्त्रं पितुर्धर्मार्थदर्शिनः ॥ २०
एते नश्यन्ति कुरवो दुर्योधनकृतेन वै ।
यथा ते न प्रणश्येयुर्महाराज तथा कुरु ॥ २१
मां चैव धृतराष्ट्रं च पूर्वमेव महाद्युते ।
चित्रकार इवालेख्यं कृत्वा मा स्म विनाशय ।
प्रजापतिः प्रजाः सृष्ट्वा यथा संहरते तथा ॥ २२
नोपेक्षस्व महाबाहो पश्यमानः कुलक्षयम् ।
अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते ।
वनं गच्छ मया सार्धं धृतराष्ट्रेण चैव ह ॥ २३
बद्ध्वा वा निकृतिप्रज्ञं धार्तराष्ट्रं सुदुर्मतिम् ।
साध्विदं राज्यमद्यास्तु पाण्डवैरभिरक्षितम् ॥ २४
प्रसीद राजशार्दूल विनाशो दृश्यते महान् ।
पाण्डवानां कुरूणां च राज्ञां चामिततेजसाम् ॥ २५
विररामैवमुक्त्वा तु विदुरो दीनमानसः ।
प्रध्यायमानः स तदा निःश्वसंश्च पुनः पुनः ॥ २६

ततोऽथ राज्ञः सुबलस्य पुत्री
धर्मार्थयुक्तं कुलनाशभीता ।
दुर्योधनं पापमतिं नृशंसं
राज्ञां समक्षं सुतमाह कोपात् ॥ २७
ये पार्थिवा राजसभां प्रविष्टा
ब्रह्मर्षयो ये च सभासदोऽन्ये ।
शृण्वन्तु वक्ष्यामि तवापराधं
पापस्य सामात्यपरिच्छदस्य ॥ २८
राज्यं कुरूणामनुपूर्वभोग्यं
क्रमागतो नः कुलधर्म एषः ।
त्वं पापबुद्धेऽतिनृशंसकर्म-
न्राज्यं कुरूणामनयाद्विहंसि ॥ २९
राज्ये स्थितो धृतराष्ट्रो मनीषी
तस्यानुजो विदुरो दीर्घदर्शी ।
एतावतिक्रम्य कथं नृपत्वं
दुर्योधन प्रार्थयसेऽद्य मोहात् ॥ ३०
राजा च क्षत्ता च महानुभावौ

---

G3 किमु° (for समु°)

20 c) K3 D9 कृतघ्नस्य (for [अ]कृतज्ञस्य) — d) B Dn1 D8 D1.6 8 10 लोभेन हृ(Dn1 धृ)त° — e) Ds1 D6 8 अतिक्रमति

22 b) Ds2 D6 10 सर्वम् (for पूर्वम्) D10 चैव (for एव) K4 B (except B5) Dn1 D8 D6 8 10 महामते; G8 पितामह (for महाद्युते) — d) D2 T G राजन्, M1 2 मानुः; M3–5 त्व मा (for मा स्म) B Dn1 D8 D6 8 10 कृत्वा स्थापितवानसि — f) T1 G1.4 पुन°, T2 प्रभु°, G2 3 5 M प्रजा° (for तथा)

23 a) K (except K4) D7 मोपेक्षस्व — c) D8 4 अहो; T1 G1 4 अपि (for अथ) — d) K3 पर्युपस्थिते, B3.5 S समुप° — f) K (except K4) D7 9 चा(K1.2 वा)नघ, B3 D1 T G (except G5) चैव हि

24 c) K4 B D (except D1.9, Dn2 D5 missing) शाधीद (for साध्विद) K3 अध्यास्व, K4 B D (except D1, Dn2 missing) अद्यास्तु, T1 उच्छिद्य, T2 G1 2 5 आच्छिद्य, G3 M अर्मार्य, G4 उत्सृज्य (for अद्यास्तु) — d) S (except G3 4) अभिरक्ष्यता

25 a) T1 G5 M नरशार्दूल, G3 पुरुषव्याघ्र, G4 कुरुशार्दूल — 25c = 1 1 11c — d) K4 B2 3 5 Dn1 D8 D1 6 8–10 T1 G1 4 om च D3 4 संक्षेपो वै भविष्यति

26 c) K3 5 S (except G3 4) सतत (for स तदा) — d) Some MSS निश्वसश्च

27 a) K4 ततो नु, D6 8 9 ततोस्य (for ततोऽथ) G4 M2 om. ऽथ T1 G1 3 ततो राज्ञ सुबलस्याथ पुत्री: — b) T1 G1.2 5 °युक्ता (for °युक्त) — c) K3 B3.5 D1 S (except G1.3 4) सुयोधन T1 G1.4 °बुद्धिं (for °मतिं) — d) D8 समीपे, D3 4 पुरस्तात् (for समक्ष)

28 b) M3–5 [ऽ]थ (for च) — c) T2 G1.2 5 तथापराधं, M3–5 यथापराध° (for तवापराध)

29 a) D1 तथा (for राज्य) K5 B Dn1 D8 D1–3 6 10 °पूर्वभोज्य, D4 8 G3 °रूपभोज्य; D7 °रूपभोग्य, T2 G2 5 °भूतभोग्य — b) K2 D9 कुल एष धर्म° (for कुलधर्म एष°) — c) G3 °वृत्ते (for °बुद्धे) K5 D3 4 S सु- (for ऽति-) D2 -काम, D3 4 10 -कर्मा, D6 8 G4 -कर्मं (for -कर्मन्) — d) K4 D3 4 6 8 S निहंसि (for विहंसि).

30 a) S राजा (for राज्ये) — b) T1 G3–5 M3 5 यस्य (for तस्य) — d) K3 S [ऽ]ति- (M3.5 हि)

भीष्मे स्थिते परवन्तौ भवेताम् ।
अयं तु धर्मज्ञतया महात्मा
न राज्यकामो नृवरो नदीजः ॥ ३१
राज्यं तु पाण्डोरिदमप्रधृष्यं
तस्याद्य पुत्राः प्रभवन्ति नान्ये ।
राज्यं तदेतन्निखिलं पाण्डवानां
पैतामहं पुत्रपौत्रानुगामि ॥ ३२
यद्ब्रूते कुरुमुख्यो महात्मा
देवव्रतः सत्यसंधो मनीषी ।
सर्वं तदस्माभिरहत्य धर्मं
ग्राह्यं स्वधर्मं परिपालयद्भिः ॥ ३३
अनुज्ञया चाथ महाव्रतस्य
ब्रूयान्नृपो यद्विदुरस्तथैव ।
कार्यं भवेत्तत्सुहृद्भिर्नियुज्य
धर्मं पुरस्कृत्य सुदीर्घकालम् ॥ ३४
न्यायागतं राज्यमिदं कुरूणां
युधिष्ठिरः शास्तु वै धर्मपुत्रः ।
प्रचोदितो धृतराष्ट्रेण राज्ञा
पुरस्कृतः शांतनवेन चैव ॥ ३५

इति श्रीमहाभारते उद्योगपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

## १४७

वासुदेव उवाच ।
एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः ।
दुर्योधनमुवाचेदं नृपमध्ये जनाधिप ॥ १
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि पुत्रक । C. 5. 5141 B. 5. 147. 2 K. 5. 149. 2

(for स्व)

31 [a]) D8.4 S transp राजा and अचा D5 D7 10 (by corr.) M2 °भावे (for °भावौ) — [c]) K (except K4) D5 D7 9 धर्मात्म°, T1 धर्मार्थ° (for धर्मज्ञ°) G2 M4 om. (hapl.) 31[d]–33[a] — [d]) B (except B3) D5 D10 न कामयेद्यो (for न राज्यकामो)

32 G2 M4 om. 32 (cf. v.l. 31) — [a]) K (except K4) D7 च (for तु) — [b]) D2 4 नित्य (for नान्ये) — [c]) K1.2 D6 अखिल (for निखिल) — [d]) D5 °पौत्रान्वयैव

33 G2 M4 om. 33[a] (cf. v.l. 31) — [b]) K4 5 D2–4 S मनस्वी (for मनीषी) — [c]) K D2 7–9 अहीन-धर्मं, B2.6 अहत्य कार्यं, D1 इहान्यधर्मं, D3.4 इहैत्य कार्यं, D6 अहश्च कार्यं, T1 अधीत्यमर्थं, T2 G M अधीत्य धर्मं (G1 अधिज्य सर्वं) (for अहत्य धर्मं) — [d]) B Dn1 D5 D6 10 राज्य (B1 राष्ट्र), D2 4 सम्यक (for ग्राह्य) B Dn1 D5 D10 स्व(Dn1 च)धर्मान् (for स्वधर्मं)

34 [a]) K4 D3.4 अनुग्रहात् (for °ज्ञया) K2 5 D7 8 T G (except G2) M1.2 वा (for च) K5 अद्य, D2 4 अपि, D10 अस्य (for अथ) — [b]) D3.4 कुर्याद् (for ब्रूयाद्) D7 वचो, T2 नरो (for नृपो) K1.2 B (except B8) Dn1 D6 8 10 M2 [ऽ]थ (for यद्) — [c]) D2 4.6 सुहृदा (for सुहृद्भिर्) B1.2 4 Dn1 D1 G3 नियुज्य, B2 निशम्य, D8 नियोज्य, T1 G4 नियोज्य

35 [c]) D6 G4 M3–5 राजा (for राज्ञा) — [d]) K3 5 चेति (for चैव)

Colophon Dn2 D5 missing — *Sub-parvan* K4 अभिनिर्याणयात्रा, D3 4 अभिनिर्यात्रा, D10 भगवदागमन; M1.2 भगवद्यान — *Adhy name* G5 गान्धारीवाक्य, M गुरुवाक्यकथन — *Adhy no* (figures, words or both) D6 38 (=138), T1 G2 4 5 150, T2 M 149 (M1 148), G1 151, G3 147 — *S'loka no* K5 37, Dn1 36

## 147

☞ This adhy is missing in Dn2 (cf. v.l. 5 143 2) The MS is mostly ignored here

1 K5 D2 T G M5 श्रीभगवान् (for वासुदेव°) — G2 om. (hapl.) 1[d]–2[a] — [d]) K4 B Dn1 D5 D1 2 4 6 8 10 M4 राजमध्ये B1–3 D2 जनाधिपं, Dn1 D5 2 D10 T G1 5 M2–5 जनाधिप°

C. 5. 5041
B. 5. 142. 2
K. 5. 142. 2

तथा तत्कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥ २
सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्धनः ।
सोमाद्बभूव षष्ठो वै ययातिर्नहुषात्मजः ॥ ३
तस्य पुत्रा बभूवुश्च पञ्च राजर्षिसत्तमाः ।
तेषां यदुर्महातेजा ज्येष्ठः समभवत्प्रभुः ॥ ४
पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्धनः ।
शर्मिष्ठायाः संप्रसूतो दुहितुर्वृषपर्वणः ॥ ५
यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत् ।
दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ॥ ६
यादवानां कुलकरो बलवान्वीर्यसंमतः ।
अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः ॥ ७
न चातिष्ठत्पितुः शास्त्रे बलदर्पविमोहितः ।
अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ॥ ८
पृथिव्यां चतुरन्तायां यदुरेवाभवद्बली ।
वशे कृत्वा स नृपतीनवसन्नागसाह्वये ॥ ९
तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः ।
शशाप पुत्रं गान्धारे राज्याच्च व्यपरोपयत् ॥ १०
ये चैनमन्ववर्तन्त भ्रातरो बलदर्पितम् ।
शशाप तानपि क्रुद्धो ययातिस्तनयानथ ॥ ११
यवीयांसं ततः पूरुं पुत्रं स्ववशवर्तिनम् ।
राज्ये निवेशयामास विधेयं नृपसत्तमः ॥ १२
एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते ।
यवीयांसोऽभिजायन्ते राज्यं वृद्धोपसेवया ॥ १३
तथैव सर्वधर्मज्ञः पितुर्मम पितामहः ।

---

2 $G_3$ om $2^a$ (cf v l 1) — $^b$) $K_4$ $D_2$ $T_2$ $G_{2.5}$ यथा, $T_1$ $G_{1.4}$ M यस्त्वा (for यस्त्वा) — $^d$) $D_8$ $G_3$ मयि (for पितृ)

3 $B_4$ om $3^c$–$5^d$. — $^c$) $K_4$ दशमो, B ($B_4$ om) $Dn_1$ $D_8$ $D_{1-4.6.8.10}$ षष्ठोय (for षष्ठो वै) — After 3, $K_6$ ins 537*.

4 $B_4$ om 4 (cf v l 3) $K_6$ om. $4^a$–$5^b$. — $^a$) B ($B_4$ om) $Dn_1$ $D_8$ $D_{1.6.8.10}$ हि (for च) — $^c$) $D_8$ $D_{6.10}$ °राज (for °तेजा) — $D_6$ om (? hapl) from भयत्प्रभु (in $4^d$) up to संमत (in $18^b$) — $^d$) T G सुत (for प्रभु°) — $D_8$ ins after 4 $K_6$ (which om. $4^a$–$5^b$) ins after 3

537* तस्याभवस्त्रय पुत्रा द्रुह्योऽनु पूरुरेव च ।

5 $B_4$ $D_6$ om 5 (cf v l 3, 4), $K_6$ om $5^{ab}$ (cf. v l 4). — $^c$) $K_4$ B ($B_4$ om) $Dn_1$ $D_8$ $D_{2.8.10}$ $T_1$ $G_6$ शर्मिष्ठ्या $B_2$ समुद्भूतो, $D_{3.4}$ समुत्पन्नो, $D_7$ संप्रभूतो — $^d$) B ($B_4$ om) $Dn_1$ $D_8$ $D_{2.8.10}$ दुहित्रा (for °तुर्)

6 $D_6$ om 6 (cf v l 4) — $^a$) K $B_6$ $D_{1-4.7.9}$ तु (for च) $B_3$ $D_{3.4}$ भरतश्रेष्ठ — $^c$) $Dn_1$ $G_3$ दौहित्रास्ते तु, $T_2$ °श्चापि

7 $D_6$ om 7 (cf v l 4) — $^b$) $D_{82}$ बलदर्पविमोहित (= $8^b$), $D_{3.4}$ बलवीर्यसमन्वित, $D_8$ वीर्यवान्बलसमत — $^c$) $D_7$ गुरु (for क्षत्र) — $^d$) $D_{10}$ गर्व° (for दर्प°)

8 $D_6$ om. 8 (cf v l 4) — $^a$) $K_3$ नावतिष्ठन् — $^b$) $B_2$ °समन्वित — After $8^{ab}$, $D_8$ ins.

* कुलक्षय चकाराशौ राज्यलोभादकारणात् ।

— $^c$) $K_3$ $D_{3.4}$ स (for च)

9 $D_6$ om 9 (cf v l. 4) — $^c$) S (except $G_1$) तु (for स) $K_3$ $D_2$ पृथिवीं (for नृपतीन्). — $^d$) $K_4$ B $Dn_1$ $D_8$ $D_{1.10}$ $G_5$ न्यवसन्, $G_3$ निवसन् (for अवसन्)

10 $D_6$ om 10 (cf v l 4) — $^a$) $K_{1.2.5}$ $T_2$ $G_6$ तत् (for त) — $^c$) $D_{3.4}$ राजा (for पुत्र) — $^d$) $D_{3.4}$ $G_4$ राष्ट्रात् (for राज्यात्) $K_4$ $D_2$ वै (for च) B $Dn_1$ $D_8$ $D_{8.10}$ [अ]पि व्यरोपयत्, $D_{3.4}$ $G_3$ [अ]प्यवरो°, $D_9$ $T_2$ $G_{2.5}$ [अ]प्यपरो°, M (except $M_2$) व्यवरो° (for व्यपरो°)

11 $D_6$ om 11 (cf v l 4) — $^a$) $D_8$ $D_{10}$ $G_1$ अनुवर्तत, $D_7$ $G_3$ अनुवर्तंते, $D_9$ अन्ववर्तंते — $^b$) $K_4$ $B_{1.3.4}$ $D_{1.3.4.8}$ बलदर्पिता° — $^c$) $K_4$ B $D_{1-4.10}$ अभि-; $D_8$ अति- (for अपि) — $^d$) $K_{3.5}$ $D_8$ तथा (for अथ).

12 $D_6$ om 12 (cf. v l 4), $K_4$ om. (hapl.) $12^a$–$13^b$. — $^{ab}$) $K_5$ $G_3$ transp. पूरु and पुत्र $D_{1.7}$ स्व; $D_8$ स; $T_1$ सु, $T_2$ $G_{1-4}$ M त (for स्व) $D_{1.7}$ T $G_{1-3}$ M वशवर्धनं; $G_4$ वसुवर्धन (for -वशवर्तिनम्). $G_5$ पुत्र वशविवर्धन — $^d$) $D_8$ $D_{10}$ विधिवत् (for विधेय). $K_{2.5}$ $B_3$ $Dn_1$ $D_{3.4.7.9}$ $T_2$ $G_{1.2.4}$ $M_{3.5}$ °सत्तम, $G_6$ °सत्तम

13 $D_6$ om. 13 (cf v l 4), $K_4$ om. $13^{ab}$ (cf v l. 12), $D_8$ om $13^a$–$14^b$, $G_3$ om (hapl) $13^a$–$17^b$ — $^b$) $K_3$ $B_{1.3.5}$ $Dn_1$ $D_8$ $D_{2.7.10}$ अधि°, Ca n s अभि° (as in text) — $^c$) $K_{1.2.5}$ $D_{7.9}$ यवीयसो $K_{1.2.4}$ $B_{1.2.4}$ $Dn_1$ $D_{1.3.4.8.9}$ $T_2$ $G_2$ $M_2$ अपि (for अभि) K (except $K_4$) $Dn_1$ $D_{7.9}$ -जायेत, Cn -जायन्ते (as in text).

14 $D_6$ $G_3$ om. 14, $D_8$ om. $14^{ab}$ (cf. v.l. 4, 13).

प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः ॥ १४
तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः ।
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः ॥ १५
देवापिरभवज्ज्येष्ठो बाह्लीकस्तदनन्तरम् ।
तृतीयः शंतनुस्तात धृतिमान्मे पितामहः ॥ १६
देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः ।
धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः ॥ १७
पौरजानपदानां च संमतः साधुसत्कृतः ।
सर्वेषां बालवृद्धानां देवापिर्हृदयंगमः ॥ १८
प्राज्ञश्च सत्यसंधश्च सर्वभूतहिते रतः ।
वर्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च ॥ १९
बाह्लीकस्य प्रियो भ्राता शंतनोश्च महात्मनः ।
सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् ॥ २०
अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः ।
संभारानभिषेकार्थं कारयामास शास्त्रतः ।
मङ्गलानि च सर्वाणि कारयामास चाभिभूः ॥ २१
तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह ।
सर्वे निवारयामासुर्देवापेरभिषेचनम् ॥ २२
स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम् ।
अश्रुकण्ठोऽभवद्राजा पर्यशोचत चात्मजम् ॥ २३
एवं वदान्यो धर्मज्ञः सत्यसंधश्च सोऽभवत् ।
प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः ॥ २४
हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः ।
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन्द्विजर्षभाः ॥ २५
ततः प्रव्यथितात्मासौ पुत्रशोकसमन्वितः ।
ममार तं मृतं दृष्ट्वा देवापिः संश्रितो वनम् ॥ २६
बाह्लीको मातुलकुले त्यक्त्वा राज्यं व्यवस्थितः ।
पितृभ्रातॄन्परित्यज्य प्राप्तवान्पुरमृद्धिमत् ॥ २७

C. 5. B. 5. K. 5.

— d) B3 Dl.2 सर्व- (for त्रिषु)

15 D6 G8 om. 15 (cf. v.l. 4, 13) — b) S (G8 om.) प्रजा (for राज्यं) — d) K1 महौजस॰, D3.4 मनस्विन॰ (for यश॰)

16 D6 G8 om. 16 (cf. v.l. 4, 13) — a) K3 पूर्वं, B3.4 Dn1 D5 Dl.3 G4 श्रेष्ठ॰ (for ज्येष्ठ॰) — b) K (except K4) D2 T2 G2 वाह्लिकस् B1.3 D2.4 S (G8 om.) तदनंतर॰ — c) K4 B Dn1 D5 D3-4 10 शांतनुस् S (except G4, G8 om.) तत्र (for तात) — d) B3 न॰ (for मे) D9 धृतिमतो महायशा॰

17 D6 om. 17, G8 om. 17ab (cf. v.l. 4, 13) — b) K1 Dn1 D7 9 ॰सत्तम — d) D3.4 गुरु; T1 G1 M1 पितृ (for पितु॰)

19 a) K4 B1.2.4 Dn1 D5 D6 8 10 वदान्य॰ (for प्राज्ञश्च) — b) B3 सर्वधर्मभृतां वर॰.

20 a) K (except K4) B (except B5) D2 T2 G1-3 वाह्लिकस्य — b) K4 B Dn1 D5 D6.10 G4 शांतनोश्च — c) K4 D5 परम (for च पर) — d) M1.2 श्रमाणां हि, M4 सहितानां (for सहि॰)

21 ef) B1.2.4 Dn1 D5 D6 8-10 कारयामास, B3.5 Dl.2 मंगलार्थानि (for मङ्गलानि च) B1.2.4 Dn1 D5 D9 10 मंगलार्थानि, D6 8 मंगलानि च (for कारयामास) K1-3 D1 T2 Gl.2 चाभिभुः, K4 च प्रभुः, K5 चाभिभो, B1-4 Dn1 D9 वै विभुः, B5 D5 D2 Cap वा विभुः, D3.4.6 8 शाश्वत॰, D7 चाभिभो, D10 च प्रभो, Ca चाविभूः (for चाभिभूः)

22 a) D5 D2 G8 तत् (for तं) — c) G3 निवेद॰यामासु

23 a) B6 D2 G1 पुतत्, D1 तच्च (for स तत्) — c) S (except G8) बाष्प॰ (for अश्रु॰) — d) G8 ॰शोचयदात्मज; M3.5 ॰शोचत्तमात्मजं

24 b) D3.4 ॰मथोपि वै (for ॰संधश्च सो) Dl.3.4 विभुः, D2.6 [ऽ]भिभूः (for ऽभवत्) — c) K2 जनानां; K8 द्विजानां (for प्रजानां) K2.5 Dn1 D6 8 T2 Gl.4 अपि स, K3 लोकानां (for अपि सन्) — d) K3 स; S च (for प्र-)

25 b) D6 8 वै प्रजा॰ (for देवता॰)

26 a) K4 B2.4.5 Dn1 D5 D10 प्रव्यथितागोप्त्रौ — c) K2.4 B Dn1 Dl.3.4.6 8 10 (m as in text) निवारित (for ममार त) K4 B Dn1 D5 D1-4 6.8 10 T1 G5 नृप (for मृत) — d) K5 सस्मृतो, D3.4 प्रस्थितो (for संश्रितो)

27 D6 om. (hapl.) 27. — a) K (except K4) D2-4 9 T1 Gl.2 वाह्लिको K4 B D5 D2 9 10 G3 M ॰कुल D1 वाह्लिको मातुलं त्यक्त्वा — b) K4 D5 D2-4 8 10 समास्थित॰, B Dn1 G4 समाश्रित॰ (for व्यवस्थित॰) D1 राज्यं च समुपस्थितं — c) S (except T2 Gl.2) पितॄन् (for पितृ॰) K (except K4) D7-9 -भ्रातॄ;

C. 5. 5057
B. 5. 142. 28
K. 5. 142. 28

वाह्लीकेन त्वनुज्ञातः शंतनुर्लोकविश्रुतः ।
पितर्युपरते राजन्राजा राज्यमकारयत् ॥ २८
तथैवाहं मतिमता परिचिन्त्येह पाण्डुना ।
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत ॥ २९
पाण्डुस्तु राज्यं संप्राप्तः कनीयानपि सन्नृपः ।
विनाशे तस्य पुत्राणामिदं राज्यमरिंदम ।
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि ॥ ३०

युधिष्ठिरो राजपुत्रो महात्मा
न्यायागतं राज्यमिदं च तस्य ।
स कौरवस्यास्य जनस्य भर्ता
प्रशासिता चैव महानुभावः ॥ ३१

स सत्यसंधः सततामत्तः
शास्त्रे स्थितो बन्धुजनस्य साधुः ।
प्रियः प्रजानां सुहृदानुकम्पी
जितेन्द्रियः साधुजनस्य भर्ता ॥ ३२

क्षमा तितिक्षा दम आर्जवं च
सत्यव्रतत्वं श्रुतमप्रमादः ।
भूतानुकम्पा ह्यनुशासनं च
युधिष्ठिरे राजगुणाः समस्ताः ॥ ३३

अराजपुत्रस्त्वमनार्यवृत्तो
लुब्धस्तथा बन्धुषु पापबुद्धिः ।
क्रमागतं राज्यमिदं परेषां
हर्तुं कथं शक्ष्यसि दुर्विनीतः ॥ ३४

प्रयच्छ राज्यार्धमपेतमोहः
सवाहनं त्वं सपरिच्छदं च ।
ततोऽवशेषं तव जीवितस्य
सहानुजस्यैव भवेन्नरेन्द्र ॥ ३५

इति श्रीमहाभारते उद्योगपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

---

$D_5$ $D_{8\,4}$ -मावृन् (for -आवृन्) K (except $K_4$) $D_{7-9}$ -परित्यक्त; $D_{8\,4}$ परित्यक्तः — [d]) B $Dn_1$ $D_5$ $D_{1\,10}$ $T_1$ $G_5$ प($D_1$ पु)रमर्धि($B_8$ °मृद्धि)मत्

28 [a]) K (except $K_4$) $D_{1-4}$ $T_2$ $G_2$ वाह्लिकेन $D_{8\,4}$ S [अ]भि- (for तु) — [b]) $K_4$ B $Dn_1$ $D_5$ $D_{2-4\,6\,10}$ शातनुर्

30 [a]) $T_2$ $G_5$ पाहु राज्य सुसंप्राप्त° — [b]) $D_9$ $G_1$ $M_{1.2}$ नृप — [d]) K (except $K_8$) $D_{1.2\,7\,9}$ विधीयते (for अरिंदम) — [e]) $D_{8\,4}$ $T_1$ $G_{1\,8\,5}$ M राज्यस्य; $T_2$ $G_2$ राजन्य (for राज्याय) — After 30, N ($Dn_2$ missing) ins

539* अराजपुत्रो ह्यस्वामी पारक्य हर्तुमिच्छसि ।

[ B $Dn_1$ $D_{6\,8\,10}$ परस्व (for पारक्य) $D_8$ अर्हं° (for इच्छ°) ]

31 [a]) S मनस्वी (for महात्मा) — [c]) $K_4$ $B_{2\,4\,5}$ $Dn_1$ $D_5$ $D_{6\,8-10}$ कुल° (for जन°) $G_8$ दाता (for भर्ता) — [d]) T G (except $G_8$) $M_{1\,2}$ चापि (for चैव)

32 [a]) $K_4$ $B_{8\,5}$ $Dn_1$ $T_1$ स तथाप्र°; $B_{1.2\,4}$ सतताप्रमेय°, $G_{1\,4}$ स सदाप्रमत्त°; $G_8$ स तदाप्र° — [b]) $K_{1\,2\,5}$ $D_{1.2\,7.9}$ गोप्ता, $D_{3\,4}$ भर्ता (for साधु°). — [c]) $K_{1\,2}$ $M_{8-5}$ प्रियाणा (for प्रजानां) $K_{1.2}$ $D_{2\,7}$ सुहृदा च रक्तो, $D_{1\,8\,4}$ सततानुकपी, $D_7$ सुहृदां स रक्तो, $T_2$ $G_{2\,8\,5}$ सुकृतानुकपी

33 [c]) $K_{1\,2}$ [अ]पि (for हि) — [d]) $D_{1\,8\,9}$ राज्यगुणा $K_{1.2}$ च सर्वे (for समस्ताः)

34 [a]) $D_8$ अनार्यपुत्रस्, $T_1$ $G_{1\,4}$ स राजवृत्तस्, $T_2$ $G_{2\,8.5}$ $M_{8-5}$ स राजपुत्रस्, $M_{1.2}$ न राजपुत्रस् — [b]) $K_4$ B D (except $D_7$, $Dn_2$ missing) $T_1$ $G_5$ सदा (for तथा) $M_1$ पाडुपु (for बन्धुपु) — [d]) B (except $B_8$) $Dn_1$ $D_{1.8\,4\,6\,9}$ दुर्विनीत

35 [c]) $K_{1\,2}$ $D_{1\,2\,7}$ हि, $K_{8.4}$ [ऽ]स्ति (for ऽव-) — [d]) K $D_{2\,7\,8}$ अद्य, $D_{8.4}$ $G_4$ इह (for एव).

Colophon $Dn_2$ $D_5$ missing — *Sub-parvan*: $K_4$ अभिनिर्यात्रा, $T_1$ $M_{1\,8-5}$ भगवद्यान ($T_1$ °वत्प्रतियान) — *Adhy name* $Dn_1$ कृष्णवाक्यं, $G_{1\,4}$ सभाया सस्य वृत्तान्तकथनं, $G_6$ M धृतराष्ट्रवाक्य ($G_5$ °ष्ट्रवचनं) — *Adhy no* (figures, words or both) $D_6$ 39 (=139), $T_1$ $G_{2\,4\,5}$ 151, $T_2$ M 150 ($M_4$ 149), $G_1$ 152, $G_8$ 148. — *S'loka no.* $K_5$ $Dn_1$ 36.

## १४८

वासुदेव उवाच ।
एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण न च मन्दोऽन्वबुध्यत ॥ १
अवधूयोत्थितः क्रुद्धो रोषात्संरक्तलोचनः ।
अन्वद्रवन्त तं पश्चाद्राजानस्त्यक्तजीविताः ॥ २
आज्ञापयच्च राज्ञस्तान्पार्थिवान्दुष्टचेतसः ।
प्रयाध्वं वै कुरुक्षेत्रं पुष्योऽद्येति पुनः पुनः ॥ ३
ततस्ते पृथिवीपालाः प्रययुः सहसैनिकाः ।
भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः ॥ ४
अक्षौहिण्यो दशैका च पार्थिवानां समागताः ।
तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत ।
यदत्र युक्तं प्राप्तं च तद्विधत्स्व विशां पते ॥ ५
उक्तं भीष्मेण यद्वाक्यं द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण समक्षं मम भारत ।
एतत्ते कथितं राजन्यद्वृत्तं कुरुसंसदि ॥ ६
साम आदौ प्रयुक्तं मे राजन्सौभ्रात्रमिच्छता ।
अभेदात्कुरुवंशस्य प्रजानां च विवृद्धये ॥ ७
पुनर्भेदश्च मे युक्तो यदा साम न गृह्यते ।
कर्मानुकीर्तनं चैव देवमानुषसंहितम् ॥ ८
यदा नाद्रियते वाक्यं सामपूर्वं सुयोधनः ।
तदा मया समानीय भेदिताः सर्वपार्थिवाः ॥ ९
अद्भुतानि च घोराणि दारुणानि च भारत ।
अमानुषाणि कर्माणि दर्शितानि च मे विभो ॥ १०
भर्त्सयित्वा तु राज्ञस्तांस्तृणीकृत्य सुयोधनम् । C. 5. 5083 B. 5. 150. 12 K. 5. 150. 12

---

### 148

☞ This adhy is missing in Dn2 (cf v.l. 5 143 2) The MS is mostly ignored here

1 K4 D2 T G श्रीभगवान्, K5 कृष्ण॰ (for वासुदेव॰) — $^{a}$) K1.2 4 Ds2 D1–4 7 G4 उक्तः (for उक्ते) K1 2 4 D1.2 7 स (for तु) — $^{d}$) B3 4 Dn1 Ds D8 4 6 8 9 न वै, D10 नैव (for न च) D6 8 9 [ऽ]नु॰, D7 M1 व्य॰ (for ऽन्व॰)

2 $^{ab}$) B Dn1 Ds D1.3.4 6 8–10 मद॰ क्रोध॰ (B3 क्रोधात्), M3–5 क्रुद्धो रोष (for क्रुद्धो रोषात्) — $^{cd}$) K3 T1 G1 4 M अन्वाद्रवत, B3 अन्ववर्तत, Ds अनुद्रवत, D8 अन्वद्रवन् (for अन्वद्रवन्त) D3 तत॰ (for त) T2 G5 transp त पश्चात् and राजान॰

3 $^{a}$) G5 आज्ञापयत D1 च (for तान्) — $^{b}$) Ds2 T G (except G3) पार्थिवो K4 B Dn1 Ds D3 4 6 8–10 नष्ट॰, D1 T G1 2 5 ॰चेतन — $^{c}$) T1 G1 3 4 प्रयात, T2 G2 5 प्रयातु, Ca प्रयाध्व (as in text) — $^{d}$) K2m 3.5 युद्धायेति, D1.8 पुष्पोऽस्येति, S अद्यैवेति, Ca as in text

4 $^{c}$) D3 4 चक्रु॰ (for कृत्वा) — $^{d}$) S प्र॰ (for स॰) K2 3 5 D7 9 कालनोदिता॰, K4 ॰कर्मणा, D1 ॰धर्मणा

5 $^{a}$) Some S MSS अक्षोहिण्य॰ — $^{b}$) K4 B D (except D1 2 7, Dn2 missing) कौरवाणा (for पार्थि॰) — $^{d}$) K3 विरोचन॰, B (except B3) व्यराजत, D9 व्यरोचयत् — D6 om (hapl ) 5$^{e}$–6$^{d}$ — 6$^{ef}$ = (var ) 18$^{cd}$ — $^{e}$) D3 4 भवति (for प्राप्त च) — $^{f}$) B3 महामते (for विशा पते)

7 $^{a}$) K1 2 4 B1 2 4.5 Dn1 D1.2 6 8 साम्यम्, K3 शमम्, K5 समम्, B3 Ds D3 4 9 शाम्यम्, D10 साल्वम्, T1 सामम् (for साम as in D7 T2 G M) T2 G1 2 4 5 चादौ, G3 -भेदौ (for आदौ) — $^{b}$) M इच्छत (for ॰ता) — $^{c}$) K4 B Dn1 Ds D6 8 9 अभेदायास्य व॰, D10 अभेदाच्चास्य व॰ — $^{d}$) K1–3 D3 4 7 चाभिवृ॰, K4 5 D1.2 अभिवृ॰, B3 चापि वृ॰ (for च विवृ॰)

8 $^{a}$) B3 वोक्तो, D3 4 ह्युक्तो, Ca s युक्तो (as in text) — $^{b}$) B3 शाम्ये, D3 4 साम्ना (for साम) K3 युज्य॰ (for गृह्य॰) — $^{c}$) K1.2 D6 ॰कीर्तित, Cs ॰कीर्तनं (as in text) — $^{d}$) K (except K5) D9 G3 4 Ca s दैव॰

9 G2 5 om (hapl.) 9$^{c}$–11$^{b}$, T2 reads the lines in marg

10 G2 5 om 10 (cf v l 9) — $^{a}$) D7 अत्यद्भुतानि (for अद्भुतानि च) Ca cites अद्भुतानि (as in text) D1 च सर्वाणि, D3 4 विचित्राणि (for च घोराणि) Cs cites घोराणि (as in text) — $^{d}$) K4 B2 4 5 Dn1 Ds D6 8–10 मया (for च मे) K4 प्रभो, Ds1 [अ]भिभो (for विभो)

11 G2 5 om 11$^{ab}$ (cf. v l 9) — $^{a}$) K2 B Dn1

C. 5. 5088
B. 5. 150. 12
K. 5. 150. 12

राधेयं भीषयित्वा च सौबलं च पुनः पुनः ॥ ११
न्यूनतां धार्तराष्ट्राणां निन्दां चैव पुनः पुनः ।
भेदयित्वा नृपान्सर्वान्वाग्भिर्मन्त्रेण चासकृत् ॥ १२
पुनः सामाभिसंयुक्तं संप्रदानमथाब्रुवम् ।
अभेदात्कुरुवंशस्य कार्ययोगात्तथैव च ॥ १३
ते बाला धृतराष्ट्रस्य भीष्मस्य विदुरस्य च ।
तिष्ठेयुः पाण्डवाः सर्वे हित्वा मानमधश्चराः ॥ १४
प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च ।
यथाह राजा गाङ्गेयो विदुरश्च तथास्तु तत् ॥ १५
सर्वं भवतु ते राज्यं पञ्च ग्रामान्विसर्जय ।
अवश्यं भरणीया हि पितुस्ते राजसत्तम ॥ १६
एवमुक्तस्तु दुष्टात्मा नैव भावं व्यमुञ्चत ।
दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा ॥ १७
निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः ।
एतत्ते कथितं सर्वं यद्वृत्तं कुरुसंसदि ॥ १८
न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव ।
विनाशहेतवः सर्वे प्रत्युपस्थितमृत्यवः ॥ १९

इति श्रीमहाभारते उद्योगपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥ समाप्तं कर्णोपनिवादपर्व ॥

## १४९

वैशंपायन उवाच ।
जनार्दनवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
भ्रातॄनुवाच धर्मात्मा समक्षं केशवस्य ह ॥ १
श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि ।

---

D5 D8.4 6 8–10 M4 निर्भर्त्सयित्वा, D1 दर्शयित्वा च (for भर्त्सयित्वा तु) K3–5 D2 G3 च (for तु) — c) B4 भर्त्स° (for भीष°)

12 G4 om (hapl) 12ab — a) B Dn1 D5 D6 9 10 धूततो (for न्यूनता) D8 4 धृत° — b) D3.4 निंद्य (for निन्दा) B Dn1 D5 D6. 8–10 कृत्वा (for चैव) K4 B3–5 Dn1 D5 D1. 2 6 8–10 तथा पुन° (for पुनः पुन) — c) G5 च तान् (for नृपान्).

13 c) K (except K5) D7 °भियुक्तं च, G5 M1 2 °दिसयुक्त — b) D3.4 तथाब्रुव, M3–5 अनुध्रुव (for अथाब्रुवम्)

14 a) K4 B Dn1 D5 D1 2 6 8–10 ते शूरा, D7 वचने (for ते बाला) — c) M वाक्ये (M3 4 सर्वे also) — d) D3 जित्वा, G3.4 भि° (for हि°)

15 a) D3 4 सप्रयच्छतु ते राज्य — D7 om (hapl) 15b–16a — b) D1 2 च, D3.4 ये, G3 तु (for ते) B3 D5 D1 3.4 10 भवति (for भवन्तु) K4 D2 वै, B3 D5 D8 4 उत, D1.10 S ते (for च) — c) D5 राजन् (for राजा) — d) B (except B3) D5 D6 8–10 हित तव, Dn1 हित वच (for तथास्तु तत्)

16 D7 om, 16a (of v l 15) — b) D1 विहाय वै (for विसर्जय) — c) K1–3 D2–4 अवश्य- — d) K4 D2 भरतर्षभ; D1 पाडवर्षभा (for राज°)

17 a) B4 5 Dn1 D5 D8 4 6 8 10 °मुक्तोपि, D1 °मुक्तः स. — b) K1 नैष, D2–4 T2 G1 2 4 नैव (for नैव) K4 B Dn1 D5 D1 6 8–10 G4 भागं, D7 शाठ्य (for भाव) — c) D3 4 सोह (for दण्ड)

18 b) K1. 2 5 D3 4 7 M3–5 जनाधिपाः, D1 T2 G3 5 नरर्षभ (T2 °भा°) — 18cd = (var) 6cf. — c) B3 4 5 Dn1 D5 D6 8–10 राजन्, D1 पूर्वं (for सर्वं)

19 b) K1 2 D6–9 पार्थिव, K3 5 M3. 5 पार्थिवा°, Dn1 पार्थिव° (for पाण्डव).

Colophon Dn2 D5 missing — *Sub-parvan* K4 अभिनिर्याणयात्रा, T1 G1 2 4 M भगवद्यान (T1 G1.4 °वत्प्रतियान), to which M1 2 add समाप्त — *Adhy name* K1.2 वासुदेववाक्य (followed by समाप्त), K4 भगवन्निदन, D5 कृष्णवाक्य, T1 दुर्योधनाभिप्राय, G1 4 सभ्य(G4 सत्य)वृत्तान्तकथने दुर्योधनाभिप्राय, G5 भगवद्वचन, M भगवच्चेष्टितकथन — *Adhy no* (figures, words or both) D6 40 (=140), T1 G2 4 5 152, T2 M 151 (M4 150), G1 153, G3 159 — *S'loka no* K5 Dn1 20

After adhy 148, T1 reads adhy. 151

## 149

☞ This adhy is missing in Dn2 (cf v l 5 143 2), the MS is mostly ignored here.

1 c) D6 T2 धर्मज्ञ (T2 also धर्मात्मा as in text) — d) B (except B3) D5 D6 8–10 समक्षे K5 B3

केशवस्यापि यद्वाक्यं तत्सर्वमवधारितम् ॥ २
तस्मात्सेनाविभागं मे कुरुध्वं नरसत्तमाः ।
अक्षौहिण्यस्तु सप्तैताः समेता विजयाय वै ॥ ३
तासां मे पतयः सप्त विख्यातास्तान्निबोधत ।
द्रुपदश्च विराटश्च धृष्टद्युम्नशिखण्डिनौ ॥ ४
सात्यकिश्चेकितानश्च भीमसेनश्च वीर्यवान् ।
एते सेनाप्रणेतारो वीराः सर्वे तनुत्यजः ॥ ५
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
ह्रीमन्तो नीतिमन्तश्च सर्वे युद्धविशारदाः ।
इष्वस्त्रकुशलाश्चैव तथा सर्वास्त्रयोधिनः ॥ ६
सप्तानामपि यो नेता सेनानां प्रविभागवित् ।
यः सहेत रणे भीष्मं शरार्चिःपावकोपमम् ॥ ७
त्वं तावत्सहदेवात्र प्रब्रूहि कुरुनन्दन ।
स्वमतं पुरुषव्याघ्र को नः सेनापतिः क्षमः ॥ ८

सहदेव उवाच ।

संयुक्त एकदुःखश्च वीर्यवांश्च महीपतिः ।
यं समाश्रित्य धर्मज्ञं स्वमंशमनुयुञ्ज्महे ॥ ९
मत्स्यो विराटो बलवान्कृतास्त्रो युद्धदुर्मदः ।
प्रसहिष्यति संग्रामे भीष्मं तांश्च महारथान् ॥ १०

वैशंपायन उवाच ।

तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः ।
नकुलोऽनन्तरं तस्मादिदं वचनमाददे ॥ ११
वयसा शास्त्रतो धैर्यात्कुलेनाभिजनेन च ।
ह्रीमान्कुलान्वितः श्रीमान्सर्वशास्त्रविशारदः ॥ १२
वेद चास्त्रं भरद्वाजाद्दुर्धर्षः सत्यसंगरः ।
यो नित्यं स्पर्धते द्रोणं भीष्मं चैव महाबलम् ॥ १३ C. 5 5110 B. 5. 151 1 K. 5. 151 1

---

$D_5$ $D_7$ च, $D_8$ हि (for ह) $T_2$ $G_2$ कुंतीपुत्रो युधिष्ठिर॰, $G_5$ कौंतेयो जनमेजय

2 $D_1$ om $2^c$–$3^d$ — $^c$) $D_2$ न ते राज्य प्रयच्छति — $^d$) $K_1$ सर्वं तद् (by transp)

3 $D_1$ om. 3 (cf v l 2) — $^b$) $Dn_1$ $T_1$ $G_{1.4}$ नृप॰, $D_{8.4}$ कुरु॰ (for नर॰) — $^c$) Some MSS अक्षोहिण्य॰ $K_5$ B (except $B_8$) च (for तु) $T_1$ $G_{1.4}$ इमा (for एता॰) — $^d$) $T_1$ $G_2$ समताद् (for समेता)

4 $^a$) $K_4$ B $Dn_1$ $D_5$ $D_{8.4.6.7.9.10}$ ये; $M_{8-5}$ वै (for मे) — $^b$) $D_5$ $G_5$ तन् (for तान्) — $^c$) $B_8$ विराटश्च द्रुपदश्च (by transp)

5 $^b$) $G_8$ सहदेव॰ (for भीमसेन॰) — $^c$) $K_{1.2}$ $T_1$ M (except $M_4$) सर्वे (for सेना) — $^d$) $D_{8.4}$ धीरा॰ (for वीरा॰)

6 $D_6$ om 6 — $6^{ab}$ = 5 196 $3^{ab}$ — $^b$) S (except $M_1$) च (for सु) — $^c$) B (except $B_8$) नीतिशास्त्रज्ञा॰ — $^d$) $D_{8.4}$ $M_{8-5}$ सर्वे शास्त्र॰, T G $M_{1.2}$ सर्व($G_4$ नीति)शास्त्र॰ (for सर्वे युद्ध॰) — $^e$) $K_1$ B D (except $D_{2.7}$, $Dn_2$ missing) सर्वे (for चैव) — $^f$) $K_8$ धर्मास्त्रकोविदा॰, $D_2$ सर्वेस्त्रयोधिन, $D_{8.4}$ शस्त्रास्त्र॰, $G_5$ सर्वास्त्रकोविदा॰

7 $^a$) $K_4$ अधिपो, $T_1$ $G_{1.8.4}$ अपि को (for अपि यो) — $^b$) $K_{1.2}$ सेनाया॰, $K_8$ सैन्याना, $K_4$ सेनानी॰ (for सेनाना) $Dn_1$ $D_8$ सेना प्रति विभा॰, $D_6$ सेनाना प्रतिभा॰ — $^d$) $T_1$ G (except $G_2$) शरार्चि $D_6$ पावकोपम

8 $^a$) $K_8$ B $Dn_1$ $D_{1.2.6.8-10}$ T $G_{2.5}$ त (for स्व) — $^d$) $D_{8.4}$ नु (for न)

9 $^a$) $K_8$ एप, $D_5$ $D_1$ T G $M_{1.4}$ (inf lin) एव (for एक) T G $M_1$ पुत्रै॰ (for -दुःख॰) Ca एकदुःख॰ (as in text) — $^b$) S कोश॰ (for वीर्य॰) — $D_5$ om. $9^c$–$11^b$ — $^d$) $K_1$ $D_{8.4}$ $G_2$ ॰युक्ष्महे, $Dn_1$ $M_{4.5}$ ॰युञ्ज्महे, $D_{1.6.8.10}$ $G_8$ ॰युज्महे, $T_2$ ॰भुञ्ज्महे, $M_{2.8}$ ॰युग्महे

10 $D_5$ om 10 (cf. v l 9) — $^a$) S (except $T_1$ $G_1$ $M_5$) मात्स्यो — $Dn_1$ om $10^b$–$11^a$ — $^c$) $D_{8.4}$ स प्रशक्ष्यति स॰

☞ The fragm MS $D_9$ ends with $10^b$, it is almost completely ignored hereafter!

11 $D_5$ om $11^{ab}$ (cf. v l 9), $Dn_1$ om $11^a$ (cf v l 10) — $^b$) $G_4$ वाक्य (for वाक्ये) $B_{1.8.4}$ ॰विशारद — $D_6$ om (hapl) $11^c$–$12^d$ — $^c$) $D_5$ ॰नतरस् — $^d$) $B_{2.8.5}$ अब्रवीत् (for आददे)

12 $D_6$ om 12 (cf v l 11) Before 12, $T_2$ $G_5$ ins नकुल॰ — $^a$) $M_{8-5}$ वचसा (for वयसा) $D_1$ शाश्वतो धर्मात्, $D_2$ वै ततो धैर्यात्, $D_{8.4}$ अस्त्रप्रतापेन — $^b$) $D_{8.4}$ बलेन, Ca $_8$ कुलेन (as in text) $D_{8.4}$ स॰, Ca च (as in text) — $^c$) $K_4$ किलोचित॰, B $Dn_1$ $D_5$ $D_{1.8.4.10}$ $G_5$ बलान्वित॰ (for कुला॰) — $^d$) S ॰शस्त्रभृता वर॰

13 $^a$) $K_{1.2}$ शस्त्र, $K_{8-5}$ B $D_8$ $D_{1-4.7.8}$ T $G_{2-4}$ $M_1$ शास्त्र (for चास्त्र) — $^{cd}$) $D_1$ transp द्रोण and भीष्म $B_8$ $D_{1.8.4}$ ॰रथ, $D_{10}$ $G_2$ ॰बल॰ (for ॰बलम्)

14 $^a$) B $D_5$ $D_{10}$ ॰वश॰ (for ॰सच॰) — $T_2$ om

C. 5. 5111 B. 5. 151. 14 K. 5. 151. 14

श्लाघ्यः पार्थिवसंघस्य प्रमुखे वाहिनीपतिः ।
पुत्रपौत्रैः परिवृतः शतशाख इव द्रुमः ॥ १४
यस्तताप तपो घोरं सदारः पृथिवीपतिः ।
रोषाद्द्रोणविनाशाय वीरः समितिशोभनः ॥ १५
पितेवास्मान्समाधत्ते यः सदा पार्थिवर्षभः ।
श्वशुरो द्रुपदोऽस्माकं सेनामग्रे प्रकर्षतु ॥ १६
स द्रोणभीष्मावायान्तौ सहेदिति मतिर्मम ।
स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः ॥ १७
माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः ।
वासविर्वासवसमः सव्यसाच्यब्रवीद्वचः ॥ १८
योऽयं तपःप्रभावेन ऋषिसंतोषणेन च ।
दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाबलः ॥ १९
धनुष्मान्कवची खड्गी रथमारुह्य दंशितः ।
दिव्यैर्हयवरैर्युक्तमग्निकुण्डात्समुत्थितः ॥ २०
गर्जन्निव महामेघो रथघोषेण वीर्यवान् ।
सिंहसंहननो वीरः सिंहविक्रान्तविक्रमः ॥ २१
सिंहोरस्को महाबाहुः सिंहवक्षा महाबलः ।
सिंहप्रगर्जनो वीरः सिंहस्कन्धो महाद्युतिः ॥ २२
सुभ्रूः सुदंष्ट्रः सुहनुः सुबाहुः सुमुखोऽकृशः ।
सुजत्रुः सुविशालाक्षः सुपादः सुप्रतिष्ठितः ॥ २३
अभेद्यः सर्वशस्त्राणां प्रभिन्न इव वारणः ।
जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः ॥ २४
धृष्टद्युम्नमहं मन्ये सहेद्भीष्मस्य सायकान् ।
वज्राशनिसमस्पर्शान्दीप्तास्यानुरगानिव ॥ २५
यमदूतसमान्वेगे निपाते पावकोपमान् ।
रामेणाजौ विषहितान्वज्रनिष्पेषदारुणान् ॥ २६

---

$14^{cd}$, G2 om (hapl) from $14^{c}$–$15^{b}$

15 G2 om $15^{ab}$ (cf v.l 14), T2 reads it in marg — $^{b}$) K4 शरदः (for सदार°) — $^{d}$) K4 D8.4 M धीर (for वीर°)

16 $^{a}$) K8 शिवेन, K5 हितेन (for पितेव) B5 Dn1 D8 D6 10 समाधत्त, T1 G4 5 समादत्ते, M4 सदायत्ते (for समाधत्ते) — $^{b}$) M3–5 यत्तदा (for यः सदा) B5 D8.4 पार्थिवर्षभ, M2 पार्थिवेश्वर° — $^{c}$) M8 4 5 (before corr) चतुरो (for श्वशुरो) — $^{d}$) D8.4 प्रहर्षयन् (for प्रकर्षतु). B Dn1 D8 D6 8 10 सेनाग्र (D8 °ग्य) सम्प्रकर्षतु, D2 सेनाग्रमपकर्षतु Ca cites सम्प्रकर्षतु

17 $^{a}$) B1–3 भीष्मद्रोणौ (by transp) K4 B2 5 Dn1 D1 6–8 M2 आयातौ T1 G1 4 द्रोणभीष्मौ समायां° (G1 °या)तौ — $^{b}$) B1 3 D8 4 सहेतेति — $^{d}$) Dn1 तु; G8 यो; M8 5 वा (for च) K2 5 D82 नृप

18 $^{a}$) B2 5 [ऽ]पि (for तु) — $^{b}$) D8 स्वमतिं K1 3 4 B8 Dn1 D2 7 T1 G2–4 कुरुनदन D8.4 स्वय मेघ इवानदन् — $^{d}$) S इद (for वच°)

19 Before 19, D1 T2 G5 ins अर्जुनः — $^{d}$) K1 D7 ज्वालासस्थो. B4 5 Dn1 D8 D6 8 10 महाभुज°, D1 °प्रभ°

20 $^{b}$) Some S MSS दसितः — $^{c}$) T2 G M5 दिव्य (for दिव्यैर्) D8 हयैर् (for हय) K4 B8 D8 D10 युक्तै°, D1.7 युक्तः (for युक्तम्) — $^{d}$) K5 अग्निकुढ; D1 ह्यग्निकुडात्, D7 चाग्निकुडात्

21 $^{a}$) K5 °घोर; D2 °वेगो (for °मेघो). — D1 om (hapl) $21^{c}$–$22^{b}$. — $^{c}$) T1 G1 4 °सहननोपेतः — $^{d}$) K1–3 D7 सिंहविक्रमविक्रम°; K4 5 (which transp. $21^{d}$ and $22^{d}$) B Dn1 D8 D2–4 6 8 10 सिंहतुल्यपराक्रम.

22 D1 G2 (hapl) om $22^{ab}$ (for D1 cf v.l 21) K5 reads 22 (transposing $^{ab}$ and $^{cd}$) after $23^{ab}$, so that the sequence is 21, $23^{ab}$, $22^{cd}$, $22^{ab}$, $23^{cd}$ etc — $^{a}$) K5 G8 सिंहस्कधो (for सिंहो°) B Dn1 D8 D6 8 10 सिंहभुज° (for महा°) — T2 om (hapl) $22^{bc}$ — $^{b}$) B8 °वर्चा (for °वक्षा) K5 D2 °भुज° (for °बल°) — $^{c}$) K1 D7 °प्रनर्दनो, K2 3 °प्रतर्दनो; T1 G °वद्गर्जितो (G8 °प्रगल्भनो) K5 सुदष्ट्र सुनसाकेशा — $^{d}$) K1.2 4 5 (which latter transp $21^{d}$ and $22^{d}$) D2 7 °दर्पो (for °स्कन्धो)

23 $^{a}$) Some MSS सुभ्रु K5 (hypermetric!) सुकपोल° (for सुदष्ट्र) K5 D1 3 4 S सुबल°; Ca °हनुः (as in text) — $^{b}$) Dn1 D6 8 सुवासा° (for °बाहु°) B8 M5 सुमुख कृश. — After $23^{ab}$, K5 reads 22 (transposing $^{ab}$ and $^{cd}$) — $^{c}$) D1 अशत्रु, Ca सुजत्रुः (as in text) — $^{d}$) K5 सुवर्णः; D1 °नासः (for °पादः)

24 $^{a}$) D7 अभिन्न D8 सर्वशत्रूणां — $^{d}$) D2 °वाग्यो जितेंद्रिय°, T1 G1 4 °वान्विजि°

25 After $25^{ab}$, D8 reads $26^{cd}$ — $^{c}$) K1.2.4 D2 7 °समान्घोरान् K5 om (hapl) $25^{d}$–$28^{c}$. — $^{d}$) Dn1 दीप्तास्तान् K4 उरगोपमान्

26 K5 om 26 (cf v.l 25). — $^{d}$) S °गौरवान्

27 K5 om 27 (cf. v.l 25). — $^{c}$) K4 D8.4.8 °धुम्नादते

पुरुषं तं न पश्यामि यः सहेत महाव्रतम् ।
धृष्टद्युम्नमृते राजन्निति मे धीयते मतिः ॥ २७
क्षिप्रहस्तश्चित्रयोधी मतः सेनापतिर्मम ।
अभेद्यकवचः श्रीमान्मातङ्ग इव यूथपः ॥ २८

भीम उवाच ।

वधार्थं यः समुत्पन्नः शिखण्डी द्रुपदात्मजः ।
वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः ॥ २९
यस्य संग्राममध्येषु दिव्यमस्त्रं विकुर्वतः ।
रूपं द्रक्ष्यन्ति पुरुषा रामस्येव महात्मनः ॥ ३०
न तं युद्धेषु पश्यामि यो विभिन्द्याच्छिखण्डिनम् ।
शस्त्रेण समरे राजन्संनद्धं स्यन्दने स्थितम् ॥ ३१
द्वैरथे विषहेन्नान्यो भीष्मं राजन्महाव्रतम् ।
शिखण्डिनमृते वीरं स मे सेनापतिर्मतः ॥ ३२

युधिष्ठिर उवाच ।

सर्वस्य जगतस्तात सारासारं बलाबलम् ।
सर्वं जानाति धर्मात्मा गतमेष्यच्च केशवः ॥ ३३
यमाह कृष्णो दाशार्हः सोऽस्तु नो वाहिनीपतिः ।
कृतास्त्रो ह्यकृतास्त्रो वा वृद्धो वा यदि वा युवा ॥ ३४
एष नो विजये मूलमेष तात विपर्यये ।
अत्र प्राणाश्च राज्यं च भावाभावौ सुखासुखे ॥ ३५
एष धाता विधाता च सिद्धिरत्र प्रतिष्ठिता ।
यमाह कृष्णो दाशार्हः स नः सेनापतिः क्षमः ।
ब्रवीतु वदतां श्रेष्ठो निशा समतिवर्तते ॥ ३६
ततः सेनापतिं कृत्वा कृष्णस्य वशवर्तिनम् ।
रात्रिशेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरम् ।
अधिवासितशस्त्राश्च कृतकौतुकमङ्गलाः ॥ ३७

वैशंपायन उवाच ।

तस्य तद्वचनं श्रुत्वा धर्मराजस्य धीमतः ।
अब्रवीत्पुण्डरीकाक्षो धनंजयमवेक्ष्य ह ॥ ३८
ममाप्येते महाराज भवद्भिर्य उदाहृताः ।
नेतारस्तव सेनायाः शूरा विक्रान्तयोधिनः ।
सर्व एते समर्था हि तव शत्रून्प्रमर्दितुम् ॥ ३९　C. 5. 5138 B. 5. 151. 41 K. 5. 151. 41

---

28 K. om $28^{abc}$ (cf v l 25) — b) T1 G4 तत (for मत) — After 28, T G (except G3) ins
540* अर्जुनेनैवमुक्ते तु भीमो वाक्य समाददे ।

30 a) K3 5 B4 5 Dn1 Ds2 D2–4 8 10 G3 5 °मध्ये तु (for °मध्येषु) — b) B2 4.5 Dn1 Ds1 D3 4 6 8 10 प्र (for वि-)

31 a) K B2 D1.2 7 (by transp) पश्यामि युद्धेषु (K3 5 योधेषु), B1.3 4 5 Dn1 Ds D3 4 6 8 10 युद्धे प्रपश्यामि, M1 2 लोकेषु पश्यामि — b) K4 D3.4 यो भिंद्याच्च, K6 यो हि भिंद्याच्, B (except B2) Dn1 D6 8 10 G4 यो भिंद्यात्तु, Ds G3 यो भिद्यात्तु, M5 योभिविध्याच् — c) K4 6 अस्त्रेण (for श°) — d) K5 Ds1 स्यदनस्थित

32 a) B (except B3) Dn1 Ds D1 6 8 10 समरे नान्यो, T G (except G3) विषहेतास्मै (T2 °रै) (for विषहेन्नान्यो) — b) B (except B3) Dn1 Ds D6 8 10 हन्यान् (for राजन्) D1 °रथ (for °व्रतम्) — c) S राजन् (for वीर) B3 शिखडी च मृधे वीर — d) T G1–3 न (for स) K1.2 च (for मे)

33 a) B3 सार (for तात) — b) K4 G4 महा° (for बला°) — c) K5 सर्वात्मा (for धर्मा°) — d) K3 गतमेष्य च, K4 B Dn1 Ds D2–4.6 8 10 मतमेषा च, K5 गतमेकस्य D1 गति चैव जनार्दन

34 K3 transp $34^{b}$ and $36^{d}$ G4 M2 om (hapl) $34^{b}$–$36^{c}$ — $34^{a}=36^{c}$ — b) D7 मे (for नो) B (except B3) Dn1 Ds D6 8 10 G3 सोस्तु सेनापतिर्मम (cf $36^{d}$) — c) K1–3 D1.3 4.7 G3 M (M2 om.) हि (as in text), K5 वा, the rest [ऽ]पि

35 G4 M2 om 35 (cf v l 34) — a) D6 8 10 मे (for नो) — c) K1.2 राष्ट्र (for राज्य)

36 G4 M2 om. $36^{abc}$ (cf v l 34) — $36^{c}=34^{a}$. — d) D1 मत (for क्षम) K3 5 B1.2 4 5 Dn1 Ds D6 8 10 सोस्तु नो वाहिनीपति (= $34^{b}$), B3 सोस्तु सेनापतिर्मम — e) G3 च युधा (for वदता) — f) K3 B4 5 Dn1 D2–4 6 8 10 T1 निशा समभिवर्तते K4 विश्वासमतिवर्तते, K5 निशा समतिवर्तिता Ca cites समतिवर्तते (as in text)

37 b) K (except K4) D2 G (except G2) M5 वशवर्तिन — c) B (except B3) Dn1 Ds D2–4 6 रात्रे (for रात्रि) K (except K5) D7 ह्यति° (for व्यति°)

39 Before 39, T2 ins श्रीभगवान्, G5 माधवः. — a) K5 T2 G1 4 (by corr) 5 मता राजन् (for महाराज) — c) Ds D2 सेनाया (for °या) — d) B Dn1 Ds D6 8 10 मता (for शूरा) — e) B2 4.5 Dn1 Ds D2–4.6 10 एव (for एते) — f) B2 5 Ds

C. 5. 5138
B. 5. 151 41
K. 5. 151 41

इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे ।
किं पुनर्धार्तराष्ट्राणां लुब्धानां पापचेतसाम् ॥ ४०
मयापि हि महाबाहो त्वत्प्रियार्थमरिंदम ।
कृतो यत्नो महांस्तत्र शमः स्यादिति भारत ।
धर्मस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ॥ ४१
कृतार्थं मन्यते बालः सोऽऽत्मानमविचक्षणः ।
धार्तराष्ट्रो बलस्थं च मन्यतेऽऽत्मानमातुरः ॥ ४२
युज्यतां वाहिनी साधु वधसाध्या हि ते मताः ।
न धार्तराष्ट्राः शक्ष्यन्ति स्थातुं दृष्ट्वा धनंजयम् ॥ ४३
भीमसेनं च संक्रुद्धं यमौ चापि यमोपमौ ।
युयुधानद्वितीयं च धृष्टद्युम्नममर्षणम् ॥ ४४
अभिमन्युं द्रौपदेयान्विराटद्रुपदावपि ।
अक्षौहिणीपतींश्चान्यान्नरेन्द्रान्दृढविक्रमान् ॥ ४५
सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् ।
धार्तराष्ट्रबलं संख्ये वधिष्यति न संशयः ॥ ४६
एवमुक्ते तु कृष्णेन संप्रहृष्यन्नरोत्तमाः ।
तेषां प्रहृष्टमनसां नादः समभवन्महान् ॥ ४७
योग इत्यथ सैन्यानां त्वरतां संप्रधावताम् ।
हयवारणशब्दश्च नेमिघोषश्च सर्वशः ।
शङ्खदुन्दुभिनिर्घोषस्तुमुलः सर्वतोऽभवत् ॥ ४८
प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः ।
गङ्गेव पूर्णा दुर्धर्षा समदृश्यत वाहिनी ॥ ४९
अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ ।
सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः ।
प्रभद्रकाश्च पाञ्चाला भीमसेनमुखा ययुः ॥ ५०
ततः शब्दः समभवत्समुद्रस्येव पर्वणि ।

---

घ्नु (for शत्रून्) K5 B Dn1 Ds D6 10 प्रबाधितु, S विमर्दितु

40 a) K1-3 D7 घोरं (for ह्येते). D3 4 इन्द्रायाभिभव ह्येते — d) S क्रुद्धा° (for लुब्धा°)

41 b) B Dn1 Ds D10 महाहवे (for अरिंदम) — c) K (except K4) D2 7 तात, T1 G1 4 M2 तस्य (for तत्र) — K4 om 41c–42d — f) B2 नैव वाच्या; T G (except G3) नाहं वाच्यो (for न स्म वाच्या) B3 विपश्चिता, Ca विवक्षताम् (as in text)

42 K4 om 42 (cf v l 41) — a) K3 Dn1 Ds D1–4 T2 G1. 2 कृतास्त्रं (for °र्थं) K1 2 चासौ (for बाल°) — b) K1 2 B Dn1 Ds D1–4 6 8 10 G2 आत्मानं (for सोऽऽत्मान) — D3. 4 om 42cd — c) Ds M2 बलस्थश्च — d) B Dn1 Ds D6 8 10 पश्यति (for मन्यते)

43 a) M3–5 सा तु (for साधु) — b) D3 4 बल° (for वध°) K3 4 B (except B3) Ds D1 6 8 10 T G मे (for ते) D7 मम (for मता°) — c) S transp न and धार्तराष्ट्रा° — d) K5 D1 रणेर्जुन (for धनं°)

44 b) G2 महाबलौ (for यमो°) — d) M3–5 अमर्षिण

45 c) A few MSS अक्षोहिणी°. — d) B Dn1 Ds D3 4 6 8 10 भीम° (for दृढ°)

46 b) K4 दुष्प्रधृष्य D6 त्वरानुगं, D8 वरानुग (for दुरा°) — d) B Dn1 Ds D3 4 6 8 10 हनि° (for वधि°) — After 46, Dn1 D3 4 8 S ins.

541* धृष्टद्युम्नमहं मन्ये सेनापतिमरिंदम ।

47 Before 47, Dn1 D3 4 8 T2 ins वैश° उ° (resp वैशं°) — b) K1 2 5 D1. 2 7 संप्र(D2 °प्रा)हृष्टा; B Dn1 D3 4 6 8 10 संप्राहृष्यन् D1 3 4 नृपोत्तमा°. K3 योधानां युद्धमिच्छतां — c) G5 सं° (for प्र°) K3 प्रहृष्यन्मनसां तत्र

48 a) K (except K4) D7 योग इत्येव; D3 4 योजयेति च, T G (except G3) योजयित्वाथ (for योग इत्यथ) Ca cites योग (as in text) — b) Ds D10 चरतां (for त्व°) — c) K4 D2 °घोषश्च; K5 °घोषाश्च, B Dn1 Ds D1. 6 8 10 T2 G2 3 M1 °शब्दाश्च — d) K5 B Dn1 Ds D6 8 10 T1 G2 3 M2 °घोषा° (for °घोष°) K5 B Dn1 Ds D1 6 10 सर्वत°, T1 G1 4 सघश° — e) B Dn1 Ds D6 8 10 G3 °घोषा(B2 °शब्दा)श्च; D3 4 M3–5 °घोषश्च, G5 °घोषस्तु — f) K (except K4) D7 8 तुमुल° B Dn1 Ds D6 8 10 G3 [ऽ]भवन्, T2 G2 भवेत् (for ऽभवत्) — After 48, K B2 Dn1 D1–4 7 8 ins

542* तदुग्र सागरनिभ क्षुब्ध बलसमागमम् ।
रथपत्तिगजोदग्र महोर्मिभिरिवाकुलम् ।
धावतामाह्वयानाना तनुत्राणि च बध्नताम् ।

[ (L 1) K3 5 D1. 3 4 7 तग् (for तद्) — (L 3) K1–3 5 D2 7 [अ]व°; K4 D1 3 4 प्र, B2 [अ]पि (for च) ]

49 Ds om 49cd — 49cd = (var) 5 197. 10cd — c) T1 घूर्णे; G1 घूर्णा (for पूर्णा) — d) K D1 2 7 ध्वजिनी समदृश्यत.

50 a) D3 अश्वा° (for अग्रा°) — b) S (mostly) दसितौ — e) D3 4 अग्रतश्च (for प्रभद्रका°) K1. 2. 5

हृष्टानां संप्रयातानां घोषो दिवमिवास्पृशत् ॥ ५१
प्रहृष्टा दंशिता योधाः परानीकविदारणाः ।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ५२
शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
कोशयन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः ॥ ५३
फल्गु यच्च बलं किंचित्तथैव कृशदुर्बलम् ।
तत्संगृह्य ययौ राजा ये चापि परिचारकाः ॥ ५४
उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ।
सह स्त्रीभिर्निववृते दासीदाससमावृता ॥ ५५
कृत्वा मूलप्रतीकारान्गुल्मैः स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ॥ ५६
ददतो गां हिरण्यं च ब्राह्मणैरभिसंवृताः ।
स्तूयमाना ययू राजन्रथैर्मणिविभूषितैः ॥ ५७
केकया धृष्टकेतुश्च पुत्रः काश्यस्य चाभिभूः ।
श्रेणिमान्वसुदानश्च शिखण्डी चापराजितः ॥ ५८
हृष्टास्तुष्टाः कवचिनः सशस्त्राः समलंकृताः ।
राजानमन्वयुः सर्वे परिवार्य युधिष्ठिरम् ॥ ५९
जघनार्धे विराटश्च यज्ञसेनश्च सोमकिः ।
सुधर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः ॥ ६०
रथायुतानि चत्वारि हयाः पञ्चगुणास्ततः ।
पत्तिसैन्यं दशगुणं सादिनामयुतानि षट् ॥ ६१
अनाधृष्टिश्चेकितानश्चेदिराजोऽथ सात्यकिः ।
परिवार्य ययुः सर्वे वासुदेवधनंजयौ ॥ ६२
आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ।
पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव ॥ ६३
तेऽवगाह्य कुरुक्षेत्रं शङ्खान्दध्मुररिंदमाः ।

C. 5. 5166
B. 5. 151. 63
K. 5. 151. 60

D1-4 7 स (for च) A few MSS पचाला
51 51cd = (var) 5. 197. 8cd — d) K4 D1 उप; K3 G. अप (for इव)
52 a) D3 4 प्राहृष्यन् (for प्रहृष्टा) Some S MSS दर्पिता M (except M1) यौधा — b) K4 G2 M °नीकविदारिण, D3 °नीकावदारिण — D6 om 52e–53a
53 D6 om 53 (cf. v.l. 52) — a) K2-4 D7 T G1 2 3 M2.4 (inf lin as in text) 5 °वेश्या, G3 °भेर्य, Ca.s °वेशा (as in text) — b) D10 (sup lin as in text) °मुख्य, G4 °युग्याश्च, Cn s °युग्य (as in text) — c) K4 B Dn1 D1.2 कोश, a few MSS कोप (for कोश-)
54 b) B3 4 5 Dn1 D5 D1.6 10 यथापि (for तथैव) K D2 4.7 8 सृत्वा° (for कृश°) — d) K4 B1.2 S ये चान्ये B3 परिपयका, D5 M1 °चारिका K1-2.6 D3 कुन्तीपुत्रो युधिष्ठिर (= 63d)
55 a) S उपशल्ये K1.2 च (for तु) — d) K1 °समन्विता, S °समाकुला
56 a) K4 B Dn1 D5 D1-4 6 8 10 Ca s °प्रतीकार — c) D3 महिता (for महता) — d) K2 प्रजग्मु, M1 निर्ययुः.
57 a) K1.4 D1 G2 M गा, K3 हि (for गां) — d) S (except G3) °विभूषणैः Cap अभिभूषितैः (unmetrical!)
58 a) Some N MSS कैकया or कैकेया — b) K4 M3 5 काश्यश्च (for °स्य) K1-3 T1 G3 चाभिभु K4 B2 D5 D8 10 वा विभु; K6 Dn1 D6 चाविभु; B3 वै विभु; D1 चाभिभो, D2-4 वा विभू
59 a) K3 D1 7 M हृष्टतुष्टा, K5 हृष्टा पुष्टा, B8 हृष्टरूपा, D5 हृष्टपुष्टा (for हृष्टास्तुष्टा) Dn1 हृष्टाः कवचिनस्तुष्टा — b) K (except K4) D7 समस्ता (for सशस्त्रा)
60 a) K1 (before corr) 2 Dn1 M2 जघनार्धे, K4 जघन्ये वै, K6 D6 जघनार्धं, D1 युयुधानो, Ca n s as in text. — b) B Dn1 D5 D2-4 याज्ञसेनिश्च K2 4 B (except B3) Dn1 D5 D1-4.6 7 10 सौमकि, S (for G5 see below) सोमक G5 द्रुपदश्च महारथ — c) K1-3 सुवर्मा, K4 D2-4 T1 G1 4.5 M (except M4) सुशर्मा, D1 मधर्मा — d) K4 5 B2 चात्मज, D3 4 चानुज
61 b) K4 गजा (for हया) Dn1 D5 D1 6 8 10 तथा (for ततः) — d) K6 corrupt B Dn1 D5 D1.6 8 10 G3 गजानाम् (for सादिनाम्)
62 a) K1-2.6 D7 °वृष्टि, K4 D6 8 T1 °धृष्ट, M3 4 (inf lin as in text) 5 °धृति (for °धृष्टि) M3 4 वसुदान (for चेकितान) — b) B Dn1 D5 D6 8 10 धृष्टकेतुश्च (B3 चेदिराजा च), D1 चेदिनाथोऽथ, T G युयुधानोऽथ, M3 4 चेकितानोऽथ (for चेदिराजोऽथ) — 62d = 64d
63 K8 om. (hapl.) 63b–64a, D3 4 om 63c–64b — d) K (K8 om.) D1.7 8 G (except G2) नदतो, D2 नन्दतो (for नर्दन्तो)

C. 5. 5107 B. 5. 151 60 K. 5. 151 60

तथैव दध्मतुः शङ्खौ वासुदेवधनंजयौ ॥ ६४
पाञ्चजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः ॥ ६५
शङ्खदुन्दुभिसंसृष्टः सिंहनादस्तरस्विनाम् ।
पृथिवीं चान्तरिक्षं च सागरांश्चान्वनादयत् ॥ ६६
ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास तदा सेनां राजा युधिष्ठिरः ॥ ६७
परिहृत्य श्मशानानि देवतायतनानि च ।
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ॥ ६८
मधुरानूपरे देशे शिवे पुण्ये महीपतिः ।
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ ६९
ततश्च पुनरुत्थाय सुखी विश्रान्तवाहनः ।
प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ॥ ७०
विद्राव्य शतशो गुल्मान्धार्तराष्ट्रस्य सैनिकान् ।
पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ॥ ७१
शिविरं मापयामास धृष्टद्युम्नश्च पार्षतः ।
सात्यकिश्च रथोदारो युयुधानः प्रतापवान् ॥ ७२
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ।
सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ॥ ७३
खानयामास परिखां केशवस्तत्र भारत ।
गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ७४
विधिर्यः शिविरस्यासीत्पाण्डवानां महात्मनाम् ।
तद्विधानि नरेन्द्राणां कारयामास केशवः ॥ ७५
प्रभूतजलकाष्ठानि दुराधर्षतराणि च ।
भक्ष्यभोज्योपपन्नानि शतशोऽथ सहस्रशः ॥ ७६
शिविराणि महार्हाणि राज्ञां तत्र पृथक्पृथक् ।
विमानानीव राजेन्द्र निविष्टानि महीतले ॥ ७७
तत्रासञ्शिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः ।
सर्वोपकरणैर्युक्ता वैद्याश्च सुविशारदाः ॥ ७८
ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः ।

---

64 K8 om. 64ᵃ, D8 4 om 64ᵃᵇ (cf. v l 63). — ᵃ) S विगाह्य (for ऽवगाह्य) — ᵇ) K1-8 अनेकशः; D7 पृथक्पृथक् (for अरिंदमा) — ᶜ) B4 5 Dn1 D10 शङ्ख, D1 शङ्खान् (for शङ्खौ) — 64ᵈ = 62ᵈ

65 ᶜ) K1-3 D7 सर्वभूतानि — ᵈ) G (except G4) °कम्पत, Ca °हृष्यन्त (as in text)

66 ᵃ) K2 B D6 8 °सहृष्ट, K4 D1 2 7 °संमिश्र; K5 G3 °निर्घोष, G4 °निर्दिष्ट, T G1.2 5 °निर्घुष्ट; M °सघुष्ट — ᵈ) T1 G1.4 सागर च K1 B3 D5 D1.2 6 10 [अ]नु नादयन् (B3 D10 °यत्), K3 5 [अ]प्यनादयत्, B4 Dn1 D8 [अ]न्वनादयन्, D3 4 [अ]भ्यनादयत्, S व्यनादयत् (for [अ]न्वनादयत्) — After 66, K4 Dn1 D3 4 ins an addl colophon

67 Before 67, K4 Dn1 D5 D8 ins. वैशं° ठ° — ᵇ) = 5 153 35ᵇ D8 सुभूत° — ᶜ) D8 D6 8 10 तत (for तदा)

68 ᵃ) B3 परित्यज्य, G3 °वर्ज्य (for °हृत्य)

69 ᵃ) = 5 153 35ᵃ — ᵇ) K1 B Dn1 D5 D1 3 4 6 8 10 शुचौ, K4 D2 Ca शुभे (for शिवे) B Dn1 D5 D1 3 4 6 8 10 महामतिः (for मही°)

70 ᵃ) D3 4 तत समुत्थाय सुख — ᵇ) D3 4 राजा (for सुखी)

71 ᵃ) K4 Dn1 D1.6-8 10 M2 पर्या°; K5 परि°, (for पर्य°)

72 ᵃ) = 5 153 34ᵉ K5 G3 स्थापयामास; G2 कारया°. — ᶜ) B2 D3 4 तथोदारो, D1 महेष्वासो (for रथोदारो) — ᵈ) Dn1 D5 D6 8 10 च वीर्य° (for प्रताप°)

73 ᵃ) D5 D7 G1 5 M1 सरिता (for °त) T2 G2 5 श्रेष्ठां (for पुण्या) — ᵇ) K1.2 हिरण्मतीं, K5 हिरण्मयीं; D5 D10 (marg sec m) सरस्वतीं — ᶜ) K4 शुचितीर्थां B3 सुविमलां

74 ᵃ) D2 परिघा°, D3 4 G5 °खा°, D8 °खान्, T2 G2 4 °घा (for °खां) — ᶜ) K D1-4 चोद्दिश्य (for चादिश्य)

75 ᵈ) B3 पाण्डव, D3 4 सर्वदा (for केशव )

76 ᵃ) B1 2 4 Dn1 D5 D1.6 8 10 °तर° (for °जल°) — ᶜ) B Dn1 D5 D6 8 10 °भोज्यान्नपानानि

77 ᵃ) B2 विविधानि (for शिवि°) — ᵇ) D2 तत्र राज्ञा (by transp ) — ᶜ) K (except K5) D1-4 7 राजते (for राजेन्द्र) B2 विमानानि व्यराजत — ᵈ) K3 विशिष्टानि, D8 प्रविष्टानि, G1 4 निषीदति K1-3 D1.2 7 महात्मनां

78 ᵈ) K3 वैद्या° शास्त्रविचक्षणा, K5 B Dn1 D5 D6 8 10 G3 वैद्या° शास्त्रविशारदा°, D7 स्वविद्यासु विशारदा°

79 ᵇ) K (except K4) B1 3 5 D1 7 T1 G1 4 मधुसर्पिषा — ᶜ) Some N MSS °पांशूना, T2 G2 5

ससर्जरसपांसूनां राशयः पर्वतोपमाः ॥ ७९
बहूदकं सुयवसं तुषाङ्गारसमन्वितम् ।
शिबिरे शिबिरे राजा संचकार युधिष्ठिरः ॥ ८०
महायन्त्राणि नाराचास्तोमरर्ष्टिपरश्वधाः ।
धनूंषि कवचादीनि हृद्यभूवन्नृणां तदा ॥ ८१
गजाः कङ्कटसंनाहा लोहवर्मोत्तरच्छदाः ।
अदृश्यंस्तत्र गिर्याभाः सहस्रशतयोधिनः ॥ ८२
निविष्टान्पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत ।
अभिसस्रुर्यथोद्देशं सबलाः सहवाहनाः ॥ ८३
चरितब्रह्मचर्यास्ते सोमपा भूरिदक्षिणाः ।
जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ॥ ८४

इति श्रीमहाभारते उद्योगपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

## १५०

जनमेजय उवाच ।
युधिष्ठिरं सहानीकमुपयान्तं युयुत्सया ।
संनिविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् ॥ १
विराटद्रुपदाभ्यां च सपुत्राभ्यां समन्वितम् ।
केकयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम् ॥ २
महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः ।
श्रुत्वा दुर्योधनो राजा किं कार्यं प्रत्यपद्यत ॥ ३
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।

C. 5. 5161
B. 5. 152. 4
K. 5. 152. 4

°पानानां (T2 °वस्तूनां also)

80 K4 om 80 — a) D5 D8.4.6.8 सयवस — c) K5 राजा (for राजा) — d) D1-4.6 M (except M1) स चकार

81 b) K2 G3 तोमरासिप°; K3 B Dn1 D5 D1-4.6.8.10 तोमरासिप°. Some N MSS परश्वधा — c) K (except K4) D2.7 G2.3 M1 कवचानीति — d) K4 हयाश्चामप्रमार्गगा, B Dn1 D5 D6.8.10 ऋष्टयस्तूणसंयुता (B3 हृष्टाश्वासह्यरान्तदा); D3.4 T G मयमूवुर्नृणां तदा; D7 हृद्यान्यासन्नृणां तदा, M समभूवन्नृणां तदा Ca cites हृद्यमवन्

82 a) K1 काचन°, K4 B1.3 D1.2.4.7 G3 Cn कटक°; Ca s कङ्कट° (as in text) ※ Nil. कटकं कवचं संनहनं येषामिति प्राञ्चः ※ — b) K1.2.4 D2 अदृश्यत च (K4 हि); B Dn1 D5 D1.6.8.10 दृश्यंते तत्र, T G अदृश्यतात्र, M3-5 अदृश्यास्तत्र (for अदृश्यंस्तत्र) — d) G3 शतशोथ सहस्रश (=76^d)

83 b) T G यथा(G2 मित्रा)न्नरर्षभ (T1 G3 °भा; G4 °भ); M1.2 मित्राणि मानव, M2-5 मित्रा नरर्षभाः — c) B (except B2) Dn1 D1.2.4.6.8 G1 यथादेशं — d) D1 सहयाधवा, S मपदानुगाः

84 a) K1.2.4 D1 च, Ds2 ये (for ते) — d) D3.4 महीपते; D7 °भृत; M3-5 °पति (for महीक्षित)

Colophon. Dn2 D5.8 missing — *Sub-parvan* K1 B D3 D10 अभिनिर्यात्रा (K1 °ण); K2.4.5 Dn1 D2.7 अभिनिर्याणयात्रा; K3 D1 G3 निर्याणयात्रा, T1 भगवत्प्रतियान; M2.4 निर्यात्रा — *Adhy name* T1 धर्मराजस्य स्कंधावारनिवेश, G1.4 स्कंधावारनिवेशन; G3 कुरुक्षेत्रावतारं, M1.2 पांडवकुरुक्षेत्रप्राप्ति, M2-5 कुरुक्षेत्रासादन — *Adhy no* (figures, words or both) D6 41 (=141), T1 G1 154, T2 M 152 (M4 151), G2.4.5 153, G3 150 — *S'loka no* K3 86, Dn1 18 — After the colophon, T1 ins श्रीकृष्णायनमः । भगवद्यान समाप्त

### 150

☞ This adhy is missing in Dn2 (cf. v.l. 5 143 2), the MS is mostly ignored here

1 b) K1.4.5 Ds2 G2-4 M उपयात, B Dn1 Ds1 D1.6.7.10 उपायांतं — G3 om. $1^c$–$3^b$

2 G2 om. 2 (cf. v l 1) — b) D7 °सुता° (for °पुत्रा°) — c) Some N MSS कैकयैर् or कैकेयैर् — d) D5 पार्श्वे (for पार्थिवै)

3 G2 om. $3^{ab}$ (cf. v.l. 1) — b) K4 D3.4 °रथं (for °रथै)

4 T2 G2.3 M4 om. (hapl.) 4–6 — $4^{ab}$=$7^{ab}$,

C. 5 5191
B. 5. 153. 4
K. 5 153. 4

संभ्रमे तुमुले तस्मिन्यदासीत्कुरुजाङ्गले ॥ ४
व्यथयेयुर्हि देवानां सेनामपि समागमे ।
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः ।
युयुधानश्च विक्रान्तो देवैरपि दुरासदः ॥ ६
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ॥ ७

वैशंपायन उवाच ।

प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा ।
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम् ॥ ८
अकृतेनैव कार्येण गतः पार्थानधोक्षजः ।
स एनान्मन्युनाविष्टो ध्रुवं वक्ष्यत्यसंशयम् ॥ ९
इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ १०
अजातशत्रुरप्यद्य भीमार्जुनवशानुगः ।
निकृतश्च मया पूर्वं सह सर्वैः सहोदरैः ॥ ११
विराटद्रुपदौ चैव कृतवैरौ मया सह ।
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ॥ १२
भविता विग्रहः सोऽयं तुमुलो लोमहर्षणः ।
तस्मात्सांग्रामिकं सर्वं कारयध्वमतन्द्रिताः ॥ १३
शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः ।
सुपर्याप्तावकाशानि दुरादेयानि शत्रुभिः ॥ १४
आसन्नजलकाष्ठानि शतशोऽथ सहस्रशः ।
अच्छेद्याहारमार्गाणि रत्नोच्चयचितानि च ।
विविधायुधपूर्णानि पताकाध्वजवन्ति च ॥ १५
समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ।
प्रयाणं घुष्यतामद्य श्वोभूत इति माचिरम् ॥ १६
ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ।
हृष्टरूपा महात्मानो विनाशाय महीक्षिताम् ॥ १७
ततस्ते पार्थिवाः सर्वे तच्छ्रुत्वा राजशासनम् ।
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः ॥ १८
बाहून्परिघसंकाशान्संस्पृशन्तः शनैः शनैः ।

---

— $^{b}$) B Dn1 D8 D6 10 महामते (for तपो°) — After $4^{ab}$, K3 D8 read $7^{cd}$ — $^{c}$) D3 4 G1.4.5 सग्रामे (for °भ्रमे) A few N MSS तुमले — $^{d}$) G4 यथा°; M2 यत्रा° (for यदा°) K (except K4) D81 D1.7 °जगले

5 T2 G2.3 M4 om 5 (cf v.l 4) — $^{ab}$) K5 सैन्यान्यपि (for सेनामपि) B Dn1 D8 D3 4 6 8 10 इमे (D3 4 हि ते) देवान्संद्रानपि (for हि देवानां सेनामपि). — $^{d}$) G5 M3 5 तदा (for तथा)

6 T2 G2 3 M4 om 6 (cf v l 4) — $^{b}$) K4 °बल (for °रथ°) — $^{c}$) B2 4 5 Dn1 D8 D6 8 10 युधामन्यु° (for युयुधान°) K4 चेकितानो (for च विक्रान्तो) — $^{d}$) B3 5 दुरुत्सह° (for दुरासद°)

7 K3 D8 read $7^{cd}$ after $4^{ab}$ — $7^{ab} = 4^{ab}$ — $^{c}$) B6 पांडवाना कुरूणा च (= 5 146 25$^{c}$) — After 7, B (except B3) Dn1 D8 D6 10 ins an addl colophon (ignored in the old printed ed !)

8 $^{a}$) K1 2 5 D2 7 प्रतिप्रयाते, B3 5 अभियाते तु — $^{b}$) G3 राजन् (for राजा) D2–4 तत , G3 4 तथा (for तदा)

9 $^{c}$) K (except K2) Dn1 D82 D7 8 स एतान्, D3 4 ससैन्यं, S अदानान् (G3 अयास्मान्) (for स एनान्). Ca cites एनान् — $^{d}$) B Dn1 D2–4 T G (except G5) धक्ष्यति, D8 धुक्ष्यति (for वक्ष्यति). K (except K4) D1 2 7 10 असमत्तं; M3 5 असशम (for असशयम्)

11 $^{a}$) K (except K4) D7 चाप्यद्य, B Dn1 D8 D10 अत्यर्थं, T2 G2 5 अप्यत्र (for अप्यद्य) — $^{b}$) B (except B5) Dn1 T1 भीमसेनवशा° — D1 om. (hapl ) $11^{c}$–$12^{d}$

13 $^{b}$) A few N MSS तुमलो S रोमहर्षण — $^{d}$) K4 अरिंदमा° (for अतन्द्रिता°)

14 $^{c}$) K1 3 D2 6–8 G3 अ°; B Dn1 स्व° (for सु°) — $^{d}$) B2 दुराधर्षाणि, D3 Ca °दानानि (for °देयानि)

15 $^{a}$) B1 5 Cn °कोष्ठानि — $^{b}$) K1 2 4 5 D7 8 सुगुप्तानि, K3 D2 शिबिराणि (for शतशोऽथ) — K4 om. $15^{cd}$. — $^{c}$) K (K4 om ) B2 D8 D1.7 10 Cs °हार्य° (for °हार°) — $^{d}$) B1.3–5 D8 यथोच्छ्रय°, B2 Dn1 D6 7 10 रत्नोच्छ्रय°; D3 4 यलौघचरितानि S °युतानि च — $^{e}$) G1 4 विविधानि च पूर्णानि

16 $^{b}$) D1 अधि; D3 4 S अपि (for बहि°)

17 $^{a}$) K1 2 5 D7 समा° (for प्रति°) — $^{b}$) K4 B1 D3 4 G3 तदा (for तथा) — $^{d}$) B Dn1 D2–4 8 10 निवासाय K1.2 5 D1 T1 महीक्षित°

18 $^{b}$) D6 कृत्वा (for श्रुत्वा).

काञ्चनाङ्गददीप्तांश्च चन्दनागरुभूषितान् ॥ १९
उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः ।
अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥ २०
ते रथान्रथिनः श्रेष्ठा हयांश्च हयकोविदाः ।
सज्जयन्ति स्म नागांश्च नागशिक्षासु निष्ठिताः ॥ २१
अथ वर्माणि चित्राणि काञ्चनानि बहूनि च ।
विविधानि च शस्त्राणि चक्रुः सज्जानि सर्वशः ॥ २२
पदातयश्च पुरुषाः शस्त्राणि विविधानि च ।
उपजह्रुः शरीरेषु हेमचित्राण्यनेकशः ॥ २३

तदुत्सव इवोदग्रं संप्रहृष्टनरावृतम् ।
नगरं धार्तराष्ट्रस्य भारतासीत्समाकुलम् ॥ २४
जनौघसलिलावर्तो रथनागाश्वमीनवान् ।
शङ्खदुन्दुभिनिर्घोषः कोशसंचयरत्नवान् ॥ २५
चित्राभरणवर्मोर्मिः शस्त्रनिर्मलफेनवान् ।
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः ॥ २६
योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः ।
अदृश्यत तदा राजंश्चन्द्रोदय इवार्णवः ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

## १५१

वैशंपायन उवाच ।
वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः ।
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् ॥ १
अस्मिन्नभ्यागते काले किं च नः क्षममच्युत । C. 5. 5217 B. 5. 154. 2 K. 5. 154. 2

19 ^b) G1 4 5 स्पृशतश्च (for मस्पृशन्त°) T2 G2 5 शनैस्तत°, G3 ततस्तत°; M तत शनै° (for शनै शनै°) — ^c) T2 G3 °ह्स्ताश्च — ^d) K2 °गरुभूपिते°, K3 B Dn1 D5 D2-4 6 G3 °गुरुभूपितान्, K4 D1 T2 G1. 2 °गुरुरूपि°, T1 broken, G5 M1 2 °गरुरूपि°

21 ^a) T2 G3 5 रथिना (for रथिन°) K1 2 5 D7 M2 5 श्रेष्ठान् (for श्रेष्ठा) — ^c) K D2 7 S (except M1 2) मज्जयत° K (except K3) B3 D2 7 T2 G2 5 च, T1 G1 2. 4 [अ]थ, M3-5 [अ]श्च (for स्म) K (except K4) D7 ते नागान् (for नागाश्च) — ^d) K1. 2 °शिक्षार्थशिक्षिता°, K3 5 B1-3 D1. 7 °शिक्षासु शिक्षिता°, B4 Dn1 D5 D3 4 6 8 10 °शिक्षास्वनुष्ठिता°, D2 °शिक्षासु निश्चिता°

22 ^a) S शस्त्राणि (for चित्राणि) — ^b) S कवचानि (for काञ्चनानि) — K4 om (hapl.) 22^c-23^b — ^c) D2. 4 वस्त्राणि, S तीक्ष्णानि (for शस्त्राणि) — ^d) B Dn1 D5 D2-4 6 10 सर्वाणि (for सज्जानि)

23 K4 om. 23^ab (cf v l 22) — ^a) G1 4 विविधा (for पुरुषा°) — ^b) G1. 5 कवचानि (for विविधा°) — ^c) K4 B Dn1 D1 3 4 6 8 उपाजह्रु

24 ^a) K D1-4 7 उत्सवमहो°, T2 G2 3 M3-5 उत्सवमिवो° (for उत्सव इवो°) — ^b) K D1-4 7 °नरा (K3 °जना)कुल, M1 2 °जनावृतं

25 ^b) K3 °नागाश्वमत्स्यवान्, D10 °नागौघमीनवान् — ^d) A few N MSS कोष°.

26 D5 om. (hapl ) 26^ab — ^a) G5 तत्रा° — ^c) B3 D6 °मालाभि°, D3. 4 °मालोद°; Ca °मालाद्रि° (as in text) — ^d) D3 4 रथपण्यामहा°, S (except G3) °ग्रह°

27 ^a) K5 योधचद्रोदयोद्धृत, B5 द्रोणचद्रोदयोद्भूत°, S (except T1) योगचद्रोदयोद्भूत — ^b) D7 T1 G1 4. 5 M1 2 °बलार्णव°, G3 °भवार्णव° — Ds2 om. (hapl ) 27^cd — ^c) K4 B (except B3) Dn1 Ds1 D6 8 10 व्यदृश्यत K (except K4) D1. 2 ततो राजन्, G4 महाराज — ^d) K1(m as in text) कुरुराजमहार्णव (= ^b)

Colophon lost in T1 on a broken fol Dn2 D8 9 missing — *Sub-parvan* K1 2 5 Dn1 D2 7 अभिनिर्याणयात्रा, K3 पुरनिर्याणयात्रा, K4 B1 D5 D6. 8 10 अभिनिर्यात्रा; B1-3 5 अभियात्रा, G5 निर्याणयात्रा, M निर्यात्रा — *Adhy name* G1 4 M कुरुबलवर्णन, G5 दुर्योधनबलकथन — *Adhy no* (figures, words or both) D6 43 (=143), T2 M 153 (M4 152), G1 155, G2 4 5 154, G3 151 — *S'loka no* K5 28

**151**

☞ This adhy is missing in Dn2 (cf. v l 5 143 2), the MS is mostly ignored here T1 reads this adhy after adhy 148

C. 5. 5217 B. 5. 154. 2 K. 5. 154 2

कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि ॥ २
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ३
विदुरस्यापि ते वाक्यं श्रुतं भीष्मस्य चोभयोः ।
कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कार्त्स्न्येन ते श्रुता ॥ ४
सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः ।
यन्नः क्षमं महाबाहो तद्ब्रवीह्यविचारयन् ॥ ५
श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः ।
मेघदुन्दुभिनिर्घोषः कृष्णो वचनमब्रवीत् ॥ ६
उक्तवानसि यद्वाक्यं धर्मार्थसहितं हितम् ।
न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ॥ ७
न च भीष्मस्य दुर्मेधाः शृणोति विदुरस्य वा ।
मम वा भाषितं किंचित्सर्वमेवातिवर्तते ॥ ८
न स कामयते धर्मं न स कामयते यशः ।
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः ॥ ९
बन्धमाज्ञापयामास मम चापि सुयोधनः ।
न च तं लब्धवान्कामं दुरात्मा शासनातिगः ॥ १०
न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः ।
सर्वे तमनुवर्तन्ते ऋते विदुरमच्युत ॥ ११
शकुनिः सौबलश्चैव कर्णदुःशासनावपि ।
त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणम् ॥ १२
किं च तेन मयोक्तेन यान्यभाषन्त कौरवाः ।
संक्षेपेण दुरात्मासौ न युक्तं त्वयि वर्तते ॥ १३
न पार्थिवेषु सर्वेषु य इमे तव सैनिकाः ।
यत्पापं यन्न कल्याणं सर्वं तस्मिन्प्रतिष्ठितम् ॥ १४
न चापि वयमत्यर्थं परित्यागेन कर्हिचित् ।
कौरवैः शममिच्छामस्तत्र युद्धमनन्तरम् ॥ १५
तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम् ।

---

1 $^{b}$) T G2 5 °श्रुत्य (for °स्मृत्य).

2 $^{d}$) K (except K4) D1. 2 7 न च्यवेम स्वधर्मत

4 $^{a}$) D3 4 तु (for [अ]पि) K4 B Dn1 Ds D3 4 6–8 10 तद्वाक्य — $^{b}$) Ds D10 श्रुत्वा (for श्रुत) — $^{d}$) T1 G1 4 कार्त्स्न्येन भवता श्रुता, T2 G2 कार्त्स्न्येनैव च ते श्रुता

5 $^{a}$) Ds अशेषेण (for अतिक्रम्य). — $^{c}$) K4 B Dn1 Ds D1 6 10 (by transp ) क्षम यत्नो (B3 यत्न क्षेम), D2 यत्तु क्षम, D3 4 यत्ते क्षम — $^{d}$) G3 तत्र ब्रूहि, M3. 4 (inf lin as in text) 5 तन्मे ब्रूहि (for तद्ब्रवीहि) D7 अवधार° (for अविचार°) — K4 repeats 5$^{cd}$ (v l क्षमं यत्ते for यत्न क्षम)

6 K4 reads 7$^{ab}$ for 6$^{ab}$, repeating it in its proper place — $^{c}$) D7 M (except M1) °निर्घोष — $^{d}$) K (except K4) D1–4 7 हृद (for कृष्णो) K4 B (except B3) Dn1 Ds D6 8 10 वाक्यमथाब्रवीत् (for वचनम°).

7 Before 7, K1–3 5 B3 D1–4 7 ins वासुदेव उ°; K4 B1 2 4 Dn1 Ds D6 8 10 कृष्ण उ°, T2 श्रीकृष्णः — $^{a}$) D3 G3 असि (for अस्सि) G3 यत्पाप (for यद्वाक्यं) — $^{d}$) S (except M4) कौरवे (for °व्ये).

8 $^{a}$) B1 3 S तु (for च) — $^{b}$) K (except K3) B1–3 D1–4 6–8 च (for वा) — $^{d}$) S (except T1 G1) सर्वमेतन्निरर्थक

9 $^{a}$) K4 B Dn1 Ds D2–4 6 8 10 नैष (for न स) — $^{b}$) K4 B Ds D6 8 10 नैष, Dn1 नैव, D2 न च (for न स)

10 $^{b}$) D3 4 [अ]पि च (by transp ) — $^{c}$) T1 G1 4 तत् (for त) — $^{d}$) K4 B Dn1 Ds D6 8 10 °स्मा पापनिश्चय°

11 $^{c}$) K4 D3 4 7 10 G1 3 4 M (except M5) तमन्व(G1 समन्व-; G4 तमनु)वर्तत, B3 तदनुमोदत (for तमनुवर्तन्ते) — $^{d}$) K (except K4) D7 G5 M1 अच्युतं; D3 4 अप्युत (for अच्युत)

12 $^{a}$) B3 सौबलश्चापि, S सौबलेयश्च (for सौबलश्चैव) — $^{d}$) G1 मूढ (for मूढा) T1 G1 4 दृढम् (for मूढम्) D7 अमर्षणा°, T1 G4 अमर्षिण°, M1 (inf lin ) 2 अनुव्रता° (for अमर्षणम्)

13 $^{a}$) K1 2 ममो° (for मयो°) — $^{b}$) K4 B Dn1 D6 T1 G1 4 यान्यभाषत कौरव° Cs 5 cite यान्यभाषत (as in text) — $^{d}$) B2 युक्त न (by transp ), Cs as in text

14 $^{a}$) K4 B2 4 5 Dn1 Ds D2–4 6 8 10 पार्थिवेषु न (by transp ) — $^{c}$) K3 D3 4 S यदकल्याण, D1 यच्च क°. — $^{d}$) S तस्मिन्सर्वं (by transp ).

15 $^{a}$) K3 D1 7 अत्यत, B3 Ds D10 अप्यर्थं; Cd 5 अत्यर्थं (as in text). — $^{b}$) B2 केन° (for कर्हि°) — $^{c}$) K (except K4) D1 2 7 शममिच्छाम कुरुभिः

अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत ॥ १६
युधिष्ठिरस्त्वभिप्रायमुपलभ्य महीक्षिताम् ।
योगमाज्ञापयामास भीमार्जुनयमैः सह ॥ १७
ततः किलकिलाभूतमनीकं पाण्डवस्य ह ।
आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ १८
अवध्यानां वधं पश्यन्धर्मराजो युधिष्ठिरः ।
निष्टनन्भीमसेनं च विजयं चेदमब्रवीत् ॥ १९
यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया ।
सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः ॥ २०
यस्मिन्यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः ।
अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान् ॥ २१
कथं ह्यवध्यैः संग्रामः कार्यः सह भविष्यति ।
कथं हत्वा गुरून्वृद्धान्विजयो नो भविष्यति ॥ २२
तच्छ्रुत्वा धर्मराजस्य सव्यसाची परंतपः ।
यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ २३
उक्तवान्देवकीपुत्रः कुन्त्याश्च विदुरस्य च ।
वचनं तत्त्वया राजन्निखिलेनावधारितम् ॥ २४
न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः ।
न चापि युक्तं कौन्तेय निवर्तितुमयुध्यतः ॥ २५
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा ।
स्मयमानोऽब्रवीत्पार्थमेवमेतदिति ब्रुवन् ॥ २६
ततस्ते धृतसंकल्पा युद्धाय सहसैनिकाः ।
पाण्डवेया महाराज तां रात्रिं सुखमावसन् ॥ २७

C. 5. 5242
B. 5. 154. 27
K. 5. 154. 27

इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

16 Before 16, K2-5 Dn1 Ds D1.2.4 6 8 10 ins वैशंपायन उ° — b) S वासुदेवेन — D6 om 16e-17b
17 D6 om 17ab (cf. v l. 16) — b) K4 अभिलभ्य, B2 4 5 Dn1 Ds D1.2 10 अभिलक्ष्य, B. अभिलभ्य, M1 2 उपलक्ष्य (for उपलभ्य)
18 a) S (except G1 M2) किलिकिला° K4 D6 -शब्दम् (for -भूतम्) Ca.d s किलकिलाभूत (as in text) — b) Dn1 D2 4 T2 G2 3.5 पाण्डवैः सह (for °वस्य ह)
19 c) K B Dn1 Ds D6 8-10 नि°(or नि)श्वसन् (K5 निरीक्षन्), D3 4 अर्जुनं, D7 नकुलं, Ca d निष्टनन् (as in text) — d) D3 4 विलपन् (for विजय) K4 त्विदम्, D3 4 इदम्, T1 चैवम् (for चेदम्)
20 a) B2 D10 G6 M1(inf lin) 2 3 5 °वास च — c) B8 D2 G3 5 M3-5 उपेत्यैव, D7 T1 G4 उपेत्येव (for उपैत्येव) — d) D1 परानर्द°, D7 परानर्थ°
21 a) K4 B Dn1 Ds D1.3 4 6 10 T G (except G3) तस्मिन्, Ca d यस्मिन् (as in text) — c) K1.2 5 सत्कृते (for अकृते) K5 B3 च, M1.2 [ऽ]पि (for तु) D7 कृतेपि यत्ने अस्मान्वै
22 b) K4 D3 4 स्वार्थं (for कार्यः) — c) K (except K4) G3 कुत्स्नान् (for गुरून्) — d) D3 4 नु (for नो)
23 d) D8 D1 T1 G1.3 तन्वत° (for तद्वच°)
25 a) K5 [अ]पि; T G (except G3) ते, Ca d तौ (as in text) D2 पश्यत°, D7 विदत°, D8 T G1.2 5 M2-5 वक्ष्यते, G4 वर्तते, Ca d वक्ष्यत° (as in text) — c) K4 B Dn1 Ds D6 8 10 नापि युक्त च, D3 4 नापि युक्त तु (for न चापि युक्त) B2 ते राजन् (for कौन्तेय) — d) D3 4 निवर्तयितुमद्य वै, S विनिवर्तेत युद्धत° Ca d cite अयुध्यत°
26 b) K4 B (except B3) Dn1 Ds D6 8 10 M3-5 वाक्य (for पार्थं) — d) K4 B (for B3 see below) Dn Ds D6 8 10 पार्थमेवम्, B3 G1 2 एवमेवम्, M3-5 पार्थमेतद् (for एवमेतद्) K5 B2 D1-4.7 G3 ध्रुव (for ब्रुवन्)
27 a) K5 D3 4 कृत° (for धृत°) — d) D7 सुखमाविशन्, M3 4(inf lin as in text) 5 सुखिनोवसन् (for सुखमा°)

Colophon Dn2 D5 9 missing — *Sub-parvan* K1-3 5 D2 G5 अभिनिर्याणयात्रा, K4 B Ds D6 8 10 M1.2 अभिनिर्यात्रा (B3 अभियात्रा); Dn1 विनिर्यात्रा, D7 निर्याणयात्रा, T1 भगवत्प्रतियान — *Adhy name* G5 M1.2 युधिष्ठिरयुद्ध(M2 om. युद्ध)प्रोत्साहन — *Adhy no* (figures, words or both) D6 44 (=144), T1 M4 153, T2 M1-3.5 154, G1 156, G2 4 5 155, G3 152 — *S'loka no* K5 Dn1 27.

# १५२

C. 5. 5243
B. 5. 155. 1
K. 5. 155. 1

वैशंपायन उवाच ।
व्युषितायां रजन्यां तु राजा दुर्योधनस्ततः ।
व्यभजत्तान्यनीकानि दश चैकं च भारत ॥ १
नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु संदिदेश महीपतिः ॥ २
सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सपोथिकाः ॥ ३
सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिस्तराः ॥ ४
सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटाः सर्वे ससर्जरसपांसवः ॥ ५
सघण्टाफलकाः सर्वे वासीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा वृताश्च द्वीपिचर्मभिः ॥ ६
सवस्तयः सशृङ्गाश्च सप्रासविविधायुधाः ।

---

## 152

☞ This adhy is missing in Dn2 (cf v l 5. 143 2), the MS is mostly ignored here

1 a) K4 B (except B2) Dn1 Ds D6–8 10 व्युष्टाया वै (B4 तु) (for व्युषिताया) Ca cites व्युष्टाया K4 B5 Dn1 Ds D6 7 हि; B4 D8 वै (for तु) — b) K1.2 B (except B4) D1 7 T G1 2 4 तदा (for तत )

2 c) K5 D7 S (except G1) तेषु (for [ए]तेषु) K8 सैन्येषु (for [अ]नीकेषु) — d) K4 Dn1 Ds D6 8.10 नराधिप (for मही°)

3 a) G8 सधनुष्का; Ca. d s सानुकर्षा (as in text) T2 G2 समीनीका, Ca d s सतूणीरा (as in text) — d) K1–3 5 B5 D1 2 सपावका., K4 B3 4 Dn1 Ds D6 8 10 °हर्टिकाः; B2 G4 °सायका, D3.4 °यन्त्रका; D7 °सेवका, T2 G2 5 °गोधिकाः, G8 °नायका (for °पोथिका) Ca d cite पावक

4 b) D3 4 सशरत्सरु°, T G M1 (inf lin ) °सायका°, Ca s as in text — c) D3 4 रज्जुभिर्विविधाभिश्च — d) K B2 4 Ds D1–4 6–8 10 G3 Cn °परिच्छदाः (Cnp as in text)

5 a) K5 °कचग्राह°, G3 °चक्रग्रह°, Cs. np °करग्रह°, Ca d as in text — c) D3 4 चैव (for सर्वे) — d) A few MSS °पांशव

6 a) B1 4 5 D1 3 4 T1 G1 Cn सघट°, T2 सघष्टि°, G2 सघुष्टि° D7 सकीलक्रकचा सर्वे (= line 5 of 543*) Ca d s cite घटाफलक — After 6a, K (K3 4 om lines 4–5) B Dn1 Ds D2 6 8 10 ins

543* सायोगुडजलोपलाः ।
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गराः ।
सकाण्डदण्डकाः सर्वे ससीरविषतोमराः ।
सशूर्पपिटकाः सर्वे सदात्राङ्कुशतोमराः ।
सकीलक्रकचा सर्वे

[ (L 1) D8 सप्रासलगुडोपला Ca d cite अयोगुड. — (L 2) K1–3 5 Ca d समार-; B3 Ds1 D8 10 Cnp सशूल- (for सशाल-) ❀ Nil सशूलेति गौडपाठ ।❀ — (L 3) K1 सदण्डकाण्डका, K2 3 5 B2 D2 7 Ca. d s np सदण्डकंटका (for सकाण्डदण्डका) K3 सदाशकुसरोषस, K4 D7 सशीरविषतोमरा, D6 8 सशार° Ca d. s cite सीर° — (L 4) K1. 2 5 Ds D6 7 ससूर्प°, B3 सगुल्मविटपा; B4 सगुल्मपिटका Ca cites गुल्मपिटके, Cd सूर्पपिटके, Cs शूलपिटक K1 2 5 B (except B5) D2 Ca d °रोषस° (for °तोमरा°) — (L 5) B1. 4 5 °कवचा°, Ca d np °क्रकचा (as above) ]

— K4 om 6bcd — b) K1 वासो भक्ष्यो°, K3 5 B D2 Cn वाशीवृक्षा°; Dn1 वायुवृक्षा°, D1 वामवृक्षा°, D3 4 सयन्त्राकुशतोमराः; D10 वास्यवृक्षादनान्विता; S वासिवृक्षादनीयु(G3 °वृ-; G5 °कृ-; M °घृ)ता Ca d.np cite वासी, and Ca d वृक्षादनं — S reads 6cd after 7. — c) B2 3 D2–4 °परीधाना — d) B1.4 Dn1 Ds D6 8 10 द्वीपिचर्मा(Ds1 D6 8 °र्मे)वृताश्च ते, S वृता गोद्वीपिचर्मभि

7 a) K4 सत्सूर्य. (sic), B (except B3) Dn1 Ds D3 4 6–8 10 G5 सहष्टय (for सवस्तय) Ca d cite वस्ति, Cs ऋष्टि — b) K4 D6 7 सप्राश-; D10 G5 सप्राशा Ca d cite प्रास — c) G3 4 M4 (inf lin ) सकुताला, M3–5 सकुदाला (for सकुद्दाला) — d) K D3 4 7 सचैल-; B4 5 Ds D2 सचेल-; T1 G1 4 5 समधु-; G2 समद-, G3 M समल- (for सतैल-) K3 D1 S -क्षौद्र- (for -क्षौम ) B5 Ds -वासस (for -सर्पिष ) — S reads 6cd after 7 (G3 4, after 544*) — After 7, N (Dn2 missing) G3 4 ins :

544* रुक्मजालप्रतिच्छन्ना नानामणिविभूषिता ।

K3 5 cont .

545* व्याघ्रचर्मपरीधाना सुवेषा समलंकृताः ।
[ Cf 6c and v l ]

सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ॥ ७
चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः ।
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्रमाः ॥ ८
कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः ।
बद्धारिष्टा बद्धकक्ष्या बद्धध्वजपताकिनः ॥ ९
चतुर्युजो रथाः सर्वे सर्वे शस्त्रसमायुताः ।
संहृष्टवाहनाः सर्वे सर्वे शतशरासनाः ॥ १०
धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ।
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा ॥ ११
नगराणीव गुप्तानि दुरादेयानि शत्रुभिः ।
आसन्रथसहस्राणि हेममालीनि सर्वशः ॥ १२
यथा रथास्तथा नागा बद्धकक्ष्याः स्वलंकृताः ।
बभूवुः सप्त पुरुषा रत्नवन्त इवाद्रयः ॥ १३
द्वावङ्कुशधरौ तेषु द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः शक्तिपताकधृक् ॥ १४
गजैर्मत्तैः समाकीर्णं सवर्मायुधकोशकैः ।
तद्बभूव बलं राजन्कौरव्यस्य सहस्रशः ॥ १५
विचित्रकवचामुक्तैः सपताकैः स्वलंकृतैः ।
सादिभिश्चोपसंपन्ना आसन्नयुतशो हयाः ॥ १६
सुसंग्राहाः सुसंतोषा हेमभाण्डपरिच्छदाः ।
अनेकशतसाहस्रास्ते च सादिवशे स्थिताः ॥ १७
नानारूपविकाराश्च नानाकवचशस्त्रिणः ।

C. 5. 5253
B. 5. 155. 21
K. 5. 155. 21

---

8 $^{a}$) K1.2 सुवहव, K3.5 D1 सुवहुश, S वपुष्मत (for सुवपुष) — After $8^{ab}$, G4 M5 read $10^{cd}$, T1 G5 read $8^{cd}$ (with $9^{ab}$) after 10 — $^{d}$) K4.5 B (except B2) Dn1 D3.4.8 T1 G4 °निश्चया, Ca °निश्रमा (as in text)

9 T1 G5 read $9^{ab}$ (with $8^{cd}$) after 10 — $^{b}$) K1.2 D2.4.7 G3 M [ऽ]भि-; Cs वि- (as in text) — Ds om $9^{c}$–$10^{d}$, G4 om. (hapl.) $9^{c}$–$10^{b}$ — $^{c}$) A few N MSS °कक्षा D3.4 बद्धामयो बद्धरिष्टा — After 9, N (except Ds, Dn2 missing) ins

546* बद्धाभरणनिर्व्यूहा बद्धचर्मासिपट्टिशा ।

[ K5 B (except B2) D6 Ca d n.s °निर्यूहा (for °निर्व्यूहा) ]

10 Ds om 10, G4 om. $10^{ab}$ (cf v l 9) — $^{a}$) D2.4 चतुर्युगरथ्या — B5 om. (hapl.) $10^{bc}$ — $^{b}$) K1.2.5 D7 सर्वे चैव श(K5 सि)तोत्तरा, K3 D1 सर्वे चैव सतोमरा, K4 B (B5 om ) Dn1 D6.8.10 सर्वे चोत्तम वाजिन, D2 सर्वे चैव मता नरा, D3.4 सर्व च सहतोमरा, T G (G4 om.) सर्वशस्त्रसमायुता — G4 M5 read $10^{cd}$ after $8^{ab}$. — $^{c}$) K1–3.5 D1–4.7 सपार्ष्णिवाहका सर्वे, K4 B1.4 Dn1 D6.8.10 सप्रासऋ(K4 °कृ)ष्टिका सर्वे, B2 Ca सप्रासिवाहका सर्वे, B3 सप्राणऋष्टिका सर्वे, T1 G1.3.4 सहृष्टवदना सर्व Cd cites वाहका — $^{d}$) T2 G2.3.5 शर° (for शत°) — After 10, T1 G5 read $8^{c}$–$9^{b}$

11 $^{b}$) S (except T2) अन्य (for अन्यौ) T1 G1 M प्राष्टि-; G2.4 प्रष्टि-; G5 प्रष्ट- (for पार्ष्णि ) S (except T2) -सारथि — $^{c}$) K (except K4) D7 धनुषि (for रथिना) — $^{d}$) K (except K4) D1 रथे च K1.2 हयकोविदौ, K5 D1 हयवित्तमौ

12 $^{a}$) D6 T G च (for [इ]व) — $^{b}$) K1.4 B Dn1 Ds D3.4.6.8.10 दुराधर्षाणि, D1 °धेयानि, Ca.s as in text

13 $^{b}$) N (mostly) बद्धकक्षा — $^{c}$) D3.4 ते बभु (for बभूवु) — $^{d}$) D3.4 अचला (for अद्रय)

14 $^{a}$) K4 B Dn1 Ds D3.4.6.8.10 तत्र (for तेषु) — $^{b}$) D3.4 द्वौ तु तत्र, M (except M1) द्वावुत्तर; Ca द्वौ एव च (for द्वावुत्तम ) — $^{d}$) K4 B Dn1 Ds D6.7.10 Ca °पिनाकधृक् (B3.5 °धृत्, D2 °भृत्) S एक- (T2 G1.2 °क )च्छत्रपताकधृक् (T °धृत्)

15 $^{b}$) K1 Dn1 T2 G2 सचर्मायुध K (except K4) B2 D7 -भूषणै, a few other MSS -कोपकै (for -कोशकै) — $^{d}$) K4 B2.4 Dn1 Ds D2–4.6.8.10 महात्मन (for सह°)

16 $^{a}$) K4 B1–3.5 Dn1 Ds D1.3.4.6.8.10 T1 आमु क्तकवचै युक्तैः (B2 शूरै , Ds मुक्तैः), B4 आमुक्तचित्रकवचै, D2.7 G3 विचित्रकवचायुक्तैः — $^{b}$) D6.8 G4 M2.4 सुपताकै — $^{c}$) K4 B Dn1 Ds D6.8.10 चोपपन्नास्तु (B1–4 °श्च), D3.4 चैव सपन्ना, T2 G2 चापि स° — $^{d}$) B (except B5) Dn1 Ds D6.8.10 तथा चा° (for आसन्न°)

17 $^{a}$) K3.5 B1.3 D7 S सुसग्रहा, K4 B4 D6 Cn असग्राहा, Dn1 ससग्राहा, D1.2 असग्रहा, D3.4 असग्राह्या K4 B Dn1 Ds D6.8.10 सुसपन्ना , D3.4 सुसपन्न- — $^{d}$) K1.2 तत्र, K4 B2.4.5 Dn1 Ds D6.8.10 सर्वे, D8 वले (for ते च) D3.4 तेजसादित्यसनिभा

C. 5. 5203 B. 5. 155. 21 K. 5. 155. 21

पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ १८
रथस्यासन्दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन्पादरक्षाः समन्ततः ॥ १९
रथस्य नागाः पञ्चाशन्नागस्यासञ्शतं हयाः ।
हयस्य पुरुषाः सप्त भिन्नसंधानकारिणः ॥ २०
सेना पञ्चशतं नागा रथास्तावन्त एव च ।
दश सेना च पृतना पृतना दश वाहिनी ॥ २१
वाहिनी पृतना सेना ध्वजिनी सादिनी चमूः ।
अक्षौहिणीति पर्यायैर्निरुक्ताथ वरूथिनी ।
एवं व्यूढान्यनीकानि कौरवेयेण धीमता ॥ २२
अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह ।
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम् ।
अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ २३
नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते ।
सेनामुखं च तिस्रस्ता गुल्म इत्यभिसंज्ञितः ॥ २४
दश गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ २५
तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ॥ २६
पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान् ।
विधिपूर्वं समानीय पार्थिवानभ्यषेचयत् ॥ २७
कृपं द्रोणं च शल्यं च सैन्धवं च महारथम् ।
सुदक्षिणं च काम्बोजं कृतवर्माणमेव च ॥ २८
द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लीकं च महारथम् ॥ २९
दिवसे दिवसे तेषां प्रतिवेलं च भारत ।
चक्रे स विविधाः संज्ञाः प्रत्यक्षं च पुनः पुनः ॥ ३०
तथा विनियताः सर्वे ये च तेषां पदानुगाः ।
बभूवुः सैनिका राजन्राज्ञः प्रियचिकीर्षवः ॥ ३१

इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥ समाप्तमभिनिर्याणपर्व ॥

---

18 $^a$) D8 4 °विचित्राश्च Ca d cite विकारा (as in text). — $^b$) D7 °धारिण° — $^c$) K8 पदातयो
19 $^d$) K1–8 D1 सहस्रश° (for समन्तत°)
20 $^a$) K1 2 D6 8 T2 G1 3 4 पचासन् (for पञ्चाशत्) — $^b$) T2 G1.4 5 तथा (for शत)
21 $^a$) M2 5 पचाशत — $^b$) B2 5 हि (for च) — After 21$^{ab}$, T G (except G3) ins
547* पञ्चाशच्च शत चाश्वा नरा° पञ्चगुणास्तत° ।
22 $^a$) K4 B Dn1 D8 D6 8 10 सेना तु (B3 5 Dn1 च) वाहिनी चैव — $^b$) D8 4 चैव सा (for सादिनी) K4 B Dn1 D8 D6 8 10 पृतना ध्वजिनी चमू° — $^c$) A few MSS अक्षोहिणी K5 D1 M5 हि, B2 D8 तु, D8 4 च (for [इ]ति) — $^d$) K4 5 B Dn1 D8 D3 4 6 8 10 च (for [अ]थ)
23 $^a$) A few MSS अक्षोहिण्य° — K8 om (hapl) 23$^b$–23$^c$, D1 om 23$^{bcd}$. — $^b$) K1 B2 सप्त एव, K3 तत्र चैव, D8 4 सर्व एव (for सप्त चैव) K (K8 om.) B3 5 D2 8 G4 हि, D8 च (for ह) For 23$^b$, G5 reads 23$^f$ (for the first time), *repeating* it in its proper place — $^c$) A few MSS अक्षोहिण्य° K1 2 D7 च (for तु) — K1.2 5 B1 D2–4 T2 G2 om (hapl) 23$^{ef}$.
24 $^b$) T2 G2 4 एपा (for एषा) — $^c$) K4 D6 8 10 तु (for च) — $^d$) K8 B2 D1 °धीयते, K4 B5 °शब्दित, B1 Dn1 °शब्दित, D8 D2 °मज्ञित, S (except G5 M1 2) °सज्ञिता° (for °मज्ञित)
25 $^a$) K4 B Dn1 D8 D2–4 6 10 T1 Ca अथो, Cd दश (as in text) D1 8 गुल्मो; G3–5 गुल्म- (for गुल्मा) T G (except G3) गणास्त्वा(G5 °श्चा)सन् (for गणस्त्वासीत्) — $^b$) K2 B3 Dn1 D8 D6 8 10 गणस (for गणास्) D8 D6 8 10 भवेत् (for ऽभवन्) — $^c$) K8 5 D6 8 सेनास्तु, D8 4 °या (for °सु)
26 $^a$) D1 S (except T2 G1 3) ततो (for तत्र) T1 G4 राज° (for राजा) — $^b$) D8 वरान् (for नरान्) — $^c$) D10 T2 G1.2 महाबाहून् — $^d$) K8 तत°, K5 D3 D8 G3 तथा (for तदा)
27 $^b$) K1 8 D2 रथ°, K2 अथ, G1 4 नृप° (for नर°) — $^c$) K4 B Dn1 D8 D1 6 8 10 विधिवत्पूर्वमानीय — $^d$) K4 B Dn1 D8 D3 4 6 8 10 °भाषत (for °षेचयत्)
28 $^b$) K4 B2 4 5 Dn1 D8 D6–8 10 जयद्रथ (for महा°) — $^c$) T G2 कांभोज
29 $^a$) K8 T1 विकर्ण (for च कर्ण) — $^d$) Some MSS बाह्लिक K8 4 B2 4 5 Dn1 D8 D7 8 10 महाबल
30 $^a$) K1 2 B8 D2–4 7 चैषां (for तेषां) — $^b$) D2

C. 5. 5552 B. 5. 161 18 K. 5. 161 18

गजो वाजी नरो वापि पुनः स्वस्ति गृहान्व्रजेत् ॥ १७

कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा ।
रणे जीवन्विमुच्येत पदा भूमिमुपस्पृशन् ॥ १८

किं दर्दुरः कूपशयो यथेमां
न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ १९

प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै-
रुदीच्यकाम्बोजशकैः खशैश्च ।
शाल्वैः समत्स्यैः कुरुमध्यदेशै-
र्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ २०

नानाजनौघं युधि संप्रवृद्धं
गाङ्गं यथा वेगमवारणीयम् ।
मां च स्थितं नागबलस्य मध्ये
युयुत्ससे मन्द किमल्पबुद्धे ॥ २१

इत्येवमुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम् ।
अभ्यावृत्य पुनर्जिष्णुमुलूकः प्रत्यभाषत ॥ २२

अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् ॥ २३

यदीदं कत्थनात्सिध्येत्कर्म लोके धनंजय ।
सर्वे भवेयुः सिद्धार्था बहु कत्थेत दुर्गतः ॥ २४

जानामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्येतत्त्वादृशो नास्ति योद्धा
राज्यं च ते जानमानो हरामि ॥ २५

न तु पर्यायधर्मेण सिद्धिं प्राप्नोति भूयसीम् ।

---

— c) M2-4 वापि (for वाजी) K4 B (for B2 see below) Dn1 D6 8 10 रथो (for नरो) B2 G3 गजवाजिरथो (G3 °नरो) वापि — d) S स्वस्थो (for स्वस्ति) T1 G2 गृह (for गृहान्) K B2 Ds D1-4 6-8 10 इयात् (for व्रजेत्)

18 a) D1 अनु°, S अवध्यात° (M1 अवज्ञात, M3 4 अपध्यात); Cd.s as in text — b) K5 D7 T1 सस्पृष्टो, Dn1 °दृष्टो, D5 G3 °पृष्टो (for °सृष्टो) K4 D3 4 6 10 च (for वा) — d) = 4 15 15b

19 K5 om 19a-21a — ab) K1-3 Ds2 D7 8 दुर्दु(K3 Ds2 °र्दे)र°, Cd दर्दुर° (as in text) M3-5 किं दर्दुर° कूपशयो यथेमां नावबुध्यसे (Anuṣṭubh!) — B5 om from 19cd up to 5 159 1 — c) M3-5 चमूमेतां (for दुराधर्षां) — d) T2 G2 अवध्या (for इव द्याम्)

20 K5 B5 om 20 (cf v l 19) — b) T1 कांभोज° (for काम्बोज) For खशैश्च, some MSS read खसैश्च or खपैश्च, only K3 किरातै — c) S (mostly) सात्वै° K3 कुरुमत्स्यदश्यै°; K4 B1 2 Ds1 D2-4 6 10 °मध्यदेश्यै°, B4 D1 °मुख्यदेश्यै°, Dn1 D5 °मुख्यदेशै°, G5 उत्तमध्यदेश्यै — d) K1 2 द्रविडां(K2 °डौं)ढ्कैश्च; K3 D1 द्रविडाध्रकैश्च, K4 D5 द्रविडौंड(D5 °ध)काध्रै, B2 D3 4 6 द्रविडोड्काचै (B2 °काच्यै°, D6 °काचै); Dn1 द्रविडौंद्रकाचै°, D8 D10 द्रविडौंढ्काच्यै, D2 द्रविडांध्रकाचै°; D7 द्रविडाध्रकाचै°, T1 द्रमिळांध्रकांच्यै, T2 G1 2 5 द्रमिळांध्रकैश्च, G3 द्रमिडाधकैश्च, M द्रमिळाध्र(M2 °ध)काचै°

21 K5 om 21a, B5 om 21 (cf v.l 19) — a) K1-3 D2 7 सनिविष्ट; K4 B2 D3 4 6 8 10 T G1 2 M °प्रवृत्त, G5 °प्रमत्त (for °प्रवृद्ध) — b) N (B5 om, Dn2 missing) M3 अपारणीय — c) G2 तच् (for मां) K (except K4) B2 Ds D1-4 7 °कुल°, S (except G1 5) °पुर° (for °बल°) Cd cites नागकुल — d) S विकत्थसे (for युयु°) K (except K4) D1.7 8 किल (for किम्). K1-3 G3 किमल्पबुद्धि°, G5 विकल्पबुद्धे

23 B5 om 23 (cf v l 19) — b) D5 न हि (for ऽर्जुन) — c) K1 5 Ds D1-4 7 M3-5 पर्यायसिद्धिर् (D2 °द्धेर्), K4 D7 पर्यायात्सिद्धिर्; T2 G1.3 5 यस्य वा (G1 5 या) सिद्धिर् T2 G1 2 एकस्य (for एतस्य) — d) K (except K4) D1 कत्थत° (for °नात्)

24 B5 om 24 (cf v l 19) — a) K5 D7 8 T1 G3.5 M (except M3) यद् (for यदि) D3 4 10 इह (for इद) D2 कत्थत° (for कत्थनात्) K4 B (B5 om) Dn1 D5 D3 4.6 8 10 लोके (for सिध्येत्) — b) K4 B (B5 om) Dn1 D5 D6 8 10 सिध्येत्कर्म, D3 4 कर्म सिध्येद् (for कर्म लोके) — d) K4 B (B5 om) Dn1 D5 D6-8 10 कत्थने को हि, D2-4 बहु कत्थेन D2-4 दुर्गता, D10 दुर्बल° (for दुर्गत)

25 B5 om 25 (cf v l 19) — c) K1 2 योध° (for योद्धा) — d) K4 B1 2 4 Dn1 D5 D6 8 10 जानान(D5 जानीम)स्ते राज्यमेतद्धरामि, B3 जानन्तु ते राज्य-मेतद्व्रजामि; D3 4 राज्यं तेजो न स्वमर्हो मतो मे

26 B5 om 26 (cf. v l 19), G3 om 26ab — a) D1 च (for तु) B3 °धर्मस्य, D2 °मात्रेण, C5 °धर्मेण

मनसैव हि भूतानि धाता प्रकुरुते वशे ॥ २६
त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवम् ॥ २७
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणे जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फल्गुन ॥ २८
सगदाद्भीमसेनाच्च पार्थाच्चैव सगाण्डिवात् ।
न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् ॥ २९
सा वो दास्यं समापन्नान्मोक्षयामास भामिनी ।
अमानुष्यसमायुक्तान्दास्यकर्मण्यवस्थितान् ॥ ३०
अवोचं यत्षण्ढतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥ ३१
सूदकर्मणि च श्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ॥ ३२
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
श्रेण्यां कक्ष्यां च वेण्यां च संयुगे यः पलायते ॥ ३३
न भयाद्वासुदेवस्य न चापि तव फल्गुन ।
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ॥ ३४
न माया हीन्द्रजालं वा कुहका वा विभीषणी ।

C. 5. 5570
B. 5. 161. 35
K. 5. 161. 35

---

(as in text) Cd cites पर्यायधर्म — [b]) Dn1 राज्यं (for सिद्धिं) K5 आप्नोति (for प्रा°) K1.3 4 D1 2 मानसीं, K2 D8 मानुषीं, K4 B1.2 4 Dn1 Ds D6 10 मानुष°, B3 D7 मानव° (for भूयसीम्) — [c]) K1 [इ]ह, T1 G3 च, M2–5 प्र (for हि) K3 हि भूतानि, K4 B (B5 om) Dn1 Ds D3 4.6 10 [अ]नुकूलानि (for हि भूतानि) — [d]) K4 B1.2 4 Dn1 Ds D6 8 10 C3 विधाता, B3 धाता च, (for धाता प्र-)

27 B5 om. 27 (cf v.l. 19), G3 om. 27[cd] — [b]) D1 M2–5 त्वा (for त्वां)

28 B5 om 28 (cf. v.l 19), D7 om. 28[ab] — [b]) K5 D2 T G1.2 3 यदा (for यत्त्व) K4 B (B5 om.) Dn1 Ds D6 10 दासपणैर्, T G1.2 3 दास° पणे (for दासपणे) — [d]) N (except D1.2, B5 om, Dn2 missing) फाल्गुन (for फल्गुन)

29 B5 om 29 (cf v.l 19) — [a]) B2 4 Dn1 Ds वा (for च) K5 सगदो भीमसेनश्च — [b]) K4 D3.4.6 10 चापि, B2 4 Dn1 Ds वापि (for चैव) D8 फाल्गुनाद्वा (for पार्थाच्चैव) K5 पार्थश्चैव सगाजिव° — [c]) K3 हि, K4 [ए]व, K5 D2–4 7 वि°; S च (for वै) Ds2 स°, D6 G3 M2–5 वा, T2 G2 च (for व°)

30 B5 om 30 (cf v.l 19) — [a]) K3 Dn1 D2–4 7 S दास्य (as in text), the rest दास्ये K5 सायुधांश्चैव मपन्नान — [b]) K4 B (B5 om) Ds D6 8 भाविनी, Dn1 पार्षती (for भामिनी) — [c]) K3 B1.3 C3 अमानुष्ये, K3 B4 D6 °ष्य-(for °ष्य-) B4 D7 -समापन्नान, D2 M4 °युक्ता (for -समायुक्तान्) — [d]) K4 B (B5 om) Dn1 Ds D1.6 8 दास-, T G1.2 3 M1 दासे (for दास्य)

31 B5 om 31 (cf. v.l. 19) — [b]) K1–3 D1 सत्यम् (for तथ्यम्) D3 4 च (for तत्) — [c]) K5 धृता वेणी हि, T2 G2 4 धृत्वा हि वेणीं — [d]) K1 D3.4 T G1 तथा; Ds यदा (for तदा)

32 B5 om. 32 (cf v.l 19) — [a]) K3 5 D1 विश्रात°, D7 विश्रात, G5 चाश्रात — [c]) K5 भीमसेनश्च, B2 4 Ds2 D2–4 °सेनस्य, D1 °सेन° स — [d]) Ds M1.2 यत्तु, D1 T G M2–5 यत्तत् (for यच्च) D7 स्मृत्वा-त्व पुरुषो भव

33 B5 om 33 (cf v.l 19) — [a]) K4 B (B5 om.) Dn1 Ds D2–4 6 8 10 एतत्, Cd 8 एव (as in text) D7 एव निपातितो द्वंद्व — [b]) D7 क्षत्रियस्य ततस्तव. — [cd]) K1 transp कक्ष्या and वेण्यां K2 कर्पं, Ds1 रक्षा; Ds2 रक्ष्या, Cd कक्ष्या (as in text) G5 वेणीं; Cd वेण्यां (as in text) M3–5 पलायति (for °ते). K4 B (B5 om) Dn1 D3.4 6 8 10 वेणीं कृष्णा पंढवेष कन्या (K4 D8 10 °न्या) नर्तितवानसि, D7 सानुयधस्य दुर्बुद्दे क्षत्रियेण मता मया D3 4 repeat 33[cd] as in text also

34 B5 om 34 (cf. v.l 19) — [b]) N (except D1 2, B5 om, Dn2 missing) फाल्गुन — [c]) D3.4 S (except G3) न राज्य (D3 4 राज्य व°, M1.2 राज्य न) प्रतिदास्यामि — [d]) D1 [इ]ह स- (for सह)

35 B5 om. 35 (cf v.l 19) — [a]) D2 7 8 G1.3 5 M1 मया, Cd 8 माया (as in text) K3 नेंद्र°, D2 तेंद्र°; G1 चेंद्र° (for हीन्द्र°) D3 4 न जानामींद्रजाल वा, G2 न मायेंद्रजाल वा; M2–5 न मया हींद्रजालानि Cd 8 cite इंद्रजालं (as in text) — [b]) K2 8 D8 C3 कुहक; D1.2 T G1 2 5 M1.2 कुहना, D3 4 छद्मक, Cd कुहका (as in text) G3 कुहकाना (for कुहका वा) K5 D3 4 च (for वा) K1 B2 D6 7 विभीषणा, K2 8 त्रिभीषण, K5 [अ]विभीषिका; B1 3 [अ]पि भीषणी, B4 Dn1 D2 [अ]पि भीषणा, D1 विभीषणे, D3 4 [अ]तिभीषण, D8 [अ]पि भीषण, Cd विभीषणी (as in text) — [c]) T2 G2 युद्धं (for युद्धे) — [d]) K3 °गर्जित, B3 T2 G1.2 °गर्जिता,

C. 5. 5570 B. 5. 161 35 K. 5. 161 36

आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्जनाः ॥ ३५
वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ॥ ३६
संयुगं गच्छ भीष्मेण भिन्धि त्वं शिरसा गिरिम् ।
प्रतरेमं महागाधं वाहुभ्यां पुरुषोदधिम् ॥ ३७
शारद्वतमहामीनं विविंशतिझषाकुलम् ।
बृहद्बलसमुच्चालं सौमदत्तितिमिंगिलम् ॥ ३८
दुःशासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ॥ ३९
शस्त्रौघमक्षय्यमतिप्रवृद्धं
यदावगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धव-
स्तदा मनस्ते परितापमेष्यति ॥ ४०
तदा मनस्ते त्रिदिवादिवाशुचे-
र्निवर्ततां पार्थ महीप्रशासनात् ।
राज्यं प्रशास्तुं हि सुदुर्लभं त्वया
बुभूषता स्वर्ग इवातपस्विना ॥ ४१

इति श्रीमहाभारते उद्योगपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

---

Ds1 D7 M °गर्जिना, Ds2 °गर्जितां, Cd °गर्जन

36 B6 om 36 (cf v l 19) — b) N (except D2, B6 om, Dn2 missing) फाल्गुनाना. K2.4 D2–4 8 च (for वा)

37 B6 om 37 (cf v l 19). — a) D7 भीष्मेण सयुग गच्छ — b) K1 2 छिंधि (for भिन्धि) K1 4 B (B6 om) Dn1 Ds D6 8 10 वा (for त्वं) — c) K4 D6 तरेथा वा; B (B6 om) Dn1 Ds D10 तरेम वा, D3 4 प्रतरस्व; D8 तरेथ वा (for प्रतरेम) K1 D2 महाबाहु, K2–5 D1 6 8 °वाहो, D7 °वाहु

38 B6 om 38 (cf v l 19) — b) D8 °महोरग; B2 D1 M (M1 inf lin as in text) Cd °समाकुल — B4 om 38cd — c) K3 5 °समुत्थानं, K4 D3 4 6 8 10 °समुद्वेल; B1–3 Dn1 °महानक्र, D2 °समुल्लासं, T G1–3 °समुच्चार Cd cites समुच्चल', Cs समुच्चलत् — d) K1 B1–3 D3 T1 G1. 2 5 सोमदत्ति°, D3.4 सौमदत्त°, T2 G3 M (M1 inf lin) सोमदत्त° — After 38, Dn1 ins

561* युयुत्सुतोय भगदत्तमारुत
श्रुतायु(810)हार्दिक्यमहासमुद्रम् ।

39 B6 om. 39 (cf v l 19) — a) B2 D3 4 दुःशासनोर्मिं Cd s cite ओघ' — b) D2 °वक्रायुध° (for °चित्रायुध°) — After 39ab, Dn1 ins

562* भीष्मवेगमपर्यन्त द्रोणग्राहदुरासदम् ।
कर्णशल्यझपावर्तं काम्बोजवडवामुखम् ।

— c) K2 3.5 Dn1 Ds D1 2 7 Ca d s °गाढ, G3 °राग (for °गाध) — d) Cd दुर्धर्षणोदं T1 °प्रताप; G2 M2 5 °प्रवात (for °प्रपातम्) Cd cites प्रपात.

40 B6 om 40 (cf. v l 19) — b) G3 युधा; M3–5 पदा (for यदा) K3 D7 विगाह्य D3 4 [ए]व विनष्ट° (for श्रमनष्ट°) — c) T2 G2 सह- (for हत-). D8 -मित्र-; D3.4 -सत्व- (for -सर्व-) — d) K3 G3 M एति (for एष्यति).

41 B6 om. 41 (cf v l 19) — a) K (except K4) D1 7 8 तस्मात्, T G2 3 ततो (for तदा) K3 अशुचि°; Ds अशुच°, T G1 2 5 आशु, Cd अशुचे' (as in text) — b) K4 D6 विवर्तता, B (B6 om) Dn1 Ds D1–4. 10 T1 G3 निवर्तिता, D7 निर्वर्तिता; D8 निवर्तिता, T2 G1 2 5 निवर्तित; M निवर्तते — c) K4 D6 8 प्रशा(D6 °शा)स्य राज्य, B (B6 om) Dn1 Ds D1. 3 4 10 प्रशास्य राज्य (for राज्यं प्रशास्तु) Cd cites प्रशास्तु (as in text) K (except K4) भुवि दु° (for हि सुदु°) — d) K4 B1–3 D3 4 G2 बुभूषित, B4 D1 2 6 8 10 T °षित°, Cd s °षता (as in text) K4 5 D3 4 6 8 S स्वर्गम्, Cd s स्वर्ग (as in text)

Colophon om in B6, Dn2 D6 9 G4 missing — *Sub-parvan* K B1 2 4 Dn1 Ds D2–4 6–8 10 G5 M1 2 उलूकयान; B3 अन्धकयान — *Adhy name* T1 G5 M उलूकवाक्य — *Adhy no* (figures, words or both) D6 51 (=151), T1 G1 162, T2 M1 2 4 160, G2 5 M3 5 161, G3 159 — *S'loka no.* K4 39, Dn1 45

# १५९

संजय उवाच ।

उलूकस्त्वर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
आशीविषमिव क्रुद्धं तुदन्वाक्यशलाकया ॥ १
तस्य तद्वचनं श्रुत्वा रुषिताः पाण्डवा भृशम् ।
प्रागेव भृशसंक्रुद्धाः कैतव्येन प्रधर्षिताः ॥ २
नासनेष्ववतिष्ठन्त बाहूंश्चैव विचिक्षिपुः ।
आशीविषा इव क्रुद्धा वीक्षांचक्रुः परस्परम् ॥ ३
अवाक्शिरा भीमसेनः समुदैक्षत केशवम् ।
नेत्राभ्यां लोहितान्ताभ्यामाशीविष इव श्वसन् ॥ ४
आर्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशम् ।
उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ॥ ५
प्रयाहि शीघ्रं कैतव्य ब्रूयाश्चैव सुयोधनम् ।
श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते तथास्तु तत् ॥ ६
मद्वचश्चापि भूयस्ते वक्तव्यः स सुयोधनः ।
श्व इदानीं प्रदृश्येथाः पुरुषो भव दुर्मते ॥ ७
मन्यसे यच्च मूढ त्वं न योत्स्यति जनार्दनः ।
सारथ्येन वृतः पार्थैरिति त्वं न बिभेषि च ॥ ८
जघन्यकालमप्येतद्भवेद्यत्सर्वपार्थिवान् ।
निर्दहेयमहं क्रोधात्तृणानीव हुताशनः ॥ ९
युधिष्ठिरनियोगात्तु फल्गुनस्य महात्मनः ।
करिष्ये युध्यमानस्य सारथ्यं विदितात्मनः ॥ १०
यद्युत्पतसि लोकांस्त्रीन्यद्याविशसि भूतलम् ।
तत्र तत्रार्जुनरथं प्रभाते द्रक्ष्यसेऽग्रतः ॥ ११
यच्चापि भीमसेनस्य मन्यसे मोघगर्जितम् ।
दुःशासनस्य रुधिरं पीतमित्यवधार्यताम् ॥ १२
न त्वां समीक्षते पार्थो नापि राजा युधिष्ठिरः ।
न भीमसेनो न यमौ प्रतिकूलप्रभाषिणम् ॥ १३ C 5. 5642 B. 5. 162. 63 K. 5. 162. 63

इति श्रीमहाभारते उद्योगपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

---

## 159

☞ This adhy is missing in Dn2 (cf v l 5 143 2), *the MS is mostly ignored here*

1 B5 om. 1 (cf. v.l 5 158 19) — [d]) T1 G3 M बाल॰, T2 (before corr ) G2 5 बाण॰; G1 वाच॰ (for वाक्य॰)

2 B5 resumes! — [c]) D6 T1 च भृश (for भृशसं॰) — [d]) K4 B1 2 4 5 Dn1 Ds D8 10 [अ]पि, B3 D2–4 T1 G3 M3–5 च, D6 [अ]धि॰ (for प्र )

3 [a]) K4 B Dn1 Ds D2–4 6 8 10 Ca d om. न K1 अधितिष्ठत, K2 अध्य॰, K4 B Dn1 Ds D3 4.6 10 Ca उद॰, K5 D2 8 अव(D8 च)तिष्ठत॰, D1 S अव(G1 ॰धि)तिष्ठते (M4 ॰त॰), D7 अतितिष्ठत (for अव॰) — [b]) D10 बाहून्स्वांश्च K4 B Dn1 Ds D3 4 6 8 10 प्र॰ (for वि॰) — [d]) D3 4 सपश्यत॰ (for वीक्षां॰)

4 [b]) B4 समवैक्षत B2 पाडव॰, T G M1 कैतव (for केशवम्) — G3 M om. 4[cd] — [c]) K1–3 D3 4.7 लोहिताभ्या च (D7 स), T2 G2 अतिताम्राभ्या (for लोहि॰)

5 [a]) K1.2 (before corr ) उत्स्मयित्वेह, K2 3 5 D7 उत्स्मयित्वे(K5 ॰स्वै)व, D3 4 ससरन्निव, T1 भर्त्सयित्वा तु, T2 G2 5 M उत्स्मयित्वा तु (for उत्स्मयन्निव) Ca d cite उत्स्मयन् (as in text) — [d]) B1 2 4 ॰ष्य प्रत्युवाच ह

6 [b]) K1 3 D3 T1 M1 2 ब्रूयाश्चैव, K5 ब्रूहि चैव, D3 4 T2 G2 5 ब्रूयाश्चैनं; D10 प्रब्रूयास्त्व — [c]) S श्रुत्वा (for श्रुतं) — After 6, K4 B Dn1 Ds D3 4 6–8 10 ins a passage of 103 lines given in App I (No 12)

7 Before 7, K4 B Ds D3 4 6 8 ins कृष्ण उ॰, D10 T2 G2 श्रीभगवान्, G1 3 वासुदेव॰ — [a]) K4 त्वमि॰, D3 त्व ह्री॰ (for श्व इ॰) K4 B Dn1 Ds D2–4 6–8 10 Ca प्रपद्येथा॰, G1 प्रपश्येथा॰, Cd अदृश्येथा॰, Cs as in text — [d]) K5 सग्रामे पुरुषो भव (=5 157 15[d])

8 [a]) B2 5 T2 G मूढस्त्व K1–3 D1 2 7 यदेतन्मन्यसे मूढ, K5 दुर्मते मन्यसे यच्च, D3 मन्यसे मूढ यच्च त्व — [d]) D3 M तत् (for त्व)

9 [a]) K5 एव (for एतद्) D3 जघन्यकाले मन्ये चेद्, D7 जघन्यकालं समेक्ष्य Ca d cite जघन्यकाल॰ (as in text), Cs ॰काले — [b]) K3.4 B Dn1 Ds D2 4.6 8 10 न भवेत् (B2 भवेयु॰), M4 भवेद्ध॰ (for भवेद्यत्) D7 सर्वांश्चैव च पार्थिवान् — [c]) T1 महीं (for अह) K5 निर्दहेद्धि मम क्रोध॰ — [d]) M3–5 वनानीव (for तृणा॰)

# १६०

C. 5 5643
B. 5 163. 1
K. 5. 163. 1

संजय उवाच ।
दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभः ।
नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत ॥ १
स केशवमभिप्रेक्ष्य गुडाकेशो महायशाः ।
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ २
स्ववीर्यं यः समाश्रित्य समाह्वयति वै परान् ।
अभीतः पूरयञ्शक्तिं स वै पुरुष उच्यते ॥ ३
परवीर्यं समाश्रित्य यः समाह्वयते परान् ।
क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः ॥ ४
स त्वं परेषां वीर्येण मन्यसे वीर्यमात्मनः ।
स्वयं कापुरुषो मूढः परांश्च क्षेप्तुमिच्छसि ॥ ५
यस्त्वं वृद्धं सर्वराज्ञां हितबुद्धिं जितेन्द्रियम् ।
मरणाय महाबुद्धिं दीक्षयित्वा विकत्थसे ॥ ६
भावस्ते विदितोऽस्माभिर्दुर्बुद्धे कुलपांसन ।
न हनिष्यन्ति गाङ्गेयं पाण्डवा घृणयेति च ॥ ७
यस्य वीर्यं समाश्रित्य धार्तराष्ट्र विकत्थसे ।
हन्तास्मि प्रथमं भीष्मं मिषतां सर्वधन्विनाम् ॥ ८
कैतव्य गत्वा भरतान्समेत्य

---

10 D7 om (hapl) 10 — $^{a}$) K (except K5) D6 10 M3-5 च (for तु) — $^{b}$) N (Dn2 missing) फाल्गुनस्य G2 om (hapl) 10$^{d}$–12$^{a}$ — $^{d}$) K4 5 B Dn1 D5 D4 6 8 10 M3-5 विजितात्मन॰

11 G2 om 11 (cf v l 10) — $^{b}$) T2 G1 5 M यद्वा॰ (for यथा॰) D7 पक्षी भूत्वा मनोभव॰ — $^{d}$) K4 B Dn1 D5 D3.4 6 8 10 पुन॰ (for ऽग्रत)

12 G2 om 12$^{a}$ (cf v l 10) — $^{a}$) K1-3 D1 2 7 तथैव (for यथापि) — $^{b}$) K4 B Dn1 D5 D4 6 8 10 मोघभाषित, G2 मे सुगर्जित K1 2 D2 7 द्रक्ष्यसे वीर्यमू॰ (D2 ॰ग॰)जित — $^{d}$) K1 3 5 D1 2 7 इत्युपधार्यता, K4 B3 5 Dn1 D5 D4 6 8 10 अद्यावधारय, B1 2 4 इत्यवधारय, D3 इत्युपधारय

13 $^{a}$) T1 G5 M त्वा (for त्वा) — $^{c}$) D8 चय (for यमौ) K4 D5 D6 8 10 भीमसेनो न च यमौ — $^{d}$) D1 2 प्रतिकूल प्रभाषितु

Colophon om in D4 T1 G3, Dn2 D5 9 G4 missing — *Sub-parvan* K B Dn1 D5 D2 3 6-8 10 M उलूक(B3 अन्धक)यान — *Adhy name* M भगवद्वाक्य — *Adhy. no* (figures, words or both) D6 52 (=152), T2 M1 2 4 161, G1 163, G2 5 M3 5 162 — *S'loka no.* K5 13, Dn1 61

## 160

☞ In Dn2, stanzas 1–27 are missing (cf v l 5 143 2), the MS is ignored up to st. 27. This whole adhy is missing in D4, the MS is mostly ignored here.

1 $^{a}$) D7 T2 वासुदेवस्य (for दुर्यो॰) — $^{b}$) K1-3 5 D1 स धनजय॰ K4 B D5 D3 6-8 10 T G1.3 भरतर्षभ, D2 स्पितोर्जुन (for भरतर्षभ॰) — $^{c}$) D2 G3 अपि ताम्राभ्या, D3 G1 M1 (*inf lin*) अमिताम्रा॰, G5 M1 5 अतिमात्रा॰

2 $^{b}$) D1 ॰रथ॰, D3 ॰मनाः (for ॰यशा) — $^{c}$) D2 प्रत्य॰ (for अभ्य॰)

3 Before 3, T G1.2 ins अर्जुन. — $^{b}$) D3 G3 पुमान् (for परान्) K5 Dn1 य समाह्वयते प॰ ! — $^{c}$) T1 G3 5 M1 4 (*inf lin*) अमित, Ca d as in text K4 B Ds1 D6 6 8 10 युध्यते (B3 Ds1 मुच्यते) शत्रून् (D8 शक्त्या)

4 $^{c}$) K1-3 D1 2 7 M1 2 अशक्तः सन् (for अशक्त त्वात्) — $^{d}$) K1-3 D1 2 7 स लोके (by transp), Ds2 लोकानां, G3 लोकेषु M3-5 पुरुषोधम॰

5 $^{a}$) D3 संपन्न परवीर्येण — $^{c}$) K4 Dn1 D5 D8 10 स त्वं, B (except B3) यस्त्वं (for स्वय) K2-4 B Dn1 D5 D8 6 10 G3 मूढ — $^{d}$) D5 D10 [आ]क्षेप्तु (for क्षेप्तु) Ds2 G1 अर्हसि (for इच्छसि) K5 परान्क्षेप्तु मिहार्हसि

6 $^{c}$) K4 D3 ॰प्राज्ञ, B Dn1 D5 D6 8 10 ॰प्रज्ञ (for ॰बुद्धिं)

7 $^{a}$) D7 [ऽ]स्माक (for ऽस्माभि) — $^{d}$) K3 5 D1-3 7 इ, K4 B Dn1 D5 D6 8 10 हि (for च) –

9 D1 om 9$^{a}$–10$^{b}$ — $^{ab}$) G3 ins. च after समेत्य M1 5 धार्तराष्ट्रान् (for ॰ष्ट्र) K4 B Dn1 D5 D6.8 10 वदस्व (for ब्रवीहि). D3 ins. (like G3) च after समेत्य, and for धार्तराष्ट्र ब्रवीहि reads वदस्व धार्तराष्ट्रं च मयोक्तानि च यानि वै (turning 9$^{ab}$ into an anustubh stanza),

सुयोधनं धार्तराष्ट्रं ब्रवीहि ।
तथेत्याह *अर्जुनः सव्यसाची
निशाव्यपाये भविता विमर्दः ॥ ९
यद्वोऽब्रवीद्वाक्यमदीनसत्त्वो
मध्ये कुरूणां हर्षयन्सत्यसंधः ।
अहं हन्ता पाण्डवानामनीकं
शाल्वेयकांश्चेति ममैष भारः ॥ १०
हन्यामहं द्रोणमृते हि लोकं
न ते भयं विद्यते पाण्डवेभ्यः ।
ततो हि ते लब्धतमं च राज्यं
क्षयं गताः पाण्डवाश्चेति भावः ॥ ११
स दर्पपूर्णो न समीक्षसे त्व-
मनर्थमात्मन्यपि वर्तमानम् ।
तस्मादहं ते प्रथमं समूहे
हन्ता समक्षं कुरुवृद्धमेव ॥ १२
सूर्योदये युक्तसेनः प्रतीक्ष्य
ध्वजी रथी रक्ष च सत्यसंधम् ।
अहं हि वः पश्यतां द्वीपमेनं
रथाद्भीष्मं पातयितास्मि बाणैः ॥ १३
श्वोभूते कत्थनावाक्यं विज्ञास्यति सुयोधनः ।
अर्दितं शरजालेन मया दृष्ट्वा पितामहम् ॥ १४
यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शनः ।
क्रुद्धेन भीमसेनेन भ्राता दुःशासनस्तव ॥ १५
अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसकृत् ।
सत्यां प्रतिज्ञां नचिराद्द्रक्ष्यसे तां सुयोधन ॥ १६
अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा ।

C. 5. 5639
B. 5. 163. 17
K. 5. 163 17

---

— [c]) K1–3 5 रथीति त्वाहार्जुन , K4 B Dn1 Ds D3 6 8 10 तथेत्युवाचा°, D2 T2 G2 5 M1 3–5 तथे(G3 °ते)ति त्वाहा°, D7 तथेत्याह त्वामर्जुन°, T1 G1 2 (catalectic!) तथेत्याहार्जुन°, M2 (hypermetric!) तथेति गत्वाहा° (for तथेत्याह *अर्जुन°)

10 D1 om $10^{ab}$ (cf v l 9) — [a]) K4 T1 G3 5 M2 4 (*inf lin*) यत्त्वा°, B (except B2) D4 T2 G1. 2 M1. 3–5 Ca यद्वा°, D2 यथा°, D3 अथा° (for यद्वो°) — [b]) K4 B Dn1 Ds D3 6 8 10 G1 कुरून् (for कुरूणां) — [c]) K4 B Dn1 Ds D3 6 8 10 सृञ्जयानाम्, D1 कौरवाणाम् (for पाण्डवानाम्) — [d]) K3. 5 D2 S सात्यकेयकांश्चेति, D3 शात्वेयकानां च K4 B1–3 D6 8 10 M3–5 चैव (for चेति) — After 10, B Ds D10 *repeat* $9^{ab}$ (v l वदस्व for ब्रवीहि)

11 [a]) K3 5 पार्थं, Ca d s द्रोण (as in text) K4 B Dn1 Ds D3 6 8 10 Ca d s [ऽ]पि, K5 तु (for हि) M2 4 5 लोकान् (for लोकं) — [c]) K1 हृ ते, D1. 2 [ऽ]पि ते, Ds [ऽ]धि ते (for हि ते) Ca d cite अधि K (except K4) लब्धमिदं, D2 °मेतद्, D3 लभ्यमिदं, T2 G1. 2 लब्धमदग्, G5 M1 °मतम् (for °तम) D2 7 8 हि, G3 न (for च) — [d]) K अस्त्र (K5 व्यय) गता , B Dn1 Ds D3 6 8 10 आपद्गता , D1 वय गता (for क्षयं गता°) T2 G1 2 सोमकाश्च (for चेति भाव )

12 [b]) K4 D6 8 ह्यनर्थम्, B3 Ds D10 समर्थम् (for अनर्थम्) K (except K4) D1. 2 7 अभि; S अथ (for अपि) — [c]) M1 2 अमु (for अहं) K3 D7 त (for ते)

13 [a]) K (except K4) °मना°, D8 °मेना° (for °सेन°) K2 D2 S प्रतीक्ष, K3 समीक्षन, K5 प्रतीक्षन् (for प्रतीक्ष्य) — [b]) D8 रथी ध्वजी (by transp ) K1 3 4 B Ds D1 3 7 10 रक्षत (for रक्ष च) — [c]) D1 भीमसेन, S वै समक्ष (for द्वीपमेनं) — [d]) K4 B Dn1 Ds D6 8 10 transp रथात् and भीष्म, and read पातयिष्यामि (for °तास्मि)

14 [a]) S कथित (for कत्थना°) — [b]) D10 विज्ञास्यसि सुयोधन — G3 M4 om. (hapl.) $14^{c}$–$16^{d}$ — [c]) K1 2 मर्दितं, K4 B Ds D3 6 8 10 G5 आचितं, Dn1 आधितं, T अर्चितं, G1 M (M4 om ) अर्पितं, G2 मूर्छितं — D7 om (hapl ) $14^{d}$–$15^{c}$

15 G3 M4 om 15, D7 om. $15^{abc}$ (cf v l 14) — [a]) K4 B2 4 D7 8 यदुक्त K3 D1 2 तु (for च) — [d]) Ds वृद्धातिक्रमणस्य च (= $18^{d}$), M (M4 om ) राजा दुर्योधनस्तव

16 G3 M4 om 16 (cf v l. 14) — [b]) B (except B5) °वत्, D3 °वित् (for °कृत्) — [c]) K4 B Dn1 Ds D1. 3 6–8 10 अचिराद्, G1 त्वचिराद् (for नचिराद्) — [d]) K (except K4) D1 2 7 द्रक्ष्यसि, S (G3 M4 om ) °ता (for °से) K (except K4) B1–3 D1–3 7 10 त्वं, S (G3 M4 om ) म (for तां) S (G3 M4 om ) सुयोधन°

17 [a]) Dn1 D1 7 S (except T1 G3) अति°, Ca d s

C. 5. 3570
P. 5. 162. 17
K. 5. 163. 17

नैष्ठुर्यस्यावलेपस्य आत्मसंभावनस्य च ॥ १७
नृशंसतायास्तैक्ष्ण्यस्य धर्मविद्वेषणस्य च ।
अधर्मस्यातिवादस्य वृद्धातिक्रमणस्य च ॥ १८
दर्शनस्य च वक्रस्य कृत्स्नस्यापनयस्य च ।
द्रक्ष्यसि त्वं फलं तीव्रमचिरेण सुयोधन ॥ १९
वासुदेवद्वितीये हि मयि क्रुद्धे नराधिप ।
आशा ते जीविते मूढ राज्ये वा केन हेतुना ॥ २०
शान्ते भीष्मे तथा द्रोणे सूतपुत्रे च पातिते ।
निराशो जीविते राज्ये पुत्रेषु च भविष्यसि ॥ २१
भ्रातॄणां निधनं दृष्ट्वा पुत्राणां च सुयोधन ।
भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि ॥ २२
न द्वितीयां प्रतिज्ञां हि प्रतिज्ञास्यति केशवः ।
सत्यं ब्रवीम्यहं ह्येतत्सर्वं सत्यं भविष्यति ॥ २३
इत्युक्तः कैतवो राजंस्तद्वाक्यमुपधार्य च ।
अनुज्ञातो निववृते पुनरेव यथागतम् ॥ २४
उपावृत्य तु पाण्डुभ्यः कैतव्यो धृतराष्ट्रजम् ।
गत्वा यथोक्तं तत्सर्वमुवाच कुरुसंसदि ॥ २५
केशवार्जुनयोर्वाक्यं निशम्य भरतर्षभः ।
दुःशासनं च कर्णं च शकुनिं चाभ्यभाषत ॥ २६
आज्ञापयत राज्ञश्च बलं मित्रबलं तथा ।

---

असि° (as in text). — b) K4 D6 °नरस्यैस्य; D8 निष्ठुरस्य; C8 °नैष्ठुर्यस्य (as in text). Ca cites नैष्ठुर्य. — d) K (except K4) ins. [अ]पि; G1 स्व; G3 हि, M2-6 [अ]थ before आत्म (to avoid the hiatus!) K6 °सन्मानस्य; D8.7 T1 °सभाजितस्य; Ca d.s °संभावनस्य (as in text). — After 17, D2 reads 19ab

18 D3 om. (hapl.) 18ab. — a) Some MSS. तैक्ष्णस्य; Ca d.s as in text. — c) K4 Dn1 D8 D6.8.10 S (except M1) अपवाद(T2 °वाद)स्य; B1 अवर्गपस्य; D2.3 अतिवादस्य; Ca d.s अतिवादस्य (as in text). — d) D1 धर्मांति°.

19 For D2 cf. v.l. 17. — a) D1 °दर्पणस्य (for दर्श°). K3.4 B (except B6) Dn1 D1.3.6.9 °दस्य; D8 वक्र°; D2 कृत्स्न°, Cd.s चक्र° (as in text). — b) S धैर्य° (for कृत्स्न°). K2 D2 अन्य°; D8 पुरा° (for अप°). — c) D8 D10 द्रक्ष्यसे. T1 G3 तीव्रम् (for तीव्रम).

20 G3 om. 20a, K1 om. 20ab. — a) K6 D1.3 त्वं; D7 च; S (G3 om.) तु (for हि). — b) K3-6 B (except B3) Dn1 D8 D2.6.7.10 नराधम; T2 G2.3.6 जनाधिप (for नरा°). — c) K1 न; K3.6 D1.7 °वान्; D2 वा (for ते).

22 K1 om. (hapl.) 22. — a) K3.4 B3-6 Dn1 D8 D2.6.8.10 श्रुत्वा (for दृष्ट्वा).

23 a) M6 च (for हि). — b) K4 B Dn1 D8 D2.6.8.10 प्रतिजानामि केशव; T G1.2.6 °ज्ञास्यति पाण्डवा. — c) K3 G1 न द्वां (for सत्यं). — d) S (except T G3) सत्यं सर्वं (by transp.). — After 23, K4 B Dn1 D8 D2.6-8.10 (most of which MSS. om. 24-25) ins. a passage given in App. I (No. 13).

24 K4 B Dn1 D8 D6.10 om. 24-25. — D2 reads line 24ab and D2 reads stanza 24 after line 56 of passage No. 13 of App. I (cf. v.l. 23). — a) G3 इत्युक्त्वा (for इत्युक्तः). K6 D2 S वाक्यं; D1 राजा (for राजन्). — b) T1 G3 यथोक्तम् (for °द्वाक्यम्). D1 उपधार्य; D2 उपधार्य तत्; T G2.6 अवधार्य च. — D3 reads 24c-25b after line 61 of passage No. 13 of App. I (cf. v.l. 23). — d) T1 यथागत (for °गतम्).

25 K4 B Dn1 D8 D6.10 om. 25 (cf. v.l. 24), D2 also om. 25, but cf. 563*. For sequence of D3 cf. v.l. 24. — ab) K3 उप°; T2 अपा° (for उपा°). M2-6 च (for तु). D3 S transp. पाण्डुभ्यः and कैतव्य. D1 उपावृत्यास्तु पाण्डुभ्यः कैतव्या धृतराष्ट्रजा; D2.7 उपावृत्ते तु पाण्डुभ्यः कैतव्ये धृतराष्ट्रज. — K3 D1-3.7 om. 25cd. — cd) T यत्र सर्वं (for तत्सर्वं). K1.2.6 सर्वं मध्यापयामास यदुक्तं (K6 यदुक्तं) पार्थकृष्णयोः.

26 Before 26, T1 G3 M ins. वैश° T2 G1.2.6 संजयः. — a) D8 कैतव्यस्य तु तद्वाक्यं (see below). — After 26a, K4 B Dn1 D3.6.8.10 ins.

563* यथोक्तं सर्वमब्रवीत् ।
कैतव्यस्य तु तद्वाक्यं.

— b) K1.2.6 निशाम्य. K (except K4) B3.4 Dn1 D8 D1-3.6-8 T2 G M3 भरतर्षभ. — c) T2 G3.5.6 शकुनिं (for कर्णं च); see below. — d) K1-3 D1 सौबलं; T2 G3.5.6 कर्णं च (for शकुनिं); see above. K4 B Dn1 D8 D3.6.8.10 चापि भारत, T2 G2.3.6 समभाषत (for चाभ्य°)

27 a) K6 राज्ञो (for राज्ञ). — c) K (except K4) D1.2 उदग्रं (for उदग्राः). K4 B Dn1 D8 D6.8.10 सर्वं; D1 सर्वे (for सर्वा). — d) D1 युक्तं; D7 T2 यथा (for

यथा प्रागुदयात्सर्वा युक्ता तिष्ठत्यनीकिनी ॥ २७
ततः कर्णसमादिष्टा दूताः प्रत्वरिता रथैः ।
उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः ॥ २८
तूर्णं परिययुः सेनां कृत्स्नां कर्णस्य शासनात् ।
आज्ञापयन्तो राज्ञस्तान्योगः प्रागुदयादिति ॥ २९

इति श्रीमहाभारते उद्योगपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥ समाप्तमुलूकयानपर्व ॥

# १६१

संजय उवाच ।
उलूकस्य वचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
सेनां निर्यापयामास धृष्टद्युम्नपुरोगमाम् ॥ १
पदातिनीं नागवतीं रथिनीमश्ववृन्दिनीम् ।
चतुर्विधबलां भीमामकम्प्यां पृथिवीमिव ॥ २
भीमसेनादिभिर्गुप्तां सार्जुनैश्च महारथैः ।
धृष्टद्युम्नवशां दुर्गां सागरस्तिमितोपमाम् ॥ ३
तस्यास्त्वग्रे महेष्वासः पाञ्चाल्यो युद्धदुर्मदः ।
द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नः प्रकर्षति ॥ ४
यथाबलं यथोत्साहं रथिनः समुपादिशत् ।
अर्जुनं सूतपुत्राय भीमं दुर्योधनाय च ॥ ५
अश्वत्थाम्ने च नकुलं शैब्यं च कृतवर्मणे ।
सैन्धवाय च वार्ष्णेयं युयुधानमुपादिशत् ॥ ६
शिखण्डिनं च भीष्माय प्रमुखे समकल्पयत् ।
सहदेवं शकुनये चेकितानं शलाय च ॥ ७
धृष्टकेतुं च शल्याय गौतमायोत्तमौजसम् ।

C. 5. 5707
B. 5. 164. 6
K. 5. 164. 6

---

युक्ता) K4 B Dn1 Ds D6 8 10 युक्तास्तिष्ठत्य(D6 °स्त्व)नीकिन°

28 Dn2 resumes! — a) K1 तु ते (for कर्ण-) — b) K1. 2 4 B Dn Ds D3 6 8 10 स° (for प्र°) — c) G3 °वाजिभि, M (except M1) °वाहीभि°, Ca °वामीभि° (as in text) Cd.s cite उष्ट्रवामी — d) Ds °भुजै°, G2 M1. 2 °बलैः (for °जवै°)

29 ab) M3-5 पर्याययु (for परि°) Ds D8 10 सेना° कृत्स्ना, S सेना पूर्णा (G5 सेना पूर्णा) — c) K4. 5 B2 Ds D7 8 10 आज्ञापयत K4 B (except B2) Dn Ds D6 8 10 च (for तान्)

Colophon D4. 5. 9 G4 missing — *Sub-parvan* K B Dn Ds D2 6-8 10 G5 M1. 2 उलूक(B3 अन्धक)यान, followed by समाप्त (B1. 2 om. समाप्त) — *Adhy name* D3 उलूकापयान, T1 M उलूकप्रतियान — *Adhy no* (figures, words or both) D6 53 (=153), T1 G1. 2 5 M3 5 163, T2 M1. 2 4 162, G3 160 — *S'loka no* K5 29, Dn 56

## 161

1 D4 missing (cf v l 5 160 1) M1. 2 वैश° (for संजय उ°) — c) K B1-3 Ds D6-8 10 M3-5 निर्यातयामास

2 D4 missing (cf v l 1) — a) T2 G1 2 पताकिनीं (for पदा°) M1 2 अश्ववृन्दीं (for नाग°) — b) M1 2 रथनागकुलाकुलां — c) K1-3 D1-3 7 चतुर्विधा भीमबलां — d) K3 4 B1 3 4 D (except D7 10, D4 missing) अकपा

4 D4 missing (cf v l 1) — a) T2 G2 ततस् (for तस्यास्) — c) K4 D2 8 द्रोण प्रेप्सुर् — d) K4 5 B D (except D1 2, D4 missing) व्यकर्षत (for प्रक°)

5 D4 missing (cf v.l 1) — b) K1 2 राजन्यान्, D7 राजान (for रथिन°) K5 T2 G2 5 समुपादिशन्; D7 M3 °विशन्, T1 M4 5 °विशत् — D1 om (hapl) 5c-6d — After 5, K4 B Dn Ds D6 10 read 8ab

6 D4 missing (cf v l 1) D1 om 6 (cf v l 5) — b) D3 माद्रेय (for शैब्य च) — d) K4 5 B D (except D7, D1 om, D4 missing) समादिशत् (for उपा°) G3 युद्धाय समुपाविशत्

7 D4 missing (cf v l. 1) — b) D3 हृतार म ममादिशत्, T1 प्रमुखे समुपादिशत्

8 D4 missing (cf. v l 1) K4 B Dn Ds D6 10 read 8ab after 5 — a) S (except M1 2) शैल्याय (for शल्याय) — c) K4 B D (except D1. 2 7, D4 missing) तथा पच, T2 G2 5 च पाचाल्य° (for च पञ्चस्य°) — d) K3 5 D2 8 M2 समादधत्

9 D4 resumes with सौभद्र (cf v l 1) — b) G3

C. 5. 5709 B 5. 164. 8 K 5. 164. 8

द्रौपदेयांश्च पञ्चभ्यस्त्रिगर्तेभ्यः समादिशत् ॥ ८
वृषसेनाय सौभद्रं शेषाणां च महीक्षिताम् ।
समर्थं तं हि मेने वै पार्थादभ्यधिकं रणे ॥ ९
एवं विभज्य योधांस्तान्पृथक्च सह चैव ह ।
ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत् ॥ १०
धृष्टद्युम्नो महेष्वासः सेनापतिपतिस्ततः ।
विधिवद्व्यूह्य मेधावी युद्धाय धृतमानसः ॥ ११
यथादिष्टान्यनीकानि पाण्डवानामयोजयत् ।
जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे ॥ १२

इति श्रीमहाभारते उद्योगपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

# १६२

धृतराष्ट्र उवाच ।
प्रतिज्ञाते फल्गुनेन वधे भीष्मस्य संजय ।
किमकुर्वन्त मे मन्दाः पुत्रा दुर्योधनादयः ॥ १
हतमेव हि पश्यामि गाङ्गेयं पितरं रणे ।
वासुदेवसहायेन पार्थेन दृढधन्वना ॥ २
स चापरिमितप्रज्ञस्तच्छ्रुत्वा पार्थभाषितम् ।
किमुक्तवान्महेष्वासो भीष्मः प्रहरतां वरः ॥ ३
सेनापत्यं च संप्राप्य कौरवाणां धुरंधरः ।
किमचेष्टत गाङ्गेयो महाबुद्धिपराक्रमः ॥ ४
वैशंपायन उवाच ।
ततस्तत्संजयस्तस्मै सर्वमेव न्यवेदयत् ।
यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ५
संजय उवाच ।
सेनापत्यमनुप्राप्य भीष्मः शांतनवो नृप ।
दुर्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ६
नमस्कृत्वा कुमाराय सेनान्ये शक्तिपाणये ।

---

सर्वेषा (for शेषाणां) — $^{c}$) D8 स समर्थं (for समर्थं त) K1 न, B2 तु; D6 य (for त) B1 3 4 Dn स समर्थं हि त मेने.

10 $^{a}$) D8 सर्वान्, G1. 5 M3-5 योधान् — $^{b}$) D10 पावकि' (for चैव ह) K1 2 5 D2 पृथक्पृथगनेकश'; K3 पृथक्पृथक्सहैव च, D1 T1 G1 पृथक्चैव सहैव च, T1 G2 पृथक्च (G2 °क्त्वं) सहसैव च — $^{c}$) D2 6 महेष्वास (for °सो)

11 G2 om 11$^{ab}$ — $^{c}$) G2 पांचाल्य (for मेधावी) — $^{d}$) T2 यतमानस , G8 [उ]द्यत°

12 $^{a}$) K3-5 B Dn D8 D3 4 6 7 10 यथोद्दिष्टानि, D1 S यथा दृष्टानि K4 B D (except D1. 2) सैन्यानि (for [अ]नीका°)

Colophon D5 9 G4 missing — *Adhy name* K1 2 T1 सेनानिर्याण, K3 सेनानिर्याणयात्रा, D1 व्यूहकल्पनं, D3 4 सेनापतिनियोग', D8 पाडवसेनानिवेश , G5 M पाडवसेनानिर्याण — *Adhy no* (figures, words or both) D6 54 (=154), T1 G1 2 5 M3 5 164, T2 M1 2 4 163, G3 161. — *S'loka no* · K5 Dn 12

**162**

1 After the ref, G3 *repeats* 5 160 14$^{c}$–16$^{d}$ — $^{a}$) N फाल्गुनेन — $^{b}$) Dn सयुगे (for सजय) — $^{cd}$) B (except B3) Dn D8 D1. 3. 4 T G3 अकुर्वत D3 4 transp मन्दा' and पुत्रा

2 $^{b}$) T2 G2 5 भीष्म निपतितं रणे — $^{d}$) K1 2 D7 G1. 2 5 दृढधन्विना, K3 °मन्युना

3 $^{b}$) G1 (by transp ) श्रुत्वा तत् K4 D6 8 प्राज्ञभाषित T1 श्रुत्वा पार्थस्य भाषित — $^{c}$) K5 महाभाग' (for महे°)

4 $^{a}$) B D8 D3 4 6 T1 सैना° (for सेना°) D2 अनु' (for च स°) — $^{b}$) G5 धनुर्धर (for धुर°)

5 G3 M3-5 om the ref — $^{a}$) D7 त, M1 तु (for तत्) — $^{b}$) T1 एवं, T2 G2 5 M1 2 एतन् (for एव) — $^{c}$) D7 कुरुमुख्येन

6 $^{a}$) K3 4 B Dn1 D8 D3 4 6 T1 सैना° (for सेना°) B3 स म° (for अनु°) — $^{b}$) K2 D2 7 G2 M1 नृप' (for नृप)

7 $^{a}$) K (except K4) B5 D8 D1 2 T2 G1 5 नमस्कृत्य — $^{b}$) G1 3 5 सेनान्यै -(for °न्ये). — $^{c}$) K1 2 5 B2 D1 2 7 तुभ्य (for तेऽद्य)

अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः ॥ ७
सेनाकर्मण्यभिज्ञोऽस्मि व्यूहेषु विविधेषु च ।
कर्म कारयितुं चैव भृतानप्यभृतांस्तथा ॥ ८
यात्रायानेषु युद्धेषु लब्धप्रशमनेषु च ।
भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ९
व्यूहानपि महारम्भान्दैवगान्धर्वमानुषान् ।
तैरहं मोहयिष्यामि पाण्डवान्व्येतु ते ज्वरः ॥ १०
सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम् ।
यथावच्छास्त्रतो राजन्व्येतु ते मानसो ज्वरः ॥ ११

दुर्योधन उवाच ।

न विद्यते मे गाङ्गेय भयं देवासुरेष्वपि ।
समस्तेषु महाबाहो सत्यमेतद्ब्रवीमि ते ॥ १२
किं पुनस्त्वयि दुर्धर्षे सैनापत्ये व्यवस्थिते ।
द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि ॥ १३
भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम ।
न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ १४
रथसंख्यां तु कार्त्स्न्येन परेषामात्मनस्तथा ।
तथैवातिरथानां च वेत्तुमिच्छामि कौरव ॥ १५
पितामहो हि कुशलः परेषामात्मनस्तथा ।
श्रोतुमिच्छाम्यहं सर्वैः सहैभिर्वसुधाधिपैः ॥ १६

भीष्म उवाच ।

गान्धारे शृणु राजेन्द्र रथसंख्यां स्वके बले ।
ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ १७
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
रथानां तव सेनायां यथामुख्यं तु मे शृणु ॥ १८
भवानग्रे रथोदारः सह सर्वैः सहोदरैः ।
दुःशासनप्रभृतिभिर्भ्रातृभिः शतसंमितैः ॥ १९
सर्वे कृतप्रहरणाश्छेद्यभेद्यविशारदाः ।
रथोपस्थे गजस्कन्धे गदायुद्धेऽसिचर्मणि ॥ २०
संयन्तारः प्रहर्तारः कृतास्त्रा भारसाधनाः ।

---

8 ᶜ) K₈ शक्तः (for चैव) — ᵈ) K D₂ ₄ ₈ भृत्यान, Ca d s भृतान् (as in text) B₂ भृतेनाप्य भृतेन च

9 ᵃ) K₄ B D यात्रायाने च युद्धे च Ca d s cite यात्रायाने — ᵇ) K₄ B₃₋₄ D (except D₁ ₂ ₇) तथा; G₃ युद्ध- (for लब्ध-) Ca d s cite लब्धप्रशमन

10 D₅ om. 10ᵃᵇ — ᵃ) K₁ ₂ ₈ महा(K₃ °मा)रभान्, S महाभाग (for महार°) K₄ B Dn D₁ ₂ ₄ ₆ ₈ ₁₀ व्यूहाना च समारभान — ᵇ) K₁ ₂ वेद गाधर्व°, K₂ ₄ Dn D₁ ₁₀ T दैवगधर्व°; D₅ दैवगाधर्व°, D₁ ₂ G M दैवगधर्व° — ᶜ) K₁₋₃ योध° (for मोह°) — ᵈ) M (except M₂) स्थैतु K₂ G₁ M₃₋₅ भय (for ज्वर°) T₁ पाण्डवार्थं तु ते ज्वरः

11 D₅₂ D₅ om (hapl) 11 — ᵃ) K सत्येन, M₁ ₂ यत्ते (for तत्त्वे) — G₂ om 11ᶜᵈ — ᵈ) T₁ M (except M₂) स्थेतु, Ca स्थेतु (as in text)

12 ᵃ) K₄ B D (except D₁ ₂ ₇) विद्यते मे न गाङ्गेय — ᶜ) T₂ G₂ समुत्सेषु (for समस्ते°)

13 ᵇ) K₄ B D₅ D₂ ₄ ₆ T₁ सेना° (for सैना°) D₁ प्रतिष्ठिते (for व्यव°)

14 ᵃ) D₅ T₁ G₂ पुरुषाभ्यामभ्यां; K₄ पुरुषाभ्यां च — ᵇ) K₄ D₂ ₄ T₁ M स्थिते, G₃ हि जये (for विजयो) G अजेयाभ्यां जयो मम

15 ᵃ) K₄ Dn₁ D₁ M₄ रथसंख्या; Ca as in text — 15ᵇ = 16ᵇ — K₃ T₁ om (hapl) 15ᶜ–16ᵇ — ᵈ) K₁ ₂ D₁ ₄ ₇ श्रोतुम् (for वेत्तुम्)

16 K₂ T₁ om 16ᵃᵇ (cf v l 15) — ᵃ) D₄ पितामह D₅ [illegible], S (except G₁, T₁ om) [illegible] (for हि) — ᵇ) = 15ᵇ D₄ सर्वेषाम् (for परेषाम्) — ᶜ) K₁₋₃ सर्वं (for सर्वैः)

17 ᵇ) D₂ ₄ च ते (for स्वके) — ᶜ) Dn₁ D₃₋₄ ₆ ₇ G₂ पृथिवीपाला

18 18ᵃᵇ = (var) 1 31 18ᵃᵇ, 5 [illegible] — ᵃ) D₁₀ तु, M₁ ₂ हि (for [इ]ह) Dn₁ [illegible], G बहूनि रथसंख्यानि — ᵈ) K₄ G₁ M₁ ([illegible]) ₂₋₃ यथामुख्यान, T₁ G₃ यथास्थान, G₄ M₁ यथासंख्यं

19 ᵃ) D₂ ₄ अपि (for अग्रे) — ᵈ) K₃ D₁ [illegible], K₄ ₅ Dn₁ D₂ ₆ सह सर्वैः; D₁ ₄ T G सह सर्वैः, G₃ सह सर्वैः, Ca as in text

20 ᵇ) K₂ B₁ ₃ Dn D₂ ₄ [illegible] — ᵈ) K₄ I D (except D₄ Dn₁ ₂) [illegible]

21 ᵃ) M₄₋₅ नियन्तारः; C [illegible] ([illegible]) D₂ ₄ [illegible] (for प्र°) — ᵇ) [illegible] [illegible] [illegible] ([illegible]) — ᶜ) K₁ ₂ ते (for च) — ᵈ) K [illegible] ([illegible])

C. 5. 5734
B. 5. 165. 21
K. 5. 165. 21

इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ २१
एते हनिष्यन्ति रणे पाञ्चालान्युद्धदुर्मदान् ।
कृतकिल्बिषाः पाण्डवेयैर्धार्तराष्ट्रा मनस्विनः ॥ २२
ततोऽहं भरतश्रेष्ठ सर्वसेनापतिस्तव ।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ।
न त्वात्मनो गुणान्वक्तुमर्हामि विदितोऽस्मि ते ॥ २३
कृतवर्मा त्वतिरथो भोजः प्रहरतां वरः ।
अर्थसिद्धिं तव रणे करिष्यति न संशयः ॥ २४
अस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः ।
हनिष्यति रिपूंस्तुभ्यं महेन्द्रो दानवानिव ॥ २५
मद्रराजो महेष्वासः शल्यो मेऽतिरथो मतः ।
स्पर्धते वासुदेवेन यो वै नित्यं रणे रणे ॥ २६
भागिनेयान्निजांस्त्यक्त्वा शल्यस्ते रथसत्तमः ।
एष योत्स्यति संग्रामे कृष्णं चक्रगदाधरम् ॥ २७
सागरोर्मिसमैर्वेगैः प्लावयन्निव शात्रवान् ।
भूरिश्रवाः कृतास्त्रश्च तव चापि हितः सुहृत् ॥ २८
सौमदत्तिर्महेष्वासो रथयूथपयूथपः ।
बलक्षयममित्राणां सुमहान्तं करिष्यति ॥ २९
सिन्धुराजो महाराज मतो मे द्विगुणो रथः ।
योत्स्यते समरे राजन्विक्रान्तो रथसत्तमः ॥ ३०
द्रौपदीहरणे पूर्वं परिक्लिष्टः स पाण्डवैः ।
संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा ॥ ३१
एतेन हि तदा राजंस्तप आस्थाय दारुणम् ।
सुदुर्लभो वरो लब्धः पाण्डवान्योद्धुमाहवे ॥ ३२
स एष रथशार्दूलस्तद्वैरं संस्मरन्रणे ।
योत्स्यते पांडवांस्तात प्राणांस्त्यक्त्वा सुदुस्त्यजान् ३३

इति श्रीमहाभारते उद्योगपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

---

22 $^{b}$) $K_5$ B $D_{2-4}$ $T_2$ $G_{1.2}$ पचालान् — $^{c}$) Hypermetric! $K_1$ सकिल्बिषा , $K_3$ कृतवैरा, $T_2$ कृतपुण्या (for कृतकि°)

23 $^{a}$) $K_4$ B D (except $D_{1-4}$) $T_2$ तथा (for ततो) — $^{d}$) Dn $Ds_2$ कदर्थीकृत; Ca d as in text — $^{e}$) $K_4$ $D_{3\ 4\ 6\ 8}$ हि (for तु)

24 $^{a}$) $D_{3\ 4}$ [अ]पि (for तु) — $^{b}$) $K_4$ B D (except $D_{1-4\ 7}$) शस्त्रभृता (for प्रहरता)

25 $^{a}$) $K_{1.3\ 4}$ B Dn $D_{1.3\ 4\ 10}$ शस्त्रविद्भिर् ($Dn_1$ °वेदिर्), Ds $D_{6\ 8}$ शस्त्रवद्भिर् — $^{b}$) $K_{1.2}$ $D_7$ दूरापाती, $G_{1\ 3}$ दूरवेधी — $^{c}$) $K_4$ B D (except $D_{1\ 2\ 7}$) चमूं तेषां (for रिपूंस्तुभ्यं) Cd s cite तुभ्यं (as in text) $K_6$ ते स, $T_1$ $G_3$ तेग्रान्, $T_2$ M तेऽयान्, $G_{1.2\ 5}$ तेऽग्य° (for तुभ्यं)

26 $^{b}$) $K_1$ शल्यो अति°; Ds तुभ्यं सोति° — $^{c}$) $D_1$ वासुदेवस्य — $^{d}$) $K_4$ B Dn Ds $D_{3\ 4\ 6-8\ 10}$ नित्य यो वै (by transp ), $D_1$ योसौ नित्यं

27 $^{b}$) $K_4$ B Dn Ds $D_{6\ 8\ 10}$ शल्यस्तेतिरथो मत° ($K_4$ $B_{1\ 2.4\ 5}$ °योत्तम ), $D_{3\ 4}$ शल्यस्ते राजसत्तम — $^{d}$) K (except $K_6$) Dn $D_{1.2\ 6}$ पाडवाश्च ($K_{1\ 2\ 5}$ °वान्सु; $D_2$ °वास्तु) महारथान्

28 $^{a}$) $K_4$ B D (except $D_{1-4}$) $M_1$ (*inf lin* ) बाणै (for वेगै°) — $^{b}$) $K_{2\ 5}$ $D_1$ $G_5$ प्रहरन्, $K_3$ $D_{2\ 7}$ प्रदहन्, S प्रहसन् (for प्लाव°) — $^{d}$) $K_3$ तवापि च, $M_{3-5}$ तव चाभि°

29 $^{a}$) $K_{1-3}$ $Dn_2$ $D_3$ $T_2$ $G_5$ $M_2$ सोम° (for सौम°) — $^{b}$) $K_{1\ 2}$ रथावान्रथयूथपः — $^{d}$) S (except $T_1$ $M_2$) सुमहत्ते (for °हान्त)

30 $^{a}$) $D_{3\ 4}$ महातेजा° (for °राज) — $T_2$ om (hapl ) $30^{b}$–$32^{a}$ — $^{b}$) $B_2$ [ऽ]ति° (for द्वि°) — $^{c}$) $K_{1-3}$ $D_{2\ 7}$ तात (for राजन्) — $^{d}$) $D_1$ रथयूथप°, $G_3$ °वित्तम°

31 $T_2$ om 31 (cf. v l 30) — $^{a}$) $M_{3-5}$ द्रौपद्या हरणे $K_4$ B D (except $D_{2-4.7}$) $M_1$ राजन् (for पूर्वं) — $^{b}$) $K_{3.4}$ B D (except $D_{2\ 7}$) च (for स) $G_{2\ 3}$ वार्धैर्° (for पाण्डवै ) — $G_3$ om $31^{c}$–$33^{b}$ — $^{c}$) $K_5$ तान्, $D_{3.4}$ स, $D_7$ च (for स) $K_5$ परिक्लेशान्

32 $G_3$ om. 32 (cf v l 31), $T_2$ om $32^{a}$ (cf v l 30) — $^{a}$) $D_{3\ 4}$ पुरा, $D_7$ त्वया, $T_1$ महा°, $G_{1.2}$ तथा (for तदा) — $^{d}$) T $G_{1.2\ 5}$ अर्हति (for आहवे)

33 $G_3$ om $33^{ab}$ (cf v l 31) — $^{a}$) $M_1$ नर° (for रथ°) — $^{b}$) $K_{1\ 2}$ $D_2$ $G_5$ वर (for वैर) — In $D_4$, the portion from ते in $33^{c}$ up to तु in $1^{a}$ of adhy 163 is lost — $^{c}$) $K_{1.4}$ B Dn Ds $D_{3\ 6\ 8.10}$ $G_5$ $M_5$ पाडवैस्तात

Colophon. $D_{4\ 5\ 9}$ $G_4$ missing — *Sub-parvan* $K_{1.3.5}$ B Dn Ds $D_{1-3\ 6\ 8\ 10}$ $M_1$ रथातिरथसंख्या ($M_1$ °स्थान), $K_2$ $D_7$ $T_1$ $M_{2-5}$ रथसंख्या ($T_1$ °स्थान),

# १६३

भीष्म उवाच ।
सुदक्षिणस्तु काम्बोजो रथ एकगुणो मतः ।
तवार्थसिद्धिमाकाङ्क्षन्योत्स्यते समरे परैः ॥ १
एतस्य रथसिंहस्य तवार्थे राजसत्तम ।
पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि ॥ २
एतस्य रथवंशो हि तिग्मवेगप्रहारिणाम् ।
काम्बोजानां महाराज शलभानामिवायतिः ॥ ३
नीलो माहिष्मतीवासी नीलवर्मधरस्तव ।
रथवंशेन शत्रूणां कदनं वै करिष्यति ॥ ४
कृतवैरः पुरा चैव सहदेवेन पार्थिवः ।
योत्स्यते सततं राजंस्तवार्थे कुरुसत्तम ॥ ५
विन्दानुविन्दावावन्त्यौ समेतौ रथसत्तमौ ।
कृतिनौ समरे तात दृढवीर्यपराक्रमौ ॥ ६
एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः ।
गदाप्रासासिनाराचैस्तोमरैश्च भुजच्युतैः ॥ ७
युद्धाभिकामौ समरे क्रीडन्ताविव यूथपौ ।
यूथमध्ये महाराज विचरन्तौ कृतान्तवत् ॥ ८
त्रिगर्ता भ्रातरः पञ्च रथोदारा मता मम ।
कृतवैराश्च पार्थेन विराटनगरे तदा ॥ ९
मकरा इव राजेन्द्र समुद्धततरङ्गिणीम् ।

C. 5. 5757
B. 5. 163. 10
K. 5. 170. 10

---

$G_5$ कुम्बलरथसंख्यान — *Adhy name* M (except $M_1$) अतिरथकथन — *Adhy no* (figures, words or both) $D_6$ 55 (=155), $T_1$ $G_{1.2.5}$ $M_{3.5}$ 165, $T_2$ $M_{1.2.4}$ 164, $G_3$ 162 — *S'loka no* $K_5$ 33, Dn 32

## 163

1 In $D_4$, the words सुदक्षिणस्तु are lost (cf v l 5 162 33) — [a]) $T_1$ $G_2$ कामोजो — [c]) $K_5$ $D_7$ तथा° (for तवा°) — [d]) K (except $K_4$) $D_{1.2.7}$ परान् (for परै°)

2 [b]) $M_4$ नर° (for राज°) — [c]) $M_{3.5}$ रथेंद्रस्य (for यथे°)

3 [a]) B Dn Ds $D_{6-8.10}$ $Ca_8$ रथवशे (Cap रथवर्गे), $D_{2.4}$ रथवशाद् (for रथवशो) Cd cites वश° In $B_2$, the portion from हि up to द् in $9^d$ of adhy 164 is lost on a missing fol. (225) T $G_{1.2.5}$ रथवशाम्य (for °वशो हि) — [b]) $K_{1-3.5}$ $D_{1.2.7.8}$ तीव्रवेगप्रहारिणा ($D_{2.7}$ °णा°), $K_4$ B ($B_2$ missing) Dn Ds $D_{6.10}$ तिग्मवेगप्रहारिण , $D_{3.4}$ तीव्रवेगा° प्रहारिण°, $T_2$ $G_{1.2.5}$ भीमवेगप्रहारिणा, $M_{3-5}$ तिग्मवेगा° प्र° — [c]) $D_{3.4}$ °प्राज्ञ, $G_3$ °बाहो (for °राज) — [d]) $G_2$ lacuna B ($B_2$ missing) $Ds_2$ आयती, $Dn_1$ $Ds_1$ $D_{2.4.6-8.10}$ आयती°, $T_2$ (*inf lin* as in text) $G_{1.2.5}$ M आततिः, $M_4$ (*sup lin* ) आम्यति°, Ca आयति° (as in text)

4 $B_2$ missing (cf v l 3) — [a]) $K_{3.5}$ °नाथ° — [b]) $K_{1-3.5}$ $D_{1-4.7}$ खड्गचर्मधरस्, $K_4$ B ($B_2$ missing) Dn Ds $D_{10}$ नीलवर्मा रथस्, $D_{6.8}$ नीलधर्मा रथस्, $T_2$ $G_{1.2}$ नीलवर्मरथस् $K_{2.5}$ $D_7$ तत , $D_{1.3.4.8}$ तथा (for तव) — [cd]) $D_{1.2}$ रथवेगेन $K_4$ B ($B_2$ missing) Dn Ds $D_{2.4.6.8.10}$ (by transp ) कदनं शत्रूणा, $D_1$ महता कदं $T_1$ ते (for वै)

5 $B_2$ missing (cf v l. 3) — [a]) $D_{1.2}$ S सदा ($M_{1.2}$ तदा) (for पुरा) $G_3$ M चैष (for चैव) — [b]) $K_4$ B ($B_2$ missing) Dn Ds $D_{6.8.10}$ Ca मारिष, $D_{1-4.7}$ $T_1$ $G_{1.5}$ पार्थिव — [d]) $D_{3.4}$ तवार्थं $K_4$ B ($B_2$ missing) Dn Ds $D_{1.6.8.10}$ कुरुनंदन

6 $B_2$ missing (cf. v.l. 3) — [a]) Some MSS विंदानुविंदावावन्त्यौ — [b]) B ($B_2$ missing) Dn समतौ (for समे°) — $K_{1-3}$ om. $6^{cd}$ — $K_5$ transp $6^a$ and $7^a$ — [c]) $D_{2.7}$ राजन्, $D_3$ तत्र, $T_1$ $M_{2-4}$ वीर, $T_2$ G $M_{1.5}$ वीरौ (for तात)

7 $B_2$ missing (cf v l 3) $K_5$ transp $6^a$ and $7^a$ — [a]) K (except $K_4$) $B_{1.4.5}$ $D_{1.6}$ m.7 हि, $B_3$ $D_{10}$ (by corr ) $M_{1.2}$ ते (for तौ) — [b]) $G_1$ समरेष्वनिवर्तिनौ — [c]) $M_2$ गदागदा° — [d]) $K_4$ B ($B_2$ missing) D (except $D_{1.2}$) करच्युतैः, $K_5$ परश्वधै° (for भुज°)

8 $B_2$ missing (cf v l. 3) — [a]) $K_{1.2}$ $D_{1.2}$ युद्धाभिरामौ — [b]) $D_7$ रथ (for इव) — [c]) $D_{3.4}$ यथा राजन् (for महाराज)

9 $B_2$ missing (cf v l. 3) — [a]) $D_{3.4}$ त्रैगर्ता — [c]) $K_4$ B ($B_2$ missing) $Dn_2$ Ds $D_{6.8.10}$ पार्थेन्द्रे; $K_5$ भीमेन, $D_{3.4}$ ते पार्थै° (for पार्थेन) — [d]) $K_1$ T $G_5$ तथा (for तदा).

C. 5. 5757 B. 5. 169. 10 K. 5. 169. 10 गङ्गां विक्षोभयिष्यन्ति पार्थानां युधि वाहिनीम् ॥ १०
ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखम् ।
एते योत्स्यन्ति समरे संस्मरन्तः पुरा कृतम् ॥ ११
व्यलीकं पाण्डवेयेन भीमसेनार्जुनेन ह ।
दिशो विजयता राजञ्श्वेतवाहेन भारत ॥ १२
ते हनिष्यन्ति पार्थाना समासाद्य महारथान् ।
वरान्वरान्महेष्वासान्क्षत्रियाणां धुरंधराः ॥ १३
लक्ष्मणस्तव पुत्रस्तु तथा दुःशासनस्य च ।
उभौ तौ पुरुषव्याघ्रौ संग्रामेष्वनिवर्तिनौ ॥ १४
तरुणौ सुकुमारौ च राजपुत्रौ तरस्विनौ ।
युद्धानां च विशेषज्ञौ प्रणेतारौ च सर्वशः ॥ १५
रथौ तौ रथशार्दूल मतौ मे रथसत्तमौ ।
क्षत्रधर्मरतौ वीरौ महत्कर्म करिष्यतः ॥ १६
दण्डधारो महाराज रथ एको नरर्षभः ।
योत्स्यते समरं प्राप्य स्वेन सैन्येन पालितः ॥ १७
बृहद्बलस्तथा राजा कौसल्यो रथसत्तमः ।
रथो मम मतस्तात दृढवेगपराक्रमः ॥ १८
एष योत्स्यति संग्रामे स्वां चमूं संप्रहर्षयन् ।
उग्रायुधो महेष्वासो धार्तराष्ट्रहिते रतः ॥ १९
कृपः शारद्वतो राजन्रथयूथपयूथपः ।
प्रियान्प्राणान्परित्यज्य प्रधक्ष्यति रिपूंस्तव ॥ २०
गौतमस्य महर्षेर्य आचार्यस्य शरद्वतः ।
कार्तिकेय इवाजेयः शरस्तम्बात्सुतोऽभवत् ॥ २१
एष सेनां बहुविधां विविधायुधकार्मुकाम् ।
अग्निवत्समरे तात चरिष्यति विमर्दयन् ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

10 B2 missing (cf v l 3) — b) K1.2.5 समुद्यत-; K4 D3 4 समुद्धृय; D2 7 8 S समुद्धृत-. — c) Cs.ap dp वा क्षोभ° (for विक्षोभ°)

11 B2 missing (cf v l 3) — b) K (except K4) D2-4.7 G2 3 5 M1 (inf lin) तेषां, M4 एषां (for येषां) — c) K4 5 B (B2 missing) D (except D3 4) G1 सग्रामे (for समरे)

12 B2 missing (cf v l 3) — b) K2 भीम-सेनार्जुनेन K1 2 5 D1 3 4 7 T2 G2 M3.5 च, G3 5 हि (for ह) — After 12, K D1-4 8 10 ins

564* कदर्थीकृत्य सग्रामे तापिता कुरुसत्तमम् ।

13 B2 missing (cf v l 3) — a) K1-3 पाण्डूनां, K5 S सेना तां (for पार्थानां) — b) K4 B (B2 missing) Dn Ds D1.3.4 6 8 तानासाद्य D2 G3 5 M1.2 महारथा. — c) T1 G1 5 M3 4 परान्वरान्, G2 वरान्परान्; M2 5 परान्परान् K1.2 B1 G1 5 M2 महेष्वासा — d) K2 4 B1.4 5 Dn Ds D1 2 4 6 8 10 धुरधरान्, D2 7 धनुर्धरान्; G3 धनुर्धरा

14 B2 missing (cf v l 3) — a) K4 B (B2 missing) Dn Ds D6 8 10 T1 च (for तु) — D4 om (hapl) $14^{d}$–$16^{a}$ — d) K4 B (B2 missing) D (except D1 2 7, D4 om) अपलायिनौ (for अनिवर्तिनौ)

15 B2 missing (cf v l 3) D4 om 15 (cf v l 14) — b) K1.2 5 मनस्विनौ, Dn तप°, D7 यशस्विनौ, T G M1.2 यश° (for तर°)

16 B2 missing (cf v l. 3) D4 om $16^{a}$ (cf v.l 14) — a) S रथिनौ, Cs रथौ तौ (as in text) K1 5 नरशार्दूलौ, K2 G2 M3-5 रथशार्दूलौ; K4 B (B2 missing) Dn Ds D1.6 10 कुरुशार्दूल (D1 °लौ); D2 7 नरशार्दूल, D3 8 पुरुषव्याघ्रौ — b) K1 नरसत्तमौ; K5 रथि°, Ca d रथ° (as in text) — c) K2 5 भीमौ; K3 D2 7 शूरौ, G5 पूर्वौ, M (except M1) वीर (for वीरौ) — d) = 5 167 $13^{d}$, $14^{d}$

17 B2 missing (cf v l 3) — a) T2 G5 महातेजा (for °राज) — b) K4 5 B (B2 missing) Dn Ds D3 4 6 8 10 G2 5 M4 नरर्षभ K3 D1.2 7 रथ एकगुणो (K3 sup lin. °रथी) मत° (cf v l $19^{d}$) — c) K4 B (B2 missing) Dn Ds D6 8 10 °ते तत्र सग्रामे.

18 B2 missing (cf v l. 3) — a) K1.2 5 ततो; Ds T G2 3 तदा (for तथा) — b) K Dn Ds D2-4 6-8 10 कौशल्यो, D1 कौरव्यो K1.2 5 D1 राजसत्तम° — d) K3 तादृग्वेग°, K4 B (B2 missing) D (except D1 2 7) महावेग°

19 B2 missing (cf v l 3) — b) K4 B (B2 missing) D (except D2 7) स्त्रान्यधून्, K5 चमू ते (for स्वां चमूं) — d) B5 स्थित (for रत) D1.2 रथ एकगुणो मत (cf v l $17^{b}$) — After 19, D5 ins

565* एष योत्स्यति संग्रामे रथ एकगुणो मत. ।
[Prior half = $19^{a}$. Cf v l. $19^{d}$]

21 B2 missing (cf v l. 3) — a) S तु (for य).

# १६४

भीष्म उवाच ।
शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप ।
प्रसज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः ॥ १
एतस्य सैन्या दुर्धर्षाः समरेऽप्रतियायिनः ।
विकृतायुधभूयिष्ठा वायुवेगसमा जवे ॥ २
द्रोणपुत्रो महेष्वासः सर्वेषामति धन्विनाम् ।
समरे चित्रयोधी च दृढास्त्रश्च महारथः ॥ ३
एतस्य हि महाराज यथा गाण्डीवधन्वनः ।
शरासनाद्विनिर्मुक्ताः संसक्ता यान्ति सायकाः ॥ ४
नैष शक्यो मया वीरः संख्यातुं रथसत्तमः ।
निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महायशाः ॥ ५
क्रोधस्तेजश्च तपसा संभृतोऽऽश्रमवासिना ।
द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ॥ ६
दोषस्त्वस्य महानेको येनैष भरतर्षभ ।
न मे रथो नातिरथो मतः पार्थिवसत्तम ॥ ७
जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः ।
न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ॥ ८
हन्यादेकरथेनैव देवानामपि वाहिनीम् ।

C. 5. 5773
B. 5. 197. 9
K. 5. 197. 9

— $^d$) K3 पुरा (for सुतो) K1 5 S वर्मी, K2 D1. 2 G3 बली (for ऽभवत्)

22 B2 missing (cf. v.l. 3) — $^{ab}$) G3 रिपुसेना, M1. 2 एषा सेनां K3 4 B (B2 missing) D एष सेना सुबहुला °कार्मुका — $^c$) T1 G1. 3 5 M राजन्, T2 G2 वीर (for तात) — $^d$) K4 B (B2 missing) Dn Ds D1. 3. 4. 6 8 10 विनिर्दहन् (for विमर्द°) K3 D2 7 विचरिष्यति निर्दहन्

Colophon om in T1 M1. 2 B2 D5 9 G4 missing — *Sub-parvan* K1–3. 5 B (B2 missing) Dn Ds D2 3 6–8 10 रथातिरथसंख्या, D4 M3–5 रथसंख्या, G5 कुलबलरथसंख्यान — *Adhy no* (figures, words or both) D6 (*sec m*) 55 (=155), T2 M4 165, G1 2 3 M3. 5 166, G3 163 — *S'loka no* K5 Dn2 22

## 164

1 B2 missing up to स्फोटयेद् in 9$^d$ (cf. v.l. 5 163 3) — $^a$) K3 D1 2 7 तुभ्य, K5 तेय (for तेऽसौ) — $^b$) K1. 2 G2 5 M नराधिप — $^c$) K1–3 5 D2 T1 प्रसह्य, K4 B (B2 missing) Dn Ds D3. 4. 6–8 10 प्रयुज्य, G1 आमज्य (for प्रसज्य) Dn1 वीर, D6 सर्वे° (for वैर)

2 B2 missing (cf. v.l 1) — $^a$) K2 4. 5 B (B2 missing) Dn D1. 3. 4. 6 8 10 M3–5 सेना, Ca d s as in text. — $^b$) S °रेप्रतियोधिन° — $^c$) D3 4 T G विविधा° — $^d$) K3 D2 7 वातवेग°

3 B2 missing (cf v.l. 1) — $^b$) K4 B (B2 missing) Dn Ds D6 8 10 सर्वानेवा(Ds °नत्ये)ति धन्विन°, D3 4 सर्वेषामपि धन्विना — $^d$) K1. 2 5 दृढश्रेष्ठो महा°

4 B2 missing (cf v.l 1) — $^a$) K3 D3 4 M1. 2 च, T1 तु, G3 हे (for हि) — $^b$) A few S MSS °धन्विन° — $^c$) K2 T1 हि (for वि-) K4 B (B2 missing) Dn Ds D1. 6 8 10 G3 शरासनविनिर्मुक्ता — $^d$) K1. 2 समक्त, Ca d as in text

5 B2 missing (cf. v.l. 1) — $^a$) K1 G5 महावीर, K2 5 Ds T2 G2 महावीर°, K3 तथा वीर, D6 मया धीर°, G1 रणे वीर, G3 M3–5 मया वीर, M1 2 महावीर्य° — $^c$) S (except G1) एष (for अपि) — $^d$) D3 4 निघ्नन् (for इच्छन्) T2 G2 5 एको, M3–5 एव (for एष) K4 B (B2 missing) D (except D1 2 7) महारथ°

6 B2 missing (cf. v.l. 1) — $^b$) K4 D6 8 सद्वृत°, Cs सम्भृत° (as in text) K3 4 B (B2 missing) D M2 Cs [आ]श्रमवासिना Ca d cite अश्रम°! — $^d$) D2 दिव्यास्त्रेण उदारधी°

7 B2 missing (cf v.l. 1) D6 om. 7$^a$–8$^b$ — $^a$) K1–3 चास्य, K4 D3 S तस्य (for त्वस्य) — $^b$) K2 B (B2 missing) Dn2 T2 G2 5 एव (for एष) K1. 2 3 D3 4 7 T G1. 2. 5 M2 पुरुषर्षभ° (K1 T2 G1 2 5 °भ) — $^c$) B1. 3. 4 Ds D10 नाप्यरथो (for नातिरथो) — $^d$) K1 Dn2 Ds2 D3 4 G2 3 M2 °सत्तम°

8 B2 missing (cf. v.l. 1) D6 om 8$^{ab}$ (cf. v.l. 7) — $^a$) M3–5 मतम् (for प्रियम्) — $^b$) T1 स वै, M2 तथा (for सदा) — $^d$) D1 transp उभयो° and सेनयो°, K5 transp सेनयो° and अपि

9 B2 missing up to स्फोटयेद् in 9$^d$ — $^a$) K3 4 Dn1 Ds1 D2 4 7 8 G1 M एष (for एव) — $^b$) G3 देवानपि सदानवान् — M2 om. 9$^e$–11$^b$ — $^e$) G2 यश्चैव

C. 5. 5778 B 5. 167 9 K 5. 167 9

वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ॥ ९
असंख्येयगुणो वीरः प्रहर्ता दारुणद्युतिः ।
दण्डपाणिरिवासह्यः कालवत्प्रचरिष्यति ॥ १०
युगान्ताग्निसमः क्रोधे सिंहग्रीवो महामतिः ।
एष भारत युद्धस्य पृष्ठं संशमयिष्यति ॥ ११
पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः ।
रणे कर्म महत्कर्ता तत्र मे नास्ति संशयः ॥ १२
अस्त्रवेगानिलोद्भूतः सेनाकक्षेन्धनोत्थितः ।
पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति जये धृतः ॥ १३
रथयूथपयूथानां यूथपः स नरर्षभः ।
भारद्वाजात्मजः कर्ता कर्म तीव्रं हिताय वः ॥ १४
सर्वमूर्धाभिषिक्तानामाचार्यः स्थविरो गुरुः ।
गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनंजयः ॥ १५
नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम् ।
हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्जितम् ॥ १६
श्लाघत्येष सदा वीरः पार्थस्य गुणविस्तरैः ।
पुत्रादभ्यधिकं चैव भारद्वाजोऽनुपश्यति ॥ १७
हन्यादेकरथेनैव देवगन्धर्वदानवान् ।
एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ॥ १८
पौरवो राजशार्दूलस्तव राजन्महारथः ।
मतो मम रथो वीर परवीररथारुजः ॥ १९
स्वेन सैन्येन सहितः प्रतपञ्शत्रुवाहिनीम् ।
प्रधक्ष्यति स पाञ्चालान्कक्षं कृष्णगतिर्यथा ॥ २०
सत्यव्रतो रथवरो राजपुत्रो महारथः ।
तव राजन्रिपुबले कालवत्प्रचरिष्यति ॥ २१
एतस्य योधा राजेन्द्र विचित्रकवचायुधाः ।

---

(for वपुष्मास्). D1 तलशब्देन

10 M2 om 10 (of v l 9) — b) B Dn2 D8 प्रहता D82 दारुणो युधि, D8 4 दारुणाकृतिः — c) D8 4 M8 4 आसाद्य (for असह्य) — d) = 21d

11 M2 om 11ab (of v.l 9) — a) D8 D10 T1 युगाताग्निरिव K4 B (except B2) Dn D8 4 6 क्रोधात्; D10 क्रोधी, S (except T1 G8, M2 om ) कोपे (for क्रोधे) — b) D8 Ca d s सिंह° क्लीव, Cap सिंहग्रीव° (as in text) K8–5 B8 5 D (except D1) महाद्युति, T G °तपा°; M (M2 om ) °मना°

12 a) K1 2 B8 D8 4 8 तस्य, D7 चा° (for त्व°) — d) K4 B D (except D2 7) अत्र (for तत्र), with hiatus between pādas! — For 12, G2 subst

566* पितास्य तु रणे कर्म महत्कर्ता न संशय. ।

13 b) D6 M1 2 4 (inf lin. as in text) °कक्षेधने स्थित°, G8 °कुक्षानलोत्थित. — c) D8 4 सैन्य स (for सैन्यानि) — d) G5 दहिष्यति (for प्रध°) K1 2 5 D1 जये वृत, K4 B4 5 Dn D8 D8.4 6 10 रणे धृतः; B1–8 D8 रणे वृत, G1 5 न संशय.

14 b) K4 B D (except D1 2 7) °पोयं (for °पः स) K4 B (except B5) D10 नरर्षभ — d) K1 2 5 तत्र (for तीव्रं) K8 B Dn D8 D1 8 4 6–8 10 हित तव; K4 तितीर्षति, D2 महत्तव (for हिताय व°) K1.2 5 वै, T2 G2 च (for व°).

15 a) K1.2 शतमूर्धा°; K8.5 D2 S सर्व(K5 स तु)-मूर्धावसिक्तानां — d) B1–8 D8 4 T1 तस्य (for त्वस्य)

16 a) T G2 एव (for एष) — c) D8.4 आचार्यदयित, Ca d s आचार्यक दीप्त (as in text) — d) D8 T1 G1 गुणनिर्जितः; Ca d s as in text

17 a) K4 B D श्लाघतेय (D2 °थ), G1 श्लाघ्यस्त्वेष K2 8 5 D7 8 T1 महावीर°, K4 B Dn2 D1 10 सदा वीर, Dn1 D6 महावीर — b) K8 पार्थ हि, T G2 5 पार्थं तु (for पार्थस्य) — c) K8 4 B1 2 5 D8 D6 10 अप्य°, T1 अत्य° (for अभ्य°) K8 4 B D M5 चैनं (for चैव)

18 a) K8.4 B1 8 4 D8 B6–8 10 G8 M8–5 एष (for एव) — b) K4 B Dn D8 D1 6 8 10 °मानुषान् — c) D10 शस्त्रै (for अस्त्रै.) K1 2 5 उदारधी (for प्रताप°)

19 B5 om. 19ab — a) K1 2 5 G5 M रथशार्दूल (for राज°) — c) K1–8 D1 2 रणे वीर° (K8 D1 °र); K4 B Dn D8 D8 4 6 8 10 रथोदार°, D7 T2 G1 2 M1 (inf. lin ) 2 रथो वीर° — d) G8 महारथ°.

20 a) K4 B D (except D1 2.7) महता (for सहित°) — c) D8 4 transp प्रध° and स. A few MSS पचालान् — d) K1 तृणगति., K4 B8 Dn D8 अग्निगति°, Ca d कृष्णगतिः (as in text)

21 a) K8 4 B D सत्यश्रवा° K8 5 D1 2 7 रथसुम्य, K4 B Dn D8 D6 8 10 G8 रथस्त्वेक° (B2 त्वेकरथ°); D8 4 रथसेसौ — b) K1–8 5 महाबलः, K4 B Dn D8 D8 4 6 8 10 बृहद्बल° (for महारथ°) — d) 21d = 10d

22 a) G8 ये तस्य (for एतस्य) G5 M योधा — b) B2 5 °कवचध्वजा°. — d) K4 पार्थिवान् (for

विचरिष्यन्ति संग्रामे निघ्नन्तः शात्रवांस्तव ॥ २२
वृषसेनो रथाग्र्यस्ते कर्णपुत्रो महारथः ।
प्रधक्ष्यति रिपूणां ते बलानि बलिनां वरः ॥ २३
जलसंधो महातेजा राजन्रथवरस्तव ।
त्यक्ष्यते समरे प्राणान्मागधः परवीरहा ॥ २४
एष योत्स्यति संग्रामे गजस्कन्धविशारदः ।
रथेन वा महाबाहुः क्षपयञ्शत्रुवाहिनीम् ॥ २५
रथ एष महाराज मतो मम नरर्षभः ।
त्वदर्थे त्यक्ष्यति प्राणान्सहसैन्यो महारणे ॥ २६
एष विक्रान्तयोधी च चित्रयोधी च संगरे ।
वीतभीश्चापि ते राजञ्शात्रवैः सह योत्स्यते ॥ २७
बाह्लीकोऽतिरथश्चैव समरे चानिवर्तिता ।
मम राजन्मतो युद्धे शूरो वैवस्वतोपमः ॥ २८
न ह्येष समरं प्राप्य निवर्तेत कथंचन ।
यथा सततगो राजन्नाभिहत्य परान्रणे ॥ २९
सेनापतिर्महाराज सत्यवांस्ते महारथः ।
रणेष्वद्भुतकर्मा च रथः पररथारुजः ॥ ३०
एतस्य समरं दृष्ट्वा न व्यथास्ति कथंचन ।
उत्स्मयन्नभ्युपैत्येष परान्रथपथे स्थितान् ॥ ३१
एष चारिषु विक्रान्तः कर्म सत्पुरुषोचितम् ।
कर्ता विमर्दे सुमहत्त्वदर्थे पुरुषोत्तमः ॥ ३२
अलायुधो राक्षसेन्द्रः क्रूरकर्मा महाबलः ।
हनिष्यति परान्राजन्पूर्ववैरमनुस्मरन् ॥ ३३
एष राक्षससैन्यानां सर्वेषां रथसत्तमः ।
मायावी दृढवैरश्च समरे विचरिष्यति ॥ ३४
प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान् ।

C. 5. 5804
B. 5. 167. 35
K. 5. 167. 35

शात्र°) $D_{2\,8}$ $G_3$ तथा, $T_2$ $G_{1.2}$ रणे, $G_5$ नृप (for तव)

23 $G_3$ reads 23 after 27 — $^{a}$) $K_3$ $D_{1.2}$ रथस्तुभ्य, $K_4$ B Dn Ds $D_{3.4\,6-8\,10}$ रथस्तेग्र्य ($B_2$ रथोदग्र) (for रथाग्र्यस्ते) — $^{c}$) $K_{1\,2\,5}$ $B_2$ Ds $D_7$ $T_1$ $G_{1.3}$ $M_{1\,2\,4}$ (*inf lin* as in text) स (for प्र) $K_3$ $D_{1.2}$ स शत्रूणा (for रिपूणा ते) — $^{d}$) $K_4$ $B_{3\,5}$ D (except $D_{1.2}$) बल तु (for बलानि) $K_5$ °नि बलवत्तर

24 $^{a}$) $K_3$ $D_2$ °राज (for °तेजा) $D_1$ जरासधि- र्महाराज — $^{b}$) $D_1$ राजा (for राजन्) — $^{c}$) $D_1$ त्वदर्थे त्यक्ष्यते प्रा° — Ds $D_{6\,10}$ om (hapl) $24^{d}$–$26^{c}$ — $^{d}$) $B_{3.5}$ Dn $D_1$ माधव (for मागध) $D_8$ सह सैन्यो महारणे

25 Ds $D_{6\,10}$ om 25 (cf. v l 24), $D_{1.2}$ om 25–26 — $^{b}$)=$38^{b}$ $D_{3.4}$ °स्कधे विशा° — $T_2$ $G_2$ om. (hapl) $25^{d}$–$26^{a}$ — $^{d}$) $K_2$ कप° (for क्षप°) $D_8$ स क्षिपन्नरिवाहिनीं

26 $D_{1.2}$ om 26, Ds $D_{6\,10}$ $26^{abc}$, $T_2$ $G_2$ om $26^{a}$ (cf v l. 24, 25) — $^{a}$) S °बाहो (for °राज) — $^{b}$) $K_{1\,5}$ $D_8$ $T_1$ $G_{3.5}$ $M_{2\,4}$ नरर्षभ $K_3$ B Dn Ds $D_7$ मतो मे राजसत्तम ($K_3$ $D_7$ भरतर्षभ) — $D_7$ om. $26^{cd}$ — $^{c}$) $K_{3\,4}$ B (except $B_3$) Dn $D_{3\,4}$ त्यक्ष्यते — $^{d}$) $K_3$ मागध परवीरहा (=$24^{d}$)

27 $^{b}$) $K_{1.2}$ $G_3$ सयुगे (for °गरे) — $^{d}$) $K_4$ B Dn Ds $D_{3\,4\,6-8\,10}$ T $G_{1-3\,5}$ शत्रुभि सह $K_{1-3}$ Ds $T_1$ $G_3$ योत्स्यति — After 27, $G_3$ reads 23

28 $^{a}$) A few MSS बाह्लिक — $^{b}$) $K_4$ B Dn Ds $D_{6\,8\,10}$ चानिवर्तन ($B_2$ Ds $D_8$ °र्तिन, $Dn_1$ °र्तित), $D_3$ चानिवर्तिवान्, $T_2$ $G_2$ चाभि°, $M_{3-5}$ चानिवर्तिना — $G_2$ om $28^{d}$–$29^{a}$

29 $G_2$ om $29^{a}$ (cf v l. 28) — $^{b}$) $G_2$ प्राप्याय न निवर्तते — $^{c}$) $M_{2\,3\,5}$ स शतशो (for सततगो) — $^{d}$) $K_1$ अभिहत्य, $K_2$ अभिहन्यात्, $K_3$ $D_1$ विनिहत्य, $K_{4\,5}$ B Dn Ds $D_{2-4\,6\,8\,10}$ स हि हन्यात्, $D_7$ अनिहत्य, T $G_{1\,2\,5}$ M (except $M_2$) अभिहत्य, $G_3$ न निहत्य (for नाभिहत्य)

30 $^{b}$) $D_2$ सत्यवाक्ते $K_{1.2\,5}$ $D_7$ महायशा — $G_{1.2}$ om $30^{cd}$ — $^{c}$) $D_{3\,4}$ रणे तु, $D_6$ रणे हि, T $G_5$ रथेषु (for रणेषु) — $^{d}$) $K_4$ B D (except $D_{1.7}$) रथी (for रथ)

31 $^{a}$) $K_{1\,2\,5}$ प्राप्य (for दृष्ट्वा) — $^{b}$) $D_8$ स्यात् (for [अ]स्ति) $K_{1.3}$ $D_2$ कदा° (for कथ°) — $^{c}$) $K_4$ B D (except $D_{2-4\,7}$) उत्पतति (for अभ्युपैति) — $^{d}$) $K_{1.2}$ $T_1$ रथवरे, $K_{3\,5}$ रथवर

32 $^{a}$) $D_{3\,4}$ एष त्वरितविक्रांत — $^{b}$) $M_{3-5}$ तत् (for सत्) — $^{c}$) $B_3$ $D_{6\,8}$ $G_5$ विमर्देषु महत् — $^{d}$) $D_{1\,3.4\,6}$ त्वदर्थं $K_3$ $G_3$ पुरुषर्षभ ($G_3$ °भ), $T_2$ $G_5$ $M_{2\,4}$ पुरुषोत्तम, $G_{1.2}$ कुरुसत्तम

33 $^{a}$) $K_5$ अलायुद्धो, $K_5$m $M_{2-5}$ हलायुधो, $B_{1.2\,4}$ Dn $T_2$ अलम्बुषो, $T_1$ $G_{1\,2\,5}$ अलम्बुसो, $G_3$ $M_1$ अलयुधो — $^{b}$) $K_{3-5}$ $B_{4\,5}$ D (except Ds $D_{2-4}$) $M_1$ (*inf lin*) °रथ (for °बल)

35 $G_3$ om 35, with 34 and $36^{ab}$ — $^{a}$) $D_{3.4}$ °षपतिर्वीरो — $^{c}$) $K_3$ $B_5$ Ds $D_{2-4\,6}$ $G_1$ Ca °धर श्रेष्ट,

C. 5 5804 B. 5 167 35 K. 5 167 35 गजाङ्कुशधरश्रेष्ठो रथे चैव विशारदः ॥ ३५
एतेन युद्धमभवत्पुरा गाण्डीवधन्वनः ।
दिवसान्सुबहूत्राजन्नुभयोर्जयगृद्धिनोः ॥ ३६
ततः सखायं गान्धारे मानयन्पाकशासनम् ।
अकरोत्संविदं तेन पाण्डवेन महात्मना ॥ ३७
एष योत्स्यति संग्रामे गजस्कन्धविशारदः ।
ऐरावतगतो राजा देवानामिव वासवः ॥ ३८

इति श्रीमहाभारते उद्योगपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

# १६५

भीष्म उवाच ।

अचलो वृषकश्चैव भ्रातरौ सहितावुभौ ।
रथौ तव दुराधर्षौ शत्रून्विध्वंसयिष्यतः ॥ १
बलवन्तौ नरव्याघ्रौ दृढक्रोधौ प्रहारिणौ ।
गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ ॥ २
सखा ते दयितो नित्यं य एष रणकर्कशः ।
प्रोत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह ॥ ३
परुषः कत्थनो नीचः कर्णो वैकर्तनस्तव ।
मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ॥ ४
एष नैव रथः पूर्णो नाप्येवातिरथो नृप ।
वियुक्तः कवचेनैष सहजेन विचेतनः ।
कुण्डलाभ्यां च दिव्याभ्यां वियुक्तः सततं घृणी ॥ ५
अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात् ।
करणानां वियोगाच्च तेन मेऽर्धरथो मतः ।
नैष फल्गुनमासाद्य पुनर्जीवन्विमोक्ष्यते ॥ ६

---

D7 °ध्वजश्चैव, M2 °धनुःश्रेष्ट°

36 G3 om 36$^{ab}$ (of v l 35) — $^{b}$) A few MSS गांजीव° K3 G1 2 °धन्विन , K5 D3 4 °धन्वना — $^{c}$) T G अहोरात्रान्बहून्राजन्, M1 2 बहून्यहानि राजेंद्र — $^{d}$) D10 जयकाङ्क्षिणो , G3 °काशिनो°

37 $^{a}$) K4 B3 D5 D3 4 6 8 तथा (for तत ) T2 G1 2 समाया, M3-5 महाय, Ca सखायं (as in text) — $^{b}$) K3 5 D1 6 8 T2 G1 2 5 M1 पाकशासनिं, Ca d as in text — $^{c}$) G3 सविध, M1 2 समय, Ca d सविद (as in text)

38 $^{a}$) B2 योत्स्यत्येष च स° — $^{b}$) = 25$^{b}$ T2 G2 गजस्कधे वि° — $^{c}$) A few MSS ऐरावण° K1 2 4 Dn D1. 8 °गजो (for °गतो) K3 नून, K5 G1 देवो, D3 4 G3 राजन्

Colophon D5 6 G4 missing — *Sub-parvan* K1-3 5 B Dn D5 D1-4 6-8 10 रथातिरथसख्या (D1 °ख्यान), T1 धार्तराष्ट्रसेनारथसख्या, G5 कुरुबलरथसख्यान, M रथसंख्या (M1 °ख्यान) — *Adhy name* M नवरथगणन — *Adhy no* (figures, words or both) D5 57 (=157), T G2 M4 166, G1 5 M3 5 167, G3 164, M1 2 165 — *S'loka no* K5 Dn 38.

**165**

1 $^{b}$) K4 B Dn D5 D6 8 10 transp भ्रातरौ and सहितौ — $^{c}$) K5 रथिनौ हि दुरा°

2 $^{a}$) K3 रथश्रेष्ठौ (for नर°) — $^{b}$) D3 4 °क्रोशौ (for °क्रोधौ)

3 $^{c}$) K4 B2 D (except D1 7) उत्साहयति M1. 2 4 त्वा (for त्वां)

4 $^{a}$) K1 2 Dn2 D3 4 6 8 T2 G1 2 M2 4 पुरुष° (for परुष°) K1 2 वीर°, K3 चैव, T1 वीर, T2 G2 तीव्र, G1 3 5 M [ऽ]तीव (for नीच°) — $^{d}$) M चात्यर्थम् K3 D6 Ca उत्थित°, B2 D7 ऊर्जित° (for उच्छ्रित°)

5 $^{a}$) K4 B (except B3) Dn D3 4 6 कर्णो (for पूर्णो) — $^{b}$) K1 चैव, K3 5 D7 [अ]प्येष°, K4 B Dn D5 D3 4 6 8 10 G5 चापि, G3 [अ]सौ च (for [अ]प्येव) K3 4 B D रणे (for नृप) — $^{e}$) K1 2 B2. 5 Dn1 D5 D3 G3 विमुक्तः — $^{f}$) K1 2 D5 विमुक्त°, T1 नियुक्त°

6 $^{b}$) K (except K4) D1 2 7 T G च भाषितात्, D3. 4 विशेषत° — $^{c}$) K (except K5) B1 5 D2 M2 कारणाना, Ca d s कर° (as in text) — K5 om 6$^{cf}$ — $^{e}$) K4 D6 8 नैव (for नैष) N (mostly) फाल्गुनम् — $^{f}$) T1 कर्णो (for पुनर्)

7 N (except B2) om the ref. — $^{a}$) K1 T2 M2

संजय उवाच ।

ततोऽब्रवीन्महाबाहुर्द्रोणः शस्त्रभृतां वरः ।
एवमेतद्यथात्थ त्वं न मिथ्यास्तीति किंचन ॥ ७
रणे रणेऽतिमानी च विमुखश्चैव दृश्यते ।
घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः ॥ ८
एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फुल्ललोचनः ।
उवाच भीष्मं राजेन्द्र तुदन्वाग्भिः प्रतोदवत् ॥ ९
पितामह यथेष्टं मां वाक्शरैरुपकृन्तसि ।
अनागसं सदा द्वेषादेवमेव पदे पदे ।
मर्षयामि च तत्सर्वं दुर्योधनकृतेन वै ॥ १०
त्वं तु मां मन्यसेऽशक्तं यथा कापुरुषं तथा ।
भवानर्धरथो मह्यं मतो नास्त्यत्र संशयः ॥ ११
सर्वस्य जगतश्चैव गाङ्गेय न मृषा वदे ।
कुरूणामहितो नित्यं न च राजावबुध्यते ॥ १२
को हि नाम समानेषु राजसूदात्तकर्मसु ।
तेजोवधमिमं कुर्याद्विभेदयिषुराहवे ।
यथा त्वं गुणनिर्देशादपराधं चिकीर्षसि ॥ १३
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
महारथत्वं संख्यातुं शक्यं क्षत्रस्य कौरव ॥ १४
बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः ।
धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाधिकाः ॥ १५
यथेच्छकं स्वयंग्राहाद्रथानतिरथांस्तथा ।
कामद्वेषसमायुक्तो मोहात्प्रकुरुते भवान् ॥ १६
दुर्योधन महाबाहो साधु सम्यगवेक्ष्यताम् ।
त्यज्यतां दुष्टभावोऽयं भीष्मः किल्बिषकृत्तव ॥ १७
भिन्ना हि सेना नृपते दुःसंधेया भवत्युत ।
मौलापि पुरुषव्याघ्र किमु नाना समुत्थिता ॥ १८
एषां द्वैधं समुत्पन्नं योधानां युधि भारत ।
तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः ॥ १९
रथानां क्व च विज्ञानं क्व च भीष्मोऽल्पचेतनः । C. 5. 5830 B. 5. 168. 22 K. 5. 168. 22

महाराज, K4 B Dn D5 D6 8 10 पुनर्द्रोण°, G2 5 महातेजा° (for महाबाहु°) — b) K4 B Dn D5 D6 8 10 T1 सर्वशस्त्रभृतां वर°, D3 4 द्रोण° प्रहरतां वर° — c)=1 143 16c K1-3 एव (for एतद्) G3 M2 5 यथार्थं (for यथात्थ) — d) K4 B1-4 D5 D3 4.6 8 10 कथचन, K5 D1 [इ]ह किंचन, B5 Dn कदाचन T1 न मिथ्या त्वास्ति किं°.

8 a) K3 5 B D (except D2-4 7) [ऽ]भि° (for ऽति°) — b) K4 B Dn D5 D3 4 6 8 10 अपि, D2 इति (for एव) K3 D1.2 7 लक्ष्य° (for दृश्य°)

9 b) K4 B Dn D6 7 10 उत्फाल्य लोचने, T G M1.2 उद्वृत्तलोचन — c) K4 5 B (except B3) D (except D2-4) राधेय (for राजेन्द्र) — d) K1 प्रचोदयन् (for प्रतो°)

10 a) M1.2 मा (for मां) — b) T2 G1 2 वाक्छरैर् (for वाक्शरैर्) K4 अव, D5 अप, D3 4 अनु (for उप-) — f) T2 G2 5 च (for वै)

11 a) D7 8 मा (for मां) K3 B Dn D5 D6 8 मद (for ऽशक्त) — d) K3 4 B D वै न (for नास्ति)

12 b) K4 B5 5 Dn1 D2-4 6 M गाङ्गेयो (for गाङ्गेय) K4 [अ]वदत्, B Dn1 D6 M वदेत् (B2 वद) (for वदे) — d) K1.2 5 वि (for [अ]व°)

13 a) K2 5 D3 4 समेतेषु, Ca d s समा° (as in text) — b) B1.3.5 Dn D6 8 उदार° (for उदात्त°) — c) D5 तथा, G3 तदा (for यथा) D5 D1.2 7 S Ca d s गुणनिर्देशात् (as in text), the rest गुणविद्वेषात् — f) K1-3 5 B Dn D5 D2-4 7 10 अपराग, D3 अपवाद, M3 5 अपरोध, Ca अपारग, Cd as in text

14 a) D3 4 न धनैर्नैव प° — b) K1-3 D1.3 4 7 M3-5 न वित्तेन (D3 4 बलेन) न बधुभि°, K5 न च वित्तेन बधुभि — d) M1.2 4 शक्तः (for शक्य)

15 a) B3 रथज्येष्ठ. — b) D6 द्विजोत्तमा° (for द्विजा°) — d) D3 4 च (for तु) G1 शूद्रा° शुश्रूषयाधिका°

16 a) K4 D5 D8 स्वक भूया° (D8 °यात्), B Dn D3 4 6 10 स्वय भूया° (Dn1 °यात्) — c) G1 कामक्रोध° — d) T G2 5 वा (for प्र)

18 b) B3 D3 M3-5 Cn भवति — c) Ca d s cite माला K4 5 B (except B2) D (except D1 7) हि (for [अ]पि) — d) K1.2 Dn1 D5 D2 समुच्छ्रिता (K1 °ता), K3-5 B3 5 Dn2 D1.7 8 G1 Ca d n समुत्थिता (K3 °त)

19 a) D1 एव, T1 येषा, G5 एष (for एषां) T G1-3 M1 2 द्वेष, G5 दोष°, M3-5 एष (for द्वैध) S समुत्पन्न° — b) A few S MSS यौधाना — c) K3 5 B2 Dn1 D5 D6 10 न, M1 2 हि (for नः) T G M3-5 निष्क्रियते (for न क्रियते) — d) S प्रत्यक्ष ते (for °क्षेण)

20 K4 om 20b-22b — c) D3 4 °नात्यामीमां

अहमावारयिष्यामि पाण्डवानामनीकिनीम् ॥ २०
आसाद्य मामसंमूढं गमिष्यन्ति दिशो दश ।
पाञ्चालाः सहसृञ्जयाः शार्दूलं वृषभा इव ॥ २१
क्व च युद्धविमर्दो वा मन्त्राः सुव्याहृतानि वा ।
क्व च भीष्मो गतवया मन्दात्मा कालमोहितः ॥ २२
स्पर्धते हि सदा नित्यं सर्वेण जगता सह ।
न चान्यं पुरुषं कंचिन्मन्यते मोघदर्शनः ॥ २३
श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम् ।
न त्वेवाप्यतिवृद्धानां पुनर्बाला हि ते मताः ॥ २४
अहमेको हनिष्यामि पाण्डवान्नात्र संशयः ।
सुयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति ॥ २५
कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप ।
सेनापतिं गुणो गन्ता न तु योधान्कथंचन ॥ २६
नाहं जीवति गाङ्गेये योत्स्ये राजन्कथंचन ।
हते तु भीष्मे योद्धास्मि सर्वैरेव महारथैः ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

## १६६

भीष्म उवाच ।
समुद्यतोऽयं भारो मे सुमहान्सागरोपमः ।
धार्तराष्ट्रस्य संग्रामे वर्षपूगाभिचिन्तितः ॥ १
तस्मिन्नभ्यागते काले प्रतप्ते लोमहर्षणे ।

मिथोभेदो न मे कार्यस्तेन जीवसि सूतज ॥ २
न ह्यहं नाद्य विक्रम्य स्थविरोऽपि शिशोस्तव ।
युद्धश्रद्धां रणे छिन्द्यां जीवितस्य च सूतज ॥ ३
जामदग्न्येन रामेण महास्त्राणि प्रमुञ्चता ।
न मे व्यथाभवत्काचित्त्वं तु मे किं करिष्यसि ॥ ४
कामं नैतत्प्रशंसन्ति सन्तोऽऽत्मबलसंस्तवम् ।
वक्ष्यामि तु त्वां संतप्तो निहीन कुलपांसन ॥ ५
समेतं पार्थिवं क्षत्रं काशिराज्ञः स्वयंवरे ।
निर्जित्यैकरथेनैव यत्कन्यास्तरसा हृताः ॥ ६
ईदृशानां सहस्राणि विशिष्टानामथो पुनः ।
मयैकेन निरस्तानि ससैन्यानि रणाजिरे ॥ ७
त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान् ।
उपस्थितो विनाशाय यतस्व पुरुषो भव ॥ ८
युध्यस्व पार्थं समरे येन विस्पर्धसे सह ।
द्रक्ष्यामि त्वां विनिर्मुक्तमस्माद्युद्धात्सुदुर्मते ॥ ९

संजय उवाच ।

तमुवाच ततो राजा धार्तराष्ट्रो महामनाः ।
मामवेक्षस्व गाङ्गेय कार्यं हि महदुद्यतम् ॥ १०
चिन्त्यतामिदमेवाग्रे मम निःश्रेयसं परम् ।
उभावपि भवन्तौ मे महत्कर्म करिष्यतः ॥ ११
भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान् ।
ये चैवातिरथास्तत्र तथैव रथयूथपाः ॥ १२
बलाबलममित्राणां श्रोतुमिच्छामि कौरव ।
प्रभातायां रजन्यां वै इदं युद्धं भविष्यति ॥ १३

भीष्म उवाच ।

एते रथास्ते संख्यातास्तथैवातिरथा नृप । C. 5. 5850 B. 5. 169. 1 K. 5. 169. 1

---

प्रवृत्ते, D2.4 सग्रामे, D8 दारुणे, T2 G2 8 M सग्रामे S रोमहर्षणे — $^{d}$) K2 4 Dn1 G3 M2 जीवति सूतज°

3 Dn1 D3 4 7 10 om. (hapl.) 3 — $^{a}$) K4 B Dn2 Ds1 D6 8 त्वद्य, Ds2 चाद्य (for नाद्य) D1 अपि (for अद्य) — K4 om 3$^{c}$–4$^{d}$ — $^{c}$) B1.4 5 Dn2 Ds D6 8 M4 अह, T1 तु ते (for रणे) B2 T1 G. भिंद्या (for छिन्द्या)

4 K4 om 4 (cf. v.l. 3) — $^{b}$) D1 S प्र° (for वि°) — $^{c}$) B D (except D2–4) कृता, S भवेत् (for [अ]भवत्) K6 क्वापि, G6 किंचित् (for काचित्) — $^{d}$) K1–3 D1.2 किमेवं, D7 S (by transp) तु किं मे K6 किमेकस्त्व करि°

5 5$^{ab}$ = (var) I 30 2$^{ab}$ — $^{a}$) K1 नैत, K2 नैव, K5 नैव, G3 न तं (for नैतत) — $^{b}$) K1 मतो मयत्स्वभव, K3 मतोत्मगुणमस्त्रव, K4 B Dn Ds D2.4 6 8 10 सत° स्वबलमस्त्रव, D2 T G M1 (inf lin) मत आमनत्स्त्रव — $^{c}$) K5 D1.2 7 त्वयि, B2 त्वा तु (by transp) B3 D3 4 वक्ष्यामि त्वा सुमतस°, S प्रवक्ष्यामि तु (T2 G1.2 5 °ष्यति-, M1.2 °मि हि) संतप्त Ca d cite त्वपि संतप्त° — $^{d}$) S विहीन, Ca d नि° (as in text)

6 $^{b}$) K1.4 B (except B2) D T G1.2 °राज (for °राज्ञ°) — D2 om. (hapl) 6$^{c}$–7$^{d}$ — $^{c}$) B2 अपि, M3–5 अह (for एव) — $^{d}$) K4 B D (except D1.7, D2 om) या° (for यत्)

7 D2 om. 7 (cf. v l 6) — $^{a}$) D1 त्वादृशाना, Ca d ईदृशाना (as in text) — $^{c}$) G3 ससैन्यानि (for निरस्ता°) — $^{d}$) K1 2 5 सैन्यानि च, G3 निर्जितानि (for ससै°)

8 $^{a}$) D3 4 7 वीरपुरुषं, T G1.5 वै कापुरुष, G2 चैकपु°; G3 वै दुष्पुरुष — $^{c}$) Ds1 उपास्थितो, M2 उपाहितो K1.2 विनाशाय — $^{d}$) D1 °स्व पुरुषर्षभ

9 $^{a}$) K4 5 B Dn Ds D6 8 10 transp पार्थं and समरे — $^{c}$) M स्वा (for त्वा)

10 K3 4 B D (except D1) om. the ref. — $^{a}$) M1 महाबाहु (for ततो राजा) — $^{b}$) K3 महाबल°, K4 B D (except D1 2 7) प्रतापवान् (for महामना) — $^{c}$) K4 Ds D6 8 10 G1 समीक्ष्यस्व, B Dn D2–4 समीक्षस्व — $^{d}$) K1.2 उत्थित (for उद्यतम्).

11 $^{a}$) K3 D8 एकाग्र्य, K4 B Dn Ds D1–4.10 एकाग्र, D6 7 एकाग्रे — $^{d}$) S कार्यं (for कर्म)

12 G3 om. 12–13 — $^{d}$) K4 B Dn Ds D6 8 10 ये चैव (for तथैव)

13 G3 om 13 (cf v.l 12) — $^{c}$) S (G3 om) तु शर्वर्यां (for रजन्या वै) B3 D1.3 4 तु (for वै) K (except K4) D2 प्रभातामेव रजनीं — $^{d}$) D1 युद्धमेव, D3 4 युद्धमेतद्, D10 द्वंद्वयुद्ध (for इद युद्ध) — After 13, only Dn ins a colophon !!

14 $^{a}$) K4 B Dn Ds D2 6 8 10 तवा(K4 °च)ख्याता°, D1 तु सख्या°, D7 सुसख्या° (for ते सख्या°) — T2 G2 om. 14$^{cd}$ — $^{c}$) K3 D2 तया च (for ये चापि)

C 5. 5850 B 5. 169. 1 K 5. 169. 1

ये चाप्यर्धरथा राजन्पाण्डवानामतः शृणु ॥ १४
यदि कौतूहलं तेऽद्य पाण्डवानां बले नृप ।
रथसंख्यां महाबाहो सहैभिर्वसुधाधिपैः ॥ १५
स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः ।
अग्निवत्समरे तात चरिष्यति न संशयः ॥ १६
भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसंमितः ।
नागायुतबलो मानी तेजसा न स मानुषः ॥ १७
माद्रीपुत्रौ तु रथिनौ द्वावेव पुरुषर्षभौ ।
अश्विनाविव रूपेण तेजसा च समन्वितौ ॥ १८
एते चमूमुखगताः स्मरन्तः क्लेशमात्मनः ।
रुद्रवत्प्रचरिष्यन्ति तत्र मे नास्ति संशयः ॥ १९
सर्व एव महात्मानः शालस्कन्धा इवोद्गताः ।
प्रादेशेनाधिकाः पुम्भिरन्यैस्ते च प्रमाणतः ॥ २०
सिंहसंहननाः सर्वे पाण्डुपुत्रा महाबलाः ।
चरितब्रह्मचर्याश्च सर्वे चातितपस्विनः ॥ २१
ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः ।
जवे प्रहारे संमर्दे सर्व एवातिमानुषाः ।
सर्वे जितमहीपाला दिग्जये भरतर्षभ ॥ २२
न चैषां पुरुषाः केचिदायुधानि गदाः शरान् ।
विषहन्ति सदा कर्तुमधिज्यान्यपि कौरव ।
उद्यन्तुं वा गदां गुर्वीं शरान्वापि प्रकर्षितुम् ॥ २३
जवे लक्ष्यस्य हरणे भोज्ये पांसुविकर्षणे ।
बालैरपि भवन्तस्तैः सर्व एव विशेषिताः ॥ २४
ते ते सैन्यं समासाद्य व्याघ्रा इव बलोत्कटाः ।

---

15 $^{a}$) K3 S तेस्ति (for तेऽद्य) — $^{b}$) S निबोध मे (for बले नृप) — $^{c}$) K3.4 B D (except D1.2 7) शृणुष्व त्व (for महा°) — $^{d}$) K5 सर्वैश्च (for सहैभिर्)
16 $^{b}$) T1 G3 M1.3 कुरु° (for कुन्ति°). — $^{c}$) D2 काल° (for अग्नि°) — $^{d}$) D3-4 भवि° (for चरि°)
17 $^{b}$) K1.2 5 G1-3 रथोष्टगुणसमत, K3 B2 D1 2 7 रथो मेष्टगुणो मत, Ds2 रथोष्टबलसमित — After 17$^{ab}$, B2 Dn ins

567* न तस्यास्ति समो युद्धे गदया सायकैरपि ।

— $^{c}$) K1.2 5 °समो (for °बलो) K3 D1 2 7 धीमान् (for मानी)
18 $^{a}$) K5 तौ, B (except B1) Dn Ds D2-4 8 च (for तु) — $^{b}$) K1.5 D1 T1 पुरुषर्षभ, K2 3 D7 G3 भरतर्षभ
19 $^{a}$) D2 चमूमुखगतौ, M2 चमूमुपगता — $^{b}$) D2 स्मरतौ; G1 ससरन् K4 B D (except D1.2 7) उत्तम (for आत्मन) — $^{c}$) K3 D1 2 काल° (for रुद्र°) K5 Dn1 विचरिष्यंति, D2 प्रचरिष्येते, D3.4 प्रपतिष्यति — $^{d}$) K1.2 अत्र (for तत्र)
20 $^{a}$) K3 एते (for एव) D1 2 7 महोत्साहा (for महा°) — $^{b}$) K4 B D (except D1 2 7 8) शालस्तंभा, S (mostly) सालस्कधा G2 उन्नता, G3 उद्यता — $^{c}$) K3 5 T1 M प्रादेशात्, D3 4 प्रदेशेन, T2 G2 5 प्रादेशं, Ca d प्रादेशेन (as in text) K (except K4) D1.2 7 पुम्भ्य (for पुम्भि). — $^{d}$) K1 2 D2 7 त्वन्येभ्य, K3 अन्येभ्य, K5 D7 ह्यन्येभ्य (for अन्यैस्ते) D3 4 सर्वे (for ते च) K3 D4 तु, D1 2 ते, S (except T1) [ऽ]थ (for च)
21 $^{a}$) K3 D7 सख्ये (for सर्वे) — $^{b}$) T1 °रथाः (for °बला) — $^{d}$) K4 B Dn Ds D3 4 6 8 10 तात; D1 2 T2 G2 5 चापि (for चाति-) D3 4 तरस्विन (for -तप°)
22 $^{b}$) = 25$^{b}$ D3 गजा (for व्याघ्रा) K3 T G1-3 मदो° (for बलो°) — $^{c}$) D1 ते वै (for जवे) — $^{e}$) K4 B D (except D1 7) T2 G1 2 सर्वैर्जिता महीपाला
23 $^{a}$) T2 G1 2 न चैषां पुरुष कश्चित् — $^{b}$) D4 om from नि up to रणे in 24$^{a}$ — $^{c}$) K3 Ds D1-3 7 विषहते K3 D1 2 तथा, K4 तदा, K5 यथा (for सदा) — $^{d}$) K4 Ds2 D3 6-8 G3.5 अधिज्यान्, Ca d अधिज्यानि (as in text) K3 D1.2 धनूपि च (D1 °ष्यपि), B2 प्रकर्षित (for [अ]पि कौरव) B4 5 T1 G3 भारत (for कौरव) — M2 om 23$^{e}$-25$^{d}$ — $^{e}$) D1 उद्धर्तुं, T2 G2 उधर्तीं, G3 उद्यता, Cnp उद्यतु K4 Dn1 Ds2 D3 6 8 गदा गुर्वीं B4 5 Dn2 D7 10 T1 उद्यतां (D7 °द्यत) वा गदा गुर्वीं — $^{f}$) K5 शर चापि (for शरान्वापि) K4 B D (except D2, D4 om) क्षेप्तुमाहवे, T G1 2 5 M3.4 विप्रकर्षितु (for [अ]पि प्रक°) Ca d cite प्रकर्षितु (as in text)
24 M2 om 24, D4 om up to रणे in 24$^{a}$ (cf v l 23) — 24$^{ab}$ = (var ) 1 119 15$^{ab}$ — $^{a}$) Some MSS लक्षस्य K3 5 B Cs लक्ष्य(or °क्ष)प्र(K5 B3 Cs लक्ष्याभि)हरणे, Ca d लक्षस्य हरणे (as in text) — $^{b}$) S (M3 om ) भेद्ये (G1 भोज्ये) वाय (G3 वासु) प्रकर्षणे Ca d s cite वेधे (Cs भोज्ये) पांसुविकर्षणे
25 M2 om 25 (cf v l 23) — $^{a}$) K3 एते, K4 B Dn Ds D3 4.6-8 10 एतत्, K5 तत्ते, D2 तत, T G

विध्वंसयिष्यन्ति रणे मा स्म तैः सह संगमः ॥ २५
एकैकशस्ते संग्रामे हन्युः सर्वान्महीक्षितः ।
प्रत्यक्षं तव राजेन्द्र राजसूये यथाभवत् ॥ २६
द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः ।
ते संस्मरन्तः संग्रामे विचरिष्यन्ति कालवत् ॥ २७
लोहिताक्षो गुडाकेशो नारायणसहायवान् ।
उभयोः सेनयोर्वीर रथो नास्तीह तादृशः ॥ २८
न हि देवेषु वा पूर्वं दानवेषूरगेषु वा ।
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु ॥ २९
भूतोऽथ वा भविष्यो वा रथः कश्चिन्मया श्रुतः ।
समायुक्तो महाराज यथा पार्थस्य धीमतः ॥ ३०
वासुदेवश्च संयन्ता योद्धा चैव धनंजयः ।
गाण्डीवं च धनुर्दिव्यं ते चाश्वा वातरंहसः ॥ ३१
अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी ।
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एव च ॥ ३२
याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः ।
वज्रादीनि च मुख्यानि नानाप्रहरणानि वै ॥ ३३
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
हतान्येकरथेनाजौ कस्तस्य सदृशो रथः ॥ ३४
एष हन्याद्धि संरम्भी बलवान्सत्यविक्रमः ।
तव सेनां महाबाहुः स्वां चैव परिपालयन् ॥ ३५
अहं चैनं प्रत्युदियामाचार्यो वा धनंजयम् ।
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि ।
य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी ॥ ३६
जीमूत इव घर्मान्ते महावातसमीरितः ।
समायुक्तस्तु कौन्तेयो वासुदेवसहायवान् ।
तरुणश्च कृती चैव जीर्णावावामुभावपि ॥ ३७

संजय उवाच ।

एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा ।
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः ॥ ३८
मनोभिः सह सावेगैः संस्मृत्य च पुरातनम् ।
सामर्थ्यं पाण्डवेयानां यथाप्रत्यक्षदर्शनात् ॥ ३९

C. 5. 5873
B. 5. 169. 23
K. 5. 163. 23

इति श्रीमहाभारते उद्योगपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

ते तु, Cd ते ते (as in text) — $^{b}$) = $22^{b}$ K4 B D (except D1. 2) सर्व एव (for व्यात्रा इव) K1 T1 G3 मत्तो° (for वलो°) — $^{c}$) G1 [अ]परान्, G2 नरान् (for रणे)

26 $^{a}$) K4 B (except B2) D (except D1. 2 7) समर्दे (for °ग्रामे) — $^{b}$) K2 transp हन्यु॰ and सर्वान् T2 G1. 2 सर्व॰ (for सर्वान्) — $^{c}$) K3 गावारे (for राजेन्द्र)

27 K2 om. (hapl.) 27 — $^{c}$) K4 B Dn Ds D3 4 6 8 10 स्मरतश्च, D7 तु स्मरंत॰, T2 G2 संस्मरति — $^{d}$) Ds D6 8 10 रुद्र° (for काल°) K4 B Dn चरिष्यंति च रुद्रवत्, D3 4 हन्यु॰ सर्वान्महीक्षित॰ (= $26^{b}$)

28 $^{c}$) K4 B D (except D2–4) T1 वीर॰ (for वीर) — $^{d}$) K3 D7 transp रथो and न K4 B (except B2) D (except D1. 2 7) [इ]ति, T1 हि (for [इ]ह)

29 $^{b}$) K1. 2 5 D2. 7 मानुषेषू°, K4 B Dn Ds D3 4. 6 8 10 मनुष्येषू°, D1 गधर्वेषू° K (except K3) D (except Ds D1. 2 10) च (for वा) — $^{c}$) D7 G1 च (for [अ]थ) — $^{d}$) D1 वा, D3 4 तत (for तु)

30 $^{a}$) K (except K4) D1. 2 भूतपूर्वो, D7 S (except G5) भूतो वाथ (for भूतोऽथ वा) — $^{b}$) D3. 4 न हि (for रथ॰) — $^{c}$) D3 4 अस्त्रयुक्त॰, Ca d s समा° (as in text) — $^{d}$) K4 B D (except D1. 2 7) रथ॰ (for यथा)

31 $^{a}$) K3 तु, K4 D6 8 G3 [अ]स्य (for च) D2 वासुदेवसमो बुध्वा, D3 4 वासुदेवो यत्र यता — $^{b}$) S रथश्चैवात्र तादृश॰

32 $^{a}$) Dn1 Ds G3 अभेद्यकवच G5 वर्म (for दिव्यम्) — $32^{b}$ = 1 216 $7^{d}$

33 $^{b}$) K3 गदा हस्तोग्रदर्शना, D3 T2 G1. 2 5 गदा चोग्रप्रदर्शना — $^{d}$) K3 B Dn D1. 3. 4 G1 च (for वै)

35 $^{a}$) B2 transp एष and हन्याद् — $^{b}$) S सत्यसंगर॰ — $^{c}$) K1 तत्र, K4 B3. 5 Ds D6 8 10 भवत्॰ (for तव) B5 सैन्य (for सेना) T2 G1. 2 महाबाहो — $^{d}$) K1 2 स्वा चैव D1 S (except G3 M2 5) परिपाल्यैव

36 $^{a}$) S (except T1 G3) वा (for च) K1. 5 B2 D7 S (except T1 G.) प्रत्युदीया (prob metr causa), Ca. d as in text — $^{b}$) K3 मां वा पार्थो धनजय॰ — $^{c}$) K3 D7 सेनयोरुभयोर्नान्य॰ (D7 °न्त्रि), B2 D2 तृतीयो मन्ये

# १६७

C. 5. 5879
B. 5. 170. 1
K. 5. 170. 1

भीष्म उवाच ।
द्रौपदेया महाराज सर्वे पञ्च महारथाः ।
वैराटिरुत्तरश्चैव रथो मम महान्मतः ॥ १
अभिमन्युर्महाराज रथयूथपयूथपः ।
समः पार्थेन समरे वासुदेवेन वा भवेत् ॥ २
लघ्वस्त्रश्चित्रयोधी च मनस्वी दृढविक्रमः ।
संस्मरन्वै परिक्लेशं स्वपितुर्विक्रमिष्यति ॥ ३
सात्यकिर्माधवः शूरो रथयूथपयूथपः ।
एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः ॥ ४
उत्तमौजास्तथा राजन्रथो मम महान्मतः ।
युधामन्युश्च विक्रान्तो रथोदारो नरर्षभः ॥ ५
एतेषां बहुसाहस्रा रथा नागा हयास्तथा ।
योत्स्यन्ते ते तनुं त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ॥ ६
पाण्डवैः सह राजेन्द्र तव सेनासु भारत ।
अग्निमारुतवद्राजन्नाह्वयन्तः परस्परम् ॥ ७
अजेयौ समरे वृद्धौ विराटद्रुपदावुभौ ।

---

राजेंद्र, D1 अन्यस्तृतीयो रा° — d) K8 D7 तृतीयो विद्यते पुमान्, B2 D1 2 सेनयोर्नास्ति कश्चन. — e) T G1 2 6 क (for य) — f) B2 सुचतम् (for वर्षन्तम्) T1 वली (for रथी).

37 ab) K1.2 5 T G1 3 5 M1 2 जीमूतम्, and °समीरित. — e) D5 च (for तु) — f) D7 transp जीर्णौ and आवा K1 2 5 वृद्धौ (for जीर्णौ) K1 2 S चावा (for आवा)

38 K4 5 B D M वैश° (for सजय) — b) K8 Ca वज्रसिरे, D2 M (except M1) विघ्नमिरे, D8 विद्दभिरे — c) D1 चित्रा (for पीना). — d) K1(before corr) 5 D2 °भूषिता, K8 °रुक्षिता

39 a) K1 2 6 D1 3 4 सहसोद्वेग (D3 4 °गा), K8 सहसोद्दिसे, K4 B Dn D8 D2 6-8 Ca d 8 सह सवेगै, D10 सदृश वेगै — b) G1 स सस्मृत्य पुरा° — c) K1-3 पाडुपुत्राणा (for पाण्ड°) — d) K1 2 तथा K1-3 5 G2 -दर्शिना, D3 4 दर्शन

Colophon D5 9 G1 missing — *Sub-parvan* K B Dn Ds1 D1-4. 6-8 10 रथातिरथसख्या (D1 °ख्यान), Ds2 रथाति, T1 M रथसख्या, G6 पाढवबलरथसख्यान — *Adhy name* T1 G5 M पाढवप्रशसन — *Adhy no* (figures, words or both) D6 59 (=159), T2 G M4 168, G1 6 M3 5 169, G3 166, M1 2 167 (as in text) — *S'loka no* K5 41, Dn1 28

## 167

1 a) T2 G2 महाभागा (for °राज) — b) K1 2 5 चैव (for पञ्च) — d) = 5b, 5 168 16b K5 D2 T1 G3 महात्मन. (for °न्मत) K3 4 B Dn Ds D3 4 6 8 10 रथोदारो मतो मम (K4 महात्मन°), D7 स रथोति मतो मम

2 a) K4 B D (except D1 2 4) महाबाहु° (D1 7 °हो), T G °तेजा° (for °राज) — b) = 4b. — d) K1 2 D1 G3 चाभवत्; K4 B Dn Ds D3 4 6-8 10 चारिहा (for वा भवेत्)

3 a) K3-5 D1 6 7 लघ्वाखश्चित्र°; G3 अस्त्रनिश्चित्र° — b) G3 तेजस्वी (for मन°) K4 B Dn Ds D6 8 10 च दृढमत (for दृढ°) — d) K1 2 3 सर्वथा, K8 D1.2 7 पैतृक, D5 पितृवद्, T G M4 स पित्र्य, M1-3 5 समरे (for स्वपितुर्)

4 4b = 2b — c) D2.4 एष वृष्णिपतिर्वीर° — d) K4 D3.4 सामर्षो (for अमर्षी) K1 2 5 D7 गतसाध्वस°

5 a) K1 2 5 D1 T2 G3 महाराज (for तथा राजन्) — b) = 1d, 5 168 16b. K3 5 D2 G3 महामन° (for °न्मत°) K4 B Dn Ds D3 4 6 8 10 रथोदारो मतो मम, G1 मतो मम महारथ Ds om 5cd — d) K (except K3) D3 4 6 8 10 M3 5 नरर्षभ, B (except B2) Dn मतो मम

6 a) G1 °साहस्रान् — b) D1 2 7 T1 G3 transp हया and तथा T2 हया नागा रथास्तथा, G1 रथान्नागान्हया स्तथा, G2 हया नागास्तथा रथा°, G5 हयनागरथास्तथा — c) K (except K4) B Dn2 D2-4 7 M4 तनूस्, T2 G1 3 धन (for तनु) The reading तनूस्त्यक्त्वा of some printed ed. is not supported by any MS ! — d) K8 D7 °हितेप्सया

7 a) D7 पाडवै सहिता राजन् — d) D3 4 आपतत° (for आह्व°)

8 D4 om from 8b up to क्षत्रधर्म (in 9b) — b) K3 B Dn Ds D6.8 10 तथा (for उभौ) — D1 om (hapl) 8c-10d

महारथौ महावीर्यौ मतौ मे पुरुषर्षभौ ॥ ८
वयोवृद्धावपि तु तौ क्षत्रधर्मपरायणौ ।
यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ॥ ९
संबन्धकेन राजेन्द्र तौ तु वीर्यबलान्वयात् ।
आर्यवृत्तौ महेष्वासौ स्नेहपाशसितावुभौ ॥ १०
कारणं प्राप्य तु नराः सर्व एव महाभुजाः ।
शूरा वा कातरा वापि भवन्ति नरपुंगव ॥ ११
एकायनगतावेतौ पार्थेन दृढभक्तिकौ ।
त्यक्त्वा प्राणान्परं शक्त्या घटितारौ नराधिप ॥ १२
पृथगक्षौहिणीभ्यां तावुभौ संयति दारुणौ ।
संबन्धिभावं रक्षन्तौ महत्कर्म करिष्यतः ॥ १३
लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत ।
प्रत्ययं परिरक्षन्तौ महत्कर्म करिष्यतः ॥ १४

इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

## १६८

भीष्म उवाच ।
पाञ्चालराजस्य सुतो राजन्परपुरंजयः ।
शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत ॥ १
एष योत्स्यति संग्रामे नाशयन्पूर्वसंस्थितिम् ।
परं यशो विप्रथयंस्तव सेनासु भारत ॥ २
एतस्य बहुलाः सेनाः पाञ्चालाश्च प्रभद्रकाः ।

C. 5. 5905
B. 5. 171. 3
K. 5. 171. 3

9 D1 om 9, D4 om up to क्षत्रधर्म (cf v 1 8) — a) K3 च तौ, K4 B D (except D7, D1.4 om) हि तौ (for तु तौ) T2 G2 °द्धौ वीरवृत्त्यौ
10 D1 om 10 (cf v 1 8) — a) K2 5 D. 7 10 साबधिकेन — b) K1 4 D2 S न तु, K2 क्षत्र; D7 तथा (for तौ तु) K2 2 D7 °बलाश्रयात — c) K Dn1 Ds D2-8 10 आर्यमतौ — d) K4 स्नेहवीर्य स्थितौ, B Dn1 Ds D6 °वीर्यमितौ (B2 °पाल्यितौ), D3 °वीर्यान्वितौ, D4 °वीर्यान्वितौ, D7 8 G2 °पाशान्वितौ, D10 °वीर्यान्वितौ, T2 G1.2 5 °पाशयुतौ, M (except M2) °पाशान्वितौ Dn2 त्यक्तात्मानौ च भारत (= 14b)
11 a) K (except K4) D1 2 7 हि (for तु) — b) D1 2 4 महाभुज — d) K (except K4) D2 G1 2 5 नरपुंगवा, B Dn Ds D2 4 6 8 10 T1 कुरुपुंगव (Ds °वा)
12 a) K2 S चोभौ, D1 2 8 चैतौ (for एतौ) — b) K2 D1 7 M1 2 पार्थ च, K4 पार्थानां, B Dn Ds D1 6 8 10 पार्थिवौ K1 G6 M दृढभक्तिनौ, B D (except D1 2 4 7) T2 G1.2 दृढभक्तिनौ — c) B Dn Ds D6 8 10 transp त्यक्त्वा and प्राणान — d) K4 B Dn Ds D10 M1 (inf lin) Ca घटितारौ, D3 4 विजेतारौ, Cd as in text K2-5 B D परंतप (for नरा°)
13 a) A few S MSS अक्षो° — b) D3 4 दारुणे — d) = 14d, 5 163 16d M2-5 महायुद्ध (for महत्कर्म)
14 K (except K4) Ds2 D2 T2 G1 5 om (hapl) 14, G2 om 14cd — d) = 13d, 5 163 16d

Colophon om in K2 Ds 9 G4 missing — *Sub-parvan* K1.2 4 5 B1 3-5 Dn Ds D1-4 6-8 10 रथातिरथसंख्या (D1 °सत्यान), T1 G5 M4 5 रथसंख्या (G4 °सत्यान) — *Adhy name* T1 M1-3 5 पाण्डवसेना महारथपरि(T1 om परि)गणन, G5 M4 पाण्डवमहारथगणन — *Adhy no* (figures, words or both) T G2 M4 169, G1 M1 2 168, G3 167, G5 M3 5 170 — *S'loka no* K3 13, Dn1 14

168

1 a) Some MSS पञ्चाल° — c) K (except K4) [S]सौ (for मे) — d) K3 B2 D1 धीमत (for भारत) M1 (inf lin) मत पार्थिवसत्तम — After 1, T1 G5 read 4cd, *repeating* it in its proper place
2 b) B2 5 Dn2 D2 S Cn पूर्वस(T2 °त)स्थित, Ca d s पूर्वसंस्थिति (as in text) — c) K (except K4) D1 2 7 वरीयस°; S वैर योत्सौ, Ca d यवीयस (for पर यशो) K (except K4) [S]पि प्रथम, D7 विद्रवयन्, T1 G1 5 सम्प्रथयन्, T2 G2 समथते, M2-5 प्रथयति, Ca d विप्रथयन् (as in text)
3 D1 om 3ab — a) G3 °स्य बहव सैन्या — b) = 5 56 33d, (var) 149 50c (prior pāda!) K (except K4) D2 T1 G3 M पा(*or* प)चालाना (for °श्च) — 3d = 9d

C. 5. 5895
B. 5. 171 3
K. 5. 171 3

तेनासौ रथवंशेन महत्कर्म करिष्यति ॥ ३
धृष्टद्युम्नश्च सेनानीः सर्वसेनासु भारत ।
मतो मेऽतिरथो राजन्द्रोणशिष्यो महारथः ॥ ४
एष योत्स्यति संग्रामे सूदयन्वै पराञ्रणे ।
भगवानिव संक्रुद्धः पिनाकी युगसंक्षये ॥ ५
एतस्य तद्रथानीकं कथयन्ति रणप्रियाः ।
बहुत्वात्सागरप्रख्यं देवानामिव संयुगे ॥ ६
क्षत्रधर्मा तु राजेन्द्र मतो मेऽर्धरथो नृप ।
धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः ॥ ७
शिशुपालसुतो वीरश्चेदिराजो महारथः ।
धृष्टकेतुर्महेष्वासः संबन्धी पाण्डवस्य ह ॥ ८
एष चेदिपतिः शूरः सह पुत्रेण भारत ।
महारथेनासुकरं महत्कर्म करिष्यति ॥ ९
क्षत्रधर्मरतो मह्यं मतः परपुरंजयः ।
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः ।
जयन्तश्चामितौजाश्च सत्यजिच्च महारथः ॥ १०
महारथा महात्मानः सर्वे पाञ्चालसत्तमाः ।
योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः ॥ ११
अजो भोजश्च विक्रान्तौ पाण्डवेषु महारथौ ।
पाण्डवानां सहायार्थे परं शक्त्या यतिष्यतः ।
शीघ्रास्त्रौ चित्रयोद्धारौ कृतिनौ दृढविक्रमौ ॥ १२
केकयाः पञ्च राजेन्द्र भ्रातरो युद्धदुर्मदाः ।
सर्वे एते रथोदाराः सर्वे लोहितकध्वजाः ॥ १३
काशिकः सुकुमारश्च नीलो यश्चापरो नृपः ।
सूर्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः ॥ १४
सर्वे एते रथोदाराः सर्वे चाहवलक्षणाः ।
सर्वास्त्रविदुषः सर्वे महात्मानो मता मम ॥ १५
वार्धक्षेमिर्महाराज रथो मम महान्मतः ।

---

4 T1 G5 read $4^{cd}$ for the first time after 1 — $^{d}$) K8 महाबल°, D7 °मना° (for °रथ )

5 $^{b}$) T G2 3 5 M बहून् (for रणे) G1 सूदयिष्यन्बहून्परान् — $^{d}$) K4 D2 7 T2 G2 M1 2 पिनाकीव युगक्षये

7 $^{a}$) D1 2 G2 कृतवर्मा, D7 T G1 3 5 M धृतवर्मा (for क्षत्र°) D3 4, 7 च (for तु) — $^{b}$) K3 मेतिरथो, M1 2 ह्यर्धरथो (for मेऽर्ध°) T2 G1 2 5 महान्, M मम (for नृप) D3. 4 मतो मे रथसत्तम°, T1 G3 समतोर्धरथो मम

8 $^{a}$) D3 4 °पालस्य च सुत°

9 $^{c}$) K4 B D (except D1) महारथाना सुकर (D3. 4 प्रवर°), T G2 महारथे(T1 °थो)न सुक्र — $9^{d} = 3^{d}$

10 $^{a}$) K4 S क्षत्रधर्मा मतो, B3 Ds D1. 6–8 10 क्षत्रधर्मा रथो K2 T2 G2 नित्य, K5 ह्येव, D3 4 सत्य° (for मह्य) — $^{b}$) S रथः (for मत°) — $^{f}$) K4 सात्यकिश्च (for सत्य°)

11 $^{a}$) T1 महेष्वासा (for महात्मान°) — $^{b}$) K4 D3 पचाल° — $^{c}$) K3 S (except T2 G1. 2) योत्स्यति — $^{d}$) T1 G3 सनद्धा (for सरब्धा)

12 $^{a}$) K4 अजो भोजौ, D3 4 कुतिभोजौ (for अजो भोजश्च) — $^{b}$) B1 2 4 5 Dn Ds D6 3. 10 पाडवार्थे (for °वेषु) D1 रथोत्तमौ (for महा°) B3 महत्कर्म करिष्यति (= $3^{d}$, $9^{d}$). — After $12^{ab}$, B3 ins

568* लोकवीरौ महेष्वासौ त्यक्तात्मानौ महारथौ ।

— Ds2 om $12^{c}$–$13^{b}$ — D3 reads $12^{cd}$ twice (for v l see below) — $^{c}$) D1 सहायार्थ, D3. 4 महाबाहो B Dn Ds1 D6 3 (first time) 10 योत्स्येते बलिनौ शूरौ — $^{d}$) B Dn Ds1 D3 4 6 3 (first time) 10 क्षयिष्यत° (for यति°) K (except K3) D3 (second time) महत्कर्म करिष्यत° (= 5 163 $16^{d}$, 167 $14^{d}$). — $^{e}$) B Dn Ds1 D6 10 शीघ्रास्त्राश्चित्रयोद्धार° — $^{f}$) K4 D7 कृतिनौ दृढधन्विनौ, B Dn Ds1 D6 10 °नो दृढविक्रमा°

13 D3 D6 om $13^{ab}$ (for Ds2 cf v l 12) — $^{a}$) Some N MSS कैकया° and कैकेया° — $^{b}$) D6 3 कृतास्त्रा (for भ्रातरो) B (except B6) Dn D10 दृढविक्रमा, T1 युधि दुर्मदा° — D1 om $13^{c}$–$14^{d}$ — $^{c}$) K3 B Dn D3 D6 10 चैव, D2 7 M1. 2 एव (for एते)

14 D1 om 14 (cf v l 13) — $^{a}$) K1 T2 G2 3 कौशिक°. — $^{b}$) K1 2 नीलायु° (for नीलो य°) K5 B2 4 5 D (except Dn1 D2. 7 3, D1 om ) नृप (for नृप°) — $^{c}$) K5 स्वर्गदश्च शखदश्च — $^{d}$) K1 2 मदिराख्य°, K3 G5 मदिराक्ष°

15 $^{a}$) K3 transp सर्वे and एते B4 Dn2 D1. 3 4 T2 G1. 3 एव (for एते) K4 महोदारा°, D7 महावीर्या° (for रथो°) — $^{b}$) K1 2 5 सर्वे च कृतलक्षणा, B2 सर्वे चाछिद्र°; T1 G2 5 सर्वे चाहित°; T2 M सर्वे चाहव°, G3 सर्वे चाहवशोभिन°

16 $^{a}$) D3 T2 G2 वार्धक्षेमी. — $^{b}$) = 5 167 $1^{d}$, $5^{b}$.

चित्रायुधश्च नृपतिर्मतो मे रथसत्तमः ।
स हि संग्रामशोभी च भक्तश्चापि किरीटिनः ॥ १६
चेकितानः सत्यधृतिः पाण्डवानां महारथौ ।
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम ॥ १७
व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत ।
मतौ मम रथोदारौ पाण्डवानां न संशयः ॥ १८
सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः ।
यः समो वासुदेवेन भीमसेनेन चाभिभूः ।
स योत्स्यतीह विक्रम्य समरे तव सैनिकैः ॥ १९
मां द्रोणं च कृपं चैव यथा संमन्यते भवान् ।
तथा स समरश्लाघी मन्तव्यो रथसत्तमः ॥ २०
काश्यः परमशीघ्रास्त्रः श्लाघनीयो रथोत्तमः ।
रथ एकगुणो मह्यं मतः परपुरंजयः ॥ २१
अयं च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः ।
सत्यजित्समरश्लाघी द्रुपदस्यात्मजो युवा ॥ २२
गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन संमितः ।
पाण्डवानां यशस्कामः परं कर्म करिष्यति ॥ २३
अनुरक्तश्च शूरश्च रथोऽयमपरो महान् ।
पाण्ड्यराजो महावीर्यः पाण्डवानां धुरंधरः ॥ २४
दृढधन्वा महेष्वासः पाण्डवानां रथोत्तमः ।
श्रेणिमान्कौरवश्रेष्ठ वसुदानश्च पार्थिवः ।
उभावेतावतिरथौ मतौ मम परंतप ॥ २५

C. 5. 5920
B. 5. 171 27
K. 5. 171 27

इति श्रीमहाभारते उद्योगपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

B1. 2 . Dn Ds D2 (m as in text) 6 10 मतो मम महारथ°, B3 4 मतो मे रथयूथप, D3 4 प्रख्यात° स महारथ° — D7 om (hapl ) $16^{d}$–$17^{a}$. — $^{d}$) K3 Dn1 D8 T1 नृपमत्तम° (K3 °म) — $^{e}$) K संग्रामशौं(or °सौं)डीर° (K4 °लोभी च), D1 G3 °योधी च — K5 om $16^{f}$–$17^{e}$. — $^{f}$) B1–3 Dn1 Ds D6 किरीटिने, M °नि — After 16, T G1 2 read $19^{ab}$ (G1 *repeating* the line in its proper place)

17 K5 om $17^{abc}$, D7 om $17^{a}$ (cf. v l 16) G3 reads $17^{ab}$ after $19^{ab}$ — $^{b}$) K (K5 om ) D1 2 7 G1 M (except M1) महारथ — Ds2 G3 om $17^{cd}$ — $^{c}$) D3 4 पुरुषव्याघ्र — $^{d}$) K1.2 6 पाढवाना (for रथोदारौ) D2.4 मतिर् (for मतौ)

18 D6 om $18^{a}$–$19^{b}$ — $^{b}$) T G1–3 शम्बदत्त° (for चन्द्रसेन°) K3 4 D1 2 7 8 पार्थिव (for भारत) — $^{d}$) M1. 2 महारथौ (for न संशय°)

19 D6 om $19^{ab}$ (cf v l 18) T G1 2 read $19^{ab}$ after 16 (G1 *repeating* it here with v l ) — $^{a}$) G1 (second time) सेनाबिधु° — $^{b}$) K4 D8 क्रोधहर्ता K1 2 तु (for च) K1 5 D1 2 7 8 महारथ (for च नामत°) — After $19^{ab}$, G3 reads $17^{ab}$ — $^{d}$) K5 बलदेवेन (for भीम°) K1. 2 6 वा विभु°, K4 D3 4 भारत, B Dn Ds D6 8 10 वा विभो, T1 G1 6 वाभिभू — $^{e}$) K3 D2–4 योत्स्यते K3 B D (except D1 7) T2 G1 2 5 हि (for [इ]ह) M1 2 स हि योत्स्यति विक्रम्य — $^{f}$) K1 2 M1. 2 सह (for तव)

20 $^{a}$) K2–5 B D (except D1 7) T2 G2 5 transp द्रोण and च — $^{c}$) K1 2 5 हि (for स)

21 K1 2 om $21^{ab}$ — $^{a}$) T2 काश्यप° परमस्तात — $^{b}$) K5 महारथ , B D (except D1 2 7) नरो° (for रथो°) — $^{d}$) K4 B D (except D1–4 7) ज्ञेय° (for मत°)

22 $^{b}$) K1 2 5 मम, K4 M5 मत (for रथ ) — $^{c}$) K1 परम° (for समर°)

23 $^{b}$) Dn1 D2–4 T G2 3. 5 समत°

24 $^{a}$) K4 अनुरूपश्च — $^{b}$) T G2 5 रथो य° परमो महान् — $^{c}$) G1 3 पाढ्यो राजा K4 D7 T G महाराज — $^{d}$) K1 2 D3 4 धनुर्धर° (for धुर°)

25 $^{b}$) Dn Ds D6 8 10 महारथ° (for रथो°) — $^{d}$) K1 2 5 वसुदानोथ, T2 G2 3 °धानश्च, M5 °मानश्च K5 वाह्लिक , Ds1 D6 7 पार्थिव — $^{f}$) D1 T G परतपौ B Dn Ds D6 8 10 मतौ परपुरजय (B2 मम न सशय°, Dn2 D8 परपुरजयौ) — After 25, D8 ins

569* अन्यौ विराटस्य सुतौ शङ्खश्वेतौ महारथौ ।
पाण्डवाना सहायार्थे महत्कर्म करिष्यत° ।

Colophon om in K5 D5 9 G4 missing — *Sub-parvan* K1–4 B Dn Ds D1–4 6–8 10 रथातिरथ सख्या, T1 G5 M रथसख्या — *Adhy name* T1 M रथातिरथसख्यान (T1 °गणन, M5 °कथन) — *Adhy no* (figures, words or both) D6 (*sec m* ) 51 (=151), T G2 M4 170, G1 5 M3 5 171, G3 168, M1 2 169 — *S'loka no* Dn1 26

## १६९

C. 5. 5921
B. 5. 172. 1
K. 5. 172. 1

भीष्म उवाच ।

रोचमानो महाराज पाण्डवानां महारथः ।
योत्स्यतेऽमरवत्संख्ये परसैन्येषु भारत ॥ १
पुरुजित्कुन्तिभोजश्च महेष्वासो महाबलः ।
मातुलो भीमसेनस्य स च मेऽतिरथो मतः ॥ २
एष वीरो महेष्वासः कृती च निपुणश्च ह ।
चित्रयोधी च शक्तश्च मतो मे रथपुंगवः ॥ ३
स योत्स्यति हि विक्रम्य मघवानिव दानवैः ।
योधाश्चास्य परिख्याताः सर्वे युद्धविशारदाः ॥ ४
भागिनेयकृते वीरः स करिष्यति संगरे ।
सुमहत्कर्म पाण्डूनां स्थितः प्रियहिते नृपः ॥ ५
भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः ।
मतो मे बहुमायावी रथयूथपयूथपः ॥ ६
योत्स्यते समरे तात मायाभिः समरप्रियः ।
ये चास्य राक्षसाः शूराः सचिवा वशवर्तिनः ॥ ७
एते चान्ये च बहवो नानाजनपदेश्वराः ।
समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः ॥ ८
एते प्राधान्यतो राजन्पाण्डवस्य महात्मनः ।
रथाश्चातिरथाश्चैव ये चाप्यर्धरथा मताः ॥ ९
नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप ।
महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना ॥ १०
तैरहं समरे वीर त्वामायद्भिर्जयैषिभिः ।
योत्स्यामि जयमाकाङ्क्षन्नथ वा निधनं रणे ॥ ११
पार्थं च वासुदेवं च चक्रगाण्डीवधारिणौ ।
संध्यागताविवार्केन्दू समेष्ये पुरुषोत्तमौ ॥ १२
ये चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः ।
सहसैन्यानहं तांश्च प्रतीयां रणमूर्धनि ॥ १३
एते रथाश्चातिरथाश्च तुभ्यं

---

**169**

1 [b]) G3 महात्मना (for °रथ ) — [d]) K2 m. 3 4 D7 वच (for पर )

2 [a]) K1-3 पुरजित् — [b]) K4 B4 D1 2 T1 G6 M महारथ°, G3 महाबलौ (inf lin °रथौ) — [d]) K1 2 ममातिरथो, K2 मे भाति रथो (for च मेऽति°)

3 [a]) D2 महोत्साह° (for महे°) — [b]) K6 तथा (for च ह) B2 D1 कृती च कृतनि°श्रम (B2 °निश्चय ) — [c]) K1 2 6 प्राज्ञ° (for शक्त°) — [d]) K1 2 B1 रथसत्तम

4 [a]) D3 4 योत्स्यते G3 M3 [ह]ह (for हि) — [b]) K (except K4) दानवान् (for °वैः ) T2 देवानामिव वासव° — [c]) M3-5 योधास्त् B Dn Ds D6 8 10 योधा वै चास्य विख्याता°, D3 4 योधाश्चैव प्रसं°

5 [a]) K1 2 6 D2 G1 M वीर, T G2 3 6 कर्म (for वीर°) — [b]) K3 B2 D1 M3 4 (inf lin as in text) 5 समर, K4 वै रण; T1 G3 संयुगे K6 समरे स करिष्यति, D3 4 करिष्यति स संगर — [c]) B2 पार्थानां (for पाण्डू°) D10 महत्कर्म पांडवाना — [d]) K1 4 6 D3 4 T G1 नृप, K2 3 B Dn Ds D6-8 10 रत (for नृप )

6 [a]) G3 महातेजा (for °राज) — [b]) MSS (indiscriminately) हैडम्ब, हिडिंब°, हिडम्ब

7 [b]) B Dn Ds D6 8 10 मायावी (for °भि ). K3 D7 दिव्यैरस्त्रैर्महारथ°, K4 मायावी समरेषु य.. — [c]) K3.4 D1-4 7 चान्ये, G3 वास्य (for चास्य) K3 4 B D वीरा°, T2 सर्वे (for शूरा.) — [d]) Dn1 T1 सर्वे च (for सचिवा)

9 [c]) K4 D7 ये च (for चैव) — K6 om 9[d]-11[d] — [d]) B D (except D1-4 7) चान्येर्ध°. B D (except D1 2 7) नृप (for मता°)

10 K6 om 10 (cf v l 9) — [ab]) M1 2 transp सेनां and भीमा D3 4 दौर्योधनीं (for यौधि°) — [c]) K1 2 D7 माहेंद्रेण. K1 2 Dn1 D7 8 च (for [इ]व). K1 2 धीरेण; M3-5 वीर्येण.

11 K6 om 11 (cf v l. 9) — [b]) K1 2 त्वमाया भिर्, B Dn Ds D6-8 10 मायाविद्भिर्, D1 2 अमायाभिर्, T G1 2 त्वाह्वयद्भिर्, G3 मानयद्भिर् K4 D3 4 मायया विजयैषिभि° — [d]) D6 न च वा, D7 अथास्तु (for अथ वा)

12 [a]) B (except B2) Dn Ds D6 8 10 transp पार्थं and वासुदेव — [b]) D1 गांडीवचक्रधा° — [d]) B Dn Ds D6 8 समेष्येते (Ds °ष्येति; D6 8 °ष्ये तौ) रथोत्तमौ

13 [a]) K1 T1 M [ए]ते; Ds [अ]ति° (for ते) K3 ये चाप्यन्ये रथो°, T2 G2 6 एते चैव रथो°. — [c])

यथाप्रधानं नृप कीर्तिता मया ।
तथा राजन्नर्धरथाश्च केचि-
त्तथैव तेषामपि कौरवेन्द्र ॥ १४
अर्जुनं वासुदेवं च ये चान्ये तत्र पार्थिवाः ।
सर्वानावारयिष्यामि यावद्द्रक्ष्यामि भारत ॥ १५
पाञ्चाल्यं तु महाबाहो नाहं हन्यां शिखण्डिनम् ।
उद्यतेषुमभिप्रेक्ष्य प्रतियुध्यन्तमाहवे ॥ १६
लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया ।
प्राप्तं राज्यं परित्यज्य ब्रह्मचर्ये धृतव्रतः ॥ १७
चित्राङ्गदं कौरवाणामहं राज्येऽभ्यषेचयम् ।
विचित्रवीर्यं च शिशुं यौवराज्येऽभ्यषेचयम् ॥ १८
देवव्रतत्वं विख्याप्य पृथिव्यां सर्वराजसु ।
नैव हन्यां स्त्रियं जातु न स्त्रीपूर्वं कथंचन ॥ १९
स हि स्त्रीपूर्वको राजञ्शिखण्डी यदि ते श्रुतः ।
कन्या भूत्वा पुमाञ्जातो न योत्स्ये तेन भारत ॥ २०
सर्वांस्त्वन्यान्हनिष्यामि पार्थिवान्भरतर्षभ ।
यान्समेष्यामि समरे न तु कुन्तीसुतान्नृप ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ समाप्तं रथातिरथसंख्यापर्व ॥

## १७०

दुर्योधन उवाच ।
किमर्थं भरतश्रेष्ठ न हन्यास्त्वं शिखण्डिनम् ।
उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् ॥ १
पूर्वमुक्त्वा महाबाहो पाण्डवान्सह सोमकैः ।

C. 5. 5913
B. 5. 173. 2
K. 5. 173. 2

S समेष्ये (G1. 3 °ता) (for प्रतीया)

14 b) K1 G5 M1 (*inf lin* as in text) 2 °प्रधाना K1. 3 5 D1. 2 7 मे, K2 4 D3 4 ते (for मया) — c) B Dn Ds D6 10 [अ]परे ये (for राजन्)

15 K5 om 15 — b) K2 Dn2 D8 पार्थिव, S पाडवा (for पार्थिवा) — c) K4 B D (except D1 2. 7) सर्वांस्तान्वार° — d) M (M1 *inf lin* as in text) यावद्द्रक्ष्ये शिखडिनम् Cnp भ्रक्ष्यामि (= शक्तिं धारयामि!)

16 a) K3 4 D7 8 च (for तु) K4 D2–4 महाबाहु — K5 om. 16c–17b — b) = 5 170 3d — c) B D (except D1. 2 7) उद्यतेषुमथो (D3. 4 °ह) दृष्ट्वा (= 5 170 1c)

17 K5 om 17ab (cf v l. 16) — a) K3 B4 5 Dn Ds1 D6 8 10 त (for तद्) — d) B2 4 Ds व्यवस्थित (for धृत°) K4 °चर्यं धृत व्रत, B1 3 5 Dn D6 8 10 °चर्यव्रते स्थित

18 K5 om. 18ab — b) K3 D1 7 महाराज्ये, B Dn Ds D6 8 10 आधिपत्ये (for अह राज्ये) K3 D1. 2 G3 5 M2 5 [अ]मिषेचय — T2 om (hapl) 18cd — d) K3 B2 D1 G5 M2 5 [ऽ]मि° (for ऽभ्य°)

19 a) K3 B Dn Ds2 D6–8 10 विज्ञाप्य, K5 S °ख्यात (for °ख्याप्य) — K5 om 19b — b) B3 5 Dn2 Ds1 पृथिवीं — K5 om. 19d — d) B Dn Ds D1 6 8 10 कदाचन

20 K5 om. 20b — c) K5 जाता, B5 भावी (for जातो) — K5 om 20d–21c

21 K5 om 21abc (cf v l 20), K1 om. 21ab — a) K4 अन्यान्, G5 चान्यान् (for त्वन्यान्) — b) K2 D3 4 समरे (for पार्थिवान्) — c) K2 m योद्धुमेष्यामि, K4 योद्धुमिच्छामि, D3 4 योधयिष्यामि (for यान्समे°) — d) K3 D8 रणे, D3 4 इति (for नृप) K2 m तत कुन्तीसुतानिति

Colophon D5 9 G4 missing — *Sub-parvan* K B Dn Ds D1–4 6–8 10 रथातिरथसख्या, T1 M1 2 5 रथसख्या K B1 3 4 Dn Ds D1 2 6 7 10 M1 2 cont समाप्त — *Adhy name* T1 रथातिरथसख्यान, M1 (marg) महारथगणनसमाप्ति° — *Adhy no* (figures, words or both) D6 (*sec m*) 52 (=152), T G2 M4 171, G1. 5 M3 5 172, G3 169, M1 2 170 — *S'loka no* K5 41, Dn 21

## 170

1 b) B Dn Ds D6. 10 Ca नैव हन्या° (for न हन्यास्त्व) — d) = 5 193 64d

2 a) K4 D6 8 उक्त (for उक्त्वा) — b) B3 5 Dn पा(*or* प)चालान्, T2 (before corr) G1 2 पार्थिवान्

C. 5. 5943
B. 5. 173. 2
K. 5. 173. 2

वधिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह ॥ २

भीष्म उवाच ।

शृणु दुर्योधन कथां सहैभिर्वसुधाधिपैः ।
यदर्थं युधि संप्रेक्ष्य नाहं हन्यां शिखण्डिनम् ॥ ३
महाराजो मम पिता शंतनुर्भरतर्षभः ।
दिष्टान्तं प्राप धर्मात्मा समये पुरुषर्षभ ॥ ४
ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् ।
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषेचयम् ॥ ५
तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः ।
विचित्रवीर्यं राजानमभ्यषिञ्चं यथाविधि ॥ ६
मयाभिषिक्तो राजेन्द्र यवीयानपि धर्मतः ।
विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत ॥ ७
तस्य दारक्रियां तात चिकीर्षुरहमप्युत ।
अनुरूपादिव कुलादिति चिन्त्य मनो दधे ॥ ८

तथाश्रौषं महाबाहो तिस्रः कन्याः स्वयंवरे ।
रूपेणाप्रतिमाः सर्वाः काशिराजसुतास्तदा ।
अम्बा चैवाम्बिका चैव तथैवाम्बालिकापरा ॥ ९
राजानश्च समाहूताः पृथिव्यां भरतर्षभ ।
अम्बा ज्येष्ठाभवत्तासामम्बिका त्वथ मध्यमा ।
अम्बालिका च राजेन्द्र राजकन्या यवीयसी ॥ १०
सोऽहमेकरथेनैव गतः काशिपतेः पुरीम् ।
अपश्यं ता महाबाहो तिस्रः कन्याः स्वलंकृताः ।
राज्ञश्चैव समावृत्तान्पार्थिवान्पृथिवीपते ॥ ११
ततोऽहं तान्नृपान्सर्वानाहूय समरे स्थितान् ।
रथमारोपयांचक्रे कन्यास्ता भरतर्षभ ॥ १२
वीर्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा ।
अवोचं पार्थिवान्सर्वानहं तत्र समागतान् ।
भीष्मः शांतनवः कन्या हरतीति पुनः पुनः ॥ १३

---

(for पाण्डवान्) B4 5 सहसोमकान्, Ca d as in text — c) K5 B D (except D1 7 8) T1 हनिष्यामि, G2 करि° (for वधि°) D8 4 च (for [इ]ति). — d) D1 M नो (for मे)

4 a) B1 4 महाबाहो (for °राजो) — b) B Dn Ds D8 4 6 10 शातनुर् K3-5 D1 2 7 T1 G1-3 M1 2 भरतर्षभ, B Dn Ds D6 8 10 लोकविश्रुत° — K8 D2 om (hapl ) 4cd — c) K5 दिष्ट्या त, Ca d दिष्टान्त (as in text) B Dn Ds D6 10 आप (for प्राप) — d) K2 M पुरुषर्षभः, K4 B D (D2 om.) भरतर्षभ

5 In Dn2, the portion from here up to 5 173 5 is lost on a missing fol (129) — b) K1 2 B2 Ds2 D1-4 G1 प्रति° (for परि°) — c) K4 भारत (for भ्रातर) K4 D7 च, S मे (for वै) — d) D8 माहाराज्ये, T1 यौवराज्ये.

6 Dn2 missing (of v l 5) — a) D1 T1 G3 5 तु (for च) — $6^{b}$ = 1 95 $5^{d}$, 96 $1^{d}$, $59^{d}$

7 Dn2 missing (of v l 5) — b) K3 D1 2 धार्मिक° सदा (K3 °कस्तथा), K5 अपि भारत (for अपि ध°)

8 Dn2 missing (of v l 5 ) — a) B2 5 चैव (for तात) — In B2, the portion from $8^{b}$ nearly up to the end of the foll adhy is lost on a missing fol. (232) — b) D6 8 अच्युत, S (except T1) उद्यत° (for अप्युत). — c) K3 D1 2 G2 Cd अनुकूलात्, Ca s अनुरूपात् (as in text) D7 रूपतः कुलतो वापि, T1 अनुरूपा नृपकुलात् — d) K1.2 4 5 D1 2 7 नित्य, K3 B (B2 missing) Dn1 Ds D8 4 6 8 10 [ए]व च (for चिन्त्य)

9 B2 Dn2 missing (of v l 8, 5) — a) K3 B5 Ds D1 6-8.10 T G2 3 5 M अथ (M1 2 तदा) (for तथा) S महाराज (for °बाहो) — b) K4 B (B2 missing) D (Dn2 missing) स्वयवरा° — c) K1.2 5 असदृशी° (for अप्रतिमा°) — d) D3 G3 काशी° — e) K4 B (B2 missing) D (except D7, Dn2 missing) अबा चैवाविका चैव — f) K5 D2 अवालिका तथा, B Dn1 Ds D8 4 6 8 10 °कामपि, M5 °कावरा (for °कापरा)

10 B2 Dn2 missing (of v l 8. 5). — d) K2 om तु — e) Ds D8 4 S तु (for च).

11 B2 Dn2 missing (cf v l 8, 5) — b) Ds1 T1 G1-3 काशीपते — d) T1 G1 5 स्वयवरे (for स्वलं°) — e) B (B2 missing) Dn1 Ds D6 8.10 समाहूतान्; Ca d समावृत्तान् (as in text).

12 B2 Dn2 missing (of v l 8, 5) — a) D3 4 transp अह and नृपान् — b) K1 2 समवस्थित ; K5 D7 समरे स्थित°, G3 °रे हि तान्

13 B2 Dn2 missing (cf v l 8, 5) — a) M3-5 तु (for च) K1 2 5 राजन्; K3 कन्या., D7 सर्वा (for ज्ञात्वा) — b) D3 4 G3 M1 2 स्वमा° (for समा°) T G1 3 तथा (for तदा)

14 B2 Dn2 missing (of v l 8, 5) — e) K1-3.5

ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः ।
प्रसह्य हि नयाम्येष मिषतां वो नराधिपाः ॥ १४
ततस्ते पृथिवीपालाः समुत्पेतुरुदायुधाः ।
योगो योग इति क्रुद्धाः सारथींश्चाप्यचोदयन् ॥ १५
ते रथैर्मेघसंकाशैर्गजैश्च गजयोधिनः ।
पृष्ट्यैश्चाश्वैर्महीपालाः समुत्पेतुरुदायुधाः ॥ १६
ततस्ते मां महीपालाः सर्व एव विशां पते ।
रथव्रातेन महता सर्वतः पर्यवारयन् ॥ १७
तानहं शरवर्षेण महता प्रत्यवारयम् ।
सर्वान्नृपांश्चाप्यजयं देवराडिव दानवान् ॥ १८
तेषामापततां चित्रान्ध्वजान्हेमपरिष्कृतान् ।
एकैकेन हि बाणेन भूमौ पातितवानहम् ॥ १९
हयांश्चैषां गजांश्चैव सारथींश्चाप्यहं रणे ।
अपातयं शरैर्दीप्तैः प्रहसन्पुरुषर्षभ ॥ २०
ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं मम ।
अथाहं हास्तिनपुरमायां जित्वा महीक्षितः ॥ २१
ततोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत ।
तच्च कर्म महाबाहो सत्यवत्यै न्यवेदयम् ॥ २२

C. 5. 5965
B. 5. 173. 23
K. 5. 173. 24

इति श्रीमहाभारते उद्योगपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

---

[अ]ह, K4 D1 [अ]मि- (for हि) B (B2 missing) Dn1 Ds D3 4 6 8 10 G3 5 हरा° (for नया°) — d) K3 (m as in text) भो (for वो) K3 4 B (B2 missing) Dn1 D6 8 10 नरर्षभा (for नरा°) Ds मिषता सर्वधन्विना (=5 160 8d), G2 °तां सर्वपार्थिवा°

15 B2 Dn2 missing (cf v.l 8, 5) D3.4 om. 15–16 — b) =16d K2 4 D7 अहंकृता°, D1.2 अलंकृता (for उदा°) S सर्व एव विशा पते — d) K1–3.5 D7 चाप्य(K3 °भ्य)नोदयन्, K4 B (B2 missing) Dn1 Ds D2 6 8 10 अभ्यचो(D8 10 °नो)दयन्, D1 T1 चापि (T1 चाम्य) चोदयन्, T2 G2 चाप्यरोचयन्

16 B2 Dn2 missing (cf v l. 8, 5) D3 4 om. 16 (cf. v l. 15) — a) K1 2 Dn1 Ds2 D1 2 8 वै (for ते) B1 8 Dn1 D10 गज° (for मेघ°) — c) K1 B (B2 missing) Dn1 D6 पुष्टै°, K2 तुष्टै°, K3 5 D2 श्रेष्ठै°, K4 ग्रामै°, Ds D8 पृष्टै°, D1 ग्रेष्यै°, D7 शीघ्रै°, D10 पार्ष्ण्यै°, T1 अश्वै°, T2 G उष्ट्रै°, M1.2 Cap पृष्टै°, M5 पृष्टे, Ca प्रष्टै° (for पृष्ट्यै°) K4 चाश्वैर्, G5 अश्वैर् (for चाश्वैर्) S महेष्वासा° (for मही°) — K4 om (hapl) 16d–17a — 16d=15b

18 B2 Dn2 missing (cf v l 8, 5) D2–4 8 T2 G2 5 om (hapl) 18ab — b) K4 B (B2 missing) Dn1 Ds D6 7 10 समतात् (for महता) N (except K3, B2 Dn2 missing, D2–4 8 om) पर्यवारय — After 18, B (B2 missing) Dn1 Ds D6 10 read 20cd

19 B2 Dn2 missing (cf v l 8, 5) — a) M3–5 आपततन् T2 G2 छत्र (for चित्रान्) — b) M3–5 रथान् (for ध्वजान्) — c) T G तु (for हि) K1 ततो यत्नेन महता, K3 4 D1.2 7 एकैनैकेन बाणेन

20 B2 Dn2 missing (cf v l. 8, 5) — a) K3 4 B (B2 missing) D (except D1.2 7, Dn2 missing) तेषा, M1.2 चैव (for चैषा) K3 D1.2 7 चापि (for चैव) — b) Ds Ca अहन (for अप्यह) — B (B2 missing) Dn2 Ds D6 10 read 20cd after 18 — c) M1.2 नरान्, M3–5 शरान् (for शरैर्) D1 तीव्रै, S चैव (for दीप्तै) — d) K1.2 5 प्रसभ, D3 4 प्रासरतान् (for प्रहसन्). K3 4 B (B2 missing) D (Dn2 missing) भरतर्षभ

21 B2 Dn2 missing (cf v l 8, 5) — a) D3 4 परिवृत्ता (for ते नि°) — b) Ds2 महत्; D10 च मे (for मम) — After 21ab, S (except M1.2) ins

570* प्रणिपेतुश्च सर्वे वै प्रशशासुश्च पार्थिवा ।
तत आदाय ता कन्या नृपतींश्च विसृज्य तान् ।

[(L 1) M3–5 वित्रस्ता (for सर्वे वै) — (L 2) G3 आहृत्य (for आदाय) T2 G2 ससृजयान् (for विसृज्य तान्) ]

— c) K5 Ds2 D6 8 तथा, D10 T1 तत (for अथ) G2 हास्तिनपुरे, a few MSS हस्तिन° (as usual). — d) T G1.3 5 अगा, Ca d आया (as in text) G2 मदान्छित्वा मही°

Colophon B2 Dn2 D5 9 G4 missing — *Sub-parvan* K B1 3–5 Dn1 Ds D1–4 6–8 10 G5 M अंबोपाख्यान — *Adhy name* M कन्याहरण — *Adhy no* (figures, words or both) D6 (sec m) 53, T G2 M4 172, G1 5 M3 5 173, G3 170, M1.2 171 — *S'loka no* K5 Dn1 24

## १७१

C. 5. 5930
B. 5. 174. 1
K. 5. 174. 1

भीष्म उवाच ।

ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसंगृह्य दाशेयीमिदमब्रुवम् ॥ १
इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्यशुल्का उपार्जिताः ॥ २
ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप ।
आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥ ३
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता ॥ ४
भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः ।
श्रुत्वा च धर्म्यं वचनं मह्यं कर्तुमिहार्हसि ॥ ५
मया शाल्वपतिः पूर्वं मनसाभिवृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥ ६
कथं मामन्यकामां त्वं राजञ्शास्त्रमधीत्य वै ।
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ॥ ७
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ ।
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥ ८
स मां प्रतीक्षते व्यक्तं शाल्वराजो विशां पते ।
कृपां कुरु महाबाहो मयि धर्मभृतां वर ।
त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् ॥ ९

इति श्रीमहाभारते उद्योगपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

### 171

☞ This adhy is missing in Dn2 (cf v l 5 170 5), B2 missing up to $9^{e}$ (cf v l 5 170 8).

1 B2 Dn2 missing (cf v l 1) — $^{c}$) B4 5 अभिवाद्य (for °गम्य) B4 5 G3 उपसगम्य, Ca d 3 उपसगृह्य (as in text) — $^{d}$) K Ds2 D7 10 दासेयीं, Ca d दाशेयी (as in text) K3 M1 2 अब्रव

2 B2 Dn2 missing (cf. v l 1) — $^{d}$) K (except K4) D7 वीर्यशुल्काद् B Dn1 Ds D3 4 6 8 10 हृता इति, D1 उपाहृता°, G3 उपस्थिता°

5 B2 Dn2 missing (cf v l 1) Before 5, D3 4 read अवोवाच — $^{a}$) D2–4 T2 G1–3 धर्मज्ञ D1 भीष्म त्वामपि नेच्छामि — $^{b}$) K3 D1.2 T2 G1 5 °विशारद — D3 4 om $5^{cd}$ — $^{c}$) Ds2 D8 T G तु (for च) K4 B (B2 missing) Dn1 Ds D6 8 10 (by transp) वचन धर्म्यं (Dn1 Ds °र्मं), K5 धर्मवचन, D7 वचन मह्य K3 श्रुत्वा वचन मे धर्म्यं — $^{d}$) K1 (by transp) कर्तुं मह्यम्, D2 मम कर्तुम्, D7 धर्म्यं कर्तुम्

6 =(var) 1 96 48 — $6^{ab}$=(var) 5 175 $22^{ab}$ — B2 Dn2 missing (cf v l 1). — $^{a}$) D1 S साल्व° — $^{b}$) K4 मनसानिवृत°, Dn1 °साधिवृत, D1 °सा च वृत., D6 °सातिवृत°, T1 G1 2 °सा हि वृत, G3 °सापि वृत°, M3–5 °सा विवृत G5 पति° (for वर°) — $^{c}$) Ds D3 10 अपि (for अस्मि) — $^{d}$) D8 अविदित, D10 M (M1 *inf lin.* as in text) अविदिता, Ca d as in text

7 B2 Dn2 missing (cf v l. 1) — $^{a}$) K (except K3) वै (for त्व) — $^{b}$) K3 5 नानाशास्त्रम्, D1 2 राजशास्त्रम् (for राजञ्शास्त्रम्) S (except T2 G1 2) च (for वै) B (B2 missing) Dn1 D6 8 10 राजध(Dn1 °न्ध)र्ममतीत्य वै — $^{c}$) M यथा (for गृहे)

8 B2 Dn2 missing (cf v l 1) — $^{b}$) K1 2 5 S (except M3–5) च नरर्षभ (for भरत°) — $^{c}$) Ds महाराज (for °बाहो) — $^{d}$) K1.3 D1 2 तदारब्धुमिहार्हसि

9 Dn2 missing (cf v l 1), B2 missing up to ततो in $9^{e}$ D1 om $9^{ab}$ — $^{a}$) M3–5 मा (for मा) S (except M1.4) राजन् (for व्यक्त) — $^{b}$) Here and below S (mostly) साल्व° — After $9^{ab}$, K4 B (B2 missing) D (except D1 2) ins

571* तस्मान्मा त्व कुरुश्रेष्ठ समनुज्ञातुमर्हसि ।

— $^{e}$) K3 B2 D1 2 T1 G3 भीष्म; D3 4 वीर°, G2 M1 धीर (for वीर) — $^{f}$) K1 2 5 मे मति°, K3 T2 G1 2 विश्रुत°, D3 निश्चित (for न° श्रुतम्)

Colophon Dn2 D5 6 G4 missing — *Subparvan* K B Dn1 Ds D2 6–8 10 T1 G5 M अम्बोपाख्यान — *Adhy no* (figures, words, or both) D6 (*sec m*) 54 (=154), T G2 M4 173, G1 5 M3.5 174, G3 171, M1 2 172 — *S'loka no* K5 Dn1 10

## १७१

C. 5. 5960
B. 5. 174 1
K. 5. 174 1

भीष्म उवाच ।

ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसंगृह्य दाशेयीमिदमब्रुवम् ॥ १
इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्यशुल्का उपार्जिताः ॥ २
ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप ।
आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥ ३
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता ॥ ४
भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः ।
श्रुत्वा च धर्म्यं वचनं मह्यं कर्तुमिहार्हसि ॥ ५
मया शाल्वपतिः पूर्वं मनसाभिवृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥ ६
कथं मामन्यकामां त्वं राजञ्शास्त्रमधीत्य वै ।
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ॥ ७
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ ।
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥ ८
स मां प्रतीक्षते व्यक्तं शाल्वराजो विशां पते ।
कृपां कुरु महाबाहो मयि धर्मभृतां वर ।
त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् ॥ ९

इति श्रीमहाभारते उद्योगपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

**171**

☞ This adhy. is missing in Dn2 (cf v l 5 170 5), B2 missing up to 9^e (cf. v l. 5 170 8)

1 B2 Dn2 missing (cf v l 1) — ^c) B1 5 अभिवाद्य (for °गम्य) B1 5 G3 उपसगम्य, Ca d s उपसगृह्य (as in text) — ^d) K Ds2 D7 10 दासेयीं, Ca d दाशेयीं (as in text) K3 M1 2 अब्रव

2 B2 Dn2 missing (cf v l 1) — ^d) K (except K4) D7 वीर्यशुल्काद् B Dn1 Ds D3 4 6 8 10 हृता इति, D1 उपाहृता°, G3 उपस्थिता°

5 B2 Dn2 missing (cf v l 1) Before 5, D3 4 read अम्बोवाच — ^a) D2-4 T2 G1-3 धर्मज्ञ D1 भीष्म त्वामपि नेच्छामि — ^b) K3 D1. 2 T2 G1 5 °विशारद — D3 4 om 5^cd — ^c) Ds2 D8 T G तु (for च) K4 B (B2 missing) Dn1 Ds D6 8 10 (by transp) वचन धर्म्यं (Dn1 Ds °र्मं), K5 धर्मवचनं, D7 वचन मह्य K3 श्रुत्वा वचन मे धर्म्यं — ^d) K1 (by transp) कर्तुं मह्यम्, D2 मम कर्तुम्; D7 धर्म्यं कर्तुम्

6 =(var) 1 96 48 — 6^ab =(var) 5 175 22^ab — B2 Dn2 missing (cf v l 1) — ^a) D1 S सात्र° — ^b) K4 मनसानिवृत, Dn1 °साधिवृत°, D1 °मा च वृत, D6 °सातिवृत°, T1 G1 2 °सा हि वृत, G3 °सापि वृत°, M3-5 °सा विवृत G5 पति. (for वर°) — ^c) Ds D5 10 अपि (for अस्मि) — ^d) D8 अविदित; D10 M (M1 *inf lin.* as in text) अविदिता, Ca d as in text

7 B2 Dn2 missing (cf v l. 1) — ^a) K (except K3) वै (for त्व) — ^b) K3 5 नानाशास्त्रम्; D1 2 राजशास्त्रम् (for राजञ्शास्त्रम्) S (except T2 G1 2) च (for वै) B (B2 missing) Dn1 D6 8 10 राजध(Dn1 °न्ध)र्ममतीत्य वै — ^c) M यथा (for गृहे)

8 B2 Dn2 missing (cf v l 1) — ^b) K1 2 5 S (except M3-5) च नरर्षभ (for भरत°). — ^c) D3 महाराज (for °बाहो). — ^d) K1. 3 D1 2 तदारब्धुमिहार्हसि

9 Dn2 missing (cf v l 1), B2 missing up to ततो in 9^c D1 om 9^ab — ^a) M3-5 मा (for मा) S (except M1. 4) राजन् (for व्यक्त) — ^b) Here and below S (mostly) सात्र° — After 9^ab, K4 B (B2 missing) D (except D1 2) ins

571* तस्मान्मा त्व कुरुश्रेष्ठ समनुज्ञातुमर्हसि ।

— ^e) K3 B2 D1. 2 T1 G3 भीष्म, D3 4 वीर°, G2 M1 धीर (for वीर) — ^f) K1 2 5 मे मतिः, K3 T2 G1 2 विश्रुत°, D3 निश्चित (for नः श्रुतम्)

Colophon Dn2 D5 6 G4 missing — *Sub-parvan* K B Dn1 Ds D2 6-8 10 T1 G5 M अम्बोपाख्यान — *Adhy no* (figures, words, or both) D3 (*sec m*) 54 (=154), T G2 M4 173, G1 5 M3 5 174, G3 171, M1 2 172 — *S'loka no* K5 Dn1 10.

# १७२

भीष्म उवाच ।

ततोऽहं समनुज्ञाप्य कालीं सत्यवतीं तदा ।
मन्त्रिणश्च द्विजांश्चैव तथैव च पुरोहितान् ।
समनुज्ञासिषं कन्यां ज्येष्ठामम्बां नराधिप ॥ १
अनुज्ञाता ययौ सा तु कन्या शाल्वपतेः पुरम् ।
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा ।
अतीत्य च तमध्वानमाससाद नराधिपम् ॥ २
सा तमासाद्य राजानं शाल्वं वचनमब्रवीत् ।
आगताहं महाबाहो त्वामुद्दिश्य महाद्युते ॥ ३
तामब्रवीच्छाल्वपतिः स्मयन्निव विशां पते ।
त्वयान्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ॥ ४
गच्छ भद्रे पुनस्तत्र सकाशं भारतस्य वै ।
नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै ॥ ५
त्वं हि निर्जित्य भीष्मेण नीता प्रीतिमती तदा ।
परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन् ।
नाहं त्वय्यन्यपूर्वायां भार्यार्थी वरवर्णिनि ॥ ६
कथमस्मद्विधो राजा परपूर्वां प्रवेशयेत् ।
नारीं विदितविज्ञानः परेषां धर्ममादिशन् ।
यथेष्टं गम्यतां भद्रे मा ते कालोऽत्यगादयम् ॥ ७
अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता ।
मैवं वद महीपाल नैतदेवं कथंचन ॥ ८
नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्शन ।

C. 5. 5996
B. 5. 175. 11
K. 5. 175. 12

## 172

☞ This adhy is missing in Dn2 (cf v l. 5 170 5), the MS is mostly ignored here

1 $^{a}$) B3 D1 T G2 5 समनुप्राप्य — $^{b}$) K4 B D (except D1.7, Dn2 missing) गधवतीं (for सत्य°) — $^{c}$) K4 B (except B4) Dn1 Ds D1.6–8 10 मन्त्रिणश्च-र्त्विजश्चैव — $^{e}$) K1 2 Ds D7 10 समन्वज्ञाम्पिप, G2 °नुज्ञायता, M6 °नुज्ञाप्य ता, Ca d as in text D1 चावा (for कन्या) — $^{f}$) B Dn1 Ds D6 8 10 (by transp) अंबा ज्येष्ठा, D1 ज्येष्ठा कन्या

2 $^{a}$) G1 °ता तु सा कन्या — $^{b}$) G1 ययौ (for कन्या) D3 4 6 पुरीं — T2 om $3^{cd}$ — $^{c}$) D3 4 युक्ता (for गुप्ता) — $^{d}$) K6 B4 5 D2 तथा (for तदा) — $^{e}$) K1 2 M8 5 तद्, D3 4 तदा (for तम्) — $^{f}$) K8 D1.3 4 आसाद्य च (for आस°) B Dn1 Ds D6 8 10 आसाद्य नृपतिं तथा (B2 3 D8 10 °दा)

3 $^{a}$) G3 समा° (for तमा°) D1 सा तदा सौभराजान — $^{d}$) K3 5 B Dn1 Ds D6 10 महामते, D8 महीपते, T2 G2 महाबल — After 3, D2 (om. line 1) T G M1 ins

572* अभिनन्दस्व मा राजन्सदा प्रियहिते रताम् ।
प्रतिपाल्य मा राजन्धर्मादींश्वर धर्मत ।
त्व हि मे मनसा ध्यातस्त्वया चाप्युपमन्त्रिता ।

[(L 2) D2 G5 M1 प्रतिपादय, T1 परिपालय, G3 प्रतिवादय G5 धर्मास्त्व (for धर्मादीन्) T2 G1 चैव (for चर) G2 समत (for धर्मेन) D2 धर्मेनीश्वरनिर्मित, G3 धर्मादिष्वेव धर्मेन — (L 3) T2 G2 मया (for हि मे) D2 G1 असि; T2 असि (for अपि) G3 तवासीत्यभिमन्त्रिता ]

4 K1 om $4^{ab}$ — $^{a}$) K8 D2 S साल्व°, D1 सौभ° (for शाल्व°) — $^{b}$) K2 5 महाद्युते, K3 4 D1 2 नराधिप (for विशा पते) — Before $4^{cd}$, K1 D7 T1 read शाल्व उ° (T1 om उ°) — $4^{cd}$ = (var) $6^{ef}$

5 $^{a}$) K1.2 5 B2 D1 T G1 2 5 तस्य (for तत्र) — $^{b}$) K1.4 D1 2 T G (except G3) भरतस्य, B Dn1 Ds D6 8 10 भीष्मकस्य — D3 4 om (hapl) $5^{cd}$, G3 om. (hapl) $5^{d}$–$6^{a}$ — $^{d}$) K3.4 D1 2 सुमध्यमे (for प्रसह्य वै)

6 G3 om $6^{a}$ (cf v l. 5) — $^{a}$) K3 4 B D (Dn2 missing) transp निर्जित्य and भीष्मेण — $^{b}$) M धृतिमता (for प्रीति°) — D3 4 om $6^{cdef}$ — $^{c}$) K2 B3 Dn1 Ds D1 6 10 परामृष्य, Ca °मृष्टा (for °मृश्य) — T2 G2 5 om (hapl) $6^{e}$–$9^{d}$ — $^{ef}$) = (var) $4^{cd}$

7 T2 G2 5 om 7 (cf. v.l 6) — $^{a}$) D3 4 ह्यद्य (for राजा) — $^{b}$) D1 प्रधर्षयेत् (for प्रवे°) — $^{f}$) K4 B D (except D1.2 7) त्वा (for ते)

8 T2 G2 5 om 8 (cf v l 6) — $^{c}$) K3 4 B (except B2) Dn1 D6 8 नैव (for मैव) K1 2 5 D1 2 वादी° (for वद) S (T2 G2 5 om) महाराज (for मही°)

9 T2 G2 5 om. 9 (cf v l 6) — $^{a}$) S (T2 G2 5 om) अह (for अस्मि) — $^{b}$) B (except B4) D1 °कर्षण, D3 4 °कर्षिणा, G1 °कर्शिना — $^{cd}$) D6 8 transp

C. 5. 5936
B. 5. 173. 11
K. 5. 173. 12

बलान्नीतासि रुदती विद्राव्य पृथिवीपतीन् ॥ ९
भजस्व मां शाल्वपते भक्तां बालामनागसम् ।
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते ॥ १०
साहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम् ।
अनुज्ञाता च तेनैव तवैव गृहमागता ॥ ११
न स भीष्मो महाबाहुर्मामिच्छति विशां पते ।
भ्रातृहेतोः समारम्भो भीष्मस्येति श्रुतं मया ॥ १२
भगिन्यौ मम ये नीते अम्बिकाम्बालिके नृप ।
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे ॥ १३
यथा शाल्वपते नान्यं नरं ध्यामि कथंचन ।
त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे ॥ १४
न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता ।
सत्यं ब्रवीमि शाल्वैतत्सत्येनात्मानमालभे ॥ १५
भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम् ।
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीम् ॥ १६
तामेवं भाषमाणां तु शाल्वः काशिपतेः सुताम् ।
अत्यजद्भरतश्रेष्ठ त्वचं जीर्णामिवोरगः ॥ १७
एवं बहुविधैर्वाक्यैर्याच्यमानस्तयानघ ।
नाश्रद्दधच्छाल्वपतिः कन्याया भरतर्षभ ॥ १८
ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता ।
अब्रवीत्साश्रुनयना बाष्पविह्वलया गिरा ॥ १९
त्वया त्यक्ता गमिष्यामि यत्र यत्र विशां पते ।
तत्र मे सन्तु गतयः सन्तः सत्यं यथाब्रुवम् ॥ २०
एवं संभाषमाणां तु नृशंसः शाल्वराट् तदा ।
पर्यत्यजत कौरव्य करुणं परिदेवतीम् ॥ २१
गच्छ गच्छेति तां शाल्वः पुनः पुनरभाषत ।
बिभेमि भीष्मात्सुश्रोणि त्वं च भीष्मपरिग्रहः ॥ २२
एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना ।
निश्चक्राम पुराद्दीना रुदती कुररी यथा ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

---

रुदती and विद्राव्य

10 a) K3 D1 S साल्व° — b) S अनागसीं — d) B3 न धर्मो वै; D6 8 न धर्मज्ञ T2 G2 प्रगण्यते

11 a) D7 समामन्त्र्य च गागेयं — c) D3 4 [अ]स्मि (for च) K3 D7 अस्मि (for एव) — d) K D1 2 वशम् (for गृहम्) B Dn1 D5 D6 8 10 ततोहं भृशमागता, D3 4 तवास्मि वशमा°, D7 त्वयैव च समा°.

12 a) K D1-4 7 महाबुद्धिर् (for °बाहुर्) — d) K2 transp श्रुत and मया

13 a) D1 ते (for ये) K D1. 2 तत्र; S ते तु (for नीते)

14 a) K3 D1 S साल्व° M अहं (for अन्य) — b) B Dn1 D5 D6 वर (for नर) K3 वरिष्यामि, M3-5 नारस्यामि (for नर ध्यामि) D1 ध्यायं; T G यामि; Ca ध्यामि (as in text) K D2-4 7 8 10 न(K4 D3 10 व)र ध्यायामि कचन, M1. 2 नर ध्यामीह कचन.

15 D1. 3 4 G6 om. (hapl.) 15. — b) T1 एव (for अहं) D7 त्वामहं शरण गता — K4 om. (hapl.) 15c–16b — c) S (G6 om.) सा त्वा (M त्वा) (for सत्य) K1. 2 शाल्वेय, K3 S (G6 om.) साल्वैतत्

17 a) K3 सामेनं; M2 तदेव (for तामेव) — b) K3 S साल्वः T2 G2 3 काशी°. — d) K3 B D (except D1. 2 7, Dn2 missing) T2 transp त्वचं and जीर्णां.

18 b) K5 तथा, M3-5 तदा (for तया) K4 B Dn1 D5 D6. 8. 10 नृप° (B2 5 °प) (for [अ]नघ). — c) D1 7. 8 T1 G3 न श्रद्दधत्, T2 G1. 2 6 नाश्रद्दधात् — d) K1 D5 G3 M1 2 कन्यया; K4 कन्यां ता, B1 6 D3 4 कन्यायां (for °या) M3-5 कन्यां भरतसत्तम

19 b) A few S MSS काशी° — d) K3 B1 वाष्पविक्लवया, K4 °सदिग्धया, B1 3-6 Dn1 D3 4. 6 10 °विप्लुतया, D2 7 °विक्लवया D5 वाष्पविप्लुतनेत्रया

20 b) K4 B (except B3) D (except D1. 7) T G2. 3 तत्र (for the second यत्र) — c) B1 3 Dn1 transp सन्तु and गतय°. — d) D10 G3 सत्य, Ca d सन्तः (as in text) K4 5 B Dn1 D5 D2-4 6 8 10 G1 ध्रुवं; D1 2 वृत (for [अ]ब्रुवम्)

21 a) K1 2 5 एतत् (for एव) K4 B D (except D1 7, Dn2 missing) ता (for स-). D1 ता (for तु) — b) K3 D1. 2 S साल्व°. K3 D7 तत°, T1 तया (for तदा). B Dn1 D5 D3. 4 6 8 10 कन्यां (D3 4 भृश) शाल्वपतिस्तदा (B2 शाल्व° काशिपते° सुतां) — c) K4 B Dn1 D5 D6. 8. 10 परितत्याज (for पर्य°). — d) Dn1 G3

# १७३

भीष्म उवाच ।

सा निष्क्रमन्ती नगराच्चिन्तयामास भारत ।
पृथिव्यां नास्ति युवतिर्विषमस्थतरा मया ।
बान्धवैर्विप्रहीनास्मि शाल्वेन च निराकृता ॥ १
न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम् ।
अनुज्ञातास्मि भीष्मेण शाल्वमुद्दिश्य कारणम् ॥ २
किं नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम् ।
आहोस्वित्पितरं मूढं यो मेऽकार्षीत्स्वयंवरम् ॥ ३
ममायं स्वकृतो दोषो याहं भीष्मरथात्तदा ।
प्रवृत्ते वैशसे युद्धे शाल्वार्थं नापतं पुरा ।
तस्येयं फलनिर्वृत्तिर्यदापन्नास्मि मूढवत् ॥ ४
धिग्भीष्मं धिक्च मे मन्दं पितरं मूढचेतसम् ।
येनाहं वीर्यशुल्केन पण्यस्त्रीवत्प्रवेरिता ॥ ५
धिङ्मां धिक्शाल्वराजानं धिग्धातारमथापि च ।
येषां दुर्नीतभावेन प्राप्तास्म्यापदमुत्तमाम् ॥ ६
सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः ।
अनयस्यास्य तु मुखं भीष्मः शांतनवो मम ॥ ७
सा भीष्मे प्रतिकर्तव्यमहं पश्यामि सांप्रतम् ।

C. 5 6009
B. 5. 173. 34
K. 5. 175. 35

---

परिदेविनी

22 [a]) K1.3 D1 S साल्व°, M1.2 कन्या — [b]) M1 2 साल्व° (for the first पुन°) — [d]) K3 D1.2 7 हि, K4 तु (for च) K6 B2 3 Dn1 G3 °परिग्रहा

23 [b]) K1 3 D1 S साल्वे° K3 5 अदीर्घदर्शना, Ds2 T1 G3 M (M1 inf lin) °दर्शिनी, Ca as in text — [c]) M3–5 पुनर् (for पुराद्) — [d]) K1.3 4 Dn1 G3 रुदंती

Colophon om. in B3 Dn1 D3 4 Dn2 D5 9 G1 missing — *Sub-parvan* K B1.2.4 5 Ds D1.2 6–8 10 G2 5 M अंबोपाख्यान — *Adhy name* T1 G2 5 साल्व-प्रत्याख्यानं — *Adhy no* (figures, words or both) T G2 M4 174, G1.5 M2.5 175, G3 172 (as in text), M1.2 173 — *S'loka no* K5 25

## 173

1 Dn2 missing for stanzas 1–5 (cf v l 5 170 5) — [a]) B Dn1 Ds D6 8 10 निष्कामती तु (for सा निष्क°) — [b]) B Dn1 Ds D6 8 10 दुःखिता (for भारत) — K4 om 1[cdef], G3 om 1[cd] — [c]) D8 G1.2 युवती — [d]) G1.2 विषमस्थातुरा मया — [e]) B D (except D1.7, Dn2 missing) बंधुभिर् (for बान्धवैर्) K1.2 3 B (except B2) Ds D6–8 M1 विप्रहीणा D3.4 च, G1 हि (for [अ]स्मि) — [f]) K1.3 D1 S साल्वेन — Hereafter the variant साल्व- (for शाल्व-) is not noted!

2 Dn2 missing (cf v l 1) — [a]) K2 D3 4 शक्यं मया, K3 4 D1.2 7 शक्ष्याम्यहं (for शक्य पुनर्) — [b]) K2–4 D1–4 पुनर् (for मया) — [c]) K4 B (except B2) Dn1 D6 8 10 तु, Ds हि (for [अ]स्मि)

3 Dn2 missing (cf v l 1) — [a]) T1 G3 5 M गर्हयिष्ये किमा(G5 महा)त्मान, T2 G1.2 दर्शयिष्ये स(G1 °प्येह)मात्मान — K4 om 3[b]–4[b] — [c]) B1.3 4 Dn1 Ds D6 8 10 अथ वा, B5 अपि वा (for आहोस्वित्)

4 Dn2 missing (cf v l 1) K4 om 4[ab] (cf v l 3) — [a]) K1–3 B Dn1 Ds D3 4 6 G2 ममाय (for ममा°) D2 मम स्वयकृतो दोष° — [b]) T2 G2 तथा (for तदा) — [c]) G5 प्रवृद्धे K3 प्रथमे, B D (except D1.2 7) दारुणे (for वैशसे) — [d]) K5 D7 8 शाल्वार्थे K1.2 5 नागम; K4 नागता, B2 D8 नागत; D3 4 न गत K4 पुर (for पुरा) — [e]) S (except T1 G3) फलनिष्पत्ति — [f]) T G यथा° (for यदा°)

5 Dn2 missing (cf. v.l. 1) — [b]) M (except M2) °चेतन — [c]) B (except B4) Ds D3 4 6 7 10 M2 °शुल्केति — [d]) K4 प्रवोधिता, K5 B1.2 5 Ds D7 10 S प्रवेशिता, B3 4 प्रचोदिता, D2–4 प्रचारिता, Ca प्रवेरिता (as in text)

6 Dn2 resumes! — [a]) K1 D7 शाल्वराज च (for °राजान) — [b]) K1.4 B Dn Ds D6 8 10 वा (for च) — [c]) G3 5 M1.5 एषा (for येषा) K4 दुरतभावेन, D6 दुर्नीतिभावोह, D10 S (except T1 G3) दुर्नीतिभावेन — [d]) K3 D1.2 7 पापमासादित मया

7 [a]) K3 सर्वस्तु, D3 4 सर्वाणि (for सर्वथा) — [d])

C. 5. 6009
B. 5. 175. 34
K. 5. 175. 35

तपसा वा युधा वापि दुःखहेतुः स मे मतः ।
को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः ॥ ८
एवं सा परिनिश्चित्य जगाम नगराद्बहिः ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ।
ततस्तामवसद्रात्रिं तापसैः परिवारिता ॥ ९
आचख्यौ च यथा वृत्तं सर्वमात्मनि भारत ।
विस्तरेण महाबाहो निखिलेन शुचिस्मिता ।
हरणं च विसर्गं च शाल्वेन च विसर्जनम् ॥ १०
ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः ।
शैखावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः ॥ ११
आर्तां तामाह स मुनिः शैखावत्यो महातपाः ।
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणाम् ॥ १२
एवं गते किं नु भद्रे शक्यं कर्तुं तपस्विभिः ।
आश्रमस्थैर्महाभागैस्तपोनित्यैर्महात्मभिः ॥ १३
सा त्वेनमब्रवीद्राजन्क्रियतां मदनुग्रहः ।
प्रव्राजितुमिहेच्छामि तपस्तप्स्यामि दुश्चरम् ॥ १४
मयैवैतानि कर्माणि पूर्वदेहेषु मूढया ।
कृतानि नूनं पापानि तेषामेतत्फलं ध्रुवम् ॥ १५
नोत्सहेयं पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा शाल्वेन च निराकृता ॥ १६
उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः ।
युष्माभिर्देवसंकाशाः कृपा भवतु वो मयि ॥ १७
स तामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः ।
सान्त्वयामास कार्यं च प्रतिजज्ञे द्विजैः सह ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

K1 2 नृप° (for मम)

8 $^{d}$) K8 Dn1 Ds2 D8 तत° (for मत.) — $^{e}$) T2 G1 2 यथा (for युधा) — $^{f}$) T1 महाद्युतिं (for मही°)

9 $^{d}$) D3 4 जनेश्वर (for ताप°) — $^{f}$) G1 5 M (M1 *inf lin*) परिपालिता

10 $^{a}$) M (except M1) हि (for च)

11 $^{b}$) K1 2 D7 8 10 शंसित° — K2 om (hapl) 11$^{e}$–12$^{a}$ — $^{c}$) K5 शैलावत्य, T2 G2 3 5 शैखापत्य; M1 2 4 शाखापत्य, Ca d as in text — $^{d}$) = 1 4 5$^{d}$.

12 K2 om 12$^{a}$ (cf v l. 11), K5 om 12$^{b}$. — $^{b}$) D1 शाखावत्य°, T2 G2 3 5 शैखापत्य, M1 2 4 शाखापत्य (cf v l 11) — $^{c}$) Some MSS निश्व°. K3 B2 D7 अवां (for बालां) — $^{d}$) K5 °समन्विता

13 $^{a}$) B (except B2) D (except D7) तु किं (for किं नु) — $^{b}$) K2 transp शक्य and कर्तुं — K5 om (hapl) 13$^{cd}$. — $^{c}$) B4 5 Dn D6 10 महाभागे — $^{d}$) K1 2 तपोनिष्ठैर्, K4 B D (except D1 2, 7) तपोयुक्तैर्

14 K5 om 14$^{c}$–15$^{d}$. — $^{c}$) K2 (m as in text) प्रव्रज्यामह, K4 प्रव्राज्यमह; B D (except D1 2 7 8) प्राव्रा(Ds1 °व्र)ज्यमहं, Ca d s प्रव्राजयितु (for प्रवाजितु मिह) — $^{d}$) B2 दुस्तर, M2 दुष्कर K1 2 तपस्तप्स्ये सुदुष्कर

15 K5 om 15 (cf v l 14) — $^{a}$) B Dn D2 यानि; D6 8 10 T G तानि (for [ए]तानि) D3 4 मयैव खलु विभ्रंद्रा — $^{b}$) K4 B4 5 Dn D6 पूर्वदेहे तु; B1–3 Ds D3 4 8 10 °देहेन. — $^{c}$) D4 कृतानि यानि कर्माणि — $^{d}$) T2 G2 एव (for एतत्) G3 transp फल and ध्रुव

16 $^{a}$) K1 2 5 B2 Ds D1 8 नोत्सहे च, K3 °हे व, K4 B1 3–5 Dn D6 10 °हे तु, D3 4 °हेन (for °हेय)

17 $^{a}$) B5 D1–4 10 M1 (*inf lin* as in text) उपदेष्टुम्, Dn2 D8 °दिष्टुम् — $^{b}$) D2–4 तापसा (for तापस्य) K2 G1–3 °कल्मषा D7 तपस्तासु हि तापसा° — $^{c}$) K4 B D °सकाशे°. — $^{d}$) D3 4 नो भृश (for वो मयि) K1 2 क्रिया भवति या मयि

18 $^{a}$) S (except T1 G1) ते (for स), and आश्वासयन् (for °यत्) — $^{c}$) M3 5 सान्त्वयमाना स्वकार्यं च — $^{d}$) D3 4 नृपोत्तम (for द्विजैः सह)

Colophon D5 9 G4 missing — *Sub-parvan* K B Dn Ds D1–4 6–8 10 T1 G5 M अम्बोपाख्यान — *Adhy no* D6 (*sec m*) 55 (=155), T G2 M1 175, G1 5 M3 5 176, G3 173 (as in text), M2 174. — *S'loka no.* K5 18, Dn 44

## १७४

भीष्म उवाच ।

ततस्ते तापसाः सर्वे कार्यवन्तोऽभवंस्तदा ।
तां कन्यां चिन्तयन्तो वै किं कार्यमिति धर्मिणः ॥ १
केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।
केचिदस्मदुपालम्भे मतिं चक्रुर्द्विजोत्तमाः ॥ २
केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे ।
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता हि तेन सा ॥ ३
एवं गते किं नु शक्यं भद्रे कर्तुं मनीषिभिः ।
पुनरूचुश्च ते सर्वे तापसाः संशितव्रताः ॥ ४
अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः ।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ५
प्रतिपत्स्यति राजा स पिता ते यदनन्तरम् ।
तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता ।
न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ॥ ६
पतिर्वापि गतिर्नार्याः पिता वा वरवर्णिनि ।
गतिः पतिः समस्थाया विषमे तु पिता गतिः ॥ ७
प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः ।
राजपुत्र्याः प्रकृत्या च कुमार्यास्तव भामिनि ॥ ८
भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ।
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ॥ ९
ततस्तु तेऽब्रुवन्वाक्यं ब्राह्मणास्तां तपस्विनीम् ।
त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने ।
प्रार्थयिष्यन्ति राजेन्द्रास्तस्मान्मैवं मनः कृथाः ॥ १०

अम्बोवाच ।

न शक्यं काशिनगरीं पुनर्गन्तुं पितुर्गृहान् ।
अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥ ११ C. 5. 6033 B. 5. 176. 12 K. 5. 176. 12

### 174

1 c) B Dn Ds D6 8 10 ते (for वै) K3 4 D1 2 7 ता च कन्या चिंतयत°

2 T2 G2 om 2 — a) K3 4 पुनर् (for पितुर्) — b) T1 भारत (for तापसा°) — d) B D (except D1 2 7) हि तापसा° (for द्विजो°)

3 b) K4 नियोक्तुम्, K5 T1 नियोत्स्यामि, D1.2 नियोज्य, T2 G1.3 M नियोक्ष्या(M3 5 °ज्या)म, G5 नियोक्ष्यामि (for नियोज्यम्) D3 4 नियोगमनुमेनिरे — c) K1.2 व्यवस्यत — d) K4 D1 3 4 7 M3 तथा हि, T1 यदा हि, T2 G1.2 5 M1 2 4 यथा हि, G3 यतो हि, M5 ततो हि (for हि तेन)

4 $4^{ab}$=(var)5 173 $13^{ab}$ — a) K1 केन, K2 4 B D नु किं (for किं नु) M4 कर्तुं (for शक्यं) — b) T G (by transp) कर्तुं भद्रे, M4 भद्रे शक्य K3 4 B2 तपस्विभि, D3 4 महर्षिभि° — c) K5 B (except B2) D (except D1.2 7) ता (for ते) — d) K1 2 Ds D6 8 10 शम्रित°

6 a) S प्रतिवत्स्यति Ds2 प्रतिपश्यति राजेंद्र° — d) B5 सुख सर्वमनिंदिते — e) D3 4 खलु (for च ते) Ds G3 [ऽ]न्यगतिर् D6 M (M1 inf lin) नार्या (for न्याय्या) — f) D3 4 भव्ये (for भद्रे) K3 transp यथा and पिता

7 T2 G2 om (hapl) $7^{c}$–$9^{b}$. — c) B2 (by transp) पतिर्गति, T1 G1.3.5 भर्ता गति° — d) D3 4 6 8 विषमाया° (for °मे तु) K4 हि, B Dn Ds D10 च (for तु) S (T2 G2 om) transp पिता and गति°

8 T2 G2 om 8 (cf v.l 7) — b) D6 8 कुमार्यास्तु (for सुकु°) — c) B4 विशेषेण, Ca प्रकृत्या च (as in text) — d) B2 3 Dn D6 8 भाविनि B4 कुमार्याश्च विशेषत°, Ds D3 4 10 सुकुमार्यास्तु भाविनि

9 T2 G2 om $9^{ab}$ (cf v l 7) — ab) D3 4 बहव° (for विद्यन्ते), and जायते (for बहवो) — c) B2 तु; D3 4 हि (for वै) T2 G2 त्वसन्त्यास् (for वसन्त्यास्)

10 D4 om. $10^{a}$–$11^{b}$ — a) K4 D2 7 भूय° (for तत°) K4 च ते, K5 ते च, B Dn Ds D6 8 10 G1 स्त्वन्ये, D2 चैव, T1 ते हि, M1.2 तेथ (for तु ते) B5 पुनर् (for ऽब्रुवन्) K3 ततस्ते अब्रुवन्वाक्य — b) B Dn D2 3 6 8 10 तापसा° (for ब्राह्मणा°) — c) D3 हि चै° (for इहै°) — d) K3 B2 D1 शुभे (for वने) — e) B D (except D1–3.7, D4 om.) T G राजानस् (for राजेन्द्रास्) — f) T1 G3 न (for मा)

11 D4 om $11^{ab}$ (cf v l 10) — a) K1 2 5 D1.2 7 शक्ष्ये, K3 B1–3 Dn Ds D3 6 8 शक्ष्ये, K4 शक्या (for शक्यं) B D (except D2 3 7, D4 om) T G1 2 काशिनगर — b) T1 G1 गृह

C. 5. 6024
B. 5. 176. 13
K. 5. 176. 13

उषिता ह्यन्यथा बाल्ये पितुर्वेश्मनि तापसाः ।
नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ।
तपस्तप्तुमभीप्सामि तापसैः परिपालिता ॥ १२
यथा परेऽपि मे लोके न स्यादेवं महात्ययः ।
दौर्भाग्यं ब्राह्मणश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः ॥ १३

भीष्म उवाच ।

इत्येवं तेषु विप्रेषु चिन्तयत्सु तथा तथा ।
राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ॥ १४
ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम् ।
पूजाभिः स्वागताद्याभिरासनेनोदकेन च ॥ १५
तस्योपविष्टस्य ततो विश्रान्तस्योपशृण्वतः ।
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः ॥ १६
अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत ।
स वेपमान उत्थाय मातुरस्याः पिता तदा ।
तां कन्यामङ्कमारोप्य पर्याश्वासयत प्रभो ॥ १७
स तामपृच्छत्कात्स्न्र्येन व्यसनोत्पत्तिमादितः ।
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ॥ १८
ततः स राजर्षिरभूद्दुःखशोकसमन्वितः ।
कार्यं च प्रतिपेदे तन्मनसा सुमहातपाः ॥ १९
अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखितः ।
मा गाः पितृगृहं भद्रे मातुस्ते जनको ह्यहम् ॥ २०
दुःखं छेत्स्यामि तेऽहं वै मयि वर्तस्व पुत्रिके ।
पर्याप्तं ते मनः पुत्रि यदेवं परिशुष्यसि ॥ २१
गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम् ।

---

12 $^{a}$) T2 G1.2 5 उचिता (for उषिता) K4 [अ]ह तथा, B Dn Ds D6 8.10 [अ]स्मि तथा, D3 4 [अ]स्मि यथा, D7 स तथा (for ह्यन्यथा) — $^{b}$) D3 4 वै पुरा (for तापसा॰) — $^{c}$) K4 D1.2 7 8 G1 इहेच्छामि, G3 गमिष्यामि (for अभी॰) — $^{f}$) K3 B Dn Ds D6 8 10 परिरक्षिता; D7 T1 G3 ॰वारिता

13 Dn2 om 13 — $^{a}$) K5 लोके मे (by transp), B2 लोकेपि — $^{b}$) K4 5 B Dn1 Ds D1-4 6 8 10 G5 M3-5 Ca d महात्यय; D7 महद्भयं, Cn as in text. — $^{c}$) K1.2 दौर्भाग्याद् K4 B Dn1 D1 तापस॰ (for ब्राह्मण॰) — $^{d}$) K3 T1 G3 ततस् (for तस्मात्) — After 13, B5 ins a colophon.

14 $^{b}$) K1 2 5 च तत्तथा; K3 तथा यथा, B Dn Ds D6 8 10 यथातथ, D1 3 4 यथा तथा — $^{c}$) K3 तत्र स- (for तद्वन) D3 4 प्राप (for प्राप्तस्) — $^{d}$) Some MSS होतृ॰ — After 14, S ins

573* ता तथा भामिनीं दृष्ट्वा श्रुत्वा चोद्विग्नमानस॰ ।
[ T1 G3 5 माविनीं, T2 G2 ॰भाषिणीं ]

16 B5 om 16$^{c}$–17$^{b}$ — $^{a}$) K3 B1 3 4 Dn Ds D6 8 T G1-3 सतो, D3 4 तदा, G5 तथा (for ततो) — $^{c}$) D1 7 8 कथाश्

17 B5 om 17$^{ab}$ (cf v l 16) — $^{a}$) S तु (for ता) — $^{b}$) K4 D3 4 7 8 10 S काशिराजस्य — After 17$^{ab}$, N (except B5, K4 D3 4 om lines 1-2) G3 ins

574* राजर्षि॰ स महातेजा बभूवोद्विग्नमानस॰ ।
तां तथावादिनीं श्रुत्वा दृष्ट्वा च स महातपा॰ ।
राजर्षिः कृपयाविष्टो महात्मा होत्रवाहन॰ ।

[ (L 1) D3 D1 सु- (for स) — (L 2) K (K4 om ) D1.2 7 रुदतीं (for ॰वादिनीं) K3 5 D1.2 7 transp श्रुत्वा and दृष्ट्वा K1 2 5 D1 7 8 10 सु (for स) — (L 3) K (except K4) D1 2 7 जरया॰ (for कृपया॰) ] — $^{c}$) D10 ॰मानामुत्थाप्य. — $^{d}$) K4 B D (except D1.7) मातुस्तस्या, M1 2 (by transp) अस्या मातु॰ — $^{f}$) B (except B2) Dn D6 8 पर्यश्वा॰ (sic), D1 प्रत्याश्वा॰ K4 D1.2 M1.4 प्रभु॰ (for प्रभो) D3 4 वीरश्चाश्वासयत्प्रभो.

18 $^{a}$) K1.2 5 कन्या वै (for कात्स्न्र्येन) — $^{c}$) S (except M3 5) तु (for च) — $^{d}$) T2 G [अ]भ्यवे (G3 ॰पा॰; G5 ॰चो॰)दयत, M [अ]भ्युदीरयत् (for न्यवे॰)

19 $^{a}$) T2 G2 5 तु (for स) — $^{c}$) T2 G2 5 स (for तन्) — $^{d}$) K3 D6 8 सुसमाहित, K4 [अ]पि महातपा॰ D1 च महा॰, D3 स महा॰, T2 G2 5 तु महा॰, G3 [अ]पि महाबल॰

20 $^{a}$) Dn2 G3 वेपमाना च — $^{b}$) D3 4 चार्तां (for आर्तां) B (except B5) Ds D1 3 4 8 10 ॰दुःखिता K1 2 5 कन्या सोतीव दुःखित, S कन्यामार्तस्वरस्तदा — D2 om. 20$^{c}$–21$^{d}$ — $^{c}$) K3 4 B1 5 Dn2 Ds2 D3 4 7 G1 5 पितुर् (for पितृ)

21 D2 om 21 (cf v l 20) — $^{a}$) D8 G2 transp ते and अह. K4 B D (except D1 7, D2 om) दुःखं छिंद्या(B2 4 हन्या)मह ते वै — $^{b}$) B2.3 D3 D6 10 वर्तसि (for ॰स्व) S पुत्रि(G3 M1-4 ॰त्र)वत् (for पुत्रिके) — $^{c}$) D3 4 न (for ते) S तप॰, Cs मन (as in text) B2 4 भद्रे, Dn Ds D3.4 6 8 10 वत्से, D1 देवि (for पुत्रि)

रामस्तव महद्दुःखं शोकं चापनयिष्यति ।
हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः ॥ २२
तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम् ।
प्रतिष्ठापयिता स त्वां समे पथि महातपाः ॥ २३
ततस्तु सस्वरं बाष्पमुत्सृजन्ती पुनः पुनः ।
अब्रवीत्पितरं मातुः सा तदा होत्रवाहनम् ॥ २४
अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ।
अपि नामाद्य पश्येयमार्यं तं लोकविश्रुतम् ॥ २५
कथं च तीव्रं दुःखं मे हनिष्यति स भार्गवः ।
एतदिच्छाम्यहं श्रोतुमथ यास्यामि तत्र वै ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## १७५

होत्रवाहन उवाच ।
रामं द्रक्ष्यसि वत्से त्वं जामदग्न्यं महावने ।
उग्रे तपसि वर्तन्तं सत्यसंधं महाबलम् ॥ १
महेन्द्रे वै गिरिश्रेष्ठे रामं नित्यमुपासते ।
ऋषयो वेदविदुषो गन्धर्वाप्सरसस्तथा ॥ २
तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम ।
अभिवाद्य पूर्वं शिरसा तपोवृद्धं दृढव्रतम् ॥ ३
ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्यं मनीषितम् ।
मयि संकीर्तिते रामः सर्वं तत्ते करिष्यति ॥ ४
मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे ।

---

— d) K1 2 °क्षुप्यसे; D1 3 C8 °क्षुप्यति

22 a) K3 G3 राज्ञि (for राम) — b) K3 D1 महामत; K4 D2 3 M महाविन (for तप°) — c) K (except K4) D2 T1 महादुःख (for महद्दुःख) B (except B3) Dn D3 D5 4 6 8 10 रामो सुमहद्दुःख, G3 रामो महच्चादुःख — d) K1 2 4 शोक चा नाशयिष्यति; K3 B D (except D1 2 3) शोकं चैवापनेष्यति — f) K3 G3 स (for न) K3 D6 8 तद्; B1 ते; Dn1 यद् (for चेद्) D3 4 करिष्यति च ते वच

23 B3 om 23c-24b — c) M त्वा (for त्वां) — d) K3 समे पथि; D10 समेष्यति, Ca d समे पथि (as in text) S धर्म्ये पथि निरामये

24 B3 om 24ab (cf v l 23) — a) B1 D5 4 तत सा K1 2 4 D1 सस्वर; K4 B Dn D5 4 6 8 10 सुस्वरं; D1 सस्मा (for °स्वर) D3 4 पावय (for बाष्प) — d) M होतृवाहन

25 a) Hypermetric! K (except K4) D1 2 3 अभिवादये त्वां शि° — c) D3 4 अपि रामाय पश्येद — d) K3 आचार्यं; K3 अद्य त; D3 4 महात्म, T G आचार्य (for आर्यं त) K3 4 D1 2 3 लोकपूजित, T G °भारत

26 a) K3 B3 (by transp) दुःख तीव्र; D3 D3 T3 तीव्रदुःख; D1 दुःख तीव्र — b) K3 (marg sec m) B D (except D1 2) नाशयिष्यति, T2 G3 हरिष्यति स — c) K3 4 B D (except D1) ज्ञातु (for श्रोतु) — d) K4 B D (except D1 2 3) G3 यास्यामि; K4 तत्र (for अथ)

Colophon om in B1 2-3 Dn D5 D8 9 1 D3 4 G3 missing — Sub-parvan K B3 D1-4 1 G1 M1 2 1 अम्बोपाख्यान — Adhy name D1 होत्रवाहनसमागम; T1 G1 होत्रवाहनसंवाद; M1 2 होतृवाहनसंवाद — Adhy no (figures, words or both) D (except D1) 175 (=155), T G2 M4 176, G1 4 M3 5 177, G2 174 (as in text), M1 2 175 — Śloka no K3 30

### 175

1 a) B D (except D1) भद्रे (for वत्से) — d) K3 4 D1 2 3 महातप; G1 महाद्युति

2 a) K3 B D (except D1 2) महेन्द्रं वै गिरि — b) K3-5 B D (except D1) रामो B Dn D5 D3 4 5 उपास्ते ह; D3 4 उपासित (for उपासते) — c) B D (except D1 2 3) वेदविद्वांस

3 D1 om (hapl) 3c-4a — c) Hypermetric! G1 च (for पूर्वं) B D (except D1 2) अभिवाद्य च त मूर्ध्ना, T2 शिरसाभिवाद्य पूर्व

4 D1 om 4a (cf v l 3) — b) K1 2 मनीषितम्; K3 B3 निर्दिष्ट (for मनी°) — d) D1 °क्तं, सर्वं and तत्ते K1 तत तत्, K3 तच्चैव; D1 तत्र (for तत्ते)

5 a) D3 4 ममापि दयितो वत्स

C. 5. 6057
B. 5. 176. 34
K. 5. 176. 34

जमदग्निसुतो वीरः सर्वशस्त्रभृतां वरः ॥ ५
एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने ।
अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ॥ ६
ततस्ते मुनयः सर्वे समुत्तस्थुः सहस्रशः ।
स च राजा वयोवृद्धः सृञ्जयो होत्रवाहनः ॥ ७
ततः पृष्ट्वा यथान्यायमन्योन्यं ते वनौकसः ।
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ॥ ८
ततस्ते कथयामासुः कथास्तास्ता मनोरमाः ।
कान्ता दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥ ९
ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः ।
रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणम् ॥ १०
क्व संप्रति महाबाहो जामदग्न्यः प्रतापवान् ।
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वरः ॥ ११

अकृतव्रण उवाच ।

भवन्तमेव सततं रामः कीर्तयति प्रभो ।
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ॥ १२
इह रामः प्रभाते श्वो भवितेति मतिर्मम ।
द्रष्टास्येनमिहायान्तं तव दर्शनकाङ्क्षया ॥ १३
इयं च कन्या राजर्षे किमर्थं वनमागता ।
कस्य चेयं तव च का भवतीच्छामि वेदितुम् ॥ १४

होत्रवाहन उवाच ।

दौहित्रीयं मम विभो काशिराजसुता शुभा ।
ज्येष्ठा स्वयंवरे तस्थौ भगिनीभ्यां सहानघ ॥ १५
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता ।
अम्बिकाम्बालिके त्वन्ये यवीयस्यौ तपोधन ॥ १६
समेतं पार्थिवं क्षत्रं काशिपुर्यां ततोऽभवत् ।
कन्यानिमित्तं ब्रह्मर्षे तत्रासीदुत्सवो महान् ॥ १७
ततः किल महावीर्यो भीष्मः शांतनवो नृपान् ।
अवाक्षिप्य महातेजास्तिस्रः कन्या जहार ताः ॥ १८
निर्जित्य पृथिवीपालानथ भीष्मो गजाह्वयम् ।
आजगाम विशुद्धात्मा कन्याभिः सह भारत ॥ १९
सत्यवत्यै निवेद्याथ विवाहार्थमनन्तरम् ।

---

6 $^{a}$) S तां (for तु). — $^{b}$) Here and below a few MSS होतृ° — $^{c}$) Hypermetric!

7 $^{d}$) K5 Dn1 D7 सजयो (for सृञ्जयो).

8 $^{a}$) K2 5 B D (except D1 7) दृष्ट्वा (for पृष्ट्वा). B Dn D5 D6 8 10 कृतातिथ्यम् (for यथान्यायम्) — $^{c}$) K1 2 5 च कुरुश्रेष्ठ; Ca भरत° (as in text).

9 $^{b}$) D5 सुमनोरमाः, D6 4 सुमनोहरा (for ता मनो°) — $^{c}$) K3 4 B Dn D5 D2-4 6-8 10 धन्या, D1 पुण्या, T G1 2 तथा, G5 कथा (for कान्ता) — $^{d}$) B1 2 4 D3 4 °मुदान्विता°, D1 °समायुता, C5 as in text.

10 $^{c}$) B1 2 4 द्विजातीना (for मह°)

11 $^{a}$) B3 सोप्यस्ति (for सम्प्रति) K3 G1 3 5 M1 2 महाबाहु. — $^{c}$) K1 2 D1 2 M शक्य; D7 द्रक्ष्ये (for शक्यो). B2 5 [ऽ]सौ, D7 [ऽ]ह; G2 नु (for वै) — $^{d}$) K1 2 D1 7 G1 5 M वर, B1 4 5 Dn2 D2 10 वर (for वर°)

12 $^{b}$) K6 D1 7 S (except T2 G1 2) कीर्तयते K4 प्रभु, D7 S (except G3 M1 2) विभो — $^{c}$) K (except K6) B3 D (except D1-4) प्रियसखा — $^{d}$) K2 4 T G2 पार्थिव.

13 $^{a}$) K3 5 वै (for श्वो) D3 4 इह प्रभाते श्वोभूते — $^{b}$) D8 D10 भवेदिति (for भवि°) — $^{c}$) T2 G2 द्रष्टासि राम्; G1 °स्येतम्; G3 °सीमम् K1 B2 3 D8 10 [आ]गात; D1 प्राप्त

14 $^{a}$) K1 2 5 transp च and कन्या — $^{b}$) K D1 7 इह था° (for वनमा°) — $^{c}$) T G2 केय (for चे°) — $^{d}$) D7 एनामिच्छामि, T1 G1 5 भवीहीच्छामि.

15 $^{b}$) K4 B Dn D5 D6 8 10 प्रिया (for शुभा) — $^{c}$) K1 B2 Dn2 D5 स्वयवरा, K3 D3 4 8 °घर — $^{d}$) S (except T1) भगिनीनां T G M2 तदानघ.

16 $^{b}$) A few S MSS काशी°. — $^{c}$) K1 2 5 B (except B2) Dn D6 चन्ये (for त्वन्ये) T2 G1 2 अयिकांयाल्किकेत्यन्ये. — $^{d}$) K1 2 B (except B1) D (except D1 7) कनीयस्यौ त°

17 $^{b}$) A few S MSS. काशी° K1 2 5 B1 2 4 G1 तदा°; T अथा° (for ततो°) — $^{c}$) B1 3 5 Dn D4 D6-8 10 विप्रर्षे; B2 D3 4 राजर्षे — $^{d}$) T1 तदा (for तत्र) G5 अभूद् (for आसीद्)

18 $^{b}$) D2 नृप, M1 2 महान् (for नृपान्) — $^{c}$) K4 B Dn D5 D6 4 6 8. 10 अधिक्षिप्य; D1. 2 7 तत्राक्षिप्य; T2 G3 अव°

19 $^{c}$) D1 महावीर्य (for विशु°) — $^{d}$) B (except B3) भारत° (for °त)

20 $^{b}$) K4 B D (except D1 7) विवाह समनंतर

भ्रातुर्विचित्रवीर्यस्य समाज्ञापयत प्रभुः ॥ २०
तत<u>तो</u> वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम् ।
अब्रवीत्तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ ॥ २१
मया शाल्वपतिर्वीर मनसाभिवृतः पतिः ।
न मामर्हसि धर्मज्ञ परचित्तां प्रदा<u>पितुम्</u> ॥ २२
तच्छ्रुत्वा वचनं भीष्मः संमन्त्र्य सह मन्त्रिभिः ।
निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः ॥ २३
अनुज्ञाता तु भीष्मेण शाल्वं सौभपतिं ततः ।
कन्येयं मुदिता विप्र काले वचनमब्रवीत् ॥ २४
विसर्जितास्मि भीष्मेण <u>धर्मं</u> मां प्रतिपादय ।
मनसाभिवृतः पूर्वं मया त्वं पार्थिवर्षभ ॥ २५
प्रत्याचख्यौ च शाल्वोऽपि चारित्र<u>स्याभि</u>शङ्कितः ।
सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशम् ॥ २६
मया च प्रत्यभिज्ञाता वंशस्य परिकीर्तनात् ।
अस्य दुःखस्य चोत्पत्तिं भीष्ममेवेह मन्यते ॥ २७

अम्बोवाच ।

भगवन्नेवमेवैतद्यथाह पृथिवीपतिः ।
शरीरकर्ता मातुर्मे सृञ्जयो होत्रवाहनः ॥ २८
न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन ।
अवमानभयाच्चैव व्रीडया च महामुने ॥ २९
यत्तु मां भगवान्रामो वक्ष्यति द्विजसत्तम ।
तन्मे कार्यतमं कार्यमिति मे भगवन्मतिः ॥ ३०　　C. 5. 6082 B. 5. 176. 59 K. 5. 176. 59

इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

---

— Ds2 om (hapl) 20ᵉ–21ᵇ — ᵈ) K1. 2 प्रभो

21 Ds2 om 21ᵃᵇ (cf v l 20) — ᵃ) K1. 2 5 B2 तत्र, K3 4 B1. 3–5 Dn1 D1–4 6 8 त तु, Dn2 D7 10 तत्तु (for ततो) — ᵇ) B3 T2 G1 2 समुपस्थिता, D7 °पाहृत, T1 G3. 5 M5 °पस्थित — ᶜ) T G तात (for तत्र) — ᵈ) D3 4 नृप°, M1. 2 सभा° (for मन्त्रि°)

22 22ᵃᵇ = (var) 5 171 6ᵃᵇ — ᵃ) K3 D1 S साल्व° K1 4 Dn2 वीर°, K2 5 D7 पूर्वं (for वीर) — ᵇ) K1 विधृत, T1 हि धृत (for [अ]भि°) — ᵈ) K1 2 D2 7 प्रदाय वै, K4 यवीयसे, T G प्रदापय (for °पितुम्) K2m 3 4 B Dn Ds D3. 4 6 8 10 दातु भ्रात्रेन्य मानसा

23 ᵇ) K3 D2 बधु° (for मन्त्रि°) — ᶜ) Dn1 D1 7 एना (for इमा) — ᵈ) = 1 95 5ᵈ, 96 1ᵈ, 59ᵈ

24 D3 om (hapl) 24ᵇ–25ᵃ — ᵇ) K1. 3 D1 S साल्व D1 तदा (for तत°) — ᶜ) K (except K4) B2 D1 2 7 विदिता (for मु°) K3. 4 B D (except D1 2 7, D3 om.) तत्र (for विप्र)

25 D3 om 25ᵃ (cf v l 24) — ᵇ) Dn1 स्वधर्मं, S धर्मे मां B2 D1 प्रतिपालय — ᶜ) Dn1 [अ]भिगत°, D2 च वृत°, T1 हि वृत°

26 ᵃ) K1. 3 D1 S साल्वो K4 B (except B2) Dn Ds D6 8 10 [ऽ]स्याह्र (for ऽपि) — ᵇ) Dn1 D3 चरित्रस्य, T2 चारित्र च K3 [अ]विशक्ति, B1 3 S (except G3) [अ]तिशकित°, D3 4 [अ]भिशकिता K1. 2 4 5 D1 2 7 चारित्रेया वि(D2 °भि)शक्ति° — ᵈ) B5 D7 T2 G2 3 तपसि, D3 M3–5 तपसे K1 2 5 निरता, T1 [ऽ]तिरता (for ऽभि°)

27 ᵃ) K1. 2 तु (for च) — ᶜ) B3 D5 D10 उत्पत्ति; D3 4 7 8 उत्पत्तौ, Ca as in text — ᵈ) K1 2 5 भीष्ममेव हि, D5 D6–8 10 भीष्म एवेह — After 27, K1–3 D3 ins

575* एवं ब्रुवति वै राज्ञि कन्या वचनमब्रवीत् ।

28 ᵃ) K4 B (except B2) Dn Ds D6 8 10 इह (for एतद्)

29 ᵃ) K1 2 5 न ह्युत्सहामि नगरं, K3 नाप्युत्सहामि नगर, D6 न समुत्सहे स्व° (hypermetric!), D10 नोत्सहे पितृ°, T1 नाप्युत्सहे स्व° — ᶜ) K4 B (except B2) D (except D1 2 7) अप° (for अव°) — ᵈ) K3 4 D1. 2 7 G1 °मते (for °मुने)

30 ᵃ) D1 स (for यत्) D1 यद्, T1 G3 4 M मा, G5 मे (for मां) K1 Dn2 M1 2 भगवन् — ᵇ) K4 B2 Ds2 D1 G3 M1 2 °सत्तम° — ᶜ) K1 2 कार्यसम — ᵈ) Dn1 D7 G3 भगवान् D3 4 मन (for मति)

Colophon om in G1. D5 9 G4 missing — *Sub-parvan* K B Dn Ds D1–4 6–8 10 T1 G5 M1 2 5 अयोपाख्यान — *Adhy no* (figures, words or both) D6 (*sec m*) 56 (=156), T M4 177, G2 187, G3 175 (as in text), G5 M3 5 178, M1. 2 176 — *S'loka no* K5 30, Dn 59

# १७६

C. 5. 6063
B. 5. 177 1
K. 5. 177 1

अकृतव्रण उवाच ।

दुःखद्वयमिदं भद्रे कतरस्य चिकीर्षसि ।
प्रतिकर्तव्यमबले तत्त्वं वत्से ब्रवीहि मे ॥ १
यदि सौभपतिर्भद्रे नियोक्तव्यो मते तव ।
नियोक्ष्यति महात्मा तं रामस्त्वद्धितकाम्यया ॥ २
अथापगेयं भीष्मं तं रामेणेच्छसि धीमता ।
रणे विनिर्जितं द्रष्टुं कुर्यात्तदपि भार्गवः ॥ ३
सृञ्जयस्य वचः श्रुत्वा तव चैव शुचिस्मिते ।
यदत्रानन्तरं कार्यं तदद्यैव विचिन्त्यताम् ॥ ४

अम्बोवाच ।

अपनीतास्मि भीष्मेण भगवन्नविजानता ।
न हि जानाति मे भीष्मो ब्रह्मञ्शाल्वगतं मनः ॥ ५
एतद्विचार्य मनसा भवानेव विनिश्चयम् ।
विचिनोतु यथान्यायं विधानं क्रियतां तथा ॥ ६
भीष्मे वा कुरुशार्दूले शाल्वराजेऽथ वा पुनः ।
उभयोरेव वा ब्रह्मन्यद्युक्तं तत्समाचर ॥ ७
निवेदितं मया ह्येतद्दुःखमूलं यथातथम् ।
विधानं तत्र भगवन्कर्तुमर्हसि युक्तितः ॥ ८

अकृतव्रण उवाच ।

उपपन्नमिदं भद्रे यदेवं वरवर्णिनि ।
धर्मं प्रति वचो ब्रूयाः शृणु चेदं वचो मम ॥ ९
यदि त्वामापगेयो वै न नयेद्गजसाह्वयम् ।
शाल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः ॥ १०
तेन त्वं निर्जिता भद्रे यस्मान्नीतासि भामिनि ।
संशयः शाल्वराजस्य तेन त्वयि सुमध्यमे ॥ ११
भीष्मः पुरुषमानी च जितकाशी तथैव च ।
तस्मात्प्रतिक्रिया युक्ता भीष्मे कारयितुं त्वया ॥ १२

---

## 176

1 a) K1 2 दुष्ट द्वयं, K5 दुष्टद्वयं, T G1 दु:ख द्वयो°; G2 3 5 दु:खद्वयो:, Cs as in text. — c) T1 एवैतत् (for अबले) — d) K4 B D (except D1 7) वदस्व (for ब्रवीहि)

2 a) D10 शाल्वो (for भद्रे) — b) B3 Dn Ds D3 4 10 मतस्; D6 8 मतिस् (for मते) — c) K1.2 5 D2 T G2 5 महात्मान, K4 B Dn Ds D3.4 6 8 10 G1 महात्मा स

3 a) B D (except D1 2 7) त्व (for त)

4 b) D5 G1.3 5 तथैव च, T तदै(T2 °दे)व च, G2 यत्तदेव, M (except M1) तवैव च (for तव चैव). — c) K4 B D (except D1 7) ते भृश (for [अ]नन्तर) — d) K5 D1 6 8 T2 G1 2 5 M1 2 अत्र (for अद्य). D10 अभिधीयता (for विचि°)

5 b) D3 4 भगवन्नागसाह्वयं — c) B D (except D1 7) नाभिजानाति (D3 4 °नीत). K1 2 B3 D3.4 transp मे and भीष्मो — d) M बृहत् (for ब्रह्मन्) K3 D1 S साल्व°

6 b) K4 B1 3.4 Dn Ds D6 10 एतद्, B5 इह (for एव) S भगवानेव निश्चयं

7 a) D5 D6.10 च (for वा) — b) D1 S (mostly) साल्व° — d) B1.3-5 Dn Ds D6 8 10 युक्त यद् (for यद्युक्तं) B2 यत्तद्युक्त समा°

8 ab) K1 2.5 तेद्य दु:ख ह्येतद् (for ह्येतदु:खमूल). D3 4 यथार्थं, G3 M5 यथा तथा — c) D3.4 त्वत्र (for तत्र) Ds2 D6.7 T1 भगवान् — d) Ds2 D6 7 T1 अर्हति D1 तत्वत°, D7 धर्मवित्, D8 संयुत° (for युक्ति°).

9 T2 G2 om. 9a–10b, G2 om the ref. also — b) K4 एतद् (for एव) — c) K (except K4) D2 7 T1 G1 धर्म्यं K3 T1 ब्रूया — d) G5 शृण्वेद वचनं मम

10 T2 G2 om 10ab (cf v.l. 9) — ab) M1.2 न नयेत (for वै न नयेद्) — c) K3 D1 S (mostly) साल्व° M3-5 त्वा (for त्वां) D1 भीत° (for भीरु). — d) K3 5 D7 रामनोदित°, M कामचोदित° (M4 sup lin as in text)

11 a) S (except G3) येन (for तेन). — b) K3-5 S नीता च (for नीतासि). B Dn Ds D3 4 6(m as in text) 8 10 भाविनि, D7 G1.3 5 M2 भामिनी — c) K3 D1 S साल्व°.

12 b) D1 7 मदोत्कट (for तथैव च) — d) K2 B D (except D1.2 7 8) तव (for त्वया).

☞ In D4, the portion from stanza 13 up to

अम्बोवाच ।
ममाप्येष महान्ब्रह्मन्हृदि कामोऽभिवर्तते ।
घातयेयं यदि रणे भीष्ममित्येव नित्यदा ॥ १३
भीष्मं वा शाल्वराजं वा यं वा दोषेण गच्छसि ।
प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता ॥ १४
भीष्म उवाच ।
एवं कथयतामेव तेषां स दिवसो गतः ।
रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता ॥ १५
ततो रामः प्रादुरासीत्प्रज्वलन्निव तेजसा ।
शिष्यैः परिवृतो राजञ्जटाचीरधरो मुनिः ॥ १६
धनुष्पाणिरदीनात्मा खड्गं बिभ्रत्परश्वधी ।
विरजा राजशार्दूल सोऽभ्ययात्सृञ्जयं नृपम् ॥ १७
ततस्तं तापसा दृष्ट्वा स च राजा महातपाः ।
तस्थुः प्राञ्जलयः सर्वे सा च कन्या तपस्विनी ॥ १८
पूजयामासुरव्यग्रा मधुपर्केण भार्गवम् ।
अर्चितश्च यथायोगं निषसाद सहैव तैः ॥ १९
ततः पूर्वव्यतीतानि कथयेते स्म तावुभौ ।
सृञ्जयश्च स राजर्षिर्जामदग्न्यश्च भारत ॥ २०
ततः कथान्ते राजर्षिर्भृगुश्रेष्ठं महाबलम् ।
उवाच मधुरं काले रामं वचनमर्थवत् ॥ २१
रामेयं मम दौहित्री काशिराजसुता प्रभो ।
अस्याः शृणु यथातत्त्वं कार्यं कार्यविशारद ॥ २२
परमं कथ्यतां चेति तां रामः प्रत्यभाषत ।
ततः साभ्यगमद्रामं ज्वलन्तमिव पावकम् ॥ २३
सा चाभिवाद्य चरणौ रामस्य शिरसा शुभा ।
स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतः स्थिता ॥ २४ C. 5. 7006 B. 5. 177. 24 K. 5. 177. 24

---

5 178 29[ab] is lost on a missing fol , the MS is mostly ignored up to the end of the lacuna
13 [a]) K1 5 B2 D1.2 7 महा; K3 4 B1 3–5 Dn Ds D8 10 सदा, D6 8 ततो (for महान्) — [b]) K4 5 हि वर्तते, Ds [ऽ]ति°, D8 G3 M3 4 [ऽ]भिवर्धते, D7 [ऽ]पि वर्तते, D8 [ऽ]भ्यवर्तत, M1 2 [ऽ]नुवर्तते
14 [a]) K3 D1 S साल्व°. — [b]) B3 यस्माद्दोषमिहेच्छसि — After 14, T2 G1.2 ins a colophon (*adhy no* 178)
16 [d]) K1.2 D8 जटी, K5 शिखी (for जटा-) T G नृप (for मुनि )
17 [b]) A few MSS परस्वधी, °स्वध, °श्वध B Ds D8 6 10 स च राजा महातपा° (=18[b]) — [c]) K4 D3 G3 विरजो, B (except B1) Ds D6 10 विनयाद्, M4 (*inf lin* ) विराजन् D8 विनयान्नरशार्दूल — [d]) K3 B Dn2 D6 transp सोऽभ्य° and सृञ्जय D3 सृजय° B3 5 D3 6 नृप°, B1 तदा (for नृपम्) Ds D10 संजय° सोम्ययान्नृप°
18 [a]) K3 B2 D7 T1 G3 ते (for त) D2 तापस D3 राम, D7 सर्वे (for दृष्ट्वा) — D7 om. (hapl ) 18[bc] — [b]) D3 (m as in text) दृष्ट्वा (for स च) — Dn1 om 18[c]–19[d] — [c]) K4 B D (except D1 2, Dn1 D7 om ) राजन् (for सर्वे) — [d]) Ds D10 यश° (for तप°)
19 Dn1 om 19 (cf v l 18) — [a]) D2 G2 अव्यग्र — [c]) K1.2 अर्हितश्च, S पूजितश्च D1 स (for च) K3 यथायोग्य, K4 B D (except D1–3 7, Dn1 om ) T G यथान्याय — [d]) D1 T G1.2 5 M सहाय तै°, D7 सहाध्वरैः, G3 समासदै°
20 [a]) B2 Dn1 G3 पूर्वं (for पूर्व-) — [b]) K4 B D M3–5 कथयतौ — [c]) D1 3 transp च and स B Dn D8 D6 8 10 आसा(Ds D8 °स; D10 °सी)ता जामदग्न्यश्च — [d]) K5 प्रतापवान् (for च भारत) B Dn Ds D6 8 सृजयश्चैव भारत, D10 सृजयो होत्रवाहन (=5 175 7[d], 28[d])
21 [a]) K5 B3 D (except D1 7) G5 तथा (for तत ) — [c]) K1 Ds D1 वचन (for मधुर) — M2 om 21[d]–23[d] — [d]) T G5 काम (for राम) D1 मधुरम् (for वचनम्) K3 उत्तम (for अर्थवत्)
22 M2 om 22 (cf v l 21) — [b]) A few MSS काशी° K D1.7 विभो (for प्रभो)
23 M2 om 23 (cf v l. 21) — [a]) T2 G5 प्रथम (for परम) — [b]) D7 transp ता and राम° B3 D3 3 T G M3 4 स (for तां) D1 2 राम° प्रत्यभ्यभाषत — [c]) K4 B (except B2) Dn Ds D6 10 साभ्यवदद्, D3 7 साभ्यागमद् S राजन् (for राम) — [d]) K1.2 5 ज्वलत° मनलं यथा
24 [a]) K3–5 T2 G2 5 M1.2 साथा°, B Dn Ds D3 6 8 10 ततो°; D7 साया°, G1 साभिवाद्याथ (for सा चाभि°) — [b]) Dn2 Cn शिरसौ (=श्रेष्ठौ Nil !) (for शिरसा) K4 तदा, B (except B2) Dn Ds D6 M1 2 शुभौ, D8 उभौ (for शुभा) — [c]) K1.2 D1.3 T2 G2 पद्मपलाशाभ्या, Dn1 पद्मदलाग्राभ्या

C 5. 7007
B 5. 177 25
K 5. 177 25

रुरोद सा शोकवती बाष्पव्याकुललोचना ।
प्रपेदे शरणं चैव शरण्यं भृगुनन्दनम् ॥ २५

राम उवाच ।

यथासि सृञ्जयस्यास्य तथा मम नृपात्मजे ।
ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव ॥ २६

अम्बोवाच ।

भगवञ्शरणं त्वाद्य प्रपन्नास्मि महाव्रत ।
शोकपङ्कार्णवाद्धोरादुद्धरस्व च मां विभो ॥ २७

भीष्म उवाच ।

तस्याश्च दृष्ट्वा रूपं च वयश्चाभिनवं पुनः ।
सौकुमार्यं परं चैव रामश्चिन्तापरोऽभवत् ॥ २८
किमियं वक्ष्यतीत्येवं विमृशन्भृगुसत्तमः ।
इति दध्यौ चिरं रामः कृपयाभिपरिप्लुतः ॥ २९
कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता ।
सर्वमेव यथातत्त्वं कथयामास भार्गवे ॥ ३०
तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा ।
उवाच तां वरारोहां निश्चित्यार्थविनिश्चयम् ॥ ३१
प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भामिनि ।
करिष्यति वचो धर्म्यं श्रुत्वा मे स नराधिपः ॥ ३२
न चेत्करिष्यति वचो मयोक्तं जाह्नवीसुतः ।
धक्ष्याम्येनं रणे भद्रे सामात्यं शस्त्रतेजसा ॥ ३३
अथ वा ते मतिस्तत्र राजपुत्रि निवर्तते ।
तावच्छाल्वपतिं वीरं योजयाम्यत्र कर्मणि ॥ ३४

अम्बोवाच ।

विसर्जितास्मि भीष्मेण श्रुत्वैव भृगुनन्दन ।
शाल्वराजगतं चेतो मम पूर्वं मनीषितम् ॥ ३५
सौभराजमुपेत्याहमब्रुवं दुर्वचं वचः ।
न च मां प्रत्यगृह्णात्स चारित्रपरिशङ्कितः ॥ ३६

---

25 $^{a}$) K D1 2 Ca d शुक्रुद(K3 5 Ca °द)ती (for शोक°) S प्ररुरोद वरारोहा — $^{b}$) D5 बाष्पगद्गदलोचना; M3–5 °पर्याकुलेक्षणा — $^{c}$) K1. 2 5 चैन, D10 राम (for चैव) — $^{d}$) D10 तापस (for शरण्य)

26 $^{a}$) K3–5 B D त्व (for [अ]सि) D10 असि (for अस्य) — $^{b}$) B3–5 Dn D5 D6 8 10 मे त्व (Dn1 [by transp] त्वं मे) (for मम) — $^{c}$) K1 2 5 वद (for ब्रूहि)

27 $^{a}$) K1 2 5 शरण्यं (for भगवन्) — $^{b}$) B1 3 D (except Dn1 D1 2) महाव्रत — $^{cd}$) Ds1 D6 10 °पकार्णवे B Dn D5 D6 8 10 मग्नां घोरादुद्धर (for घोरादुद्धरस्व च) M1 2 मा (for मां) B2 S प्रभो, B4 5 स्थिता (for विभो)

28 $^{a}$) K1 2 स, K3 B2 5 D1–3 7 तु (for the first च) K3 D7 तद्रूप (for रूपं च) K5 तस्या सुरूपं दृष्ट्वा च — $^{b}$) K3–5 B D (except D10) G1 वपुश् (for वयश्) K3 D3 7 G5 M4 चापि (for चाभि-) B2 4 शनैः (for पुनः) — $^{d}$) K3 4 D1. 2 7 रामश्चिता समा(K4 D2 7 °तामथा)विशत्

29 D1 om 29–30 — $^{a}$) K1 3 D3 M एव (for एव) — $^{b}$) K (except K4) D7 M2 भृगुनदन B Dn D5 D6 8 10 विममर्श भृगूद्वह

30 D1 om 30 (cf. v l 29). — $^{c}$) K1 2 एतद् (for एव) D10 यथावृत्त

31 $^{a}$) T1 G3 श्रुत्वा तु (for तच्छ्रुत्वा) B1 5 T1 च (for तु) — $^{d}$) K1. 2 5 D1 2 7 विनिश्चित्यार्थनिश्चय (D1 °श्चित), D5 निश्चित्यात्मवि°, T1 निश्चित्य गुरुलाघव, T2 G M4 निश्चितार्थो (G3. 5 °र्थे-) विनिश्चये

32 Before 32, N ins राम उ° (K3 D1. 3 om उ°) — $^{b}$) B Dn Ds1 D2 6 8 10 भाविनि D3 मत्तमातगगामिनि — $^{c}$) K4 B (except B3) Dn D5 D6 8 10 T G मह्य (for धर्म्यं) — $^{d}$) B Dn D6 10 च स, D3 स च, T G धर्म्यं (for मे स)

33 $^{b}$) B2 D7 M5 मयोक्तो — $^{c}$) B (except B3) Dn अह (for एन)

34 $^{b}$) K (except K3) B Dn D2 3 6 न (for नि) — $^{c}$) N यावत् (D7 याहि) K3 D1 S साल्व°

35 $^{a}$) K4 B D (except D1 7) अह (for अस्मि) — $^{b}$) D7 एतद् (for एव) — $^{c}$) K3 D1 S साल्व°; T2 G1 2 5 °पतिं K4 B D भाव (for चेतो) — $^{d}$) K3 5 Dn1 D2 10 T G1 M3 5 पूर्वे- (for पूर्वं)

36 $^{a}$) A few N MSS शा(or सा)ल्व° (for सौभ°). — $^{b}$) K3 B5 Dn D5 D6–8 10 अवोच (for अब्रुव) K1 दुःखदं, D10 कृपण (for दुर्वच) — $^{c}$) K1 2 5 न मा स वै प्रत्यगृह्णात् — $^{d}$) K1 2 5 भीष्मस्य परि; K3 चारित्र प्रति, D3 चारित्रभय; T1 चारित्रे मम, T2 G M3–5 चारित्रमभि- (G3 °ति-), M1 2 चारित्रस्याति Some MSS चारित्र्य-

एतत्सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन ।
यदत्रौपयिकं कार्यं तच्चिन्तयितुमर्हसि ॥ ३७
ममात्र व्यसनस्यास्य भीष्मो मूलं महाव्रतः ।
येनाहं वशमानीता समुत्क्षिप्य बलात्तदा ॥ ३८
भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशम् ।
प्राप्ताहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ॥ ३९
स हि लुब्धश्च मानी च जितकाशी च भार्गव ।
तस्मात्प्रतिक्रिया कर्तुं युक्ता तस्मै त्वयानघ ॥ ४०
एष मे ह्रियमाणाया भारतेन तदा विभो ।
अभवद्धृदि संकल्पो घातयेयं महाव्रतम् ॥ ४१
तस्मात्कामं ममाद्येमं राम संवर्तयानघ ।
जहि भीष्मं महाबाहो यथा वृत्रं पुरंदरः ॥ ४२

इति श्रीमहाभारते उद्योगपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## १७७

भीष्म उवाच ।

एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो ।
उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः ॥ १
काश्ये कामं न गृह्णामि शस्त्रं वै वरवर्णिनि ।
ऋते ब्रह्मविदां हेतोः किमन्यत्करवाणि ते ॥ २
वाचा भीष्मश्च शाल्वश्च मम राज्ञि वशानुगौ ।
भविष्यतोऽनवद्याङ्गि तत्करिष्यामि मा शुचः ॥ ३
न तु शस्त्रं ग्रहीष्यामि कथंचिदपि भामिनि ।
ऋते नियोगाद्विप्राणामेष मे समयः कृतः ॥ ४

अम्बोवाच ।

मम दुःखं भगवता व्यपनेयं यतस्ततः ।
तत्तु भीष्मप्रसूतं मे तं जहीश्वर माचिरम् ॥ ५

C. 5. 7023
B. 5. 178. 5
K. 5. 178. 5

38 $^{a}$) K1 B D (except D2) तु (for [अ]त्र) D· आसीत् (for अस्य) — $^{b}$) K2 transp भीष्मो and मूलं D1 हेतु (for मूलं) K1 2 B2 8 D5 D2. 6 10 M2-4 महाव्रत, T G महातपा — $^{c}$) D2 येनाहं च समानीता — $^{d}$) K1 2 समुत्कृष्य च°

39 $^{d}$) B3 transp अप्रिय and उत्तम K (except K4) च (K1 by corr म) न्य प्रियमुत्तमं

40 $^{a}$) K1 2 दुष्ट°, T1 दृप्त° (for लुब्ध°) B Dn D5 D6 8 10 नीचश्च (for मानी च) — $^{b}$) K4 D7 भारत (for भार्गव) — $^{cd}$) K2 4 D1. 2 7 transp कर्तुं and युक्ता

41 Dn2 D1 om (hapl.) 41$^{a}$–42$^{b}$ — $^{a}$) K3 Dn1 एव (for एष) K3 B2-5 Dn1 क्रियमाणाया, Ca as in text — $^{b}$) D6 तदाभिभो, T G2 तथा विभो

42 Dn2 D1 om 42$^{ab}$ (cf v l 41) — $^{a}$) K3 B3 D7 अपि (for अद्य) K2 T G1 2 8 एव, B3 D2 8 एव, D7 एन, D10 M2. 8 एन (for इम) — $^{b}$) B D (except D2 7) समादय (for संव°)

Colophon om in K4 D1 6 8 G1 missing — *Sub-parvan* K1-3 6 B Dn D5 D1-2 6-8 10 G5 M1-4 अम्बोपाख्यान — *Adhy name* T1 भगवद्भार्गवदर्शनं, G· भार्गवदर्शन — *Adhy no* D6 (*sec. m*) 57 (=157), T1 M4 178, T2 G1 2 5 M3 5 179, G3 176 (as in text), M1 2 177 — *S'loka no* K4 Dn2 42, Dn1 40

## 177

☞ This adhy is missing in D4 (cf v l. 5 176 13), the MS is mostly ignored here

1 $^{a}$) K1. 2 5 तया (for तदा) — $^{cd}$) K3 4 B2 D1. 2 7 transp रुदतीं and कन्यां D5 उवाच रुदती दीना चोदयती etc

2 D2 transp 2$^{ab}$ and 4$^{ab}$ — $^{a}$) B1 5 D (except D1-3) transp कामं and न

3 $^{a}$) K1. 2 6 D3 वचो (for वाचा) K3 T1 G1. 3 transp भीष्म° and शाल्व° K3 S साल्व°

4 D2 transp 2$^{ab}$ and 4$^{ab}$ — $^{a}$) B3 T G M2-5 च (for तु) T G M2-4 प्रगृह्णामि (for ग्रही°) M1 2 न शस्त्र प्रतिगृह्णामि — $^{b}$) B D (except D1 2 7) भाविनि — $^{c}$) S नियोग — $^{d}$) K3 इति मे निश्चय कृत

5 M1 om. 5–6 — $^{b}$) K D2 7 8 G3 M2 ततस्तत, D1 यथा तथा (for यतस्तत ) — $^{c}$) B1. 3 4 D (except D1. 2 7) तच्च, B2 4 अत्र (for तत्तु) K (except K4) वै (for मे) — $^{d}$) D3 जहीश्वर नदीसुत, T2 G त जहि

C. 5. 7060
B. 5. 178. 6
K. 5. 178. 6

राम उवाच ।

काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ ।
शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम ॥ ६

अम्बोवाच ।

जहि भीष्मं रणे राम मम चेदिच्छसि प्रियम् ।
प्रतिश्रुतं च यदि तत्सत्यं कर्तुमिहार्हसि ॥ ७

भीष्म उवाच ।

तयोः संवदतोरेवं राजन्रामाम्बयोस्तदा ।
अकृतव्रणो जामदग्न्यमिदं वचनमब्रवीत् ॥ ८
शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि ।
जहि भीष्मं रणे राम गर्जन्तमसुरं यथा ॥ ९
यदि भीष्मस्त्वयाहूतो रणे राम महामुने ।
निर्जितोऽस्मीति वा ब्रूयात्कुर्याद्वा वचनं तव ॥ १०
कृतमस्या भवेत्कार्यं कन्याया भृगुनन्दन ।
वाक्यं सत्यं च ते वीर भविष्यति कृतं विभो ॥ ११
इयं चापि प्रतिज्ञा ते तदा राम महामुने ।
जित्वा वै क्षत्रियान्सर्वान्ब्राह्मणेषु प्रतिश्रुतम् ॥ १२
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि ।
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव ॥ १३
शरणं हि प्रपन्नानां भीतानां जीवितार्थिनाम् ।
न शक्ष्यामि परित्यागं कर्तुं जीवन्कथंचन ॥ १४
यश्च क्षत्रं रणे कृत्स्नं विजेष्यति समागतम् ।
दृप्तात्मानमहं तं च हनिष्यामीति भार्गव ॥ १५
स एवं विजयी राम भीष्मः कुरुकुलोद्वहः ।
तेन युध्यस्व संग्रामे समेत्य भृगुनन्दन ॥ १६

राम उवाच ।

स्मराम्यहं पूर्वकृतां प्रतिज्ञामृषिसत्तम ।
तथैव च करिष्यामि यथा साम्नैव लप्स्यते ॥ १७

---

त्वर मा चिरं

6 G3 M4 om 6 (for M4 cf v l 5) — a) K4 D8 ध्रुव सुभ्रु, D1 -चिरात्सुभ्रु (for पुनर्ब्रूहि) — c) S (G3 M4 om) वदमानो (for वन्दनार्हो) K8 शिरसा वंदनाहेतो — d) T G (G3 om) गिर (for गिरा)

7 a) = 9c T2 M3-5 वीर, G1 भीम, G3 5 M1.2 वीर (for राम) G2 महावीर (for रणे राम) — After 7a, B3 5 Dn Ds D6 8 10 ins

576* गर्जन्तमसुर यथा ।
समाहूतो रणे राम
[ Cf 9cd. ]

— b) K D1 3 7 transp इच्छसि and प्रिय Dn1 चेदिच्छसि प्रिय प्रति — c) Dn Ds D6 8 यदपि, D10 सदसि (for यदि तत्) — d) D1 2 7 S इच्छसि (for अर्हसि) Dn Ds D6 8 10 तत्सत्यं कर्तुमर्हसि

8 S om the ref — a) Dn1 M (except M5) एव (for एवं) — c) Hypermetric! B Dn Ds D6 10 ऋषिः परमधर्मात्मा Ca s cite ऋषि, Cnp अकृतव्रणः (as in text)

9 a) Hypermetric! — b) K5 transp कन्या and न G3 रक्षितुम् (for न त्यक्तुम्) — B1-3 Dn Ds D10 om. 9cd (cf. 576*) — c) = 7a D3 शत्रु (for भीष्म)

10 B1 5 om 10ab — a) S यथा (for यदि) B1-3 Dn Ds D6 8 10 रणे राम, D3 समाहूत (for त्वया°) — b) D8 त्वया मृधे (for महा°) B1-3 Dn Ds D6 8 समाहूतस्त्वया मृधे, D10 न युक्तश्चेत्त्वया मृधे

12 a) G5 सा (for ते) — b) K1. 2 5 D5 D8 यदा (for तदा) B D8 महाहवे (for °मुने) — d) B Dn D1 T G प्रतिश्रुता

13 c) K1 (m as in text) Dn2 Ds D3 7 8 10 G3 ब्रह्मविद् (for °द्विड्) — d) T2 G1 2 5 विने° (for हनि°)

14 G5 om (hapl) 14-15 — a) B3 Dn Ds D6 8 10 शरणार्थं (B3 Dn2 °र्थे) (for शरण हि) K8 व°; D2 च (for हि) — b) B Dn Ds D6.7 शरणार्थिनां; D10 शरणैषिणा, T G (G5 om) विजयार्थिना — c) B (except B2) Dn Ds D6 7 10 शक्यामि

15 G5 om 15 (cf v l 14) — a) G3 यच्च (for यश्च) B2 तु (for च) B3 D (except D3 7; D2 missing) transp क्षत्र and कृत्स्न B1 4 क्षत्र, T1 दस (for कृत्स्न) — c) K3 4 B D दीप्तात्मानम्, G3 दृष्टात्मानम् K5 D1 2 वै (for च)

16 D2 om 16a-17b — a) D3 (by transp) एव स, S स एष — b) B3 कुरुपितामह°

17 D8 जामदग्न्युवाच (for राम उ°) — D2 om. 17ab (cf. v.l 16) — c) K5 (by transp) तथा चैव; D10 तथैवाह M3-5 चरि° (for करि°). — d) K3 T1 लभ्य°, D3 लक्ष्य° (for लप्स्य°) T2 G1.2.5 यथा

कार्यमेतन्महद्ब्रह्मन्काशिकन्यामनोगतम् ।
गमिष्यामि स्वयं तत्र कन्यामादाय यत्र सः ॥ १८
यदि भीष्मो रणश्लाघी न करिष्यति मे वचः ।
हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः ॥ १९
न हि बाणा मयोत्सृष्टाः सज्जन्तीह शरीरिणाम् ।
कायेषु विदितं तुभ्यं पुरा क्षत्रियसंगरे ॥ २०
भीष्म उवाच ।
एवमुक्त्वा ततो रामः सह तैर्ब्रह्मवादिभिः ।
प्रयाणाय मतिं कृत्वा समुत्तस्थौ महामनाः ॥ २१
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः ।
हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया ॥ २२
अभ्यगच्छत्ततो रामः सह तैर्ब्राह्मणर्षभैः ।
कुरुक्षेत्रं महाराज कन्यया सह भारत ॥ २३
न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीम् ।
तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ॥ २४

इति श्रीमहाभारते उद्योगपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

## १७८

भीष्म उवाच ।
ततस्तृतीये दिवसे समे देशे व्यवस्थितः ।
प्रेषयामास मे राजन्प्राप्तोऽस्मीति महाव्रतः ॥ १
तमागतमहं श्रुत्वा विषयान्तं महाबलम् ।
अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुम् ॥ २
गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः ।
ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ॥ ३
स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।
प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ॥ ४
भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया । C. 5. 7054 B. 5. 178. 23 K. 5. 178. 28

---

साम्नोपलभ्य(G5 °भ्य)ते

18 $^{a}$) K3 महद्विप्र, D5 D8 महाब्रह्मन् — $^{b}$) D3 कन्याया यन्मनोगत — D6 om. 18$^{c}$–19$^{b}$

19 D6 om 19$^{ab}$ (cf. v l. 18) — $^{c}$) K3 एवम्, S अहम् (for एनम्) D8 हनिष्यामि समुद्रिक्त, D7 °ष्याम्येव सुव्यक्त.

20 $^{c}$) Dn1 D7 G3 कार्येषु — $^{d}$) D5 क्षत्रियपुंगवे, G3 °संगमे

21 N (except K3 B2 D1.2) T1 om. the ref — $^{a}$) S तदा (for ततो) — $^{b}$) D7 तैर्ब्राह्मणर्षभै° (cf 23$^{b}$) — $^{d}$) K3 B D महातपा° (for °मना°)

22 $^{b}$) D8 अथ (for तत्र) — $^{c}$) D3 जप्यपरा° (for जप्त°) — $^{d}$) D8 प्रतस्थुर्मे जयाशया

23 $^{a}$) K4 B3 5 T1 G1 अभ्यागच्छत् M1 एवमुक्त्वा तदा राम° — $^{b}$) G1 समेतैर्, G2 सगतैर् (for सह तैर्) K4 B D (except D1.8) ब्रह्मवादिभि° (cf 21$^{b}$) — $^{c}$) D10 समासाद्य, M1 जगामाथ (for महा°) — $^{d}$) K3 S भार्गव° (for भारत)

24 $^{a}$) K D3 8 न्यवसत (for न्यवि°)

Colophon om. in Dn D4 D5 9 G4 missing — *Sub-parvan* K B D5 D1–3 6–8 10 G5 M अंबोपाख्यान — *Adhy name* T1 भार्गवाभियाने सरस्वतीनिवास°, G5 रामसरस्वतीतीरनिवास°, M8 रामहर्षागमोन (810), M4 5 रामनिवास° — *Adhy no* (figures, words or both) D6 (*sec m*) 58 (=158), T1 M4 179, T2 G1.2 5 M3 5 180, G3 177 (as in text), M1 2 178

178

☞ Stanzas 1–29$^{ab}$ are missing in D4 (cf v l 5 176 13), the MS is mostly ignored up to the end of the lacuna

1 $^{b}$) B D (except D1 2 7) मद्देश (for समे देशे) — $^{c}$) B Dn D5 D6 8 कुरु प्रिय स मे राजन्, D8 कुरुक्षेत्रमह रा°, D10 भृगुश्रेष्ठ स मा रा°

2 $^{b}$) K D1–3 7 10 विषयाते — $^{c}$) K1–3 D3 G5 अभ्यागच्छ — $^{d}$) K4 B2 D1 2 7 M विभु, D8 भृगु

3 $^{a}$) K1.2 गा° (for गा) K4 गामर्घं च पुरस्कृत्य

4 $^{c}$) K1 D8 अभि° (for प्रति°)

5 Before 5, B (except B3) Dn D5 D10 ins राम उ° — $^{b}$) K4 B D (except D1.2 7) तदा (for त्वया) — $^{c}$) B D (except D1.2 7) अकामेन (D3.6 8 10 °मैव) त्वयानीता — $^{d}$) G5 इय (for एव)

C. 5. 7054
B. 5. 178. 28
K. 5. 178. 28

अकामेयमिहानीता पुनश्चैव विसर्जिता ॥ ५
विभ्रंशिता त्वया हीयं धर्मावाप्तेः परावरात् ।
परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति ॥ ६
प्रत्याख्याता हि शाल्वेन त्वया नीतेति भारत ।
तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ॥ ७
स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम् ।
न युक्तमवमानोऽयं कर्तुं राज्ञा त्वयानघ ॥ ८
ततस्तं नातिमनसं समुद्वीक्ष्याहमब्रुवम् ।
नाहमेनां पुनर्दद्यां भ्रात्रे ब्रह्मन्कथंचन ॥ ९
शाल्वस्याहमिति प्राह पुरा मामिह भार्गव ।
मया चैवाभ्यनुज्ञाता गता सौभपुरं प्रति ॥ १०
न भयान्नाप्यनुक्रोशान्न लोभान्नार्थकाम्यया ।
क्षत्रधर्ममहं जह्यामिति मे व्रतमाहितम् ॥ ११
अथ मामब्रवीद्रामः क्रोधपर्याकुलेक्षणः ।
न करिष्यसि चेदेतद्वाक्यं मे कुरुपुंगव ॥ १२
हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ।
संरम्भादब्रवीद्रामः क्रोधपर्याकुलेक्षणः ॥ १३
तमहं गीर्भिरिष्टाभिः पुनः पुनररिंदमम् ।
अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ १४
तमहं प्रणम्य शिरसा भूयो ब्राह्मणसत्तमम् ।
अब्रुवं कारणं किं तद्यत्त्वं योद्धुमिहेच्छसि ॥ १५
इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ १६
ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः ।

---

6 $^{a}$) $T_1$ भीष्म (for हीय) — $^{b}$) $K_{2\ 6}$ धर्मादासे, $K_8$ धर्मादास्ते $M_{8-5}$ पुरातनात्, Ca d $_8$ परावरात् (as in text) B Dn Ds $D_{8\ 6\ 8\ 10}$ धर्मादा($B_8$ अधर्म)स्ते यशस्विनी, $D_7$ क्रोधपर्याकुलेक्षणा — $^{c}$) $K_{1\ 2}$ परिमृष्टा — $^{d}$) $K_{1\ 2\ 5}$ $D_{7\ 8}$ कोन्यो नेतुम्, $K_8$ $D_2$ कोभिमतुम्, $K_4$ $B_5$ $D_{8\ 10}$ कोभिगतुम्, $D_1$ कोतिमतुम्, $T_1$ $G_{8\ 5}$ $M_1$ कोभिपत्तुम्, $T_2$ $G_{1\ 2}$ को हि वक्तुम्, $M_2$ को न त्यक्तुम्, $M_{8-5}$ को हि योक्तुम्

7 $^{a}$) $K_{1.8}$ $D_{1\ 2}$ S साल्वेन — $^{b}$) $K_5$ Ds नीता हि (for नीतेति)

8 $^{c}$) $B_{1\ 2\ 4}$ Dn युक्तस्त्ववमानोय, $D_7$ °मवमानं वै — $^{d}$) $K_{1\ 2}$ कर्तुं राज्ञस्, $K_{8\ 4}$ B D राज्ञा ($Dn_1$ Ds राजन्) कर्तुं, $K_5$ $T_2$ $G_2$ कर्तुं राज्ञा

9 $^{a}$) $K_{2\ 4\ 5}$ B D (except $D_{1\ 2\ 7}$) वै विमनस, Ca d $_8$ नाति° (as in text) — $^{b}$) $K_{8-5}$ $B_5$ $D_{2\ 8\ 6\ 7}$ $T_2$ G $M_{8\ 4}$ समुदीक्ष्य (for °द्वीक्ष्य) A few S MSS अब्रव $B_{1-4}$ Dn Ds $D_{10}$ उदी($Dn_2$ Ds $D_{10}$ °द्वी)क्ष्याहमथाब्रुव — $^{c}$) $K_{8\ 4}$ $D_{1\ 8}$ $T_1$ $G_8$ एता, $D_8$ पुनर् (for एना) $D_8$ इमा (for पुनर्) $K_{1\ 2\ 5}$ गृह्य, $B_8$ लभ्या, $D_7$ गृध्यां (for दद्या) — $^{d}$) $K_{1\ 2\ 5}$ $D_7$ भ्रात्रे दद्या, B Dn Ds $D_{6\ 8\ 10}$ (by transp) ब्रह्मन्भ्रात्रे

10 $^{a}$) $K_8$ $D_1$ S सात्व° $K_{1-4}$ $D_1$ ह्याह, $D_2$ त्वाह (for प्राह) $K_5$ शाल्वे गतमतिर्ह्यास — $^{b}$) $K_4$ B Dn Ds $D_{6\ 8\ 10}$ एव (for इह) — $^{d}$) $T_1$ पुरा (for गता) B Dn Ds $D_{8\ 6\ 10}$ इय नगर (for सौभ°)

11 Cf 5 49 15, 89 24, 186 26 — $^{a}$) $D_8$ हि, $G_8$ M [अ]भि- (for [अ]पि) — $^{b}$) $K_{8\ 4}$ $D_{1\ 7}$ $T_1$ अर्थकारणात्, $T_2$ $G_{1-3}$ अर्थकामया ($G_1$ °मत, $G_8$ °ह्णया); Ca आत्मकाम्यया, Cd as in text. B Dn Ds $D_{8.6\ 8\ 10}$ नार्थलोभान्न काम्य($B_3$ °म)या. — $^{c}$) $K_4$ B (except $B_2$) Dn Ds $D_{6.10}$ क्षात्र (for क्षत्र) $D_7$ ब्रह्मन् (for जह्याम्) — $^{d}$) $D_7$ न जह्या (for इति मे)

12 $^{b}$) = $13^{d}$, and = 1 166 $30^{d}$, 173 $5^{b}$ $K_4$ $D_1$ स्मयन्निव पुरातन ($D_1$ °रा शनै°), T G कोपपर्या°, Ca as in text — $K_8$ $D_1$ om. (hapl) $12^{c}$–$13^{d}$. — $^{cd}$) $D_1$ transp एतत् and वाक्य. B Dn Ds $D_{6\ 8}$ नर° (for कुरु°)

13 $K_8$ $D_1$ om 13 (cf v l 12), $D_8$ om $13^{cd}$ — $^{c}$) $K_{1\ 2}$ स्मरभत, Ca d as in text — $^{d}$) = $12^{b}$ (cf v l) $T_2$ क्रोधसरक्तलोचन, $G_2$ कोपपर्या°

14 $^{a}$) $M_{8-5}$ ततोह (for तमह) — $^{b}$) $K_4$ $B_{8-5}$ D $G_1$ $M_{2\ 5}$ अरिंदम — $^{d}$) $K_4$ $Ds_1$ $D_7$ $G_{1-8}$ चैव — After 14, T G $M_1$ ins

577* यदा प्रयाच्यमानोऽपि प्रसाद न करोति मे ।

15 $^{a}$) = Hypermetric! $K_8$ सोह, $D_1$ $G_5$ $M_{8-5}$ अह (for तमह) $D_8$ मूर्ध्ना वै (for शिरसा) B Dn Ds $D_{6\ 8\ 10}$ प्रणम्य तमह मूर्ध्ना — $^{b}$) K $D_{1-8\ 7}$ भूमौ ($K_6$ क्षितौ) (for भूयो) $T_2$ $G_{2\ 5}$ भूयो ब्राह्मणमुत्तम — $^{c}$) A few MSS अब्रव $K_8$ $D_7$ किंचिद् (for किं तद्). — $^{d}$) $K_5$ $D_{8\ 10}$ यस्त्व; $B_8$ यद्वै; $D_6$ युद्ध; $D_7$ न त्वा (for यत्त्व) B (except $B_8$) Dn Ds $D_{2\ 8.10}$ $G_8$ युद्धम् (for योद्धुम्) B D (except $D_{1\ 7\ 8}$) $G_8$ मया (for इह) $D_1$ उत्सहे (for इच्छसि) $K_8$ योद्धुमिच्छामि येन वै

16 $^{b}$) $K_{1\ 2\ 5}$ T G (except $G_8$) त्वया चैव (for भवतैव)

17 $G_2$ om $17^{ab}$ — $^{b}$) $K_{8-4}$ $D_{1-8\ 7}$ क्रोध($D_8$

जानीषे मां गुरुं भीष्म न चेमां प्रतिगृह्णसे ।
सुतां काश्यस्य कौरव्य मत्प्रियार्थं महीपते ॥ १७
न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ।
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः ।
त्वया विभ्रंशिता हीयं भर्तारं नाधिगच्छति ॥ १८
तथा ब्रुवन्तं तमहं रामं परपुरंजयम् ।
नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ १९
गुरुत्वं त्वयि संप्रेक्ष्य जामदग्न्य पुरातनम् ।
प्रसादये त्वां भगवंस्त्यक्तैषा हि पुरा मया ॥ २०
को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन्स्त्रीणां दोषान्महात्ययान् ॥ २१
न भयाद्वासवस्यापि धर्मं जह्यां महाद्युते ।
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु माचिरम् ॥ २२
अयं चापि विशुद्धात्मन्पुराणे श्रूयते विभो ।
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥ २३
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य कार्यं भवति शासनम् ॥ २४
स त्वं गुरुरिति प्रेम्णा मया संमानितो भृशम् ।
गुरुवृत्तं न जानीषे तस्माद्योत्स्याम्यहं त्वया ॥ २५
गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः ।
विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव ॥ २६
उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।
यो हन्यात्समरे क्रुद्धो युध्यन्तमपलायिनम् ।
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ॥ २७
क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन ।
यो यथा वर्तते यस्मिंस्तथा तस्मिन्प्रवर्तयन् ।
नाधर्मं समवाप्नोति नरः श्रेयश्च विन्दति ॥ २८
अर्थे वा यदि वा धर्मे समर्थो देशकालवित् ।

C. 5. 7030
B. 5. 178. 54
K. 5. 178. 54

---

कोप)पर्याकुलेक्षण° (=12^b, 13^d) — ^d) D1 चैव, D2 G3 चैनां (for चेमां) K4 प्रतिपद्यसे, D1.2 G1.6 °गृह्यसे, D7 °गृह्णसि B (except B2) Dn Ds D2.6.8.10 गृह्णामीमा न चैव ह (D2.8 हि) — ^f) B1.2.4 Dn1 D2 महामते (for मही°)

18 ^a) K1-3 T1 G2.5 मे (for ते)

19 ^c) T2 G1.2 मा हि (for भावि) — ^d) D7 ब्रह्मन्किं वा (for ब्रह्मर्षे किं) G2 शृणोमि (for श्रमेण)

20 ^c) D7 T1 G2.5 M1.2 त्वा (for त्वां) — ^d) K3 D1 त्यक्त्वैव हि, K5 त्यक्त्वैषा (for °षा हि) B Dn Ds D6.8.10 तु (for हि) K1-3 D1 G1 M1.2 transp पुरा and मया

21 ^a) K3 जानन् (for जातु) K1.2 परभार्यां — ^c) D3 वासयेत्स्व- (for °येत) K3 जातु (for जानन्) — ^d) G3 मर्म (for दोषान्) D2 G3 दुरत्ययान्, D3 महातपा B1.2.4 Dn Ds D6.8.10 स्त्रीणां दोषो महात्यय

22 ^b) B1-4 Dn Ds D2.6.8.10 महाव्रत, B5 D7 कथंचन, G3 महामते (for °द्युते) — ^c) Dn1 D2.5 G. मा (for मा) K4 D3 प्रसीद मम मा वे, D7 प्रसीद त्व मयि ब्रह्मन्

23 ^a) Ds D6.8.10 विशुद्धात्मा — ^b) K3 S (except G1 M1) पुराण° T G M1 (inf lin as in text) महान् (for विभो) — ^d) K3 गीता श्लोका

24 =(var) Ādi, App I, No 81, lines 109-110, (var) C 12 2053, 5294^{cd}-5295^{ab}, (var) Rām 2 21 13 (Bom ed), (var) Pañcatantra 1 341 — ^c) D1.7 T G M1 उत्पथं प्रति° — ^d) N परित्यागो विधीयते (K2 त्यागो भवति शासन)

25 ^c) K4 B D (except D1.2.7) गुरुवृत्तिं — ^d) K4.5 B D (except D7) वै (for [अ]ह)

26 ^a) D1 G1 हन्यात् — ^d) K5 transp तव and क्षान्त

27 ^a) S रणे (G2 रथे) (for अथो) — ^c) K2.4 B3 D (except D3) क्रुद्ध (for क्रुद्धो) — ^f) D7 इति धर्म विनिश्चय, G6m इति धर्मविदो विदु

28 ^a) K4 अथ धर्म°, S स्थितिर्धर्मे — ^b) K (except K4) D7 [ऽ]स्मि (for ऽस्मि) B4 परंतप (for तपो°) — ^d) K4 B Dn Ds D8.10 तस्मिन्नेव (for तथा तस्मिन्) Dn2 प्रवर्तते, D1 S °येत् (M2 °नात्), D2 °न, Ca d s as in text D7 वर्तितव्य तथा भवेत — ^e) G5 न ह्यवाप्नोति (for सम°) — ^f) B Dn Ds D2.6.10 न चाश्रेयश्च

29 ^b) K1.2 न नरो (for समर्थो) — D4 resumes with 29^{cd} — ^c) B D (except D1.2.7) Ca अर्थे (D3.4 Ca °र्थे)संशयमापन्न°, S (except G6) अनर्थे संशयापन्न°, Cd as in text — ^d) B5 D2-4 T G1.2 श्रेयो, Ca s श्रेयान् (as in text) K4 नि श्रेयस वच, B Dn Ds D6.8.10 निःसंशयो (D3 °श्रेयसो) नर, D2 T1

C. 5. 7080 B. 5. 178. 64 K. 5. 178. 64 अनर्थसंशयापन्नः श्रेयान्निःसंशयेन च ॥ २९

यस्मात्संशयितेऽर्थेऽस्मिन्यथान्यायं प्रवर्तसे ।
तस्माद्योत्स्यामि सहितस्त्वया राम महाहवे ।
पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम् ॥ ३०

एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ।
तत्करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ।
द्वंद्वे राम यथेष्टं ते सज्जो भव महामुने ॥ ३१

तत्र त्वं निहतो राम मया शरशताचितः ।
लप्स्यसे निर्जिताँल्लोकाञ्शस्त्रपूतो महारणे ॥ ३२

स गच्छ विनिवर्तस्व कुरुक्षेत्रं रणप्रिय ।
तत्रैष्यामि महाबाहो युद्धाय त्वां तपोधन ॥ ३३

अपि यत्र त्वया राम कृतं शौचं पुरा पितुः ।
तत्राहमपि हत्वा त्वां शौचं कर्तास्मि भार्गव ॥ ३४

तत्र गच्छस्व राम त्वं त्वरितं युद्धदुर्मद ।
व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुव ॥ ३५

यच्चापि कत्थसे राम बहुशः परिषत्सु वै ।
निर्जिताः क्षत्रिया लोके मयैकेनेति तच्छृणु ॥ ३६

न तदा जायते भीष्मो मद्विधः क्षत्रियोऽपि वा ।
यस्ते युद्धमयं दर्पं कामं च व्यपनाशयेत् ॥ ३७

सोऽहं जातो महाबाहो भीष्मः परपुरंजयः ।
व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ३८

इति श्रीमहाभारते उद्योगपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

---

M (except M4) नि:सशयो न च, D3 4 निश्चयमेति स: ; G3 नि श्रेयसे न च, text as in K1-3 6 D1, 7 T2 G1 2 6 M4 Ca cites (as in text) नि सशयेन (=सशयाभावेन), Cd cites नि:संशये, Cs unintelligible, perhaps corrupt

30 $^{a}$) K1 2 6 D1 2 7 M तस्मात् (for यस्मात्) D3 4 स संशये, T1 असशिते, Ca 8 सश° (as in text). B Dn Ds D2-4 6. 10 [S]प्यर्थे; D7 [S]र्थे तु, D8 ह्यर्थे (for ऽर्थेऽस्मिन्) — $^{b}$) B Dn Ds D2-4 6 8 10 [S]प्ययथान्यायं, D7 यथार्थे च, Ca यथान्यायम् Cn. 8 cite अयथान्याय (Csp अविविच्य) D2 G1 प्रवर्तते.

31 $^{d}$) T G राम, M कामं (for विप्र) — $^{e}$) K3 युद्ध, D1 7 G3 द्वद्व, D6 8 तच्च (for द्वद्वे) K4 B (except B3) मे, K5 D3 4 त्व, Dn1 D6 8 तु (for ते) — $^{f}$) B Dn Ds D6 8 10 सज्जीभव K3 महामते, K4 B D (except D1 2 7) °द्युते

32 $32^{ab}$ = (var) 5 179 $3^{ab}$ — $^{a}$) M1 (inf lin) न्यायात् (for राम) — $^{b}$) K (except K4) शरशतैश्चित , B Dn Ds D6 8 10 °शतार्दित:, G1 °शतार्पितः, G3 शतशराचित:, G6 शरचयार्पित: — $^{c}$) B Dn Ds D6 8. 10 प्राप्स्यसे (for ल°). — $^{d}$) K (except K4) D1 2 7 शस्त्रपूतान्, Dn1 शस्त्रकृत्तो D1 महाहवे, T1 महाद्युते; T2 G M1 मया रणे

33 $^{a}$) B6 T G समागच्छ (G3 °च्छेद्), M तद्गच्छ (for स गच्छ) — $^{b}$) T1 G3 कुरुक्षेत्रे — After $33^{ab}$, S ins

578* समाहूय महाबाहो युद्धाय त्वं तपोधन ।

— D3 4 om $33^{c}$–$34^{b}$, T2 G2 3 5 om $33^{cd}$ — $^{c}$) D7 अह राम (for महा°). — M4 om (hapl) $33^{d}$–$38^{a}$. — $^{d}$) M1. 2 [अ]ह (for त्वा) D1 परतप (for तपो°)

34 M4 om 34, D3 4 om $34^{ab}$ (cf v l. 33) — $^{a}$) K1 यथा चापि, K2 M1 यत्र चापि, K5 (m as in text) यथा चापि, D7 अपि यच्च, T G1. 2 5 अत्र चापि; G3 M2 अपि चापि, M3 5 अथ चापि (for अपि यत्र) — $^{b}$) K1 B6 D8 त्वया पितु , D6 8 (by transp) पितु: पुरा. — $^{c}$) G2. 6 यत्र (for हत्वा) M1 2 त्वा (for त्वां)

35 M4 om 35 (cf v l 33) — $^{a}$) T G (except G3) गच्छ च (for गच्छस्व) B (except B1) Dn1 तत्र राम समागच्छ, Dn2 Ds D6. 8 10 तत्र राम स गच्छ त्व — $^{b}$) K1, 2 5 Dn1 D3 4 त्वरितो K1 3 4 B3 D1 3 4 10 युद्धदुर्मद: — $^{c}$) = $38^{c}$ K1 2 अप° (for व्यप°). — $^{d}$) K3 B1 2 4 Dn2 D10 ब्राह्मणब्रुव:, K4 B3 5 Dn1 D3 4 °ब्रुवं, K6 D1 8 ब्राह्मण ध्रुव

36 M4 om 36 (cf v l 33) — $^{b}$) B Dn Ds D10 परिवत्सरे (for °षत्सु वै) — $^{c}$) D3 4 सर्वे (for लोके) — $^{d}$) K3 तु, K4 [ए]न (for [इ]ति) — After 36, D7 ins .

579* अधर्मं सुमहानेष यच्छय्यामरणं गृहे ।
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ।

37 M4 om 37 (cf v l 33) — $^{a}$) B Dn Ds D1. 6 8 10 जातवान् (for जायते) — $^{b}$) B D (except D2 7) क्षत्रियो वापि (Ds D6 8 10 °योपि हि) मद्विध:. — After $37^{ab}$, B Dn Ds D1. 6 8 10 ins.

# १७९

भीष्म उवाच ।
ततो मामब्रवीद्रामः प्रहसन्निव भारत ।
दिष्ट्या भीष्म मया सार्धं योद्धुमिच्छसि संगरे ॥ १
अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह ।
भाषितं तत्करिष्यामि तत्रागच्छेः परंतप ॥ २
तत्र त्वां निहतं माता मया शरशताचितम् ।
जाह्नवी पश्यतां भीष्म गृध्रकङ्कबडाशनम् ॥ ३
कृपणं त्वामभिप्रेक्ष्य सिद्धचारणसेविता ।
मया विनिहतं देवी रोदतामद्य पार्थिव ॥ ४
अतदर्हा महाभागा भगीरथसुता नदी ।
या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ॥ ५
एहि गच्छ मया भीष्म युद्धमद्यैव वर्तताम् ।
गृहाण सर्वं कौरव्य रथादि भरतर्षभ ॥ ६
इति ब्रुवाणं तमहं रामं परपुरंजयम् ।
प्रणम्य शिरसा राजन्नेवमस्त्वित्यथाब्रुवम् ॥ ७
एवमुक्त्वा ययौ रामः कुरुक्षेत्रं युयुत्सया ।
प्रविश्य नगरं चाहं सत्यवत्यै न्यवेदयम् ॥ ८
ततः कृतस्वस्त्ययनो मात्रा प्रत्यभिनन्दितः ।
द्विजातीन्वाच्य पुण्याहं स्वस्ति चैव महाद्युते ॥ ९
रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयैः ।
सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् ॥ १०
उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम् ।

C. 5. 7102
B. 5. 178. 73
K. 5. 178. 73

---

580* पश्चाज्जातानि तेजांसि तृणेषु ज्वलित त्वया ।

Colophon om in Dn D3.4 D5 9 G1 missing — *Sub-parvan* K B D5 D1 2 6-8 10 G5 M1 2-5 अंबोपाख्यान — *Adhy name* G5 भीष्मयुद्धोपक्रम, M1 2 भीष्मसंवाद°, M3-5 रामवाक्य — *Adhy no* (figures, words or both) T1 M4 180, T2 G1 2 5 M3 5 181, G3 178 (as in text), M1.2 179 — *S'loka no* K5 41

## 179

2 D1 om 2ᵃ–3ᵇ — ᵃ) K1 2 5 B3 T G अद्य, Ca अय (as in text) — ᵇ) D3.4 यथा त्वया (for त्वया सह) — ᶜ) K3 4 B D (except D2, D1 om) M4 ते (for तत्) — ᵈ) K4 D3 4 तदा (for तत्र) K3 G1 गच्छे, K1 Dn1 D5 D3 4 6 गच्छ (or आगच्छ), B Dn2 D5 10 G3 [आ]गच्छ, M3(inf lin as in text) 4 5 [आ]गच्छ° (for [आ]गच्छेः)

3 D1 om 3ᵃᵇ (cf v l 2) — 3ᵃᵇ =(var)5 178 32ᵃᵇ — ᵃ) D6 om (hapl) from माता up to विनिहतं in 4ᶜ D3 4 तात (for माता) — ᵇ) K (except K4) शरशतैश्चित, Dn1 °शतान्वित, D3 4 °शतार्दित, D8 शतशराचित, G1 M5 शरशतार्पित — ᵈ) MSS (variously) °बलाशन, °बळाशन, °बलाशन, °बिडाशन K3 कङ्कगृध्रनिषेवित°, D1 2 10 गृध्रकङ्कसमावृत (D2 °श्रित) Ca cites बला, Cd बडा°

4 D6 om up to विनिहत (cf v l 3) — ᵃ) T2 कृपणा — ᶜ) D1 om from देवी up to सूप in 10ᶜ S वीर (for देवी) — ᵈ) M3-5 जाह्नवी (for पार्थिव)

5 D1 om 5 (cf v l 4) — ᵃ) K1 2 5 न तदर्हा K5 G5 महाभाग — ᵇ) B Dn2 D5 D3 6 10 [अ]नघा (for नदी)

6 D1 om 6 (cf v l 4) — ᵃ) D8 (by transp) भीष्म मया गच्छ M2 5 सार्धं (for भीष्म) — ᵇ) K D1 2 7 दुर्मते (for वर्तताम्) B Dn D5 D3 6 8 10 युद्धकामुक दुर्मद (cf 5ᵈ)

7 D1 om 7 (cf v l 4) — ᶜ) K3 B D (except D1 2 7, D1 om) राम, T2 G2 देव (for राजन्) — ᵈ) K3 च (for [अ]थ) M अब्रवम्

8 D1 om 8 (cf v l 4) — ᵃ) K3.4 T1 उक्तो (for उक्त्वा) — 8ᶜᵈ =(var)5 187 12ᶜᵈ Cf 5 170 22

9 D1 om 9 (cf v l 4) — ᵇ) K1 2 5 चाप्यभिनदित°, B D (except D1 2 7, D1 om) च प्रतिनदित

10 D1 om up to सूप in 10ᶜ (cf v l 4) — ᵇ) T2 G1 3 M5 राजित S (mostly) पाडरैर् — 10ᶜᵈ =(var)5 81 18ᵃᵇ — ᶜ) K1 2 परिस्कृत, S (except T2) स्वन(G1 स्वप; G5 साव)स्कर (for सूप°) — ᵈ) =5 81 18ᵇ, 138 21ᵇ K1 2 4 T2 G1 °वारित

11 D6 om 11ᶜ–12ᵈ — ᶜ) K1 2 5 D1 7 त, T1 M3-5 सत् (for तत्) K5 T G धीरेण, D3 4 सूतेन, D7 शूरेण (for वीरेण) — ᵈ) K2 Dn D8 °शस्त्र° B8 Dn

C. 5. 7102
B. 5. 178. 75
K. 5. 178. 75

तत्कुलीनेन वीरेण हयशास्त्रविदा नृप ॥ ११
युक्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा ।
दंशितः पाण्डुरेणाहं कवचेन वपुष्मता ॥ १२
पाण्डुरं कार्मुकं गृह्य प्रायां भरतसत्तम ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ १३
पाण्डुरैश्चामरैश्चापि वीज्यमानो नराधिप ।
शुक्लवासाः सितोष्णीषः सर्वशुक्लविभूषणः ॥ १४
स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात् ।
कुरुक्षेत्रं रणक्षेत्रमुपायां भरतर्षभ ॥ १५
ते हयाश्चोदितास्तेन सूतेन परमाहवे ।
अवहन्मां भृशं राजन्मनोमारुतरंहसः ॥ १६
गत्वाहं तत्कुरुक्षेत्रं स च रामः प्रतापवान् ।
युद्धाय सहसा राजन्पराक्रान्तौ परस्परम् ॥ १७
ततः संदर्शनेऽतिष्ठं रामस्यातितपस्विनः ।
प्रगृह्य शङ्खप्रवरं ततः प्राधममुत्तमम् ॥ १८
ततस्तत्र द्विजा राजंस्तापसाश्च वनौकसः ।
अपश्यन्त रणं दिव्यं देवाः सर्षिगणास्तदा ॥ १९
ततो दिव्यानि माल्यानि प्रादुरासन्मुहुर्मुहुः ।
वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह ॥ २०
ततस्ते तापसाः सर्वे भार्गवस्यानुयायिनः ।
प्रेक्षकाः समपद्यन्त परिवार्य रणाजिरम् ॥ २१
ततो मामब्रवीद्देवी सर्वभूतहितैषिणी ।
माता स्वरूपिणी राजन् किमिदं ते चिकीर्षितम् ॥ २२
गत्वाहं जामदग्न्यं तं प्रयाचिष्ये कुरूद्वह ।
भीष्मेण सह मा योत्सीः शिष्येणेति पुनः पुनः ॥ २३
मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् ॥ २४
किं न वै क्षत्रियहरो हरतुल्यपराक्रमः ।
विदितः पुत्र रामस्ते यतस्त्वं योद्धुमिच्छसि ॥ २५
ततोऽहमब्रुवं देवीमभिवाद्य कृताञ्जलिः ।

---

रणे (for नृप)

12 D6 om 12 (cf. v l 11) — a) K4 D8 युतं, B Dn Ds D1 2 10 यत्त (for युक्त) D3 4 सुखीभूतेन शिष्टेन, D7 यत्त शूरेण सूतेन — b) D5 G3 हृष्टकर्मणा, D7 दृढ°, D8 शिष्ट° — D4 om 12c–13a — cd) S (mostly) दसित and पाढरेण D10 कवचेन (for पाण्डु°), and पाडुरेण (for कव°)

13 D4 om 13 (cf v l 12) — a) Here and below S (mostly) पाडर- (for पाण्डुर) — b) K3 प्राया त रथमत्तम

14 a) D3 4 transp पाण्डुरै and चामरै B (except B3) Dn Ds D6 8 10 चापि व्यजनै, D2 व्यजनैर्वापि (for चामरैश्चापि) T2 G1 2 5 एव (for अपि)

16 K4 om 16 (along with 15d and 17a) — a) K3 नोदि° (for चोदि°) K1 2 नोदितास्तेन सूतेन, G2 चोदितास्ते हयास्तेन — b) K1 2 वीरेण (for सूतेन) — c) M मा (for मां) K1 2 मद्रथ (for मा भृश) — d) K1 2 वाहा (for मनो-)

17 K4 om 17a (cf v l 16) — a) K3 D1. 3. 4. 7 चाह (for [अ]ह तत्) K1 2 D2 च, K5 M (except M5) तु (for तत्) — D1 om (hapl.) 17d–19a — d) G5 सगतौ युद्धदुर्मदौ

18 D1 om 18 (cf v l. 17) — a) K5 B3 D3 4 8 10 T G1–3 M (except M2) तिष्ठन्, G5 तस्य (for ऽतिष्ठ) — d) D7 T G तत प्राध्मसनुत्तम

19 D1 om. 19a (cf v l 17) — c) D5 D8 10 प्रापश्यत (for अप°) — d) B1 Dn Ds D6 सेंद्र° (for सर्षि°) K1 2 4 G3 M3 तथा (for तदा) D6 देवा सेंद्रपुरोगमा, D10 सेंद्रा देवगणास्तदा

20 a) D3 4 ततो दिव्यविमानानि — b) B Dn Ds D6 8 10 ततस्तत , D3 4 समतत (for मुहुर्मुहु) — d) K3 D1 T1 G3 हि (for ह)

22 b) K3 सदा मम हि° — c) K (except K4) D3 मातृ- (for माता)

23 a) K4 B Dn Ds D6 8 10 तु, G2 M3–5 वै (for त) — b) D3 4 प्रसादिष्ये T1 G3 कुरूत्तम — d) S मुहुर्मुहु (for पुन पुन)

24 a) K3 D1 G2 कुरु (for पुत्र) — b) D1 पुत्र (for कुरु) G2 पुत्रेण मम पार्थिव — c) D3 रामेण (for समरे) — d) K1 2 5 अवभर्त्सती, K3 एव भर्त्सती, K4 B Dn एव भर्त्सयत्, D2–4 T2 G1 2 M3–5 अवभर्त्सयन्

25 a) G1 न (for किं) K1 ते, D5 D8 M1 (inf lin) नु; T2 G1 2 तु; G5 च (for न) K1 न; K2 3. 5 ते, M4 (inf lin) [ए]व (for वै) K4 B D (except D1. 2) क्षत्रियहणो — b) K4 Dn1 हरितुल्य°, T1 हरतुल्य पराक्रमे. — c) K1. 2. 5 D7 वै (for ते) — d) K1. 2 5

सर्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयंवरे ॥ २६
यथा च रामो राजेन्द्र मया पूर्वं प्रसादितः ।
काशिराजसुतायाश्च यथा कामः पुरातनः ॥ २७
ततः मा राममभ्येत्य जननी मे महानदी ।
मदर्थं तमृषिं देवी क्षमयामास भार्गवम् ।
भीष्मेण सह मा योत्सीः शिष्येणेति वचोऽब्रवीत् ॥२८
न च तामाह याचन्तीं भीष्ममेव निवर्तय ।
न हि मे कुरुते काममित्यहं तमुपागमम् ॥ २९

संजय उवाच ।

ततो गङ्गा सुतस्नेहाद्भीष्मं पुनरुपागमत् ।
न चास्याः सोऽकरोद्वाक्यं क्रोधपर्याकुलेक्षणः ॥ ३०
अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः ।
आह्वयामास च पुनर्युद्धाय द्विजसत्तमः ॥ ३१

इति श्रीमहाभारते उद्योगपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

## १८०

भीष्म उवाच ।

तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः ॥ १
आरोह स्यन्दनं वीर कवचं च महाभुज ।
बधान समरे राम यदि योद्धुं मयेच्छसि ॥ २
ततो मामब्रवीद्रामः स्मयमानो रणाजिरे ।
रथो मे मेदिनी भीष्म वाहा वेदाः सदश्ववत् ॥ ३
सूतो मे मातरिश्वा वै कवचं वेदमातरः ।

C. 5. 7127
B. 5. 172. 4
K. 5. 172. 4

---

तेन, D2 4 कथ, D° येन, S कुतम् (for यतम्) B Dn Ds D° 10 T G1. 2 5 तं, D2 4 वै (for स्व) K2. 4 D1 यत्नं (D1 यं त) योद्धुमिहेच्छसि
26 [a]) K1 M त्र्यवं
27 [a]) G1 [आ]ह (for च) — [b]) K1 G3 यया (for मया) B D (except D1. 2 7) प्रचोदित°, S प्रयाचित° — [d]) K4 B D (except D1. 2 7) य(Ds D10 त)था कर्म पुरातनं
28 [a]) K2. 4 D1. 2 7 आसाद्य (for अभ्येत्य) — [b]) T1 G2 मा (for मे) — [c]) K D1 2 - 5 मदर्थे, G2 तमर्थं K4 D2 गत्वा; Dn2 M4 वीक्ष्य (for देवी) — [d]) K (except K2) D7 क्षामयामास, G2 कथ°.
29 [a]) T1 प्र (for आह) — D2 om 29[c]–31[d] — [c]) K4 B3 D (except D1. 2 -, D2 om.) च (for हि) G° M2 4 ते (for मे) G2 पापम् (for कामम्) — [d]) Ds D1 उपागमत्, D7 °गत° S इत्युक्त्वा मामुपागमत
30 D2 om. 30 (cf v.l 29) T2 G1. 2 5 om the ref, the rest °वेग° ट° (resp °वेग°) — [b]) T G1 2 मा मा (for भीष्म) D1. 2 7 अयागमत् (for उपा°) K4 भीष्मं च पुनरागमत — [c]) D2 नैवास्या (for न चास्या) K4 B D (except D1. 2 7) चाकरोत् (for सो°) T1 G1. 2 5 नास्या अकरव वाक्य, T2 न तस्याकरन वा°
31 D2 om. 31 (cf. v l. 29) — [a]) K5 ततो°, M2 अतो° (for अथा°) — [c]) B Dn Ds D2 8 10 तदा (for पुनर्) — [d]) D2 8 शिष्येण (for युद्धाय) K3. 4 D1. 2 मा (K4 त) युद्धाय द्विजोत्तमः.

Colophon D.. 6 G4 missing — *Sub-parvan* K B Dn Ds D1–4 6–8 10 G1. 5 M अयोपाख्यान — *Adhy name* G1. 5 रामभीष्मसमनाह°, M युद्धसनाह.. — *Adhy no* (figures, words or both) D6 (*sec m*) 70 (=170), T1 G1 M4 181, T2 G2 5 M3 5 182, G3 179 (as in text), M1 2 180 — *S'loka no* K5 32, Dn 96

## 180

1 D4 om. 1 — 1[ab]=22[cd] — [a]) Hypermetric! T G2 M5 om तम् K4 ततोह स्मयमानो वै, K5 स्मयन्निव रणेह त — [b]) B प्रतिभाष K (except K3) व्यवस्थित° — [c]) K2. 5 D7 G3 M (except M1) भूमिस्थं, D1 भूमिष्ठ.
2 [a]) M1 (*inf lin* as in text) 2 आस्थ (for आरोह) — [b]) T2 G1. 2 5 महायल (for °भुज) — [d]) K4 D1. 2 T2 G6 M1 2 इह, B3 D7 त्वम् (for मया)
3 [b]) D3 4 स्पर्ध° (for स्मय°) — [c]) G3 वाहा (for भीष्म) — [d]) G3 वेदा मागा° (for वाहा वेदा°)
4 [a]) B Dn Ds D2. 4. 6 8 10 च, D7 वै (for मे) M1. 2 च (for वै) — [b]) S (except G5) देवमातर°, Ca d s वेद° (as in text) — [c]) K3 D7 वीर (for

C. 5. 7127
B. 5. 179. 4
K 5. 179. 4

सुसंवीतो रणे ताभिर्योत्स्येऽहं कुरुनन्दन ॥ ४
एवं ब्रुवाणो गान्धारे रामो मां सत्यविक्रमः ।
शरव्रातेन महता सर्वतः पर्यवारयत् ॥ ५
ततोऽपश्यं जामदग्न्यं रथे दिव्ये व्यवस्थितम् ।
सर्वायुधधरे श्रीमत्यद्भुतोपमदर्शने ॥ ६
मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे ।
दिव्याश्वयुजि संनद्धे काञ्चनेन विभूषिते ॥ ७
ध्वजेन च महाबाहो सोमालंकृतलक्ष्मणा ।
धनुर्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान् ॥ ८
सारथ्यं कृतवांस्तत्र युयुत्सोरकृतव्रणः ।
सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ॥ ९
आह्वयानः स मां युद्धे मनो हर्षयतीव मे ।
पुनः पुनरभिक्रोशन्नभियाहीति भार्गवः ॥ १०
तमादित्यमिवोद्यन्तमनाधृष्यं महाबलम् ।
क्षत्रियान्तकरं राममेकमेकः समासदम् ॥ ११
ततोऽहं बाणपातेषु त्रिषु वाहान्निगृह्य वै ।
अवतीर्य धनुर्न्यस्य पदातिर्ऋषिसत्तमम् ॥ १२
अभ्यगच्छं तदा राममर्चिष्यन्द्विजसत्तमम् ।
अभिवाद्य चैनं विधिवदब्रुवं वाक्यमुत्तमम् ॥ १३
योत्स्ये त्वया रणे राम विशिष्टेनाधिकेन च ।
गुरुणा धर्मशीलेन जयमाशास्स्व मे विभो ॥ १४

राम उवाच ।

एवमेतत्कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मो ह्येष महाबाहो विशिष्टैः सह युध्यताम् ॥ १५
शपेयं त्वां न चेदेवमागच्छेथा विशां पते ।
युध्यस्व त्वं रणे यत्तो धैर्यमालम्ब्य कौरव ॥ १६
न तु ते जयमाशासे त्वां हि जेतुमहं स्थितः ।
गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ १७

भीष्म उवाच ।

ततोऽहं तं नमस्कृत्य रथमारुह्य सत्वरः ।

---

तामिर्)

5 b) T1 M3–5 मा Ca d s np cite सव्यतिक्रमः — d) K3 B Dn Ds D6 10 M1 प्रत्यवारयत्, G3 M3 परि°

6 b) K4 B Dn Ds D6 10 रथमध्ये (for रथे दिव्ये) — c) K1 Dn1 G3 सर्वायुधधर, K3 4 B Dn2 °वरे, D1 °युते

7 a) T2 G1. 2 [अ]वहिते (for विहिते). — b) G1 M5 विस्तीर्ण- — c) K1 2 D2 दिव्याश्वयुजि — d) S (except G3) कवचेन (for काञ्चनेन) D3 4 [अ]भिभूषिते (for विभू°)

8 a) K4 B D (except D1 2 7 8) कवचेन (for ध्वजेन च) — b) K1–3 D1 समलंकृतलक्ष्मणा (K3 °क्ष्मणे, D1 °क्षणा), B Dn Ds D3 4 6 8 10 सोमार्ककृतलक्ष्मणा (B2 3 D8 °क्षणे, D3 4 °क्ष्मणे), D2 G3 5 M2 सोमालंकृतलक्षणे (D2 °क्ष्मणे, M2 °क्षणा) — G3 reads 8cd after 9

9 a) K2 5 D3 4 M2 तस्य (for तत्र) K3 4 D1 2 7 सारथ्य तस्य कृतवान् — c) T1 स तु (for सखा) — d) K1 D7 G1 च, D8 G3 हि, T2 G2 तु (for ह) — After 9, G3 reads 8cd

10 a) G3 तदा; M स मा — c) K3 D6 10 अतिक्रोशन्, D8 इति क्रो°, T1 G3 अनु° — d) D8 D10 याहि याहीति, T1 उपयातीह, T2 G1 2 उपायान्मयि, G3 उपयातो हि, G5 उपायान्मा हि, M उपयाहीति

12 b) Dn1 D3 4 6 (m as in text) धूर्यवाहान्, D1 M2 त्रिषु वाह, Ca as in text D3 4 ह (for वै) — c) D10 G3 रथात् (for धनुर्) D10 तूर्णं, G3 तस्मात् (for न्यस्य) — d) D10 धनुर्न्यस्य रथे तदा

13 D1 om (hapl.) 13ab. — a) B D3 4 अभ्यागच्छ — b) S प्राञ्जलिर्मुनिसत्तमं — c) Hypermetric! D2 [अ]थ, T2 च (for चैन) — d) M अब्रव D1 वाक्यमुत्तरमब्रुव

14 a) G3 अहं योत्स्ये त्वया राम — b) K4 B Dn Ds2 D3 4 6 10 सदृशेन, Ca d s विशिष्टेन (as in text) D3 4 उत्तरेण, Ca d s अधिकेन (as in text) K (except K5) B Dn D3 4 7 वा (for च) — c) D3. 4 ब्रह्म° (for धर्म°) — d) K3 मा, M1. 2 मा (for मे)

15 d) K4 D2 7 युधि (for सह)

16 a) T1 M1 2 त्वा — c) D3 4 च (for त्व) G2 सक्तो, G3 युक्तो (for यत्तो)

17 a) K2 न च, K5 ननु, T2 G1 2 5 न हि (for न तु). T2 G1 2 5 केनचिद् (for ते जयम्) K (except K4) D1 2 आशास्मि, D3 4 8 M आशास्ये, T G आशासे — b) K3 4 B D (except D7) G2 त्वा विजेतुम्, G3 त्वामभिजेतुम् D2 7 8 इह (for अहं) — c) K4 transp युध्यस्व and धर्मेण — d) D1 वचनेन (for चरितेन) D8 च (for ते)

18 K3 4 B D (except Ds2 D7) om the ref — c) K3 4 D1 G2 3 5 M4 प्रध्मापय, T2 आध्मापय

आध्मापयं रणे शङ्खं पुनर्हेमविभूषितम् ॥ १८
ततो युद्धं समभवन्मम तस्य च भारत ।
दिवसान्सुबहून्राजन्परस्परजिगीषया ॥ १९
स मे तस्मिन्रणे पूर्वं प्राहरत्कङ्कपत्रिभिः ।
षष्ट्या शतैश्च नवभिः शराणामग्निवर्चसाम् ॥ २०
चत्वारस्तेन मे वाहाः सूतश्चैव विशां पते ।
प्रतिरुद्धास्तथैवाहं समरे दंशितः स्थितः ॥ २१
नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यश्च भारत ।
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ॥ २२
आचार्यता मानिता मे निर्मर्यादे ह्यपि त्वयि ।
भूयस्तु शृणु मे ब्रह्मन्संपदं धर्मसंग्रहे ॥ २३
ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत् ।
तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहम् ॥ २४
प्रहरे क्षत्रधर्मस्य यं त्वं राम समास्थितः ।
ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ॥ २५
पश्य मे धनुषो वीर्यं पश्य बाह्वोर्बलं च मे ।
एष ते कार्मुकं वीर द्विधा कुर्मि ससायकम् ॥ २६
तस्याहं निशितं भल्लं प्राहिण्वं भरतर्षभ ।
तेनास्य धनुषः कोटिश्छिन्ना भूमिमथागमत् ॥ २७
नव चापि पृषत्कानां शतानि नतपर्वणाम् ।
प्राहिण्वं कङ्कपत्राणां जामदग्न्यरथं प्रति ॥ २८
काये विषक्तास्तु तदा वायुनाभिसमीरिताः ।
चेलुः क्षरन्तो रुधिरं नागा इव च ते शराः ॥ २९
क्षतजोक्षितसर्वाङ्गः क्षरन्स रुधिरं व्रणैः ।
बभौ रामस्तदा राजन्मेरुर्धातूनिवोत्सृजन् ॥ ३०
हेमन्तान्तेऽशोक इव रक्तस्तबकमण्डितः ।
बभौ रामस्तदा राजन्कचित्किंशुकसंनिभः ॥ ३१
ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः ।

C. 5. 7155
B. 5. 179. 32
K. 5. 179. 22

— d) B (except B6) D (except D7) °परिप्लुतं
20 a) B5 M3 5 मा, Ca d से (as in text) K3 ससैन्य तस्मिन्पूर्वं मा — c) K1. 3 D1. 7 T2 G3 M (except M1) सैत° (for शते°) D2 षष्ट्या शरैर्नवत्या च — d) M2. 3 शितानाम् (for शराणाम्) B Dn Ds D6 8 10 नतपर्वणा (B6 °वर्चसा) (for अग्नि°)
21 a) T1 चैव (for तेन) — d) S (mostly) दमित°
22 a) K4 D2 तु (for च) — b) K4 B Dn Ds D3 4 6 8 10 विशेषत°; D1 च मारिष (for च भारत) — 22cd = 1ab — c) Hypermetric! M3 4 om तम्
23 a) K1. 2 नमिता (for मानि°) — c) K3 4 B D (for Ds1 see below) M2–3 च (for तु) Ds1 देवा नृपश्च शृणु मे — d) G1 साग्रत, G3 सवदन, M सवाद Ca d 5 cite पद ꣹ Ca पद प्रतिज्ञापद । Cs पद व्यवसाये । ꣹ B5 धर्मविग्रह, D1. 2 8 Ca d धर्मसग्रह
24 K4 om. 24 — c) B Dn Ds D1 6 10 ते (for सु-) — D4 om 24d–25d
25 D4 om. 25 (cf v l 24) — a) K1 प्रहार, K2 (m as in text) प्राहार, K3 4 B Dn2 D2 8 प्रहारे — b) Dn1 Ds2 D3 7 M3–5 यत् (for य) K5 B Dn D1. 6 8 10 M4 (*sup lin*) समाश्रित (for °स्थित).
26 b) K (except K2) B (except B5) Dn D7 मम (for च मे) — c) K4 D2 द्वेधा (for वीर) — d) K1–2 5 D7 कुर्वे (for कुर्मि) K4 D2 करोमि महसायक, B Dn Ds D3 4 6 8 10 छिनद्मि निशितेषुणा (D3 4 °मि°)
27 b) B Dn Ds D6 8 10 चिक्षेप, D3 4 चिक्षिप (for प्राहिण्व) — c) K (except K4) D7 स च (for तेन) K B Dn Ds D1. 2 6–8 10 G3 5 Ca कोटिं (for कोटी), D3 4 छित्त्वा (for कोटिश्) — d) K1. 2 5 D2 7 छित्वा, T2 भिन्न (for छिन्ना) K1 2 यथागमत्, K3 D1 उपागमत्, M2. 5 अथास्पृशत् B Dn Ds D3. 4 6 8 10 छित्त्वा (D3 4 मध्य) भूमावपातय
28 K4 B Dn Ds D3. 4 6–8 10 त (D3 4 य) थैव च, D1 पुनश्चापि (for नव चापि) — c) B Dn Ds D6 8 10 चिक्षेप (for प्राहिण्व)
29 a) Dn1 D10 निपक्तास्तु — b) K4 B (except B5) Dn Ds D6 8 10 वायुना समुदीरिता — c) K1 चसु, K2 6 वहु, K4 चेरु, D7 G3 पेतु (for चेलु) — d) K (except K4) रक्ता (for नागा) S वसुधरा (for च ते शरा)
30 b) K4 हि (for स) K1 2 व्रणे, B Dn Ds D6 10 T2 G1. 2 5 रणे, D7 मगात् (for व्रणै) — c) = 31c — d) K4 B D (except D7) G1 2 धातुम् (for धातून्) D1 सृजन्, T1 G3 [उ]द्गिरन् (for [उ]त्सृजन्)
31 c) = 30c K3 B1 4. 6 Dn D1 4 T2 G1 तथा (for तदा) — d) K3 5 किंचित्, K4 B4 6 D3 4 फुल्ल (for कचित्) B1–3 Dn Ds D6 8 10 प्रफुल्ल इव किंशुक
32 b) T1 कोप° (for क्रोध°) — c) K3 4 D1 रुक्म° (for हेम°) K1 2 तु (for सु-) M3–5 ववर्ष शरवर्षाणि

C. 5. 7155 B. 5. 179. 32 K. 5. 179. 32

हेमपुङ्खान्सुनिशिताञ्शरांस्तान्हि ववर्ष सः ॥ ३२
ते समासाद्य मां रौद्रा बहुधा मर्मभेदिनः ।
अकम्पयन्महावेगाः सर्पानलविषोपमाः ॥ ३३
ततोऽहं समवष्टभ्य पुनरात्मानमाहवे ।
शतसंख्यैः शरैः क्रुद्धस्तदा राममवाकिरम् ॥ ३४
स तैरग्न्यर्कसंकाशैः शरैराशीविषोपमैः ।
शितैरभ्यर्दितो रामो मन्दचेता इवाभवत् ॥ ३५
ततोऽहं कृपयाविष्टो विनिन्द्यात्मानमात्मना ।
धिग्धिगित्यब्रुवं युद्धं क्षत्रं च भरतर्षभ ॥ ३६
असकृच्चाब्रुवं राजञ्शोकवेगपरिप्लुतः ।
अहो बत कृतं पापं मयेदं क्षत्रकर्मणा ॥ ३७
गुरुर्द्विजातिर्धर्मात्मा यदेवं पीडितः शरैः ।
ततो न प्राहरं भूयो जामदग्न्याय भारत ॥ ३८
अथावताप्य पृथिवीं पूषा दिवससंक्षये ।
जगामास्तं सहस्रांशुस्ततो युद्धमुपारमत् ॥ ३९

इति श्रीमहाभारते उद्योगपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## १८१

भीष्म उवाच ।
आत्मनस्तु ततः सूतो हयानां च विशां पते ।
मम चापनयामास शल्यान्कुशलसंमतः ॥ १
स्नातोपवृत्तैस्तुरगैर्लब्धतोयैरविह्वलैः ।
प्रभात उदिते सूर्ये ततो युद्धमवर्तत ॥ २
दृष्ट्वा मां तूर्णमायान्तं दंशितं स्यन्दने स्थितम् ।

---

— $^{d}$) K (except K4) D1 2 तेन, D8 4 7 10 एव, T G तान्प्र, M1 2 तु प्र- (for तान्हि) K4 शरास्तानभ्यवर्षत, M3–5 मयि तूर्णं महाबल

33 $^{ab}$) G2 3 M2 मा G2 विविधा (for बहुधा) K1 5 Dn2 D6 7 वर्म°, K2 चर्म° (for मर्म°) M3–5 ते शरा जामदग्न्येन प्रयुक्ताः कालसंनिभा — $^{c}$) G1 समर्प° (for अकम्प°) — $^{d}$) K1 2 5 D7 शरा (D7 °तं) ह्याशीविषोपमा (cf 35$^{b}$), K3 D3 4 सर्पा (K3 शरा) इव विषोल्बणा, D1 सर्पा इव विषोपमा, T2 G1 2 5 सर्पानन विषो°

34 $^{a}$) K4 B D (except D1. 2 7) तमहं — $^{b}$) K3 D1 आत्मना (for आहवे)

35 $^{a}$) B5 अर्काग्नि° (for अग्न्यर्क°) — $^{b}$) = 5 181 35$^{b}$ — $^{c}$) K3 D2 भृशम् (for शितैर्) K1 2 अभ्यर्चितो, K3 समार्दितो, D3 4 अभ्याचितो (for अभ्यर्दितो) — $^{d}$) D3 4 °वेग (for °चेता)

36 $^{a}$) B3 तमहं (cf v l 34) — $^{b}$) K4 B D (except D1. 2 7) विष्टभ्य, K5 विचिंत्य (for विनिन्द्य) — $^{c}$) M अब्रव Ds2 D6 G3 युद्धे, T1 क्षत्रं (for युद्ध) — $^{d}$) T1 युद्ध, M1 क्षात्र (for क्षत्र) B D (except D1 2 7) क्षत्र(Ds2 °त्र)धर्मं च भारत

37 K4 D3 *repeat* 37 after 5 181 24$^{ab}$. — $^{a}$) K1 D2 M अब्रव — $^{c}$) G5 अद्धा (for अहो) — $^{d}$) K2 मयेह, M4 मयाद्य K (except K1) B Dn D7 T1 क्षत्रधर्मणा, D3 D1 G3 °धर्मिणा; D3 (*second time*) °कर्मणा

38 $^{a}$) D1 अयं (for गुरुर्) — $^{b}$) G2 अय (for एव) — D4 om 38$^{c}$–39$^{d}$

39 D4 om 39 (cf v l 38) — $^{a}$) T2 G2 ततो (for अथ) Dn D3 D6 [अ]वतप्य, D1 मताप्य, D2 प्रताप्य, T2 G2 [अ]वतीर्य, G1 [अ]पतप्य, G3 M [उ]पता° (G3 °त)प्य — $^{b}$) M3 4 पूषा वै दिवसं क्षये — $^{d}$) D2 उपानयत्, D3 °हरत्, T1 G3 M2 °गमत्, T2 G1. 2 5 अवारयत्.

Colophon D5 9 G4 missing — *Sub-parvan* K B Dn D3 D1 2 6–8 10 T1 G1 5 M1. 2 अंबोपाख्यान — *Adhy no* (figures, words or both) D6 (*sec m*) 71 (=171), T1 G1 M4 182, T2 G2 5 M3 5 183, G3 180 (as in text), M1 2 181 — *S'loka no* K5 Dn 39.

181

1 $^{a}$) K1 3 (by corr ) B2 च (for तु) — D4 om. 1$^{b}$–2$^{b}$. — $^{d}$) K (except K4) शल्यं G1 5 M4 (*inf. lin* ) कुशसलंमित (M4 orig °मितान्)

2 D4 om 2$^{ab}$ (cf v l 1) — $^{a}$) K1 B4 5 T1 G1 Cn स्नातापवृत्तै, K3 सूतोपपन्नै°, D2 सूतोपवृत्तै°. Ca d cite

अकरोद्रथमत्यर्थं रामः सज्जं प्रतापवान् ॥ ३
ततोऽहं राममायान्तं दृष्ट्वा समरकाङ्क्षिणम् ।
धनुःश्रेष्ठं समुत्सृज्य सहसावतरं रथात् ॥ ४
अभिवाद्य तथैवाहं रथमारुह्य भारत ।
युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीः स्थितः ॥ ५
ततो मां शरवर्षेण महता समवाकिरत् ।
अहं च शरवर्षेण वर्षन्तं समवाकिरम् ॥ ६
संक्रुद्धो जामदग्न्यस्तु पुनरेव पतत्रिणः ।
प्रेषयामास मे राजन्दीप्तास्यानुरगानिव ॥ ७
तानहं निशितैर्भल्लैः शतशोऽथ सहस्रशः ।
अच्छिदं सहसा राजन्नन्तरिक्षे पुनः पुनः ॥ ८
ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान् ।
मयि प्रचोदयामास तान्यहं प्रत्यषेधयम् ॥ ९
अस्त्रैरेव महाबाहो चिकीर्षन्नधिकां क्रियाम् ।
ततो दिवि महान्नादः प्रादुरासीत्समन्ततः ॥ १०
ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान् ।
प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥ ११
ततोऽस्त्रमहमाग्नेयमनुमन्त्र्य प्रयुक्तवान् ।
वारुणेनैव रामस्तद्वारयामास मे विभुः ॥ १२
एवमस्त्राणि दिव्यानि रामस्याहमवारयम् ।
रामश्च मम तेजस्वी दिव्यास्त्रविदरिंदमः ॥ १३
ततो मां सव्यतो राजन्रामः कुर्वन्द्विजोत्तमः ।
उरस्यविध्यत्संक्रुद्धो जामदग्न्यो महाबलः ॥ १४
ततोऽहं भरतश्रेष्ठ संन्यपीदं रथोत्तमे ।
अथ मां कश्मलाविष्टं सूतस्तूर्णमपावहत् ।
गोरुतं भरतश्रेष्ठ रामबाणप्रपीडितम् ॥ १५

C. 5. 7173
B. 5. 180. 15
K. 5. 180 15

अपवृत्तं B1. 5 D3 ज्ञातो (B5 °ता) पयुक्त्तुरंगं — c) K4 B (except B3) D (except D1. 2 7) चोदिते, K5 दृश्ये (for दृदिते) — d) K1. 2 D7 द्वयोर्, K3 भूयो, B1. 2 4 D7 पुनर् (for ततो)

3 a) D1 transp दृष्ट्वा and मां D8 हतुम् (for तूर्णम्) — b) K2 (by corr) दिगतं, D3 4 दर्शिते, S (mostly) दंमित K3 स्वदनस्थित — c) K1 2 6 अत्यतं (for अत्यर्थं) K5 transp राम and सज्जं

4 d) K1-3 D7 T1 [अ]वातरं, K5 व्यतर, G5 [अ]भ्यपतं (for [अ]वतरं)

5 a) K1. 2 5 D7 पादौ (for [ए]वाहं) — c) K (except K4) D7 जामदग्न्येन — d) K1. 2 5 समरे (for प्रमुखे)

6 a) K4 B Dn Ds D8 8 10 G3 [ऽ]हं (for मां). — b) G3 समतात् (for महता) K4 B Dn Ds D8 8 10 G3 समवाकिरं — K4 D1 om. 6cd — c) B Dn Ds D8 8 10 स च मां (for अहं च) — d) K1. 2 तमवाकिर, B Dn Ds1 D8 8 10 समवाकिरत्, D3 4 त ममाकिरं

7 b) B Dn D8. 3 Ca सुतेजितान्, Ds D10 सुतेजनान् (for पतत्रिण) — c) K3. 4 D3. 4 समरे (for मे राजन्) B Dn Ds D8 8 10 संप्रैषीन्मे शरान्घोरान् (B2 °पीत्तो-मरानुमान्) — d) K3 D1 2 पन्नगान् (for उरगान्)

8 a) K5 B D (except D1 2 7) ततोह G1. 3 बाणैं (for भल्लैः) — c) K1 B2 Dn D8 M अच्छिन्नं, T1 आर्मिंद, T2 अच्छिदन् K3 समरे (for सहसा)

9 a) K (except K3) D7 शस्त्राणि (for त्वस्त्राणि) — G1 om. (hapl.) 9b–13a — c) K2 प्रनोदयामास, K3 4 B D (except D3) G3 प्रयोजया°. — d) K5 Dn1 D1 तानह

10 G1 om. 10 (cf v l. 9) — b) D1 वै प्रति- (for अधिका) — c) K (except K3) D1 3 M1. 2 महानाद°

11 G1 om. 11 (cf. v l. 9) — a) G3 M (M1 before corr ) महास्त्र (for ऽहमस्त्र) — K4 Ds2 om (hapl.) 11c–12b — c) D3. 4 प्रत्याजह्रे, G2 °चघ्ने (for °जघ्ने) K5 B D (except Dn2 D1. 6 7, Ds2 om ) T2 G2 तं (for तद्) — D6 om. (hapl.) 11d–12c

12 G1 om 12 (cf. v.l. 9), K4 Ds2 om. 12ab, D6 om 12abc (cf v.l 11) — a) K2 3 B (except B2) Dn Ds1 D1. 7 8 10 transp अस्त्र and अहं — b) K3 D1. 2 अभिमन्त्र्य (for अनु°) — c) K3 4 D2 T1 रामस्तु, B3 5 Dn Ds D8 8 10 (by transp ) तद्रामो — d) D7 वै (for मे) K1. 2 D7 भुवि (for विभु°)

13 G1 om 13a (cf v.l 9) — b) D3 4 अवाकिर (for °रयम्) — d) K1. 2 5 D7 अमभ्रम°, Ds D8 8 अरिंदम K3 4 D1. 2 दिव्यास्त्रैरेव सयुगे, S दिव्यान्यस्त्राणि सयुगे

14 a) M3-5 मा Ds G3 सर्वत°, Ca d सव्यत° (as in text) — b) K3 महाबल° (for द्विजो°) — c) S सरञ्चो (for सक्रुद्धो) — d) K3 द्विजोत्तम°, K4 B Dn Ds D8 8 10 प्रतापवान् (for महा°), cf 9b

15 D6 om. 15abcd — b) B Ds D10 रथोपरि — c) K4 B D (except D1. 2 7) ततो (for अथ)

C. 5. 7178
B. 5. 180. 16
K. 5. 180. 16

ततो मामपयातं वै भृशं विद्धमचेतसम् ।
रामस्यानुचरा हृष्टाः सर्वे दृष्ट्वा प्रचुक्रुशुः ।
अकृतव्रणप्रभृतयः काशिकन्या च भारत ॥ १६
ततस्तु लब्धसंज्ञोऽहं ज्ञात्वा सूतमथाब्रुवम् ।
याहि सूत यतो रामः सज्जोऽहं गतवेदनः ॥ १७
ततो मामवहत्सूतो हयैः परमशोभितैः ।
नृत्यद्भिरिव कौरव्य मारुतप्रतिमैर्गतौ ॥ १८
ततोऽहं राममासाद्य बाणजालेन कौरव ।
अवाकिरं सुसंरब्धः संरब्धं विजिगीषया ॥ १९
तानापतत एवासौ रामो बाणानजिह्मगान् ।
बाणैरेवाच्छिनत्तूर्णमेकैकं त्रिभिराहवे ॥ २०
ततस्ते मृदिताः सर्वे मम बाणाः सुसंशिताः ।
रामबाणैर्द्विधा छिन्नाः शतशोऽथ महाहवे ॥ २१
ततः पुनः शरं दीप्तं सुप्रभं कालसंमितम् ।
असृजं जामदग्न्याय रामायाहं जिघांसया ॥ २२
तेन त्वभिहतो गाढं बाणच्छेदवशं गतः ।
मुमोह सहसा रामो भूमौ च निपपात ह ॥ २३
ततो हाहाकृतं सर्वं रामे भूतलमाश्रिते ।
जगद्भारत संविग्नं यथार्कपतनेऽभवत् ॥ २४
तत एनं सुसंविग्नाः सर्व एवाभिदुद्रुवुः ।
तपोधनास्ते सहसा काश्या च भृगुनन्दनम् ॥ २५
त एनं संपरिष्वज्य शनैराश्वासयंस्तदा ।
पाणिभिर्जलशीतैश्च जयाशीर्भिश्च कौरव ॥ २६
ततः स विह्वलो वाक्यं राम उत्थाय माब्रवीत् ।

---

D2 M8 5 मा — d) K1.5 D1.3 4 7 उपाहरत्, K2 G5 अपाहरत्, K3 4 उदाहरत्, B Dn D2 8 M3 5 उदावहत्, D5 T2 M2 उपावहत् — e) K1 2 गच्छतं, K3 D1 2 शयित, K4 B Dn D5 D3 4 10 G3 ग्लायत, K5 गव्यूत, D6 ततोह, D7 सव्यथ, D8 गव्यूते, G1 सत्वर (for गोस्त, as in T G2 5 M) K5 भारतश्रेष्ठ, G3 च ततो राजन्

16 K4 om $16^{abcd}$ — a) K2 5 Ds2 D7 अपयात; K3 G3 5 उपयात — b) D3 4 भृश विद्रुतचेतस — cd) K1 2 5 D7 T1 G3 transp हृष्टा and दृष्ट्वा K3 तुष्टा सर्वे; D3 4 सर्वे दृष्ट्वा (for हृष्टा सर्वे) B D (except D1 2 7) वि (for प्र-) — e) Hypermetric l

17 a) D2 वै (for ऽहं) — b) K1 M अब्रवं — c) D3 D10 याहि (for सूत) — d) K1 2 5 D7 समरे स्थित, T1 वीतवेदन (for गत°).

18 b) K B (except B5) D1 3 4 7 8 °शोभिभि (D2 by corr °शोभन ), D2 °शोभित, D10 G1 °शोभनै — d) K5 B3 D1 गतै (for गतौ)

19 D4 om $19^{a}$–$21^{a}$ — b) B D (except D1 2 7, D4 om ) °वर्षैश्च (for °जालेन) — c) D3 असृज त (for अवाकिर) D3 T1 G2 सुसरब्ध — d) D3 भार्गव, T1 प्रथमं (for संरब्ध) B D (except D1 2 7, D4 om.) च (D3 त) (for वि )

20 D4 om. 20 (cf v l 19) — a) K1.2 ततः पतत (for ताना°) — b) M3 om $20^{b}$ K2 (by corr.) रामे, K3 5 D2 7 S (except G5, M3 om ) मम (for रामो) — c) K1-3 अवाच्छिनत्, D2 एवाकिरत् (for एवाच्छिनत्) D2 बाणैनैवासृजत्तूर्णं — d) B5 आशुगै (for आहवे) D3 मा च पत्रिभिराहवे

21 D4 om $21^{a}$ (cf v.l 19) — a) K1.2 5 D7 तु (for ते) K2 5 B Dn D5 D6 10 सूदिता (Dn1 सहिता); D3 पतिता (for मृदिता ). — c) T1 समाच्छिन्ना (for द्विधा छिन्ना) — d) K2 5 B Dn D5 D3.4 6 8.10 T1 सहस्रश (for महाहवे) D7 निपेतु शतशो रणे

22 D6 om 22 — a) T1 पुनरन्य (for तत पुन ). — b) Dn1 M3 5 सप्रभ, T1 सभल्ल, T2 G1-3 5 सुमुख. K1 2 5 D2 7 कालसनिभ

23 a) G1 वै निहतो, G5 सोभिहतो, M4 (inf lin.) त्वभिगतो K4 स तेनाभिहतो गाढ — b) K4 B D (except D1 2 7 8) बाणवेगवश, G3 बाणभेद — c) K4 5 Dn D5 D6 8 10 समरे (for सहसा) — d) K4 Dn1 वि- (for च)

24 b) K3 आगते, K5 आस्थिते (for आश्रिते). — After $24^{ab}$, K4 D3 *repeat* 5 180 37 (with v.l ) — D4 om $24^{c}$–$27^{b}$ — d) K D5 D1 2 7 T2 G1 2 5 तथा, Dn2 D3 10 भवेत् (for ऽभवत्).

25 D4 om. 25 (cf v l. 24) — a) K2 5 B (except B3) Dn D2 3 7 समुद्विग्ना, D5 D10 असंविग्ना (for सुस°) — d) K3 T G कन्या (for काश्या) B (except B2) Dn D5 D1 6 10 कुरुनदन

26 D4 om 26 (cf v l 24) — a) D2 त एव; D3 पतित (for त एन) K4 B Dn D5 D6-8 10 तत एन परिष्वज्य

27 D4 om $27^{ab}$ (cf v l 24) — a) K1.2 5 B Dn D5 D3 6 8 10 विह्वल — b) K4 B D (except D1, D4 om ) G1 2 च (for मा) — c) M1 2 भीष्म (for

तिष्ठ भीष्म हतोऽसीति बाणं संधाय कार्मुके ॥ २७
स मुक्तो न्यपतत्तूर्णं पार्श्वे सव्ये महाहवे ।
येनाहं भृशसंविग्नो व्याघूर्णित इव द्रुमः ॥ २८
हत्वा हयांस्ततो राजञ्शीघ्रास्त्रेण महाहवे ।
अवाकिरन्मां विश्रब्धो बाणैस्तैर्लोमवाहिभिः ॥ २९
ततोऽहमपि शीघ्रास्त्रं समरेऽप्रतिवारणम् ।
अवासृजं महाबाहो तेऽन्तराधिष्ठिताः शराः ।
रामस्य मम चैवाशु व्योमावृत्य समन्ततः ॥ ३०
न स्म सूर्यः प्रतपति शरजालसमावृतः ।
मातरिश्वान्तरे तस्मिन्मेघरुद्ध इवानदत् ॥ ३१
ततो वायोः प्रकम्पाच्च सूर्यस्य च मरीचिभिः ।
अभितापात्स्वभावाच्च पावकः समजायत ॥ ३२
ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना ।
भूमौ सर्वे तदा राजन्भस्मभूताः प्रपेदिरे ॥ ३३
तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अयुतान्यथ खर्वाणि निखर्वाणि च कौरव ।
रामः शराणां संक्रुद्धो मयि तूर्णमपातयत् ॥ ३४
ततोऽहं तानपि रणे शरैराशीविषोपमैः ।
संछिद्य भूमौ नृपतेऽपातयं पन्नगानिव ॥ ३५
एवं तदभवद्युद्धं तदा भरतसत्तम ।
संध्याकाले व्यतीते तु व्यपायात्स च मे गुरुः ॥ ३६ C. 5. 7200 B. 5. 180. 33 K. 5. 180. 33

इति श्रीमहाभारते उद्योगपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

तिष्ठ) T1 G2 तिष्ठ (for भीष्म) — D4 om 27d–28a

28 D4 om 28 (cf v l 27) — a) T1 G2 M स(M1 2 स्य)पतत् (for न्यप°) — b) N (except K1 2 D7, D4 om) M1 2 transp पार्श्वे and सव्ये — c) S तेनाहं K3 D समराविद्ध°, K4 B1 2 3 Dn Ds D1 2 3 10 भृशमुद्विग्न° — d) K3 D7 भ्रमन्, D1 भ्रमन् (for द्रुम°)

29 a) K4 B Dn Ds D1 10 राम°, G1 राम (for राजन्) — b) D2 घोरा°, T2 G2 3 नाना° (for शीघ्रा°) — c) M (except M1) मा K4 B Dn D1–3 8 9 (M2 sup lin) विश्रब्धो (T2 G1 °ब्ध) — d) D2 रामबाहुभि°, T1 G1 3 4 लोमवाहिभि°, T2 लोमवाहिभि°, Ca d लोम पातिन°, C2 as in text

30 D4 om 30abcdef — b) K2 D1 3 वारणमप्रति°; K4 B Dn D1 D7 10 समरप्रति° — d) D3 D6 Cd निष्ठिता, Ca चेष्टिता (for धिष्ठिता) — e) D10 transp मम and च K1 2 4 D7 आगमन्, S अथ (for आशु) — f) K1 2 3 D1 समाश्रित्य (for व्योमा°)

31 a) D1–4 प्रतपेत् — b) D2 शरजालेन आवृत — c) B D (except D1 2 7) तत्र (for अन्तरे) — d) K2 B D (except D1 2 7) अनयत (for अनदत्)

32 b) B Dn Ds D 8 10 रश्मिभि (for मरी°) — c) K1 2 D2 अभिताप°; K2 G2 अभियातात्, D1 T2 G1 4 अभियाता K4 प्रतापाच्च (for स्वभा°) B Dn Ds D2 4 6–8 10 अभिताप्यप्रभावा(D2 4 °तापा)च्च — d) K1 m समवायत, D6 M2 समजायत

33 a) B2 D1 3 4 6 8 10 सु (for स्व) — c) S ततो (for तदा) — d) D2 T1 भस्मीभूता° K3 D1 2 भस्मसात्प्रतिपेदिरे

34 34ab = (var) 1 31 18ab, 5 162 18ab — a) K3 D1 तथा, T G (except G2) तत (for तदा) — c) K1 2 3 नियुतानि, Ds1 D2 प्रयु° (for अयु°) K1 2 च (for [अ]थ) — d) K1 3 5 D7 तथैव च, K3 D1 2 च भारत (for च कौरव) — f) B1 3 4 Dn Ds D6 8 10 न्यपातयत (for अपा°)

35 a) K1 2 Ds1 तान्यपि, G3 (by transp) अपि तान् T G1 2 M3–5 अथ रणे; G5 अथ रणे, M1 2 4 (inf lin) अरीन् (for अपि रणे) G3 शीघ्र (for रणे) — b) = 5 180 35b T2 G3 4 M1 2 °विषोपमान् — c) T1 G2 संभिद्य (for °छिद्य) — d) K3 D1 पतगान् B Dn D2–4 6 पातयेय नगानिव

36 a) K4 एतत् (for एवं) K3 D1 तदा, K4 अत्र (for तद्) — b) K3 पुरा, D1 महद्; G3 तथा (for तदा) K4 D2 4 G2 भारत° — c) G1 तदा काले (for संध्या°) G4 द्युतीते K2 4 च, K5 B2 D1–4 S [ऽ]थ (for तु) — d) S समरात्स(G3 °रे स; M °ये व्य)पयाद्गुरुः

Colophon D3 5 G4 missing — *Sub-parvan* K B Dn Ds D1–4 6–8 10 T1 G2 5 M अम्बोपाख्यान — *Adhy name* K4 भीष्मभार्गवयोर्युद्ध; M3–5 राम समोहन — *Adhy no* (figures, words or both) D6 (*sec m*) 72 (=172), T1 M4 183, T2 84

१८२

C. 5. 7201
B 5. 181 1
K. 5. 181 1

भीष्म उवाच ।
समागतस्य रामेण पुनरेवातिदारुणम् ।
अन्येद्युस्तुमुलं युद्धं तदा भरतसत्तम ॥ १
ततो दिव्यास्त्रविच्छूरो दिव्यान्यस्त्राण्यनेकशः ।
अयोजयत धर्मात्मा दिवसे दिवसे विभुः ॥ २
तान्यहं तत्प्रतीघातैरस्त्रैरस्त्राणि भारत ।
व्यधमं तुमुले युद्धे प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ ३
अस्त्रैरस्त्रेषु बहुधा हतेष्वथ च भार्गवः ।
अक्रुध्यत महातेजास्त्यक्तप्राणः स संयुगे ॥ ४
ततः शक्तिं प्राहिणोद्घोररूपा-
मस्त्रै रुद्धो जामदग्न्यो महात्मा ।
कालोत्सृष्टां प्रज्वलितामिवोल्कां
संदीप्ताग्रां तेजसावृत्य लोकान् ॥ ५
ततोऽहं तामिषुभिर्दीप्यमानैः
समायान्तीमन्तकालार्कदीप्ताम् ।
छित्त्वा त्रिधा पातयामास भूमौ
ततो ववौ पवनः पुण्यगन्धिः ॥ ६
तस्यां छिन्नायां क्रोधदीप्तोऽथ रामः
शक्तीर्घोराः प्राहिणोद्द्वादशान्याः ।
तासां रूपं भारत नोत शक्यं
तेजस्वित्वाल्लाघवाच्चैव वक्तुम् ॥ ७
किं त्वेवाहं विह्वलः संप्रदृश्य
दिग्भ्यः सर्वास्ता महोल्का इवाग्नेः ।
नानारूपास्तेजसोग्रेण दीप्ता
यथादित्या द्वादश लोकसंक्षये ॥ ८
ततो जालं बाणमयं विवृत्य
संदृश्य भित्त्वा शरजालेन राजन् ।
द्वादशेषून्प्राहिणवं रणेऽहं

---

(=184), G1.2 5 M3 5 184, G3 181 (as in text), M1.2 182 — S'loka no K5 Dn2 38, Dn1 77

182

1 [a]) M2 5 रामस्य (for रामेण) — [b]) D3 4 पुनर्युद्ध सुदारुण — [c]) K1 4 D1 2 समियात्, T1 G1 3 M समाभूत्, T2 G2 5 उदभूत् (for अन्येद्युस्) A few MSS तुमलं — [d]) D3.4 भारतसत्तम

2 [a]) T G1 3 5 M2 तदा (for ततो) G1 दिव्यास्त्र रुचिरो — [b]) M कौरव (for [अ]नेकश॰) T G ह्यस्त्राण्यपि च भूरि(G3 ॰य)श॰ — [c]) K2 4 5 B D (except D1 2 7) अयोजयत्स — [d]) B2 गुरु॰, M प्रभु॰ (for विभु॰)

3 [a]) T1 G1 3 न्यहन, T2 G2 5 न्यहनत् (for तान्यहं) — [b]) T G दिव्यान्य॰ (for अस्त्रैर॰) K1.2 5 D1 7 T G कौरव (for भारत) — [c]) A few MSS तुमले

4 [b]) K1-3 D7 8 निहतेषु, B Dn Ds D2-4 6 10 हतेष्वेव K3 [अ]थ, D3 स (for च) K3(m as in text) 5 B D (except D1 7 8) भारत (for भार्गव॰) — [c]) D3 M5 अयुध्यत, T1 अवि॰ (for अक्रु॰) — [d]) T G1.2 5 प्राणास्त्यक्त्वा, G3 M त्यक्त्वा प्राणान् K1.2 5 T1 च, Ds सु; G5 [अ]थ (for स)

5 [b]) K4 B D (except Dn2 D3) T G1.5 अस्त्रे रुद्धे, G3 अस्त्रास्त्रयुद्धे (for अस्त्रै रुद्धो) — [c]) K3 D3 4 M3-5 प्रज्वलतीम् (for ॰लिताम्) K1 2 5 D7 यथा, D3.4 महा- (for इव) — [d]) B3 Dn Ds D6.10 व्याप्य लोकं; B4 5 D3 4 [आ]वृत्य लोक

6 [a]) K3 D1 2 ततस्तु K4 B D (except D1.2 7) G6 दीप्यमाना — [b]) D3 4 आपततीम् (for समायान्तीम्) K1 2 5 अतकालार्कधार्ष्णीं; K3 D7 8 ॰र्करूपां, D1 2 ॰र्कभाभा; S अतकसनिका(G3 ॰वे)शा — [c]) D1 T1 भित्त्वा (for छित्त्वा) — [d]) K (except K2) D1.2 T G (except G3) M4 पुण्यगधी, B3 D7 M1-3 5 ॰गंध॰

7 [b]) D3 4 प्रहिणोद् — [c]) D3 4 6 8 नैव, M3-5 नात्र (for नोत) — [d]) M1 2 चापि (for चैव)

8 [a]) T G1 2 किं चैव, M3-5 किंचिच्च (for किं त्वेव). K1 2 5 सप्रपश्यन् (for ॰दृश्य) — [b]) K1 2 5 D7 transp दिग्भ्य॰ and सर्वा — [c]) K1 2 5 D7 उग्रा॰ प्रदीप्ता (for उग्रेण दीप्ता)

9 [a]) D2 S [ऽ]नलं (for जालं) K3 4 D3 G3 विसृज्य, B Dn Ds D6 10 विवृत्तं (B3 ॰द्ध), D3 4 विसृष्ट, T2 G1.5 निवृत्य, M3 4(inf lin as in text) 5 प्र॰ (for वि॰) — [b]) K (except K4) D3 4 7 सर्वं, T1 M1 (sup lin as in text) सदिश्य (for ॰दृश्य) K (except K4) D7 हत्वा, D1 3 4 जित्वा, T2 G हित्वा, M3.4(inf.

ततः शक्तीर्व्यधमं घोररूपाः ॥ ९

ततोऽपरा जामदग्न्यो महात्मा
शक्तीर्घोराः प्राक्षिपद्धेमदण्डाः ।
विचित्रिताः काञ्चनपट्टनद्धा
यथा महोल्का ज्वलितास्तथा ताः ॥ १०

ताश्चाप्युग्राश्चर्मणा वारयित्वा
खड्गेनाजौ पातिता मे नरेन्द्र ।
बाणैर्दिव्यैर्जामदग्न्यस्य संख्ये
दिव्यांश्चाश्वानभ्यवर्षं ससूतान् ॥ ११

निर्मुक्तानां पन्नगानां सरूपा
दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ताः ।
प्रादुश्चक्रे दिव्यमस्त्रं महात्मा
क्रोधाविष्टो हैहयेशप्रमाथी ॥ १२

ततः श्रेण्यः शलभानामिवोग्राः
समापेतुर्विशिखानां प्रदीप्ताः ।
समाचिनोच्चापि भृशं शरीरं
हयान्सूतं सरथं चैव मह्यम् ॥ १३

रथः शरैर्मे निचितः सर्वतोऽभू-
त्तथा हयाः सारथिश्चैव राजन् ।
युगं रथेषा च तथैव चक्रे
तथैवाक्षः शरकृत्तोऽथ भग्नः ॥ १४

ततस्तस्मिन्बाणवर्षे व्यतीते
शरौघेण प्रत्यवर्षं गुरुं तम् ।
स विक्षतो मार्गणैर्ब्रह्मराशि-
र्देहादजस्रं मुमुचे भूरि रक्तम् ॥ १५

यथा रामो बाणजालाभितप्त-
स्तथैवाहं सुभृशं गाढविद्धः ।
ततो युद्धं व्यरमच्चापराह्णे
भानावस्तं प्रार्थयाने महीध्रम् ॥ १६

C. 5 7216
B. 5. 181 16
K. 5. 181 16

इति श्रीमहाभारते उद्योगपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

lin as in text) 8 छित्वा (for भित्त्वा) S राम (for राजन्) — $^{c}$) T1 G3. 5 ins तान् before द्वादशे° — $^{d}$) K4 B Dn Ds D1 6 10 शक्तिरप्यधम, T2 M °र्व्याधम

10 $^{a}$) K4 B D (except D2 7) राजन् (for ऽपरा) — $^{b}$) G3 शक्तिं घोरा K1. 2 5 D7 G3 प्राहिणोद्, K3 4 B Dn Ds D1–4 6 8 10 व्याक्षिपद् (for प्राक्षिपद्) B3 रुक्मदण्डा°, G3 हेमदण्डा — After 10$^{ab}$, K D1–4 7 8 ins

681* रूपं तासां पश्यति तत्र लोकः
सर्वास्ता वै तीक्ष्णरूपा विकोशाः ।

[ (L 1) K4 D1 3 4 पश्यते, D2 प्रेक्षन — (L 2) D2 शक्ती° (for सर्वा°) K4 D1–4 हेमदण्डा (for तीक्ष्णरूपा) ]
— $^{c}$) D3 4 सुविचित्रा°, G3 ततो विचित्रा° (for विचि°) K1 2 काचनवधनद्धा, T1 G1 काचनपट्टव(G1 °य)द्धा — $^{d}$) K (except K4) B4 D7 8 T G3 5 प्रज्वलितास् (for ज्वलितास्) D5 D1 2 तथाभा° (for तथा ता°)

11 $^{a}$) D3. 4 तथान्युग्रा° (for ताश्चाप्यु°) M3–5 धारयित्वा (for वार°) — $^{b}$) B D (except D2 7) पातयित्वा (for पातिता मे) — $^{c}$) G5 M3 5 सङ्घे (for संख्ये) — $^{d}$) K4 B D (except D2 7) om. च

12 $^{b}$) K4 निवृत्ता° (for °कृत्ता°) — $^{c}$) D5 हैमम् (for दिव्यम्) — $^{d}$) D1 S (except G1) हेहयेश°

13 K4 om 13$^{abc}$ — $^{c}$) K1. 2 5 D7 अपि (for अति) — $^{d}$) K3 G3 ससूत, M2 रथ (for सूत) T G (except G1) M3–5 सारथिं (for सरथ) M1. 2 सारथिन च (for सरथ चैव) D1 मा च, D2 मा वै (for मह्यम्)

14 K4 om 14$^{abc}$ — $^{a}$) D2 om मे K1 2 5 विचित° (for नि°) D2 रथो, D3 4 ततो (for सर्वतो) — $^{b}$) B4 5 वाहा° (for हया°) K3 D1 चापि (for चैव) — $^{c}$) K3 B1 3–5 Dn D1. 3 4 7 8 10 M2 4 रथेषां (for रथेषा) — $^{d}$) K5 D3 4 7 10 T G1–3 M [ऽ]त्र; Dn2 [ऽ]प; D5 D8 [ऽ]पि, D1 G5 वि (for ऽथ)

15 $^{b}$) K (except K4) B2 D2 7 8 शरौघेणाह K5 द्विज (for गुरु) — $^{c}$) K2 मार्गणौघैर्, D1 ब्राह्मणो (for मार्गणैर्) B3 D3 4 ब्राह्मणर्षि°, B5 तैर्महर्षि, D5 मे ब्रह्मऋषि (for ब्रह्मराशि°) — D4 om 15$^{d}$–16$^{c}$ — $^{d}$) K1–3 5 D2 7 असृक्, B Dn2 D1 6 अमक्त, D5 अशक्त (for अजस्रं) K (except K4) D2 7 राजन्, Ca d रक्त (as in text)

☞ The fragm. MS of Devabodha's comm ends here!

16 D4 om 16$^{abc}$ (cf v l 15) — $^{a}$) K1. 2 5 D7

## १८३

C. 5. 7217
B. 5. 182. 1
K. 5. 182. 1

भीष्म उवाच ।

ततः प्रभाते राजेन्द्र सूर्ये विमल उद्गते ।
भार्गवस्य मया सार्धं पुनर्युद्धमवर्तत ॥ १
ततो भ्रान्ते रथे तिष्ठन्रामः प्रहरतां वरः ।
ववर्ष शरवर्षाणि मयि शक्र इवाचले ॥ २
तेन सूतो मम सुहृच्छरवर्षेण ताडितः ।
निपपात रथोपस्थे मनो मम विषादयन् ॥ ३
ततः सूतः स मेऽत्यर्थं कश्मलं प्राविशन्महत् ।
पृथिव्यां च शराघातान्निपपात मुमोह च ॥ ४
ततः सूतोऽजहात्प्राणान्रामबाणप्रपीडितः ।
मुहूर्तादिव राजेन्द्र मां च भीराविशत्तदा ॥ ५
ततः सूते हते राजन्क्षिपतस्तस्य मे शरान् ।
प्रमत्तमनसो रामः प्राहिणोन्मृत्युसंमितान् ॥ ६
ततः सूतव्यसनिनं विप्लुतं मां स भार्गवः ।
शरेणाभ्यहनद्गाढं विकृष्य बलवद्धनुः ॥ ७
स मे जत्र्वन्तरे राजन्निपत्य रुधिराशनः ।
मयैव सह राजेन्द्र जगाम वसुधातलम् ॥ ८
मत्वा तु निहतं रामस्ततो मां भरतर्षभ ।

---

8 ततो (for यथा) K1 2 5 बाणजालाश्रितस , K3 D2 °घाताभितप्त — $^b$) K3 D10 सुदृढ, K4 सदृढ, Dn सदृश (for सुभृश) K3 4 D1 2 G3 बाणविद्ध°, T1 गाढतस° — $^d$) K2 प्रापयाने, K4 B1 3 4 Dn D3 4 प्रतियाते (Dn1 °त), B2 प्रार्थयाचल (for °याने) D8 4 महात्मन्; G3 M3 5 महींद्र, M1 2 5 नरेंद्र (for महीध्रम्)

Colophon om Dn2 D5 6 G4 missing. — *Subparvan* K1–3. 5 B Dn1 Ds D1–3 6–8 10 T1 G5 M अंबोपाख्यान, D4 अंबोयनु (sic) — *Adhy name* K4 भीष्मभार्गवयोर्युद्ध, T1 G5 रामभीष्मयुद्ध — *Adhy no* (figures, words or both) D6 74 (=174), T1 M4 184, T2 G1 2 5 M3 5 185, G3 182 (as in text), M1 2 183 — *S'loka no* K5 17, Dn1 16

### 183

1 $^b$)=5 81 6$^b$ B2 4 Dn D8 सूर्ये विमलता गते — $^d$) T G2 3 5 M1 (*inf lin*) पर (for पुनर्)

2 $^a$)=(var)5. 48 15$^a$ K1 Ds2 T2 G3 5 ततो भ्रांतो (K1 *sup lin* ऽ before भ्रांतो), K2 5 तत्रांतरे B5 D6 8 10 भ्रांतरथे (D8 °णे) Cn cites अभ्रान्ते — $^c$) D1 मुमोच K5 B D (except D1 2 7) M1 3 4 शरजालानि — $^d$) K4 B D (except D1 2 7 8) मेघ (for शक्र)

3 $^a$) K3 B1 5 D (except D2 7) तत° (for तेन) — $^b$) K3 तेन (for शर-) D8 पीडित (for ताडित.) — M2 om (hapl) 3$^c$–5$^b$ — $^c$) B D (except D1 2 7) अपयातो (D8 निपपात) रथोपस्थात्

4 M2 om 4 (of v l 3) — $^a$) K1 4. 5 सूत, B Dn D5 D6 8 मम (for स मे) K4 5 D1 2 समेत्याथ, D7 स मे चाथ (for स मेऽत्यर्थं) — $^b$) M (M2 om) तदा (for महत्) — $^c$) K1–3 5 D1 2 7 स पृथिव्या (for पृथिव्यां च) K4 पृथिव्यां शरसपातात्, D8 4 जानुभ्या धनुरुत्सृज्य — $^d$) K3 D1 पपात च; D2 न्यपतच्च (for निपपात) K2 4 B5 Dn2 D6 8 T2 G2 3 मुमोच ह, D5 D10 ममार च (for मुमोह च) D8 4 समुमोह महाबल°

5 M2 om 5$^{ab}$ (of v l 3) — $^a$) K1 3 4 D2–4 M3–5 [ऽ]जहत्; B2 जहौ — $^c$) S मुहूर्तम् (for °र्ताद्) K3 Ds D3 4 एव (for इव) — $^d$) D8 (by corr) महत् (for तदा) B3 मां भीराविशयत्तदा

6 $^a$) K4 B (except B2) D (except D1–4) तस्मिन् (for राजन्) — $^b$) S तत्र (for तस्य) K3 वै (for मे) — $^c$) K3 G1 °मानसो — $^d$) B Dn D6–8 G3 °समित, D5 D10 °समित°, T2 G2 °सहितान्

7 $^a$) K (except K4) D7 सूतस्य निधन(D7 व्यस)ने; D8 M3–5 सूत व्यसनिन, Cn as in text — $^b$) K (except K4) D7 च (for स) — After 7$^{ab}$, K1–3 read 10$^{cd}$

8 $^a$) K3 S जान्वतरे; K4 B Dn Ds D1 3 4 6 8 10 भुजा° (Dn1 भुज्य°) — G3 om (hapl) 8$^b$–10$^a$; — $^b$) B4 विक्रम्य (for निपत्य) — $^d$) T1 विवेश (for जगाम)

9 G3 om 9 (of v l 8) ;— $^b$) Ds2 D1 7 M मा K3 4 D2 पुरुषर्षभ, T1 G1 भृगुनंदन°, T2 G2 5 भृगुसत्तम°; M भृगुसमत (for भरत°) — $^c$) K4 B D (except

मेघवद्व्यनदच्चोच्चैर्जहृषे च पुनः पुनः ॥ ९
तथा तु पतिते राजन्मयि रामो मुदा युतः ।
उदक्रोशन्महानादं सह तैरनुयायिभिः ॥ १०
मम तत्राभवन्ये तु कौरवाः पार्श्वतः स्थिताः ।
आगता ये च युद्धं तज्जनास्तत्र दिदृक्षवः ।
आर्तिं परमिकां जग्मुस्ते तदा मयि पातिते ॥ ११
ततोऽपश्यं पतितो राजसिंह
द्विजानष्टौ सूर्यहुताशनाभान् ।
ते मां समन्तात्परिवार्य तस्थुः
स्वबाहुभिः परिगृह्याजिमध्ये ॥ १२
रक्ष्यमाणश्च तैर्विप्रैर्नाहं भूमिमुपास्पृशम् ।
अन्तरिक्षे स्थितो ह्यस्मि तैर्विप्रैर्बान्धवैरिव ।
स्वपन्निवान्तरिक्षे च जलबिन्दुभिरुक्षितः ॥ १३
ततस्ते ब्राह्मणा राजन्नब्रुवन्परिगृह्य माम् ।
मा भैरिति समं सर्वे स्वस्ति तेऽस्त्विति चासकृत् ॥ १४
ततस्तेषामहं वाग्भिस्तर्पितः सहसोत्थितः ।
मातरं सरितां श्रेष्ठामपश्यं रथमास्थिताम् ॥ १५
हयाश्च मे संगृहीतास्तया वै
महानद्या संयति कौरवेन्द्र ।
पादौ जनन्याः प्रतिपूज्य चाहं
तथार्ष्टिषेणं रथमभ्यरोहम् ॥ १६
ररक्ष सा मम रथं हयांश्चोपस्कराणि च ।
तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्जयम् ॥ १७
ततोऽहं स्वयमुद्यम्य हयांस्तान्वातरंहसः ।
अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत ॥ १८
ततोऽहं भरतश्रेष्ठ वेगवन्तं महाबलम् ।
अमुञ्चं समरे बाणं रामाय हृदयच्छिदम् ॥ १९
ततो जगाम वसुधां बाणवेगप्रपीडितः ।
जानुभ्यां धनुरुत्सृज्य रामो मोहवशं गतः ॥ २०
ततस्तस्मिन्निपतिते रामे भूरिसहस्रदे ।

C. 5. 7238
B. 5. 182. 21
K. 5. 182. 21

---

D1 2 7) वि(B3 नि)ननादोच्चैर् (for व्यनदच्चोच्चैर्) T G1 2 5 चैव (for चोच्चैर्) — $^{d}$) K5 G5 जहर्षे, G3 जहर्ष D1 मुहुर्मुहु॰ (for पुन॰ पुन॰)

10 G3 om 10$^{a}$ (cf v l 8) — $^{b}$) K5 दृढायुध॰, M3–5 मुदान्वित (for मुदा युत) — K1–3 read 10$^{cd}$ after 7$^{ab}$ — $^{c}$) M1–3 महाराज (for ॰नाद) B1 2 4 सिंहनादरव चक्रे, D3 4 सिंहनाद पर चक्रे

11 $^{b}$) K1.2 कौरव्या॰, B D (except D1 2 7) कुरव T G पार्थिवा॰ (for पार्श्वत) T1 तथा (for स्थिता) — $^{c}$) B (except B2) Dn D6 10 अपि (for ये च) K1 2 D7 8 युद्धे तु, K5 युद्धेषु, D1 युध्यते, G5 M (except M1) युध्यत, T1 G1 ते युद्धे (for युद्ध तत) — D4 om. from 11$^{e}$ up to stanza 3 of adhy 186, the MS is mostly ignored up to the end of the lacuna — $^{e}$) K3 D6 परमका — $^{f}$) K3 4 B D (except D7, D4 om ) transp मयि and पातिते

12 D4 om 12 (cf v l 11) — $^{a}$) G3 पीडितो (for पतितो) — $^{b}$) D1 G3 M3 5 ॰शनप्रभान् — $^{d}$) T1 स्वैर् (for स्व) B4 5 Ds D6 ॰धार्या॰, Dn D10 ॰वार्या॰ (for ॰गृह्या॰)

13 D4 om 13 (cf v l 11) — $^{a}$) K4 B4 Dn1 D8 रक्ष्य(K4 ॰क्ष)माणैश्च S सर्वैर् (for विप्रैर्) — $^{b}$) D2 उपागम, T1 G1 ॰विश, T2 G2 5 उपस्पृश, G3 असस्पृश — $^{c}$) K3 4 B (except B4) D (except D7) धृतो (for स्थितो) T2 G3 M3–5 ह्यस्मिन् — $^{d}$) K1 (by corr ) अपि (for इव) — $^{e}$) B Dn Ds D6 10 T2 G2 3 श्वसन्, D3 शीतैर् (for स्वपन्) K3 4 B2 D1 3 T G (except G5) M2 5 एव, D3 चैव (for इव) B2 5 [ऽ]थ (for च)

14 D4 om 14 (cf v l 11) — $^{d}$) K2 4 5 Dn2 स्वस्ति (for ऽस्त्विति) T G चाब्रुवन् (for चासकृत्)

16 D4 om 16 (cf v l 11) — $^{a}$) B D (except D1.2 7, D4 om.) [आ]सन् (for वै) — $^{c}$) K4 B D (except D1 2 7, D4 om ) ॰गृह्य (for ॰पूज्य) — $^{d}$) N (D4 om ) पितृगां, G3 निषण्ण (for [आ]र्ष्टिषेण) K3 आस्थितोह, D1 2 आरुरोह, S (except G3) अध्य(M3 5 ॰ध्या)रोह (for अभ्य॰)

17 D4 om 17 (cf v l 11) — $^{a}$) K2 4 B D (except D1 2 7, D4 om.) मा सरथ (for मम रथ)

18 D4 om 18 (cf v l 11) — $^{b}$) T2 वाहा॰ (for हया॰) — $^{d}$) D7 T2 G1 3 विवृत्ते, G5 प्रवृत्ते

20 D4 om 20 (cf v l 11) — $^{b}$) K4 B D (except D1 2 7 8) M1 (*inf lin* ) मम बाणप्रपीडित॰, T1 G2 बाणवेगप्रवेपित॰, G3 ॰प्रवेगित॰, G5 ॰प्रचोदित, M1 3 4 मम बाणप्रवेजित (M1 *sup lin* ॰धित॰), M2 5 बाणवेगप्रवेजित॰ — $^{c}$) T2 G2 5 पाणि॰ (for जानु॰)

C. 5. 7228 B. 5. 182. 21 K. 5. 182. 21
आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु ॥ २१
उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः ।
अर्कं च सहसा दीप्तं स्वर्भानुरभिसंवृणोत् ॥ २२
ववुश्च वाताः परुषाश्चलिता च वसुंधरा ।
गृध्रा बडाश्च कङ्काश्च परिपेतुर्मुदा युताः ॥ २३
दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत् ।
अनाहता दुन्दुभयो विनेदुर्भृशनिस्वनाः ॥ २४
एतदौत्पातिकं घोरमासीद्भरतसत्तम ।
विसंज्ञकल्पे धरणीं गते रामे महात्मनि ॥ २५

ततो रविर्मन्दमरीचिमण्डलो
जगामास्तं पांसुपुञ्जावगाढः ।
निशा व्यगाहत्सुखशीतमारुता
ततो युद्धं प्रत्यवहारयावः ॥ २६
एवं राजन्नवहारो बभूव
ततः पुनर्विमलेऽभूत्सुघोरम् ।
काल्यं काल्यं विंशतिं वै दिनानि
तथैव चान्यानि दिनानि त्रीणि ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

21 D4 om 21 (cf. v l 11) — b) D8 रामे भूमौ सहायुधे — c) K1 (m as in text) व्योम्नि (for व्योम)
22 D4 om 22 (cf v l 11) — d) K1 2 D7 G2 M8 5 अपि स(K1 चा)वृणोत्, G8 तमसावृणोत् (for अभि°)
23 D4 om. 23 (cf v l 11) — a) D1 transp च and वाता', D2 transp वाता' and परुषा' — b) K1 2 5 D7 रूक्षा' शर्करकर्षिण (D7 °दर्शिन') — c) K4 वडाश्च; K5 चडा°, B Dn Ds D2 3 8 10 T G2 5 बला°, D1 वटा°, D6 बाला°; G1 बळक्षा', G8 M बळाश्च (for वडा°) K4 D8 काका° (for कङ्का°) — d) T1 G1 परिनेदुर्
24 D4 om 24 (cf v l 11) — b) D2 10 आनदत्, D8 उन्नदन् K1 2 5 D7 दारुणो बहुधानदत् (K5 °धा वहन्) — d) K5 नेदुर्वै (for विनेदुर्) K1 (before corr ) भृशादु'खिता'; D1 भूरिनिस्वना , G3.5 अशनिस्वना' Some MSS -नि'स्वना'
25 D4 om 25 (cf v l 11) — a) B Dn Ds D8 सर्वम् (for घोरम्) — b) B Dn Ds D8 6 10 घोर(D10 सर्व)मासीद्भयकर — After 25, D8 8 (both om. lines 3–4) S (except M1 2) ins

582* ततो वै सहसोत्थाय रामो मामभ्यवर्तत ।
पुनर्युद्धाय कौरव्य विह्वल' क्रोधमूर्च्छित ।
आददानो महाबाहु' कार्मुक तालसमितम् ।
शर चाप्यपयोऽथैन मा रामेत्यब्रुवन्वच ।
महर्षिमतमास्थाय क्रोधाविष्टोऽपि भार्गवः । [5]
समाहरदमेयात्मा शर कालान्तकोपमम् ।

[ (L 1) T1 G1 अन्व° (for अभ्य°) — (L 2) T1 G8 उत्थाय (for युद्धाय) — (L 3) D8 वलसंनिभ, M8-5 कालसमित (for ताल°) — (L 4) T2 G2 3 दैन्यं (for ऽथैन) D8 ततो मध्यादहान त राममेव न्यवारयन् — (L 5) M8-5 आश्राय (for आस्थाय) D8 महर्षय रूपायुक्ता , D8 महर्षि' रथमास्थाय — (L 6) D8 स मेहरद्, M8-5 असहरद् (for समा°) Bom Ed कालानलो°!]
26 D4 om 26 (cf v l. 11) — a) B1 3 4 Dn2 D6 मन्त्र° (for मन्द°) — b) N (mostly) पाशु (K8 रश्मि ) K2 4 B D (except D2) पुजा(D1 -पूगा) वगूढ — c) K2 3 5 B6 D8 निशा T2 G2 [अ]प्यगाहत् — d) K1 2 D7 व्यरमद्यापि राजन्, K5 D8 व्यरमद्यापराह्णे, B8 D8 T1 प्रत्यवहारयाव, T2 G1 प्रत्यपहार भार्गव'; G2 5 प्रत्यपहारयाव', G8 प्रत्यवधारयाव
27 D4 om 27 (cf v l 11) — a) G1 अपहारो, M1 2 सप्रहारो (for अव°) M4 एव स राजन्नु विरमो बभूव — b) M1 2 वै सुघोर (for ऽभूत्सुघोर) — c) K2 4 B Dn Ds D8 6–8 10 कल्य कल्य Ca cites कल्य K (except K4) D10 T G1 2 विंशतिर्, Dn1 Ds D1 2 8 G3 5 M2 5 विंशति G1 वाप्यहानि (for वै दिनानि) — d) K8 5 दिनानि सप्त, S दिनत्रयाणि (for दिनानि त्रीणि) D7 त्रीण्युत्तराणि प्रसभ युध्यतोस्तदा (hypermetric!)

Colophon D4 5 9 G4 missing — *Sub-parvan* K B Dn Ds D1–8 6–8 10 T1 G5 M अंबोपाख्यान- — *Adhy name* K4 भार्गवयुद्ध — *Adhy no.* (figures, words or both) D6 73 (=173), T1 M4 185, T2 G1 2 5 M8 5 186, G8 183 (as in text), M1 2 184 — *S'loka no* K5 29, Dn 43.

## १८४

भीष्म उवाच ।
ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा ।
ब्राह्मणानां पितॄणां च देवतानां च सर्वशः ॥ १
नक्तंचराणां भूतानां रजन्याश्च विशां पते ।
शयनं प्राप्य रहिते मनसा समचिन्तयम् ॥ २
जामदग्न्येन मे युद्धमिदं परमदारुणम् ।
अहानि सुबहून्यद्य वर्तते सुमहात्ययम् ॥ ३
न च रामं महावीर्यं शक्नोमि रणमूर्धनि ।
विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ॥ ४
यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान् ।
दैवतानि प्रसन्नानि दर्शयन्तु निशां मम ॥ ५
ततोऽहं निशि राजेन्द्र प्रसुप्तः शरविक्षतः ।
दक्षिणेनैव पार्श्वेन प्रभातसमये इव ॥ ६
ततोऽहं विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात् ।
उत्थापितो धृतश्चैव मा भैरिति च सान्त्वितः ॥ ७
त एव मां महाराज स्वप्नदर्शनमेत्य वै ।
परिवार्याब्रुवन्वाक्यं तन्निबोध कुरूद्वह ॥ ८
उत्तिष्ठ मा भैर्गाङ्गेय भयं ते नास्ति किंचन ।
रक्षामहे नरव्याघ्र स्वशरीरं हि नो भवान् ॥ ९
न त्वां रामो रणे जेता जामदग्न्यः कथंचन ।
त्वमेव समरे रामं विजेता भरतर्षभ ॥ १०
इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान् ।
विदितं हि तवाप्येतत्पूर्वस्मिन्देहधारणे ॥ ११
प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत ।
न हीदं वेद रामोऽपि पृथिव्यां वा पुमान्कचित् ॥ १२
तत्स्मरस्व महाबाहो भृशं संयोजयस्व च ।
न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप ॥ १३
एनसा च न योगं त्वं प्राप्स्यसे जातु मानद ।

C. 5. 7252
B. 5. 182. 5
K. 5. 83. 15

184

☞ D4 om this adhy (cf v.l. 5 183 11), the MS is mostly ignored here

1 d) B3 देवाना चैव भारत

2 b) K4.5 D5 G3 M2.3.5 राजन्याश्च (M2 °न्या च), B1.2.4.5 Dn2 D8 राजन्याना, B3 D2.7 M1 रजन्या च, Dn1 रात्र्न्याना, D1 रजन्याश्च, T1 G1 जनन्याश्च (for रज°) — K1.2.5 om 2cd — d) T1 G1 M (except M4) संप्रचिंतयं (for सम°)

3 c) K4.5 B D (except D2.8, D4 om.) च (for सु)

4 c) G1 विप्र विजेतु समरे

5 G. om. 5ab — d) K3 Dn1 G3 निशा, Cn निशा (as in text) T1 G1 M1.2 इमा (for मम)

6 a) B3.5 Dn D5 D8.10 निशि च (for ऽहं निशि) — c) K4.5 B D (except D7, D4 om) G1 इह (for एव) — d) K1.2.5 यथा, B3 Dn D5 D1.2.6–8.10 तदा, D3 G3 नृप, T G1.2 मम (for इव)

7 b) D5 अहं (for अस्मि) D1 पतितो रथं (for पतितो रथात्)

9 b) K4 B Dn D5 D8.10 न भय तेऽस्ति (for भयं ते नास्ति) D8 न भय ते कथचन, D6 न भय तेऽस्ति किंचन — c) K2.4 B D (except D7, D4 om.) त्वा कौरव्य (for नर°)

10 a) K5 D2 G3.5 M (except M1) त्वा — b) K3 D1.2 प्रतापवान् (for कथ°) — c) T2 G2.5 राजन् (for राम) — d) T2 G2.5 कुरुसत्तम (for भरत°)

11 D2 T G ins after 11ab B4 (om. line 2) D3, after 13ab

583* उपस्थास्यति राजेन्द्र स्वयमेव तवानघ ।
येन शत्रून्महावीर्यान्प्रशासिष्यसि कौरव ।

[(L 2) G3 त्वाश्च (for येन) D3.8 सर्वान् (for शत्रून्)]

12 b) K1.2 स्वापन (for प्रस्वाप) K3.4 D1.2 नामत (for भारत) — c) D3 हि (for ऽपि) — d) D3 न पृथिव्या (for पृथिव्या वा) M पुन (for पुमान्)

13 B5 om 13a–14d — a) M2–5 तं (for तत्) K2 (by corr) D52 मत्सर (for स्मरस्व) — b) T G ह (for च) — After 13ab, B4 (om. line 2) D3 ins 583* — c) K4 नैव, B3 स च, T2 G2 स तु, G1.2.5 न तु (for न च)

14 B5 om. 14 (cf. v.l. 13) — a) T G मनसा (for ए°) K B2 D1–3.7 M5 न च (by transp), B1.2.4 Dn D6.8.10 न तु, D5 तु न, T1 [अ]पि न

C. 5. 7292 B. 5. 183. 15 K. 5. 183. 15

स्वप्स्यते जामदग्न्योऽसौ त्वद्बाणबलपीडितः ॥ १४
ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि ।
अस्त्रेण दयितेनाजौ भीष्म संबोधनेन वै ॥ १५
एवं कुरुष्व कौरव्य प्रभाते रथमास्थितः ।
प्रसुप्तं वा मृतं वापि तुल्यं मन्यामहे वयम् ॥ १६
न च रामेण मर्तव्यं कदाचिदपि पार्थिव ।
ततः समुत्पन्नमिदं प्रस्वापं युज्यतामिति ॥ १७
इत्युक्त्वान्तर्हिता राजन्सर्व एव द्विजोत्तमाः ।
अष्टौ सदृशरूपास्ते सर्वे भास्वरमूर्तयः ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

## १८५

भीष्म उवाच ।
ततो रात्र्यां व्यतीतायां प्रतिबुद्धोऽस्मि भारत ।
तं च संचिन्त्य वै स्वप्नमवापं हर्षमुत्तमम् ॥ १
ततः समभवद्युद्धं मम तस्य च भारत ।
तुमुलं सर्वभूतानां लोमहर्षणमद्भुतम् ॥ २
ततो बाणमयं वर्षं ववर्ष मयि भार्गवः ।
न्यवारयमहं तं च शरजालेन भारत ॥ ३
ततः परमसंक्रुद्धः पुनरेव महातपाः ।
ह्यस्तनेनैव कोपेन शक्तिं वै प्राहिणोन्मयि ॥ ४
इन्द्राशनिसमस्पर्शां यमदण्डोपमप्रभाम् ।

---

K2 (by corr) 4 5 B1 3 4 D (except D1 3 7, D4 om) सयोग, T1 G1 3 5 योग त, T2 G2 यो गतु, M2 यो गत्वा (for योग त्व) M4 (inf lin) मनसा च नियोगत्व — b) T G2 5 प्राप्स्यते — d) K2 D1 त्वद्बाणपरि(D1 °वश)पीडितः

15 c) T2 दैवतेना° (for दयितेना°) — d) B2 5 समोहनेन (for संबोध°)

16 b) K3 B2 D3 M4 रणम्, D1 T1 G1 3 M (M4 inf lin) रामम्, T2 G2 5 कामम् (for रथम्) T G1 M2 3 4 (inf lin) 5 आस्थितं, M1 आगतं — c) K4 B D (except D7, D4 om) इति (for अपि)

17 a) K1 (before corr) 5 G3 M3-5 कर्तव्य, D52 D1 मतव्य (for मर्तव्य) — b) M1 2 भारत (for पार्थिव) — d) B3 सुप्वाप, B4 संताप (for प्रस्वाप) B3 4 त्यज्य° (for युज्य°) M1 2 प्रस्वापं वै प्रयुज्यता

18 b) T2 ययु° सर्वे (for सर्व एव) — d) K1. 2 5 D7 भास्कररूपिण°, B Dn भासुरमूर्तय, D3 भास्वररूपत, M5 भारतमूर्तय°

Colophon D4 5 6 G4 missing — *Sub-parvan* K B Dn D5 D1-3 6-8 10 T1 G5 M अम्बोपाख्यान — *Adhy name* G2 रामभीष्मयुद्ध, M3 5 विजयोपलाभः, M4 विजयोपालंभ — *Adhy no* (figures, words or both) D6 75 (=175), T1 M4 186, T2 G1 2 4 M3 5 187, G3 184 (as in text), M1 2 185 — *S'loka* no K5 17, Dn 18.

**185**

☞ D4 om this adhy (cf. v l 5 183 11), the MS is mostly ignored here

1 a) K4 B Dn D5 D8 (m as in text) 6 10 रात्रौ (for रात्र्या) — b) M2 पार्थिव (for भारत). — c) B Dn D5 D2 3 6 तत° (for तं च) K3. 4 B2 D1 2 सस्मृत्य, M5 वै चिंत्य (for संचिन्त्य) K3 सस्मृत्य, D7 वै प्रश्नम् (for वै स्वप्नम्) — d) K1 अवापास्त्रमनुत्तम, T G आप हर्षमनुत्तमं, M1 2 हर्षमापमनुत्तमं, M3-5 अगा हर्षमनुत्तमं

2 c) A few N MSS तुमल D1 सर्वलोकानां — d) S रोमहर्षणम् B (except B5) D1 M2 उत्तम (for अद्भुतम्).

3 b) G1 3 5 अवर्षन् (for ववर्ष) — c) K4 B D (except D1 6 8, D4 om) G5 M5 तच्च (for त च) — d) K3 D1 °वर्षेण (for °जालेन)

4 a) K4 D2 °संरब्ध° — c) K4 उत्तमेन, D8 T2 G1 2 5 ततस्तेन, G3 न्यस्त तेन, Ca ह्यस्तनेन (as in text) B (except B2) Dn D5 D6 10 T1 च (for [ए]व) B3 दु°खेन (for कोपेन)

5 b) K3 4 B D (except D7, D4 om) M1 2 यमदड(D1 °ण्डा)सम°, K5 कालदण्डोपम° — G2 om 5cd. — c) K1 अग्निना (for °वत्) T1 पेतु° (for सस्पृ°).

ज्वलन्तीमग्निवत्संख्ये लेलिहानां समन्ततः ॥ ५
ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा ।
सा मामभ्यहनत्तूर्णमंसदेशे च भारत ॥ ६
अथासृक्क्षोऽस्रवद्घोरं गिरेर्गैरिकधातुवत् ।
रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ॥ ७
ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः ।
प्रेषयं मृत्युसंकाशं बाणं सर्पविषोपमम् ॥ ८
स तेनाभिहतो वीरो ललाटे द्विजसत्तमः ।
अशोभत महाराज सशृङ्ग इव पर्वतः ॥ ९
स संरब्धः समावृत्य बाणं कालान्तकोपमम् ।
संदधे बलवत्कृष्य घोरं शत्रुनिबर्हणम् ॥ १०
स वक्षसि पपातोग्रः शरो व्याल इव श्वसन् ।
महीं राजंस्ततश्चाहमगच्छं रुधिराविलः ॥ ११
अवाप्य तु पुनः संज्ञां जामदग्न्याय धीमते ।
प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव ॥ १२
सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे ।
विह्वलश्चाभवद्राजन्वेपथुश्चैनमाविशत् ॥ १३
तत एनं परिष्वज्य सखा विप्रो महातपाः ।
अकृतव्रणः शुभैर्वाक्यैराश्वासयदनेकधा ॥ १४
समाश्वस्तस्तदा रामः क्रोधामर्षसमन्वितः ।
प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतः ॥ १५
ततस्तत्प्रतिघातार्थं ब्राह्ममेवास्त्रमुत्तमम् ।
मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत् ॥ १६
तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागमः ।
असंप्राप्यैव रामं च मां च भारतसत्तम ॥ १७
ततो व्योम्नि प्रादुरभूत्तेज एव हि केवलम् ।
भूतानि चैव सर्वाणि जग्मुरार्तिं विशां पते ॥ १८
ऋषयश्च सगन्धर्वा देवताश्चैव भारत ।
संतापं परमं जग्मुरस्त्रतेजोभिपीडिताः ॥ १९
ततश्चचाल पृथिवी सपर्वतवनद्रुमा । C. 5. 72… B. 5. 18… K. 5. 18…

---

6 a) K3 शक्तिर् (for ततो) — c) D7 T1 G3 5 M3–5 स (for सा) K4 B Dn Ds D3 6 10 अभ्यवधीत् (for °हनत्) — d) K4 B (except B4) Dn Ds D6 8 10 जत्रुदेशे, Ca अंस° (as in text) K3.4 D1 सुदारुण (K3 °ण), B Dn Ds D8 6 8 10 कुरूद्वह, D2 नरर्षभ (for च भारत)

7 a) K3.4 D1.8 ततो, D3 यया, T1 तथा (for अथ) K1.2 Dn D6 7 10 असृग्, B5 D1–3 G3 Cn अस्रम् (for असृक्क्षो) K2 अवहद्, B4 D7 S (except G3) अभवद् (for अस्रवद्) — b) K4.5 Dn2 Ds2 D1.8 10 गिरि- गैरिक° — d) K2 5 क्षतलक्षण°, K3 M2 3 °जेक्षण°, B5 Ca °जोक्षित°, D1 °जेक्षणे, M5 °जोक्षिण° D6 8 क्षतजस्य क्षतेक्षण°

8 b) S (except G3) कोप° (for क्रोध°) — c) K3.4 D1 प्राहिण्व, K5 D7 प्रेषयन्, B Dn Ds D6 8 10 चिक्षेप, D2 प्रसृज, D3 व्यक्षिप (for प्रेषयं) — d) Ds D6 युधि (for बाण)

9 a) D6 नि° (for [अ]भि°) K1 2 6 G3 M (except M3) वीर

10 a) K3 D1 M2 सु- (for स) — b) K4 B D (except D2 3 7, D4 om) शर (for बाणं) — c) T2 G2 सबाय (for °दधे) D2 न्दधे भृशमाकृष्य

11 d) B3 5 Dn D3 D6 10 अगम K3 4 B1.2 4 D1–3 रुधिरोक्षित°, T2 G2 °रात्य°

12 a) K4 B D (except D1.2 7, D4 om) सम्प्राप्य (for अवाप्य) K3 T1 G3 च (for तु) — c) T G विपुला (for विमला) — d) B2 उरगीम् (for अशनीम्)

13 a) K1.2 6 D7 कालमसदृशां (for द्विज°) — b) D1 स्तनांतरे (for भुजा°) — c) G5 स विह्वलो° (for विह्वलश्चा°)

14 a) K1 2 5 तमेन स(K2 स)परि° — b) D3 वीरो (for विप्रो) M महामना° — c) Hypermetric! — d) S (except G1 5) आश्वासयत नै(M1.3.4 ने)कधा

15 a) K1 2 समाश्वमन् K3 4 B1–3 D (except D3.7, D4 om) M1.2 ततो (for तदा) — c) M5 ततो (for तदा)

16 d) K1 (before corr) 2 B2 Ds D2 3.8 T G3 दर्शयन्

17 a) D7 G2 3 M3 5 ततो, M1.2 तदा (for तयोर्) T G राजन् (for आसीद्) — b) T G1.2.3 अतरे वै, G3 अतराळे (for अन्तरा वै) M4.5 स्व (for वै) — d) K4 D7 8 G3 भरतसत्तम K1 B2 4 5 मा चैव भरतर्षभ

19 a) K1 तु (for च) D5 D3 [ए]व (for स) B4 सदेवासुरगधर्वा° — d) B2 °निपातित°, D1–3 G1.3 °निपीडिता°

20 a) D2 वसुधा (for पृथिवी) — c) K1.2 6 Dn1

C. 5. 7286
B. 5. 184. 20
K. 5. 184. 20

संतप्तानि च भूतानि विषादं जग्मुरुत्तमम् ॥ २०
प्रजज्वाल नभो राजन्धूमायन्ते दिशो दश ।
न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा ॥ २१
ततो हाहाकृते लोके सदेवासुरराक्षसे ।
इदमन्तरमित्येव योक्तुकामोऽस्मि भारत ॥ २२
प्रस्वापमस्त्रं दयितं वचनाद्ब्रह्मवादिनाम् ।
चिन्तितं च तदस्त्रं मे मनसि प्रत्यभात्तदा ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

## १८६

भीष्म उवाच ।
ततो हलहलाशब्दो दिवि राजन्महानभूत् ।
प्रस्वापं भीष्म मा स्वाप्सीरिति कौरवनन्दन ॥ १
अयुञ्जमेव चैवाहं तदस्त्रं भृगुनन्दने ।
प्रस्वापं मां प्रयुञ्जानं नारदो वाक्यमब्रवीत् ॥ २
एते वियति कौरव्य दिवि देवगणाः स्थिताः ।
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय ॥ ३
रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।
तस्यावमानं कौरव्य मा स्म कार्षीः कथंचन ॥ ४
ततोऽपश्यं दिविष्ठान्वै तानष्टौ ब्रह्मवादिनः ।
ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ॥ ५
यथाह भरतश्रेष्ठ नारदस्तत्तथा कुरु ।
एतद्धि परमं श्रेयो लोकानां भरतर्षभ ॥ ६
ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं मृधे ।

---

D7 सत्रस्तानि, D1 समस्ता° (for सतप्ता°)

21 a) K8 ततो वन्हिर् (for नभो राजन्) K1 2 5 D7 प्राज्वलत्पावक° सर्वा — b) K1 2 5 Dn1 Ds2 D3 धूमायत (K5 °श्र), K4 S धूमा(G3 M2 5 °म)यति — d) K1–3 D7 T2 G (except G3) M1 2 तथा (for तदा)

22 K1 om from 22 up to 9ab of the next adhy (186) — b) D7. 10 °मानुषे — c) = (var.) 1 51 16c K2–4 B Dn D6 8 हृत्येव — d) K (K1 om ) B Dn Ds D3 6 8 10 G3 M1 (inf lin ) मोक्तु° (for योक्तु°)

23 K1 om 23 (cf v l 22) — a) N (K1 om, D4 missing) त्वरितो (for दयितं) — c) K2 चिचिंतित, K4 B Dn Ds D6 10 G5 विचित्र च (for चिन्तित च) — d) K3 5 D7 T G (except G5) M3 5 मनसा, D1 सहसा, M1 वचनात्, M2 वचन (for मनसि) G3 सस्मरत् (for प्रत्यभात)

Colophon om in K1 D4 5 9 G4 missing — *Sub-parvan* K2–5 B Dn Ds D1–3 6–8 10 G5 M अम्बोपाख्यान — *Adhy. name* K4 भीष्मभार्गवयोर्युद्ध, M ब्रह्मास्त्रप्रयोग — *Adhy no* (figures, words or both) D6 75 (=175), T1 M4 187, T2 G1 2 5 M3 5 188, G3 185 (as in text), M1 2 186. — *S'loka no* K5 23, Dn 24

**186**

1 K1 om 1a–9b, D4 om 1–3 (cf v l 5 185. 22, 183 11) — b) K3 अभूत्तदा (for महानभूत्) — c) T2 G2 M2 भीष्ममद्राक्षीर् K5 D10 G3 स्माक्षीर्, B5 त्याक्षीर्, D1 द्राक्षीर् (for स्वाक्षीर्)

2 K1 D4 om. 2 (cf v l 1), B2 D2 om 2ab — a) K4 प्रयुजन्नेव, B3 असुचमेव, B4 5 प्रायुजमेव; D1 युयुज° K3 5 D7 अयुज (K3 असृज) चैवमेवाह — c) K2 4 5 D3 वीर मा स्वा(K5 स्मा)क्षी°, K3 अथ मा स्वाक्षी , B1 2 4 समरे वीर, D1 2 भीष्म मा द्रा(D2 स्वा)क्षी°; S अथ मा वीर (for मा प्रयुञ्जान).

3 K1 D4 om 3 (cf v l 1) — b) T2 G2 देव° (for दिवि) M2 हिता° (for स्थिता ) — c) D5 S (except T2 G1 2) त्वा (for त्वा) — d) S प्रयुयुज° (for प्रयो°)

4 D4 resumes | K1 om 4 (cf v.l 1) — a) K2 5 D3 4 तस्यापमान

5 K1 om 5 (cf v l 1) — a) K2 3 5 B3 D3 4 8 M दिविस्थान्वै — c) D7. 8 मा (for मा)

6 K1 om 6 (cf v l 1) — a) K5 T1 G3 M2 यदा° (for यथा°) — b) K4 D (except D1 2 7) ते, B2 4 5 त्वां (for तत्) — d) M1 2 आत्मनस्तथा (for भरत°)

ब्रह्मास्त्रं दीपयांचक्रे तस्मिन्युधि यथाविधि ॥ ७
तत्तो रामो रुषितो राजपुत्र
दृष्ट्वा तदस्त्रं विनिवर्तितं वै ।
जितोऽस्मि भीष्मेण सुमन्दबुद्धि-
रित्येव वाक्यं सहसा व्यमुञ्चत् ॥ ८
ततोऽपश्यत्पितरं जामदग्न्यः
पितुस्तथा पितरं तस्य चान्यम् ।
त एवैनं संपरिवार्य तस्थु-
रूचुश्चैनं सान्त्वपूर्वं तदानीम् ॥ ९
मा स्मैवं साहसं वत्स पुनः कार्षीः कथंचन ।
भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ॥ १०
क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन ।
स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम् ॥ ११
इदं निमित्ते कस्मिंश्चिदस्माभिरुपमन्त्रितम् ।
शस्त्रधारणमत्युग्रं तच्च कार्यं कृतं त्वया ॥ १२
वत्स पर्याप्तमेतावद्भीष्मेण सह संयुगे ।
विमर्दस्ते महाबाहो व्यपयाहि रणादितः ॥ १३
पर्याप्तमेतद्भद्रं ते तव कार्मुकधारणम् ।
विसर्जयैतद्दुर्धर्ष तपस्तप्यस्व भार्गव ॥ १४
एष भीष्मः शांतनवो देवैः सर्वैर्निवारितः ।
निवर्तस्व रणादस्मादिति चैव प्रचोदितः ॥ १५
रामेण सह मा योत्सीर्गुरुणेति पुनः पुनः ।
न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह ।
मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे ॥ १६

C. 5. 7306
B. 5. 185. 17
K. 5. 185. 17

7 K1 om 7 (cf v l 1), G3 om 7–8 — [a]) K4 ततोस्त्र, K5 ततोस्त्रं, D1.7 S (G3 om) ततोह K5 प्रतिसंगृह्य, S (G3 om.) परिगृहत्य (M3–5 °गृह्य) — K4 om. $7^b$–$8^a$ — [b]) K2 B1.2 4 5 D3 4 विभो, B3 Dn Ds D6 8 10 महत् (for मृधे) — [d]) G5 M1 (*inf lin* as in text) 5 युद्धे (for युधि)

8 K1 G3 om. 8 (cf v l. 1, 7), K4 om $8^a$ (cf v l 7) — [a]) Dn [ऽ]थ रामो (for रामो)! K3 भगवान्, B1 (and many old printed ed !) हृषितो (for रुषितो) B Dn Ds D6 8 10 राजसिंह (for °पुत्र) — [b]) K2 4 D1 7 प्रतिसंहृत (for विनि°) K2 3 5 D1–4 7 मे, M2 च (for वै) — [c]) Ds D6 हतोस्मि, D3 4 7 8 जितोस्मि (for जितोऽस्मि) Ds D3 4 7 भीष्मेति (for °ण) — [d]) K2 Dn1 S (G3 om) एव (for इत्येव) D7 अभ्यवोचत्, T G (G3 om) चाप्यमुचत्, M1 स (*inf lin* च) व्यमु°, M2 [ए]वाभ्यमु°, M3–5 प्रत्यमु° (for व्यमु°)

9 K1 om $9^{ab}$ (cf v l. 1) — [b]) B3 Dn Ds D6 10 M2 चाप्य (for तस्य) K4 D8 चान्य, B (except B3) चापि, Dn नान्य (Bom ed मान्य!), D2 T G1 2 5 M चान्यान् (for चान्यम्) — [c]) K4 B3 5 Dn Ds D3 4 6 8 10 ते तत्र चै (Dn1 वै)न, B1 2 5 ततश्चैन ते, D1 तत एन म, G3 स एवैन स-, G5 तथैवैन स- (for त एवैन स)

10 Before 10, all MSS ins पितर ऊचु — [a]) K4 B D (except D1.2 7) तात (for वत्स) — [c]) K1.2 संयुगे, T2 सगर

11 [a]) K1.2 5 च, K3 D1 2 7 हि (for तु) — [c]) K1.2 5 B3 5 ब्रह्मचर्यं, K3 B1 4 व्रतचर्यं, B3 D1.2 7 ब्रह्मचर्या K4 Dn2 Ds1 [अ]थ (for च) — [d]) K6 Ds ब्राह्मणस्य B2 D1 पर तप (D1 °प), B5 पर यश

12 [a]) K1 2 5 (hypermetric!) तदिद (for इद) T2 G2 निमित्त, Ca as in text G3 तदिद वीर ते कस्मै — [b]) K1 अभिमन्त्रित, K2 उपमन्त्रित, B Dn Ds D3 4 6 8 10 प्रागुदाहृत, D1 उपयति त, Ca s as in text — [c]) D8 अस्त्र° (for शस्त्र°) K1.5 D3 4 8 M उग्रत्व; D2 T G उग्र च (for अत्युग्र) — [d]) B (except B3) Dn D3 4.6 [अ]कार्यं (for कार्यं)

13 [a]) M1–3 एवैतद् (for एतावद्) — [b]) K3 त्वया भीष्मेण संयुगे — [c]) K (except K4) D8 निवर्तस्व (for विमर्दस्ते)

14 D2 om (hapl) $14^a$–$15^c$ — [a]) D3 4 एव (for एतद्) — [b]) G5 तदिद शस्त्रधारण — [c]) T1 इद, T2 G1–3 एन (for एतद्) B3 D7 G1.2 दुर्धर्षं — [d]) M3–5 तप्यस्व

15 D2 om $15^{abc}$ (cf v l 14) — [a]) T G (except G3) एव (for एष) — [b]) K1 2 5 निवर्तित, B3 निराकृत (for निवा°) — D1 om. (hapl.) $15^{cd}$ — [d]) K5 प्रणोदित, B3 5 Dn Ds D6 8 10 प्रसा° (for प्रचो°)

16 K5 reads 16–17 after $24^{ab}$ — [b]) K5 निवर्तस्व (for गुरुणेति) D1 विशेषत (for पुन पुन) — [c]) T1 G1 3 राम — [d]) K2 5 D7 T1 G1 M3–5 न्याय्य, K3 नाथ, D1 T2 G2 न्याय; D3 4 G5 शक्य, G3 चाथ

C. 5 7308 B. 5. 186. 17 K. 5. 185. 17

वयं तु गुरवस्तुभ्यं ततस्त्वां वारयामहे ।
भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक ॥ १७
गाङ्गेयः शंतनोः पुत्रो वसुरेष महायशाः ।
कथं त्वया रणे जेतुं राम शक्यो निवर्त वै ॥ १८
अर्जुनः पाण्डवश्रेष्ठः पुरंदरसुतो बली ।
नरः प्रजापतिर्वीरः पूर्वदेवः सनातनः ॥ १९
सव्यसाचीति विख्यातस्त्रिषु लोकेषु वीर्यवान् ।
भीष्ममृत्युर्यथाकालं विहितो वै स्वयंभुवा ॥ २०
एवमुक्तः स पितृभिः पितॄन्रामोऽब्रवीदिदम् ।
नाहं युधि निवर्तेयमिति मे व्रतमाहितम् ॥ २१
न निवर्तितपूर्वं च कदाचिद्रणमूर्धनि ।
निवर्त्यतामापगेयः कामं युद्धात्पितामहाः ।
न त्वहं विनिवर्तिष्ये युद्धादस्मात्कथंचन ॥ २२
ततस्ते मुनयो राजन्नृचीकप्रमुखास्तदा ।
नारदेनैव सहिताः समागम्येदमब्रुवन् ॥ २३

निवर्तस्व रणात्तात मानयस्व द्विजोत्तमान् ।
नेत्यवोचमहं तांश्च क्षत्रधर्मव्यपेक्षया ॥ २४
मम व्रतमिदं लोके नाहं युद्धात्कथंचन ।
विमुखो विनिवर्तेयं पृष्ठतोऽभ्याहतः शरैः ॥ २५
नाहं लोभान्न कार्पण्यान्न भयान्नार्थकारणात् ।
त्यजेयं शाश्वतं धर्ममिति मे निश्चिता मतिः ॥ २६
ततस्ते मुनयः सर्वे नारदप्रमुखा नृप ।
भागीरथी च मे माता रणमध्यं प्रपेदिरे ॥ २७
तथैवात्तशरो धन्वी तथैव दृढनिश्चयः ।
स्थितोऽहमाहवे योद्धुं ततस्ते राममब्रुवन् ।
समेत्य सहिता भूयः समरे भृगुनन्दनम् ॥ २८
नावनीतं हि हृदयं विप्राणां शाम्य भार्गव ।
राम राम निवर्तस्व युद्धादस्माद्द्विजोत्तम ।
अवध्यो हि त्वया भीष्मस्त्वं च भीष्मस्य भार्गव ॥ २९
एवं ब्रुवन्तस्ते सर्वे प्रतिरुध्य रणाजिरम् ।

---

(for न्यास्य ) K3 कथचन (for कुरु॰) — ᶜ) K3 4 D2 7 S राजेंद्र (for गाङ्गेय)

17 For sequence in K5, cf v l 16 — ᵃ) B4 D3 4 7 च (for तु) — ᵇ) K3 अतस्, K4 B D (except D1, 2 7) तस्मात् (for ततस्) — ᶜ) Hypermetric!

18 ᵃ) K4 B D (except Dn1 D1 7 8) T2 G1 2 M5 शातनो — ᵇ) K (except K5) B2 D1 2 7 महाबल॰ (for ॰यशा॰) — ᶜ) B D (except D1 2 7) शक्यस्त्वया (for त्वया रणे) — ᵈ) K1 (before corr ) निवर्तितु, K4 G3 ॰र्तय (for ॰र्त वै) B D (except D1 2 7) निवर्तस्वेह भारत

19 M om 19ᵃᵇ — ᶜ) D1 पर (for नर॰) D3 4 8 G3 M2 वीर — ᵈ) K1 2 5 पूर्वदेहे; K4 T1 पूर्वं देव

20 ᵇ) K1 2, 5 T G M1 2 सत्यवान्; D1 M3–5 विश्रुत , D3 4 सत्यवाक् (for वीर्य॰)

21 Before 21, N M5 ins भीष्म उ॰ (M5 om उ॰)

22 D6 om 22 — ᵃ) K1 2 5 D8 नाह निवर्तित पूर्वं, B (except B6) Dn D5 T1 G3 न निवर्तितपूर्वश्च — ᶜ) K (except K4) D2–4 7 निवर्तताम् — ᵈ) K1 G3 M2 पितामह॰, K2 ॰मह — ᵉ) K5 न निवर्तेय, D10 वै निवर्तिष्ये (for विनि॰) — ᶠ) B2 4 Ds1 D6 कदा॰ (for कथ॰)

23 K4 om (hapl ) 23ᵃ–25ᵇ — ᵇ) K3 D7 M1, 2 तया (for तदा) — ᵈ) K1 5 D2–4 7 S (except G1) मामागम्ये॰ (G3 ॰त्ये॰), D10 समागत्ये॰

24 K4 om 24 (cf v l. 23) — ᵇ) B D (except D2 7 8) M1 2 द्विजोत्तम — After 24ᵃᵇ, K5 reads 16–17 — D1 om 24ᶜᵈ — ᶜ) K1 2 5 D2 7 प्रत्य॰; B4 5 ह्रत्य॰, D10 न ह्य॰ (for नेत्य॰)

25 K4 om 25ᵃᵇ (cf v l 23) — ᵃ) D3 4 तात (for लोके) — ᵇ) B (except B4) Dn Ds1 D6 10 T1 G1 कदा॰ (for कथ॰) — ᵈ) K5 G2 [ऽ]प्याहत॰, T2 व्याहत॰ (for ऽभ्या॰)

26 =(var )5 49 15, 89 24, 178 11 — ᵇ) K3 (m as in text) ॰कामया (for ॰कारणात्) — ᵈ) K3 4 D7 इति मे निश्चित मन॰ (D7 मत)

28 ᵃ) D3 4 सशरो (for [आ]त्त॰) — ᶜ) K4 B4 5 D (except D1 2 7 8) स्थिरो (for स्थितो) D1 6 T1 G1 महाहवे (for ऽहमाहवे) — ᵉᶠ) K2 M1 2 सहसा, T1 सर्वतो (for सहिता) K3 4 D1 2 7 समागम्य तत॰ सर्वे (K4 ॰म्य च सर्वे च) निवर्त त्व (D7 ॰वच्य) हि पुत्रक

29 M2 om (hapl ) 29–30 — ᵃ) K5 D2 10 S (M2 om ) नवनीत, Ca as in text T G तु (for हि) — ᶜ) K3 D7 8 [ऽ]य, K4 B Dn D5 D1, 3 4 6 10 वै (for हि)

30 M2 om 30 (cf v l 29) — ᶜ) K3 S (M2

न्यासयांचक्रिरे शस्त्रं पितरो भृगुनन्दनम् ॥ ३०
ततोऽहं पुनरेवाथ तानष्टौ ब्रह्मवादिनः ।
अद्राक्षं दीप्यमानान्वै ग्रहानष्टाविवोदितान् ॥ ३१
ते मां सप्रणयं वाक्यमब्रुवन्समरे स्थितम् ।
प्रैहि रामं महाबाहो गुरुं लोकहितं कुरु ॥ ३२
दृष्ट्वा निवर्तितं रामं सुहृद्वाक्येन तेन वै ।
लोकानां च हितं कुर्वन्नहमप्याददे वचः ॥ ३३
ततोऽहं राममासाद्य ववन्दे भृशविक्षतः ।
रामश्चाभ्युत्स्मयन्प्रेम्णा मामुवाच महातपाः ॥ ३४
त्वत्समो नास्ति लोकेऽस्मिन्क्षत्रियः पृथिवीचरः ।
गम्यतां भीष्म युद्धेऽस्मिंस्तोषितोऽहं भृशं त्वया ॥ ३५
मम चैव समक्षं तां कन्यामाहूय भार्गवः ।
उवाच दीनया वाचा मध्ये तेषां तपस्विनाम् ॥ ३६

इति श्रीमहाभारते उद्योगपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

## १८७

राम उवाच ।
प्रत्यक्षमेतल्लोकानां सर्वेषामेव भामिनि ।
यथा मया परं शक्त्या कृतं वै पौरुषं महत् ॥ १
न चैव युधि शक्नोमि भीष्मं शस्त्रभृतां वरम् ।
विशेषयितुमत्यर्थमुत्तमास्त्राणि दर्शयन् ॥ २
एषा मे परमा शक्तिरेतन्मे परमं बलम् ।
यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ॥ ३
भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः ।

C. 5. 7331
B. 5. 188. 4
K. 5. 188. 4

---

om.) वारयाचक्रिरे, Ca न्यामया° (as in text)
31 [a]) G1 [ऽ]पि (for ऽह) — [c]) K3 D7 अपश्य, D2 प्रपश्य (for अद्राक्ष)
32 [c]) Dn1 एहि, D10 गच्छ (for प्रैहि) B2 भीष्म, T2 G (except G3) राजन् (for राम) — [d]) T1 G1 लोकहिते Dn1 -क्र, T1 G1 रत (for कुरु)
33 [b]) B1 वै तदा (for तेन वै) — [d]) B1. 2 4 D2 m. 4 अहमप्याहवे त(D2. 4 स्थि)त
34 Stanza lost in B1. — [b]) K1. 2 D2 T2 G2 3 भृगवीक्षित°, G1 भृगुनदन — D2 om. 34[c]–35[d] — [c]) K1. 2 [आ]शु स्मयन्, K3 व्युत्स्मयन्, K5 [अ]पि स्मयन्, S (except T1) [अ]प्युत्स्मयन् (for [अ]भ्यु°) D2 4 रामश्चाप्युत्तमप्रेम्णा
35 D2 om. 35 (cf. v l 34) — [b]) D2 4 °तले (for °चर) — [c]) S शाम्य° (for गम्य°) T2 G2 [ऽ]स्मि (for ऽस्मिन्)
36 [b]) D3 D6 10 आगाय (for आहूय) — [c]) K3 B D (except D1. 2 7) उक्तवान् (for उवाच) — [d]) B3 Dn Ds D6 8 10 महामनां, D1 तरस्विना, G3 मन° (for तप°)

Colophon. D5 8 G1 missing — *Sub-parvan* K1–3 5 B Dn Ds D1–4. 6–8 10 T1 G. M1 2 अम्बोपाख्यान — *Adhy name* K3 D7 भीष्मराम(D7 °भार्गव)युद्धं (followed by समाप्त), K4 भीष्मभार्गवयोर्युद्ध, B3 रामभीष्मयुद्ध, M3–5 भीष्मविजय — *Adhy no* (figures, words or both) T1 M4 188, T2 G1. 2 5 M3 5 189, G3 186 (as in text), M1 2 187 — *S'loka no* K5 38, Dn1 61, Dn2 37

187

1 [ab]) K4 T G (except G3) एव (for एतल्ल) G2 transp लोकानां and सर्वेषा K4 D7 इति (for एव) K4 B D (except D1. 2 7) G1 3 भाविनि — [c]) K4 B Dn Ds D6 8 10 यथाशक्त्या मया युद्ध — [d]) D1 transp कृत and पौरुष K3 4 B D पर (for महत्)
2 [a]) K D7 8 चैव युधि, B Dn Ds D6. 10 चैवमपि, G3 च वै युधि T G शक्तोस्मि (for शक्नोमि) D3 4 जेतु चैव न शक्नोमि — [b]) K3 4 D1. 7 भीष्म शत्रुनिबर्हण — [d]) B (except B3) योजयन्, D3. 4 [अ]दर्शय (for दर्शयन्) S उत्तमास्त्र विदर्शयन्
3 [a]) D6 एषामेव परा, S (except T2) एषा च मे परा (G2 °रे) (for एषा मे परमा) — [d]) K3 D3 4 7 करवाणि (for वा करोमि)
4 [b]) M तु (for ते) — [c]) K5 G3 transp हि and असि — [d]) K1. 2 5 विमुचता, Ds2 प्रयुजता (for

C. 5. 7231 B. 5. 186. 4 K. 5. 186. 4

निर्जितो ह्यसि भीष्मेण महास्त्राणि प्रमुञ्चता ॥ ४

भीष्म उवाच ।

एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः ।
तूष्णीमासीत्तदा कन्या प्रोवाच भृगुनन्दनम् ॥ ५
भगवन्नेवमेवैतद्यथाह भगवांस्तथा ।
अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ॥ ६
यथाशक्ति यथोत्साहं मम कार्यं कृतं त्वया ।
अनिधाय रणे वीर्यमस्त्राणि विविधानि च ॥ ७
न चैष शक्यते युद्धे विशेषयितुमन्ततः ।
न चाहमेनं यास्यामि पुनर्भीष्मं कथंचन ॥ ८
गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन ।
समरे पातयिष्यामि स्वयमेव भृगूद्वह ॥ ९
एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना ।
तपसे धृतसंकल्पा मम चिन्तयती वधम् ॥ १०
ततो महेन्द्रं सह तैर्मुनिभिर्भृगुसत्तमः ।
यथागतं ययौ रामो मामुपामन्त्र्य भारत ॥ ११
ततोऽहं रथमारुह्य स्तूयमानो द्विजातिभिः ।
प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम् ।
यथावृत्तं महाराज सा च मां प्रत्यनन्दत ॥ १२
पुरुषांश्चादिशं प्राज्ञान्कन्यावृत्तान्तकर्मणि ।
दिवसे दिवसे ह्यस्या गतजल्पितचेष्टितम् ।
प्रत्याहरंश्च मे युक्ताः स्थिताः प्रियहिते मम ॥ १३
यदैव हि वनं प्रायात्कन्या सा तपसे धृता ।
तदैव व्यथितो दीनो गतचेता इवाभवम् ॥ १४
न हि मां क्षत्रियः कश्चिद्वीर्येण विजयेद्युधि ।
ऋते ब्रह्मविदस्तात तपसा संशितव्रतात् ॥ १५

---

प्रमुञ्चता)

5 K3 4 B D (except D3 4 7 8) S om the ref — $^{a}$) K1 2 5 G3 M1 2 तदा (for ततो) — $^{b}$) K1 4 Dn Ds D8 T1 G5 M विनिश्वस्य, D1 नि:श्वसश्च, T2 G2 विनिश्विस्य K3 D7 नि:श्वस्य विमनास्तदा — $^{c}$) K3 4 B D (except D7) तत: (for तदा)

6 $^{b}$) G3 M1 2 यदा (for यथा) Ds D8 M3-5 [आ]त्थ (for [आ]ह) K (except K3) D2 यथात्थ न तदन्यथा, D3 4 यथा चाह भवांस्तथा — D6 om 6$^{c}$-7$^{b}$. — $^{d}$) K2 5 उदायुधैः (for °रधीः)

7 D6 om 7$^{ab}$ (of v l 6), G5 om (hapl) 7$^{b}$-9$^{a}$ — $^{c}$) K1 D2 अभिधाय, K2 3 5 अभिधार्य, K4 B Dn Ds D1 3 4 6 8 10 अनिवार्य, D7 अपिधाय, T G मुनि° (for अनि°)

8 D3 4 G5 om 8 (for G5 of v l 7) — $^{a}$) K4 5 B (except B2) Dn Ds D2 एव (for एष) — $^{c}$) B1 पश्यामि, D7 T2 G1 2 योत्स्या° (for यास्या°) — $^{d}$) K3 B1 2 4 कदाचन, K4 तपोधन (for कथं°)

9 G5 om 9$^{a}$ (of v l. 7) — K4 om (hapl) 9$^{ab}$ — $^{a}$) K3 G3 [इ]ति तत्राह, B1-3 च तत्राह, B4 तत्र चाह — $^{d}$) D3 G3 कुरूद्वह (for भृगू°)

10 D4 om 10$^{a}$-11$^{b}$ — $^{b}$) K2 °व्याकुलचेतना M1. 2 °पर्याकुलेक्षणा — $^{c}$) B Dn Ds D8 10 तापस्ये, D1 तापसे, D2 तपते, G3 समरे — $^{d}$) B4 Dn D6 8 10 सा मे (for मम) T1 G1 चिंतयती वध मम

11 D4 om 11$^{ab}$ (of v l 10) — $^{a}$) B Dn2 Ds2 D1 10 G3 सहितै ; D6 सहिते (for सह तै°) — $^{b}$) K4 ऋषिभिर् K1-3 B2 D1-3 8 T1 M1 2 भृगुनदन° (for °सत्तम) — $^{c}$) B Dn Ds D6 10 तथा सोगान् (for ययौ रामो) — $^{d}$) K3 D1. 2 °पृच्छ्य (for °मन्त्र्य)

12 $^{a}$) K4 B D (except D1 7) ततो रथ समारुह्य — $^{cd}$)=(var) 5 179 10$^{cd}$ — $^{e}$) B5 °पृष्ट (for °वृत्त) — $^{f}$) K3 M मा. T2 नारदेन निवेदित

13 T2 om 13$^{a}$-16$^{b}$ — $^{a}$) K1 2 तज्ज्ञान्, D3 4 सर्वान्, Ca प्राज्ञान् (as in text) — $^{c}$) K (except K4) D2 7 8 तस्या (for ह्यस्या) — $^{d}$) K1 2 B (except B3) Dn1 D1 गतिजल्पित°, K4 5 Dn2 D8 गत जल्पित°, D3 4 गत्वा जानीत चेष्टित, D10 कन्याया जल्पचेष्टित — G3 om 13$^{e}$-15$^{d}$ — $^{e}$) K1 2 प्रत्याहार तु, K3 D2 °हरस्तु, B2 4 D3 4 °हरति, S (T2 G3 om) °हरत D3 ते (for मे) — $^{f}$) K3 4 B5 रता°, B1-4 Dn Ds D6 8 10 सदा (for मम)

14 T2 G3 om 14 (of v l 13) — $^{a}$) S (T2 G3 om) याता (for प्रायात्) — $^{b}$) K1 4 B (except B5) Dn Ds D6 10 T1 transp कन्या and सा K1 2 वृता, B4 5 स्थिता (for धृता) M1 2 तपसे धृतमानसा — $^{d}$) T G (T2 G3 om) हृत° (for गत°)

15 T2 G3 om 15 (of v l 13) — $^{b}$) K3 B Dn1 Ds1 D6 10 G1 व्यजयद्, D7 वै जयेद् (for विज°) K4 भुवि (for युधि) — $^{d}$) K1 2 5 D6 8 10 शसितव्रताद् (K5 D10 °न्), B3 4 Ds2 D8 सशितव्रतान् K3 D7 S (T2 G3 om) तापसान्सशितव्रतान्

अपि चैतन्मया राजन्नारदेऽपि निवेदितम् ।
व्यासे चैव भयात्कार्यं तौ चोभौ मामवोचताम् ॥ १६
न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ १७
सा तु कन्या महाराज प्रविश्याश्रममण्डलम् ।
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥ १८
निराहारा कृशा रूक्षा जटिला मलपङ्किनी ।
षण्मासान्वायुभक्षा च स्थाणुभूता तपोधना ॥ १९
यमुनातीरमासाद्य संवत्सरमथापरम् ।
उदवासं निराहारा पारयामास भामिनी ॥ २०

शीर्णपर्णेन चैकेन पारयामास चापरम् ।
संवत्सरं तीव्रकोपा पादाङ्गुष्ठाग्रधिष्ठिता ॥ २१
एवं द्वादश वर्षाणि तापयामास रोदसी ।
निवर्त्यमानापि तु सा ज्ञातिभिर्नैव शक्यते ॥ २२
ततोऽगमद्वत्सभूमिं सिद्धचारणसेविताम् ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ २३
तत्र पुण्येषु देशेषु साप्लुताङ्गी दिवानिशम् ।
व्यचरत्काशिकन्या सा यथाकामविचारिणी ॥ २४
नन्दाश्रमे महाराज ततोलूकाश्रमे शुभे ।
च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च ॥ २५

C. 5 7353
B. 5. 186. 26
K. 5. 189. 23

---

16 T2 om. $16^{ab}$ (cf. v l 13) — a) G2 5 अथ (for अपि) K4 D1 T1 G M2 महाराज (for मया राजन्) — b) D1 G2 M1. 3 नारदेन (for नारदेऽपि) K3 D2 T1 G1. 3 5 M (M1 3 sup lin) त्रि, D3 4 च (for ऽपि) — c) K4 D1–4 च यत्, B Dn Ds D6 7 10 तया, T1 G1 भवेत् (for भयात्) K1. 2 D5 व्यासस्य चैवोभयतः — d) K1. 2 कार्यतो, D1 T1 G1 तावुभौ (for तौ चोभौ) D8 सम° (for माम°)

17 $17^{cd}$ = 1 1 $186^{cd}$ — d) K1 (by corr ) 2 G3 [अ]ति° (for नि°)

18 a) K4 B (except B2) D (except D1 7) transp तु and कन्या — c) = Cf $20^{a}$ S आसाद्य (for आश्रित्य) — Dc. 3 om. (? hapl.) $18^{d}$–$20^{a}$ — d) M4 °दारुण (for °मानुष)

19 Dc. 3 om 19 (cf v l. 18) — a) T1 G1. 3. 5 जलाहारा (G1. 3 °र-), T2 G2 विजहार (for निराहारा) K3 B3 D2–4. 7 10 T2 G1. 2 रुक्षा, K6 B1 2 4 5 दीना (for रूक्षा) D1 निराहारा क्षमारूपा — c) K3 5 D1–4 7 [आ]सीत्, Dn1 S (except G3) मा (for च) — d) K4 D3 4 M1. 2 तपस्विनी, B3 Ds तपोवने (for °धना)

20 Dc 3 om $20^{a}$ (cf. v l 18), G2 om $20^{ab}$ — a) Cf $18^{a}$ K2 4 B Dn Ds D1. 3. 4 10 यमुनाजलम् K3 4 B D (Dc 3 om ) G1 आश्रित्य — c) K (except K3) Dn2 T G2 3 5 उपवास, D3. 4 उपवासात्, G1 उदावसन्, Ca उदवास (as in text) K1. 2 5 D7 नित्यमेव (for निराहारा) — d) K1. 4 D3 4 धारयामास, K3 D7 पाल°, T G1. 3 5 M1–4 कार°, G3 काम°, M3 (inf lin ) 5 हार°, Ca पार° (as in text) K4 D2 भारत, B Dn Ds D3. 6. 8 10 Ca भाविनी (Cap भामिनी as in text), D4 रोदसी (cf $22^{b}$) G2 सवत्सरमथापर

☞ In Dn2, the portion of the text from stanza 21 up to 5 195 3 is lost on a missing fol The MS is mostly ignored up to the end of the lacuna

21 D4 om. (hapl.) $21^{a}$–$22^{b}$ — a) K1. 2 शीर्णेन पर्णेनैकेन — b) K3 D7 वर्तयामास, K4 D8 पाल°, S धार° (G3 वार°) (for पार°) K4 भामिनी, B Dn1 Ds D3 6 सापर (for चापर) — c) K4 दीर्घकोपा, D10 तीव्रकोपात् — d) Dn1 Ds D3 (before corr ) G5 M3–5 पादागुष्ठाग्र वि(Dn1 °नि)ष्ठिता, D3 °ष्ठाग्रसस्थिता, D10 अगुष्ठाग्राग्रधिष्ठिता, T1 G1. 3 M1. 2 पादागुष्ठेन विष्ठिता, G2 °ष्ठविनिष्ठिता

22 D4 om. $22^{ab}$ (cf v l 21) — c) K3 न च, K4 B D (Dn2 missing) [अ]पि च, K6 (m as in text) T G1. 2 5 पित्रा (for [अ]पि तु) — d) D3 4 यतिभिर् (for ज्ञातिभिर्) K3 G3 5 M न स, T2 न स, G2 न च (for नैव)

23 a) Ds D3 4 6 ततो हि समभूत्तस्मिन् — b) B3. 4 Ds D3 4 6 °सेवित

24 a) K4 B Dn1 Ds D6 3 10 तीर्थे° (for देशे°) — b) K (except K4) D1. 7 8 M1 2 स(D1 स्वा)प्लुतागी, Ds D6 10 सा प्लुतागा, T2 सरित्सु च Ca cites आप्लुतागी — c) D2 अचरत्, T2 G5 विचरत् (for व्यच°) — d) K3 D1. 2 10 °विहारिणी, K6 T1 यथाकाम विचारिणी

25 G2 om $25^{ab}$, D4 om $25^{b}$–$26^{c}$ — b) K1. 2 5 तयार्चीकाश्रमे, K3 4 B Dn1 D1–4 6 8 10 G1 M4 तयोलूका°, D7 तथा कण्वा° M3 5 विभो (for शुभे) — c) K1. 2 5 D7 वशि(K2 5 °सि)ष्ठस्याश्रमे, B3 व्यचरत्साश्रमे

26 D4 om. $26^{abc}$ (cf. v l 25) — b) K5 D1 3 8 चैव हि, T G (except G3) वै विभो — c) K4 B D (except D2 7, Dn2 missing, D4 om ) महाराज,

C. 5. 7354
B. 5. 186. 27
K. 5. 186. 27

प्रयागे देवयजने देवारण्येषु चैव ह ।
भोगवत्यां तथा राजन्कौशिकस्याश्रमे तथा ॥ २६
माण्डव्यस्याश्रमे राजन्दिलीपस्याश्रमे तथा ।
रामह्रदे च कौरव्य पैलगार्ग्यस्य चाश्रमे ॥ २७
एतेषु तीर्थेषु तदा काशिकन्या विशां पते ।
आप्लावयत गात्राणि तीव्रमास्थाय वै तपः ॥ २८
तामब्रवीत्कौरवेय मम माता जलोत्थिता ।
किमर्थं क्लिश्यसे भद्रे तथ्यमेतद्ब्रवीहि मे ॥ २९
सैनामथाब्रवीद्राजन्कृताञ्जलिरनिन्दिता ।
भीष्मो रामेण समरे न जितश्चारुलोचने ॥ ३०
कोऽन्यस्तमुत्सहेज्जेतुमुद्यतेषुं महीपतिम् ।
साहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम् ॥ ३१
चरामि पृथिवीं देवि यथा हन्यामहं नृपम् ।
एतद्व्रतफलं देहे परस्मिन्स्याद्यथा हि मे ॥ ३२
ततोऽब्रवीत्सागरगा जिह्मं चरसि भामिनि ।
नैष कामोऽनवद्याङ्गि शक्यः प्राप्तुं त्वयाबले ॥ ३३
यदि भीष्मविनाशाय काश्ये चरसि वै व्रतम् ।
व्रतस्था च शरीरं त्वं यदि नाम विमोक्ष्यसि ।
नदी भविष्यसि शुभे कुटिला वार्षिकोदका ॥ ३४
दुस्तीर्था चानभिज्ञेया वार्षिकी नाष्टमासिकी ।
भीमग्राहवती घोरा सर्वभूतभयंकरी ॥ ३५
एवमुक्त्वा ततो राजन्काशिकन्यां न्यवर्तत ।

---

T G (except G2) ततो राजन् (for तथा राजन्) — $^{d}$) T1 G3 काशि(G3 °शी)कन्या (for कौशिकस्य) K1 2 [आ]श्रमेषु च, K5 M1 2 [आ]श्रमे शुभे, T1 G6 [आ]श्रमे तदा

27 K3 D1 3 4 om. (hapl.) $27^{ab}$ — $^{a}$) K5 D2 चैव (for राजन्) — $^{b}$) T G (except G3) [ऽ]पि च (for तथा) K1 2 D7 M3-5 दिलीपस्यापि चाश्रमे — $^{c}$) D3 4 महाह्रदे; G1 रामाश्रमे, M2 धाराह्रदे; M3-5 तथा ह्रदे (for राम°) — $^{d}$) K3 B1 4 5 पैलग(K3 °गा)र्गस्य, B2 3 Dn1 Ds2 D6 10 पे(B2 3 पै)लमार्गस्य, Ds1 D1 8 पे(D1 सै)लगार्ग्यस्य, T1 G5 ततो गार्ग्यस्य; T2 G2 ततो भार्गस्य, G1 M1 2 5 तथा (G1 °तो) गर्गस्य, G3 ततो मार्गस्य, M3 4 तथा गार्ग्य(M4 °र्गे)स्य

28 $^{a}$) K1 3 G3 5 M1 2 तथा (for तदा) D3 4 एतेष्वन्येषु तीर्थेषु — $^{d}$) K5 B Dn1 Ds D1 6 8. 10 G5 व्रतम् (for तीव्रम्) K3 4 D1-4 वै व्रत, B Dn1 Ds D6 8 10 दुष्कर (for वै तप°).

29 $^{a}$) K3 D1 2 कौरवेंद्र; K4 B1 3. 4 Dn1 Ds D6. 10 च कौरव्य; T G (except G3) तु कौरव्य (for कौरवेय). — $^{b}$) K3 4 B D (except D1 7, Dn2 missing) जले स्थिता (D3. 4 °ता) — $^{c}$) K3 D1 तप्स्यसे, Ds2 D3 10 G1 3 M2 क्लिश्यते — $^{d}$) D7 G1 सत्यम् (for तथ्यम्) B Dn1 एव (for एतद्) B Dn1 Ds D3 4 8 10 वदस्व; G1 ब्रवीतु (for ब्रवीहि). D1 तथा मे तद्ब्रवीमि ते, D6 तथा मे तद्वदस्व मे

30 $^{a}$) K3 D3 T2 G2 सा तामथ, D3 4 सा तां नत्वा, T1 G1 सा चैनाम् (for सैनामथ) — $^{b}$) Dn1 Ds D10 T1 G1. 3 M5 कृत्वांजलिम् (for कृताञ्जलिर्) K5 अवस्थिता, B3 Dn1 अनिंदिता — $^{c}$) K3 रामो भीष्मेण समरे, K4 B Dn1 Ds D6 8 10 भीष्मेण समरे राम°, D1 रामेण भीष्मः समरे, D2 7 G5 भीष्मेण राम समरे — $^{d}$) K3 B D (except D1, Dn2 missing) T2 G निर्जितश् (for न जितश्)

31 $^{b}$) K4 5 B Dn1 Ds D6-8 10 महीपति° — M2 om. (hapl.) $31^{d}$–$34^{a}$ — $^{d}$) Dn1 Ds तप्ये (for तप्स्ये) K3 4 D1 2 वप्यती (D1 °पामि) तप उत्तम, T1 तपस्तप्स्यामि दारुण

32 M2 om. 32 (cf. v.l. 31) — $^{a}$) K1. 2 5 D7 चरती (for चरामि). K3 D2 7 G1 2 M3 5 देवीं, M1 सर्वां, M4 पुण्या (for देवि). B Dn1 Ds D3 4 6 8 10 विचरामि महीं देवि — B3 om. (hapl.) $32^{bc}$ — $^{b}$) M1 महीपति (for अह नृपम्) — $^{c}$) D6. 8 व्रतमिद K4 B1 2 5 D (except D1 2 7, Dn2 missing) देवि (for देहे) — $^{d}$) B Dn1 Ds D6 8 10 परम(B3 °मे)स्मिन्, D2-4 परम स्याद् (for परस्मिन्स्याद्)

33 M2 om. 33 (cf. v.l. 31) — $^{b}$) K4 B D (except D1 3, Dn2 missing) भाविनि (for °मि°) — $^{c}$) G2 M3-5 नैव (for नैष) — $^{d}$) D3 त्वया रणे (for त्वयाबले)

34 M2 om. $34^{a}$ (cf. v.l. 31) — $^{c}$) T2 G2 M3 स्व (for त्व) — $^{d}$) K (except K3) D2-4. 7 8 विमोक्ष्यसे. D1 यदि भामिनि मोक्ष्यसे

35 $^{a}$) D1 3 4 8 दुस्तीर्णा, Ca दुस्तरा (for °स्तीर्था) K1 3 D2 वा (for च) K5 D3 चा(D3 वा)नविज्ञेया, B Dn1 Ds D6 10 न तु (Ds2 ननु) विज्ञेया, D3 4 च भुवि ज्ञेया; D7 चानभिख्येया; T G2. 3 5 चानभिज्ञाता; G1 M

माता मम महाभागा स्वयमानेव भामिनी ॥ ३६
कदाचिदष्टमे मासि कदाचिद्दशमे तथा ।
न प्राश्नीतोदकमपि पुनः सा वरवर्णिनी ॥ ३७
सा वत्सभूमिं कौरव्य तीर्थलोभात्ततस्ततः ।
पतिता परिधावन्ती पुनः काशिपतेः सुता ॥ ३८
सा नदी वत्सभूम्यां तु प्रथिताम्बेति भारत ।
वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा ॥ ३९
सा कन्या तपसा तेन भागार्धेन व्यजायत ।
नदी च राजन्वत्सेषु कन्या चैवाभवत्तदा ॥ ४०

इति श्रीमहाभारते उद्योगपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

## १८८

भीष्म उवाच ।
ततस्ते तापसाः सर्वे तपसे धृतनिश्चयाम् ।
दृष्ट्वा न्यवर्तयंस्तात किं कार्यमिति चाब्रुवन् ॥ १
तानुवाच ततः कन्या तपोवृद्धानृषींस्तदा ।
निराकृतास्मि भीष्मेण भ्रंशिता पतिधर्मतः ॥ २
वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः ।
निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः ॥ ३
यत्कृते दुःखवसतिमिमां प्राप्तास्मि शाश्वतीम् ।

C. 5. 7373
B. 5. 187. 4
K. 5. 187. 4

---

[अ]यानभिज्ञाता (for यान°) Ca cites अनभिज्ञेया (as in text) — b) D5. 4 8 पकाशा, G2 वार्षकी; Ca वार्दिकी (as in text) K1 2 5 D1 2. 4 6-8 G1 5 वा°, K3 4 या° (for ना°) T2 G2 वार्षिके नष्टमागिरी — c) K4 D2 6 भीमा ग्राह°

36 a) T1 G1-3 सैवम्, T2 G4 सैवम् (for व्यम्) S (except G1) दृष्टा (for दृष्ट्या) B2 5 तु ता (for ततो) — b) Dn1 D5 D2 S काशि(G3 °शी)कन्या B3 न्यवर्तयत — c) S (except G1) मात्रा (for माता) — d) K1 2 D7 जाह्नवी, K4 B D5 D2-4 8 G1 भाविनी (for भामिनी)

37 a) D1 4 चाष्टमे K5 D2 7 S (except G3) C5 मासे, D2 4 काले (for मासि) — b) D1 4 [ऽ]हनि (for तथा) — c) G2 अप्राश्नीत D2 4 चापि (for अपि) — d) K1 2 D7 तत (for पुन)

39 b) K4 पतिता (for प्रथिता) K3 5 D2 8 10 T G1 2 च (for [अ]म्बा) T2 G2 इत्र (for इति) — d) K4 D1 7 दुर्नीर्या, D10 दुर्नीर्णा D2 T1 G1 कुटिलोदका

40 a) K1 2 4 तपसम् (for तपसा) — b) K4 B D (except D2-4 7, Dn2 missing) देहार्धेन K3 (before corr) व्यगायत, T1 G1 प्रजायत — c) D5 D10 वत्सेति (for वत्सेषु) — d) T2 G2 5 कन्यका चा°, G3 सा कन्या चा° (for कन्या चैवा°)

Colophon om in D2. 4 Dn2 D2 9 G4 missing — *Sub-parvan* K B Dn1 D5 D1. 2 6-8 10 G5 अम्बोपाख्यान — *Adhy name* G5 M अज्ञातपश्चरण — *Adhy no* (figures, words or both) D5 77 (=177), T1 M4 189, T2 G1 2 5 M3 5 190, G3 187 (as in text), M1 2 188 — *S'loka no* K5 41, Dn1 39

## 188

☞ This adhy is missing in Dn2 (cf v l 5 187 20), tho MS is mostly ignored here

1 K4 om 1 — b) K3 5 D5 D2 4 M3 5 धृ(K3 D8 4 कृ)तनिश्चया°, D5 धृतमानसा, G2 °निश्चयात्, C5 °निश्चया (as in text) — c) K3 D5 D5 निवर्तयन्, D7 [अ]न्यवर्तयन् (for न्यव°) K (K4 om) D5 ता तु, D7 तांस्तु (for तात) — d) S चाप्यकृत् (for चाब्रुवन्)

2 ab) D5 transp तत कन्या and तपोवृद्धान् K4 तत कन्या तथा वृद्धान् (for a) K5 ततो वृद्धान् (for तपो°) K3 मुनीं° (for ऋषीं°) K4 D1 8 T M4 तथा (for तदा) — c) K1 2 5 D7 नि(K5 वि)कृतास्मि च (for निरा°) — d) K1 2 भ्रमिता, K3 भ्रमिता (for भ्रंशिता) K5 कामतत्वत (for पति°)

3 After 3ab, B2 4 5 read 6cd, *repeating* it in its proper place — d) K D1. 3 4 8 G3 M3-5 एप (for एव)

4 D5 om 4 — a) K (except K4) D52 D7 G3 दुःखवसतीम् — c) D8 4 °लोक (for °लोकाद्) — d) M1 2 पुन पुमान् (for पुमानिह) D3 4 7 8 10 अह (for इह)

C. 5. 7527
B. 5. 192. 40
K. 5. 192. 40

यक्षा ऊचुः ।

द्रुपदस्य सुता राजन्राज्ञो जाता शिखण्डिनी ।
तस्यै निमित्ते कस्मिंश्चित्प्रादात्पुरुषलक्षणम् ॥ ३६
अग्रहील्लक्षणं स्त्रीणां स्त्रीभूतस्तिष्ठते गृहे ।
नोपसर्पति तेनासौ सव्रीडः स्त्रीस्वरूपवान् ॥ ३७
एतस्मात्कारणाद्राजन्स्थूणो न त्वाद्य पश्यति ।
श्रुत्वा कुरु यथान्यायं विमानमिह तिष्ठताम् ॥ ३८

भीष्म उवाच ।

आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत् ।
कर्तास्मि निग्रहं तस्येत्युवाच स पुनः पुनः ॥ ३९
सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते ।
स्त्रीस्वरूपो महाराज तस्थौ व्रीडासमन्वितः ॥ ४०
तं शशाप सुसंक्रुद्धो धनदः कुरुनन्दन ।
एवमेव भवत्वस्य स्त्रीत्वं पापस्य गुह्यकाः ॥ ४१
ततोऽब्रवीद्यक्षपतिर्महात्मा
यस्माददास्त्ववमन्येह यक्षान् ।
शिखण्डिने लक्षणं पापबुद्धे
स्त्रीलक्षणं चाग्रहीः पापकर्मन् ॥ ४२
अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत्कृतं त्वया ।
तस्मादद्य प्रभृत्येव त्वं स्त्री स पुरुषस्तथा ॥ ४३
ततः प्रसादयामासुर्यक्षा वैश्रवणं किल ।
स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः ॥ ४४
ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः ।
सर्वान्यक्षगणांस्तात शापस्यान्तचिकीर्षया ॥ ४५
हते शिखण्डिनि रणे स्वरूपं प्रतिपत्स्यते ।
स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः ॥ ४६

---

35 $G_2$ om $35^{ab}$ — $^a$) $K_4$ B $Dn_1$ $D_{6\ 10}$ स (for सु) — $^b$) $B_{3,5}$ $D_5$ $D_{10}$ °तिष्ठ° (for °सर्प°) — $^c$) $D_{3\ 4}$ तस्य (for तस्यै) $K_{1\ 2\ 5}$ मया, $D_5$ $D_8$ $G_3$ $M_1$ महान् (for महा) — $^d$) T $G_{1-3}$ भाव्य°, $M_{3-5}$ भावी (for धार्य°)

36 $^a$) $T_2$ $G_2$ पृषत° (for द्रुपद°) — $^b$) $D_1$ स्थूणे नीता (for राज्ञो जाता) — $Ds_2$ om $36^c$–$37^b$ — $^c$) $K_4$ B D (except $D_{1\ 7}$, $Ds_2$ om) तस्या; $G_3$ तस्मिन् (for तस्यै)

37 $Ds_2$ om. $37^{ab}$ (cf v l 36) — $^b$) $K_4$ B $Dn_1$ $D_{3\ 4\ 6\ 8\ 10}$ स्त्रीभूता $T_2$ $G_3$ तिष्ठति — $^d$) $B_{2\ 4}$ T G व्रीडित (for सव्रीड) $K_{2\ 5}$ B D (except $D_5$ $D_7$) °सरूपवान् ($D_{10}$ °भाक्); T G $M_{1\ 2}$ °स्वरूपत°, $M_{3-5}$ °स्वभावत

38 $^b$) $G_3$ स त्वा न (for न त्वाद्य) B $Dn_1$ $Ds_1$ $D_{6\ 10}$ [अ]द्य सर्पति, $Ds_2$ $D_2$ [अ]पसर्पति, $D_8$ [अ]नुसर्पति (for [अ]द्य पश्यति) $D_1$ स्थूणे नेता शिखडिनी. — $^d$) $B_3$ तिष्ठति, T G °तु

39 All MSS om. the ref । — $^d$) $K_4$ B $Dn_1$ $D_5$ $D_{3\ 4\ 6\ 8\ 10}$ प्रत्युवाच (for [इ]त्युवाच स). $T_1$ $G_1$ च (for स) $K_{1\ 2\ 5}$ $D_7$ [इ]त्यभाषत स तास्तत°

40 $^a$) T G सोभ्यगच्छच्च $T_2$ $G_{2\ 5}$ यक्षेण (for यक्षेन्द्रम्) — $^b$) $T_2$ $G_{2\ 5}$ चाहूतः (for आहूत°) $D_1$ सुरुपर्षभ (cf. v l $41^b$) — $^c$) $K_{1\ 2\ 5}$ $D_7$ तस्याग्रतो, $K_4$ $B_{4\ 5}$ $Dn_1$ $D_5$ $D_{1\ 2\ 10}$ स्त्रीसरूपी, $B_{1-3}$ $D_{3,4}$ T G स्त्रीस्वरूपी (for °स्वरूपो)

41 $^a$) B (except $B_2$) D (except $D_{1,2\ 7}$, $Dn_2$ missing) [अ]थ (for सु) $G_3$ त शशाप दृढं क्रुद्धो; $M_{1\ 2}$ तत° शशाप सक्रुद्धो — $^b$) $D_1$ पुरुषर्षभ (cf. $40^b$) — $^c$) S एतदेव (for एव°) $K_4$ भवेद् (for भवतु) B (except $B_5$) $Dn_1$ अद्य (for अस्य) $D_{3.4}$ एवमेवास्त्वस्य स्त्रीत्व (see below) — $^d$) $K_{1\ 2}$ रूप, $D_{3.4}$ स्थिर (for स्त्रीत्व)

42 $^b$) $K_{1\ 2\ 5}$ $D_{7\ 8}$ यस्माददेय भवता हि दत्तं, $D_{1\ 2}$ यस्माद्ददौ वस्त्व($D_2$ °दास्त्वं त्व)वमन्य यक्षान्; $D_{3.4}$ यस्माद्यादास्त्वयवमत्येह यक्षान्, S यस्माद्ददास्त्व($G_{1\ 2}$ $M_2$ °स्त्व)वमत्येह यक्षान् — $^c$) B $Dn_1$ $D_5$ $D_{6\ 10}$ शिखडिनो, $D_{3\ 4}$ °न $K_{1,2\ 5}$ $D_{7\ 8}$ पुंस्त्वसञ्ज्ञ, $K_4$ B (except $B_3$) $D_{1-4\ 10}$ पापबुद्धे° — $^d$) $K_{1\ 2\ 5}$ $D_7$ °बुद्धे (for °कर्मन्)

43 $^a$) $D_1$ अप्रबुद्ध, $D_7$ असद्वृत्त — $^b$) $K_4$ B D (except $D_{1\ 2\ 7}$) transp कृतं and त्वया — $^d$) $K_4$ B D (except $D_{7\ 8}$) T $G_{1\ 2}$ transp त्व and स्त्री $K_{2\ 4}$ B D (except $D_{1\ 7,8}$) $G_1$ सा (for स).

44 $^b$) $K_{1\ 2\ 5}$ $D_7$ यक्षा यक्षाधिप ($D_7$ यक्षपतिं) नृप — $^{cd}$) M [अ]थ (for [अ]र्थे) $K_5$ स्व (for [अ]न्त), and अत (for इति)

46 $^a$) $K_4$ $B_{1\ 3\ 5}$ $Dn_1$ $D_5$ $D_{6\ 8\ 10}$ transp हते and शिखण्डिनि The same MSS (except $B_5$) read यक्षां° (for रणे) — $^b$) $K_{2\ 4}$ $D_{6\ 7}$ $M_{3.4}$ स्व रूप — $^c$) $K_1$ $D_{10}$ स्थूणायक्षो, $M_{3-5}$ स्थूणयक्षो $K_{1\ 2\ 5}$ $D_7$ M (except $M_2$) निरुद्विग्नो. — $^d$) $G_3$ भविष्यति (for भवत्विति)

इत्युक्त्वा भगवान्देवो यक्षराक्षसपूजितः ।
प्रययौ सह तैः सर्वैर्निमेषान्तरचारिभिः ॥ ४७
स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा ।
समये चागमत्तं वै शिखण्डी स क्षपाचरम् ॥ ४८
सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति ।
तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनः पुनः ॥ ४९
आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम् ।
सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने ॥ ५०

यक्ष उवाच ।

शप्तो वैश्रवणेनास्मि त्वत्कृते पार्थिवात्मज ।
गच्छेदानीं यथाकामं चर लोकान्यथासुखम् ॥ ५१
दिष्टमेतत्पुरा मन्ये न शक्यमतिवर्तितुम् ।
गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम् ॥ ५२

भीष्म उवाच ।

एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत ।
प्रत्याजगाम नगरं हर्षेण महतान्वितः ॥ ५३
पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः ।
द्विजातीन्देवताश्चापि चैत्यानथ चतुष्पथान् ॥ ५४
द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना ।
मुदं च परमां लेभे पाञ्चाल्यः सह बान्धवैः ॥ ५५
शिष्यार्थं प्रददौ चापि द्रोणाय कुरुपुंगव ।
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ॥ ५६
प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः ।
शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः ॥ ५७
मम त्वेतच्चरास्तात यथावत्प्रत्यवेदयन् ।
जडान्धबधिराकारा ये युक्ता द्रुपदे मया ॥ ५८
एवमेष महाराज स्त्रीपुमान्द्रुपदात्मजः ।
संभूतः कौरवश्रेष्ठ शिखण्डी रथसत्तमः ॥ ५९
ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता ।
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ॥ ६०

C. 5. 7551
B. 5. 192. 64
K. 5. 192. 64

---

47 a) K1.2.5 D7 सोथ (for देवो) — b) K4 B Dn1 D5 D2.8 10 यक्षराज नुप॰ — c) K1 B1.3 T2 G2.5 सहितै॰, K4 B2.4 D G3 सहित (for सह तै॰)
48 a) T2 G2 ॰स्तु शासन प्राप्य — b) T2 G2 तत्रैव — c) K1.2 कालेन (for समये) K4 B D (except D7) तूर्णं (for च वै) — d) K4 B Dn1 D5 D1-4 6 8 10 त, T1 G1 M2-5 च (for स) D2 निशा॰ (for क्षपा॰) K1.2.5 D7 शिखण्डी यक्षगोचर
49 a) M1.2 [आ]ह त (for [अ]ब्रवीद्) — c) S तदा (for तत)
50 G2 om. 50cd — c) K4 पूर्वम् (for सर्वम्) K1.2 D7 एतद् (for एव) S यथातत्त्व
51 a) K4 B D (except D1.2 7) [अ]हं (for [अ]स्मि) — d) K4 D2 लोके (for लोकान्)
52 52ab = (var.) 5. 154. 24cd, 156. 4ab. — a) Ca दृष्ट, Cap as in text D2.4 T2 G1.2 6 पर, Ca पुरा (as in text) — c) K4 D8 गमने; Ca as in text T G1-2 हेतोर् (for चेतो) B2.4 [S]स्मिन्, M3.4 [S]पि (for हि) — d) K4 G1 निदर्शन (for च द॰)
53 All MSS except B1.2.4 Dn1 om. the ref. — b) K1.2 G3 स्थूणा॰. — c) S क्षिप्रं जगाम (for प्रत्या॰) — d) B1.2.4 Dn1 D5 D3 8 10 महताहृत, S च समन्वित

54 a) K1.2.5 D7 T G (except G3) विधिवद् (for विविधैर्) — b) Dn1 D5 D8 10 S (except G1 M3) गन्धमाल्यैर् D1 महामना, T1 G1 मनोरमै, T2 G2.6 मनोहरै, Ca महाधनै (as in text) — c) D7 G3 M5 द्विजाति (for द्विजातीन्) K5 Dn1 D1.8 देवता K4.5 B D (except D1.2 7) चैव (for चापि)
55 c) T G मुद स, M स मुद (for मुदं च) K5 D8 M2 परम D8.4 प्राप (for लेभे) — d) D2 M3-5 ॰पाण्डव, M1.2 ॰बान्धव, Cs पाण्डवै (for बान्धवै)
56 a) K2 Ds2 D7 Cs शिक्षार्थं (for शिष्यार्थं) K2.4 B D5 D6 8 10 चाय (for चापि) — d) K1.2.5 B2 D1.2 7 स्त्रीपूर्वक K B2.4 Dn1 D2-4.7 8 10 T G2 तदा, D1 तत॰ (for तथा)
57 a) D1 प्रपेदे च (for प्रति॰) — c) K1.2.5 D7 कौरवश्रेष्ठ (for सह यु॰)
58 c) K1.2.5 मूकान्ध॰, T2 G2.6 जडान्धबधिरा राजन्, Ca as in text — d) K1.4 B Dn1 D2-4 6 10 (m as in text) T2 G1.2 मुक्ता (for युक्ता)
59 a) D5 D8.4 S एव (for एष) — b) K1.2.5 स्त्रीपुमान्मे वधाय वै (K5 ये) — c) K4 B D (except D1.2 7) स संभूत कुरुश्रेष्ठ.
61 a) K1 M3-5 एव (for पुन) — b) K4 D2 समवस्थित, B2 समर॰ (for समुप॰) — d) K4 Dn1

C. 5. 7552
B. 5. 192. 65
K. 5. 192. 65

नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम् ।
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ॥ ६१
व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम् ।
स्त्रियां स्त्रीपूर्वके चापि स्त्रीनाम्नि स्त्रीस्वरूपिणि ॥ ६२
न मुञ्चेयमहं बाणानिति कौरवनन्दन ।
न हन्यामहमेतेन कारणेन शिखण्डिनम् ॥ ६३
एतत्तत्त्वमहं वेद जन्म तात शिखण्डिनः ।
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ॥ ६४
यदि भीष्मः स्त्रियं हन्याद्धन्यादात्मानमप्युत ।
नैनं तस्माद्धनिष्यामि दृष्ट्वापि समरे स्थितम् ॥ ६५

संजय उवाच ।

एतच्छ्रुत्वा तु कौरव्यो राजा दुर्योधनस्तदा ।
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ६६

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

# १९४

संजय उवाच ।

प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव ।
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ १
पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुत्तमम् ।
प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ २
भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः ।

---

D8 4 8 न वाप्युत, K5 च ना° G1 2 प्रहरन्नापि चाच्युत

62 $^b$) D1.8 4 इति (for अपि) — $^c$) T G1 2 5 स्त्रीपु, G8 M (except M2) स्त्रीभि (for स्त्रिया) K1 D8 स्त्रीपूर्वक; G8 M (except M2) °के K1 2 D1 2 10 T1 वापि, K4 B Dn1 Ds D8 4 6 चैव (for चापि) — $^d$) Ds2 D8 4 7 8 T1 G2 8 5 स्त्रीनाम्नी K5 B D1 2 6 10 स्त्रीसरूपिणि

63 $^a$) K1 2 क्षिपे° (for मुञ्चे°) B Dn Ds D6 8 10 बाण (for बाणान्) — G1 om (hapl) 63$^c$–64$^b$

64 D4 (hapl) G1 om 64$^{ab}$ (cf v.l 63) — $^a$) T G2 5 एव सर्वम् (for एतत्तत्वम्) — $^b$) G8–5 चैव (for तात) — $^d$)=5. 170 1$^d$. K2 B8 समरे ह्याततायिन, D1 2 °ष्वपलायिन

65 $^b$) K1 2 G1 इत्युत, D2 उत्तमं (for अप्युत) K4 B Dn1 Ds D8 4 6 8 10 सतः कुर्युर्विगर्हण — For 65$^c$, G1 subst 63$^c$, for 65$^d$, D8 subst 64$^d$

66 K5 om 66 All MSS except D2 T G1 2 5 वैश° उ° (resp वैश°) (for सजय उ°) — $^a$) K1 2 च (for तु) — $^c$) B5 D8 D7 10 T1 G1 2 5 अपि (for इव) D2–4 त (for स) T1 G M1 8 5 सचिंत्य (for स ध्यात्वा) T2 M4 मूहूर्तमभि (M4 sup lin मिव) सचिंत्य — $^d$) D1 2 भीष्म (for भीष्मे) D8 4 भीष्मोक्त सोप्यमन्यत

Colophon K8 Dn2 D5 9 G4 missing — *Subparvan* N (K8 Dn2 D5 9 missing) T1 G6 M अंबोपाख्यान, to it K1 2 4 5 B Dn1 Ds1 D1–4 6–8 10 T1 G5 M1 (marg) add समाप्त — *Adhy name* G5 स्थूणाकर्णस्त्रीत्वकथन, M (except M2) शिखंडिपुस्त्वकथनं — *Adhy no* (figures, words or both) D6 83 (=183), T1 M4 195, T2 G1 2 5 M8 5 196, G8 193 (as in text), M1 2 194. — *S'loka no.* K5 58, Dn1 97.

## 194

☞ This adhy is missing in Dn2 (cf. v.l. 5 187 21) and in K8 (cf adhy 192 beginning) B1 is missing from this adhy up to the end of the parvan These MSS are mostly ignored here

1 K1 2 5 D1 वैशपायन (for सजय) — $^a$) K5 रजन्या तु, Ca तु शर्वर्यां (as in text) — $^b$) K1 2 5 D1.7 सुयोधन (for सुतस्तव) — $^c$) B1 2 G1 M3 सैन्यस्य सर्वस्य (by transp)

2 Before 2, T2 G1.2 5 ins दुर्योधन — $^b$) M5 तद् (for यद्) K1 4 B2 4 5 Dn1 Ds1 D1–4 6–8 10 M5 उद्यतं; D5 उद्यमं (for उत्तमम्) — $^c$) K1.3 D5 G5 °नागाश्व°.

लोकपालोपमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ३
अप्रधृष्यमनावार्यमुद्वृत्तमिव सागरम् ।
सेनासागरमक्षोभ्यमपि देवैर्महाहवे ॥ ४
केन कालेन गाङ्गेय क्षपयेथा महाद्युते ।
आचार्यो वा महेष्वासः कृपो वा सुमहाबलः ॥ ५
कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः ।
दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ॥ ६
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ७

भीष्म उवाच ।

अनुरूपं कुरुश्रेष्ठ त्वय्येतत्पृथिवीपते ।
बलाबलममित्राणां स्वेषां च यदि पृच्छसि ॥ ८
शृणु राजन्मम रणे या शक्तिः परमा भवेत् ।
अस्त्रवीर्यं रणे यच्च भुजयोश्च महाभुज ॥ ९
आर्जवेनैव युद्धेन योद्धव्य इतरो जनः ।
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः ॥ १०
हन्यामहं महाबाहो पाण्डवानामनीकिनीम् ।
दिवसे दिवसे कृत्वा भागं प्रागाह्निकं मम ॥ ११
योधानां दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकमेष भागो मतो मम ॥ १२
अनेनाहं विधानेन संनद्धः सततोत्थितः ।
क्षपयेयं महत्सैन्यं कालेनानेन भारत ॥ १३
यदि त्वस्त्राणि मुञ्चेयं महान्ति समरे स्थितः ।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ १४

संजय उवाच ।

श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्तदा । C. 5. 7372 B. 5. 193. 15 K. 5. 193. 15

---

3 D1 om 3[ab] — [c]) K4 B Dn1 Ds D2-4 6 8 10 G1.2 M2 °पालसमैर् D2 4 युक्त (for गुप्त)

4 [b]) K4 B Dn1 Ds D1.3.4 6-8 10 M2 उद्धूतमिव — [d]) K D1.2 7 8 सवार्मैव°, D3 4 T2 G2 महाबलै°, G1 महारथै° (also °हवे as in text)

5 G2 om. 5-6 — [b]) B2 4 5 °बल (for °द्युते) — [c]) K1 वाक्षिपेद्रोण°(sic), K2 वाक्ष**ण° (for वा महेष्वास°)

6 G2 om. 6 (cf. v l 5), D1 om (?hapl.) 6[cd] — [d]) K1.2 5 D2 7 [अ]पि; K4 [अ]त्र, S (except M2, G2 om ) वै (for हि) K1 महाबला, K5 D2 T1 बल मम (for बले मम)

7 [a]) K1.2 5 Ds D1-4 7 10 T G1.2 5 श्रोतुं, Dn1 तात (for ज्ञातुं) — After 7, S (except M2) reads 13 (for the first time), *repeating* it in its proper place (with v l.)

8 [b]) K1 Ds त्वयैतत्, T G1.2 5 M (except M2) तवैव; G3 तयैव (for त्वय्येतत्) — [d]) K5 स्वय, B Ds तेषा, T G बल, M (except M2) वधं (for स्वेषा) B2 4 Dn1 D3 4.6-8 10 M2 यदिह, B3 5 Ds अपि च, T G च मम (for च यदि)

9 [a]) S (except G3 M2) बले (for रणे) — [b]) T G1.2 M1 (*inf lin*) [आ]हवे (for भवेत्) — [c]) B Dn1 Ds D3 4 6.8 10 M2 शस्त्र° (for अस्त्र°) — [d]) Dn1 D2 4 T1 महाबल, G3 नराधिप (for महाभुज)

10 [b]) K1 2 सरल°, Ca इतर (as in text) B2 D3 4 T G योद्धव्या इतरे जना° — [d]) B2 इत्येव B3 D2 6 8 10 T2 G2 M2 °निश्चितं K1.2 एव धर्मे सुनिश्चित, K4 श्चेतद्धर्मनिदर्शन, K5 श्चेतद्धर्मविनिश्चय°, D1 [इ]त्येत-द्धर्मेषु निश्चित

11 [a]) K4 B Dn1 Ds D3 4.6 8 10 M2 °भाग (for °बाहो) — [d]) D8 T G1-3 M (except M2) भागाह्निक (M1 *inf lin* प्रागान्वितं), G3 निजक°, Ca s प्रागाह्निक (as in text)

12 K5 om 12[a]-13[a] — [a]) S (except M2) राज्ञां तु (for योधानां) — [c]) K1.2 सोमकानामेकमेकं — [d]) G3 5 M1 भारो (for भागो)

13 S (except M2) reads 13 for the first time after 7, *repeating* it here (with v l.) K5 om 13[a] (cf v l. 12) — [a]) K1.2 D1 7 अनेन विधिना तात; D2 अनेन विधियोगेन — [c]) K1.2 B2 D3.4.7 अहं, K5 G2 (both times) 3 5 (second time) महा (for महत्) — D1 om. 13[d]-14[a] — [d]) T1 (first time) 2 (both times) G3 5 (first time) M1 (both times) 3 4 5 (first time) केन कालेन भारत

14 D1 om 14[a] (cf. v.l 13) — [a]) B3 4 Dn1 Ds D6 8 10 M2 मुचेय यदि वा (Dn1 D10 चा , D6 8 श)स्त्राणि — [b]) B3 5 दिव्यानि (for महान्ति) — [c]) K1 शत सहस्र°, K5 Ds शतसहस्र°, D10 सहस्रशतघातीनि T1 G1 शतसाहस्रघातीनि

C. 5. 7572
B. 5. 197. 15
K. 5. 193. 15

पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ १५
आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान् ।
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव ॥ १६
स्थविरोऽस्मि कुरुश्रेष्ठ मन्दप्राणविचेष्टितः ।
अस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् ॥ १७
यथा भीष्मः शांतनवो मासेनेति मतिर्मम ।
एषा मे परमा शक्तिरेतन्मे परमं बलम् ॥ १८
द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ।
कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ १९
तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ।
जहास सस्वनं हासं वाक्यं चेदमुवाच ह ॥ २०
न हि तावद्रणे पार्थं बाणखड्गधनुर्धरम् ।
वासुदेवसमायुक्तं रथेनोद्यन्तमच्युतम् ॥ २१
समागच्छसि राधेय तेनैवमभिमन्यसे ।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## १९५

वैशंपायन उवाच ।
एतच्छ्रुत्वा तु कौन्तेयः सर्वान्भ्रातॄनुपह्वरे ।
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ १
धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ।

---

15 K4 D2 7 om. the ref K1 2 D1 वैशं° (for संजय°) — b) K1 2 4 B3–5 Dn1 Ds D1 3 4 6 8 10 तत°; T2 तथा (for तदा) — d) G3 अग्रजन्मा (for अङ्गिरसां)

16 b) K1 2 सैनिक — c) T2 G3 (with hiatus!) निहत्वा (for निहन्या)

17 a) K4 B Dn1 Ds D1. 3 4 6 8 10 M2 महाबाहो (for कुरु°) — b) K1 2 समामेत्य° — c) B Dn1 Ds D1 3 4 6 10 M2 शस्त्रा° (for अस्त्रा°) — d) K1 2 D7 पाण्डवस्य K1 2 5 D1 2 7 वरूथिनीं

18 d) D3. 4 एतदेव तु मे बलं

19 d) K1 2 5 D1 2 4 7 T2 G2 5 महास्त्रवित्, B2 4 महाबल (for बल°). — D4 om (hapl) 19cd. — e) T2 G2 5 पंचभिर्दिवसै कर्ण° — f) = 5 195 5d K1. 2 5 D1 2 7 बलक्षयं, T2 G2 5 महारथ (for महास्त्रवित्)

20 Ds1 om 20b–21b — b) K1 2 भीष्म प्रतापवान्, T1 G1 सागरगात्मज° — c) K1 2 D7 स्वनवद्; B2 4 5 सस्वर, D3 4 सुस्वन (for सस्वनं) B2 D3 4 हास्य, B5 वाक्य (sic), D7 गाढ (for हासं)

21 Ds1 om 21ab (cf v l. 20) — a) K4 B Dn1 Ds2 D3 4 6 8 10 M2 यावद् (for तावद्) — b) K4 B3–5 Dn1 Ds2 D6 10 बाणशंख°, M2 शरशंख°. — d) D1 G3 उद्यतम् (for उद्यन्तम्) K1 2 D7 रथेनोद्यतकार्मुकं; K4 B D3 4 6 8 M2 रथेनायातमाहवे; Dn1 D8 D10 रथमायातमाहवे

22 a) S (except M2) अत्र° (for अभि°) — c) D8 युक्त (for वक्तुं).

Colophon K3 B1 Dn2 D5 9 G4 missing — *Adhy name* K1 (marg) बलपरीक्षा; K4 D2 8 बलाबलपरीक्षा; Dn1 भारतयुद्धसमाग; D7 परस्परजयप्रकपन, G3 M1 भीष्मादिबलकथन (M1 °बलपरिज्ञान) — *Adhy no* (figures, words or both) T1 M4 196, T2 G1. 2 5 M2 3 197; G3 194 (as in text), M1 2 195 — *S'loka no* Dn1 22

### 195

☞ This adhy is missing in K3 B1 (cf v l. adhy 192 and 194 beginning) These MSS are mostly ignored here

1 Stanzas 1–3 are missing in Dn2 (cf. v l. 5 187 21) T2 G M1 वैशं° (for संजय उ°) — b) K1. 2 समागतान्, Ca उपह्वरे (as in text) — c) K1. 2 नृपाश्च (for आहूय).

2 Dn2 missing (cf v l 1) Before 2, K4 B2 4 Dn1 D6 M2 ins युधिष्ठिर उ° (resp युधिष्ठिर°) — a) K1 2 °राष्ट्रेषु B2 5 M2 सैन्ये तु (M2 सैन्येषु also as in text) — b) K1 2 4 चरा°, D1 7 T1 चारा° (for चार) — c) T G1 3 5 नियच्छति, Ca प्र° (as in text) — d) K5 D8 समेषां; T G समेता, M2 मामेषा (for समेमा)

ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम् ॥ २
दुर्योधनः किलापृच्छदापगेयं महाव्रतम् ।
केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ॥ ३
मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः ।
तावता चापि कालेन द्रोणोऽपि प्रत्यजानत ॥ ४
गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ५
तथा दिव्यास्त्रवित्कर्णः संपृष्टः कुरुसंसदि ।
पञ्चभिर्दिवसैर्हन्तुं स सैन्यं प्रतिजज्ञिवान् ॥ ६
तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः ।
कालेन कियता शत्रून्क्षपयेरिति संयुगे ॥ ७
एवमुक्तो गुडाकेशः पार्थिवेन धनंजयः ।
वासुदेवमवेक्ष्येदं वचनं प्रत्यभाषत ॥ ८
सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः ।
असंशयं महाराज हन्युरेव बलं तव ॥ ९
अपैतु ते मनस्तापो यथा सत्यं ब्रवीम्यहम् ।
हन्यामेकरथेनाहं वासुदेवसहायवान् ॥ १०
सामरानपि लोकांस्त्रीन्सहस्थावरजङ्गमान् ।
भूतं भव्यं भविष्यच्च निमेषादिति मे मतिः ॥ ११
यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम ।
कैराते द्वन्द्वयुद्धे वै तदिदं मयि वर्तते ॥ १२
यद्युगान्ते पशुपतिः सर्वभूतानि संहरन् ।
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते ॥ १३
तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः ।
न च द्रोणसुतो राजन्कुत एव तु सूतजः ॥ १४
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम् ।

C. 5 7595
B. 5. 191 15
K. 5 194 15

---

D8 व्युपिता, Ca s व्युषिता (as in text)

3 Dn2 missing (cf v l 1) — b) K1 2 4 D3 4 7 यतव्रत, K. D2 घनव्रत, B2 4 5 महारथ (for महाव्रतम्) — d) D1 S हंता (M2 हन्यात्) (for हन्या॰) D1 S (except G5 M2) सेनाम् (for सैन्यम्) K1.2 हन्या॰ सैन्यानि वे विभो

4 Dn2 resumes! — a) D2 स (for च) K1.2 (before corr ) टक्ते (for टक्तो) K5 मासेन तेन चाप्युक्तो — c) K1 M2 वापि (M2 चापि also, as in text), K5 D7 10 G5 M3-5 [अ]पि च, D2-4 चैव — d) K5 B Dn Ds D2 4 6 8 10 प्रतिजज्ञिवान्, D7 प्रत्यभाषत, M2 प्रतिजग्मिवान

5 a) K1.2 गौतमोपि च मासौ द्वौ — b) B5 T G1 2 M (except M2) च, D2 वा, G5 वि॰ (for न॰) — 5d = 5 194 19f

6 b) K D1-4 7 8 सम्पर्धन्सव्यसाचिना — c) K5 सैन्य (for हन्तु), see below — d) K2 broken K4 D8 सैन्य स, D2-4 सैन्य मे (for स सैन्य) K1 D1 सैन्य तत्प्रत्यपद्यत, K5 S (except M2) सैन्य (K5 हतु) मे प्रत्यजानत

7 b) S (except M2) तत्वत॰ (for ते वच॰) — c) D2 4 तास्त्व (for शत्रून्) T1 कियत्कालेन तान्छत्रून् — d) T1 M3-5 क्षपयेद् (for क्षपयेर्) K4 D8 चाब्रवीत्, B Dn Ds D6 10 फाल्गुन (for संयुगे)

8 c) K4 B Dn Ds D1 3 4 6 8 10 समीक्ष्य (for अवेक्ष्य) D3 4 एव, M3 4 5 एन (for इद) — d) K1.2 वचो राजानमब्रवीत्, S वचन चेद(T2 इद वचन)मब्रवीत्

9 G. om 9ab — a) T1 G1-3 M1 एव (for एते) — b) K1 2 5 D2 7 दृढ॰ (for चित्र॰) — After 9ab, Ds D10 read 17ab (for the first time), *repeating* it in its proper place — c) M3-5 अमप्येय महत्सैन्यं — d) K2 D1 M1 2 एव (for एव) K4 B3 5 Dn D3 4 6 8 10 न संशय , D1 बल॰ तथा (for बल॰ तव)

10 c) K4 B D (except D1 2 7) एव (for अह)

11 a) D1 सदेवा॰ (for सामरा॰) — b) K4 B D (except D1 2 7) सर्वान्, K5 हन्या (for सह-) B2 सासुर (for स्थावर-) — c) N (except Dn1 D1) T2 G3 भविष्य च — After 11, T1 G1.3 5 ins

591* यावदिच्छेन्द्धरिरय तावदस्ति न चान्यथा ।

12 a) Dn1 D3 4 8 यत्तु, T2 G2 एतद् (for यत्तद्) D2 पर (for घोर) — b) K1.2 ममेश्वर॰, S (for G1 see below) वर मम (for महन्मम) G1 ॰दस्त्रवर मम — c) B (except B2) Dn2 Ds D6 8 10 तु, Dn1 च (for वै) K1 2 त्रिपुर जघान युद्धे वै (hypermetric) — d) = 13d K4 D3 4 मम (for मयि)

13 K2 D7 8 om (hapl.) 13 — a) T1 युगाते वै (for यद्युगान्ते) — c) K1 प्रायुक्त, D3 4 प्रयुक्त (for ॰युङ्क्ते) — d) = 12d D3 4 मम (for मयि)

14 a) D2 यत्र, S (except M2) न (T2 नै-) तज् (for तन्न) — c) K5 Ds D8 G3 तु (for च) — d) B2 भूमिगा॰ (for सूतज॰)

15 a) K4 5 B3 D1.3 4 7 च (for तु) K2 B2 5

C. 5. 7365
B. 5. 194 15
K. 5. 194 15

आर्जवेनैव युद्धेन विजेष्यामो वयं परान् ॥ १५
तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव ।
सर्वे दिव्यास्त्रविदुषः सर्वे युद्धाभिनन्दिनः ॥ १६
वेदान्तावभृथस्नाताः सर्व एतेऽपराजिताः ।
निहन्युः समरे सेनां देवानामपि पाण्डव ॥ १७
शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः ।
भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ ॥ १८
विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि ।
स्वयं चापि समर्थोऽसि त्रैलोक्योत्सादने अपि ॥ १९
क्रोधाद्यं पुरुषं पश्येस्त्वं वासवसमद्युते ।
क्षिप्रं न स भवेद्व्यक्तमिति त्वां वेद्मि कौरव ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

## १९६

वैशंपायन उवाच ।
ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः ।
दुर्योधनेन राजानः प्रययुः पाण्डवान्प्रति ॥ १
आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।

---

transp युक्त and हन्तु D8 4 युक्त (for युक्त) S जेतु (G3 छेत्तु) (for हन्तु) — $^{b}$) B2 पृथग्बल, B3 5 D2-4 G3 M3-5 पृथग्जन, D1 पृथक् पृथक्, G5 °ग्जनान्; Ca °ग्जन (as in text). — $^{d}$) K4 D5 D1 3.4 10 रणे (for वय) D8 D10 रिपून् (for परान्)

16 $^{a}$) G3 तदेमे, M यथेमे (for तथेमे) K1 2 तु महीपाला', D8 4 T1 पुरुषव्याघ्र — $^{b}$) S समस्तास् (for सहायास्) — D4 om. (?hapl ) from तव पार्थिव (in $16^{b}$) up to युधि (in $19^{b}$) B2 5 D2 3.7.8 पार्थिवा', D5 D10 भारत (for पार्थिव). — $^{c}$) K4 B Dn D5 D3 6 8 10 °विद्वांस. — $^{d}$) K4 B (except B2) Dn D5 D3 6 8 10 °काङ्क्षिण — After 16, K4 D3 8 ins

592* वीरव्रतधरा' सर्वे सर्वे सुचरितव्रता ।

17 D4 om 17 (cf v l 16) K4 D8 om. $17^{ab}$ D5 D10 *repeat* $17^{ab}$ here, reading it for the first time after $9^{ab}$ — $^{a}$) D5 D10 (both times) °भृथे, Ca °भृथ (as in text) — $^{b}$) K1.2 5 D1 2 7 T G1 2.5 M एव (for एते) — D6 om (?hapl ) $17^{c}$–$18^{b}$ — $^{d}$) K5 D5 पांडवा. (for °व)

18 D4 om 18, D6 om. $18^{ab}$ (cf. v l 16) — $^{c}$) K4 D8 S चैव (for चोभौ)

19 D4 om $19^{ab}$ (cf v l. 16) — After $19^{ab}$, B Dn D5 D3 4 (see below) 6–8 10 ins.

593* शङ्खश्चैव महाबाहुर्हैडिम्बश्च महाबलः ।
पुत्रोऽस्याञ्जनपर्वा तु महाबलपराक्रम ।
शैनेयश्च महाबाहु' सहायो रणकोविद ।
अभिमन्युश्च बलवान्द्रौपद्या. पञ्च चात्मजा' ।

[ D4 om from the beginning up to बाहु' in line 3 — (L. 3) D8 4 संग्रामवरकोविद (for the posterior half) ] — $^{c}$) Dn1 वापि, S चैव (for चापि) D8 4 स्वय चासि तथा शक्त — D4 om $19^{c}$–$20^{d}$ — $^{d}$) K1 2 त्रैलोक्य दहनेप्वपि, K4 5 B3-5 Dn1 D1 3 4 7 8 G2 M4 °त्सादनेपि च, B2 T G1 M1-3 5 °त्सादनेप्वपि, D2 G3 5 °त्सादने ह्यपि, D10 °त्सादने प्रभो, text as in Dn2 D5 D6 only

20 D4 om 20 (cf v l 19). — $^{a}$) T G3 5 कोपाद् (for क्रोधाद्). — $^{b}$) K1 2 °द्युति, D7 °द्युति B3 4 5 त्व (B5 स ) वासवमपि स्वय, B3 Dn D5 D6 8 10 तथा शक्रसमद्युते, T G त्व पावकसम' — $^{c}$) K4 B Dn D5 D1 3 6 8 10 स क्षिप्र न (by transp ) T1 न च; M स न (for न स). K1 5 युक्त, B2 मुक्त, S चापि (for व्यक्तम्) — $^{d}$) S तथा (T2 G2 तदा) (for इति). D1 G5 M3 त्वा, T1 वै, T2 G1.2 तद् (for त्वा) T G1 2 वेत्थ, G5 वेत्ति (for वेद्मि). K1 को न्विति, B2 4 5 पार्थिव (for कौरव)

Colophon. K3 B1 D5 9 G4 missing. — *Adhy name* K1 2 अर्जुनवाक्य, K5 D8 बलाबलपरीक्षा; G5 M3 अर्जुन(M1 °र्जुनात्म)बलकथन. — *Adhy no.* (figures, words or both) D6 84 (=184), T1 M4 197, T2 G1 2 5 M3 5 198, G3 195 (as in text); M1 2 196 — *S'loka no* K5 20, Dn 22

### 196

☞ This adhy is missing in K3 B1 (cf v l adhy 192 and 194 beginning), the MSS are mostly ignored here

1 G3 M2 (*inf. lin* ) सजय (for वैश°) — $^{b}$)

गृहीतशस्त्रा ध्वजिनः स्वस्ति वाच्य हुताशयः ॥ २
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे कर्मकृतश्चैव सर्वे चाहवलक्षणाः ॥ ३
आहवेषु परांल्लोकाञ्जिगीषन्तो महाबलाः ।
एकाग्रमनसः सर्वे श्रद्दधानाः परस्य च ॥ ४
विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैः सह ।
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ॥ ५
अश्वत्थामा शांतनवः सैन्धवोऽथ जयद्रथः ।
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ये रथाः ॥ ६
गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्वशः ।
शकाः किराता यवनाः शिबयोऽथ वसातयः ॥ ७
स्वैः स्वैरनीकैः सहिताः परिवार्य महारथम् ।
एते महारथाः सर्वे द्वितीये निर्ययुर्बले ॥ ८
कृतवर्मा सहानीकस्त्रिगर्ताश्च महाबलाः ।
दुर्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ॥ ९
शलो भूरिश्रवाः शल्यः कौसल्योऽथ बृहद्बलः ।
एते पश्चादवर्तन्त धार्तराष्ट्रपुरोगमाः ॥ १०
ते समेन पथा यात्वा योत्स्यमाना महारथाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवतिष्ठन्त दंशिताः ॥ ११
दुर्योधनस्तु शिबिरं कारयामास भारत ।
यथैव हास्तिनपुरं द्वितीयं समलंकृतम् ॥ १२
न विशेषं विजानन्ति पुरस्य शिबिरस्य वा ।
कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ १३
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ १४
पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम् ।

C. 5. 7617
B. 5. 195. 15
K. 5. 195. 15

K1.2 D2 7 8 नोदिता (for चो°) D4 om from चोदिता up to दाक्षिणा (in $6^{c}$) — c) K1.2 D1 राजेंद्रा, K3 D2 7 राजेंद्र (for राजान°)

2 D4 om 2 (cf v l 1) — b) G3 चित्र° (for शुक्ल°) — c) K1.2 ते सर्वे (for ध्वजिन°) — d) K1.2 द्विजान्, Ca स्वस्ति (as in text)

3 D4 om 3 (cf v.l. 1) $3^{ab}$=5 149 $6^{ab}$ — a) K4 B D (except D2 7, D4 om ) ब्रह्म° (for वेद°) — c) K1 वर्मभृत°, K2 D1.7 धर्मभृत°, K4 B Dn Ds D3.6 8 10 कामकृत° — d) K1.2 T G1 2 5 Ca s चाहित°, D2 G3 M चाहत°

4 D4 om. 4 (cf v.l 1) — d) N (except D2, D4 om , K3 B1 missing) परस्पर (for परस्य च)

5 D4 om. 5 (cf. v l. 1) — ab) Some N MSS विंदानुविंदौ, and कैकेया (for केकया) D7 वाह्लिका केकयै सह (for b)

6 D4 om up to दाक्षिणा (in c) (cf v l 1) — b) K1.2 गौतमश्च (for सैन्धवोऽथ) — d) B Dn Ds D6 8 10 ये नृपा°, D2 पार्थिवा°; D3.4 ये तथा (for ये रथा°)

7 a) S कृप° (for शका°) D7 T2 किरातयवना° — d) Dn2 Ds D8 T1 शिबयोथ, G1.2 शतशोथ K1.4 Dn Ds D3 4 6 7 10 वशातय, K6 विशातय°, T2 G1.2 सहस्रश°

8 D3 om $8^{a}$–$9^{b}$ — a) M3.5 स्वैरनीकैश्च स° — b) K1 2 5 D1 °रथान्, D2 7 S °रथा°, Ca as in text — d) B5 रणे (for बले)

9 D3 om $9^{ab}$ (cf v l. 8) D4 om (hapl ) $9^{a}$–$10^{b}$ — a) Ds G2 सहानीका° K1 2 कांबोजश्च महाराज — b) K5 त्रैगर्ताश्च, B Dn Ds D1 6 7 10 त्रिगर्तश्च, T1 त्रिगर्तोय B Dn Ds D6 10 महारथ°, M1.2 °रथा° — D1 om. $9^{c}$–$10^{b}$ — d) K1.2 सर्वैर्भ्रातृभिरावृत

10 D1 4 om $10^{ab}$ (cf v l 9) — b) K Dn Ds D6 8 10 कौशल्य° K1 2 5 B2 D2 7 च (for [अ]थ) B4 Dn D10 T2 G1.2 बृहद्रथ° — c) K4 B3 Dn Ds D3 4 6 8 10 अनुगता°, K5 प्रवर्तंत, D1 स्ववर्तंत (for अवर्तन्त)

11 D6 om $11^{ab}$ — a) M3.4 (*inf lin* as in text) 5 याता (for यात्वा) K5 D3 4 T2 ते समेता यथान्याय (K5 T2 यथा यात्वा), B2 ते ससेना यथा मत्वा, B3–5 Dn Ds D7 10 ते समेत्य यथान्याय — b) K1 2 गजाश्वरथपत्तय°, K4 B Dn Ds D3 4 8 10 धार्तराष्ट्रा महाबला° — c) D3 4 पश्चाद्धि (for °र्धे) — d) K1 2 D7 व्यपातिष्ठत, D1 2 6 व्यवातिष्ठत S व्यतिष्ठत सुदंशि (some MSS °सि)ता°

12 a) K5 D1 3 4 दुर्योधनस्य, D7 °श्च — D4 om $12^{c}$–$15^{b}$ — c) Some S MSS हस्तिनपुर

13 D4 om. 13 (cf v l 12) — b) K5 B2 Ds2 D1 3.7 10 T1 G1 M च (for वा)

14 D4 om 14 (cf v l 12) — a) K4 D3 हर्म्याणि, B3 रूपा° (for दुर्गा°) — b) D3 °पते (for °पति°) — c) K1.2 4 कौरव्य

C. 5. 7617 B. 5. 195. 15 K. 5. 195. 15 सेनानिवेशास्ते राजन्नाविशञ्शतसंघशः ॥ १५
तत्र ते पृथिवीपाला यथोत्साहं यथाबलम् ।
विविशुः शिबिराण्याशु द्रव्यवन्ति सहस्रशः ॥ १६
तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सवाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥ १७
सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधवन्दिनः ॥ १८
वणिजो गणिका वारा ये चैव प्रेक्षका जनाः ।
सर्वांस्तान्कौरवो राजा विधिवत्प्रत्यवैक्षत ॥ १९

इति श्रीमहाभारते उद्योगपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

## १९७

वैशंपायन उवाच ।
तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत ॥ १
चेदिकाशिकरूपाणां नेतारं दृढविक्रमम् ।
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ २
विराटं द्रुपदं चैव युयुधानं शिखण्डिनम् ।

---

15 D4 om. $15^{ab}$ (cf. v.l. 12) — $^{a}$) K1 2 पार्थिवांश्च समुत्सृज्य, S पञ्च(G3 शत)योजनविस्तीर्णं — $^{b}$) K D1–3 7 8 तत्र भारत (for तद्गणा°) — $^{c}$) K1 2 5 Dn2 D3 D7 10 सेनानिवेशान्, D1 ततो विशाला (for सेना° निवेशा°) — $^{d}$) K4 D2 7 S न्यविशन्, K5 निविशन्, D3 4 न्यवसन्, D8 निवसन् B3 सघशो नृपा°, D3 4 अथ सघश° (for शत°)

16 D7 om 16 — $^{a}$) B2 तथैव (for तत्र ते) — $^{b}$) M2 3 यथोत्साहा D1 यथावय, T1 यथासुख — $^{c}$) K1 2 5 D8 अत°, K4 B3–5 Dn D3 D3 4 6 10 अत्र, B2 एव (for आशु) — D4 om (hapl.) $16^{d}$–$18^{c}$. K4 D8 read $18^{d}$ for $16^{d}$, *repeating* it in its proper place — $^{d}$) T1 माल्य° (for द्रव्य°)

17 D4 om 17 (cf v.l. 16) — $^{a}$) T2 G2 5 तेषु (for तेषा) — $^{b}$) T1 G5 M1 2 स्व- (for स-) D3 सैन्याना सुमहा°, D8 सैनिकाना महा° — G5 om $17^{cd}$. — $^{c}$) D8 सवाहाना (for सवाह्यानां) — $^{d}$) A few MSS भक्ष- (for भक्ष्य-) K1 2.5 भक्ष्यभोजनमुत्तम, D8 भोज्यभक्ष्यमनु°

18 D4 om $18^{abc}$ (cf v.l. 16) — $^{a}$) K1 सगमश्व, B3 5 Dn D3 D6–8 10 सनागाश्व (for सगजाश्व) — $^{b}$) K1.2 शल्योप° (for शिल्पोप°) — $^{c}$) D8 S ये चाप्यनुगतास् — $^{d}$) A few MSS °वदिनः

19 D4 om 19 — $^{a}$) K4 5 B3 5 Dn D1 6 8 10 चा(K5 चौ)रा, B2 4 D3 D7 दारा, D8 रामा, T G1 2 चापि (for वारा) K1 2 वणिजो गणकारा ये — $^{b}$) K (except K4) च वि-, D7 च वै; D10 युद्ध-; M चापि (for चैव) B2.4 नरा° (for जना) — $^{c}$) M3–5 पु(M3 ये)पा च (for सर्वांस्तान्). — $^{d}$) S पर्यरक्षत (for प्रत्यवै°)

Colophon. K3 B1 D6 9 G4 missing — *Adhy. name* K1 2 दुर्योधनसेनानिवेश°, K5 D2 7 8 सेनानिवेशः; B2 सेनानिर्याण, G5 कुरुबलकुरुक्षेत्रावतरण — *Adhy no* (figures, words or both) D6 85 (=185), T1 M4 198, T2 G1 2 5 199, G3 196 (as in text), M1.2 197, M3 5 189(!) — *S'loka no* Dn 19.

### 197

☞ This adhy is missing in K3 B1 (cf. v.l. adhy 192 and 194 beginning), the MSS. are mostly ignored here

1 G3 सजय° (for वैश° उ°) — After the ref, T1 M1 ins

594* सजयेनैवमुक्तस्तु धृतराष्ट्र° सुदुर्मना° ।
विपुल चिन्तयस्तथौ गान्धार्या विदुरेण च ।

— $^{b}$) M3–5 निवेशस्यापि रक्षणे

2 $^{a}$) K1 2 तथा (for चेदि ) S °करूशाना. — $^{b}$) K4 D3.4 सर्वेषामुग्रतेजसा — D4 om $2^{c}$–$3^{d}$. — $^{d}$) K4 D8 धृष्टद्युम्नम् (for °केतुम्) D1 अचोदयत्, T1 G3.5 अथाविशत् (for अथादिशत्) K4 om. from अथादि° up to युयुधानं (in $3^{b}$)

3 D4 om 3, K4 om up to युयुधान (cf v.l. 2). — $^{a}$) K1 2.5 D8 विराड्द्रुपदौ चैव — $3^{d}$=$15^{b}$.

पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ३
ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः ।
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ।
अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ॥ ४
सोऽथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ।
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ॥ ५
अभिमन्युं बृहन्तं च द्रौपदेयांश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान्प्राहिणोत्पाण्डुनन्दनः ॥ ६
भीमं च युयुधानं च पाण्डवं च धनंजयम् ।
द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ॥ ७
भाण्डं समारोपयतां चरतां संप्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ॥ ८
स्वयमेव ततः पश्चाद्विराटद्रुपदान्वितः ।
तथान्यैः पृथिवीपालैः सह प्रायान्महीपतिः ॥ ९
भीमधन्वायनी सेना धृष्टद्युम्नपुरस्कृता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ १०
ततः पुनरनीकानि व्ययोजयत बुद्धिमान् ।
मोहयन्धृतराष्ट्रस्य पुत्राणां बुद्धिनिस्रवम् ॥ ११
द्रौपदेयान्महेष्वासानभिमन्युं च पाण्डवः ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ १२
दश चाश्वसहस्राणि द्विसाहस्रं च दन्तिनः ।
अयुतं च पदातीनां रथाः पञ्चशतास्तथा ॥ १३
भीमसेनं च दुर्धर्षं प्रथमं प्रादिशद्बलम् ।
मध्यमे तु विराटं च जयत्सेनं च मागधम् ॥ १४
महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ ।

C. 5. 7033
B. 5. 196 17
K. 5. 195 17

---

4 $K_5$ transp $4^{cd}$ and $4^{ef}$ — $^{d}$) Dn धिष्ण्यानि, Ca धिष्ण्येषु (as in text) $Dn_2$ $M_{3-5}$ हुताशन॰, $D_5$ हुताशय — $^{e}$) $K_{1\ 2}$ महाराज (for महेष्वासा)

5 $^{a}$) B Dn Ds $D_{2-4\ 6\ 7\ 10}$ अथ (for सोऽथ) — $^{b}$) $K_{1.2}$ योजयित्वा $K_{1.2}$ $B_3$ $D_7$ नरर्षभ, $Ds_2$ नराधिप॰ — The lines 5 196 $17^{ab}$–$18^{ab}$ are *repeated* (with the v l युधिष्ठिरो for दुर्योधनो) in B Dn Ds $D_{3\ 4}$ (om lines 2–3) $_{6-8\ 10}$ $M_4$ (om lines 2–3) after 5, in $K_2$ (om line 3), after 21

6 $D_4$ om. $6^{a}$–$13^{e}$ — After 6, $G_3$ reads 8

7 $D_4$ om. 7 (cf. v l 6) — $^{b}$) $G_3$ पाचाल्य (for पाण्डवं) — $^{d}$) $K_{1.2}$ Ds $D_5$ शालस्कध, $K_6$ $D_7$ स्कंधावार, $Dn_1$ शाल्यस्कध, $M_3$ साल॰, Ca n बल॰ (as in text) Cs cites स्कध

8 $D_4$ om 8 (cf v l 6) $G_3$ reads 8 after 6 — $^{b}$) $K_{1.2}$ $D_8$ चरमं, $B_3$ Ds $D_1$ स्वरतां, Ca चरता (as in text) — $8^{cd}$ = (var) 5 149 $51^{cd}$ — $^{c}$) $K_{1.2}$ घृष्टाना (for हृ॰) M (except $M_1$) यौधाना (for यो॰) $D_8$ तत्र तत्र च योधाना — $^{d}$) $K_1$ इह, $D_{1\ 8}$ $T_2$ $G_{2\ 5}$ अथ, $T_1$ अपि, $G_3$ उप (for इव)

9 $D_4$ om 9 (cf. v l 6) — $^{c}$) B D (except $D_2$, $D_4$ om.) स($B_2$ त)थापरैर्महीपालै — $^{d}$) $K_1$ महात्मभि॰, $K_5$ $D_{1.7}$ महामति॰, S महारथ (for महीपति॰)

10 $D_4$ om 10 (cf. v l. 6) — $^{a}$) T $G_{2\ 3\ 5}$ ॰यती, $G_1$ ॰याति (for ॰यनी) $B_2$ समेता भीमसेनेन, Ca भीमधन्वायती सेना — $^{b}$) $K_4$ $B_{3-5}$ Dn Ds $D_{5\ 6\ 8\ 10}$ धृष्टद्युम्नेन पालिता, $M_{3-5}$ ॰पुरोगमा — $10^{cd}$ = (var) 5 149 $49^{cd}$ — $^{c}$) $K_{1.2}$ नरौघ॰; $G_3$ गागेव $T_1$ $M_{3-5}$ घूर्णा $K_1$ स्तनिता; $K_2$ स्वनिता — $^{d}$) Ds $D_{2\ 8}$ स्पदमाना, $D_1$ स्पर्धमाना $G_2$ प्रदृश्यत

11 $D_4$ om 11 (cf v l 6) — $^{b}$) $K_{4.5}$ B D ($D_4$ om) $G_1$ $M_5$ न्ययोज॰ — $^{d}$) $K_{1.2}$ बुद्धिनिश्रवात्, $K_4$ $B_{4\ 5}$ Dn $D_{2\ 3\ 6\ 8}$ $G_3$ ॰निश्रय, $K_5$ $B_2$ $D_{10}$ ॰निश्चयं, $D_1$ ॰मीश्वर॰, $G_1$ बलनिसृत, Ca as in text Cs cites बुद्धिनि॰स्रव

12 $D_4$ om 12 (cf v l 6) — $^{b}$) $K_{1\ 2}$ $Ds_2$ $D_{1.7}$ पाडव, $K_5$ पाडवान्, S भारत

13 $D_4$ om. $13^{abc}$ (cf. v l 6) — $^{a}$) $T_2$ $G_{1.2\ 5}$ $M_1$ हयान् (for दश) S (for $T_1$ see below) पच॰ (for चाश्व॰) $T_1$ अश्वाना पचसाहस्र — $^{b}$) $K_{1\ 2}$ $D_2$ द्विसाहस्रा॰, $K_{4\ 5}$ $D_{1\ 3.8}$ ॰सहस्रा॰, $T_1$ $G_3$ ॰सहस्रान्, $T_2$ $G_2$ ॰सहस्र, $G_{1\ 5}$ ॰साहस्रान् B Dn Ds $D_{6\ 7\ 10}$ द्विसहस्राणि दतिना — $^{d}$) T G रथान् (for रथा॰) $K_1$ पचदशास्तथा, $K_5$ $G_3$ पचशतानि च, B Dn Ds $D_{6\ 7\ 10}$ $T_1$ $G_5$ पचशत तथा, $T_2$ $G_{1\ 2}$ $M_{1\ 2}$ पचशतास्तथा

14 $^{a}$) $K_4$ $B_{3\ 4}$ Dn $D_{2-4\ 6}$ भीमसेनस्य (for ॰नं च) $D_{3\ 4}$ दुर्धर्ष॰ — $^{b}$) $K_{1\ 2}$ $Dn_2$ प्राविशद्, $T_1$ $G_{3\ 5}$ व्यादिशद् (for प्रादिशद्) — $^{c}$) $K_1$ सर्वमेव, $K_2$ $B_5$ मध्यमं तु $K_{4.5}$ $B_6$ $Dn_2$ Ds $D_{6\ 7\ 10}$ च, $Dn_1$ [ऽ]थ (for तु) S (except $G_3$) वै (for च) — $^{d}$) B Dn Ds $D_{3.4\ 6\ 10}$ पाडव॰ (for मागधम्) $D_1$ *repeats* $12^{d}$ (for $14^{d}$)

C 5. 7639
B. 5. 199. 18
K. 5 196 18

अन्वयातां ततो मध्ये वासुदेवधनंजयौ ॥ १५
बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्रा ध्वजाः शूरैरधिष्ठिताः ॥ १६
पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ।
पदातयश्च ये शूराः कार्मुकासिगदाधराः ।
सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ॥ १७
युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे ।
तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः ॥ १८
तत्र नागसहस्राणि हयानामयुतानि च ।
तथा रथसहस्राणि पदातीनां च भारत ।
यदाश्रित्याभियुयुधे धार्तराष्ट्रं सुयोधनम् ॥ १९
ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः ।
नदन्तः प्रययुस्तेषामनीकानि सहस्रशः ॥ २०
तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
वादयन्ति स्म संहृष्टाः सहस्रायुतशो नराः ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ समाप्तमम्बोपाख्यानपर्व ॥

॥ समाप्तमुद्योगपर्व ॥

---

15 $^{a}$) K5 D7 महेष्वासौ (for महारथौ) D7 तथा तुल्यौ, S महात्मानौ (G8 महेष्वासौ) (for च पाञ्चाल्यौ) — $^{b}$) = 3$^{d}$ G8 सर्वशत्रुनिबर्हणौ — $^{c}$) K5 महोत्साहौ, B8 महेष्वासौ, S महाभागौ (for °त्मानौ) — $^{e}$) K1 2 B8 अनुयातौ (for अन्वयातां) K5 B1 5 Dn D8 D6 8.10 तदा, T2 G2 5 M तयोर् (for ततो) — After 15, T G2 3 5 ins

595* तौ दृष्ट्वा पृथिवीपालास्त्रष्टमित्येव मेनिरे ।
अन्तरिक्षगता: सर्वे देवा: सेन्द्रपुरोगमा: ।

[ (L 1) T2 G2 तान् (for तौ), and कष्टम् (for नष्टम्) ] — After the above, G8 reads 17$^{ab}$

16 $^{a}$) K1 2 अभि° (for अति°) — $^{b}$) M3-5 नर: (for नरा:) — T1 om. 16$^{cd}$ — $^{c}$) K1.2 ते च, D8 ते तु (for तेषां) — $^{d}$) K4 तथा, B8 5 D8 4 6 T2 G हया, M रथा: (for ध्वजा:)

17 G8 reads 17$^{ab}$ after 595* — $^{b}$) K1 D7 8 G5 °वशाश्च K4 D8 4 भारत (for सर्वश:) D1 रथाना च सहस्रश: — $^{c}$) K1.2 D8 ते (for ये) K5 पदातीन्यहु-साहस्रा, D7 पदाता बहुसाहस्रा, T1 बभूवुरतिसरब्धा: (= 16$^{a}$) — $^{d}$) K5 om 17$^{d}$ D7 तस्मिन्यौधिष्ठिरे बले — After 17$^{cd}$, D7 *repeats* 4$^{ef}$ (with v l महाराज for महेष्वासा) — $^{e}$) D10 ययु (for ऽन्वयु) K5 सह अन्वययु पश्चात, D7 सहस्रमन्वयु पश्चात्

18 $^{a}$) K5 D7 राजा युधिष्ठिरो यत्र — $^{b}$) K5 D7 स्वयमास्त, M यत्र चैव (for स्वय°) S (G1 broken) च फाल्गुन (for बला°)

19 D7 om 19$^{ab}$ — $^{a}$) K5 रथ-; T1 ततो (for तत्र) — D1 4 M2 om 19$^{bc}$. — $^{c}$) D8 रथा: (for तथा) D8 शत-; T1 दश (for रथ-) — $^{d}$) T1 G1 सर्वश: (for भारत) K1 2 पदातीश्चाप्यनेकश: — After 19$^{cd}$, N ins a passage given in App I (No. 14) D5 resumes from line 9 of the above App. passage. — K4 om 19$^{e}$–21$^{e}$. B4 lost to the end! — $^{e}$) T1 G2 3 5 या(G2 य)माश्रित्य (for यदाश्रित्य) B Dn D6 8 अथ (for अभि) K5 D2 T G2 3 5 -युयुजे (for -युयुधे) K1 2 यदा निवृत्य युयुधे, D1 यदभिस्या हि युयुधे

20 K4 om 20 (cf v l 19) B4 missing — $^{a}$) B2 D8 D7 10 S (G1 broken) C8 गणश: (for शतश:) — $^{b}$) = 21$^{d}$ S -शतशो (for -[अ]युतशो) — $^{c}$) B4.5 Dn D6 8 नर्दन्त: (for नदन्त). — $^{d}$) B2 5 च सर्वश:, D2 समंतत: (for सहस्रश )

21 K4 om 21$^{abc}$ (cf v.l 19) B4 missing — $^{a}$) D1 T1 ततो (for तत्र) D6 8 °सहस्राणा — $^{c}$) K5 वादयंत स्म, B2 3 5 Dn D8 D6 8 10 न्यवादयत, D8 नादयति स्म (for वादयन्ति स्म) M (except M2) सु (for स्म). C8 cites वादयंति (as in text) — $^{d}$) = 20$^{b}$. S -शतशो (for [अ]युतशो).

Colophon K8 B1 4 D5 G4 missing — *Major parvan* K2 D2 उद्यम° (for उद्योग°) — *Adhy name*: K2 4 5 D8 4 7 सेनानिर्देश:; Dn D2 सेनानिर्याण, D1 सैन्यनिष्कर्षण, D8 सेनानिवेशवर्णन, T1 G2 5 M1 पांडवयुद्धसनाह (G5 °ह), M2 भारतसन्नद्धाह: — MSS mostly add समास after the major parvan or adhy name, some add it twice — *Adhy no* (figures, words or both) K5 186, D6 85 (=185), T1 M4 199, T2 G1.2 5 M8.5 200, G8 197 (as in text), M1.2 198 — *S'loka no* · Dn1 39, Dn2 34

K1 ins after 5 197 21 (i.e. before the last colophon)

पट् श्लोकास्तु सहस्राणि अष्ट श्लोकशतानि च ।
अष्टाशीति च वै श्लोका उद्योग पर्व चोत्तमम् ।
एतत्सुमहदाख्यान श्रुत्वा पापै प्रमुच्यते ।
सर्वतीर्थाभिषेकश्च सर्वदानफल लभेत् ।
विप्रेभ्यो भोजन देय च्चामायाभरणानि च ।
गावश्चन्दनवासासि दद्यादुद्योगपर्वणि ।
भारतस्य पदैकेन गङ्गाया दर्शनेन च ।
विष्णो स्मरणमात्रेण सर्वपापै प्रमुच्यते ।,

and ins after the last colophon this date

सवत् १६७७ वर्षे आश्विनवदि ३ भौमे लिखितमुद्योगपर्व ।
— K2 ins after the last colophon, the first stanza of the next parvan followed by the date १७३४ वर्षे श्रावणसुदि ९ वीरपुरे आद्यनागरजातीये ।
— K4 ins after the last colophon एतत्पर्वकथानुक्रमवर्णन ।
— K5 ins after the last colophon the date

सवत् १८८१ शके १७८७ कार्तिकमासे कृष्णपक्षे तृतीयाँ[या] भौमवासरे समाप्त पर्व उद्योग ।, followed by this addition in Gujarati लेईने पाछु जे न आपे तेने माथे मडता * * * पने ते हनुमान त्वाने । निश्चे । खरी वात छे ते जाणजो ॥ श्रीरस्तु ॥ भट्ट भाऊ जागतायनु लखेलू छे । घणी मेहेनत करीने समाप्ति करु छे ॥ जे लईने पाछु नहि आपे तो तेनु सत्यनाश जशे निश्चे निश्चे ॥
— Dn1 D4 ins after 5 197 21 (i.e before the last colophon)

वैशपायन उवाच ।
य सर्व शृणुते राजन्निद श्रीपरिवर्धनम् ।
सर्वपापविनिर्मुक्तो लभते वाञ्छित फलम् ।
यो भूत्वा सावधानो वै शृणोति श्रावयत्यपि ।
स वाञ्छितार्थं लभते पुत्रपौत्रसमन्वित ।
उद्योग लभतेऽय तु पाण्डवोद्योगसश्रयात् ।
श्रुतेऽस्मिन्नृपते दद्याद्ब्राह्मणेभ्यश्च दक्षिणाम् ।
भोजयेद्विविधाहारैर्भक्ष्यभोज्यसमन्वितै ।
पाठक च विशेषेण स्वर्णगोधनपूर्वकम् ।
राजञ्जन्मेजय(!) त्वद्य त्वमप्येव समाचर ।
अत पर भीष्मपर्व शृणु राजन्समाहित ।

— Dn2 ins after the last colophon the date

शके १६६६ रक्ताक्षिनामसवत्सरे आषाढे एकादश्या समाप्त ।
— D5 ins after the last colophon

अत्र पर्वणि वृत्तान्ता । राज्ञा दूतप्रस्थापने मन्त्र । पुरोहितयान । शल्यवरप्रदान । इन्द्रविजय । सजययान । प्रजागर । विदुरवाक्यानि । सनत्सुजातीय । यानसधि । भगवद्यान । दम्भोद्भवाख्यान । मातलिवरान्वेषण । गालवचरित । विश्वरूपदर्शन । विदुलापुत्रानुशासन । कर्णोपनिवा(Ds1 °ना)द । कर्णकुन्तीसमागम । अभिनिर्यात्रा । उलूकयान । रथातिरथसख्या । अम्बोपाख्यान चेति ।
— D1 ins after the last colophon

अथातु भीष्मपर्व भविष्यति । तस्यायमनुसधिश्लोक ।
जनमेजय उवाच ।
कथ युधिष्ठिरे वीरा कुरुपाण्डवसोमका ।
पार्थिवाश्च महाभागा नानादेशसमागता ॥

उद्योगपर्वण्यमी वृत्तान्ता । पुरोहितयान । इन्द्रविजय । सजययान । धृतराष्ट्रचिंता । प्रजागर । विदुरवाक्य । सनत्सुजात । यानसधि । भगवद्यान । सभाप्रवेश । दम्भोद्भवोपाख्यान । मातलिवरान्वेषण । गालवचरित । विदुरापुत्रानुशासन । कर्णोपनिवाद । कर्णकुन्तीसमागम । अभिनिर्याणयात्रा । उलूकयान । रथातिरथसख्या । अम्बोपाख्यान चेति ।

अत्रापि * *सख्यातमध्यायाना महात्मना ।
अध्यायसख्यायास्तत्र षडशीतिशत स्मृतम् ।
श्लोका सप्तसहस्राणि तावत्येव शतानि च ।
श्लोका षण्णवति प्रोक्तास्तथैवाष्टौ महात्मना ।
व्यासेनोदारमतिना पर्वण्यस्मिन्तपोघ्नना ॥
शुभमस्तु सर्वजगता परहितनिरता भवन्तु भूतगणा ।
दोषा प्रयान्तु शान्ति सर्वत्र सुखीभवन्तु लोका ॥

सवत् १८७८ ज्येष्ठशुक्लदशम्या गुरुवासरे काश्मिरीयसदानदाभिधेन लिखितमिदमुद्योगपर्व । लेखकपाठकयो श्रेयसे भूयात् ॥
— D2 ins after the last colophon

अस्यानु भीष्मपर्व भविष्यति । यस्यादि प्रतिसधि ।
जनमेजय उवाच ।
कथ युधिष्ठिरे वीरा कुरुपाण्डवसोमका ।
पार्थिवाश्च महाभागा नानादेशसमागता ॥

उद्योगपर्वणि अमी वृत्तान्ता । [पुरो]हितयान । इन्द्रविजय । प्रजागर । सजययान । विदुरवाक्यानि । सनत्सुजातीय । यानसधि । भगव[द्यान] । मातलिवरान्वेषण । गालवचरित । सभाप्रवेश । महापुरुषदर्शन । विदुरापुत्रानुशासन । कर्णोपविवाद । इन्द्रवर्णन । कुन्तीकर्णसमागम । भगवत प्रतिवाक्यानि । अभिनिर्याणयात्रा । उलूकयान । रथातिरथसख्या । अम्बो[पाख्यान] । बलाबलपरीक्षा । सेनानिवेशश्चेति ।

एतत्सुबहुवृत्तान्तं पञ्चम पर्व भारते ।
उद्योगपर्व निर्दिष्ट सधिविग्रहसज्ञितम् ।
अध्यायसख्यया त्वत्र षडशीत शत स्मृतम् ।
श्लोकाना षट् सहस्राणि नव श्लोकशतानि च ।
श्लोकाश्च सप्तति प्रोक्ता दृष्टो ग्रन्थोऽत्र पर्वणि ॥
शुभमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणा ।
दोषा प्रयान्तु नाशं सर्वत्र सुखी भवतु लोक ॥

संवत् १६६७ समये वैशाखवदिद्वादशीशुक्रदिने ।

यादृश पुस्तक दृष्ट तादृश लिखित मया ।
यदि शुद्धमशुद्ध वा मम दोषो न दीयते ॥

— D8 ins. after the last colophon

शुभमस्तु सवत् १६६८ समये मार्गशीर्षद्वादशीगुरुवारे लिखित रघुनाथेन । श्रीगोविन्द । श्रीरामकृष्णाभ्या नम. । श्रीविश्वनाथाय श्रीकृष्ण कृष्ण राम राम ॥

— D5 ins. after the last colophon the first st of the Bhīṣmaparvan, then १६५६ वर्षे कीलकनाम्नि सवत्सरे माघशुक्लपौर्णमास्या रवौ काश्या विश्वेश्वरराजधान्या श्रीमत्या अग्नीश्वरसनिधौ विदर्भदेशस्थभट्टनृसिहसूनुना केशवेन लिखित मिद पुस्तकमात्मार्थं परोपकारार्थं च ॥ छ ॥

— D6 ins after the last colophon:

सवत् १७६० वर्षे मितिपौषमासेऽर्जुनपक्षे दिक्तिथौ चद्रसुते लिखित । वैद्यगिरिधर । तस्य आत्मज दुर * * * नगर विढोली-मध्ये भटजी ६श्रीजीवाजी । तस्यात्मजदेवेश्वरपठनार्थं । शुभ भूयात् लेखकपाठकयो ॥

— D7 ins after the last colophon:

अस्यानु भीष्मपर्व भविष्यति ।
श्रीजनमेजय उवाच ।
कथं युधिष्ठिरे वीरा' कुरुपाण्डवसोमका' ।
पार्थिवाश्च महाभाग नानादेशसमागता' ॥

अथ उद्योगपर्वणि इमी वृत्तान्ताः । श्रीपुरोहितयान । इन्द्रविजयदर्शन । सजययान । प्रजागर' । विदुरवाक्यानि । सनत्सुजातीय । यानसधि' । भगवद्यान । सभाप्रवेश । दम्भोद्भवोपाख्यान । मातलिवरान्वेषण । गालवचरित । कृष्ण द्रोणधृतराष्ट्रगाधारीविदुरवाक्यानि । दुर्योधनकर्णदु'शासनशकुनि-दुर्मन्त्रित । कुतीविदुरवाक्यानि । विदुरापुत्रानुशासनं । श्रीकृष्ण प्रयाण । कर्णभेद' । पुनर्भीष्मद्रोणचिंता । कुतीकर्णसमागम । कुतीपचपुत्रवरप्रदान । श्रीकृष्णमत्र. । उलूकयान । पाढव-प्रयाणयात्रा । शिविराभिमर्द' । दुर्योधनप्रयाण । रथातिरथसख्या । अम्बोपाख्यान । परस्परजयप्रकटनमिति ॥ श्री ॥ छ ॥ श्री ॥

उद्योगपर्व य श्रुत्वा चातुर्मास्ये विशेषत ।
सर्वान्कामानवाप्नोति दीर्घमायुश्च विन्दति ।
श्रुते पर्वणि यो भक्त्या सपूज्य पुरुषोत्तमम् ।
व्यासाय ददते दान आनन्त्यायोपतिष्ठति ।
तेन दानेन सुप्रीतो जायते मधुसुदन' ।
व्यासरूपी च भगवान्सूर्यो नारायण. प्रभु' ।
उद्योगपर्व श्रुत्वा तु ब्राह्मणान्भोजयेत्पुनः ।
प्रदेय काञ्चन वापि सर्वपापविशुद्धये ।
पुस्तकस्यापि कर्तव्या पूजा परमशोभना ।
वस्त्रपुष्पफलैश्चैव शारदा प्रीयतामिति ।
महाभारतपर्वैक यो ददाति द्विजातये ।
श्लोकाना सख्यया राजन्तावद्य युगसख्यया ।
स्वर्गलोकमनुप्राप्य पितृभिः सह मोदते ।
भारत पञ्चमो वेदो यो ज्ञेयस्तत्त्ववेदिभिः ।
श्रोतव्यो वा महाराज सर्वपापप्रशान्तये ।
उद्योगपर्व य' श्रुत्वा श्रद्धावान्सततोत्थित ।
आजन्मसचितात्पापान्मुच्यते नात्र सशय' ।
उद्योगपर्व श्रुत्वा य शतभोज्य च दापयेत् ।
सर्वतीर्थफलं चैव सर्वयज्ञफल लभेत् ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ।
गवा कोटिसहस्रस्य फल प्राप्नोति मानव' ।
तेन ब्रह्मा च रुद्रश्च विष्णुश्च वसवस्तथा ।
प्रसन्ने वाचके विप्रे प्रसन्ना. सर्वदेवता ।
धर्मार्थकाममोक्षाणा फल सप्राप्नुयान्नर ।
विधिवद्भोजयेद्राजन्मधुपायसमुत्तमम् ।
उद्योगे भारतश्रेष्ठ सर्वकामसमन्वित' ।
भोजन भोजयेद्विप्रान्गन्धमाल्यैरलंकृतान् ।
शुक्लाम्बरधरस्तत्र शुचिर्भूत्वा स्वलंकृत. ।
यश्चानेन प्रकारेण भारतं श्रावयेन्नर' ।
तथा दानस्य माहात्म्य लोकानुद्धरति प्रभो ॥

इति श्रीमहाभारते उद्योगपर्व समाप्त । सवत् १८३७ वर्षे शाके १७०३ प्रवर्तमाने मासोत्तममासे ज्येष्टमासे सितेतरपक्षे तृतीया[यां] मन्दवासरे पूर्णीकृतमिदमुद्योगपर्व । राजन्यपुरस्थेन भ० विष्णुदत्तेन लिखित । दीहेणवासी शाहा पुरुषोत्तमदासस्येद पुस्तक परोपकारार्थम् । शुभ भवतु । कल्याणमस्तु श्रीकृष्णो विजयते । श्रीराम जय राम जय जय राम ॥ श्रीराम । श्रीराम । श्रीराम । श्रीराम । श्रीराम ॥

— D8 ins after the last colophon उद्योगपर्ववर्णन ।

सूत उवाच ।
एवमेतत्सुवृत्तान्त पञ्चमं पर्व भारतम् ।
उद्योगपर्व निर्दिष्ट सधिविग्रहसस्थितम् ।
अध्यायाना च सख्या च षडशीतिशतं स्मृतम् ।
श्लोका सप्तसहस्राणि तावन्त्येव शतानि च ।
श्लोकाश्च नवति प्रोक्तास्तथैवाष्टौ महात्मना ।
व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधना' ।
वैशपायन उवाच ।
शृणु राजन्विधिमिम फल यच्चापि भारते ।
श्रुताद्भवति राजेन्द्र यत्त्व मामनुपृच्छसि ।
दिवि देवा महीपाला' क्रीडार्थमवनीं गता' ।
ऋषीणा देवताना च सभवो वसुधातले ।
अत्र रुद्रास्तथा साध्या विश्वेदेवाश्च शाश्वता' ।
आदित्याश्चाश्विनौ देवौ लोकपाला महर्षय' ।
गुह्यकाश्च सगन्धर्वा नागा विद्याधरास्तथा ।
सिद्धा धर्म स्वयभूश्च मुनि' कात्यायनो वरः ।
गिरय सागरा नद्यस्तथैवाप्सरसा गणा' ।
ग्रहाः संवत्सराश्चैव अयनान्यृतवस्तथा ।
स्थावर जगम चैव जगत्सर्वं सुरासुरम् ।

भारताद्भरतश्रेष्ठ एकस्यमिह दृश्यते ।
तेषां श्रुत्वा प्रतिष्ठां त नामकर्मानुकीर्तनात् ।
कृत्वापि पातकं घोरं सद्यो मुच्येत मानवः ।
इतिहासमिमं श्रुत्वा यथावदनुपूर्वशः ।
संयम्यात्मा शुचिर्भूत्वा पारं गत्वा तु भारते ।
तेषां श्राद्धानि देयानि रत्नानि विविधानि च ।
गावः कांस्योपदोहाश्च कन्याश्चैव स्वलंकृताः ।
सर्वकामगुणोपेता धनानि विविधानि च ।
भवनानि विचित्राणि भूमिर्वासांसि काञ्चनम् ।
वाहनानि च देयानि हया मत्ताश्च वारणाः ।
शयनं शिबिकाश्चैव स्यन्दनाश्च स्वलंकृताः ।
यद्यद्गृहे वरं किंचिद्यद्यदस्ति महद्वसु ।
तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः ।
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः ।
सत्यार्जवपरो दान्तः शुचिः शौचसमन्वितः ।
श्रद्दधानो जितक्रोधो यथा सिध्यति तच्छृणु ।
पर्व उद्योगमासाद्य काञ्चनं सम्प्रदापयेत् ।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
उदितादित्यसंकाशं ज्वलन्तमनलोपमम् ।
विमानं विबुधैः सार्धमारुह्य दिवि गच्छति ।
वर्षायुतानि भवने शक्रस्य दिवि मोदते ।
षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलम् ।
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः ।
संस्कृतः सर्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ।
इन्द्रियाणि वशे कृत्वा श्रुत्वा भारत भारतम् ।
नियतस्य शुचिः श्रोता श्रवणस्य फलमश्नुते ।
जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्वतो वृतम् ।
सेवितं चाप्सरःसंघैर्गन्धर्वैर्गगनचारिभिः ।
विमानं समधिष्ठाय श्रिया परमया ज्वलन् ।
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
मोदते दैवतैः सार्धं दिवि देवो यथामरः ।
उद्योगे भारतश्रेष्ठ हविष्यैस्तर्पयेद्द्विजान् ।
धूपकैश्च विशेषेण सर्वमन्नं प्रदापयेत् ।
यथान्यायं गन्धमाल्यैः पूजयेच्च पृथक्पृथक् ।
श्रुतेऽस्मिन्तर्पणं दद्याद्ब्राह्मणेभ्यश्च दक्षिणाम् ।
भोजयेद्विविधाहारैर्भक्ष्यभोज्यसमन्वितैः ।
पाठकस्य विशेषेण स्वर्णगोदानपूर्वकम् ।
सहितास्तत्र काश्यास्तस्य शिष्यसमितान् ।
हिरण्यं च सुवर्णं च दक्षिणामथ दापयेत् ।
देवताः कीर्तयेत्सर्वा नरनारायणादिकाः ।
ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान् ।
तर्पयेद्विविधैः कामैर्दानैरुच्चावचैस्तथा ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ।
प्राप्नुयाच्च क्रतुफलं श्रुत्वा पर्वणि पर्वणि ।

वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः ।
भविष्यं श्रावयेद्विद्वान्भारतं भरतर्षभ ।
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलंकृतम् ।
वाचके तु परे तुष्टे शुभगा प्रीतिरुत्तमा ।
ब्राह्मणेषु च तुष्टेषु प्रसन्नाः सर्वदेवताः ।
इत्येष विधिरुद्दिष्टो मया ते द्विपदां वर ।
श्रद्दधानेनैव भाव्यं यन्मां त्वं परिपृच्छसि ।
भारतश्रवणाद्राजन्स्मरणाच्च द्विजोत्तम ।
सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता ।
भारतं शृणुयान्नित्यं भारतं परिकीर्तयेत् ।
भारतं भवने यस्य तस्य देवाः स्थिताश्रयः ।
भारतं परमं पुण्यं भारते विविधाः कथाः ।
भारतं सेव्यते दिव्यैर्भारतं परमं पदम् ।
भारतं सर्वशास्त्राणां सुगमं भरतर्षभ ।
भारतात्प्राप्यते श्रेयो मोक्षस्त्वेवद्ब्रवीमि ते ।
महाभारतमाख्यानं क्षितिं गां च सरस्वतीम् ।
ब्राह्मणं केशवं चैव कीर्तयन्नावसीदति ।
आदौ चान्ते च मध्ये च विष्णुः सर्वत्र गीयते ।
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः ।
तच्छ्रोतव्यं मनुष्येण परं पदमिच्छता ।
एतत्पवित्रं परममेतद्धर्मनिदर्शनम् ।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ।

वैशम्पायन उवाच ।

यः सर्वं शृणुते राजन्निदं श्रीपरिवर्धनम् ।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ।
सर्वपापविनिर्मुक्तो लभते वाञ्छितं फलम् ।
यो भूत्वा सावधानो वै शृणोति श्रावयत्यपि ।
स वाञ्छितार्थं लभते पुत्रपौत्रसमन्वितः ।
उद्योगं लभते जन्तुः पाण्डवोद्योगसंश्रयात् ।
जनमेजय हे राजन्त्वमप्येवं समाचर ।
अतः परं भीष्मपर्व शृणु राजन्समाहितः ।
भारतभानुमानिन्दुर्यदि न स्युरमी त्रयः ।
अज्ञानतिमिरान्धस्य कावस्था जगतो भवेत् ।
य इदं कीर्तयेद्विद्वान्पठेद्यः शृणुयान्नरः ।
स ब्रह्मणः स्थानमेत्य प्राप्नुयाद्देवतुल्यताम् ।
इदं हि वेदैः समितं पवित्रमिदमुत्तमम् ।
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ।
अस्मिन्नर्थश्च धर्मश्च निखिलेनोपदेक्ष्यते ।
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी ।
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान् ।
कार्ष्णं वेदमिमं श्रुत्वा श्रावयित्वार्थमश्नुते ।
भ्रूणहत्याकृतं चापि पापं जह्यान्न संशयः ।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः ।
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।

